3·1

आचार्यभर्तृहरिप्रणीतं

# वाक्यपदीयम्

[ तृतीयं काण्डम्, द्वितीयो भागः ]

व्याख्याद्वयोपेतम्

कुलपतेः डॉ० मण्डनमिश्रस्य प्रस्तावनया समलङ्कृतम्

सम्पादकः
'पद्मश्रीः' पण्डितश्रीरघुनाथशर्मा

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 91 ]

# VĀKYAPADĪYAM

[ Part III, Vol. II ]

[ Bhūyodravya-Guṇa-Dik-Sādhana-Kriyā-Puruṣa-Saṅkhyā and Liṅga Samuddeśa ]

With the Commentaries

'PRAKĀŚA'

BY

ŚRI HELĀRĀJA

&

'AMBĀKARTRĪ'

BY

'PADMAŚRĪ' PT. RAGHUNĀTHA ŚARMĀ

FOREWORD BY

DR. MANDAN MISHRA

VICE-CHANCELLOR



VARANASI

1997

Research Publication Supervisor—
Director, Research Institute,
Sampurnanand Sanskrit University
Varanasi.



Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi-221 002.



Available at—
Sales Department,
Sampurnanand Sanskrit University
Varanasi-221 002



Second Edition—1000 Copies
Price-Rs. 230·00



Printed by—
Shri Ghan Shyam Upadhyaya
Manager,
Sampurnanand Sanskrit University-Press
Varanasi-221 002

सरस्वतीभवन-ग्रन्थमाला

[ ९१ ]

आचार्यभर्तृहरिप्रणीतं

# वाक्यपदीयम्

[ तृतीयं काण्डम्, द्वितीयो भागः ]

( भूयोद्रव्य-गुण-दिक्-साधन-क्रिया-काल-पुरुष-संख्या-उपग्रह-लिङ्गसमुद्देशात्मकम् )

श्रीहेलाराजविरचितया

'प्रकाश'-व्याख्यया

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य वेदान्तविभागाध्यक्षचरेण

'पद्मश्री' पण्डितरघुनाथशर्मणा

विरचितया

'अम्बाकर्त्री'-व्याख्यया

कुलपतेः डॉ० मण्डनमिश्रस्य प्रस्तावनया च समलङ्कृतम्



वाराणस्याम्

२०५४ तमे वैक्रमाब्दे १९१९ तमे शकाब्दे १९९७ तमे ख्रैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षक: —
निदेशक:, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।



प्रकाशक: —
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी-२२१ ००२.



प्राप्तिस्थानम्—
विक्रय विभाग:,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी-२२१ ००२.



द्वितीयं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्-२३०.०० रूप्यकाणि



मुद्रक: —
श्रीघनश्याम-उपाध्याय:
व्यवस्थापक,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयमुद्रणालयस्य
वाराणसी-२२१ ००२

# प्रस्तावना

अयमस्ति हर्षप्रकर्षस्य विषयो यत् सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन वाक्यपदीयस्य तृतीयकाण्डस्य द्वितीयभागस्याभिनवं संस्करणं प्रकाश्यत इति। व्याकरणशास्त्रं नाम 'मुखं व्याकरणं स्मृतम्' इति संक्षिप्तवचनेन वेदस्य मुखत्वेन राराज्यमानं शास्त्रेषु स्वकीयं विशिष्टं स्थानं बिभर्ति। न हि व्याकरणज्ञानं विना कस्मिन्नपि शास्त्रेऽथवा संस्कृतविद्याया विभिन्नासु विद्यासु प्रविष्टिरपि सुशका भवति। संस्कृतभाषाया अध्ययनपरम्परायां सर्वदैव व्याकरणस्य माहात्म्यं प्रतिष्ठितमभवत्, सम्प्रत्यपि तथैव वरीवृत्यते। 'द्वादशभिर्वर्षैरध्येयं व्याकरणम्' इत्यादिभिः सूक्तिभिर्व्याकरणशास्त्रस्यानिवार्यता स्थाने स्थाने प्रतिष्ठापिता। प्राचीनेषु पण्डितगृहस्थेषु—

'अचीकमत यो न जानाति यो न जानाति वर्वरीः।
अजर्घा यो न जानाति तस्मै कन्या न दीयताम्'॥

इत्यादिभिराभाणकैर्लोकव्यवहारेऽपि व्याकरणं समादृतमासीत्। येन न सम्यग् व्याकरणमधीतम्, शास्त्रज्ञाने वस्तुतस्तस्य पात्रताऽपि न सम्भाव्यते। अनेनैव शास्त्रेण शब्दस्य गौरवमुद्भावितं संपाधितं संस्थापितं च। 'एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति' इत्यादीनि ऋषि-मुनि-समुद्घोषितानि वाक्यानि। शब्दस्यालौकिकं वैभवं तस्य च ज्ञानं ब्रह्मज्ञानमिव सम्मानितम्। न केवलं साधारणाध्ययनाध्यापनेऽपि तु वेदज्ञानेऽप्याधारशिलात्वेन प्रकल्पते व्याकरणम्। षडङ्गो हि वेदः प्रकीर्त्यते, तेषु षट्स्वङ्गेषु शिक्षायाः कल्पस्य व्याकरणस्य निरुक्तस्य छन्दसो ज्यौतिषस्य परिगणना विहिता। एतेषु षट्स्वङ्गेषु शिक्षायाः, व्याकरणस्य, कल्पस्य, निरुक्तस्य, छन्दसश्च सम्बन्धः शब्दमूलकोऽथवा शब्दार्थमूलकः। ज्यौतिषस्यापि व्याख्याया मूलं शब्दा एव। एतेन शब्दस्य तन्मूलकत्वाद् व्याकरणशास्त्रस्य च वैदिक-लौकिकज्ञाने सुस्पष्टं स्थानं भवति।

सम्प्रत्यपि संस्कृताध्ययने व्याकरणस्य परम्परा सुतरां प्रवहति। प्रायशः प्रत्येकं छात्राय व्याकरणाध्ययनमनिवार्यत्वेन प्रकल्पते। समस्तेऽपि देशे संस्कृतविद्वत्सु वैयाकरणानामधिकतमा संख्या, ते च निश्चप्रचं प्रभावयन्ति सर्वाण्यपि शास्त्राणि।

इदमस्ति व्याकरणस्य लोकप्रियताया विवेचनम्, परमस्ति ततोऽप्यधिकं सिद्धान्तप्रतिपादनदिशाऽस्य शास्त्रस्य गाम्भीर्यं विशिष्टमवदानं च। पाणिनीयसूत्राणि विश्वस्य प्रज्ञाया मेधायाश्चेतनायाश्च एकमात्रं सर्वोत्तममुदाहरणम्, यत्र च केवलमष्टाध्याय्यां सर्वाऽपि शब्दसम्पद् विराजिताऽस्ति, तत्र चार्धमात्राया अपि निरर्थकताऽथवा निष्फलवत्ता एतावत्कालपर्यन्तं येन केनाप्याचार्येण न संसाधिता। अत एवास्त्ययमुद्घोषः—

**'अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः'** इति।

एवमेव पातञ्जल-कात्यायनयोर्भाष्यवार्तिकानामपि महत्तमं योगदानं संस्कृतवाङ्मये। एतच्च पाणिनि-पतञ्जलि-कात्यायन-मुनित्रयं वस्तुतो ब्रह्म-विष्णु-शिवस्वरूपेण वन्दनीयम्, तेषां च विलक्षणप्रतिभाया नास्ति विश्वसाहित्ये काऽपि तुलना।

एतस्यामेव परम्परायां वाक्यपदीयस्य स्थानं व्याकरणशास्त्रस्य मानकग्रन्थत्वेन सर्वैः सम्मानितम्। वस्तुतोऽयमस्ति ज्योतिस्तम्भः, यस्य ज्योतिषा शब्दब्रह्मणोऽलौकिकप्रकाशः सर्वत्र राराज्यते। वस्तुतोऽयमेव ग्रन्थो वैयाकरणदर्शनस्य प्रतिष्ठापकः, अस्य च प्रथमकाण्डे शब्दब्रह्मणो विवेचनमद्वैतिभिरपि स्वकीयप्रतिपादनेषु समावेशितम्—

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।**
**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः॥**

(वा० प० १/१६)

इति सडिण्डिमं समुद्घोषयन् वाक्यपदीयकारोऽस्य शास्त्रस्य राजमार्गत्वमभिज्ञापयति। अस्य चैकैकाऽपि कारिका ओजःप्रसादसम्पन्ना तत्त्वपरिपूर्णा च। अत एव व्याकरणशास्त्राध्यायिनां कृते वाक्यपदीयस्याध्ययनमध्यापनञ्च शिरोमणिस्थाने सर्वसम्मतम्। ग्रन्थस्यास्य माहात्म्यं स्वीकुर्वद्भिर्विभिन्नाभिर्व्याख्याभिः कृतार्थीकृतः स्वकीयात्मा। अत्रैव प्रथमं हेलाराजेन 'प्रकाश'-व्याख्यया, अस्यैव विश्वविद्यालयस्य स्वनामधन्यैराचार्यैः साक्षात् पाणिनिस्वरूपैर्विद्या-भक्ति-साधनाप्रतिमूर्त्तिभिर्विद्वद्वरेण्यैः पण्डितश्रीरघुनाथशर्मभिः **'अम्बाकर्त्री'**-व्याख्ययाऽपि ग्रन्थोऽयं समलङ्कृतः। यो हि सर्वेषां शास्त्राणां गभीरं पाण्डित्यं धारयति, स एव वाक्यपदीयस्य व्याख्याने प्रभुर्भवति। परमाचार्याः **पण्डितश्रीरघुनाथशर्माण** एतादृशस्य पाण्डित्यस्य तत्त्वज्ञानस्य च वारिधय आसन्। तेषामियं व्याख्या वाक्यपदीयस्यान्तर्निहितानि तत्त्वानि प्रकाशयतीति महद्गौरवस्थानम्।

आचार्यैः पण्डितश्रीरघुनाथशर्मभिरस्य विश्वविद्यालयस्याचार्यत्वेन महती सेवा कृता। तेषां वैदुष्यमयी उक्तपरम्परा शिष्यसम्पच्च सर्वस्मिन्नपि विश्वे राराज्यते। डॉ॰ रामप्रसादत्रिपाठि–श्रीचारुदेवशास्त्रिसदृशा अभिनवपाणिनयस्तेषां शिष्यपरम्परायां सुप्रतिष्ठिताः, येषां स्वतोऽपि महती शिष्यसन्ततिः सर्वस्मिन्नपि राष्ट्रे प्रकाशते। अस्याः 'अम्बाकर्त्री'-व्याख्यायाः सम्पादने तेषां पञ्चमपुत्रैर्विश्व-विद्यालयस्यास्य प्राचीनराजशास्त्रार्थशास्त्रविभागाध्यक्षैः प्रो० नरेन्द्रनाथपाण्डेय-महोदयैर्विद्याविनयविवेकसुसम्पन्नैः साहाय्यमाचरितम्। प्रसङ्गेऽस्मिन् सर्वप्रथमं श्रद्धेयानां श्रीरघुनाथशर्मणां स्मृतावहं स्वकीयां श्रद्धा-भक्तिसुमनोऽञ्जलिं समर्पयामि। तदनु च विद्वद्वरेण्याय डॉ० नरेन्द्रनाथपाण्डेयमहोदयाय, विश्व-विद्यालयस्यास्य प्रकाशनाधिकारिणे डॉ० हरिश्चन्द्रमणित्रिपाठिने, ग्रन्थस्य मुद्रकाय विश्वविद्यालयीयमुद्रणालयव्यवस्थापकाय श्रीघनश्याम-उपाध्यायमहोदयाय च धन्यवादं समर्पयन् ग्रन्थमिमं विद्वज्जनसेवायां समुपहरामि।

वाराणसी
वसन्तपञ्चमी
वि० सं० २०५४

मण्डनमिश्रः
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# भूमिका

## [प्रथमसंस्करणस्य]

हरेर्जरद्गवी द्वैतपङ्के मूढैः प्रवेशिता ।
तदुद्धाराय सज्जस्य ममैष सफलः श्रमः ।।

अथेदं विदितमस्तु विविदिषूणाम् । मम खलु ब्रह्मकाण्डेऽधीतिर्नासीन्मनसि किमिदं ब्रह्मकाण्डमिति । तत्र च हरिनाम्ना समुपलभ्यमानां व्याख्यां दिव्यभाषामिवालौकिकीमुपलभ्याऽपि न किञ्चिदवेदिषम् । परस्परमसम्बद्धमिव च तदा सर्वं प्रतीतमभूत् । अपरा च हरिवृषभटीका समुपलब्धा, सा भाषातः सुबोधाऽर्थगाम्भीर्यादगाधा । तदेवम्—

हरिवाक्यमहाम्भोधौ निमग्नस्य तितीर्षतः ।
मम मातृपदद्वन्द्वमवलम्वं भविष्यति ।।

इति धिया कृतः सङ्कल्पः समग्रस्य वाक्यपदीयस्याम्बाकर्त्रीसमाख्याया व्याख्याया निर्माणे ।

तत्र च तदानीन्तनाः सुगृहीतनामधेया उपकुलपतय आदित्यनाथझामहोदया विदुषां संख्यया सम्प्रार्थिताः साहाय्यायास्य सङ्कल्पस्य पारप्राप्तौ भवन्तो मम लेखं विद्वत्समाजं दर्शयित्वा सत्यां विद्वदनुमतावादिशन्तु वाक्यपदीयस्य व्याख्याविधानायेति । तैस्तु सस्मितं विस्मित्योक्तम्, भवल्लेखस्य परीक्षणं के करिष्यन्ति ? भवद्भिः समारभ्यतामियं व्याख्येति । इदं खलु तद्वचस्त्रपमाणेन मया वैयात्यमङ्गीकुर्वता वस्तुवृत्ततया तद्गुणस्मरणेन प्रेरितेनोक्तम् ।

ततः प्रभृति सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य शैशवकाल एवास्या व्याख्याया अपि शैशवम् अवर्तत, वाक्यपदीयञ्च व्याख्याभेदैश्चानल्पैः शब्दशरपञ्जरीकृतमासीत् । प्रतिदिनञ्च वाक्यपदीयभावावबोधे खिद्यमानमानसेन मयाऽम्बां स्मारं स्मारं हरेरभिसन्धिर्विज्ञातः, पाठभेदा अन्यतरत्वेनान्यतमत्वेन वा निर्णीताः । एकदा त्वहम्—

गौरिवासितपक्षस्य सा मुदे चारुहासिनि ।
अहेः पञ्चपदानीव त्वमेव शरणं मम ।।

इति वाराणसेयचौखम्भासंस्कृतपुस्तकालयाधिपतिमुद्रिते ग्रन्थपाठे गाढं निमग्नः ।

पञ्चषाणि दिनान्यबोध आसम् । अभूच्च मम मनस्येतावदेवैतस्य ग्रन्थस्य व्याख्यानम् । नातः परं भविष्यतीति । तत्र च खिद्यमानस्य मुहुर्मुहुरम्बां स्मरतो मे मनसि समुदभूदपूर्वो बोधः । ततश्चेदं पद्यमेवं संशोध्य व्याख्यातम्—

ग्लौरिवासितपक्षस्य साऽमुदे चारुहासिनि ।
आहेः पञ्चपदानीव त्वमेव शरणं मम ॥ इति ।

एकदा च बलियामण्डलान्तर्गते छाताग्रामे स्वाभिजने निवसता गृहीतावकाशेनापि स्वाध्यायानवलोपिना वाक्यपदीयं व्याचक्षाणेनैकं मीमांसावार्त्तिकपद्यमुपलब्धम् । यस्यायमन्तिमः पादः — 'अध्रिगौ विषमं हि तत्' इति ।

छाताग्रामे च ग्रन्थागाराभावाद् मम गृहेऽपि तदभावाद् अस्मिन् पद्ये मम महदज्ञानं प्रादुरासीन्मनसि सर्वं शास्त्रीयं ज्ञानमावारयत् । तदा च वाराणसीं सम्प्रस्थितो मम पञ्चमस्तनयो नरेन्द्रनाथनामा समादिष्टः । त्वं श्रीश्यामसुन्दरशर्माणं सम्पूर्णानन्दसंस्कृतविश्वविद्यालये मीमांसाशास्त्रस्य प्राध्यापकं गत्वा मद्वचसा ब्रूहि — यद् मीमांसावार्त्तिकमवलोक्यैतत् पद्यम्, अस्य व्याख्यानञ्च तत्रत्यं विलिख्य छाताग्रामे प्रेषयत्विति । श्रीश्यामसुन्दरशर्मणस्त्वस्मिन् कर्मणि मन्नियोगे विलम्बो जातः । अहं तु छाताग्रामे तदा समुद्विग्न आसम् । ततश्चासिद्धवत् कृत्वा चिन्तान्यायेन मया तत् पद्यमन्यथाकृतम् । अन्यथा च व्याख्यातम् । तदनन्तरं च श्रीश्यामसुन्दरशर्मणः पत्रं समागतम्, यत्र तथैव तत् पद्यमासीत्, यथा वाक्यपदीये । व्याख्यानमपि तस्य मम व्याख्यानादन्यदेवासीत् । तदा च स्वश्रमवैफल्यं मा भूदिति विचिन्त्य स्वव्याख्यानमन्यथाकृतम् । पाठञ्च द्वयमपि लौकिकोदाहरणपरतया संरक्षितम्, न तु बहिष्कृतम् । 'आचार्याः कृत्वा न निवर्तयन्ति' इत्यनुशासनं विद्वद्विषयकं स्मरता मीमांसावार्त्तिकस्थः पाठः, तद्व्याख्यानञ्चापि तत्रैव तद्ग्रन्थनाम्नैव च समुल्लिखितं विदुषां प्रेक्षायै समीक्षायै च ।

एवं पञ्चषाणि वर्षाणि संस्कृतविश्वविद्यालये, १० वर्षाणि च छाताग्रामे निवसता मया प्रायेण षोडशभिर्वर्षैरियम् अम्बाकर्त्रीव्याख्या पराम्बाकृपया समापूरिता । एतावद्भिरेव वर्षैरियं संस्कृतविश्वविद्यालयाधिकारिभिर्मुद्रिता ।

वाक्यपदीयेऽखिले तद्व्याख्यानेषु च काण्डत्रये मुद्रितेषु ये पाठभेदाः पुस्तकेषूपलब्धाः, श्रीचारुदेवशास्त्रिभिः, श्रीसुब्रह्मण्य-अय्यरमहाभागैश्च महता श्रमेण सङ्गृहीताः, ते इदानीं मया निर्णीयन्ते । सप्रमाणं तस्य च पाठभेदनिर्णयनाम्नो ग्रन्थस्य प्रायेण भागत्रयं पूर्णं जातम् । चतुर्थो भागस्त्ववशिष्टो वेगेन विलिख्यते । पराम्बानुकम्पया सद्य एव पूर्तिमेष्यति । पाठभेदनिर्णयश्च जवेनैव प्रकाश्यते ।

एवं महति काले व्यतीते वाक्यपदीयस्य भूयोद्रव्यसमुद्देशमारभ्य लिङ्गसमुद्देशान्तो भागो महान् सम्मुद्रितः। यत्र च वाक्यपदीयकारिका, हेलाराजकृता तद्व्याख्या, मम चाम्बाकर्त्रीव्याख्या चैतत् त्रयं वर्तते। अम्बाकर्त्र्यां च पूर्वकाण्डद्वयवद् वाक्यपदीयकारिका, हेलाराजीयं व्याख्यानञ्च व्याख्यातम्। इयं चाम्बाकर्त्री न पूर्वव्याख्यानैर्गतार्थेति। अत्रैव मुद्रितं पूर्वव्याख्यानं विलोक्य विभावयन्तु विद्वांसः। यद्यपि मया क्वचित् क्वचित् पूर्वव्याख्यानं प्रत्याख्यातम्, अन्यथा च व्याख्यातम्। तेनेदं न मन्तव्यं मम हेलाराजे नास्ति श्रद्धासम्पदिति। यतस्तृतीयकाण्डारम्भ एव मयेदं सबहुमानमुक्तम्--'हेलाराजः स मे गतिः' इति। अन्ते चाहं पराम्बां याचे—

विपद् विवदतां श्रयत्ववनिमण्डलं मोदतां
स्वगोत्रमुपवर्द्धयद् गृहिकदम्बकं वर्द्धताम्।
धनादिभिरहर्निशं विवदतां बुधानां कुलं
विचित्य विषयं मुदा विधिषु शश्वदातिष्ठताम्॥ इति।

आश्विननवरात्रम्
वि० सं० २०३५

विदुषां वशंवदः
**रघुनाथशर्मा**

# प्रास्ताविकम्

## [ प्रथमसंस्करणस्य ]

यथा वेदमुखं व्याकरणं पाणिनिमुनिना पूर्ववर्तीनि व्याकरणानि निर्मथ्य सूत्रैर्निबद्धम्, तथैव व्याकरणदर्शनकेसरिणा भर्तृहरिणा प्राक्तनान् दर्शनग्रन्थान् समालोडच कारिकाभिर्न्यबन्धि तदीयोऽप्रतिमो दर्शनग्रन्थो वाक्यपदीयं नाम। तत्रोदग्रः समग्रो ग्रन्थोऽयमासीत् स्वोपज्ञव्याख्ययापि विभूषितः, किन्तु दुर्दैवाद् नासावनूनका लभ्यते स्वोपज्ञव्याख्या। पुण्यराजहेलाराजाभ्यां स्वकीयाभ्यामपूर्णाभ्यामपि सम्भूय पूर्णाभ्यां व्याख्याभ्यां सनाथितोऽयं भाष्यतया।

इह प्रकीर्णात्मके तृतीये काण्डे श्रीभूतिराजतनयहेलाराजकृता प्रकीर्णप्रकाशाख्या व्याख्या वाक्यपदीयतात्पर्यं विशदीकरोति। द्वादशखीस्तशताब्दस्थितात् पुण्यराजात् प्राक्तनः खलु हेलाराजः। अभिनवगुप्ताचार्यस्य गुरुरयं दशमस्य खीस्तशताब्दस्य पूर्वार्द्धे समवस्थित आसीदिति शक्यते वक्तुम्। कश्मीरनृपतिमुक्तापीडमन्त्रिणो लक्ष्मणस्यान्ववाये हेलाराजो जनिं लेभ इति तदीयव्याख्याया अन्तिमेन श्लोकेन बुध्यते। तेन खलु—'क्रियाविवेकः', 'अद्वयसिद्धिः', 'वार्त्तिकोन्मेषः' चेति ग्रन्थत्रयमन्यदपि प्रणीतमासीदिति तदीयया वाक्यपदीयव्याख्ययाऽवसीयते।

वाक्यपदीयतृतीयकाण्डस्य द्वितीयस्मिन्नस्मिन् खण्डे भूयोद्रव्यसमुद्देशः, गुणसमुद्देशः, दिक्समुद्देशः, साधनसमुद्देशः, क्रियासमुद्देशः, कालसमुद्देशः, पुरुषसमुद्देशः, संख्यासमुद्देशः, उपग्रहसमुद्देशः, लिङ्गसमुद्देशश्चेति विकीर्णा बहवः समुद्देशा विलसन्ति। तत्र साधनसमुद्देशे कर्म-कर्तृ-करण-हेतु-सम्प्रदानापादानाधिकरण-शेषाणामधिकारा निरूपिताः सन्ति। समस्तविद्याश्रीकान्तस्य भर्तृहरेर्भाष्याब्धिपीयूषच्छटाच्छुरितविग्रहाणां वाक्यपदीयसूक्तिश्रियां प्रकाशः प्रकाशव्याख्ययापि निर्भरं न जायते। वस्तुस्थितिमिमामाकलय्य पदवाक्यपारावारीणैर्मुनिकल्पैः पण्डितशिरोमणिभिः श्रीमद्भी रघुनाथशर्ममहोदयैः प्रकाशमालोडच विशदीकृतं तदीयमैदम्पर्यम् अम्बाकर्त्र्याख्यव्याख्यायाम्। सहस्रहायनोत्तरमयमायास इति विज्ञाय साश्चर्यं हृष्यति सुधीस्वान्तारविन्दम्।

यद्यपि श्रीशर्मभिः प्रकाशमाधारीकृत्य वाक्यपदीयं वैशद्येन व्याख्यातम्, तथापि तत्त्वज्ञैस्तैस्तत्रान्यथाव्याख्यातान् पदार्थान् निराकृत्य स्वसिद्धान्तः स्थिरीकृतः। 'तदुक्तम्' 'तदुक्तम्' इति व्याख्यानिपुणा भवन्ति प्रायो देववाणीकोविदा इति जनवादपरीतचेतसो विभावयन्तु सुधिय इहाम्बाकर्त्र्यां 'मदुक्ति'–विलासम् —

यत्त्वत्रोक्तं हेलाराजेन—'सूक्ष्माणां च विशेषाणामसंविज्ञातपदानाम्……' इति। अत्रेदं वक्तव्यम्………कोऽयं विरोधपङ्किलः पन्थाः समाश्रीयते?' इति ( ४३ पृ० )।

यत्त्वत्र हेलाराजेनोक्तम्—"भासुरत्वादेरिव चात्र प्रयोगप्रामाण्याद् वाहदोहादेरपि शब्दार्थत्वमवसेयम्' इति शक्तेः सङ्केतानुसारित्वाद् वाहदोहादौ च गोशब्दस्यासङ्केतितत्वादित्यनुभूतिविरोधिन्येषा हेलाराजीया कल्पना। 'गोतरा' इति प्रयोगप्रामाण्योपपत्तिस्तु मदुक्तरीत्याऽत्रैव दर्शितयाऽनुसन्धेया" इति ( ४६ पृ० )।

यत्तु "अस्या एव कारिकाया अवतरणावसरे ………'शक्तिमादधाति' इत्यादौ कर्मत्वादिशक्तीनामनुपपत्तिराशङ्किता श्रीहेलाराजेन……इत्युक्तवता, तदेतदसमीचीनं प्रतिभाति" इति ( ९९–१०० पृ० )।

यत्त्वत्र हेलाराजेनोक्तम्—"एवमपि परत्वात्……'। अत्रेदं चिन्त्यम्" इति ( १३७ पृ० )। इदं तु हेलाराजोक्तं न युक्तं प्रतिभाति ( २४८ पृ० )। "एतत्तु न युक्तम्, 'तद्वदनुक्ताऽपि प्रकाशते' इति पूर्वकारिकोक्तरीत्या 'तद्वद्धर्मः प्रकाशते' इति पाठस्यैव युक्तत्वात्। मया च तथैव व्याख्यातत्वात्" इति ( २५३ पृ० )।

यत्तु हेलाराजेनोक्तम्—"प्राप्तेर्भक्षणक्रियासम्बन्धाद् योऽपि प्रचयापचययोर्विशेषस्तेनाप्रयुक्तम्' इति। तदेतदपेशलम्, अप्रचितमित्यतः प्रचयरहितमित्यर्थस्यैव प्रतीतेः" इति ( २६० पृ० )।

यत्तु हेलाराजेनोक्तम्—'तथा कर्मकर्तृविषये……' इति तन्न ( २६८ पृ० ), यत्तु हेलाराजेनोक्तम्—'धनाभावेन मुक्त……तच्चिन्त्यम्' ( २८२ पृ० ), यत्त्वत्र हेलाराजेनोक्तम्—'स्व आत्मा तन्त्रं प्रधानमस्य………' इति तच्चिन्त्यम् इति ( २८६ पृ० )।

अत्र यदुक्तं हेलाराजेन 'कर्तृप्रत्ययोत्पत्तौ………' इति तच्चिन्त्यम् इति ( ३१० पृ० )।

यत्तु 'देवदत्तः……तदपि न समीचीनम्' ( ४२९ पृ० )। वस्तुतस्तु नेदं मतं युक्तम् इति ( ४३४ पृ० )।

यत्त्वत्रोक्तं हेलाराजेन—'उपाध्यायश्चेदागतः ··· ···' अत्र······इत्यंशो दुष्टः। किञ्चात्र 'तन्त्रं प्रधानम्' इत्यंशोऽपि दुष्टः ( ६३८ पृ० )। हेलाराजेन तु 'ये·····सम्बोधनमुपयन्ति' इत्युक्तम्, तदपेशलम्, पूर्वस्मात् पक्षादविशेषात्। तस्मान्मदुक्तमेव सम्यक् ( ६५५ पृ० )। नापि पङ्कजादिवद् योगरूढया— इति हेलाराजः, इदं तु चिन्त्यम्, योगरूढेः प्रागुक्तरीत्या सम्भवादिति ( ७११ पृ० )।

एकत्र तु शेखरस्यापि फलितार्थकथनमुरीकृतं श्रीशर्मभिरम्बाकर्त्र्याम् ( २१३ पृ० )।

यद्यपि श्रीशर्ममहोदयैर्हेलाराजः पदे पदे समालोचितः, तथापि न तस्मिन्न-समादरबुद्धिर्मनागपि तदीया। तैः सबहुमानमुक्तमपि 'हेलाराजः स मे गतिः' इति। श्रीशर्मभिः सर्वत्र हेलाराजीयं प्रकीर्णप्रकाशमाश्रित्य ग्रन्थः सुविशदं व्याख्यातः। अनेकत्र हेलाराजीयमतस्यैव युक्तियुक्तत्वं प्रतिपादितम्—'अनयोरवतरणिकयो-र्हेलाराजीयावतरणिकैव युक्ता' इति ( १६४ पृ० )। 'अयं च कारिकोत्तरार्द्धो हेलाराजमतमनुरुध्य दर्शितः' इति ( १७२ पृ० )।

क्वचिद् हेलाराजमतखण्डनं विधाय पुनस्तन्मतस्यार्थान्तरेण सङ्गति-श्चेष्टिता—'यद्वा फलावच्छिन्नो व्यापारो धात्वर्थः। केवलफलं च ततोऽर्थान्तर-मित्यभिप्रेत्य हेलाराजोक्तं वेदितव्यम्' ( २६८ पृ० )। 'इदं तु परिणामवादिसांख्यादि-दर्शनेषु कार्यकारणयोरभेदपक्षे कथ्यते' इति हेलाराजवचनस्य स्पष्टीकरणं दृश्यते ( २९४ पृ० )। एतच्च हेलाराजानुरोधेनोक्तम् ( ३७८ पृ० ) इति।

'वयं तु मन्यामहे' ( ४६२ पृ० ), 'वयं तु ब्रूमः' ( ५१० पृ० ) इत्यादिदृशाऽ-म्बाकर्त्रीकारैः स्वाभिप्राय आविष्कृतो बहुषु स्थलेषु।

बहुत्र पाठभेदनिर्णयोऽपि व्यधायि—'अप्रकर्षं प्रकर्षेण गुणस्याविश्यते तथा' ( गुणसमुद्देशे, श्लो० ९ ) इत्यस्यां कारिकायाम् अत्र 'आदिश्यते' इति पाठो युक्तः। आदेशाख्यानयोर्भिन्नपदोपात्तयोरप्येकत्वात् साधारणधर्मत्वेन वाक्यार्थद्वयगत-सादृश्यप्रयोजकत्वसम्भवात्। आख्यानावेशयोस्तु तदसम्भवात्। किञ्चात्रादिश्यत इति पाठ एव प्रतिवस्तूपमालङ्कारसम्भवः। एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगुक्तेरिति ( ४७ पृ० )। 'तद्वदनुक्ताऽपि प्रकाशते' इति पूर्वकारिकोक्तरीत्या 'तद्वद् धर्मः प्रकाशते' इति पाठस्यैव युक्तत्वात्' ( २५३ पृ० ) इति। क्वचित्तु 'शौर्पिकादौ' इति पाठः, स त्वपपाठः ( ६६१ पृ० ) इति।

सम्पूर्णसंस्कृतवाङ्मयं निर्मथ्य खल्वम्बाकर्त्री विरचितेति तस्याः पर्यालोडनेन समवगम्यते। सर्वेषां शास्त्राणां गभीरपाण्डित्यमपेक्ष्यते वाक्यपदीयव्याख्यान-प्रक्रमे। अतो महाधियोऽपि बिभ्यति मज्जनादत्र। पण्डितप्रवरैः श्रीशर्मभिरेत-दर्थमम्बाकर्त्रीरूपा सोपानपङ्क्तिरायोजितेति तदर्थं ते चिराय कीर्तिजुषो भविष्य-न्तीति मे दृढः प्रत्ययः। अनुसन्धानाधिकारिणामन्यतमेन पण्डितरामगोविन्द-शुक्लेन ग्रन्थस्यास्य सम्पादनप्रक्रियायाम् आकरग्रन्थस्थलनिर्देशादिसाहाय्यमाच-रितमिति स साधुवादैः सभाज्यते। अध्यापननदीष्णानामध्यापकानाम्, अनुसन्धि-त्सूनाम्, जिज्ञासूनां च महते लाभाय भविष्यतीदं संस्करणं वाक्यपदीयस्य व्याख्या-द्वयविलसितमिति मन्वानस्तेषां करसरसीरुहयोः साह्लादमुपहरति।

वाराणस्याम्
महाशिवरात्रौ, २०३५ वै०
( २५-२-७९ खी० रवौ )

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री:'
तदानीन्तन-निदेशकः
अनुसन्धानसंस्थानस्य

# विषयानुक्रमणिका

॥ श्रीगणेशाम्बिकाभ्यां नमः ॥

# वाक्यपदीयम्

## श्रीहेलाराजविरचित'प्रकाश'-
## श्रीरघुनाथशर्मविरचित'अम्बाकर्त्री'-
## टीकाद्वयोपेतम्

# अथ तृतीयकाण्डः

## भूयोद्रव्यसमुद्देशः

❀ ❀ ❀

### प्रकाशः

तदेवं शब्दार्थयोः सम्बन्धमुक्त्वान्वाख्यानोपयोगी पदार्थः शास्त्रे कार्यार्थं लौकिकः प्रविभज्यत इत्युपक्षिप्तः। जातिद्रव्ये हि सर्वशब्दानामर्थ इति। "सिद्धे शब्दार्थसम्बन्धे" ( म० भा० पस्पशा० ) इत्यत्रार्थनित्यतासमर्थनार्थं पूर्वमुक्ते।

---

### अम्बाकर्त्री

या जाग्रतो दूरमुपैति देवी जन्तोः सुषुप्तस्य समीपमेति।
सा सर्वदेवैरविभाततत्त्वा सत्त्वं सदा संश्रयतां चितिर्मे ॥ १ ॥

साधनं विधुविभूषणस्य या साधनं मम करोतु मानसे।
साधनं सकलसम्पदामियं साधनं खलु करोति याऽधनम्। २ ॥

सहजसुन्दरनिर्दरसद्वरे समितिमोदसमन्वितमानसा।
वरवपुः प्रतिवेषिवपुः शुभं दिशतु सा वरमद्भुतमङ्गना ॥ ३ ॥

बद्धश्रद्धाश्चरणयुगले वत्सला अङ्कपाल्यो-
र्ग्लानिम्लाना उरसि महति व्याप्तमुण्डेति भीताः।
कण्ठे भालीकृतफणिपतौ सस्पृहाश्चारुवक्त्रे
पत्युर्मूर्ध्नि प्रणतिपरुषा दृष्टयः पान्तु मातुः ॥ ४ ॥

इदानीमन्वाख्यानाङ्गमपोद्धारपदार्थो द्रव्यगुणादिकः समुद्देष्टव्य इति प्रविभज्यत इत्युक्ते तस्य कुतः प्रविभाग इत्याह —

संसर्गरूपात् सम्भूताः संविद्रूपादपोद्धृताः ।
शास्त्रे विभक्ता वाक्यार्थात् प्रकृतिप्रत्ययार्थवत् ॥ १ ।
निमित्तभूताः साधुत्वे शास्त्रादनुमितात्मकाः ।
केचित् पदार्था वक्ष्यन्ते संक्षेपेण यथागमम् ॥ २ ॥

निरंशस्य वाक्यस्यैव वाचकत्वात् तदर्थात् पृथक्त्वेन पदार्था व्यवस्थाप्यन्ते । स च वाक्यार्थः संसर्ग एव रूपम्, आत्मा यस्य स तथा । क्रियाकारकतद्विशेषणसंसर्गो वाक्यार्थः । एतेन च प्रविभागबीजमाह । सर्वथा निरंशे वाक्यार्थे

---

करकलितमृणालश्चन्द्रमाशोभिभालः
शितसृणिघृणिकम्पा कम्पिताभीतकालः ।
वचनजितरसालस्त्रैदशव्रातपालः
स जयति गिरिजाया नन्दनः कोऽपि बालः ॥ ५ ॥

तदेवं सम्बन्धसमुद्देशे शब्दार्थयोः सम्बन्धमवधार्य अन्ते शब्दानुशासनोपयोगी लौकिकः पदार्थो व्याकरणशास्त्रे कार्यार्थं प्रविभज्यत इत्युपसंहृतः । द्विकं प्रातिपदिकार्थ इति पक्षे-जातिद्रव्ये हि सर्वशब्दानामर्थः, लिङ्गसंख्याकारकाणि तु विभक्तिवाच्यानि इति कृत्वा 'सिद्धे शब्दार्थसम्बन्धे' इत्यत्र शब्दार्थनित्यतासमर्थनार्थं जातिसमुद्देशे द्रव्यसमुद्देशे च प्रकरणे ते पूर्वमुक्ते । इदानीं शब्दानुशासनाङ्गो वाक्यार्थात् संसृष्टादपोद्ध्रियमाणः पदार्थो द्रव्यगुणादिकः समुद्देष्टव्यः=सम्यगुपदेष्टव्य इति मनसि निधाय प्रविभज्यत इत्युक्ते तस्य कुतः प्रविभाग इत्याशङ्क्य युग्मेनाह—संसर्गरूपादिति ।

अयमस्य पद्यद्वयस्यार्थः—पदार्थद्वयसंसर्गरूपाद् वाक्यार्थात् संभूताः=संभविनः, प्रविभागरूपस्यापोद्धारस्य प्राक् संसर्गं विनाऽसम्भवात् । संविद्रूपात्=अत्र संविद् अपोद्धारबुद्धिः, तया रूप्यमाणात्=अपोद्धारावधित्वेन गोचरीक्रियमाणाद् वाक्यार्थाद् अपोद्धृताः । यद्वा संविद्रूपादिति ल्यब्लोपे पञ्चमी । अपोद्धारबुद्धिस्वरूपं हेतुत्वेनाश्रित्य अपोद्धृताः । यद्वा संविद्रूपादिति हेतौ पञ्चमी । अपोद्धारबुद्धिस्वरूपं हेतूकृत्य अपोद्धृताः । प्रकृतिप्रत्ययार्थवत्=पाचकादिपदार्थात् प्रकृत्यर्थप्रत्ययार्थविभागवद् व्याकरणशास्त्रे वाक्यार्थात् प्रविभक्ताः। शब्दसाधुत्वे=तदनुशासने निमित्तभूताः । शास्त्रात्=तत्तद्व्याकरणसूत्रात्, अनुमितात्मकाः=अनुमितस्वरूपाः, यथा—एकशेषशास्त्रारम्भेण द्रव्यं शब्दार्थं इत्यनुमीयते । द्रव्यस्य शब्दार्थत्वे एवार्थभेदेन शब्दभेदप्रसक्तेरेकशेषशास्त्रारम्भः सार्थकः । एवं गुणादीनामपि शब्दार्थत्वे

प्रविभजनीयरूपाभावात्। संसर्गे तु युक्तं संसृष्टार्थप्रविभजनम्। अत एव सम्भूता इत्याह। संसर्गावस्थायां सम्भवन्तो विद्यमाना इत्यर्थः। तेन संसृष्टा विद्यमाना अपोद्धर्तुं शक्यन्ते। असतामयःशलाकाकल्पानां च परस्परानन्वयेनापोद्धारा-भावात्।

संवित् संवेदनम्, अपोद्धारबुद्धिस्तस्या रूपम् आत्मा। ततो हेतोः अपोद्धृताः पृथक्कृताः।

एतदुक्तं भवति- यद्यपि वाक्यार्थे पदार्थाः कदाचिदपि विवेकेन नावधार्यन्ते, तथा च कीदृशः संसर्गः, तस्य भेदपूर्वकत्वादिति, तथापि प्रतिपत्तृभिरनंशस्य युगपत् प्रत्येतुमशक्यत्वात् क्रमेणांशांशिकया संवेदने भेदपूर्वकसंसर्गव्यवहारात् तदभिप्रायेण तयैवापोद्धारबुद्धया हि विविच्यन्तेऽर्थाः। तद्यथा पानकद्रव्ये

---

भावव्याख्यानावसरे उदाहरिष्यते। एवं विशेषणपञ्चकविशिष्टाः केचित् पदार्था द्रव्यगुणादयः यथागमम् = वैयाकरणानामुपदेशपारम्पर्यरूपं सम्प्रदायमनतिक्रम्य संक्षेपेण वक्ष्यन्त इति।

अयं भावः—निरंशस्य वाक्यस्यैव वाचकत्वात्, निरंशस्य वाक्यार्थस्यैव वाच्यत्वाच्च तादृशादेव वाक्यार्थात् संसर्गरूपात् कल्पनयाऽपोद्धृत्य पृथक्त्वेन = वाक्यार्थाद् भेदेन, पदार्था अत्र शास्त्रे व्यवस्थाप्यन्ते। क्रियाकारकतद्विशेषण-संसर्गो हि वाक्यार्थः। कारिकायां संसर्गरूपादित्यनेन च पदार्थानां ततः प्रविभाग-बीजमुक्तम्। सर्वथा निरंशे वाक्यार्थे प्रविभजनीयत्वासंभवात्। वाक्यार्थस्य संसर्गत्वे तु युक्तं तस्य संसृष्टार्थरूपस्य प्रविभजनम्। अत एव कारिकायां संभूता इत्याह। संसर्गावस्थायां संभवन्तो विद्यमाना इति तदर्थः। तेन परस्परं संसृष्टा विद्यमानाः कल्पनया ततोऽपोद्धर्तुं शक्यन्ते। वाक्यार्थे सर्वथाऽसताम्, परस्परा-नन्वयेन पृथक् पृथगवस्थितानां छत्रविनियुक्तायःशलाकाकल्पनाच्च पदार्थानाम-पोद्धाराभावात्। संविद्रूपादपोद्धृता इत्यत्र संवित् = संवेदनम्, अपोद्धारबुद्धिस्तस्या रूपमात्मा स्वरूपम्, तस्माद् हेतोरपोद्धृताः = पृथक्कृताः।

अस्यायमाशयः—यद्यपि वाक्यार्थे पदार्थाः कदाचिदपि विवेकेन = भेदेन पृथक्तया नावधार्यन्ते, वाक्यार्थस्य वस्तुतो निरंशत्वात्। तथा च तेषां वाक्यार्थे परस्परं संसर्गो न संभवति, संसर्गस्य भेदपूर्वकत्वात् = पृथक्त्वपूर्वकत्वादिति। तथापि अनंशस्य वाक्यार्थस्य प्रतिपत्तृभिर्युगपत् प्रत्येतुमशक्यत्वम्। वस्तुस्वाभाव्येन क्रमेणैव पदार्थोपस्थितिपूर्वकस्य वाक्यार्थानुभवस्य सदा दृष्टत्वात्। तथा च क्रमेणांशांशिकया = अंशांशिभावकल्पनया वाक्यार्थस्य संवेदने भेदपूर्वकस्य संसर्ग-व्यवहारस्य संभवात्। तदभिप्रायेण = तादृशसंसर्गव्यवहाराभिप्रायेण तयैवापोद्धार-बुद्धया हि वाक्यार्थात् पदार्था विविच्यन्ते = विविच्य पृथक्कृत्य प्रतीयन्ते। तद्यथा

गुडादिमात्रा विवेकशून्या अप्यास्वादयितृभी रासनविज्ञानविवेकेन पृथक्कृत्य व्यवह्रियन्ते।

यदा तु रूपशब्द आकारपर्यायः, तदेयं ल्यब्लोपे पञ्चमी। संविदः कल्पनाबुद्धे रूपम् आकारमाश्रित्येत्यर्थः।

वाक्यार्थस्यानंशस्य झटिति प्रत्येतुमशक्तेरन्तरा पदार्थाकारबुद्धयो विभ्रमास्तत्तदंशाच्छुरिता इति तद्बुद्धिनिविष्ट एव त्वाकारो वस्त्वित्यध्यवसायात् पदार्थत्वेन परिकल्प्यते पूर्वकक्ष्यायामुपायभूतायाम्। प्रतिपन्ने तु समस्ते वाक्यार्थे सामान्यमात्रस्य भिन्नस्याभिन्नेन तेन सत्यभूतेन बाधः।

किमपोद्धारे प्रयोजनमित्याह—शास्त्रे विभक्ता इति। प्रत्यासत्त्या व्याकरणशास्त्र इत्यवगन्तव्यम्। अत्र हि लक्षणवाक्यानामुपायभावेन द्रव्यगुणादयोऽर्था विषयविभागेनोपात्ता इति वाक्यार्थादपोद्धार एतत् प्रयोजनं लक्षणं यथाविभागं

---

पानकद्रव्ये गुडादिमात्राविवेकशून्या अपि=आपाततो भेदेनाप्रतीयमाना अपि, आस्वादयितृविशेषैः रासनविज्ञानगोचरेण विवेकेन=भेदेन पृथक्कृत्य व्यवह्रियन्ते—अयं गुडस्य रसः, अयं पित्तकारिण्या रस इति।

यदा तु कारिकायां संविद्रूपादित्यत्र रूपशब्द आकारपर्यायः, तदेयं ल्यब्लोपे पञ्चमी। संविदः=वाक्यार्थे पदार्थकल्पनाबुद्धे रूपमाकारमाश्रित्येत्यर्थः। आकारः संस्थानरूपो धर्मः, स्वरूपं तु धर्मीति विशेषः।

वाक्यार्थस्य वस्तुतोऽनंशस्य वस्तुस्वाभाव्येन झटिति प्रत्येतुमशक्तेरनन्तरा=वाक्यश्रवणवाक्यार्थबुद्ध्योर्मध्ये, पदार्थाकारबुद्ध्योर्विभ्रमरूपाः कल्पिततत्तदंशाच्छुरिता इति तद्बुद्धिनिविष्ट एव तु पदार्थाकारः, न तु बहिर्वस्तुभूतः, मिथ्यारजतबुद्धौ निविष्टं रजतमिव। स च वाक्यार्थे कल्पितः पदार्थाकारो बुद्धिमात्रनिविष्टो बहिरसन्नपि वस्तुत्वेनाध्यवसायात्। वस्तुभूतपदार्थत्वेन परिकल्प्यते, वाक्यार्थबोधात् पूर्वकक्षायां तदुपायभूतायां प्रतिपन्ने तु समस्ते वाक्यार्थे सामान्यमात्रस्य=अनन्वितस्य पदार्थस्य वाक्यार्थबोधात् पूर्वमुपस्थितस्य सामान्यमात्रस्य, भिन्नस्य=अनन्वितात् पदार्थविशेषात् अखण्डाद् वाक्यार्थाच्च भिन्नस्य, वस्तुतोऽभिन्नेन=अखण्डेन=अनंशेन, तेन=वाक्यार्थेन सत्यभूतेन असत्पदार्थकल्पनाधिष्ठानेन ज्ञातेन सता रज्जुज्ञानेन सर्पस्येव, शुक्तिकाज्ञानेन रजतस्येव बाधो वाक्यार्थे कल्पितस्य पदार्थसामान्यस्य वाक्यार्थात् पदार्थापोद्धारे किं प्रयोजनमिति जिज्ञासायामाह कारिकायाम्—शास्त्रे विभक्ता इति। प्रकरणप्रयुक्तया प्रत्यासत्त्या व्याकरणशास्त्र इत्यवगन्तव्यम्। व्याकरणशास्त्रे हि लक्षणवाक्यानाम्=सूत्रात्मकवाक्यानाम्, तत्तल्लक्ष्ये प्रवृत्त्युपायत्वेन द्रव्यगुणादयोऽर्था विषयविभागेन=लक्षणवाक्यानां विषयविभागार्थम्, उपात्ता इति वाक्यार्थात् पदार्थानामपोद्धार एतत्

नियतविषयमवतिष्ठतामिति ।

तथा हि—उपलक्षणत्वेनार्थानामङ्गभावः शास्त्रे समाम्नातः, न विधेयत्वेन, "अर्थानादेशनात्" (म०भा० २।१।१) इति लोकप्रसिद्धमर्थमनूद्य स्वरादिसंस्काराययोपदेशः ।

प्रकृतिप्रत्ययार्थवद् इति । प्रकृतिप्रत्यययोर्नामाख्यातपदविषययोः स्वार्थोऽत्र काल्पनिकः । तेन यथा निरंशात् पदार्थात् प्रकृत्यर्थः प्रत्ययार्थश्चापोद्धारबुद्ध्या-न्वयव्यतिरेकाभ्यां पदवादिभिरपोद्ध्रियते, तथा वाक्यवादिभिरखण्डाद् वाक्यार्थात् पदार्थ इत्युभयत्राप्यपोद्धारः समान इत्यर्थः ।

निमित्तभूता इति । यतस्तेषां निमित्तभावः शब्दसाधुत्वविषयः, अतो विभक्ता इत्यर्थः । ते चार्था द्विविधाः—लोकप्रसिद्धाः, वैशेषिकादिशास्त्रपरिभा-

---

प्रयोजनम्, लक्षणम्=सूत्रम्, विषयविभागपूर्वकं नियतविषयकं भूत्वाऽवतिष्ठतामिति ।

तथा हि—अर्थानामुपलक्षणत्वेन = विधेयोपलक्षणत्वप्रयुक्तेनोद्देश्यत्वेन विधेयाङ्गभावः शास्त्रे समाम्नातः, न तु विधेयविशेषणतयाविधेयत्वेन, यथा "कर्त्तरि कृत्" इत्यत्र कर्त्तृत्वं कृद्रूपस्य विधेयस्योपलक्षणम्, न तु विशेषणम् । तदानीं तस्य तत्र वाच्यत्वेनाविद्यमानत्वात् । अत एव 'अर्थानादेशनात्' इत्युक्तम् । लोकप्रसिद्धमर्थमनूद्य स्वरादिसंस्काराय शब्दस्योपदेशः शास्त्रेण क्रियते, न त्वर्थस्य, तस्य लोकसिद्धत्वेनापूर्वत्वाभावात् ।

कारिकायाम्—प्रकृतिप्रत्ययार्थवदिति । नामाख्यातपदगतयोः प्रकृतिप्रत्यययोरत्र=नामपदे आख्यातपदे च स्वार्थः काल्पनिकः, पदार्थस्यैवाखण्डस्य वस्तुत्वात् । लोके पदगतप्रकृतिप्रत्ययविभागज्ञानशून्यानामवैयाकरणानां तथैवावगमात् । तेन यथा निरंशात् पदार्थात् प्रकृत्यर्थः प्रत्ययार्थश्चापोद्धारबुद्ध्या प्रकृत्यर्थप्रत्ययार्थयोरपोद्धारे करणीभूतया अन्वयव्यतिरेकाभ्याञ्च तत्र कारणाभ्यां पदाखण्डत्ववादिभिः कर्तृभिरपोद्ध्रियते । तथा वाक्याखण्डत्ववादिभिरपोद्धारबुद्ध्याऽन्वयव्यतिरेकाभ्यां पदार्थोऽपोद्ध्रियत इत्येवमुभयत्रापि=वाक्यार्थे पदार्थे च पदार्थापोद्धारः प्रकृत्यर्थप्रत्ययार्थयोरपोद्धारश्च समान इत्यर्थः ।

कारिकायाम्–निमित्तभूता इति । यतः पदार्थानां पदसाधुत्वविषये विधेयोपलक्षणतया निमित्तभावः शास्त्रबोधितः, अतो वाक्यार्थात् पदार्था अपोद्धारबुद्ध्या विभक्ता इति पृथक्कृता इत्यर्थः । ते च पदार्था द्विविधाः—लोकप्रसिद्धाः, वैशेषिकादिशास्त्रेषु परिभाषिताश्च । तत्र लोकप्रसिद्धाः पशुरपत्यं देवतेत्यादयः । ते च पदार्था इह शास्त्रे लोकप्रसिद्धत्वादेव न परिभाष्यन्ते । ये तु शास्त्रान्तरे परिभाषिता द्रव्यगुणादयस्ते स्वनिकायव्यवस्थया=स्वगृहव्यवस्थया स्वशास्त्रीय-

षिताश्च। तत्र लोकप्रसिद्धाः—पशुरपत्यं देवतेत्यादयः। ते चेह प्रसिद्धत्वादेव न परिभाष्यन्ते। ये तु शास्त्रान्तरे परिभाषितास्ते स्वनिकायव्यवस्थया लक्ष्यन्त इत्याह।

केचिद् एव शास्त्रादनुमितात्मका इति। शास्त्रादस्मादेव प्रत्यासत्तेर्व्याकरणाख्यात्, न वैशेषिकादेः। अनुमानेनाधिगत आत्मा स्वभावो लक्षणं येषामित्यर्थः। तथा ह्येकशेषारम्भाद् भेद्यत्वं द्रव्यलक्षणमनुमितम्। द्रव्याणां प्राधान्येन वाच्यत्वे शब्दभेदप्रसक्तेस्तदारम्भस्यार्थवत्त्वात्।

"यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ।"

(वा० ५।१।११९)

इति वाक्यकारवचनादाश्रितत्वं गुणलक्षणमनुमितम्।

जातिरपि भावप्रत्ययाभिधेयेति गुणोऽसावेवमुपपद्यते। तथा "वोतो गुण-

---

व्यवस्थयेति यावत्, लक्ष्यन्ते=लक्षणैः सूत्रैर्बोध्यन्ते, वार्त्तिककारभाष्यकारादिभिर्वा लक्षणैरसाधारणधर्मैर्बोध्यन्ते भेद्यत्वेन विवक्षितोऽर्थो द्रव्यमिति।

संसर्गिभेदकं यद् यत्सव्यापारं प्रतीयते।
गुणत्वं परतन्त्रत्वात् तस्य शास्त्र उदाहृतम्॥

इति वैयाकरणानां स्वनिकाये द्रव्यगुणव्यवस्था। एवमन्येऽपि पदार्था अवगन्तव्याः।

कारिकायाम्—केचिदेव शास्त्रादनुमितात्मका इति। प्रकरणज्ञानमूलकप्रत्यासत्तिबलादस्मादेव व्याकरणाख्यात् शास्त्रादित्यर्थः। अनुमितः=अनुमानेन प्रतीत आत्मा स्वभावो लक्षणं स्वरूपं येषां ते तादृशा इत्यर्थः। तथा हि एकशेषशास्त्राणामारम्भाद् भेद्यत्वम्=व्यावर्त्यत्वम्, विशेष्यत्वम्, तत्त्वेन विवक्षितत्वमिति यावत्। द्रव्यलक्षणमनुमितम्। द्रव्याणां प्राधान्येन=विशेष्यत्वेन वाच्यत्वे सत्येव प्रत्यर्थं शब्दाभिनिवेश इति भाष्योक्तरीत्या शब्दभेदप्रसक्तेरेकशेषशास्त्रारम्भस्य सार्थक्यात्। "यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ" इति वाक्यकारवचनात्=वार्त्तिककारवचनात्, द्रव्याश्रितत्वं गुणलक्षणमनुमितम्। अत्र वार्त्तिककृद्वाक्ये भावादित्यस्य असाधारणधर्मत्वेन सत्त्वादिति, शब्दनिवेश इत्यस्य च शब्दप्रवृत्तिरित्यर्थः।

एवञ्च जातिरपि भावप्रत्ययाभिधेयेति असौ गुण उपपद्यते। तथा च 'वोतो गुणवचनात्" इति सूत्रेण गुणवचनपदस्य गुणमुक्तवान् गुणवचन इति व्युत्पत्तेर्गुणस्य द्रव्ये प्रत्याय्ये भूतपूर्वत्वेनाभिधानं गुणस्य द्रव्ये विशेषणत्वे सति न कल्पते=न प्रसिद्ध्यति, गुणस्याविद्यमानत्वेनोपलक्षणत्वस्यैव न्याय्यत्वात्। भूतादिकालानां भूते वर्तमाने भविष्यति इति रीत्या धात्वर्थोपाधित्वेन कालस्यापि क्रियात्मकत्वं

वचनात्" (पा० ४।१।१४४) इति गुणमुक्तवान् गुणवचन इति गुणस्य भूतपूर्वत्वेन द्रव्ये प्रत्याय्येऽभिधानं विशेषणत्वे सति [न] कल्पते।

कालस्यापि क्रियात्मकत्वं लक्षणं भूते वर्तमाने भविष्यतीति चैषां धात्वर्थोपाधित्वेन विज्ञायते।

संख्यायाश्च भेदगणनात्मकत्वम् "जात्याख्यायामेकस्मिन्" (पा० १।२।५८) इति वचनादवसीयते। वैशेषिकप्रसिद्धाया गुणत्वेन द्रव्यप्रतिनियमात्। स्त्रियां पुंसि नपुंसक इति सामान्येन शब्दान्वाख्यानेऽर्थस्याङ्गभावापादनात् संस्त्यानप्रसवस्थितयो लिङ्गलक्षणमनुमीयते। [ यद्वा सत्त्वादिगुणानामपचयः स्त्रीत्वम्, उपचयः पुंस्त्वम्, साम्यश्च नपुंसकत्वं लिङ्गलक्षणमिति ]। न हि खट्वादीनां लौकिकं स्त्रीत्वं शण्ड[ षण्ढ ]कादीनां च पुंस्त्वम्, कुण्डलादीनां च नपुंसकत्वं सम्भवति।

---

लक्षणमिति विज्ञायते। संख्यायाश्च भेदगणनात्मकत्वम्, परस्परं भिद्यमानद्रव्यगणनात्मकत्वम्, "जात्याख्यायामेकस्मिन्" इति वचनादवसीयते। वैशेषिकप्रसिद्धायास्तस्या गुणत्वेन द्रव्यप्रतिनियमात्=द्रव्यमात्रवृत्तित्वनियमात्। अस्याश्च भेदगणनात्मिकाया अद्रव्येऽपि जातिक्रियादौ वर्तमानत्वात्। "स्त्रियां क्तिन्", "तस्माच्छसो नः पुंसि", "ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्यादिषु स्त्रीत्वं पुंस्त्वं नपुंसकत्वरूपतत्तल्लिंगसामान्यं निमित्तीकृत्य शब्दान्वाख्याने स्त्रीत्वादिलिङ्गरूपस्यार्थस्याङ्गभावापादनात् संस्त्यानप्रसवस्थितयः=संस्त्यानं शुक्रशोणितयोर्मिलित्वा घनीभावः, एतच्च स्त्रीत्वरूपं स्त्रिया लिङ्गम्, प्रसवः शुक्रवापद्वारा प्रसवकर्त्तृत्वं पुंस्त्वम्, तच्च पुंसो लिङ्गम्, स्थितिश्च सत्त्वादिगुणानां साम्यम्, तच्च नपुंसकत्वरूपं नपुंसकस्य लिङ्गम्, लिङ्गलक्षणमनुमीयते तदुक्तं भाष्ये—

संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः।
संस्त्यानं स्त्यानतेर्ड्ट् स्त्री सूतेः सप्रसवे पुमान्॥ इति।

अत्र 'सप्' इत्यस्य सस्य स्थाने पकार इत्यर्थः, यद्वा सत्त्वादिगुणानामपचयः स्त्रीत्वम्, तेषामुपचयः पुंस्त्वम्, तेषां साम्यञ्च नपुंसकत्वम्, एतादृशञ्च लिङ्गत्रयं सर्वेषु पदार्थेषु कालभेदेन वर्तते। तद्यथा पुरुषे स्त्रियां नपुंसके वा अयं पदार्थः इयं व्यक्तिः, इदं वस्तु इति विवक्षाभेदेन लिङ्गत्रयव्यवहारः। न हि खट्वादीनां लौकिकं स्त्रीत्वं षण्ढकादीनाञ्च लौकिकं पुंस्त्वम्, कुण्डादीनाञ्च लौकिकं नपुंसकत्वं संभवतीति। कर्तृत्वकर्मत्वादिरूपद्रव्यस्य शक्तिः साधनम्, न तु शक्तिमद् द्रव्यं साधनमिति "षष्ठी शेषे" इत्यत्र शेषव्यवहारात्, कर्मणः कर्तृत्वोपगमात्, विभक्त्यर्थेऽव्ययीभाववचनाच्चानुमीयते। तथा हि कर्तृत्वादिशक्तिमतो द्रव्यस्य साधनत्वे तस्यैकस्वभावत्वात् प्राधान्यमात्रस्वभावत्वात्, शेषभावोऽङ्गत्वं नोपपद्यते, विरोधात्।

शक्तिः साधनं न द्रव्यमिति शेषव्यवहारात्, कर्मकर्तृत्वोपगमात्, विभक्त्यर्थेऽव्ययीभाववचनाच्चानुमीयते। द्रव्यस्य ह्येकस्वभावत्वात् साधनत्वे शेषभावः कर्मकर्तृभावश्च नोपपद्यते। विभक्त्यर्थे च द्रव्यस्यैव वृत्तेरधिस्त्रीति स्त्रीशब्दप्रयोगाभावात् कस्य केन समासः।

उपसर्गाच्छन्दसि धात्वर्थे इति चार्थग्रहणं लिङ्गसंख्यावतो द्रव्यस्य प्रतिपत्त्यर्थं तस्यासाधनत्वमावेदयते, अन्यथा साधन इत्येवोच्येत किमनेन, धातुकृतोऽर्थो धात्वर्थ इति।

पुरुषोपग्रहयोस्तु पूर्वाचार्यव्यवहारादेव लक्षणप्रसिद्धिः।

दिक्क्रिये तु लोकप्रसिद्ध एव, शास्त्रेऽपि पूर्वादीनां व्यवस्थायामिति विशेषणात् पदार्थोपाधित्वं तल्लक्षणमनुमीयते।

क्रियापि भूवादिवार्त्तिके भाष्ये पूर्वापरीभूता साध्यस्वभावानुमानगम्या लक्षिता।

पदार्था इति। यद्यपि संसृष्टानामेव सर्वथा भावः, तथाप्यपोद्धृताः।

---

वस्तुतस्तु कारकस्य क्रियाऽङ्गत्वरूपशेषत्वव्यवहारो द्रव्यस्य साधनत्वेनोपपद्यते, द्रव्यस्य प्राधान्यमात्रस्वभावत्वादिति बोध्यम्।

किञ्च, द्रव्यस्य साधनत्वे तस्य कर्मकर्तृभावश्च नोपपद्यते, पच्यते ओदनः स्वयमेव' इति कर्मत्वकर्तृत्वयोः क्रियाफलाश्रयत्वक्रियाश्रयत्वरूपयोर्विरोधात्, द्रव्यस्यैकस्वभावत्वात्।

किञ्च द्रव्यस्य साधनत्वे साधनरूपे विभक्त्यर्थे द्रव्येऽव्ययस्यैव वृत्तेरधिस्त्रीत्यत्र स्त्रीशब्दप्रयोगाभावात् कस्य केन समासः स्यात्? "उपसर्गाच्छन्दसि धात्वर्थे" इति सूत्रे च 'धात्वर्थे' इत्यस्य स्थाने 'साधने' इति वक्तव्येऽर्थग्रहणलिङ्गसंख्यावतो द्रव्यस्य प्रतिपत्त्यर्थं कृतं द्रव्यस्यासाधनत्वमावेदयते। अन्यथा 'धात्वर्थे' इति अनुक्त्वा साधन इत्येवोच्येत, किं धातुकृतोऽर्थो धात्वर्थ इत्यनेन? उपसर्गाद् धात्वर्थे मतुब्विधायकस्यास्य 'यदुद्वतो निवतो याति' इत्युदाहरणम्। उद्गतान्निर्गतादिति तदर्थः। यदा तु शक्तेरेव साधनत्वम्, तदा धात्वर्थविशिष्टद्रव्यबोधनाय 'धात्वर्थे' इति युज्यते वक्तुमिति।

पुरुषोपग्रहयोर्लक्षणप्रसिद्धिस्तु पूर्वाचार्यव्यवहारादेवावगन्तव्येति। दिक्क्रिये तु लोकव्यवहारे प्रसिद्ध एव। शास्त्रेऽपि पूर्वादीनां व्यवस्थायामिति विशेषणात् पदार्थोपाधित्वं पूर्वादिलक्षणमनुमीयते। भूवादिसूत्रवार्तिके भाष्ये क्रियाऽपि पूर्वापरीभूतावयवा साध्यस्वभावाऽनुमानगम्या लक्षिता=पूर्वापरीभूतत्वसाध्यस्वभावत्वरूपलिङ्गद्वयरूपानुमानेनानुमेया एतल्लिङ्गरूपेणानुमानेन प्रतीता इति।

कारिकायाम्—पदार्था इति। यद्यपि वाक्यार्थे संसृष्टानामेव पदार्थानां सर्वथा सत्त्वमिति नास्ति तेषां वस्तुभूतोऽपोद्धारः तथापि कल्पनारूपयाऽपोद्धार-

अथै[त्रै]कैकस्य पदस्य गुणप्रधानभूता बहवोऽर्थाः। तद्यथाख्यातस्य क्रियाकालसाधनसंख्यापुरुषोपग्रहाः, नामपदस्यापि द्रव्यलिङ्गसंख्यासाधनानि क्रिया काल इत्यादि।

पदवाच्यत्वेन वा पदार्थत्वोपपत्तिः। केवलानां पचत्यादिपदवाच्यत्वाभावात्।

'यथागमम्' इति। यादृशो वैयाकरणानामागमस्तमनुल्लंघ्य व्याख्यातॄणामुपदेशपारम्पर्यानतिक्रमेण यस्य पदार्थस्य यस्मिन्नन्वाख्यानेऽङ्गभावः स कथ्यत इत्यर्थः॥ १-२॥

तत्र गुणादीनां द्रव्यपरतन्त्रत्वात् प्रथमं तदाश्रयं द्रव्यं लक्षयति—

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः॥ ३॥

इह सर्वनाम्नां द्वयी गतिः। वस्तुमात्राभिधायिनः केचिद् यथा सर्वादयः। विशिष्टवस्तुवाचकाश्चान्ये यथान्यतरादयः।

तत्र पूर्वैर्द्रव्यं लक्ष्यते। तथा हि—इदं तदिति सर्वनामप्रत्यवमर्शयोग्यं

---

बुद्ध्याऽपोद्धृता इति ज्ञेयम्। अत्र=नामाख्यातपदयोः, एकैकस्य पदस्य गुणप्रधानभूता बहवोऽर्थाः। तद्यथाऽऽख्यातस्य=तिङन्तस्य, प्रकृतिप्रत्ययांशयोर्यथायथं क्रियाकालकर्त्तृकर्मरूपसाधनसंख्यापुरुषोपग्रहा अर्थाः। अत्र युष्मदस्मदर्थयोः कर्त्तृसामानाधिकरण्यरूपोऽर्थः पुरुषपदेन विवक्षितः। क्रियाफलस्य कर्त्र्यभिप्रायत्वं तदभावश्चोपग्रहपदेन विवक्षितौ। नामपदस्यापि प्रकृतिप्रत्ययांशाभ्यां द्रव्यलिङ्गसंख्यासाधनानि क्रियाकाल इत्यादयो यथासम्भवमर्था इति। अथवा पदवाच्यत्वेनोपलक्षणीभूतेन पदार्थत्वोपपत्तिः। केवलानाम्=पदवाच्यत्वेनानुपलक्षितानां शुद्धानाम्, पचत्यादिपदवाच्यत्वाभावात्। यथा हि वृत्तिविषयत्वोपहितं ब्रह्मवृत्तिविषयः, तथा तत्तत्पदवाच्यत्वोपलक्षितस्तत्तदर्थस्तत्तत्पदवाच्य इति यावत्।

कारिकायाम्—यथागममिति। यादृशो वैयाकरणानामुपदेशपारम्पर्यरूपः सम्प्रदायस्तमनुलङ्घ्येत्यर्थः। यस्य पदार्थस्य यस्मिन्नन्वाख्यानेऽङ्गभावः स व्याख्यातॄणामुपदेशपारम्पर्यानतिक्रमेण कथ्यत इति॥ १—२॥

तत्र=द्रव्यगुणादीनां लक्षणावसरे प्राप्ते गुणादीनां द्रव्यपरतन्त्रत्वात् तदाश्रयं द्रव्यं प्रथमं लक्षयति—वस्तूपलक्षणं यत्रेति।

अयमर्थः—यत्र यस्मिन्नर्थे, वस्तूपलक्षणम्-उपलक्ष्यते अभिधीयते येन तदुपलक्षणम् वस्तुनो वस्तुसामान्यस्य उपलक्षणमभिधायकं वस्तूपलक्षणं वस्तुमात्राभिधायिसर्वनाम प्रयुज्यते सोऽर्थो द्रव्यमित्युच्यते।

किञ्च, भेद्यत्वेन विवक्षितोऽर्थो द्रव्यमित्युच्यते। अत्र इदं तदिति सर्वनाम-

**द्रव्यम् । इदमिति प्रत्यक्षार्थवाचकम्, तदिति प्रमाणान्तरावगतपरोक्षार्थाभिधानम्, तेन प्रत्यक्षपरोक्षार्थाकारपरामर्शेन वस्तुमात्रवाचित्वमिदन्तदोरुपादानेन सर्वनाम्नामुक्तं भवति । तथा च प्रत्यक्षपरोक्षाकारभेदावधीरणेन वस्तुमात्रं तद्वाच्यं द्रव्यं लक्षितं भवति ।**

**प्रतिपिण्डं ह्यपरिमितः स्वभावो द्रव्याणामशक्यो लक्षयितुमिति सर्वद्रव्यसाधारणं लक्षणमेवमुच्यते, वस्तुरूपतायाः सर्वत्र भावात् । एतदेवं निरुक्तकारेणाप्युक्तम्—**

**'अद इति यत् प्रतीयते तद् द्रव्यम्'' । इति ।**

**द्वितीयमपि विशेषलक्षणमाह - भेद्यत्वेन विवक्षित इति । सामान्यादिभिरुपाधिभिरवच्छेद्यत्वेन विशेष्यत्वेन वक्तुमभिप्रेतमित्यर्थः । विवक्षितग्रहणेन न वस्त्वर्थस्येदं लक्षणमपि तु शब्दार्थस्येत्याह । तथा च जात्यादिरपि विशेष्यत्वेन**

---

परामर्शयोग्यं द्रव्यमिति प्रथमलक्षणवाक्यस्याभिप्रायः । द्वितीयलक्षणवाक्ये भेद्यत्वं विशेष्यत्वम् । अत्र विवक्षितग्रहणेन जात्यादेरपि द्रव्यत्वमभिप्रेयत इति ।

अयं भावः—इह सर्वनाम्नां द्वयी गतिः । केषाञ्चिद् वस्तुसामान्याभिधायित्वम्, यथा सर्वविश्वादीनाम् । अन्ये तु वस्तुविशेषवाचकाः, यथाऽन्यतराऽन्यतमादयः । तत्र वस्तुमात्राभिधायिभिः सर्वविश्वादिभिः शब्दैर्द्रव्यमुपलक्ष्यते । तथा हि इदं तदिति सर्वनामप्रत्यवमर्शयोग्यं द्रव्यम् । तत्र इदमिति प्रत्यक्षार्थवाचकम्, तदिति प्रमाणान्तरावगतपरोक्षार्थाभिधायकम् । 'इदमस्तु सन्निकृष्टमिति', 'तदिति परोक्षे विजानीयात्' इति च अमरकोशात् । तेन प्रत्यक्षपरोक्षार्थाकारपरामर्शपूर्वकं सर्वनाम्नां वस्तुमात्रवाचित्वम्, वस्तुसामान्याभिधायित्वम्, इदं तयोरुपादानेन उक्तं भवति । तथा च प्रत्यक्षपरोक्षाकारभेदः सर्वनामार्थे वस्तुसामान्ये उपलक्षणम् न तु विशेषणम् । अत उपलक्षणत्वेन तमनादृत्य वस्तुमात्रं वस्तुसामान्यं सर्वनाम, वाच्यं द्रव्यमत्र लक्षितं भवति । द्रव्याणां हि स्वभावो अपरिमितः प्रतिपिण्डं प्रतिद्रव्यं लक्षयितुमशक्य इति सर्वद्रव्यसाधारणं लक्षणम् । एवम् (सर्वनामप्रत्यवमर्शयोग्यत्वेन वस्तुसामान्यासाधारणरूपेण ) उच्यते, वस्तुरूपतायाः सर्वत्राभावात् । एतदेवं निरुक्तकारेणाप्युक्तम्—'अद इति यत् प्रतीयते तद् द्रव्यम्' इति । कारिकायाम्— 'भेद्यत्वेन विवक्षित इति द्वितीयद्रव्यस्य लक्षणं विशेषरूपं दर्शितम् । सामान्यादि-( जात्यादि )भिरुपाधिभिः=व्यावर्त्तकधर्मैः अवच्छेद्यत्वेन विशेष्यत्वेन वक्तुमभिप्रेतमित्यर्थः । इदञ्च लक्षणं न वस्तुभूतस्य बहिस्थस्य द्रव्यरूपस्यार्थस्य; किन्तु शब्दार्थस्य बौद्धस्य असद्रूपस्य विकल्पगोचरस्य द्रव्यस्येति विवक्षितग्रहणेनात्राभिप्रेतम् । तथा च जात्यादेरपि यदि विशेष्यत्वेन विवक्षितस्तदा सोऽपि द्रव्यमिति

चेद् विवक्षितस्तदा द्रव्यमिति पदार्थान्तरीयद्रव्यलक्षणानादराद् व्याडिदर्शनेन सार्वत्रिकी द्रव्यपदार्थव्यवस्था सिद्धयति ।

यथा वाजप्यायनदर्शने जातिरन्वितप्रत्ययनिमित्तं सर्वशब्दानामर्थः । क्रियास्वप्यन्वितावभासप्रत्ययान्यथानुपपत्त्या जातिसिद्धिः । कथमन्यथा प्रत्यवस्थं पचतीत्यभिन्नः प्रत्ययः स्यात् ? विक्लेदस्यैव पचत्यर्थत्वेऽधिश्रयणादीनां सामर्थ्यगम्यत्वे शब्दार्थत्वाभावाद् देवदत्तस्य कर्तृत्वं न स्यात् । न हि तद्व्यापारोऽधिश्रयणादिर्धातुवाच्यः ।

सामर्थ्यगम्ये च लकारवाच्यस्य कर्तुर्व्यापारे समन्वयाभावः । इत्थं च विक्लित्तेरेव धातुवाच्यत्वात्तत्रौदनः कर्मकर्तृवत् कर्ता स्यात्, न कदाचिदपि कर्म । स चापि विक्लेदोऽन्त्यक्षणरूपोऽक्रमो न पचिः, आश्रितपौर्वापर्यस्यैवार्थस्य क्रियात्वात् । इत्थमधिश्रयणादिरपि तत्रानुप्रविशत्येव । तावन्मात्रेऽपि च पचतीति प्रत्ययोत्पत्तेरिति प्रतिक्षणमभिन्नप्रत्ययावसेया क्रियाजातिरङ्गीकार्या ।

---

व्यवस्थायां गुणवत्वं द्रव्यलक्षणमिति शास्त्रान्तरीयद्रव्यलक्षणानादरात् । व्यक्तिः शब्दार्थ इति व्याडिदर्शनेनानेन सार्वत्रिकी=सर्वपदार्थभवा द्रव्यपदार्थव्यवस्था सिध्यति ।

यथा वाजप्यायनदर्शने अन्वितप्रत्ययनिमित्तम् = अनुगतप्रत्ययनिमित्तं जातिरिति लक्षणलक्षिता जातिः सर्वशब्दानामर्थः । पाकादिषु क्रियास्वपि पचतीत्याद्यनुगतैकाकारप्रत्ययान्यथाऽनुपपत्तिरूपयार्थापत्त्या पाकत्वादिजातिसिद्धिः । कथमन्यथा प्रत्यवस्थम्=अधिश्रयणाद्यधःश्रयणान्तासु भिन्नास्वपि पाकक्रियावस्थासु पचतीत्यभिन्नः प्रत्ययः स्यात् । विक्लेदस्यैव पच्यर्थत्वेऽधिश्रयणाद्यधःश्रयणान्तानां क्रियाणाञ्च सामर्थ्यगम्यत्वे=विक्लेदक्रियाऽन्यथाऽनुपपत्तिरूपार्थापत्तिगम्यत्वे अभ्युपगम्यमाने तेषां वृत्त्याऽनुपस्थितानां शब्दार्थत्वाभावाद् देवदत्तस्य तत्र कर्त्तृत्वं न स्यात् । नहि कर्त्तृव्यापारोऽधिश्रयणादिर्धातुवाच्य इति ।

लकारवाच्यस्य च कर्त्तुर्व्यापारे भावनारूपे सामर्थ्यगम्ये=भावनारूपं व्यापारं विना कर्त्तृत्वाऽनुपपत्तिरूपार्थपत्तिरूपसामर्थ्यगम्ये स्वीक्रियमाणे वृत्त्याऽनुपस्थितत्वात्तस्य वाक्यार्थे समन्वयाभावः । इत्थञ्च=अधिश्रयणादिरूपस्य कर्त्तृव्यापारस्य सामर्थ्यगम्यत्वे च विक्लित्तेरेव धातुवाच्यत्वात्तत्रौदनः कर्मकर्त्तृवत्=पच्यते ओदनः स्वयमेवेतिवत् कर्त्तैव स्यात्, न तु कदाचिदपि कर्म । स चापि विक्लेदोऽन्यक्षणरूपः=अन्त्यलक्षणभाविफलरूपः, अक्रमत्वान्न पच्धात्वर्थक्रियारूपः, पौर्वापर्यवद् एवार्थस्य क्रियात्वात् । इत्थम्=पच्धात्वर्थस्य सक्रमत्वस्वीकारे च अधिश्रयणादिरपि तत्र=पाके अनुप्रविशत्येव । तावन्मात्रेऽपि च=अधिश्रयणादिमात्रेऽपि च पचतीति प्रत्ययोत्पत्तेः । दृश्यते च स्थालीमधिश्रयति—सति चैत्रे किं करोति चैत्र इति प्रश्ने सति पचतीत्युत्तरम् ।

**एवं भ्रम्यादिक्रियाक्षणव्यङ्ग्या भ्रमणत्वादिजातिरपि ग्राह्या। तत्राप्युपक्रम एव विशिष्टेच्छादिकारणजन्यकर्मक्षणवैलक्षण्यात् सादृश्याद् दुरवधारान्नियत-सामान्याभिव्यक्तेः। तथा हि—क्रमवतामपि क्षणानां स्पष्टास्पष्टत्वेन जातेरभिव्य-ञ्जकत्वम्। व्यक्तिद्वारकश्च साधनसम्बन्धः, तस्याः साध्यत्वाद् जातेर्नित्यत्वेऽपि। यथा जातेर्दोहाभावे व्यक्तिद्वारकः क्रियासम्बन्धो गौर्दुह्यतामिति।**

**अस्तिक्रियायाश्च साधनभेदात् कालभेदाच्च भेदेऽभिन्नप्रत्ययनिमित्तमपरं सामान्यं न विरुध्यते। नित्यत्वेऽपि च सामान्यस्य व्यक्तिनिष्पत्तौ फलदानसामर्थ्य-मिति यजेतेति व्यक्तिनिष्पादनार्था चोदना अर्थवती। विनश्यत्यपक्षीयत इत्यत्र तिरोधानमपक्षयश्च क्रियाजातेराश्रयोऽस्तु, तथैव शब्देनावसीयमानत्वात्। शब्दार्थस्य चेहार्थत्वात्। शिष्टं क्रियाजातिसमर्थनं पूर्वमेव विहितमित्येवं द्रव्य-पदार्थस्यापि सार्वत्रिकी व्यवस्थास्मिन् द्रव्यलक्षणे सत्युपपद्यते।**

---

एवञ्च प्रतिक्षणं भिद्यमानेष्वपि अधिश्रयणादिव्यापारेषु पचतीत्यभिन्न-प्रत्ययनिश्चयाक्रियागता जातिः पाकत्वादिशब्दाभिलप्याऽङ्गीकार्या। एवं क्षणिक-भ्रम्यादिक्रिया व्यक्तिभिर्व्यङ्ग्या भ्रमणत्वादिजातिरपि उदाहार्या। तत्रापि उपक्रम एव = प्रथमभ्रमण एव, विशिष्टेच्छादिकारणजन्यकर्मक्षणवैलक्षण्यात् = विलक्षणं विलक्षणं यद् इच्छादिरूपं कारणं तज्जन्यानां कर्मक्षणानां क्षणिकानां भ्रमणानां परस्परभिद्यमानत्वात्, वेगेनोत्पद्यमानत्वेन एकत्वेन प्रत्यभिज्ञायमानानां कर्मक्षणानां दुःखधारात् सादृश्यात् तैर्नियतस्यैव सामान्यस्य भ्रमणत्वरूपस्या-भिव्यक्तेः। तथा हि—क्रमवतामपि कर्मक्षणानाम् = क्षणिकानां भ्रमणानाम्, स्पष्टास्पष्टत्वेन = उपक्रमोपसंहारयोः स्पष्टत्वेन मध्यगानामस्पष्टत्वेन च भ्रमण-त्वजातेरभिव्यञ्जकत्वम्। क्रियाजातेश्च स्वाश्रयभ्रमणादिक्रियारूपव्यक्तिद्वारकः कर्त्रादिकारकसम्बन्धः, जातेर्नित्यत्वेऽपि व्यक्तेः साध्यत्वात्। यथा—'गौर्दुह्यताम्' इत्यत्र गोत्वजातेर्दोहाभावे तस्याः स्वाश्रयव्यक्तिद्वारके दोहक्रियासम्बन्धः।

सत्तारूपाया अस्तिक्रियायाश्च कर्त्रादिकारकभेदाद् भूतादिकालभेदाच्च भेदेऽपि 'घटोऽस्ति', 'पटोऽस्ति', 'मठोऽस्ति' इत्यादि रूपाभिन्नप्रत्ययनिमित्तं तत्रा-नुगतमपरं सामान्यमिति कल्पनमनुभवानुसारित्वाद् न विरुध्यते। सामान्यस्य च नित्यत्वेऽपि स्वाश्रययागादि व्यक्तिनिष्पत्तौ सत्यां तद् द्वारकस्वर्गादिरूपफलदानसा-मर्थ्यंतस्येति यागादिव्यक्तिनिष्पादनार्था यजेतेति चोदना सार्थिका। विनश्यत्यपक्षीयते इत्यत्र तिरोधानरूपा विनाशक्रिया। परिणामविशेषरूपा चापक्षयक्रियाविनाशत्वादि-रूपक्रियाजातेराश्रयोऽस्तु, तथैव शब्दतः प्रतीयमानत्वात्, विकल्पगोचरस्या-सद्रूपस्य शब्दार्थस्यैव शब्दव्यवहारेऽभिधेयत्वात्। इतोऽप्यधिकं क्रियाजातिसमर्थनं पूर्वमेव ब्रह्मकाण्डोपक्रमे स्वोपज्ञवृत्तौ विहितमित्येवं द्रव्यपदार्थस्यापि सार्वत्रिकी =

तथा ह्याख्यातस्यापि द्रव्यमेव साधनस्वभावं वाच्यम्। क्रियाप्राधान्येऽपि गुणभूतस्य तस्य वाच्यत्वोपगमात्। अन्यथा किमपेक्षं प्राधान्यं स्यात्। तथा च व्यापाराविष्टं तदेव प्राधान्येन वाच्यमस्तु। दर्शनान्तरेऽपि हि न सर्वथा गुणभूतत्वेन तिरोभावोऽस्य वृत्ताविवोपसर्जनपदार्थस्य, देवदत्तः पचतीति सामानाधिकरण्याभावप्रसङ्गादिति परं प्राधान्यमेव सामानाधिकरण्यान्यथानुपपत्त्यास्तु। सर्वनामप्रत्यवमर्शयोग्यत्वं त्वयं पचतीति एवं दृश्यत एव। भेद्यत्वमपि साधुत्वादिस्वविशेषणापेक्षया समस्त्येव। लक्षणानां च साम्प्रतिकव्यापारानपेक्षणात् भेदयोग्यता भेद्यत्वमत्र। एवमास्यते स्थीयते इति किमादिभिः परामर्शात् सुखमित्येवमादिभिश्च विशेष्यत्वाद् द्रव्यत्वमित्याख्यातार्थोऽपि व्याडिदर्शने द्रव्यम्।

ननु च क्रियारूपस्यैव भाव्यमानस्य प्रतीतेर्निष्पन्नानिष्पन्नयोश्च विरोधा-

---

नामाख्यातयोरुभयोरपि व्यवस्था "भेद्यत्वेन विवक्षित" इति द्रव्यलक्षणे सत्युपपद्यते।

तथा हि आख्यातस्यापि ( तिङोऽपि ) साधनस्वभावं द्रव्यमेव वाच्यम्।

ननु भावप्रधानमाख्यातमिति यास्कवचनानुरोधेन वैयाकरणैः क्रियामुख्यविशेष्यक एव शाब्दबोधः स्वीक्रियते। तथा च क्रियायाः प्राधान्येन तस्या एव आख्यातार्थमुचितम्। "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्" इति न्यायाद् इति चेन्न, क्रियायाः प्राधान्येऽपि गुणभूतस्य साधनस्यैव अन्वयव्यतिरेकाभ्यां वाच्यत्वोपगमात्। अन्यथा क्रियायाः किमपेक्षं प्राधान्यं स्यात्। तथा च व्यापाराविष्टं तदेव = आख्यातार्थभूतसाधनमेव शब्दतो गुणत्वेऽपि आर्थिकं प्राधान्यमादाय आख्यातवाच्यमस्तु। दर्शनान्तरेऽपि हि = भावनामुख्यविशेष्यकशाब्दबोधवादिमीमांसकदर्शनेऽपि हि न सर्वथा धात्वर्थक्रियायां गुणभूतत्वेन तिरोभावोऽस्य = साधनस्य समासादिवृत्तावुपसर्जनपदार्थस्येव, देवदत्तः पचतीति प्रतीयमानसामानाधिकरण्याभावप्रसङ्गादिति परम् – पारमार्थिकम् साधनस्य प्राधान्यमेव सामानाधिकरण्यान्यथानुपपत्त्याऽस्तु। आख्यातार्थसाधनस्य सर्वनामप्रत्यवमर्शयोग्यत्वरूपं द्रव्यत्वन्तु 'अयं पचति' इत्येवं शाब्दे व्यवहारे दृश्यत एव। भेद्यत्वमपि = विशेष्यत्वमपि साधुत्वादिरूपस्वविशेषणापेक्षया सम्यगस्त्येव। लक्षणानाञ्च भाविर्भूतेषु लक्ष्येषु अवर्तमानानामुपलक्षणत्वेन साम्प्रतिकस्य व्यावर्तनरूपस्य स्वव्यापारस्यानपेक्षणाद् भेद्यत्वमत्र भेदयोग्यत्वरूपमेव कारिकायां द्रव्यलक्षणे विवक्षितम्। 'एवं 'किमास्यते', 'किं स्थीयते' इति किमादिभिः सर्वनामभिः परामर्शात्, 'सुखमास्यते', 'सुखं स्थीयते' सुखादिभिश्च विशेष्यत्वाद् आख्यातार्थभावस्यापि द्रव्यत्वमित्येवं कर्तृकर्मभावरूपः सर्वोऽपि आख्यातार्थो व्याडिदर्शने द्रव्यम्।

ननु क्रियारूपस्यैव = न तु साधनरूपस्य द्रव्यस्य च भाव्यमानत्वेन

द्भावनावचनास्तिङः, अर्थसामर्थ्याद् द्रव्यप्रतिपत्तिः सामर्थ्यलभ्या, न शब्दार्थ इति मीमांसकाः। असदेतत्। अन्वयव्यतिरेकाभ्यां धातोरेव भावनावचनत्वात्। प्रत्ययस्य च साधनाभिधायित्वात्, साध्यसाधनभावेन सिद्धासिद्धयोरप्यस्ति समन्वयः। तथा च प्रकृतिप्रत्यययोः समभिव्याहारः। अन्यथा सामर्थ्यलभ्येन कः समन्वयः। प्रतीयते च क्रियाविशिष्टः कर्तेति कथं सामर्थ्यलभ्य इति वैयाकरणानां साधनाभिधानं पर्यवसितविवादमेव। साधनं च शक्तं द्रव्यं न केवला शक्तिरिति द्रव्यार्थता सिद्धा।

चादयोऽपि द्रव्यक्रियात्मभूतसमुच्चयादिद्योतनाद् द्रव्यवचनाः क्रियावचना वा। तेन तदर्थस्यापि तथैव व्यक्त्याकृतिविकल्पः। गुणा अपि सामान्यविशिष्टा उच्यमाना द्रव्यं पदार्थ इत्येकशेषं रूपादयो भजन्ते। तथा समानाधिकरणेन समानेन द्रव्येणेति व्याख्यायमाने गुणेनापि समासो भवति सर्वगन्ध एकरस इति।

---

प्रतीतेर्निष्पन्नानिष्पन्नयोश्च=सिद्धासिद्धयोश्च साध्यसाधनयोः विरोधात्। समन्वयाभावेन भाववचनास्तिङः साधनरूपद्रव्यप्रतिपत्तिस्तु तिङर्थभावसामर्थ्यरूपार्थापत्तिलभ्या। अतो न साधनं शब्दार्थं इति मीमांसका इति चेत्, असदेतत्, अन्वयव्यतिरेकाभ्यां धातोरेव भावनावचनत्वात्, आख्यातस्य च साधनाभिधायित्वात्। निष्पन्नानिष्पन्नयोः सदसतोः साध्यसाधनयोः संयोगसमवायादिसम्बन्धासम्भवेऽपि साध्यसाधनभावेन सिद्धासिद्धयोरपि समन्वयस्य लोके दृष्टत्वेन सम्भवात्। नहि दृष्टेऽनुपपन्नं नाम किंचिदित्यस्या विप्रतिपत्तिसिद्धत्वात्। तथैव च प्रकृतिप्रत्यययोः समभिव्याहारः परिदृश्यमान उपपद्यते। अन्यथा सामर्थ्यलभ्येन साधनेन सह आख्यातवाच्यया भावनाया धातुवाच्यस्य फलस्य वा कः समन्वयः। किञ्चाख्यातश्रवणे क्रियाविशिष्टः कर्त्ता प्रतीयते चेति कथं सामर्थ्यलभ्य इति वैयाकरणानां नये आख्यातेन साधनाभिधानमविवादमेव। साधनञ्च कर्त्तृत्वादिरूपकारकशक्तिमद् द्रव्यं न तु केवला शक्तिरिति आख्यातस्य द्रव्यार्थता सिद्धा।

चादयो निपाता अपि द्रव्यक्रियासमुच्चयादिद्योतनाद् द्रव्यवचनाः, क्रियावचना वा। तेन चाद्यर्थस्य समुच्चयादेरपि तथैव क्रियादिष्विव व्यक्त्याकृतिविकल्पः। रूपादयो गुणा अपि सामान्यविशिष्टरूपादिशब्दैरुच्यमाना द्रव्यरूपाः पदार्था इति रूपादिशब्दा एकशेषं भजन्ते। तथा— 'सर्वंजरत्पुराणनवकेवलाः समानाधिकरणेन' इत्यादौ समानाधिकरणेन इत्यस्य समानेन द्रव्येण इति व्याख्यानेन गुणेनापि समासो भवति। सर्वगन्धः, एकरस इति, प्रागुक्तलक्षणाभ्युपगमे गुणस्यापि द्रव्यत्वात्।

नन्वेवं

'विप्रतिषिद्धं चानधिकरणवाचि।' (पा० २।४।१३)

इत्यत्राप्यधिकरणं द्रव्यमिति शीतोष्णं सुखदुःखमित्येकवद्भावः कथमुदाहृतः। शीतादीनामनेन लक्षणेन द्रव्यवचनत्वादनधिकरणवाचीति पर्युदासप्राप्तेः।

अत्रोच्यते—सुबन्तावयवस्य द्वन्द्वस्यैकवद्भावविधानात् सुबन्तस्य च सर्वस्य जात्युपहितद्रव्यवचनत्वेनानधिकरणवाचीति प्रतिषेधः सार्वत्रिकः स्यादिति विधेर्निर्विषयत्वमायातमिति विधिसामर्थ्यात् प्रतिषेधः प्रसिद्धद्रव्यविषयो विज्ञायते शीतोष्णे उदके इति। प्रसिद्धं हि लोके क्रियावत् समवायिकारणं द्रव्यमिति तद्वाच्येव पर्युदस्यते। तथा च शीतोष्णादेरुदकादिद्रव्यवाचित्वे भवत्येकवद्भावः। शैत्यादिगुणवाचित्व एव भवति।

एवं समर्थवार्तिके—

'अथ हि गुणः पदार्थः भवति तदा सामर्थ्यम्।
अन्यो हि वीरत्वं गुणः अन्यो हि पुरुषत्वम्॥' (म० भा० २।१।१)

---

ननु एवं 'विप्रतिषिद्धं चानधिकरणवाचि' इत्यत्रापि अधिकरणं द्रव्यमिति व्याख्येयमिति शीतोष्णं सुखदुःखमित्येकवद्भावः कथमुदाहृतः? प्रागुक्तरीत्या शीतादिद्रव्यत्वात्। अनधिकरणवाचीति पर्युदासप्राप्तेरिति चेत्?

अत्रोच्यते, सुबन्तावयवकस्य द्वन्द्वस्यैकवद्भावविधानात्, सर्वस्य च सुबन्तस्य जात्युपहितद्रव्यवचनत्वेनानधिकरणवाचीति प्रतिषेधः सार्वत्रिकः स्याद् इति एकवद्भावविधेर्निर्विषयत्वमायातमिति तद्विधिसामर्थ्यात्, अनधिकरणवाचीति प्रतिषेधः प्रसिद्धद्रव्यविषय इति विज्ञायते। तद्यथा—'शीतोष्णे उदके' इति। प्रसिद्धं हि लोके न्यायशास्त्रादौ च क्रियावद् गुणवत् समवायिकारणं द्रव्यमिति तद्वाच्येवात्र पर्युदस्यते। तथा च शीतोष्णादिशब्दस्योदकादिद्रव्यवाचित्व एकवद्भावो न भवति। शैत्यादिगुणवाचित्वे तु भवत्येव स इति।

एवं "समर्थः पदविधिः" इति सूत्रस्थे वार्तिके—द्रव्यं पदार्थं इति पक्षे 'वीरपुरुष' इत्यत्र वीरपुरुषयोरपि पदार्थयोर्वस्तुत एकत्वेन सामर्थ्याभावात् समासो न स्यादित्याशङ्क्य "अथ हि गुणः पदार्थः भवति तदा सामर्थ्यम्। अन्यो हि वीरत्वं गुणः, अन्यो हि पुरुषत्वम्"॥ (म० भा० २।१।१) इति वीरशब्दस्य प्रागुक्तलक्षणेन भेद्यत्वेन विवक्षित इत्यनेन, सर्वनामप्रत्यवमर्शयोग्यत्वेन वा लक्षणेन द्रव्याभिधायित्वेऽपि द्रव्योपसर्जनभूतस्य परतन्त्रस्य स्वार्थस्य सामर्थ्यविषयस्य वीरत्वपुरुषत्वादेर्वीरपुरुषादिशब्दैरत्राभिधानात्--

संसर्गिभेदकं यद् यत् सव्यापारं प्रतीयते।
गुणत्वं परतन्त्रत्वात् तस्य शास्त्र उदाहृतम्॥ (वाक्य० ३, गुण० १)

इति वीरशब्दस्यानेन लक्षणेन द्रव्याभिधायित्वेऽपि द्रव्योपसर्जनभूतस्य परतन्त्रस्य स्वार्थस्य सामर्थ्यविषयस्याभिधानात् संसर्ग्यादिलक्षणलक्षितगुणाश्रयेणाभिधानम् ।

तथा हि पुरुषत्वमप्येवमेव। तत्र गुणमाह। लौकिकप्रक्रियया जातिरूपमपि। तस्य भाव इत्यत्राभिप्रायादावतिप्रसङ्गपरिहारार्थम् ।

'यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशः'

इत्युक्तेः। द्रव्यगुणयोरव्यतिरेकं मन्यमानः प्रकृतिप्रत्ययार्थयोर्भेदं नावगच्छेदित्यन्यच्छब्दादिभ्यो द्रव्यमित्युक्तमिति नास्माद्भाष्यादेतल्लक्षणेन शब्दादयो द्रव्यं न भवतीति भ्रमितव्यम् । तथा ह्यस्मिन् द्रव्यलक्षणे रूपादीनामपि द्रव्यत्वादद्रव्यप्रकर्ष इत्यामुप्रत्ययाभावः, समयातरं शीतम्, उपांशुतरः शब्दः, उच्चैस्तरो ध्वनिरिति ।

॥ इति भूतिराजतनयहेलाराजकृतौ प्रकीर्णकप्रकाशे भूयोद्रव्यसमुद्देशश्चतुर्थः ॥

---

इति लक्षणलक्षितस्य गुणस्याश्रयेण एतद् वाक्याभिधानम् ।

तथा हि—पुरुषत्वमपि एवमेव=वीरत्ववदेव, तत्र=अन्यो हि वीरत्वं गुण इत्यादिवाक्ये, गुणमाह—लौकिकप्रक्रिया तु पुरुषत्वं जातिरूपमपि । तस्य भाव इत्यत्र भावपदस्याभिप्रायादावतिप्रसंगः परिहारार्थम् ।

'यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशः' ( सभावः ) इत्युक्ते द्रव्यगुणयोरभेदं मन्यमाने वीरत्वमित्यादौ प्रकृतिप्रत्ययार्थयोर्भेदं नावगच्छेत् इत्यभिप्रेत्य—'अन्यच्छब्दादिभ्यो द्रव्यम्' इत्युक्तं भाष्ये । ततश्च भेद्यत्वेन विवक्षायामपि अस्माद् भाष्यात् शब्दादयो द्रव्यं न भवतीति न भ्रान्तिः कार्या । तथा हि—अस्मिन् द्रव्यलक्षणे रूपस्पर्शादीनामपि द्रव्यत्वेन 'अद्रव्यप्रकर्ष' इति पर्युदासाद् आमुप्रत्ययाभावः । 'समयातरं शीतम्' 'उपांशुतरः शब्दः', 'उच्चैस्तरो ध्वनिः' इति ।

इदन्तु अवधेयम्—शब्दार्थस्य द्रव्यस्य नित्यतां समर्थयितुं पूर्वं द्रव्यसमुद्देशप्रकरणमुक्तम् । अत्र तु किं द्रव्यं कथञ्च वाक्यार्थात्तदपोद्धार इति प्रदर्शयितुं भूयोद्रव्यसमुद्देशप्रकरणमारब्धमिति ।

॥ इति श्रीब्रह्मीभूतकाशिनाथशर्मतनयरघुनाथशर्मकृतायामम्बाकर्त्र्यां प्रकीर्णकव्याख्यायां भूयोद्रव्यसमुद्देशश्चतुर्थः ॥ ४ ।

# अथ गुणसमुद्देशः

इदानीं गुणस्य शास्त्रीयलिङ्गानुमितं लक्षणमाह—

संसर्गि भेदकं यद् यत् सव्यापारं प्रतीयते ।
गुणत्वं परतन्त्रत्वात्तस्य शास्त्र उदाहृतम् ।। १ ।।

संसर्गि आधारेण संसृष्टम्, रूपसम्भेदेन वर्तमानम्, न सम्बन्धमात्रेण । अत एवाश्रयान्तरावच्छेदमाधारस्य करोति शुक्लोऽयं (न) नील इति । एवं गौरयं नाश्व इत्यत्राश्रयान्तराद्यवच्छेदे गोत्वमपि गुणो भवति । तथा यद्यद् इति । वीप्सापदेन सर्वस्यैवंप्रकारस्य सामान्यादेरपि गुणत्वमिति परिभाषां कथयन्, नेदं वस्तुरूपावस्थितमिति सूचयति । अनेन चावच्छेद्याद् द्रव्यादवच्छेदकत्वेन गुणस्य

---

अम्भोभरभृतश्यामघनश्यामां दुरासदाम् ।
नमामि यामिनीजानिखण्डमण्डितमूर्धजाम् ।। १ ।।

लक्षणप्रमाणाभ्यां भूयो द्रव्यं वाक्यार्थादपोद्धारकमंत्वेन निरूप्येदानीं तदाश्रितस्य गुणस्यावसरप्राप्तस्य व्याख्यास्यमानशास्त्रीयलिङ्गानुमितं लक्षणमाह— संसर्गीति । अयमर्थः— यद्यत् = रूपरसादिकं गौतमीये नये गुणत्वेन प्रसिद्धम्, सामान्यादिकं वा धर्मिपरतन्त्रम्, संसर्गि = आधारे अध्यस्यमाने न तादात्म्यसम्बन्धेन संसृष्टम् । भेदकम् = स्वाधारस्य द्रव्यान्तराद् व्यवच्छेदकम्, सव्यापारम् = व्यावर्त्तकत्वरूपवर्तमानकालिकव्यापारवत्, व्यावर्तकत्वरूपव्यापारविशिष्टं न तु तदुपलक्षितमिति यावत् प्रतीयते । तस्य परतन्त्रत्वात् धर्मिपराधीनत्वाद् गुणत्वं शास्त्रे समर्थवार्तिकादौ, उदाहृतम् = उक्तम्, इति ।

अयं भावः—संसर्गि = स्वाधारेण संसृष्टम्, संसर्गश्चात्र अध्यस्यमानतादात्म्यरूपो रूपसंभेदः = स्वरूपाभेदः । तेन वर्तमानम्, न सम्बन्धसामान्येन । अत एव = आधारसंसर्गित्वादेव, गुणः स्वाधारमाश्रयान्तराद् व्यावर्तयति शुक्लोऽयम्, न नील इति । एवम्—शुक्लादिगुणवद् गौरयम्, नाश्व इत्यत्राधारान्तरावच्छेदकत्वाद् गोत्वमपि गुणो भवति । तथा यद् यद् इति वीप्सापदेन सर्वस्यैवं प्रकारस्य संसर्गिणो भेदस्य जात्यादेरपि गुणत्वमिति व्याकरणशास्त्रीयसंकेतरूपां परिभाषां कथयन् गुणत्वं न नियते वस्तुस्वरूपे रूपरसादावेवावस्थितं व्यवस्थितम्; किन्तु अनियतंसामान्यादावपि एतल्लक्षिते सत्त्वादिति सूचयति—भेदकमित्यनेन च द्रव्याद् गुणस्य विशेषम् = भेदम्, आह—द्रव्यस्यावच्छेद्यत्वाद् गुणस्य चावच्छेदकत्वाद् इति ।

विशेषमाह—सव्यापारम्, अवच्छेदकरूपेण प्रतीयमानं गुणव्यपदेश्यम्, न रूपान्तरेणेत्यर्थः। यदेवंविधं तस्य गुणत्वमिति सम्बन्धः।

ननु किमयं परिभाषैव गुण इति, अथ निबन्धनमत्रास्तीत्याह—'परतन्त्रत्वात्' इति। लोके हि परतन्त्रो गुण इत्युच्यत इति प्रतीतिरियं न परिभाषामात्रमित्यर्थः। तथा च लौकिकस्यैवायं लक्षणस्य वैशेषिकप्रसिद्धचपाकरणायानुवाद इत्युक्तं भवति। इत्थं च वीप्सा सफला। 'शास्त्र उदाहृतम्' इति। व्याकरणेऽन्वाख्यानवाक्याङ्गं लौकिक एव गुणो गृहीत इत्यर्थः। तथा हि समर्थवार्त्तिके—

समानाधिकरणेषूपसंख्यानमसमर्थत्वात्।" ( वार्त्तिक० २।१।१ ),

'द्रव्यं पदार्थ इति चेत्।" ( तदेव, २।१।१ )

इति 'वीरपुरुषः' द्रव्ययोरत्यन्तमभेदात् सामर्थ्याभावे द्रव्यपदार्थपक्षे समासाभावे चोदिते।

अथ हि गुणः पदार्थो भवति ( तदा ) सामर्थ्यम्। अन्यो हि वीरत्वं गुणः, अन्यो हि पुरुषत्वम्। ( म० भा० २।१।१ )

---

सव्यापारम्=अवच्छेदकत्वरूपव्यापारसहितम्, अवच्छेदकत्वेन रूपेण प्रतीयमानमेव गुणपदव्यपदेश्यं भवति न रूपान्तरेण प्रतीयमानमित्यर्थः। यदेवंविधं (संसर्गिभेदकम्, सव्यापारञ्च) तस्य गुणत्वमिति सम्बन्धः।

ननु एतल्लक्षणलक्षितो गुणः किं व्याकरणशास्त्रीयसंकेतविषय एव। अथवास्य गुणत्वव्यपदेशे निमित्तमप्यस्तीत्याशङ्क्याह—परतन्त्रत्वादिति। अत्र परतन्त्रत्वं धर्मिविशेषणत्वरूपमप्राधान्यम्। लोके हि परतन्त्रो गुण इत्युच्यत इति ( अतः ) गुण इतीयं प्रतीतिः=वस्तुप्रतीतिः, न परिभाषामात्रं गुण इत्यर्थः। तथा च गुणपदस्य रूपरसादिकमात्रे वैशेषिकप्रसिद्धचपाकरणाय लौकिकस्यैव लक्षणस्यायमनुवाद इत्युक्तं भवति। एवमेव च यद् यदिति वीप्सा सफला=सार्थिका। कारिकायाम्—शास्त्रे उदाहृतमिति। व्याकरणे शब्दसाधुत्वान्वाख्यानवाक्याङ्गं लौकिक एव गुणो गृहीत इत्यर्थः। तथा हि समर्थसूत्रस्थवार्त्तिके "समानाधिकरणेषूपसंख्यानमसमर्थत्वात्", "द्रव्यं पदार्थ इति चेत्" इति।

अयमर्थः—द्रव्यं पदार्थ इति पक्षः स्वीक्रियते चेत्, समानाधिकरणेषु 'वीरपुरुषः' इत्यादिषु समासस्योपसंख्यानं कर्तव्यम्, असमर्थत्वात्। अनेकस्यार्थस्यैकार्थभवनं हि एकार्थीभावरूपं सामर्थ्यमिति। इत्येवं 'वीरपुरुष' इत्यादिषु समानाधिकरणसमासेषु वीरपुरुषपदार्थयोर्द्रव्ययोरत्यन्तमभेदात्। सामर्थ्याभावे सति द्रव्यपदार्थपक्षे समासाभावे चोदिते=आशङ्किते 'अथ हि गुणः पदार्थो भवति (तदा) सामर्थ्यम्। अन्यो हि वीरत्वं गुणः, अन्यो हि पुरुषत्वम्, इति द्रव्ये समवायाज्जातेरपि

इति जातेरपि पारतन्त्र्याद् द्रव्ये समवायाद् गुणत्वमुक्तम्। तथा च गुणभेदात् प्रतीयमानं द्रव्यैकत्वाश्रयं सामर्थ्यमिति सिद्धः समासः। तथा "यस्य गुणस्य भावाद् द्रव्यशब्दनिवेशः"। (वा० ५।१।११९) इति भेदको गुणो भेद्यं द्रव्यमित्येतदेव लक्षणमनुसृतम्। तथा हि—विशेष्यमात्रवचनाद् विशेषणमात्रवचने गुणे भावप्रत्ययः।

गोशब्दस्य जात्यवच्छिन्नद्रव्यवाचित्वे जातौ गोत्वमिति जातिमात्रवचनत्वे तु शब्दस्वरूपेऽव्यभिचारिणि प्रवृत्तिनिमित्ते, तस्य च वाच्यत्वं भिन्नत्वं च पूर्वमेवोपपादितम्। स्वरूपेण हि परमुपरञ्जयद्विशेषणम्। यथा जात्यादिगुणः, तथा स्वरूपावेशेनार्थं प्रत्याययतः शब्दस्य भवति स्वरूपम् उपरञ्जकत्वाद् गुणः प्रवृत्तिनिमित्तमर्थे तद्रूपाध्यासेन चार्थप्रतीतिः। अभिधाव्यापाराविष्टस्यैव न वाच्यत्वम्; अपि तु साधारणस्य प्रयोगगतस्य। यथा रक्ते गुणे तत्त्वमित्यादिना च

---

पारतन्त्र्याद् गुणत्वमुक्तम्। तथा च द्रव्यस्यैकत्वेऽपि तदाश्रितयोर्वीरत्वपुरुषत्वयोर्गुणयोर्भेदात् तन्निमित्तकं तत्र भेदमादाय तत्र प्रतीयमानं सामर्थ्यमिति तत्र समानाधिकरणसमासः सिद्धः। तथा यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेश इत्यत्रापि व्यवच्छेदको गुणो व्यवच्छेद्यं द्रव्यमित्येतदेव लक्षणमनुसृतम्। जहदजहल्लक्षणया वा शक्त्या विशिष्टोपस्थितौ विशेषणांशपरित्यागाद्वा विशेष्यमात्रवचनाद् विशेषणमात्रबोधाय गुणार्थको भावप्रत्यय इति हि तस्य वाक्यस्य परमाशयः। यथा गोशब्दस्य जात्यवच्छिन्नद्रव्यवाचित्वपक्षे जातौ, तस्य जातिमात्रवचनत्वपक्षे तु वाच्यवाचकभावसम्बन्धमूलकेनाध्यस्यमानतादात्म्यसम्बन्धेन सर्वत्र जातिरूपशब्दार्थविशेषणीभूतें, अत एवाव्यभिचारिणि प्रवृत्तिनिमित्ते शब्दस्वरूपे गोत्वमिति भावप्रत्ययः। तथा च गोशब्दस्य जातिमात्रवचनत्वपक्षे गोत्वमित्यस्य गोशब्द इत्यर्थः। तस्य च जात्यात्मकस्य शब्दात्मकस्य वा गोशब्दार्थे द्रव्ये जातौ वा विशेषणीभूतस्य भावप्रत्ययवाच्यत्वं विशेष्यभूताद् द्रव्याद् जातितो वा भिन्नत्वञ्च पूर्वमेवोपपादितम्। स्वरूपेण हि परम्=विशेष्यत्वेनाभिमतम्, उपरञ्जयद्=सम्बध्यव्यावर्तयद् विशेषणम्। यथा जात्यादिरूपो गुणः, तथा शब्दस्य जातिवचनत्वपक्षे जातौ स्वरूपावेशेन=स्वरूपस्य तादात्म्याध्यासेन जातिरूपमर्थं प्रत्याययतः शब्दस्य स्वरूपमुपरञ्जकत्वात्=जातौ सम्बध्यतद्व्यावर्तकत्वाद् गुणप्रवृत्तिनिमित्तम्, जातिरूपेऽर्थे शब्दस्वरूपाध्यासेन च जातिरूपस्यार्थस्य प्रतीतिः।

ननु शब्दस्य प्रवृत्तिनिमित्तत्वे वाचकस्य तस्य कथं तेन रूपेण वाच्यत्वमिति चेदत्रोच्यते, अभिधाव्यापाराविष्टस्यैव=वाचकस्यैव तस्य शब्दस्य प्रवृत्तिनिमित्तत्वेन वाच्यत्वं न; अपि तु वाचकावाचकसाधारणस्य प्रयोगगतस्य तस्य तत्त्वेन वाच्यत्वम्। यथा रक्ते गुणे तत्त्वम्=रक्तत्वमित्यादिना ग्रन्थेन च भावप्रत्यय-

**सम्बन्ध उपपादितः। शुक्लादीनां गुणावच्छिन्नद्रव्यवाचित्वे शुक्लत्वमिति गुणे भावप्रत्ययः। गुणाभिधायित्वे जातौ तद्वाचित्वे पूर्ववत् स्वरूपे। एवं चाद्यायां शब्दप्रवृत्तौ डित्थादीनामपि स्वरूप एव भावप्रत्ययः। स्वरूपाध्यासेन संज्ञायाः संज्ञिप्रत्यायनात् तदेव तत्र प्रवृत्तिनिमित्तम्। तदेतदस्य डित्थत्वमिति तु क्रियागुणाध्यासादन्यत्र प्रवृत्तौ डित्थत्वसहचरितयोः क्रियागुणयोर्भावप्रत्ययः। तथा क्रियागुणयोरभेदाध्यासाभिप्रायम्—"डित्थत्वं त एतत्" (म० भा० ५।१।११९) इति भाष्यम्।**

**यद्वोत्पत्तिप्रभृत्याविनाशात् पिण्डस्यावस्थान्तरेऽपि प्रत्यभिज्ञाप्रत्ययनिमित्तं जातिरेव भावप्रत्ययवाच्या आद्यायां शब्दप्रवृत्तौ। राजपुरुषत्वं पाचकत्वमौपगवत्वमित्यादौ तु सम्बन्धो यथायथं स्वरूपेणोपरञ्जकं प्रवृत्तिनिमित्तं भावप्रत्ययाभिधेयम्। विशिष्टसम्बन्धावच्छिन्नो हि सम्बन्धी प्रतीयतेऽत्रेति सम्बन्धस्यैवोप-**

---

विधायकसूत्रभाष्य एव भेद्यभेदकयोरध्यस्यमानतादात्म्यरूपः सम्बन्ध उपपादितः। शुक्लादिशब्दानां गुणावच्छिन्नद्रव्यवाचित्वे शुक्लत्वमित्यत्र गुणे भावप्रत्ययः। तेषां गुणाभिधायित्वे तु गुणगतजातौ भावप्रत्ययः। गुणगतजात्यभिधायित्वे तु पूर्ववत् शब्दस्वरूपे भावप्रत्ययः। एवमेव डित्थादिशब्दानामाद्ये प्रयोगे तेषामपि स्वरूप एव भावप्रत्ययः। संज्ञिनि संज्ञायाः स्वरूपाध्यासेन तया संज्ञिप्रत्यायनात् तदेव तत्र प्रवृत्तिनिमित्तम्। तदेतदस्य डित्थत्वमित्यत्र प्रथमडित्थगतक्रियागुणयोर्द्वितीयडित्थेऽध्यासाद् द्वितीयडित्थे डित्थशब्दस्य लक्षणया प्रवृत्तौ डित्थत्वसहचरितयोः=डित्थशब्दसहचरितयोः, क्रियागुणयोर्भावप्रत्ययः। तथा—डित्थशब्दे पूर्वोक्तरीत्या प्रथमप्रयुक्तडित्थशब्दस्य प्रवृत्तिनिमित्तभूते प्रथमडित्थगतक्रियागुणयोरभेदाध्यासाभिप्रायेण "डित्थत्वं त एतत्' इति भाष्यम्। तथा च डित्थत्वमत्र डित्थशब्द एव, तदभेदेन त्वत्र क्रियागुणौ भ्रान्त्या प्रतीयत इति। यथा रजताभेदेन शुक्तिका भ्रान्त्या प्रतीयत इदं रजतमिति।

यद्वा, डित्थत्वेन व्यवह्रियमाणस्य पिण्डस्योत्पत्तिप्रभृति आविनाशादवस्थान्तरेऽपि सोऽयं डित्थ इति प्रत्यभिज्ञाप्रत्ययनिमित्तं डित्थत्वं जातिरेव, अनेकव्यक्तिसमवेतत्वात्। सैव चाद्यायां डित्थशब्दप्रवृत्तौ भावप्रत्ययवाच्या। 'राजपुरुषत्वम्, पाचकत्वम्, औपगवत्वम्' इत्यादौ तु पुरुषे राज्ञः स्वस्वामिभावः सम्बन्धः, कर्त्तरि पाकक्रियाया जन्यजनकभावरूपः सम्बन्धः, अपत्ये उपगोर्जन्यजनकभावरूपः सम्बन्धो यथायथं भेद्यस्य पुरुषादेः स्वरूपेणोपरञ्जकम्=संबध्यव्यावर्तकम्, अतो भावप्रत्ययाभिधेयं राजपुरुषादिशब्दानां यथासम्भवं प्रवृत्तिनिमित्तम्। राजादिसम्बन्धावच्छिन्नो हि पुरुषादिरूपः सम्बन्धी राजपुरुषादिशब्दप्रयोगे प्रतीयत इति सम्बन्धस्यैवोपरञ्जकत्वात्=उपरागपूर्वकं भेदकत्वात्, गुणत्वे सति भावप्रत्ययवाच्यता।

रञ्जकत्वाद् गुणत्वे भावप्रत्ययवाच्यता। न हि राजादिसम्बन्ध्यवच्छिन्नः पुरुषादिः प्रतीयते; अपि तु तत्सम्बन्धावच्छिन्नः। भेदस्य चोद्भूतत्वाद्भेदाधिष्ठानः सम्बन्ध एव प्रवृत्तिनिमित्तमभिहितोऽन्तर्भूतः।

यत्र तु सम्बन्ध्यनुरक्ता प्रतीतिः, भेदस्य च तिरोधानं तत्र सम्बन्ध्येव जात्यादि-प्रवृत्तिनिमित्तं गुणो गोत्वं शुक्लत्वमित्यादौ भावप्रत्ययवाच्यः। अत्र हि न समवायोपरक्ता प्रतीतिः; अपि तु जातिगुणोच्छुरिता द्रव्ये समवायवशात् तिरोहितभेदे। सम्बन्धस्तु जातिगुणयोराधारावच्छेदकः। हस्तित्वमित्यादौ रूढिविषये

---

नहि राजपुरुषादिशब्दप्रयोगे अभेदेन राजादिरूपसम्बन्ध्यवच्छिन्नः पुरुषादिः प्रतीयते; अपि तु राजादिसम्बन्धावच्छिन्नः।

किञ्च, राजपुरुषयोर्भेदस्योद्भूतत्वात्=उद्भूतत्वेनानुभवगोचरत्वात्, राजसम्बन्धिपुरुषयोरभेदस्य चाप्रतीयमानत्वेनाभेदे सम्बद्धत्वबुद्धिनियामकत्वाभावेन च भेदाधिष्ठानकः=भेदमूलकः स्वस्वामिभावादिरूपः सम्बन्ध एव, राजपुरुषादिशब्दे प्रवृत्तिनिमित्तम्, न त्वभेदः, तस्य सम्बन्धत्वस्याननुभवादसम्भवाच्च। 'राहोः शिरः' इत्यादावपि न राहुशिरसोरभेदः सम्बन्धः। राहुसंज्ञकस्यासुरस्य शिर इति भेदमूलकस्यावयवावयविभावसम्बन्धस्यैव सम्भवात्। केतुरिति तु कबन्धस्य शिरश्छेदात् पश्चाद्भाविनी संज्ञा।

नहि राहोः शिर इतिवत् केतोः कबन्ध इति व्यवहारः समुपलभ्यते। शिरो राहुरिति सामानाधिकरण्येन व्यपदेशस्तु अवयवावयविनोरभेदोपचारात्। स च राजपुरुषादौ प्रवृत्तिनिमित्तभूतः सम्बन्धः समासेनाभिहितः, समासार्थेऽन्तर्भूतश्चेति नाकाङ्क्षाभास्यः; किन्तु वृत्तिलभ्य एवेति। यत्र तु सम्बन्धिद्वयस्य प्रतीतिः सम्बन्धानुपरक्ता, तयोर्भेदस्य च तिरोधानम् अप्रतीतिः। तत्र सम्बन्ध्येव जात्यादिकमेतत्परिभाषालक्ष्यगुणरूपं प्रवृत्तिनिमित्तं भावप्रत्ययवाच्यम्। यथा गोत्वम्, शुक्लत्वमित्यादौ। अत्र हि गोगोत्वयोः, शुक्लशुक्लत्वयोश्च प्रतीतिर्न समवायोपरक्ता; अपि तु जातिगुणयोः समवायवशात् तिरोहितभेदे द्रव्ये यथायथं जातिगुणाभ्यां गोत्वशुक्लत्वाभ्यामुच्छुरितास्तयोस्तादात्म्यावगाहिनी। जातिगुणयोर्द्रव्ये समवायरूपः सम्बन्धस्तु तयोराधाररूपस्य द्रव्यस्य द्रव्यान्तरादवच्छेदकः, तादात्म्यप्रतीत्यविनाभावेन तत्रोपलक्षणतया प्रतायमानः। 'हस्तित्वम्' इत्यादौ रूढिवृत्तिविषये जातिरेव भावप्रत्ययवाच्या, न तु हस्ततद्वतोः सम्बन्धः।

एवं रूढ्यभिन्नयोगविषये=योगरूढिविषये 'कुम्भकारत्वम्' इत्यादावपि जातिविशेष एव भावप्रत्ययवाच्यः, न तु कुम्भकर्मिका क्रियाऽपि, जातिविशेषस्यैव वाच्यतावच्छेदकत्वे लाघवात्। अत्र हि कुम्भक्रिययोः कर्मत्वरूपः सम्बन्धः=शब्दव्युत्पत्तिनिमित्तम्, जातिविशेष एव तु प्रवृत्तिनिमित्तभूतो भावप्रत्ययान्तकुम्भकारत्वशब्दवाच्यः। तदुक्तम्—'अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तम्, अन्यच्च

जातिरेव वाच्या। एवं 'कुम्भकारत्वम्' इत्यादौ। अत्र हि शब्दव्युत्पत्तिनिबन्धनं सम्बन्धो जातिरेव शब्दवाच्या। सत्तेत्यत्रापि सत्तासतोः सम्बन्धस्याव्यभिचारादनवच्छेदकत्वे जातिरेव भावप्रत्ययवाच्या। तदुक्तम्—"समासकृत्तद्धितेषु सम्बन्धाभिधानमन्यत्र रूढ्यभिन्नयोगाव्यभिचरितसम्बन्धेभ्यः" इति।

इत्थमत्र विशेषणं स्वरूपेण परमुपरञ्जयत्सूत्रे भावशब्देन प्रतिपादितम्. भवत्यस्मात् तेनाकारेण द्रव्यमिति भावः।

तथा हि गोत्वाद् गवाकारेण द्रव्यं प्रतीयते, शुक्लादिगुणात् तदाकारेणेति, परोपाधिमन्तरेणार्थानामव्यवहार्यत्वे नासत्कल्पत्वात्। ततश्च विशेषणेनाभेदमापादितं शब्दोऽभिधत्त इति शब्दप्रवृत्ति-कारणमपि भवत्यर्थरूपसम्बन्धि। तेन 'यस्य गुणस्य भावात्' ( वा० पा० ५।१।११९ ) इत्यत्र पक्षेऽर्थवाचिनीप्रकृतिः, गोर्भावो गोत्वमिति।

यद्वा "सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भावः"
( वा० पा० ५।१।११९ )
इत्यत्र तु पक्षे शब्दवाचिनी प्रकृति, गोशब्दस्य भावो गोत्वमिति।

---

प्रवृत्तिनिमित्तम्' इति। तद्यथा गमनं गोशब्दस्य व्युत्पत्तिनिमित्तम्, गोत्वं तु प्रवृत्तिनिमित्तम्, शयानायामपि गवि गोशब्दस्य प्रयोगदर्शनात्। सत्ता इत्यत्र तल्प्रत्ययान्तेऽपि सत्तासतोः समवायरूपस्य सम्बन्धस्य अव्यभिचारादनवच्छेदकत्वे=अविशेषणत्वे जातिरेव भावप्रत्ययवाच्या। तदुक्तम्—'सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्' इति। एतत् सर्वमभिप्रेत्योक्तं भाष्ये—"समासकृत्तद्धितेषु सम्बन्धाभिधानमन्यत्र रूढिरूढ्यभिन्नयोगाव्यभिचरितसम्बन्धेभ्यः" इति। अत्र रूढ्यभिन्नयोगो योगरूढिः।

इत्थमत्र विशेषणं स्वरूपेण परम्=विशेष्यम् उपरञ्जयद् उपरागपूर्वकं व्यावर्त्तयत् "तस्य भावस्त्वतलौ" इति सूत्रे भावशब्देन प्रतिपादितं भवति। यस्मात् कारणात्=यत् कारणं प्राप्य तेनाकारेण द्रव्यं भवति प्रतीयते तद्भावः। कृभ्वस्तयः क्रियासामान्यवचना इत्यभ्युपगमेन भवतिरत्र प्रतीतौ वर्तते।

तथा हि—गोत्वाद् गवाकारेण द्रव्यं प्रतीयते। शुक्लादिगुणात् तदाकारेणेति। स्वातिरिक्तं विशेषणमननुभूय अर्थानामव्यवहार्यत्वेन सतामप्यसत्कल्पत्वात्। ततश्च विशेषणेन जात्यादिना स्वात्मना सहाभेदमापादितविशेष्यभूतं द्रव्यरूपमर्थं शब्दोऽभिधत्त इति शब्दार्थरूपे द्रव्यात्मकविशेष्ये प्रकारतया सम्बन्धि जात्यादिरूपं विशेषणं शब्दप्रवृत्तिकारणमपि भवति। तेन 'यस्य गुणस्य भावात्" इत्यत्र पक्षेऽर्थवाचिनी=जात्यादिरूपविशेषणतादात्म्यापन्नद्रव्यरूपार्थवाचिनी प्रकृतिः 'गोर्भावो गोत्वमिति'।

यद्वा, 'सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भावः' इत्यत्र तु पक्षे शब्दरूपवाचिनी प्रकृतिः। गोः=गोशब्दस्य, भावः=प्रवृत्तिनिमित्तम्, गोत्वमिति।

तथा हि सर्वे भावाः सर्वे शब्दाः स्वेन भावेन भवन्त्यस्मादिति व्युत्पत्त्या प्रवृत्तिनिमित्तलक्षणेनार्थेन भवन्ति। अनेकार्थत्वाद्धातूनां भवतेः प्रयोगवचनत्वात् प्रयुज्यन्त इति। स प्रवृत्तिनिमित्तलक्षणो भावस्तेषां शब्दानां प्रत्ययवाच्य इति तच्छब्दवाच्या शब्दात्मिका प्रकृतिरत्र पक्षे भवति। तदेवं गुणलक्षणमत्र शास्त्र उदाहृतम्।

यत्र त्वस्य गुणस्य न ग्रहणं शास्त्रे तत्र युक्तिर्वक्तव्या। तथा हि 'वोतो गुणवचनात्" ( पा० ४।१।४४ ) इत्यत्र नायं गुणः, प्रातिपदिकाधिकारात् स्त्रीत्वस्य च द्रव्यधर्मत्वाद् द्रव्याभिधाय्येव किञ्चित् प्रातिपदिकं गुणवचनग्रहणाद् गृह्यते। गुणमुक्तवान् गुणवचन इति पट्वादिभ्यो गुणोपसर्जनद्रव्यवचनेभ्यः प्रत्ययः। गुणश्चात्रोपसर्जनभूतः, न संसर्ग्यादिलक्षणो जातिशब्देभ्योऽपि प्रसङ्गादिति परिभाषितोऽसौ गृह्यते।

"सत्त्वे निविशतेऽपैति" ( म० भा० पा० ४।१।४४ ) इत्यादिः।

---

तथा हि—सर्वे भावाः भवन्ति, व्यवहारे स्वार्थबोधनाय प्रयुज्यन्त इति व्युत्पत्त्या शब्दाः। बाहुलकात् कर्तरि घञ्। स्वेन भावेन भवन्ति = प्रयुज्यन्ते, अस्मात् = एतद्रूपं शब्दप्रवृत्तिकारणं प्राप्येति व्युत्पत्त्या शब्दप्रवृत्तिनिमित्तलक्षणेनार्थेन भवन्ति = प्रयुज्यन्ते। अनेकार्थत्वाद् धातूनां भवतेरत्र प्रयोगवचनत्वात् प्रयुज्यन्त इत्यर्थः। स तेषां शब्दानां प्रवृत्तिनिमित्तलक्षणो भावः त्वतलादिभावप्रत्ययवाच्य इति गवादिशब्दात्मिका प्रकृतिरेवात्र पक्षे गवादिशब्दवाच्या भवति। तदेवं गुणलक्षणमत्र शास्त्र उदाहृतम्।

यत्र तु शास्त्रेऽस्य गुणस्य संसर्ग्यादिलक्षणस्य न ग्रहणम्, तत्र तद्ग्रहणाभावे युक्तिः = तर्को वक्तव्या। तथा हि—'वोतो गुणवचनात्' ( ४।१।४४ ) इत्यत्र नायं संसर्ग्यादिलक्षणो गुणः; किन्तु प्रातिपदिकाधिकारात् स्त्रीत्वस्य च स्त्रियामित्यधिकारलब्धस्य द्रव्यधर्मत्वाद् द्रव्याभिधाय्येव किञ्चित् प्रातिपदिकं गुणवचनग्रहणादत्र गृह्यते। गुणमुक्तवान् न तु वक्ति इति व्युत्पत्त्या गुणवचनत्वमत्रोपलक्षणप्रातिपदिके, न तु विशेषणमिति कृत्वा पट्वादिभ्यो गुणोपसर्जनद्रव्यवचनेभ्यो ङीष्प्रत्ययः। पट्वीति। गुणश्चात्र द्रव्ये उपसर्जनभूतो न संसर्ग्यादिलक्षणः, जातिशब्देभ्योऽपि प्रसङ्गादिति परिभाषितोऽत्र गुणो गृह्यते। सा च परिभाषा—

सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥ इति।

( म० भा० पा० ४।१।४४)

नन्वेवं वैशेषिकप्रणीतस्यैव गुणस्य ग्रहणं स्यादिति 'पट्वी मृद्वी' इत्यादावीकारो न स्यात्। नैष दोषः, पाटवादीनामप्यस्य लक्षणस्य सम्भवात्। एतदर्थमेव ह्ययं परिभाषाऽऽरब्धा। अन्यथा प्रतीतिबलादेव रूपादीनां गुणत्वमितीयमनर्थिका स्यात्।

"गुणवचनब्राह्मणादिभ्यः" ( पा० ५।१।१२४ )

इत्यत्रापि पारिभाषिक एव गुणो गृह्यते। तथा हि वाक्यकारेण--

"अर्थवत् प्रातिपदिकम्" ( वा० पा० १।४।१ ),

"गुणवचनं च" ( वा० पा० १।४।१ )

इति प्रातिपदिकमात्रस्य गुणवचनसंज्ञारब्धा। यद्येवं प्रातिपदिकाधिकारादेव सिद्धे किमर्थं गुणवचनम्? ब्राह्मणादिग्रहणं चानर्थकम्। उच्यते, प्रातिपदिकाधिरादतिप्रसक्ते गुणवचनसंज्ञानामेव यथा स्यादिति। विधानम् गुणवचनसंज्ञाया हि बाधिकाः

"समासकृत्तद्धिताऽव्ययसर्वनामाऽसर्वलिङ्गा जातिः।" (वा० पा० १।४।१),

"एकद्रव्योपनिवेशिनी संज्ञा।" ( वा० पा० १।४।१ )

इति च समासादिसंज्ञाः समारब्धाः।

तथा च समासादिविविक्तं प्रातिपदिकं ष्यञमुत्पादयति। अत एव च ब्राह्मणादिग्रहणमप्युपपद्यते। ब्राह्मणशब्दस्य तद्धितान्तत्वाद् गुणवचनसंज्ञाभावात्।

---

इदञ्च लक्षणं पटुत्वादिष्वपि अस्तीति 'पट्वी', 'मृद्वी' इत्यादिप्रयोगसिद्धिः। वैशेषिकाभ्युपगतगुणपरिग्रहे त्वेतत्परिभाषारम्भो निरर्थकः स्यात्। प्रतीतिबलादेव रूपादीनां गुणत्वसिद्धेरिति। गुणवचनब्राह्मणादिभ्य इत्यत्रापि सत्त्वे निविशत इत्येतत्परिभाषागोचर एव गुणो गृह्यते। तथा हि वार्त्तिककारेण—"अर्थवत् प्रातिपदिकम्, गुणवचनञ्च" इति सर्वस्य प्रातिपदिकस्य गुणवचनसंज्ञाऽऽरब्धा।

ननु यदि प्रातिपदिकमात्रस्य गुणवचनसंज्ञा विधीयते, तदा प्रातिपदिकाधिकारादेव सिद्धे किमर्थं गुणवचनञ्चेति वार्त्तिकम्। किञ्च, 'गुणवचनब्राह्मणादिभ्यः' ( ५।१।१२४ ) इति सूत्रे ब्राह्मणादिग्रहणमनर्थकम्। ब्राह्मणादिशब्दानामपि गुणवचनत्वादिति चेत्, अत्रोच्यते—प्रातिपदिकाधिकारात् समासादावतिप्रसक्ते ष्यञि गुणवचनसंज्ञेभ्य एव ष्यञ् यथा स्यादिति गुणवचनसंज्ञाविधानम्। गुणवचनसंज्ञाया हि बाधिकाः—

'समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गा जातिः', 'एकद्रव्ये निवेशिनी संज्ञा' इति च समासादिसंज्ञाः समारब्धाः। तथा च समासादिविविक्तं प्रातिपदिकं ष्यञमुत्पादयति। अत एव च सूत्रे ब्राह्मणादिग्रहणमपि उपपद्यते। ब्रह्म वेद ब्राह्मण इति व्युत्पत्त्या ब्राह्मणशब्दस्य तद्धितान्तत्वाद् गुणवचनसंज्ञाया अभावात्। माणव-

भावात् । माणवशब्दोऽपि तद्धितान्तो मनोरपत्यमिति । तथा वाडवशब्दोऽपि

"वडवाया वृषे वाच्ये" ( वा० पा० ४।१।१२० ) इति ।

'अर्हतो नुम् च' ( वा० पा० ५।१।१२४ )

इति तु कृत्संज्ञकः ।

एवमन्यदपि ब्राह्मणादिगणे गुणवचनसंज्ञाबाधकं योज्यमिति । तत्रापि ष्यञ् यथा स्यादिति ब्राह्मणादिग्रहणम् । ये च ष्यञो बाधकाः प्रत्ययास्तानपि बाधित्वा ष्यञ् यथा स्यादित्यपि ब्राह्मणादिग्रहणमुपपद्यते । तथा हि ब्राह्मणशब्दस्याव्युत्पत्तिपक्षे

"प्राणभृज्जातिः " ( पा० ३।१।१२९ )

इत्यञ् प्राप्तः । माणववाडवयोर्गोत्रत्वात्

'गोत्रचरणात् " ( पा० ४।३।१२६ )

इति वुञ् प्राप्नोतीत्येवमन्यत्राप्यूह्यम् ।

येषां तु न तद्धितादिसंज्ञा, नापि कश्चिदपवादः प्राप्नोति तेषामत्र प्रपञ्चार्थः पाठः ।

सूत्रकारमते तु गुणमुक्तवान् गुणवचन इति गुणोपसर्जनद्रव्यवचनो वचनग्रहणादत्र गृह्यते ।

'तृतीया तत्कृतार्थेन गुणवचनेन" ( पा० २।१।३० )

---

शब्दोऽपि तद्धितान्तो मनोरपत्यमिति । तथा वाडवशब्दोऽपि 'वडवाया वृषे वाच्ये' इति तद्धितान्तो भवति । 'अर्हतो नुम् त्र" इत्यत्रार्हच्छब्दस्तु कृत्संज्ञकः । एवमन्यदपि ब्राह्मणादिगणे गुणवचनसंज्ञाबाधकं योज्यमिति । तत्रापि = गुणवचनसंज्ञाबाधकेष्वपि ष्यञ् यथा स्यादिति ब्राह्मणादिग्रहणम् । ये च ष्यञो बाधकाः प्रत्ययास्तानपि बाधित्वा ष्यञ् यथा स्यादित्येतदर्थमपि ब्राह्मणादिग्रहणमुपपद्यते ।

तथा हि— ब्राह्मणशब्दस्याव्युत्पत्तिपक्षे — 'प्राणभृज्जातिः' इत्यञ् प्राप्तः । माणववाडवयोर्गोत्रत्वाद् गोत्रचरणात्' ( ४।३।१२६ ) इति वुञ् प्राप्नोतीति । एवमन्यत्राप्यूह्यम् ।

येषां तु न तद्धितादिसंज्ञा, नापि कश्चित् ष्यञोऽपवादः प्राप्नोति तेषां ब्राह्मणादिर्गणे प्रपञ्चार्थः पाठः ।

सूत्रकारमते तु गुणमुक्तवान् गुणवचन इति गुणोपसर्जनद्रव्यवचनोऽत्र गुणवचनपदेन गृह्यते । गुणवचन इत्यत्र वचनग्रहणात् । 'तृतीया तत्कृतार्थेन गुणवचनेन'

इत्यत्रापि खण्डादिस्तृतीयान्तार्थकृतः कश्चिदेव गुणोपसर्जनो द्रव्यविशेषो गृह्यते। खण्डनगुणयोगाद्धि द्रव्यं खण्डशब्दवाच्यम्।

'संख्याया गुणस्य निमाने ' ( पा० ५।२।४७ )

इत्यत्र समभागो गुणो ग्राह्यः। न यथोक्तलक्षणः, नापि

"सत्त्वे निविशते " ( म० भा० पा० ४।१।४४ )

इत्यादिलक्षणः।

द्विमयमुदश्विदिति द्वौ समौ भागौ यवानां निमानमेकस्योदश्वित क्रीयमाणस्येत्यर्थः। सापेक्षत्वेऽपि गमकत्वाद् वृत्तिः। दृष्टश्च समावयववचनो गुणशब्दः, यथा 'त्रिगुणा रज्जुः' इति।

"गुणवचनेभ्यो मतुपो लुक्" (वा० पा० ५।२।९४)

इत्यत्र येऽभिन्नरूपा गुणमभिधाय तद्वति वर्तन्ते शब्दशक्तिस्वाभाव्यात् ते गृह्यन्ते शुक्लादयः। तथा च 'अव्यतिरेकात् सिद्धम्" इति प्रत्याख्यानमभेदोपचार-योग्यताश्रयेण। तेन रूपादयस्तदयोग्या निर्वर्तिता भवन्तीति मत्वर्थीयान्ता एव तद्वति ते साधवो रूपवान् घट इत्यादि।

"प्रकारे गुणवचनस्य" ( पा० ४।१।१२ )

इत्यत्र सर्वस्यैव पदस्य द्विर्वचनमिति स्वतन्त्रं गुणोपसर्जनं द्रव्यं पट्वादि गृह्यते।

"पूरणगुण...." ( पा० २।२।११ )

---

( २।१।३० ) इत्यत्रापि खण्डादिस्तृतीयान्तार्थकृतः कश्चिदेव गुणोपसर्जनो द्रव्य-विशेषो गृह्यते। खण्डनरूपगुणयोगाद् हि द्रव्यं खण्डशब्दवाच्यम्। "संख्याया गुणस्य निमाने मयट् ( ५ २।४७ ) इत्यत्र समभागरूपो गुणो ग्राह्यः। न यथोक्त-लक्षणः=संसर्ग्यादिरूप', नापि 'सत्त्वे निविशते' इत्यादिरूपः। द्विमयमुदश्विद् यवानाम् इत्यस्य यवानां द्वौ समौ भागौ निमानम्=क्रयणसाधनम् अस्योदश्विद्-भागस्य क्रीयमाणस्येत्यर्थः। द्विमयमित्यत्र मयट् तद्धितरूपाया वृत्तेर्यत्रसापेक्षत्वे-नासामर्थ्याद् वृत्त्यभावो नाशङ्कनीयः; किन्तु गमकत्वात्=नित्यसापेक्षत्वाद् देवदत्तस्य गुरुकुलमित्यादिष्विव वृत्तिर्भवत्येव। दृष्टश्च समभागवचनो गुणशब्दः। यथा त्रिगुणरज्जुरिति। 'गुणवचनेभ्यो मतुपो लुक्' इत्यत्र ये शुक्लादयः शब्दा गुणे गुणिनि चाभिन्नरूपा गुणमभिधाय तद्वति वर्त्तन्ते शब्दशक्तिस्वाभाव्यात् ते गुणवचनशब्देन गृह्यन्ते। तथा च—"अव्यतिरेकात् सिद्धम्" इति तस्य वार्तिकस्य प्रत्याख्यानमभेदोपचारयोग्यताऽऽश्रयेण = गुणगुणिनोरभेदारोपयोग्यतारूपलक्षणा-श्रयेण। अत्राव्यतिरेकादित्यस्याभेदादित्यर्थः। तेन रूपादयः शब्दास्तदयोग्याः= अभेदोपचारयोग्यताशून्याः। मतुप् प्रकृतो निर्वर्तिता भवन्ति इति मत्वर्थीयान्ता एव ते तद्वति=तद्गुणवति साधवः=रूपवान् घट इत्यादि। 'प्रकारे गुणवचनस्य' (४।१।१२) इत्यत्र सर्वस्यैव पदस्य द्विर्वचनम्, न तु तदेकदेशस्य प्रकृतिप्रत्ययादेरिति

इत्यत्र गुणशब्देनार्थग्रहणाभिसम्बन्धादेतेषां तावत् प्रत्यायनं नास्ति। आश्रितमात्रस्यापि धर्मस्य संसर्ग्यादिलक्षणस्य परिग्रहे द्रव्यसामर्थ्याद्यसिद्धिः। तस्मात् 'सत्त्वे निविशते....'' ( म० भा० पा० ४।१।४४ ) इत्यादिलक्षणो गुणो गृह्यते। स च वैशेषिकशास्त्रप्रसिद्धः।

तथा हि—पार्थिवानां रूपादीनामग्निसंयोगादुपजनापायौ द्रव्ये स्तः। कालाकाशात्मसु परममहत्त्वादीनां चाक्रियाजन्यत्वमपीति व्याप्यते, तेन लक्षणेन गुणपदार्थः। तथा च रूपादिभिरपि प्रतिषेधप्राप्तौ 'तत्स्थैश्च गुणैः'' ( वा० पा० २।२।८ ) इति प्रतिप्रसव आरभ्यते। तत्रार्थेन सह विधेरसम्भवादभेदेनायं शब्दस्य व्यपदेशः। तस्मिन् गुणात्मनि ये गुणा व्यवस्थिताः, तद्वाचिभिरिति। द्रव्यपारतन्त्र्याच्च गुणानां वास्तवं स्वात्मव्यवस्थितत्वं नोपपद्यते इत्यभिधाव्यापाराश्रयोऽयं व्यवहारः, शब्देन केषाञ्चिद् गुणानां स्वात्मप्रतिष्ठानां प्रत्यायनात्। स चायं रूपादिशब्दानां द्रव्यशब्दैरसमानाधिकरणानां प्रकारो घटते, द्रव्यं

---

स्वतन्त्रम्=गुणापेक्षया प्रधानम्, गुणोपसर्जनकं द्रव्यं पट्वादि गुणत्वेन गृह्यते। पटुपटुः इत्युदाहरणम्। पटुप्रकार इत्यर्थः। "पूरणगुण" (२।२।११) इत्यत्र गुणशब्देन श्रौतस्यार्थग्रहणस्याभिसम्बन्धाद् एतेषाम्=प्रागुक्तगुणलक्षणलक्षितानाम् तावत् प्रत्यायनम्=बोधनं नास्ति। आश्रितसामान्यस्यापि धर्मस्य सर्वस्य द्रव्यगुणादिरूपस्य संसर्ग्यादिलक्षणस्य परिग्रहे सर्वं यत् किञ्चिदाधाराश्रितत्वाद् गुण एव स्यादिति द्रव्याद्यसिद्धिः।

किञ्च, गुणयोर्धर्म्याश्रितत्वेन धर्मिणोः परस्परमन्वयेन सामर्थ्यसिद्धावपि धर्मयोः परस्परमनन्वयेन सामर्थ्यासिद्धिः। तस्मात् 'सत्त्वे निविशते' इत्यादिलक्षणो गुणो गृह्यते। स च वैशेषिकशास्त्रप्रसिद्धः।

तथा हि पार्थिवानाम्=पृथिवीसमवेतानां रूपादीनामग्निसंयोगादुपजनापायौ=उत्पत्तिविनाशौ द्रव्ये स्तः। कालाकाशात्मसु परममहत्त्वादीनाञ्च क्रियाजन्यत्वाभाव आधेयत्वमपीति व्याप्यते। 'सत्त्वे निविशते' इति लक्षणेन सकलोऽपि गुणपदार्थः। तथा च रूपादिभिरपि षष्ठीसमासप्रतिषेधप्राप्तौ—'तत्स्थैश्च गुणैः षष्ठी-समस्यते' इति विहतप्रतिसिद्धविधिरूपः प्रतिप्रसव आरभ्यते। तत्रार्थेन सह समासविधेरसंभवात् शब्दार्थयोरभेदमाश्रित्यायं समासविधिरूपः शब्दस्य व्यपदेशः। तस्मिन् गुणात्मनि=अध्यारोपेण गुणतादात्म्यापन्ने द्रव्ये ये गुणा रूपादय आधेयत्वेन व्यवस्थितास्तद्वाचिभिरिति तत्स्थैश्च गुणैः षष्ठी न समस्यत इत्यस्यार्थः। गुणानां द्रव्यपारतन्त्र्याच्च वास्तवं प्राधान्येन स्वात्मव्यवस्थितत्वं नोपपद्यत इत्यभिधाव्यापाराश्रयः=अभिधारूपशब्दव्यापारजन्यपदार्थोपस्थितिनिमित्तकः, अयं व्यवहारः= गुणानां स्वात्मव्यवस्थितत्वव्यवहारः। शब्देन केषाञ्चिद् गुणानाम्=रूपरसादीनाम्, स्वात्मप्रतिष्ठानां प्रत्यायनात्। स चायं प्रकारो द्रव्यशब्दैरसमानाधिकरणानां

प्रति गुणभावाप्रतिपत्तेः। इत्थं 'घटरूपम्, कपित्थरसः, चन्दनगन्धः, पवनस्पर्शः, कन्यास्त्रनः' इत्यादिसमासः साधुः।

ये तु द्रव्योपसर्जनत्वेनोच्यमाना दृष्टास्ते तस्य (तत्स्थत्व) विशेषणेन व्यवच्छिद्यन्ते शुक्लादयः। 'शुक्लः पटः' इति हि द्रव्यसामानाधिकरण्येन प्रयोगोऽस्ति। ततश्च ते प्रतिषेधविषयाः। पटस्य शुक्ल इति। षष्ठ्यन्तेन विशेष्यमाणस्य सर्वस्यैव गुणस्य स्वात्मन्यवस्थितत्वेन प्राधान्यात् सर्वावस्थासु तत्स्थत्वमाश्रयणीयम्। शुक्लादयश्च क्वचिदतत्स्था इति विधेरपाकृताः प्रतिषेधभाजः। एवं शौक्ल्यादयोऽपि, शुक्लशब्दाद् गुणे भावप्रत्ययोत्पादाद् द्रव्योपसर्जनशुक्लगुणाभिधानात्। यो हि कस्याञ्चिदप्यवस्थायां द्रव्योपसर्जनो गुणः, सोऽत्र तत्स्थविशेषणेनापाक्रियते। तथा च शुक्लगुण इति शौक्ल्यशब्देनापि तस्य प्रत्यायने व्यवच्छेद एवमुपलक्षणे शब्दभेदस्यानङ्गभावात्।

---

रूपादिशब्दानां घटते। 'घटरूपम्' इत्यादौ द्रव्यं प्रति गुणत्वाप्रतिपत्तेः, न तु 'शुक्लो घटः मधुरो गुडः' इत्यादिरूपेण द्रव्यसमानाधिकरणानां शुक्लमधुरादिशब्दानां स्वात्मन्यवस्थितगुणवाचकत्वरूपः प्रकारः। इत्थं घटरूपम्, कपित्थरसः, चन्दन-गन्धः, पवनस्पर्शः, कन्यास्वनः' इत्यादिरूपः षष्ठीसमासः साधुः।

ये तु द्रव्योपसर्जनत्वेनोच्यमानाः 'शुक्लः पटः' इत्यादौ दृष्टाः शुक्लादयस्ते तत्स्थत्वविशेषणेन व्यवच्छिद्यन्ते। 'शुक्लः पटः' इति हि द्रव्यसामानाधिकरण्येन प्रयोगोऽस्ति। ततश्च ते षष्ठीसमासप्रतिषेधविषयाः। पटस्य शुक्ल इति यथा। अत्र शुक्लशब्दः शुक्लखण्डरूपद्रव्यपरः। षष्ठ्यन्तेन विशेष्यमाणस्य सर्वस्यैव गुणस्य स्वात्मन्यवस्थितत्वेन प्राधान्यात् सर्वावस्थासु तत्स्थत्वमाश्रयणीयम्। शुक्लादयश्च क्वचित् = शुक्लः पट इत्यादावतत्स्था इति प्रतिप्रसवरूपविधेरपाकृताः = निरस्ताः प्रतिषेधभाजः।

एवं शौक्ल्यादयोऽपि पटस्य शौक्ल्यमित्यादौ अतत्स्था एवेति षष्ठीसमास-प्रतिषेधः।

अत्र हि शुक्लशब्दाद् गुणे भावप्रत्ययोत्पादात् प्रकृत्या द्रव्योपसर्जनशुक्ल-गुणाभिधानात्। यो हि कस्याश्चिदप्यवस्थायां द्रव्योपसर्जनो गुणः, सोऽत्र तत्स्थ-विशेषणेनापाक्रियते। तथा च तादृशश्च शुक्लगुण इति शुक्लशब्देन प्रत्यायन इव शौक्ल्यशब्देनापि तस्य प्रत्यायने तत्स्थविशेषणेन व्यवच्छेदः, द्रव्योपसर्जनत्वोप-लक्षितभिन्नत्वे सति प्राधान्येन स्वात्मन्यवस्थितत्वमिति तत्स्थलक्षणे एवमुपलक्षणे, एवं द्रव्योपसर्जनत्वस्योपलक्षणत्वे शब्दभेदस्य द्रव्योपसर्जनत्वोपलक्षिते शौक्ल्यादि-शब्दभेदस्य, अनङ्गभावाद् विशेषणतयाङ्गत्वेनानुप्रवेशाभावात्।

यद्येवं 'रूपवान् घटः' इति द्रव्यसामानाधिकरण्याद् रूपादयो न तत्स्थाः। नैतदस्ति। न रूपमत्र द्रव्यविशेषणम्; किन्तु सम्बन्धे सबम्न्ध्यभेदविवक्षायां मत्वर्थ-सम्भवाद्विशेषयन्नपि वा वैय्यधिकरण्येन गुणो द्रव्यात्मन्यनध्यासाद् न स्वात्मनि स्थितिं जहाति। न हि राजपुरुष इति राजा पुरुषमवच्छिन्दन्नपि तन्मयतां भजते। तस्मात् पटस्य रूपम्; रूपमस्यास्तीति प्रतीत्योरभेदात्, सर्वदैव तत्स्था रूपादयः। सूत्रे च वचनशब्दस्यानुपादानाद् ये गुणमुक्त्वा तद्वति न वर्तन्ते; अपि तु गुणमात्र-मभिदधति ते सम्प्रति स्वातन्त्र्यादगुणा अपि वृत्त्यन्तरे दृष्टगुणभावा गृह्यन्त इति शुक्लादय एवैवंप्रकारा गृह्यन्ते, न रूपादय इति सूत्रार्थ एवं वाक्येनानेन व्याख्यातः। अत एव 'ब्राह्मणस्य शुक्लाम्' इति प्रकरणादपेक्ष्यस्य निर्ज्ञातत्वात् सति सामर्थ्ये समासप्राप्तौ नेदं साम्प्रतिकगुणरूपं प्रतिषेधोदाहरणम्। गुणमात्र-वृत्तेर्गृहीतत्वात् तत्र भूतपूर्वगत्याश्रयणमेव युक्तम्। घृतस्य तीव्रश्चन्दनस्य मृदुरिति प्रकरणादिवशात् तीव्रादेर्गन्धादिविशेषणत्वे निर्ज्ञाते गन्धादेर्विशेष्यस्य तत्स्थत्वात् तत्र तद्विशेषणस्यापि तथात्वाशङ्कायाम् "न तु तद्विशेषणैः" (वा० पा० २।२।८) इत्यपरं तीव्रादेस्तीव्रं घृतमित्यादौ वृत्त्यन्तरे द्रव्यसामानाधिकरण्यात् तत्स्थत्वा-

---

यद्येवं 'रूपवान् घटः' इति द्रव्यसामानाधिकरण्याद् रूपादयोऽपि न तत्स्था इति चेत्, नैतदस्ति, न रूपमत्र द्रव्यविशेषणम्; किन्तु मत्वर्थसम्बन्ध्येकदेशे सम्बन्धे, द्रव्ये घटे रूपसम्बन्ध्यभेदविवक्षायां मत्वर्थसम्भवात्। अथवा रूपात्मको गुणः सम-वायसम्बन्धेन वैयधिकरण्येन द्रव्यं घटं विशेषयन्नपि = व्यच्छिन्दन्नपि द्रव्यात्मन्यन-ध्यासात् = तादात्म्याध्यासाभावाद् न स्वात्मनि स्थितिं जहाति। न हि 'राजपुरुषः' इत्यत्र राजा पुरुषमवच्छिन्दन्नपि = व्यावर्त्तयन्नपि तन्मयताम् = पुरुषतादात्म्यं भजते। तस्मात् पटस्य रूपम्, रूपमस्यास्तीति प्रतीत्योरभेदात् सर्वदैव तत्स्था रूपादयः। "पूरणगुण" (२।२।११) इति सूत्रे च गुणपदोत्तरं वचनशब्दस्यानुपादानाद् ये पूर्वं गुणमुक्त्वा तद्वति न वर्तन्ते; अपि तु गुणमात्रमभिदधति। 'पटस्य शुक्लम्' इत्यादौ ते सम्प्रति 'ब्राह्मणस्य शुक्ला' इत्यादौ स्वातन्त्र्यादगुणा अपि वृत्त्यन्तरे = शुक्लरूप-मित्यादौ कर्मधारये दृष्टगुणभावा गृह्यन्त इति शुक्लादय एवैवं प्रकारा गृह्यन्ते, न रूपादय इति प्रकृतसूत्रस्थगुणपदार्थं एवं तत्स्थैश्च गुणैरिति वाक्येन वार्तिकरूपेणा-नेन व्याख्यातः। अत एव 'ब्राह्मणस्य शुक्लाः' इति प्रकरणादपेक्ष्यस्य दन्तपदार्थस्य निर्ज्ञातत्वात् सति सामर्थ्ये समासप्राप्तौ नेदं साम्प्रतिकरूपं प्रतिषेधोदाहरणम्, शुक्लशब्दस्य गुणमात्रवृत्तेर्गृहीतत्वात्। 'ब्राह्मणस्य शुक्लाः' इत्यत्र शुक्लशब्देऽत्र द्रव्य-परे भूतपूर्वगत्याश्रयणमेव युक्तम्। 'घृतस्य तीव्रः', 'चन्दनस्य मृदुः' इत्यादौ प्रकर-णादिवशात् तीव्रादेर्गन्धादिविशेषणत्वे निर्ज्ञाते विशेष्यरूपस्य गन्धादेस्तत्स्थत्वात् तत्राभेदेन तद्विशेषणस्य तीव्रादेरपि तत्स्थत्वाशङ्कायाम्—'न तु तद्विशेषणैः' इत्यपरं वाक्यम्। इदमपि नापूर्वम्; किन्तु तीव्रं घृतमित्यादौ वृत्त्यन्तरे शक्त्यन्तरे तीव्रादे-

भावस्फुटीकरणार्थम् । तेन शुक्लादिवत् तीव्रादिः सौत्रप्रतिषेधविषय एवेति स्फुटीकृतम् ।

"ईषदकृता" ( पा० २।२।७ ) इत्यत्र वाक्यम् । "ईषद्गुणवचनेन" ( वा० पा० २।२।७ ) इति । तत्र प्रसिद्ध एव गुणो ग्राह्यः । सूत्रार्थप्रदर्शनं ह्येदम् ।

तथा हि—ईषच्छब्दोऽपह्लववचन इति तद्वदभिधायिना तस्य समासः। अपह्लासयोगी च क्रियागणलक्षणोऽर्थः, जातिद्रव्ययोस्तदभावात्, जातेर्नित्यत्वात्, द्रव्यस्य सिद्धस्वभावत्वात् । तत्राकृतेति पर्युदासात् क्रियावाचिनोऽग्रहणमिति गुणवचनपरिग्रहः सूत्रार्थ एव ।

यद्येवमीषद्गार्ग्य इत्यत्र नास्ति प्रसङ्गोऽपत्यजातेरपह्लासायोगादिति "इह मा भूत्, ईषद्गार्ग्यः" (म० भा० पा० २।२।७) इति भाष्ये व्यवच्छेद्यं कथमुक्तम् ? यथाकथञ्चित् समर्थनीयमेतत् ।

तथा हि—यथा गार्ग्यतर इति प्रकर्षस्य जातेरयोगादेकार्थसमवेतगुणक्रियानिमित्तत्वमवस्थाप्यते, तथाऽपह्लासोऽपि सम्भाव्येतेति युक्तमेतद् व्यवच्छेद्यम् ।

---

द्रव्यसामानाधिकरण्यात् तत्स्थत्वाभावस्फुटीकरणार्थम् । तेन शुक्लादिवत् तीव्रादिः सौत्रप्रतिषेधविषय एवेति स्फुटीकृतम् ।

"ईषदकृता" (२।२।७) इति सूत्रे वार्त्तिकम्—"ईषद्गुणवचनेन" इति । तत्र प्रसिद्ध एव गुणो ग्राह्यः । 'सत्त्वे निविशते' इत्यादिलक्षणलक्षितः । इदमपि हि वार्त्तिकं सूत्रार्थप्रदर्शनमेव ।

तथा हि—सूत्रे ईषच्छब्दोपह्लासवचन इति अपह्लासवदर्थाभिधायिना शब्देन सह ईषच्छब्दस्य समासः । अपह्लासयोगी च क्रियागुणलक्षणोऽर्थः, जातिद्रव्ययोरपह्लासयोगासम्भवात् जातेर्नित्यत्वात्, द्रव्यस्य च सिद्धस्वभावत्वात् । वृद्ध्यपचयशून्यो हि सिद्ध इत्युच्यते । तत्राकृतेति पर्युदासात् कृदन्तस्य क्रियावाचित्वेन क्रियावाचिनोऽग्रहणमिति गुणवचनपरिग्रहः सूत्रार्थ एव ।

ननु यद्येवं जातेरपह्लासाभावः, तदा ईषद्गुणवचनेनेति वार्त्तिकाभावेऽपि ईषद्गार्ग्य इत्यत्र ईषदकृतेति समासप्रसङ्गो नास्ति । गोत्रश्च चरणैः सहेति जातिलक्षणलक्षिताया अपत्यजातेर्नित्यत्वेनापह्लासायोगादिति स्थिते—'इह मा भूत्, ईषद्गार्ग्यः' इति भाष्ये ईषदगुणवचनेनेत्यस्य व्यवच्छेद्यत्वेन जातिः कथमुक्ता इति चेत्, यथाकथञ्चित् समर्थनीयमेतत् । समर्थितञ्चैवं केनचित् । तथा हि यथा गार्ग्यतर इति प्रकर्षस्यापत्ये जातावसम्भवात् । तस्य तत्रैकार्थसमवेतगुणक्रियानिमित्तकत्वमध्यारोपेणावस्थाप्यते तथापह्लासोऽपि तन्निमित्तक एव सम्भाव्येतेति युक्तमेवैतदतद्वार्त्तिकव्यवच्छेद्यम् ।

इदं तु प्रकृतभाष्यसमर्थनं न सम्यक् । तथा हि—अत्र प्रकर्षस्य श्रूयमाण-

एतत्तु न सम्यक्, प्रकर्षस्य श्रूयमाणार्थगतत्वेनासम्भवाद्युक्तं यत्प्रतीयमानक्रियागुणनिमित्तत्वम्। समासस्त्वीषत्पिङ्गल इत्यादौ सावकाश इति कथमत्र प्रसजेत् ?

यदपि भाष्यम्—"अकृतेति ह्युच्यमाने...इह न स्यात् समासः ईषत्कडारः" इति। (म० भा० पा० २।२।७) तदपि कथम् ? यावता नैवात्र क्रियाकारकसम्बन्धः प्रतीयत इत्यव्युत्पन्न एवायम्। केवलं स्वरवर्णानुपूर्वीज्ञापनाय 'गडेः कड् च' इत्येवमसत्येव व्युत्पत्तिराश्रिता। तस्मात् सूत्रार्थप्रदर्शनपरत्वेनैवैतद् भाष्यं व्याख्येयम्। गुणवचनत्वादत्र समास इति।

"अजादी गुणवचनादेव" (पा० ५।३।५८) इत्यत्र 'सत्त्वे निविशते" (म० भा० पा० ४।१।४४) इत्येवं लक्षणो गुणो गृह्यते,। न तु संसर्ग्यादिलक्षणः। एवं हि सर्वस्य प्रातिपदिकस्योपाधिविशिष्टार्थाभिधायकत्वात् प्रातिपदिकमात्रात् प्रत्यये गुणवचनग्रहणमनर्थकं स्यात्।

"नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः" (६।२।१५५) इत्यत्र संसर्ग्यादिरूप एव गुण आश्रीयते। तथा हि—नञ उत्तराणि सम्पाद्यर्हाद्यर्थतद्धितप्रत्ययान्तानि गुणप्रतिषेधेऽन्तोदात्तानि भवन्तीति सूत्रार्थः। अत्र प्रतिषेधभाजश्चत्वारः—प्रकृत्यर्थः, प्रत्ययार्थः, तदुपाधिः, सम्बन्धः, वाक्यार्थरूप इति। तत्र गुण-

---

जातिरूपार्थगतत्वेनासम्भवाद् युक्तं तस्य तत्र प्रतीयमानगुणक्रियानिमित्तकत्वम्। ईषदकृतेति समासस्तु मुख्येषदर्थे ईषत्पिङ्गल इत्यादौ सावकाश इति अपत्ये जातौ गुणक्रियागतस्यापह्रासस्याध्यारोपेण गौणेषदर्थे ईषद्गार्ग्य इत्यत्र कथं प्रसजेत् ? 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति न्यायादिति। यदपि भाष्यम्—'अकृतेति ह्युच्यमाने इह न स्यात् समासः, ईषत्कडारः' इति। तदपि कथम् ? यतो नैवात्र क्रियाकारकसम्बन्धः प्रतीयते; अपि तु कडारत्वं गुणः प्रतीयत इत्यव्युत्पन्न एवायं गुणो रूढो न यौगिको योगरूढो वा केवलं स्वरवर्णानुपूर्वीज्ञापनाय—'गडेः कड् च' इत्येवमविद्यमानैव व्युत्पत्तिराश्रिता, तस्मात् सूत्रार्थप्रदर्शनपरमेवैतद् भाष्यद्वयं व्याख्येयम्। 'ईषत्कडारः' इत्यत्र समासस्तु गुणवचनत्वाद् बोद्धव्य इति।

"अजादी गुणवचनादेव" इत्यत्र 'सत्त्वे निविशते' इत्येवं लक्षणो गुणो गृह्यते, न तु संसर्ग्यादिलक्षणः। एवं हि संसर्ग्यादिलक्षणगुणपरिग्रहे हि सर्वस्य प्रातिपदिकस्योपाधिविशिष्टस्वार्थाभिधायकत्वात् प्रातिपदिकमात्रादजादिप्रत्यये प्रकृतवार्त्तिके गुणवचनग्रहणमनर्थकं स्यात्।

नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिता इत्यत्र संसर्ग्यादिरूप एव गुणो गृह्यते। तथा हि—नञ उत्तराणि सम्पाद्यर्हाद्यर्थकतद्धितप्रत्ययान्तानि अन्तोदात्तानि भवन्ति गुणप्रतिषेधेऽभिधीयमान इति सूत्रार्थः। अत्र प्रतिषेधभाजश्चत्वारः—प्रकृत्यर्थः, प्रत्ययार्थः, तदुपाधिः=प्रत्ययार्थोपाधिः वाक्यार्थरूपः सम्बन्ध

प्रतिषेध इति वचनात् 'कार्णवेष्टकिकं मुखम्' इत्यत्र न कर्णवेष्टकादन्यदाश्रीयते, नापि तदभावः। किं तर्हि ? कर्णवेष्टकाभ्यां न सम्पद्यते मुखमिति यासौ मुखस्य सम्पद्यमानस्यावच्छेदिका सम्पत्तिरुपसर्जनमुपाधिभूता सा प्रतिषिध्यते। तदा च प्रकृत्या कर्णवेष्टकशब्देन नञोऽसंबन्धादसमर्थसमासोऽस्मादेव ज्ञापकादवसेयः।

सत्यपि च प्रतिषेध आद्यविधिपदोपात्तार्थनिबन्धनत्वात् तद्धितो भवत्येव। उत्तरकालं तु पदान्तरेण नञा प्रतिषेधो बहिरङ्गो न बाधकः शब्दसंस्कारस्यान्तरङ्गस्य। तथा च ग्रामं न गच्छतीत्यादौ क्रियाप्रतिषेधेऽपि कर्मादौ द्वितीयादयो भवन्त्येव। वाक्यार्थस्य कर्णवेष्टकाभ्यां सम्पद्यते मुखमित्येवंरूपस्य प्रतिषेधो नञा क्रियत इत्यन्ये। वाक्यार्थश्च सामान्ये वर्तमानानां पदानां विशेषेऽवस्थापकः सम्बन्धः। स च पदार्थावच्छेदकत्वादुपसर्जनं गुण इत्युच्यते। सम्बन्धे च निवर्तमाने प्रकृतिप्रत्ययार्थयोरपि सम्बन्धिनोर्निवृत्तिप्रतीतिः। अत्रापि पक्षे प्रकृत्यर्थासम्बन्धे नञोऽसमर्थसमासोऽस्मादेव ज्ञापकाद् विज्ञेयः। असामर्थ्यं च

---

इति। एते चत्वारोऽपि संसर्गादिरूपगुणलक्षणलक्षिता इति प्रतिषेधभाजः। तत्र 'कार्णवेष्टकिकं मुखम्' इत्यत्र न कर्णवेष्टकादन्यदाश्रीयते, नापि कर्णवेष्टकाभावः गुणप्रतिषेधे इति वचनात्। नहि कर्णवेष्टकं गुणो येन तत्प्रतिषेधो गुणप्रतिषेधः स्यात्। किं तर्हि कर्णवेष्टकाभ्यां न सम्पद्यते मुखमिति याऽसौ मुखस्य सम्पद्यमानस्यावच्छेदिका सम्पत्तिर्मुखे उपसर्जनत्वेन उपाधिभूता=विशेषणीभूता, सा प्रतिषिध्यते। तदा च प्रकृत्या कर्णवेष्टकशब्देन नञोऽसम्बन्धादसमर्थसमासोऽस्मादेव ज्ञापकात्=गुणप्रतिषेधे इत्यस्मादेव ज्ञापकादवसेयः।

सत्यपि च गुणप्रतिषेधे आद्यविधिपदोपात्तार्थनिबन्धनत्वात्=आद्यं प्रतिषेधात् पूर्वकालिकं यद्विधिपदं कर्णवेष्टकात् ठञो विधायकं पदं तदुपात्तसम्पाद्यर्थनिमित्तकत्वात् तद्धितो भवत्येव। ठञ्विधेरुत्तरकालं तु प्रवर्त्तमानः पदान्तरेण नञा सम्पादित्वप्रतिषेधो बहिरङ्गो नञो बाधकः, शब्दसंस्कारस्य पूर्वप्रवृत्तिकत्वेनान्तरङ्गत्वात्। तथा च=तथा सत्येव च, ग्रामं न गच्छतीत्यादावुत्तरकाले गमनक्रियाप्रतिषेधेऽपि तत्पूर्वकाले कर्मादौ द्वितीयादयो भवन्त्येव। वाक्यार्थस्य कर्णवेष्टकाभ्यां सम्पद्यते=शोभते मुखमित्येवंरूपस्य प्रतिषेधो नञा क्रियते न तु सम्पत्तेरित्यन्ये। वाक्यार्थश्च सामान्ये वर्तमानानां पदानां विशेषेऽवस्थापकः सम्बन्धः। स च वाक्यार्थस्यैकपदार्थविशिष्टापरपदार्थरूपतया पदार्थतावच्छेदकत्वादुपसर्जनं गुण इत्युच्यते। वाक्यार्थघटकत्वाच्च वाक्यार्थोऽप्यभिधीयते। सम्बन्धे च नञा निवर्त्तमाने प्रकृति प्रत्ययार्थयोरपि सम्बन्धिनोर्निवृत्तिप्रतीतिः। अत्रापि पक्षे प्रकृत्यर्थासम्बन्धे=प्रत्ययार्थस्य प्रकृत्यर्थे नञा सम्बन्धप्रतिषेधे नञः प्रकृत्या सहासमर्थसमासोऽस्मादेव ज्ञापकात्=गुणप्रतिषेधरूपादेव ज्ञापकाद् विज्ञेयः। यद्वा, असामर्थ्यमत्र प्रकृतेः

प्रकृतेः प्रत्ययार्थसापेक्षतया, सापेक्षस्यासामर्थ्यात्। प्रत्ययार्थसम्बन्धे तु न दोषः। प्रधानं हि तदा प्रत्ययार्थः। प्रधानस्य सापेक्षस्यापि भवत्येव वृत्तिः।

अन्ये त्वाहुः। प्रकृत्यर्थोऽत्र प्रत्ययार्थं प्रत्युपसर्जनत्वाद् गुण इति भाष्यकारमतमुन्नीयते। तथा हि—

"न नञ्पूर्वात्तत्पुरुषात्..." (पा० ५।१।१२१)

इत्यत्र भाष्यकारेणोक्तम्—

'आचार्यप्रवृत्तिर्ज्ञापयति सर्व एव तद्धितः सापेक्षाद् भवतीति यदयं नञो गुणप्रतिषेधे सम्पाद्यर्हेत्यादिकमाह' इति।

तथा हि—न पृथोर्भावोऽपार्थिवमप्रथिमेति प्रकृत्यर्थः प्रतिषिध्यते नञा। तथा चासामर्थ्यात् तद्धितो नैव स्यात्। "समर्थानां प्रथमाद्वा" (पा० ४।१।८२) इति वचनात्। अतो ज्ञापकेनायमर्थ उक्तः। तत्र च यथा प्रतिषिद्धस्य पृथोर्भावः, पृथोर्वान्यस्य भाव इत्ययमर्थः, तथा प्रतिषिद्धाभ्यां कर्णवेष्टकाभ्यां सम्पादि मुखं ततो वान्येन सम्पादीत्येवं प्रकृत्यर्थेन नञः सम्बन्धादिदमवसीयते 'प्रकृत्यर्थो गुणत्वेन भाष्यकारस्याभिमतः' इति।

एतत्तु न युक्तम्; 'प्रधानाप्रधानसन्निधौ प्रधान एव कार्ययोगः' इति सम्पद्यमानार्थविषयः प्रतिषेधः सम्पत्तेर्युक्तः, नाप्रधाने प्रकृत्यर्थे। एकपदोपात्तश्चा-

---

प्रत्ययार्थसापेक्षतया, सापेक्षस्यासामर्थ्यात्। नञः प्रत्ययार्थसम्बन्धे तु न सापेक्षत्वप्रयुक्तासामर्थ्यरूपो दोषः। प्रधानं हि तदा प्रत्ययार्थः। प्रधानस्य च सापेक्षस्यापि भवत्येव वृत्तिः।

अन्ये त्वाहुः—प्रकृत्यर्थोऽत्र प्रत्ययार्थं प्रति उपसर्जनत्वाद् गुण इति भाष्यकारमतमुन्नीयते। तथा हि—'न नञ्पूर्वात् तत्पुरुषात्' इत्यत्र भाष्यकारेणोक्तम्—"आचार्यप्रवृत्तिर्ज्ञापयति सर्व एव तद्धितः सापेक्षाद् भवतीति यदयं नञो गुणप्रतिषेधे संपाद्यर्हेत्यादिकमाह" इति।

तथा हि—न पृथोर्भावोऽपार्थिवमप्रथिमा इति प्रकृत्यर्थः प्रतिषिध्यते नञा। तथा च प्रकृतेर्नञर्थसापेक्षत्वेनासामर्थ्यात् तद्धितो नैव स्यात् "समर्थानां प्रथमाद्वा" इति सूत्रात्। अतो ज्ञापकेन सापेक्षत्वेऽपि तद्धितोत्पत्तिरूपं फलमुक्तम्। तत्र च यथा प्रतिषिद्धस्य पृथोर्भावः, अथवा पृथोरन्यस्य भाव इत्ययमर्थः, तथा प्रतिषिद्धाभ्यां कर्णवेष्टकाभ्यां सम्पादि मुखं ततो वाऽन्याभ्यां सम्पादि इत्येवं प्रकृत्यर्थेन सह नञः सम्बन्धे सति इदमवसीयते प्रकृत्यर्थो गुणत्वेन भाष्यकारस्याभिमत इति।

एतत्तु न युक्तम्, 'प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः' इति न्यायेन सम्पद्यमानपदार्थविषयकः प्रतिषेधः सम्पत्तिविषयकत्वेन पर्यवस्यमानो युक्तः। नाप्रधानस्य

र्थोऽन्तरङ्गः संसर्गीभवति, अतोऽपि सम्पत्तिरेव गुणो युक्तः, न पदान्तरोपात्तः प्रकृत्यर्थो विप्रकृष्टः। ज्ञापकं च न्यायानुवर्तनं न कारकम्। नञश्च प्रधानार्थेनाभिसम्बन्धे प्रकृत्या न स्यात् समासोऽसामर्थ्यादिति ज्ञापकेन प्रकृतेराश्रितसमासायाः प्रत्ययो ज्ञापितो भाष्यकारेण। तदेवं पूर्वप्रदर्शित एव सूत्रार्थो युक्तः। अभैदिकमित्यर्हार्थतद्धितोऽत्रोदाहार्यः। अवत्सीय इति हितार्थे। असाम्परायिकमित्यलमर्थे सम्परायाय प्रभवतीति तद्धितः। अनया दिशान्यत्रापि गुणप्रदेशे यथाभाष्यं सूत्रवार्त्तिकेषु गुणस्वरूप व्याख्येयम् दिङ्मात्रमिह प्रदर्शितम्॥ १॥

अतिशायनसूत्रे भाष्यम्—

'प्रातिपदिकार्थो वै द्रव्यम्, न च द्रव्यस्य प्रकर्षापकर्षौ स्तः। एवं तर्हि गुणः प्रातिपदिकार्थः।

---

कर्णवेष्टकरूपप्रकृत्यर्थस्य प्रतिषेधो युक्तः। किञ्च, संपद्यमानरूपैकपदोपात्तः सम्पत्तिरूपोऽर्थ एकपदोपात्तत्वादेव प्रथमोपस्थितिकत्वेनान्तरङ्ग इति तत्पदार्थे संसर्गीभवति। इत्यतोऽपि संपत्तिरेव गुणो युक्तः प्रतिषेध्यत्वेन, न तु पदान्तरोपात्तः= सम्पद्यमानपदातिरिक्तकर्णवेष्टकरूपप्रकृतिपदोपात्तः। तत एव विप्रकृष्टः= विप्रकृष्टत्वादेव विलम्बितोपस्थितिकत्वेन बहिरङ्गः। प्रधानाप्रधानेत्यादिन्यायानुसरणञ्च विधीयमानप्रतिषेध्यमानार्थयोर्ज्ञापकम्, न तु विधायकं प्रतिषेधकं वा। नञश्च प्रत्ययरूपप्रधानार्थेन सम्पत्तिरूपेणाभिसम्बन्धे कर्णवेष्टकशब्दरूपया प्रकृत्या सह तस्य समासो न स्यात्, असामर्थ्यादिति न्यायज्ञापितेन संपत्तिरूपगुणप्रतिषेधरूपेण ज्ञापकेन आश्रितनञ्समासायाः प्रकृतेः कर्णवेष्टकशब्दरूपायाः प्रत्ययो ज्ञापितो भाष्यकारेण। तदेवं प्रथमं प्रदर्शित एव सम्पत्तिरूपगुणप्रतिषेधपरः सूत्रार्थो युक्तः, न तु प्रकृत्यर्थरूपगुणप्रतिषेधपरः। भेदं नार्हतीत्यभैदिकमात्मतत्त्वमित्यर्हार्थिकतद्धितोऽऽत्रोदाहार्यः। वत्साय न हित इत्यवत्सीय इति हितार्थे। संपरायाय=संपरायन्ते सम्यक् परावर्त्तन्ते=निवर्त्तन्ते यस्मादसौ संपरायः=परलोकस्तस्मै। न संपरायः प्रतिभाति बालमिति कठोपनिषदि अत्रार्थे एतत्पदप्रयोगदर्शनात्। न प्रभवति इति असांपरायिकमित्यलमर्थे तद्धित उदाहार्यः। अनया दिशाऽन्यत्रापि गुणप्रदेशे सूत्रवार्त्तिकेषु यथाभाष्यं गुणस्वरूपं व्याख्येयम्। इह तु मया दिङ्मात्रं गुणस्य प्रदर्शितमिति॥ १॥

"अतिशायने तमबिष्ठनौ" इति सूत्रे भाष्यम्…'प्रातिपदिकार्थो वै द्रव्यम्, न च द्रव्यस्य प्रकर्षापकर्षौ स्तः। एवं तर्हि गुणः प्रातिपदिकार्थः'।

ननु च द्वयमपि प्रकृत्यर्थः। तत्र कुत एतत्? गुणस्य प्रकर्ष इति।

अयमर्थः—द्रव्यमेव प्रातिपदिकार्थः, न च द्रव्यस्य प्रकर्षापकर्षौ स्तः, सदा सिद्धरूपत्वेनैकरूपत्वात् तस्य।

(१) ननु च द्वयमपि प्रकृत्यर्थः। तत्र कुत एतत्, गुणस्य प्रकर्ष इति।

तत्रैतदुक्तम्—

"यस्यास्ति प्रकर्षस्तत्प्रकर्षे भविष्यति" (म० भा० ५।३।५५) इति।

(२) 'उभयं वै प्रातिपदिकार्थः' इत्येतल्लिङ्गसंसर्ग्यादिलक्षणो गुणो गृह्यत इति। स हि द्रव्योपसर्जनभूतः शुक्लादिप्रातिपदिकेन प्रत्याय्यते। तत्र च गुणस्यैव प्रकर्षोऽस्ति न द्रव्यस्येत्यत्र कारणं वक्तव्यम्। (३) शब्देन निष्पन्नरूपस्य द्रव्यवद् गुणस्यापि प्रतिपादनात् कारणायत्तगुणवत् कार्यद्रव्यमपि कथं न प्रकृष्येत। (४) तथा गुणः प्रतीयमानः कश्चिदभिधीयमानोऽन्यः, तत्राभिधीयमानगुणापेक्ष एव द्रव्यस्य प्रकर्ष इत्यत्रापि कारणं वक्तव्यम्। (५) एकस्मिन्नप्यर्थे बहुतरोपाधीनां सम्भवान्नियमेनैकस्योपादानमयुक्तम्। सर्वत्र द्रव्यातिशायनास्पदं स गुणः सन्निधीयत इत्येतत् कथम्?

---

(१) ननु च द्रव्यं गुणश्चेति द्वयमपि प्रातिपदिकरूपप्रकृत्यर्थः, उभयोरपि च प्रकर्षोऽस्ति, तत्र सूत्रेऽद्रव्यप्रकर्षे इत्यस्याभावे, कुत एतद् द्रव्यप्रकर्षे अमुप्रत्ययस्तरबन्ताद् न भवति, गुणप्रकर्षे तु भवतीति द्रव्यस्यातिशायनम्=प्रकर्षो न भवति, गुणस्य तु तद्भवतीति।

तत्रैतदुत्तरमुक्तं भाष्ये च (१)—'यस्यास्ति प्रकर्षस्तत्प्रकर्षे भविष्यति।" द्रव्यस्य निष्पन्नरूपत्वेन तत्र प्रकर्षो नास्ति अतस्तत्रामुप्रत्ययो वा तमबिष्टनौ वा न भवतः। गुणस्य तु परिवर्तमानस्य प्रकर्षोऽस्तीति तत्प्रकर्षे भविष्यतीत्यर्थः।

(२) तत्रोभयं वै प्रातिपदिकार्थं इत्येतत —संसर्ग्यादिलक्षणगुणो गृह्यते इत्यत्र लिङ्गम्। स हि द्रव्ये उपसर्जनीभूत एव शुक्लादिप्रातिपदिकेन प्रत्याय्यते। तत्र च गुणस्यैव प्रकर्षोऽस्ति न द्रव्यस्य इत्यत्र कारणं वक्तव्यम्।

(३) निष्पन्नरूपस्य गुणस्यापि शब्देन तद्रूपद्रव्यवत्प्रतिपादनादुभयोरपि स्वतः प्रकर्षाभावेऽपि कारणप्रकर्षेण कारणायत्तगुणवत् तेनैव कार्यद्रव्यमपि कथं न प्रकृष्येत्।

(४) तथा गुणः प्रतीयमानः कश्चित्, अभिधीयमानोऽन्यः। यथा 'घटेन जलमाहर' इत्यादौ घटशब्दाद् जलाहरणपटुत्वरूपो गुणो निश्छिद्रत्वसमानाधिकरणः प्रतीयते। पटुशब्देन तु विशेषणतया घटशब्दसमानाधिकरणेन तदेवाभिधीयते। तत्राभिधीयमानगुणापेक्ष एव द्रव्यस्य प्रकर्षः सूत्रे गृह्यते, न तु प्रतीयमानगुणापेक्ष इत्यत्रापि कारणं वक्तव्यम्।

(५) एकस्मिन्नप्यर्थे बहुतराणां जातिगुणक्रियाशब्दानामुपाधीनाम्=व्यावर्तकधर्माणां संभवेऽपि नियमेन तेष्वेकस्य गुणस्यैव द्रव्यप्रकर्षाधायकतयोपादानं न

(६) न हि गुणे परो गुणो 'निर्गुणा गुणाः' इति वचनात्। सामान्येषु चावच्छेदको नास्ति, 'निःसामान्यानि सामान्यानि' इति सिद्धान्तात्। तथा कर्मादिष्वपि नास्ति गुण इति तत्र किंनिबन्धनः प्रकर्षो भवेत्।

(७) कथं चान्यस्मिन् प्रकृष्यमाणेऽन्यस्य प्रकर्षो युक्त इत्येतदपि वक्तव्यम्। न ह्यर्जुनशौर्येण चैत्रस्तथा। द्रव्यं च प्रकृष्यमाणं लोकः प्रत्येति शब्दात्। इत्येतान् विकल्पान् क्रमेण निवारयितुमाह—

द्रव्यस्याव्यपदेशस्य य उपादीयते गुणः।
भेदको व्यपदेशाय तत्प्रकर्षोऽभिधीयते ॥ २ ॥

इहोपाधिविवेकेन निरूपयितुमेव न पार्यते द्रव्यम्। न हि सामान्यादि-पदार्थं विनाध्यक्षयितुमिदन्तया शक्यते। यच्च स्वेन रूपेण निरूपयितुमपि न

---

युक्तिसंगतम्। सर्वत्र वाक्यव्यवहारे द्रव्यातिशायनास्पदम् = द्रव्यप्रकर्षनिमित्तम्, स प्रागुक्तलक्षणो गुण एव सन्निधीयते, न जात्यादिरित्येतत्कथम्।

( ६ ) नहि गुणे परो गुणोऽस्ति, निर्गुणा गुणा इति वचनात्। सामान्येषु च द्रव्यवदवच्छेदको गुणो नास्ति सामान्यप्रकर्षाधायकः निःसामान्यानि सामान्यानीति सिद्धान्तात्। तथा कर्म्मादिष्वपि नास्ति गुणस्तत्प्रकर्षहेतुरिति तत्र किंनिबन्धनः प्रकर्षो भवेत्।

( ७ ) कथं च द्रव्यादन्यस्मिन् गुणे प्रकृष्यमाणे तदन्यस्य द्रव्यस्य प्रकर्षो युक्त इत्येनदपि वक्तव्यम्, न ह्यर्जुनशौर्येण चैत्रः शूरो भवति व्यपदिश्यते वा।

एवं सप्तभिर्विकल्पैर्द्रव्यस्य प्रकर्षो नोपपद्यते, द्रव्यश्च प्रकृष्यमाणम् 'पटुतमः पटिष्ठः' इत्यादिशब्दात् प्रत्येति लोक इत्याशङ्क्यैतान् सप्तापि विकल्पान् क्रमेण निवारयितुमाह--द्रव्यस्याव्यपदेशस्येति।

अयमर्थः—जातिगुणक्रियादिरूपोपाधिं विना उपाधिविवेकेन अव्यपदेशस्य = व्यपदेशानर्हस्य निरूपयितुमशक्यस्य द्रव्यस्य, व्यपदेशाय भेदको द्रव्यस्यान्यस्माद् व्यवच्छेदकः, यो गुण उपादीयते = शब्देन गृह्यते तत्प्रकर्षः = तत्कृतो द्रव्यस्य प्रकर्षः प्रत्ययेन तरप्तमबादिनाऽभिधीयते 'शुक्लतरः पटः' इत्यादिरिति।

अयं भावः—इह व्यवहारे जातिगुणक्रियादिरूपोपाधिविवेकेन द्रव्यं निरूपयितुमेव न शक्यते। नहि सामान्यादिपदार्थं विना द्रव्यमिदंतयाध्यक्षयितुं शक्यते, द्रव्यं विना वा सामान्यादिकमिदन्तयाऽध्यक्षयितुं न शक्यते। यच्च स्वेन रूपेण निरूपयितुमपि न शक्यते तत्कथं स्वतः प्रकर्षेण युज्येत ? अतोऽव्यपदेशस्य इति द्रव्यपदसामानाधिकरण्यच्छलेन द्रव्यस्य स्वतः प्रकर्षाभावे हेतुरुक्तः। तदित्थं गुणरूपसंसर्गिधर्मान्तरनिमित्तको द्रव्यस्य प्रकर्ष उक्तः। गुणादिभिरेव संसर्गि-

शक्यते, तत् कथं स्वतः प्रकर्षेण युज्येत। अतः 'अव्यपदेशस्य' इति सामानाधिकरण्यच्छलेन हेतुरुपात्तः। तदित्थं संसर्गिधर्मान्तरनिमित्तः प्रकर्षः। गुणादिभिरेव संसर्गिभिर्विशेष्यमाणं द्रव्यं सजातीयात् प्रकृष्यते। तत्र संसर्गिणो गुणादयो बहवः सन्निहिता इति किङ्कृतोऽतिशय इत्याह--'य उपादीयते गुणः। भेदको व्यपदेशाय' इति। द्रव्यं व्यपदेष्टुं व्यवच्छेदकोऽन्यस्माद् यो गुण उपादीयते शब्देन गृह्यते तत्कृतः प्रकर्षः प्रत्ययवाच्यः। न त्वनभिधीयमानापरसन्निहितगुणादिनिमित्तः, तस्य प्रतीयमानस्यानेकत्वान्नियमकारणाभावात् प्रतीतेरुपप्लवमानत्वाद् बहिरङ्गत्वात्। अभिधीयमानस्तु गुणोऽन्तरङ्गो नियतप्रतीतिः। यदावेशेन हि द्रव्यमभिधीयते तदात्मन एवातिशय्यमानता न्याय्या।

प्रकृत्यर्थोपाधित्वादतिशयस्य अविधीयमानस्यैव च प्रकृत्यर्थत्वात्। 'गुणो भेदकः' इति स्वशास्त्रलक्षितं गुणरूपमत्र गृह्यत इत्याह। 'संसर्गिभेदकं यद् यत्' इति हि लक्षणम्। भेदकत्वं चात्र मुख्य गुणलक्षणम्। असमवेतस्यापि दण्डस्य

---

भिर्विशेष्यमाणं द्रव्यं सजातीयात् प्रकृष्यते। तत्र संसर्गिणो गुणादयो बहवः=कश्चिदभिधीयमानः, अपरे प्रतीयमानाः संनिहिता इति किंकृतोऽतिशय इत्याह--'य उपादीयते गुणः, भेदको व्यपदेशाय' इति। भेदको द्रव्यस्यान्यस्माद् व्यवच्छेदको यो गुणो द्रव्यं व्यपदेष्टुमुपादीयते=शब्देन गृह्यते, तत्कृतो द्रव्यस्य प्रकर्षस्तरबादिप्रत्ययवाच्यः, न त्वनभिधीयमानापरसंनिहितगुणादिनिमित्तकः=शब्देनानभिधीयमानः, अर्थात् प्रतीयमानो योऽपरः प्रकृत्यर्थादतिरिक्तः संनिहितः=प्रकृत्यर्थगुणादिसमानाधिकरणो गुणादिस्तन्निमित्तकः प्रकर्षस्तद्वाच्यः। तस्य प्रतीयमानस्य गुणादेरनेकत्वेन तन्नियमे=द्रव्यप्रकर्षहेतुतया तदेकतमपरिग्रहे कारणाभावात्, संनिहितापरगुणादिप्रतीतेरुपप्लवमानत्वात्=संनिहितानेकार्थविषयकत्वेन चञ्चलत्वात्=अनियतत्वात्, बहिरङ्गत्वाच्च=अर्थवशाज्जायमानाया अपरगुणादिप्रतीतेर्विलम्बितोपस्थितिकार्थप्रभवत्वेन बहिरङ्गत्वाच्च शब्देनाभिधीयमानस्तु गुणः शीघ्रोपस्थितिकत्वेनान्तरङ्गः शब्दरूपस्य स्वप्रतीतिकारणस्य नैयत्येन नियतप्रतीतिकश्च। यदावेशेन हि=यस्य गुणस्य तादात्म्येन हि द्रव्यं शब्देनाभिधीयते तदात्मन एव=तद्गुणतादात्म्यापन्नस्यैव द्रव्यस्य अतिशय्यमानता=प्रकृष्यमाणता न्याय्या।

प्रकर्षरूपस्यातिशयस्य प्रकृत्यर्थोपाधित्वात् प्रकृत्यर्थविशेषणतया प्रतीयमानत्वादभिधीयमानस्यैव च प्रकृत्यर्थत्वात्। गुणो भेदक इति वचनेन--'स्वशास्त्रलक्षितं गुणस्वरूपमत्र गृह्यते' इत्याह--संसर्गिभेदकं यद्यदिति हि गुणलक्षणमत्रैव दृश्यते। भेदकत्वमेव चात्र मुख्यं गुणलक्षणम्। असंसर्गिणोऽसमवेतस्यापि दण्डस्य दण्डिनि पुरुषे गुणत्वात्ः संसर्गित्वं तूपाधिभूतं परिचायकमात्रमसर्वगम्। दण्डस्य

दण्डिनि गुणत्वाद् अदण्डिव्यवच्छेदेन। तदेवम् 'शुक्लतरः पटः' इति शुक्लगुणनिमित्तो द्रव्यप्रकर्षो न गरिमादिप्रतीयमानगुणनिमित्तः॥ २॥

यथा च निरुपाधिनो द्रव्यस्य प्रकर्षो नास्ति, तथा द्रव्यान्निष्कृष्टस्य स्वतन्त्रस्य गुणस्यापि शुक्लतरं रूपतरं रूपमिति स्वतः प्रकर्षो नास्ति; अपि तु

---

च दण्डिनि गुणत्वमदण्डिव्यवच्छेदकत्वेन प्रत्येतव्यम्। तदेवम् 'शुक्लतरः पटः' इत्यभिधीयमानशुक्लगुणनिमित्तको द्रव्यप्रकर्षः, न तु शुक्लगुणसमानाधिकरणप्रतीयमानगरिमादिगुणनिमित्तकः स इति बोध्यमिति॥ २॥

शब्दस्तावद् द्विधा—व्युत्पन्नोऽव्युत्पन्नश्चेति। तत्राव्युत्पन्नस्त्रिधा—जातिप्रवृत्तिनिमित्तकः, गुणप्रवृत्तिनिमित्तकः, शब्दप्रवृत्तिनिमित्तकश्चेति। तत्र जातिप्रवृत्तिनिमित्तको घटपटादिशब्दः। गुणप्रवृत्तिनिमित्तकः शुक्लनीलादिशब्दः। शब्दप्रवृत्तिनिमित्तको डित्थडवित्थादिर्यदृच्छाशब्दः। एते सर्वेऽपि प्राधान्येन द्रव्याभिधायिनः शब्दाः। तत्र जातिप्रवृत्तिनिमित्तकेभ्यो न तरबादयः, जातेः सजातीयादव्यवच्छेदकत्वेन प्रकर्षानाधायकत्वात्। जातेर्नित्यत्वेन कारणकृतप्रकर्षमाश्रित्यापि न द्रव्यप्रकर्षकत्वमिति न तेभ्यस्तरबादयः।

गुणप्रवृत्तिनिमित्तकेभ्यस्तु तरबादयो भवन्ति। कारणकृतं स्वगतप्रकर्षमाश्रित्य गुणानां सजातीयद्रव्यव्यवच्छेदकत्वेन द्रव्यप्रकर्षकत्वसंभवात्। 'शुक्लतरः पटः' इति। अत्राभिधीयमानगुणस्यैव प्रकर्षकत्वम्, न प्रतीयमानगुणानामित्युपपादितं पूर्वकारिकायाम्।

शब्दप्रवृत्तिनिमित्तकेभ्यस्तु डित्थादिशब्देभ्यस्तरबादयो भवन्ति। तत्र डित्थादिशब्दरूपस्य प्रवृत्तिनिमित्तस्य सजातीयादव्यवच्छेदकत्वेन प्रकर्षानाधायकत्वेऽपि प्रतीयमानं डित्थगुणक्रियादिरूपं संसर्गिधर्मान्तरमपेक्ष्यैव डित्थादिपिण्डे प्रकर्षोऽवसेयः।

अव्युत्पन्नशब्द एव केचन समानानुपूर्वीका द्विधा भिद्यन्ते। केचन प्राधान्येन द्रव्याभिधायिनः, शुक्लः पट इत्यादयः। केचन च प्राधान्येन गुणाभिधायिनः। शुक्लं रूपमिति। तत्र द्रव्याभिधानेऽभिधीयमानो गुणप्रकर्षहेतुः। शुक्लतरः पट इति। गुणाभिधाने तु गुणगतजातेः प्रागुक्तरीत्या प्रकर्षानाधायकत्वेन तत्र प्रतीयमानानामेव भासुरत्ववैमल्यादीनां गुणानां प्रकर्षहेतुत्वम्। शुक्लतरं रूपमिति।

व्युत्पन्नास्तु शब्दाः कृत्तद्धितभेदेन द्विधा। तत्र कृदन्तशब्दाः क्रियाप्रवृत्तिनिमित्तका इति क्रियाया अपि प्रकृतं संसर्ग्यादिरूपं लक्षणमाश्रित्य गुणत्वेन द्रव्यप्रकर्षकत्वमिति तरबादयस्तेभ्यो भवन्ति। पाचकतरः पक्वतर इत्यादयः।

तदवस्थायां द्रव्यायमाणत्वाद् गुणस्यापरसंसर्गिधर्मान्तरनिमित्त एव प्रकर्ष इत्याह—

**सर्वस्यैव प्रधानस्य न विना भेदहेतुना ।**

**प्रकर्षो विद्यते नापि शब्दस्योपैति वाच्यताम् ॥ ३ ॥**

गुणोऽपि प्राधान्येन शब्देनाभिधीयमानो 'द्रव्यलक्षणमिदं तदिति' सर्वनामप्रत्यवमर्शयोग्यस्वभावमनुपततीति तस्य निरुपाधेर्व्यपदेशाविषयत्वाद्यदुपाधिर्व्यपदेशस्तन्निबन्धन एव प्रकर्षः । तत्र जातिर्व्यपदेशहेतुरपि न प्रकर्षे सव्यापारा । समानजातीयाद्धि प्रकर्षः । तत्र जातेरभेदः । अत एवोक्तं भाष्ये—

---

तद्धितान्तशब्दास्तु द्रव्यप्रवृत्तिनिमित्तका अपि प्रतीयमानगुणापेक्षं प्रकर्षमादाय तरबादिप्रत्ययप्रकृतित्वं भजन्ते । मतिमत्तर इत्यादयः । प्रतीयमानगुणापेक्षं प्रकर्षमाश्रित्य तरबादिविधानं त्वभिधाने सत्येव द्रष्टव्यमिति नातिप्रसंगः । अत एव सर्वं नामधातुजमित्याश्रित्य घटनक्रियां प्रवृत्तिनिमित्तं प्रकर्षनिमित्तमाश्रित्य घटतर इत्यादयः प्रयोगा अनापाद्याः ।

किञ्च सर्वं नामधातुजमित्याश्रयणेऽपि—अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तमिति घटशब्देन घटनक्रियाया अनभिधानात् । न घटशब्दात् तरबापत्तिः संभवति । तदेवं द्रव्यस्य प्रकर्षः स्वतो नास्ति; किन्तु गुणरूपोपाधिकृत एवेति स्थितम् । यथा च द्रव्यस्य निरुपाधिनः=निर्गुणस्य प्रकर्षो नास्ति, तथा द्रव्यानिष्कृष्टस्य स्वतन्त्रस्य गुणस्यापि 'शुक्लतरं रूपमस्य, रूपतरं रूपमस्य' इत्यत्र स्वतः प्रकर्षो नास्ति; अपि तु तदवस्थायाम्=प्राधान्येन गुणाभिधानावस्थायां गुणस्याप्यव्यवच्छेदकत्वेन द्रव्यायमाणत्वाद् गुणस्य अपरसंसर्गिधर्मान्तरनिमित्त एव= अपरं शुक्लत्वरूपत्वादेरभिधीयमानादन्यद् यत्प्रतीयमानं भासुरत्वम्, वैमल्यम्, रागान्तराद्यतिभिन्नतारूपान्तरासंकीर्णत्वरूपम् इत्यादिकं शुक्लादिगुणसंसर्गिधर्मान्तरं तन्निमित्तक एव प्रकर्ष इत्याह—**सर्वस्यैव प्रधानस्येति** ।

अयमर्थः- सर्वस्यैव प्रधानस्य द्रव्यस्य गुणस्य वा तरबादिप्रत्ययोत्पत्तिहेतुभूतः प्रकर्षो भेदहेतुना सजातीयाद् व्यवच्छेदकेन स्वगतेन विशेषेणाभिधीयमानेन प्रतीयमानेन वा विना न विद्यते । तत्र 'शुक्लतरः पटः' इत्यादावभिधीयमानशुक्लत्वादिगुणहेतुकः प्रकर्षः, शुक्लतरं रूपमित्यादौ तु प्रतीयमानभासुरत्वादिगुणहेतुकः प्रकर्ष इति । नापि स्वगतः सर्वो विशेषः शब्दस्य वाच्यतामुपैति, शब्दस्य क्वचिदेव स्वप्रवृत्तिनिमित्तभूते विशेषे शक्तत्वात् । यथा शुक्लशब्देन शुक्लत्वगुणरूप एव शुक्लद्रव्यगतो विशेषोऽभिधीयते । गुणाभिधायिना तु शुक्लशब्देन स्वगतो जातिरूप एव विशेषोऽभिधीयते, न तु भासरत्वादिरूपा विशेषाः ।

"जननेन प्राप्यते इति जातिः। न चैतस्यार्थस्य प्रकर्षापकर्षौ स्तः।" इति।
(म० भा० ५।३।५५)

जन्मकालसंबन्धाज्जातिः, न तूत्पन्ने द्रव्ये कारणान्तरसन्निधानायत्तो निवेशोऽस्याः, येन कारणभेदाच्छुक्लादिवत् प्रकृष्येत। तस्मान्नित्यत्वाज्जातेर्नास्ति सावस्था या जातिशून्येति जन्मकालेऽपि तेनैव रूपेण सावस्थिता व्यक्तेरवियोगेन प्रवर्तमानाऽतज्जातीयादेव व्यवच्छेदं प्रापयितुं शक्नोतीत्यर्थः।

अतश्च जातेरतिशयकत्वासम्भवात् तदेकार्थसमवायि भासुरत्वं वैमल्यं रागान्तराद्यतिभिन्नतेत्येवमादयो विशेषाः प्रकर्षवृत्तिनिबन्धनम्।

यद्यपि चाग्निसंयोगादिना स्वत एव गुणस्य प्रकर्षो भवति, तथापि

---

तदयं निष्कर्षः—द्रव्याभिधानेऽभिधीयमानगुणहेतुकः प्रकर्षः, गुणाभिधाने तु जातेः प्रकर्षकत्वाभावस्य प्रागुपपादितत्त्वात्, प्रतीयमानगुणहेतुक एव प्रकर्ष इति।

अयं भावः—शुक्लं रूपमित्यादौ शब्देन प्राधान्येनाभिधीयमानो गुणोऽपि इदं तदिति सर्वनामप्रत्यवमर्शयोग्यत्वरूपं द्रव्यलक्षणमनुपततीति द्रव्यवत् तस्य निरुपाधेः=स्वगतविशेषधर्मशून्यस्य व्यपदेशाविषयत्वात्, यदुपाधिहेतुकस्तस्य व्यपदेशस्तदुपाधिहेतुक एव तस्य प्रकर्षः। तत्र 'शुक्लतरं रूपम्' इत्यादौ शुक्लत्वादिका जातिर्व्यपदेशहेतुरपि=शुक्लादिशब्दस्य गुणे प्रवृत्तिहेतुरपि न प्रकर्षे हेतुः। समानजातीयाद्धि प्रकर्षः। तत्र च=समानजातीयेषु च जातेरभेदः=भेदाभाव इति तस्या समानजातीयात् स्वाश्रयद्रव्यस्य व्यवच्छेदकत्वाभावः। अत एवोक्तं भाष्ये—'जननेन प्राप्यते इति जातिः। न चैतस्यार्थस्य प्रकर्षापकर्षौ स्तः' इति।

अयमर्थः—जातिरूपस्यार्थस्य स्वतः परतो वा प्रकर्षापकर्षौ न स्तः। तथा हि जातेः सर्वत्रैकत्वेन सजातीयाद् व्यवच्छेदकत्वाभावेन न तस्याः स्वतः प्रकर्षः। जातेर्नित्यत्वेन च न तस्याः कारणकृतोऽपि प्रकर्षः। जन्मकाले व्यक्तौ सम्बन्धाज्जातिः, न तूत्पन्ने द्रव्ये कारणान्तरसंनिधानात् तत्र निवेशोऽस्याः येन शुक्लादि, गुणवत् कारणभेदात्=कारणविशेषं निमित्तीकृत्य प्रकृष्येत। तस्माद् जातेर्नित्यत्वाद् नास्ति सावस्था द्रव्यस्य या जातिशून्या इति द्रव्यस्य जन्मकालेऽपि तेनैवापि कृतेन रूपेण साऽवस्थिता यावद् व्यक्तिसत्ता, तावद् व्यक्तेरवियोगेन वर्तमानाऽतज्जातीयादेव व्यवच्छेदं स्वाश्रयस्य प्रापयितुं शक्नोतीति प्रकृतभाष्याशयः।

अतश्च=सजातीयाद् व्यवच्छेदकत्वाभावाच्च जातेरतिशायकत्वासंभवात्=प्रकर्षकत्वासंभवात्, तत्समानाधिकरणं भासुरत्वम्, वैमल्यम्, रागान्तराव्यतिभिन्नता=रूपान्तरासंकीर्णता इत्येवमादयो विशेषाः प्रकर्षप्रवृत्तिनिबन्धनम्=प्रकर्षार्थे या तरबादितद्धितरूपा वृत्तिस्तस्या निमित्तम्।

यद्यपि चाग्निसंयोगादिना स्वत एव गुणस्य प्रकर्षौ भवति, तथापि व्यपदेशः

व्यपदेशो परोपाधेरेवेति तन्निमित्त एव प्रकर्षो न्याय्यः। न हि स्वगतो विशेषः शब्देन सर्वः शक्यतेऽभिधातुम्, रूपादिशब्देन रूपत्वादिजातीयस्याविशेषेण सर्वस्याभिधानात्। अत एव यदा भासुरत्वादयोऽपि प्राधान्येन व्यपदिश्यन्ते तदा तदाश्रितधर्मान्तरद्वारक एव प्रकर्षो विज्ञेयो भासुरतर इति। तत्रापि धर्मान्तरस्य प्राधान्येन तदपराश्रितधर्मनिमित्त एव प्रकर्ष इति यावत् सम्भवति शब्दव्यापारस्तावदपर्यवसानमेव धर्माणामिति—

गुणः प्रकर्षहेतुर्यः स्वातन्त्र्येणोपदिश्यते।
तस्याश्रितगुणादेव प्रकृष्टत्वं प्रतीयते॥ इत्युक्तमेव।

अत एवात्र 'सर्वस्यैव प्रधानस्य' इति व्याप्तिरुक्ता सर्वग्रहणेन। यदा तु शब्दव्यापारोपरमः, तदा धर्मान्तरपर्येषणा पर्यवस्यति॥ ३॥

ननु च भासुरत्वादयः शुक्लशब्दस्य न वाच्या इत्यशब्दवाच्यप्रतीयमानधर्मद्वारकेऽत्र प्रकर्षेऽनेकोपाधिसन्निधानादनियमः प्रसज्येतेत्याशङ्क्याह—

---

परोपाधेरेव=जात्यतिरिक्तोपाधिकस्यैव गुणस्येति तन्निमित्तक एव प्रकर्षः शाब्दव्यवहारोपयोगी न्याय्यः। नहि गुणस्य स्वगतः सर्वो विशेषः शब्देनाभिधातुं शक्यः, रूपादिशब्देन रूपत्वादिजातीयस्य सर्वस्याविशेषेणाभिधानात्। अत एव=गुणप्रकर्षस्य परोपाधिनिमित्तकस्यैव न्याय्यत्वादेव, यदा भासुरत्वादयोऽपि प्राधान्येन व्यपदिश्यन्ते, तदा तद्वृत्तिधर्मान्तरद्वारक एव प्रकर्षो विज्ञेयः। भासुरतर इति। तत्रापि धर्मान्तरस्य प्राधान्ये तदपराश्रितधर्मनिमित्तक एव प्रकर्ष इति यावत् संभवति शब्दव्यापारस्तावदपर्यवसानमेव प्रकर्षहेतूनां धर्माणामिति—

गुणः प्रकर्षहेतुर्यः स्वातन्त्र्येणोपदिश्यते।
तस्याश्रितगुणादेव प्रकृष्टत्वं प्रतीयते॥

इत्युक्तमेव प्राग् ब्रह्मकाण्डे। इयश्च कारिका प्राग् व्याख्यातेति नात्र व्याख्यायते।

अत एव=यावत् संभवति शब्दव्यापारस्तावद् धर्माणामपर्यवसानादेव, अत्र कारिकायाम्—'सर्वस्यैव प्रधानस्य' इति व्याप्तिरुक्ता सर्वग्रहणेन। यद् यत्प्रधानं तत्तत्परोपाधिनिमित्तकप्रकर्षवदिति व्याप्तेराकारोऽत्र बोध्यः। यदा तु शब्दव्यापारोपरमस्तदा प्रधानस्य प्रकर्षव्यपदेशार्थं धर्मान्तरस्य पर्येषणा=अन्वेषणा पर्यवस्यति=समाप्नोति व्यवहारोपरमे तस्या निष्फलत्वादिति॥ ३॥

ननु भासुरत्वादयश्च (तु) शुक्लशब्दस्य न वाच्याः, तेषां तत्प्रवृत्तिनिमित्तत्वाभावात्। इतिशब्दावाच्यप्रतीयमानभासुरत्वादिधर्मनिमित्तके 'शुक्लतरं रूपम्' इत्यत्र

**विद्यमानाः प्रधानेषु न सर्वे भेदहेतवः ।**
**विशेषशब्दैरुच्यन्ते व्यावृत्तार्थाभिधायिभिः ।। ४ ।।**

इह प्रधानेषु द्रव्येषु वस्तुसन्तो बहवोऽन्यस्मात् सजातीयविजातीयाद् व्यवच्छेदहेतवो धर्माः । ते च सर्वे न केनचिच्छब्देन शक्यन्तेऽभिधातुम्, अनेकव्यावृत्तिनिष्ठस्यैकस्य शब्दस्याभावात् । एकैकव्यावृत्तिनिष्ठा हि बहवः शब्दा वस्तुनि प्रवर्तन्ते । तथा च ते तत्र विशेषशब्दा इत्युच्यन्ते, प्रतिनियतविशेषाभिधायित्वात् । यदि सर्वविशेषविशिष्टं द्रव्यमेकेन शब्देनाभिधीयेत स्यादसावेकः शब्दः साधारणः । न चैवम्, तस्मात् प्रतिनियतव्यावृत्तिविशिष्टार्थाभिधायिभिः

---

प्रकर्षेऽभ्युपमगम्यमानेऽनेकोपाधिसंनिधानात् । किमुपाधिकृतोऽयं प्रकर्ष इत्यनियमः प्रसज्येतेत्याशङ्क्याह---विद्यमानाः प्रधानेष्विति ।

अयमर्थः - प्रधानेषु=प्राधान्येन शब्दवाच्येषु येऽनेके भेदहेतवः=व्यवच्छेदहेतवः सन्ति, ते सर्वे व्यावृत्तार्थाभिधायिभिः शब्दैस्तत एव हेतोर्नोच्यन्ते, तेषां सर्वेषां विशेषाणां प्रतिनियतव्यावृत्तिविशिष्टार्थाभिधायिभिः शब्दैरसंबन्धात् । तस्मादभिधीयमानधर्मसमानाधिकरणप्रतीयमानधर्मनिमित्तक एव गुणस्य प्रकर्ष इति शुक्लतरं रूपमित्यत्राभिधीयमानशुक्लत्वजातिसमानाधिकरणतदविनाभूतप्रतीयमानभासुरत्वादिधर्मनिमित्तक एव प्रकर्ष इति नानियमो नातिप्रसङ्गश्चेति ।

अयं भावः—इह प्रधानेषु द्रव्येषु प्रधानत्वादेव द्रव्यायमाणेषु गुणेषु वाऽन्यस्मात् सजातीयविजातीयाद् व्यवच्छेदहेतवो वस्तुसन्तो बहवो धर्मा, तद्यथा—घटादेर्विजातीयाद् व्यवच्छेदका घटत्वादयो जातिरूपा धर्माः । तस्यैव सजातीयाद् व्यवच्छेदकाः शुक्लत्वादयो धर्माः । शुक्लादेरपि सजातीयाद् व्यवच्छेदका भासुरत्वादयो धर्माः । ते च सर्वे समानाधिकरणा अपि न केनचिच्छब्देन शक्यन्तेऽभिधातुम् । अनेकव्यावृत्तिनिष्ठस्य=अनेके ये समानाधिकरणा व्यावर्त्तका धर्माः शक्त्या तद्बोधनद्वारा अनेकव्यावृत्तिपर्यवसायिनः, एकस्य शब्दस्याभावात् । तत्तत्संकेतानुसारेण प्रतिनियतशक्यार्थाभिधायिनो हि ते ते शब्दाः ।

किञ्च, शक्त्या एकैकव्यावर्त्तकधर्मबोधनद्वारा एकैकव्यावृत्तिपर्यवसायिनो हि बहवः शब्दा एकस्मिन् वस्तुनि प्रवर्त्तन्त इति स्थितिः । यत्र तु शब्दतन्त्र शब्दश्लेषो वा, तत्रापि शब्दभेदः स्पष्ट एव । यत्र त्वर्थतन्त्रम्, न तत्र विजातीया अनेकेऽर्थाः शब्दशक्याः; किन्तु सजातीया एव । किञ्च, तत्रापि प्रत्यर्थं शब्दाभिनिवेश इति भाष्यदर्शनेन शब्दभेद एव । तथा च ते एकैकव्यावृत्तिनिष्ठा बहवः शब्दा एकस्मिन् वस्तुनि प्रवर्तमाना विशेषशब्दा इत्युच्यन्ते, प्रतिनियतविशेषाभिधायित्वात् । यदि सर्वविशेषविशिष्टं द्रव्यमेकेन शब्देनाभिधीयेत, स्यादसावेकः शब्दः सर्वविशेषाभिधाने साधारणः । न चैवमस्ति । तस्मात् प्रतिनियतसजातीयविजातीय-

शब्दैः सर्वविशेषाणामसंस्पर्शादुपात्तविशेषहेतुक एव कर्षः । सूक्ष्माणां च विशेषाणामसंविज्ञातपदानां भासुरत्वादीनामस्त्वेव शुक्लादिशब्दैर्वाच्यता तदुपाधिविविक्तस्य शुक्लस्य प्रधानस्य शब्दविषयभावोपगमायोगात् । संसर्गिरूपोपहितत्वाच्छब्दवाच्यस्य जातिहेतुकप्रकर्षाभावात् 'शुक्लतरं रूपम्' इत्यादिप्रयोगदर्शनाच्चात्र भासुरत्वादिहेतुकः प्रकर्षो निश्चीयते । न चाशब्दवाच्यधर्मनिमित्तः सः, अतिप्रसङ्गादिति भासुरत्वादीनामपि प्रयोगप्रामाण्यादत्र शब्दवाच्यत्वं निश्चीयताम् ।। ४ ।।

---

व्यावृत्तिविशिष्टार्थाभिधायिभिः शब्दैः सर्वविशेषाणां शक्यतयाऽसंस्पर्शात् 'शुक्लतरः पटः' इत्यादौ द्रव्याभिधाने उपात्तविशेषहेतुक एव = शब्दवाच्यशुक्लत्वादिगुणहेतुक एव द्रव्यस्य प्रकर्षः । अत्र साधारणस्यापि शुक्लत्वादिगुणस्य प्रकर्षस्तु न स्वतः; किन्तु शब्दानुपात्तभासुरत्वादिगुणहेतुक इति द्रष्टव्यम् ।

यत्त्वत्रोक्तं हेलाराजेन—'सूक्ष्माणाश्च विशेषाणामसंविज्ञातपदानाम् = असंविज्ञातम् = न सम्यग् विज्ञातम्, न वाचकत्वेन निर्धारितं शुक्लादिपदं येषां तेऽसं - विज्ञातपदाविशेषास्तेषाम्, भासुरत्वादीनामस्त्वेव शुक्लादिशब्दैर्वाच्यता, तदुपाधिविविक्तस्य भासुरत्वादिरूपव्यावर्त्तकधर्मशून्यस्य शुक्लस्य प्रधानस्य शब्दविषयभावोपगमायोगात् । संसर्गिरूपोपहितत्वाच्छब्दवाच्यस्य = शब्दवाच्यस्य शुक्लादिगुणस्य संसर्गिरूपभासुरत्वादिभिरुपहितत्वेन भानात्, जातिहेतुकप्रकर्षाभावात् 'शुक्लतरं रूपम्' इत्यादिप्रयोगदर्शनाच्च भासुरत्वादिहेतुकः प्रकर्षो निश्चीयते । न चाशब्दवाच्यधर्मनिमित्तः सः अतिप्रसङ्गादिति भासुरत्वादीनामपि प्रयोगप्रामाण्यादत्र शब्दवाच्यत्वं निश्चीयताम्' इति ।

अत्रेदं वक्तव्यम्—पूर्वम् असंविज्ञातपदानामित्युच्यते, पश्चाच्च—''भासुरत्वादीनामपि प्रयोगप्रामाण्यादत्र शब्दवाच्यत्वं निश्चीयताम्'' इत्युच्यत इति कोऽयं विरोधपङ्किलः पन्था समाश्रीयते ?

किञ्च, न शुक्लादिशब्दा भासुरत्वादिषु सङ्केतिता इति न ते तदर्थाभिधायिनः । तस्मात् शुक्लतरं रूपमस्येत्यादौ शब्दानुपात्तप्रतीयमानभासुरत्वादिधर्महेतुक एव प्रकर्ष इति प्रयोगप्रामाण्यान्निश्चीयताम् । 'शुक्लतरः पटः' इत्यादौ तु शब्दोपात्तशुक्लादिगुणहेतुको द्रव्ये प्रकर्षः । शुक्ले गुणे त्वनुपात्तभासुरत्वादिगुणहेतुकः प्रकर्ष इति परम्परा ।

यस्तु अनुपात्तगुणहेतुकप्रकर्षाभ्युपगमेऽनियमोऽतिप्रसङ्गश्चेति दूषणद्वयं दत्तं तदपि न, शब्दोपात्तशुक्लादिगुणवृत्तिप्रतीयमानभासुरत्वादिगुणस्यैव प्रकर्षनियामकत्वाभ्युपगमेनानियमातिप्रसङ्गयोः प्रसक्त्यभावादिति दिक् ।। ४ ।।

ननु भवतु स्वतोऽव्यपदेशस्य द्रव्यस्य संसर्गिधर्मनिमित्ता व्यपदेशप्रवृत्तिः। तत्रैव तु व्यपदेशे संसर्गिण उपक्षयात् प्रकर्षेऽपि कथं तस्य व्यापारः कल्प्यत इत्याह—

**वस्तूपलक्षणे तत्र विशेषो व्यापृतो यदि।**
**प्रकर्षो नियमाभावात् स्यादविज्ञातहेतुकः ॥५॥**

वस्तुनिर्देशमात्रचरितार्थत्वे विशेषस्योपाधिभूतस्य यः शुक्लो दृष्टः, स गरिमादिना प्रकृष्टः शुक्लतर इति प्रतीयेत। तथा च विशेषः प्रकर्षस्य निबन्धनं न ज्ञायेत। न चैवं प्रसिद्धिः, शुक्लगुणनिमित्तस्यैव प्रकर्षस्यातोऽवगमात्। ततश्च यथा प्रतीतिः, यथा च युक्तिः प्रत्यासन्नतरत्वाच्छब्दवाच्यस्येति, तथा प्रकर्षे व्यपदेशहेतोरेव विशेषस्य व्यापारः कल्पयितुं न्याय्य इत्यर्थः ॥ ५ ॥

इह कथं प्रकर्षप्रत्ययः निकृष्टतरः प्रकृष्टतर इत्याशङ्क्याह—

**सर्वं च सर्वतोऽवश्यं नियमेन प्रकृष्यते।**
**संसर्गिणा निमित्तेन निकृष्टेनाधिकेन वा ॥६॥**

---

ननु भवतु स्वतो व्यपदेशानर्हस्य द्रव्यस्य संसर्गिधर्मरूपगुणरूपनिमित्तापेक्षा-व्यपदेशप्रवृत्तिः। तत्रैव तु व्यपदेशे संसर्गिणः सामर्थ्योपक्षयात् प्रकर्षेऽपि कथं तस्य= संसर्गिधर्मस्य व्यापारः कल्प्यत इत्याशङ्क्याह—वस्तूपलक्षणे इति।

अयमर्थः—तत्र 'शुक्लतरः पटः' इत्यादौ वस्तूपलक्षणे=वस्तूपलक्षण एव, असति बाधके सर्वं वाक्यं सावधारणं भवतीति न्यायात्। वस्तुव्यपदेशमात्र एव यदि विशेषः शुक्लत्वादिर्गुणो व्यापृतः, न तु प्रकर्षेऽपि, तदानियमाभावात्=प्रकर्षस्य नियामकाभावात् प्रकर्षोऽविज्ञातहेतुकः स्यात्। अयमेव विशेषोऽत्र प्रकर्षहेतुरिति विशेषणज्ञानं निश्चयात्मकं न स्यात्। तथा च गरिमादिगुणेनापि 'शुक्लतरः पटः' इति प्रतीयेत। तथा च 'सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापार.' इतिवद् दीर्घदीर्घतरस्य संसर्गिधर्मव्यापारस्याभ्युपगमादेकेनैव तेन व्यपदेशप्रकर्षयोरुभयोरपि निर्वाह इति।

अयं भावः—द्रव्यस्य सजातीयाद् व्यवच्छेदे उपाधिभूतस्य विशेषस्य शुक्लत्वादेर्वस्तुनिर्देशमात्रचरितार्थत्वे वस्तुव्यपदेशमात्र एव हेतुत्वे यः शुक्लो दृष्टः, स गरिमादिना प्रकृष्टः शुक्लतर इति प्रतीयेत। तथा च शुक्लत्वादिरूपो नियतो विशेषः प्रकर्षस्य निमित्तं न ज्ञायेत। न चैवं प्रसिद्धिः, शुक्लगुणनिमित्तस्यैव प्रकर्षस्य शुक्लतरः पट इति वाक्यादवगमात्। ततश्च यथा प्रतीतिः शुक्लतरः पट इति तामनुसृत्य, यथा च युक्तिः—शब्दवाच्यस्य शुक्लत्वादेः प्रतीयमानगरिमाद्यपेक्षया उपस्थितिलाघवेन प्रत्यासन्नतरत्वमिति तामनुसृत्य व्यपदेशहेतोरेव विशेषस्य प्रकर्षेऽपि व्यापारः कल्पयितुं न्याय्य इति ॥ ५ ॥

व्यपदेशहेतुप्रकर्षे प्रकर्षप्रत्यय इति निकर्षोपाधेरभिधाने निकर्षापेक्ष एव प्रकर्षो वाच्यः, प्रकर्षोपाधेश्चाभिधाने प्रकर्षापेक्ष इति सजातीयापेक्षायां सर्वस्य प्रकर्षसम्भवादेतदुपपद्यते। निकृष्टस्य निकृष्टत्वादेव, प्रकृष्टस्य प्रकृष्टत्वादेवातिशयः सम्भवत्येव। एवं गुणप्राधान्येऽप्यपरधर्मनिमित्तः, तत्प्राधान्येऽप्यपरनिमित्तः प्रकर्ष इत्यनवस्थां पूर्वप्रदर्शितामप्यनेनाह॥ ६॥

इह गोतरेति प्रयोगो दृश्यते। तत्र च 'न जातिनिमित्तः प्रकर्षः' इत्युक्तम्। न चान्यन्निमित्तमत्र सव्यापारं प्रतीयत इति निर्निमित्तः प्रकर्षो द्रव्यस्य।

एवं शुक्लतरादावपि भविष्यतीति किमिति गुणहेतुकः प्रकर्षः समुद्घोष्यत इत्याशङ्कयाह—

नोपेक्षते निमित्तं च प्रकर्षे व्यापृतं यदि।
द्रव्यस्य स्यादुपादानं प्रकर्षे त्वनर्थकम्॥ ७॥

---

नन्विह कथं प्रकर्षप्रत्ययो निकृष्टतरः प्रकृष्टतर इति निकृष्टे प्रकर्षाभावात्, प्रकृष्टे च अन्योन्याश्रयचक्रकानवस्थाभिया प्रकर्षान्तराभावादित्याशङ्कयाह—**सर्वं च सर्वत इति।**

अयमर्थः—सर्वं च निकृष्टं प्रकृष्टं वा वस्तु संसर्गिणा निकृष्टेनाधिकेन=प्रकृष्टेन वा गुणेन निमित्तेन सर्वतो निकृष्टात् प्रकृष्टाद् वावश्यं नियमेन प्रकृष्यते। अत्रावश्यमित्यस्य व्याख्यानम्, नियमेनेति न पुनरुक्तिः। तद्यथा जात्यादौ निकृष्टौ तयोरेको नीचकर्मणापि निकृष्ट इति नीचकर्मनिमित्तकस्तत्र निकृष्टे प्रकर्षः। एवं जात्या द्वौ प्रकृष्टौ तयोरेकः शोभनेन कर्मणाऽपि प्रकृष्ट इति शोभनकर्मनिमित्तकस्तत्र प्रकृष्टे प्रकर्ष इति यथायथं निकृष्टतरः, प्रकृष्टतर इति प्रयोगोपपत्तिरिति।

अयं भावः—निकृष्टत्वादिव्यपदेशहेतोर्निकृष्टत्वस्य प्रकृष्टत्वस्य वा नीचकर्मशोभनकर्मादिरूपसंसर्गिधर्मान्तरहेतुके प्रकर्षे निकृष्टतरः, प्रकृष्टतर इति तरबादिरूपः प्रकर्षप्रत्यय इति निकर्षरूपस्योपाधेरभिधाने निकृष्टतर इत्यत्रापरजातिनिकृष्टगतनिकर्षापेक्ष एव परस्मिन् नीचकर्मादिरूपधर्मान्तरहेतुकः प्रकर्षो वाच्यः। प्रकर्षरूपस्योपाधेश्चाभिधाने प्रकृष्टतर इत्यत्रापरजातिप्रकृष्टगतप्रकर्षापेक्षः शोभनकर्मादिहेतुकः प्रकर्षो वाच्य इति सजातीयापेक्षया सर्वस्य निकृष्टस्य प्रकृष्टस्य वा प्रकर्षसम्भवाद् निकृष्टतरः प्रकृष्टतर इत्येतद् रूपमुपपद्यते। निकृष्टस्य निकृष्टत्वादेव प्रकृष्टस्य प्रकृष्टत्वादेवातिशयः सम्भवत्येव। एवं शुक्लतरं रूपमित्यादौ गुणप्राधान्येऽपि भासुरत्वादिरूपापरधर्मनिमित्तकः प्रकर्षः=तत्प्राधान्येऽप्यपरधर्मनिमित्तकः प्रकर्ष इत्यनवस्थां पूर्वप्रदर्शितामप्येतत्कारिकायाः पूर्वार्धेन सूचयतीति॥ ६॥

इह शाब्दे व्यवहारे लोके गोतरेति प्रयोगो दृश्यते। तत्र च न जातिनिमित्तः प्रकर्षः सम्भवति, जातेः सजातीयाद् व्यवच्छेदकत्वाभावादित्युक्तं प्राक्। न च तदति-

परिनिष्ठितरूपं द्रव्यं निर्ह्रासोपचयसम्बन्धायोग्यं स्वत इति न स्वनिमित्तं प्रकर्षमनुभवति। तद्यद्युपाधिरूपं निमित्तं प्रकर्षे सव्यापारं नाङ्गीकरोति, तदा प्रकर्षे प्रतिपाद्ये तस्योपादानं निष्प्रयोजनम्। शुक्लतर इत्यादिप्रयोग एव न स्यादित्यर्थः। तस्मात् प्रयोगप्रामाण्याद् यथोपपत्तिप्रकर्षोऽनुविधेय इति व्यपदेश-हेतुस्वसंसर्गिधर्मनिमित्तः स व्यवस्थाप्यः सर्वत्र। जातेश्च व्यपदेशहेतुभूतायास्तद-सम्भवे यथा 'शुक्लतरं रूपम्' इत्यत्रैकार्थसमवेतभासुरत्वादिधर्मद्वारकः प्रकर्षो व्यवस्थाप्यते, तथा गोतरेत्यत्राप्येकार्थसमवेताद् वाहदोहादेर्धर्मादसौ व्यवस्थाप्यः। भासुरत्वादेरिव चात्र प्रयोगप्रामाण्याद् वाहदोहादेरपि शब्दार्थत्वमवसेयम्। ततश्च प्रकृष्टवाहदोहो गौर्गोतरा इति भण्यत इति सर्वं सुस्थम्॥ ७॥

प्रकरणार्थं समापयितुमाह—

**सव्यापारो गुणस्तस्मात् स्वप्रकर्षनिबन्धनः।**
**द्रव्यात्मानं भिनत्त्येव स्वप्रकर्षे(र्षं)निवेशयन्॥ ८॥**

---

रिक्तं निमित्तमत्र=गोतरेत्यत्र गोनिष्ठे प्रकर्षे सव्यापारं प्रतीयत इति निर्निमित्तोऽत्र प्रकर्षो द्रव्यस्य वाच्यः। एवं शुक्लतरः पट इत्यादावपि द्रव्यस्य प्रकर्षो निर्निमित्त एव भविष्यतीति किमिति गुणहेतुकः प्रकर्षः समुद्घोष्यत इत्याशङ्क्याह— **नापेक्षते निमित्तं चेति।**

अयमर्थः—यदि च=यदि तु, अपचयोपचयसम्बन्धायोग्यं परिनिष्ठितरूपं द्रव्यं स्वनिमित्तकं प्रकर्षं नानुभवति, यदि च स्वोपाधिरूपं स्वप्रकर्षे व्यापृतं निमित्त-मपि नाङ्गीकरोति, तदा प्रकर्षं प्रति=प्रकर्षबोधनाय शुक्लतर इति रूपेण द्रव्यस्य द्रव्यबोधकशब्दस्योपादानं प्रयोगोऽनर्थकं स्यात्, स्वतः परतश्चोपाधिकः प्रकर्षाबोध-कत्वात्। तस्मात् प्रयोगप्रामाण्याद् यथोपपत्ति प्रकर्षोऽनुसन्धानमनुविधेय इति व्यपदेश-हेतु(प्रवृत्तिनिमित्त)स्वसंसर्गिवाच्यधर्मनिमित्तक एव सर्वत्र गुणोपाधिकद्रव्याभिधाने शुक्लतरः पट इत्यादौ व्यवस्थाप्यः। गोतरेत्यादौ जात्युपाधिकद्रव्याभिधाने तु जातेश्च व्यपदेशहेतुभूतायाः प्रकर्षहेतुत्वासम्भवे यथा शुक्लतरं रूपमित्यत्र व्यपदेशहेतुना सहै-कार्थसमवेतप्रतीयमानभासुरत्वादिधर्मनिमित्तकः प्रकर्षो व्यवस्थाप्यते, तथा गोतरे-त्यत्रापि व्यपदेशहेतुना सहैकार्थसमवेतात् प्रतीयमानाद वाहदोहादेर्धर्मात् प्रकर्षो व्यवस्थाप्यः। ततश्च प्रकृष्टवाहदोहो गौर्गोतरेति भण्यते इति।

यत्त्वत्र हेलाराजेनोक्तम्—"भासुरत्वादेरिव चात्र प्रयोगप्रामाण्याद् वाहदोहा-देरपि शब्दार्थत्वमवसेयम्" इति। शक्तेः शङ्केतानुसारित्वात्, वाहदोहादौ च गोशब्दस्यासङ्केतितत्वादित्यनुभूतिविरोधिन्येषा हेलाराजीया कल्पना। गोतरा इति प्रयोगप्रामाण्योपपत्तिस्तु मदुक्तरीत्याऽत्रैव दर्शितयाऽनुसन्धेया इति॥७॥

प्रकरणार्थमुपसंहर्त्तुमाह—सव्यापारो गुण इति।

अयमर्थः—तस्माद्=द्रव्यस्य स्वतो निरतिशयशत्वात्, स्वप्रकर्षनिबन्धनः, स्वप्रकर्षः=गुणप्रकर्षः, द्रव्यप्रकर्षे निबन्धनम्=निमित्तं यस्य स तथा। गुणो द्रव्य-

**द्रव्यस्य स्वतो निरतिशयत्वात् स्वनिमित्तभूतप्रकर्षाधानोद्युक्तः संसर्गिगुणः स्वातिशयहेतुकेन विशेषेणाश्रयान्तराद् व्यवच्छेदं विदधाति ॥ ८ ॥**

**कथमन्यस्य प्रकर्षेऽन्यत्प्रकृष्टमित्याशङ्क्याह—**

**अरूपं पररूपेण द्रव्यमाख्यायते यथा ।**
**अप्रकर्षं प्रकर्षेण गुणस्याविश्यते तथा ॥ ९ ॥**

**नीरूपस्य निरुपाधिनो द्रव्यस्य शाब्दव्यवहारोपगमायोगादुपाधिरूपाच्छुरितस्य तदुपगमे सर्वशब्दार्थपृष्ठपाती व्यवहारः स्वोपाधिनियमितशरीर इत्यर्थः। उपाध्युपाधिमतोश्च विवेकस्य दुरवधारत्वात् सङ्कर इति व्यवहारे गुणप्रकर्षो**

---

प्रकर्षे सव्यापारः, अत एव स्वप्रकर्षं द्रव्ये निवेशयन् द्रव्यात्मानं भिनत्त्येव=व्यवच्छिनत्त्येव ।

शुक्लतरः पट इति । अत्र गुणप्रकर्षस्य द्रव्यप्रकर्षं प्रति निमित्तत्वं ज्ञापकत्वमेव, न तु कारकत्वम्, स्वप्रकर्षं निवेशयन् इत्यनेन विरोधात् । अनेन हि गुणप्रकर्षस्यैव भानमिति प्रतीयते । अत एवात्र ज्ञापकत्वघटकं ज्ञानं भ्रान्तिरूपं बोध्यम् । अत्र स्वप्रकर्षे निवेशयन् इति सप्तम्यन्तपाठस्तु न युक्तः, गुणप्रकर्षे द्रव्यनिवेशनस्य द्रव्यप्रकर्षनिवेशनस्य वाऽत्रानभिप्रेतत्वादिति ।

अयं भावः—द्रव्यस्य स्वतो निरतिशयत्वाद् जातेश्च सजातीयादव्यवच्छेदकत्वेन तत्कृतप्रकर्षस्यापि तत्राभावात् स्वनिमित्तभूतप्रकर्षाधानोद्युक्तः ( स्वस्य= बुद्धिस्थस्य द्रव्यप्रकर्षस्य निमित्तभूतो यो गुणप्रकर्षस्तस्य द्रव्ये आधाने उद्युक्तः सव्यापारः ) संसर्गिलक्षणो गुणः स्वगतप्रकर्षहेतुकेन द्रव्यप्रकर्षरूपेण विशेषेण द्रव्यस्याश्रयान्तराद् व्यवच्छेदं विदधातीति ॥ ८ ॥

ननु कथं गुणस्य प्रकर्षेण द्रव्यं प्रकृष्टं भवतीत्याशङ्क्याह— **अरूपं पररूपेणेति ।**

अयमर्थः—अरूपं रूप्यते=व्यपदिश्यते द्रव्यं येन तद्रूपमुपाधिर्जातिगुणादिकम्, तद्रहितं द्रव्यस्वरूपं यथा पररूपेण परस्योपाधेर्जात्यादेः रूपेण स्वरूपेण यथा आख्यायते=निरूप्यते, तथा स्वतोऽप्रकर्षं द्रव्यं कर्मभूतम्, गुणस्य प्रकर्षेण कर्त्राऽऽविश्यते=प्रविश्यत इत्यर्थः ।

अत्र आदिश्यते इति पाठो युक्तः । आदेशाख्यानयोर्भिन्नपदोपात्तयोरपि एकत्वात् साधारणधर्मत्वेन वाक्यार्थद्वयगतसादृश्यप्रयोजकत्वसम्भवात् । आख्यानावेशनयोस्तु तदसम्भवात् ।

किञ्चात्रादिश्यत इति पाठ एव प्रतिवस्तूपमाऽलङ्कारसम्भवः । एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगित्युक्तेरिति ।

गुणिनि विश्राम्यति, न गुणात्मन्येव निष्कृष्टगुणिनि व्यवतिष्ठते, नापि गुण्यात्मन्येव निष्कृष्टगुण इति सिद्धम् ॥ ९ ॥

॥ इति भूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे

गुणसमुद्देशः ( पञ्चमः ) ॥

---

अयं भावः—नीरूपस्य रूपपदस्य प्रागुक्तव्युत्पत्त्या निरुपाधिकस्य द्रव्यस्य शाब्दव्यवहारगोचरत्वायोगाद् जात्यादिरूपोपाध्युपहितस्य तद्गोचरत्वोपगमे वाक्य-वाक्यार्थघटकसर्वपदपदार्थोपस्थितिपृष्ठभावी शाब्दबोधरूपो व्यवहारः स्वस्वोपाधि-नियमितसर्वपदार्थसम्पादितशरीरक इत्यर्थः। जात्यादिरूपस्योपाधेस्तदुपहितस्य द्रव्यस्य च यो विवेकः पृथग्भावः=भेदस्तस्य तयोस्तादात्म्यप्रत्ययेन दुरवधार-त्वात् तयोः सङ्करः=नीरक्षीरयोरिव सम्मेलनम् इति शाब्दे व्यवहारे गुणप्रकर्षो गुणिनि=गुणतादात्म्यापन्ने विश्राम्यति। न गुणात्मन्येव निकृष्टगुणिनि व्यव-तिष्ठते। नापि गुण्यात्मन्येव निकृष्टगुणे इति सिद्धमिति ॥ ९ ॥

॥ ब्रह्मीभूतश्रीकाशीनाथपाण्डेयतनयरघुनाथपाण्डेयकृताया-

मम्बाकर्त्र्यां पदकाण्डे प्रकीर्णकाख्ये

गुणसमुद्देशः पञ्चमः ॥ ५ ॥

# अथ दिक्समुद्देशः

सम्प्रत्येकयोगक्षेमान् पदार्थांस्तन्त्रेणोद्दिश्य क्रमेण विचारयितुमाह—

**दिक् साधनं क्रिया काल इति वस्त्वभिधायिनः ।**
**शक्तिरूपे पदार्थानामत्यन्तमनवस्थिताः ॥ १ ॥**

दिगादिशब्दाः सिद्धस्वभावद्रव्यधर्मतया स्वार्थं प्रतिपादयन्तो यथालक्षित-दिगाद्यर्थसंस्पर्शविकलाः । तथा हि परोपाधिरूपाः शक्तयो दिगाद्याः, पारतन्त्र्यं च शक्तिलक्षणमिति क्रियापि द्रव्यपरतन्त्रा शक्तिरिति व्यपदिश्यते । वैशेषिकनये च दिक् द्रव्यं नोपपद्यते, कार्यानुमेयत्वेन पदार्थोपकारकत्वरूपस्य शक्तित्वस्य न्याय्यत्वात् । एवंविधं शक्तिरूपं सिद्धस्वभाववस्तुवाचकैः शब्दैः साक्षान्न स्पृश्यत

---

या जाग्रतो दूरमुपैति देवी जन्तोः सुषुप्तस्य समीपमेति ।
सा सर्वदेवैरविभाततत्त्वा सत्त्वं सदा संश्रयतां चितिर्मे ॥ १ ॥

पूर्वमेकयोगक्षेमान् = समानोपपत्त्यनुपपत्तिकान् सर्वान् पदार्थान् सामान्येन = अर्थतन्त्रेण । निरूप्य तानेव विशेषेण दिगादिक्रमेण विचारयितुमाह— दिक् साधनमिति ।

अयमर्थः—यतो दिक्, साधनम्, क्रिया, काल इति शब्दा वस्त्वभिधायिनः सिद्धस्वरूपदिगादिद्रव्याभिधायकाः, अतो दिगादिपदार्थानां शक्तिरूपेऽर्थेऽत्यन्तमन-वस्थिताः पदार्थेषु विशेषणतया परंतन्त्रस्य शक्तिरूपस्यार्थस्यात्यन्तमवाचका इत्यर्थं इति । अत एषां लक्षणं शास्त्राल्लोकतो वा वक्तव्यमिति मनसि कृत्वा दिगादिशक्तीनां लक्षणमग्रे वक्ष्यत इति ।

अयं भावः—दिगादिशब्दाः सिद्धस्वभावस्य द्रव्यस्य वाचकत्वेन धर्मा इति स्वार्थं तत्तद्द्रव्यं प्रतिपादयन्तो यथालक्षितशक्तिरूपदिगाद्यर्थसम्बन्धविकला इति तादृशशक्तिरूपस्यार्थस्यावाचकाः । तथा हि–देशपर्वतादिरूपपरोपाधिकरूपाः शक्तयो दिगाद्याः, पारतन्त्र्यश्च शक्तिलक्षणमिति क्रियाऽपि द्रव्यपरतन्त्रा शक्तिरिति व्यप-दिश्यते । अस्ति च क्रियायां कार्यानुमेयत्वे सति पदार्थोपकारकत्वरूपमपि शक्ति-लक्षणम्, क्रियानामेयमत्यन्ता परिदृष्टावयवा इति भाष्यात् । वैशेषिकनये च दिग् द्रव्यत्वेनाभ्युपेता तन्नोपपद्यते, कार्यानुमेयत्वे सति पदार्थोपकारकत्वरूपस्य शक्ति-त्वस्य तत्र न्याय्यत्वात् । एवंविधं शक्तिरूपं सिद्धस्वभाववस्तु वाचकैः शब्दैः साक्षान्न

इत्यसाधारणमेतत्पदार्थरूपं लक्षणेनावस्थापयितव्यम्। अस्ति ह्येषां शास्त्रेऽस्मिन् व्यवहारो "दिक्शब्देभ्यो दिग्देशकालेषु ··· " ( पा० ५।३।२७ ) इत्यादिः ॥ १ ॥

तत्र साधनादीनां शास्त्रादनुमितमेव लक्षणं विभजनीयम्। दिक्कालादीनां तु स्वरूपं वक्तव्यम्। तत्र दिशस्तावदनुमानेन स्वरूपं लक्षयति—

**व्यतिरेकस्य यो हेतुरवधिप्रतिपाद्ययोः ।**
**ऋज्वित्येवं यतोऽन्येन विना बुद्धिः प्रवर्तते ॥ २ ॥**
**कर्मणो जातिभेदानामभिव्यक्तिर्यदाश्रया ।**
**सा स्वैरुपाधिभिर्भिन्ना शक्तिर्दिगिति कथ्यते ॥ ३ ॥**

इदमस्मात् पूर्वं पश्चाद् वेत्येवमस्मादित्यवधेरिदमिति प्रतिपाद्यस्य चावधि-

---

स्पृश्यते=सम्बध्यत इति सिद्धस्वभाववस्त्वसाधारणमेतद् दिगादिपदार्थशक्तिस्वरूपं लक्षणेन व्यवस्थापयितव्यम्। अस्ति ह्येषाम्=दिगादिपदार्थानां शास्त्रेऽस्मिन् व्यवहारः। 'दिक्शब्देभ्यो दिग्देशकालेषु' इत्यादि ॥ १ ॥

तत्र साधनादीनां शास्त्रीयलिङ्गादनुमितमेव लक्षणं साधनादिपदार्थानां विभागपूर्वकं बोधनीयम्। दिक्कालादीनान्तु लोकसिद्धं स्वरूपं वक्तव्यम्। तत्र दिशस्तावदनुमानेन स्वरूपं लक्षयति=अनुमितलक्षणेन स्वरूपं बोधयति पद्यद्वयेन— व्यतिरेकस्य यो हेतुरिति। कर्मणो जातिभेदानामिति चेति।

अयमर्थः—इदमस्मात् पूर्वम्, इदमस्मात् पश्चादित्यादिव्यवहारे अस्मादित्यवधेः इदमिति प्रतिपाद्यस्य चावधिमतो यो व्यतिरेको भेदस्तद्वान् अवध्यवधिमतसम्बन्धलक्षणः। अत्र व्यतिरेकशब्दस्तद्वत्परो लक्षणया तात्पर्यानुपपत्तिमूलिकया तस्य यो हेतुः सा दिगिति कथ्यत इत्येकं दिशो लक्षणम्। अवध्यवधिमत्सम्बन्धनियामकत्वं दिशो लक्षणमिति निष्कर्षः।

अन्येन विना=पृथिव्यादिरूपावधिरूपनिमित्तान्तरेण विनैव, यतो यां दिशं हेतुत्वेनादाय 'इदं ऋजु' इत्येवं बुद्धिः प्रवर्तते, सा दिगिति द्वितीयं लक्षणम्। ऋजुवक्रादिबुद्धिनियामकत्वं दिशो लक्षणमिति निष्कर्षः।

कर्मणः=क्रियायाः जातिभेदानाम्=जातिविशेषाणामुत्क्षेपणत्वापक्षेपणत्वादीनामभिव्यक्तिर्यदाश्रया=यन्निमित्तिका सा दिगिति तृतीयं दिशो लक्षणम्। क्रियागतजातिविशेषाभिव्यञ्जकत्वं दिशो लक्षणमिति निष्कर्षः।

सा वस्तुगत्या एकापि स्वैः=स्वकीयैः, उपाधिभिः=आदित्यसंयोगादिभिर्भिन्ना प्राच्यादिभेदेन बहुविधा शक्तिर्दिगिति कथ्यत इति।

अयं भावः—इदमस्मात् पूर्वं पश्चाद् वा इत्येवमादौ अस्मादित्यवधेः, इद-

मतो यो व्यतिरेकः प्रातिपदिकार्थभेदोऽवध्यवधिमत्सम्बन्धलक्षणः स पदार्थस्वरूपादनुपपद्यमानो निमित्तान्तरमावेदयते। तन्निमित्तान्तरं दिगित्युच्यते। न हि जात्यादिनिमित्तोऽयं प्रत्ययः, तदनुरागाप्रतीतेः। परिशेषाद् दिङ्निमित्तः।

यदाहुर्वैशेषिकाः—"इत इदमिति यतस्तद्दिशो लिङ्गम्" (२।२।१०) इति। कार्यकल्प्यत्वे च सदैव पदार्थोपाधितया प्रतीतेः स्वतन्त्रद्रव्यरूपता नास्ति दिशः। न हि पृथिव्यादिवद् दिगुपलक्ष्यते। अत एव कालोऽपि शक्तिरिति वक्ष्यते।

समवायश्च—'तां शक्तिं समवायाख्यां....' इत्युक्तः। तथा 'ऋजुः स्पष्टोऽयं वंशः' इति प्रत्ययः अन्येन विना, अवधेरप्यनपेक्षणात् पृथिव्यादिनिमित्तान्तरोपकारमन्तरेण जायते। स चैकदिक्कमवयवानां प्रसरणादिति दिङ्निमित्तः। ऋज्वर्थस्योपलक्षणत्वाद् वक्रादिबुद्धिरपि दिङ्निमित्ता व्याख्येया। तथा कर्मक्षणानां तिर्यगूर्ध्वमधश्च जायमानानां कर्मत्वमहासामान्यव्यतिरेकेण भ्रमणत्वोत्क्षेपणत्वाद्यपरजातिव्यक्तिर्दिङ्निमित्ता। तथा ह्यूर्ध्वादिदिक्संयोगविभागकार्याः कर्मक्षणा

---

मिति प्रतिपाद्यस्य चावधिमतो यो व्यतिरेकः=अवध्यवधिमद्रूपप्रातिपदिकार्थद्वयाद् भेदस्तद्वान् अवध्यवधिमत्सम्बन्धलक्षणः स पदार्थस्वरूपद्वयादनुपपद्यमानः स्वोपपादकं निमित्तान्तरमनुमापयति। तदेव निमित्तान्तरं दिगित्युच्यते। न ह्ययं जात्यादिनिमित्तकोऽवध्यवधिमतोः प्रत्ययः। तदनुरागाप्रतीतेः=जात्यादितादात्म्याप्रतीतेः। अतः परिशेषाद् दिङ्निमित्तोऽयं प्रत्ययः।

यदाहुर्वैशेषिकाः—'इत इदमिति यतस्तद्दिशो लिङ्गम्' इति। यतः=यस्मात् कारणात्, इत इदं पूर्वं पश्चाद्वा इति प्रत्ययो भवति, तत्प्रत्ययभवनम्, दिशो लिङ्गमित्यर्थः। दिशं विना तत्प्रत्ययानुपपत्तेरिति। एवमेतत्प्रत्ययरूपकार्यानुमेयत्वे च दिशः शक्तिरूपतया सदैव पारतन्त्र्येण पदार्थोपाधितया प्रतीतेः स्वतन्त्रद्रव्यरूपता नास्ति दिशः।

नहि पृथिव्यादिद्रव्यवद् दिक् प्राधान्येनोपलक्ष्यते। अत एव=कार्यकल्प्यत्वे सति पदार्थोपकारकत्वादेव कालोऽपि शक्तिरिति वक्ष्यते। समवायोऽप्यत एव—"तां शक्तिं समवायाख्याम्" इति शक्तित्वेनैवोक्तः। तथा 'ऋजुः स्पष्टोऽयं वंशः' इति ज्ञानम्, अन्येन दिगन्येन विना, अवधेरप्यनपेक्षणात्। पृथिव्यादिरूपदिगन्यनिमित्तान्तरप्रयुक्तोपकारमन्तरेण जायते। स चायं प्रत्यय एकदिक्कमवयवानां प्रसरणादिति दिङ्निमित्तः।

अत्र ऋज्वर्थस्योपलक्षणत्वात् 'वक्रोऽयं वंशः' इत्यादिबुद्धिरपि दिङ्निमित्तिका व्याख्येया। तथा क्षणिकानां कर्मणाम्=क्रियाणां तिर्यगूर्ध्वमधश्च जायमानानां कर्मत्वरूपमहासामान्यभेदेन भ्रमणत्वोत्क्षेपणत्वादिरूपावान्तरजातीनामभिव्यक्तिर्दिङ्निमित्ता। तथा ह्यूर्ध्वादिदिक् संयोगविभागकार्याणि क्षणिकानि उत्क्षेपणा-

विशिष्टाः सन्तो नियतजातिव्यञ्जने समर्था भवन्ति ।

कर्मण इति, कर्मसामान्यस्य । जातावेकवचनम् । अवान्तरजातिभेदा उत्क्षेपणत्वादयः । भ्रमणादिक्रियाक्षणानां ये जातिभेदा इत्यर्थः ।

दिग्लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैका दिगिति काणादाः । एकापि च दिङ्नियतोपाधिप्रकल्पितनानात्वा दशधा व्यवह्रियते । तथा च त एवमाहुः—

"आदित्यसम्प्रयोगाद् भूतपूर्वाद् भविष्यतो भूताच्च प्राची" इति ।

( वै० सू० २।२।१४ )

सवितुरहरहरादौ येन प्रकल्पितदिक्प्रदेशेन संयोगोऽभूत्, भवति, भविष्यति वा, तस्मादादित्यसम्प्रयोगात् प्राचीति व्यपदेशः, प्रागञ्चत्यत इति कृत्वा । तथा—"दक्षिणा प्रतीच्युदीची च" ( वै० सू० २।२।१६ ) इति सूत्रम् ।

तस्मादेवादित्यसंयोगात् प्रतीच्यादिव्यपदेशः । तथा हि यत्र प्रतीपमञ्चत्यस्तगमनाद् रविः सा प्रतीची । मूर्तिपरिच्छिन्नेन ह्यादित्यमण्डलेन यः संयोगः, स परिमितदेशव्यापी । तेन चातीतेन भविष्यता वर्तमानेन वावच्छिन्नो भागो नियतदिग्भागव्यवस्थापको भवतीत्यदृश्यमानगमिक्रियोऽपि यां परिहरति पृष्ठकरणेन

---

पक्षेपणादिरूपाणि कर्माणि अवान्तरजातिमत्वाद् विशेषरूपाणि सन्ति, स्वगतजातिव्यञ्जने समर्थानि भवन्ति ।

कर्मण इति कारिकागतपदस्य कर्मसामान्यस्येत्यर्थः, जातावेकवचनात् । अवान्तरजातिभेदा उत्क्षेपणत्वापक्षेपणत्वादयः । भ्रमणादिरूपक्षणिककर्मणां ये जातिभेदा इत्यर्थः ।

दिग्लिङ्गाविशेषात् = दिगनुमापकलिङ्गानां सामान्यरूपत्वात् तदनुमापकविशेषलिङ्गानामभावाच्चैका दिगिति वैशेषिकाः । एकापि च दिग् आदित्यसंयोगादिरूपनियतोपाधिपरिकल्पितनानात्वा दशधा भवन्ती तथा व्यवह्रियते ।

तथा च काणादा एवमाहुः—"आदित्यसम्प्रयोगाद् भूतपूर्वाद् भविष्यतो भूताच्च प्राची" इति । भूतपूर्वादित्यस्य वर्तमानादित्यर्थः । येन पृथिव्यादिरूपोपाधिप्रकल्पितदिक्प्रदेशेन सह अहरहः = प्रतिदिनम्, आदौ सवितुः संयोगोऽभूद् भवति भविष्यति वाऽतस्मादादित्यसंप्रयोगात् प्राचीति व्यवहारः प्राक् पूर्वं दिनादौ अञ्चति गच्छति उदयते रविर्यत्र अतः सा प्राची इति व्युत्पत्तिं कृत्वा । तथा—"दक्षिणा प्रतीच्युदीची च" इति सूत्रम् । तस्मादेवादित्यसंयोगाद् प्रतीच्यादिव्यपदेशः ।

तथा हि—यत्र प्राच्याः प्रतीपं प्रतिकूलं विरुद्धं देशमञ्चति गच्छत्यस्तगमनाद् रविः, सा प्रतीची । मूर्त्या हि परिच्छिन्नमादित्यमण्डलमतस्तेन सह यः प्रकल्पितदिक्प्रदेशप्रदेशस्य संयोगः सोऽपि परिमितदेशव्यापी । तेन चातीतेन भविष्यता वर्तमानेन वाऽवच्छिन्नो भागः = प्रकल्पितो दिक्प्रदेशः । दक्षिणादिरूपनियतदिग्भागव्यवस्थापको भवतति दूरत्वदोषाददृश्यमानगमिक्रियोऽपि रविर्यां दिशं परिहरति

सा दक्षिणा, यां न परिहरति सा उत्तरा। मध्याह्ने हि रविबिम्बमुदङ्मुखमञ्चत्यतोऽसावुदीचीत्यपि भण्यते।

अनेनैव च प्रकारेण पूर्वदक्षिणादीन्यन्तरालरूपाण्यपि दिगन्तराणि व्याख्यातानीत्युक्तं सूत्रम्--

"एतेन दिगन्तराणि व्याख्यातानि" इति। ( वै० सू० २।२।१५ )

तथा हि मेरुं प्रदक्षिणमावर्तमानस्य सवितुर्लोकपालपरिगृहीतप्रदेशसंयोगापेक्षो दशधा विभाग इति शास्त्रान्तरे विस्तरेण निर्णीतम्, तत एवावधार्यम्। इह त्वनूद्यते, परं दिगिति न विभज्य कथ्यते। न चायमस्या उपचरितो भेदो यद् उपचारस्य प्रत्ययधर्मत्वाद् दिशि न समाविशेत्, सूर्यसंयोगविशेषं तु सहकारिणमपेक्ष्य विचित्रकार्यं प्रभावयतीति कल्पनया भेदोऽपि दिशो व्यपदिश्यते। अत एव वास्तवेऽपि भेदे सहकारिणोऽभिव्यञ्जकत्वेनापेक्ष्याः। त एव कार्यभेदेऽपेक्षिष्यन्त इति तस्यान्यथोपपत्तेर्दिश एकत्वमुपेयते।

---

पृष्ठकरणेन सा दक्षिणा। यां तथा न परिहरति सा उत्तरा। मध्याह्ने हि रविबिम्बम् उदङ्मुखमञ्चति गच्छत्यतोऽसावुदीचीत्यपि भण्यते।

अनेनैव च प्रकारेण पूर्वदक्षिणादीन्यपि अन्तरालरूपाणि दिगन्तराणि व्याख्यातानीति मत्वा सूत्रमुक्तम्— 'एतेन दिगन्तराणि व्याख्यातानि" इति।

तथा हि—मेरुं पर्वतप्रवरं प्रदक्षिणमावर्तमानस्य सवितुः लोकपालपरिगृहीतप्रदेशसंयोगापेक्षो दशधा विभाग इति शास्त्रान्तरे पुराणेषु विस्तरेण निर्णीतम्, तत एवावधार्यम्। तथा हि—इन्द्रो यमः प्रचेताः कुबेर इति चत्वारो दिक्पाला इति तत्पुरीप्रदेशसंयोगापेक्षश्चतुर्धा विभागः। अग्निः, निर्ऋतिः, वायुः, ईशान इति विदिक्पाला इति तत्परिगृहीतपुरीप्रदेशसंयोगापेक्षश्चतुर्धा विभागः, ऊर्ध्वं ब्रह्मणो लोकः, अधश्च नागलोके भोगवती पुरी इति तत्प्रदेशसंयोगापेक्षो द्विधा विभाग इति दिशां दशधा विभागः पुराणेषु दृश्यते। इह तु तदेवानूद्यते केवलमिति, नेह दिग् विभज्य कथ्यते। न चायमस्या उपचरितः = आरोपितो भेदो यद् उपचारस्य प्रत्ययधर्मत्वेन वस्तुधर्मत्वाभावान्न दिशि भेदः समाविशेत्; किन्तु सूर्यसंयोगविशेषं सहकारिणमपेक्ष्य विचित्रकार्यं प्रभावयति = समुत्पादयति इति।

वस्तुत एकस्या एव दिशो भेदोऽपि सहकारिनानात्वेन कल्पनया व्यपदिश्यते।

अयं तु निष्कर्षोऽत्र—रज्जौ सर्पत्वमिव, शुक्तिकायां रजतत्वमिव दिशि नानात्वं नारोपितम्; किन्तु माणवके सिंहत्वमिव गौणत्वम्। अत एव हेलाराजीये—"कल्पनया भेदोऽपि दिशो व्यपदिश्यते" इत्युक्तम्, न तु आरोप्यत इति। व्यपदेशस्तु शाब्दो व्यवहार इति। सूर्यसंयोगविशेषे तु सहकारिणि मुख्यम्। सादृश्यं तु विचित्र-

को हि प्रामाणिकः कार्यस्य भेदमुपगच्छन् कारणनानात्वं प्रत्याचक्षीत ? वास्तवे च दिशां नानात्वे सर्वत्र कार्यदर्शनात् तासां विभुत्वात् पूर्वापरादिप्रत्ययाः सङ्कीर्येरन् । तस्माद्भावत एका दिक् , कार्यवैचित्र्यं तु सहकारिभेदादित्येवमुक्तम् ।

न च सहकारिण एव दिगनपेक्षात् कार्यं युक्तम् , तस्य स्वतोऽपूर्वापरादिरूपत्वात् । तद्भावस्य दिक्सम्बन्धकृतत्वात् । न च तदनुरूपं कारणमिति (न) दिक् प्रत्याख्येया ॥ २-३ ॥

पूर्वापरादिप्रत्ययलिङ्गा दिक् कालश्चेति तयोरन्यत्वे लिङ्गस्य विशेषमाह–

**परापरत्वे मूर्तानां देशभेदनिबन्धने ।**
**तत एव प्रकल्पेते क्रमरूपे तु कालतः ॥ ४ ॥**

---

कार्यकारित्वरूपं गौणत्वप्रयोजकम् । अत एव=सहकार्यपेक्षाया नियतत्वादेव वास्तवेऽपि दिशो भेदे सहकारिणो दिगभिव्यञ्जकत्वेनापेक्ष्याः । त एव कार्यभेदेऽपेक्षिष्यन्त इति दिशां नानात्वस्य गौणत्वेनोपपत्तेर्दिश एकत्वं मुख्यमुपेयते ।

को हि प्रामाणिकः कार्यस्य भेदमुपगच्छन् मुख्यं गौणं वा सहकारिकारणभेदप्रयुक्तं कारणनानात्वं प्रत्याचक्षीत ? वास्तवे च दिशां नानात्वे सर्वत्र दिक्प्रयुक्तकार्यदर्शनात् तासां सर्वासां विभुत्वात् पूर्वापरादिप्रत्यया मिथः संकीर्येरन् । तस्माद् वस्तुत एका दिक् । दिक्प्रयुक्तं कार्यवैचित्र्यं तु सहकारिभेदादित्येवमुक्तं भवति, आभ्यां कारिकाभ्यां समन्विताथाभ्यामिति ।

न च दिगनपेक्षादादित्यसंयोगविशेषादिरूपात् सहकारिण एव पूर्वापरादिप्रत्ययरूपं दिक्प्रयुक्तं कार्यं भवतीति युक्तमिति वाच्यम्, तस्य स्वतः पूर्वापरादिरूपत्वाभावेन तादृशकार्यप्रयोजकत्वानुपपत्तेः । भावेषु प्रतीयमानस्य पूर्वापरादिभावस्य दिक्सम्बधकृतत्वात् । नापि च तत्=आदित्यसयोगादिरूपं सहकारि पूर्वापरादिप्रत्ययानुरूपं कारणम्--स्वतः पूर्वापरादिरूपत्वाभावादिति न तादृशं सहकारिणमाश्रित्य दिक् प्रत्याख्येया इति ॥ २-३ ॥

पूर्वापरादिप्रत्ययलिङ्गा दिक्, कालश्च तथेति तयोरन्यत्वेऽनुपपद्यमाने तदुपपादकं लिङ्गस्य विशेषम्=भेदम् आह—परापरत्वे मूर्तानामिति ।

अयमर्थः—मूर्तानाम्=अव्यापिनां द्रव्याणां परापरत्वे देशभेदनिबन्धने देशस्यापि परत्वापरत्वे तत एव=दिश एव, तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात् । दिङ्निमित्ते इति यावत् । क्रमरूपे तु क्रियागते परत्वापरत्वे कालतः प्रकल्पेत इति योजना । परिच्छिन्नानां द्रव्याणामयं पूर्वोऽयं पर इति व्यवहारो देशगतपौर्वापर्यनिमित्तकः । देशगतं पौर्वापर्यं तु 'अयं पूर्वो देशः, अयं परः' इति व्यवहारे हेतुभूतं दिङ्निमित्तकम् । 'पूर्वमभूद् भविष्यति परम्' इति क्रियापौर्वापर्यं तु कालकृतमिति

मूर्तिरसर्वगतद्रव्यपरिमाणम् । अभेदाध्यवसायाच्च धर्मिणोऽत्र निर्दिष्टाः । व्यापकानामाकाशादीनां परापरत्वे न स्तः । पूर्वः पर इति भावेष्वव्यापकेषु पूर्वापरदेशसम्बन्धनिमित्तो व्यवहारः । देशस्यापि पूर्वपरत्वं दिङ्निमित्तमिति । तत एव दिशः परत्वापरत्वे देशनिमित्तं तात्पर्यतः । पूर्वमभूद्भविष्यति परमिति तु क्रियापौर्वापर्यं कालशक्तिकृतप्रतिबन्धाभ्यनुज्ञावशाद् व्यवतिष्ठत इति नास्ति दिक्कालयोर्लिङ्गसङ्कर इत्याशयः ॥ ४ ॥

अमूर्तानामपि काल्पनिके परत्वापरत्वे स्त इत्याह—

**आकाशस्य प्रदेशेन भागैश्चान्यैः पृथक् पृथक् ।**
**सा संयोगविभागानामुपाधित्वाय कल्पते ॥ ५ ॥**

---

निष्कर्षः । मूर्तीनामिति पाठे मूर्तिस्सर्वगतानां द्रव्याणां परिमाणम् । तेन च धर्मवाचकपदेनात्र धर्मिणो निर्दिष्टाः, धर्मधर्मिणोरभेदाध्यवसायादिति ।

अयं भावः—विभुत्वेनाभिमतानामाकाशादीनां द्रव्याणां लौकिके व्यवहारे परत्वापरत्वे न स्तः । 'तस्माद् वा एतस्मादात्मान आकाशः सम्भूतः' इत्यादिश्रुतिषु आकाशस्याप्युत्पत्तिश्रवणेन कालकृतपरिच्छेदवत्तया पूर्वमाकाशमभूत्, ततः परं वायुरिति शास्त्रीयः कालकृतः पौर्वापर्यव्यवहारस्तु भवत्येव । अव्यापकेषु=परिच्छिन्नेषु घटादिषु भावेषु 'अयं पूर्वोऽयं परः' इति व्यवहारस्तु पूर्वापरदेशसम्बन्धनिमित्तकः । काशीतो बलियामण्डलं पूर्वम्, कर्णपुरं तु ततः परमिति व्यवह्रियमाणं देशस्य पूर्वापरत्वं तु दिङ्निमित्तकमिति । अप्रधानस्यापि पूर्वस्य परामर्शकस्तच्छब्द इत्यभ्युपगमे च कारिकायां तत एव इत्यस्य देशभेदादेव दिशः परत्वापरत्वे प्राची दिक् पूर्वा, प्रतीची तु परा इति व्यवह्रियमाणे तात्पर्यतो देशनिमित्त एवेत्यर्थः । यद्यपि एवं स्वीक्रियमाणे उत्पत्तावन्योन्याश्रय आपतति, दिङ्निमित्ते पूर्वापरकदेशस्य, देशनिमित्तके तु ते दिश इति, तथापि बीजाङ्कुरादिवद् व्यवहारानुरोधेन स सोढव्य इति । पूर्वमभूद् भविष्यति परमिति व्यवह्रियमाणं क्रियापौर्वापर्यं तु कालशक्तिकृतप्रतिबन्धाभ्यनुज्ञावशात्=कालाख्याय भगवतः शक्तिस्तत्कृतोऽयमुत्पत्स्यमानस्य कार्यस्य प्रतिबन्धः, तत्कृतैव च या उत्पद्यमानस्य कार्यस्य उत्पत्तेरभ्यनुज्ञाऽनुमतिस्तद्वशाद् व्यवतिष्ठते=व्यवस्थितं भवति इति नास्ति दिक्कालयोर्लिङ्गसङ्करः ।

तथा हि—देशेऽयं पूर्वोऽयं पर इति व्यवहारो दिङ्निमित्तक इति स दिशो लिङ्गम् । 'इदं पूर्वमभूत्, इदं तु परं भविष्यति' इति व्यवह्रियमाणं क्रियापौर्वापर्यं तु कालनिमित्तकमिति कालस्य लिङ्गमिति नास्ति दिक्कालयोर्लिङ्गसङ्कराशङ्केति ॥ ४ ॥

अमूर्तानामपि आकाशकालदिगात्मनां विभूनां काल्पनिके परत्वापरत्वे स्तः, न तु वस्तुभूते इत्याह—आकाशस्य प्रदेशेनेति ।

संयोगिधर्मभेदेनाकाशस्य देशविभाग उक्तः। तथा च मूर्तद्रव्यसंयोगेन प्रदेशवृत्तिना परिकल्पितो यः प्रदेश आकाशस्य तेन सह मूर्तद्रव्यगतैर्भागैरव्याप्यवृत्तित्वाद् यथायथं ये संयोगविभागास्तेषां दिगवच्छेदाय पूर्वापरादिभिन्ना प्रभवतीति तदुपाधिः प्रदेशानामाकाशस्य कल्पितानां पूर्वापरादिव्यवहारः। तथा च पूर्वाकाशसंयुक्तः पूर्वः, पराकाशसंयुक्तः पर इत्यादिमूर्तेषु व्यवहारः सिध्यतीत्यमूर्तपूर्वकोऽसावित्यर्थः ॥ ५ ॥

इह देशानां दिक्कृता पूर्वापरादिव्यवस्था, दिशस्तु किं कृता ? अर्थान्तरनिमित्तत्वे तस्यापि कुत इत्यनवस्था। दिशः स्वत एव पूर्वापरादित्वं देशैरपि किमपराद्धमित्याशङ्क्याह—

दिशो व्यवस्था देशानां दिग्व्यवस्था न विद्यते ।
शक्तयः खलु भावानामुपकारप्रभाविताः ॥ ६ ॥

---

अयमर्थः—स्वसंयोगिनां घटादीनां तद्भागानाञ्च यौ धर्मौ पूर्वत्वापरत्वरूपौ ताभ्यामाकाशस्य देशविभाग उक्तः। तथा च आकाशस्य प्रदेशेन अन्यैश्च घटादीनां भागैः सह ये परस्परं संयोगविभागास्तेषामुपाधित्वाय सा दिक् कल्प्यत इति।

तथा चेदमायातम्—यद्यपि अनवयवस्य विभोराकाशस्य न वस्तुभूतः प्रदेशः, तथापि आकाशसंयोगी यो घटादिस्तस्य प्रदेशस्तद्भागानाञ्च प्रदेशोऽस्त्येव। तत्संयोगेन च आकाशस्यापि प्रदेशः कल्प्यते। तथा च पूर्वाकाशसंयुक्तो घटः पूर्वः, पराकाशसंयुक्तो घटः पर इति। पूर्वाकाशसंयुक्तो घटस्य पूर्वो भागः, पराकाशसंयुक्तो घटस्य परो भाग इति व्यवहारः।

अत्र चेदं फलति—आकाशस्य प्रदेशो घटादिप्रदेशरूपोपाधिकल्पितः। आकाशस्य कल्पिते प्रदेशे ये पूर्वत्वापरत्वे ते घटस्य पूर्वत्वापरत्वाभ्यां कल्पिते, घटस्य पूर्वत्वापरत्वे देशस्य पूर्वत्वापरत्वाभ्यां कल्पिते, देशस्य पूर्वत्वापरत्वे दिशः पूर्वत्वापरत्वाभ्यां कल्पिते, दिशः पूर्वत्वापरत्वे तु लोकपालपरिगृहीतप्रदेशेषु दिवाकरसंयोगादि कल्पिते, वस्तुतो दिशो भगवच्छक्तिरूपायास्तस्य कालशक्तिवत् स्वाभाविक एव पूर्वत्वापरत्वे इति।

अयं भावः—आकाशसंयोगिनां घटादीनां पूर्वत्वापरत्वरूपधर्मभेदेन आकाशस्य देशविभाग उक्तः। तथा च प्रदेशवृत्तिना घटादिरूपमूर्तद्रव्याश्रयप्रदेशविशेषावच्छिन्नेन आकाशमूर्तद्रव्ययोः संयोगेन परिकल्पितो य आकाशस्य प्रदेशः, तेन सह घटादिरूपमूर्तद्रव्यगतैर्भागैश्च सह ये परस्परं यथायथमव्याप्यवृत्तयः सयोगा विभागा वा तेषामुपाधित्वाय - अवच्छेदाय पूर्वापरादिभिन्ना दिक् प्रभवतीति तादृशदिगुपाधिक आकाशस्य कल्पितानां प्रदेशानां पूर्वापरादिव्यवहारः। तथा च पूर्वाकाशसंयुक्तो घटादिर्मूर्तः पूर्वः, पराकाशसंयुक्तश्च स पर इत्यादिर्मूर्तेषु व्यवहारः सिध्यति

**देशानां स्वतन्त्रं रूपमाधारादिस्वभावमवधार्यत इति तत्र पूर्वापरादिभावस्य स्वरूपादेवाभावादन्यन्निमित्तं दिगाख्यं कल्प्यते दिक्कृतेनैवोपकारेण। तत्र परतन्त्रस्वभावा कल्प्यमाना नापरं पूर्वापरादिभावात् स्वभावमवलम्बितुमुत्सहते। येन तत्रावस्थिते स्वभावे देशवत् पूर्वापरादिभावार्थं निमित्तान्तरमेषणीयं स्यात्। यादृक्स्वभावा हि सा कार्यपरिकल्प्या तावदेव तत्त्वम्, नापरम्, तत्र शक्तीनां पारतन्त्र्यस्यैवोपपत्तेः (त्तिः)। शक्त्यन्तरकल्पने शक्तित्वापत्तेः शक्तित्वहानिप्रसङ्गात्। सूर्यसंयोगस्तु पूर्वापरादित्वं नापूर्वं तत्राधत्ते; अपि तु स्वभावमेवाभिव्यनक्तीत्यभिप्रायः ॥ ६ ॥**

---

इत्यमूर्तपूर्वकः=अमूर्तेषु आकाशादिषु यः पूर्वापरत्वव्यवहारस्तत्पूर्वकोऽसौ मूर्तेषु घटादिषु पूर्वापरत्वव्यवहार इति फलितार्थं इति ॥ ५ ॥

इह देशानां पूर्वापरादिव्यवस्था काश्याः पाटलिपुत्रः पूर्वः, प्रयागः पर इत्यादिरूपा दिक्कृता, अर्थान्तरनिमित्तकत्वे तु तस्याऽपि सा कुत इत्यनवस्था स्यात्। दिशः पूर्वापरादित्वे स्वत एवेत्यभ्युपगमे तु देशेष्वपि स्वत एव ते स्याताम्, देशैरपि किमपराद्धमित्याशङ्क्याह—**दिशो व्यवस्थेति**।

अयमर्थः—देशानां पूर्वापरादिव्यवस्था दिशो भवति, दिग्हेतुकेत्यर्थः। दिग्व्यवस्था तु=दिशः पूर्वापरत्वादिव्यवस्था तु अर्थान्तरनिमित्तिका न विद्यते, तथा सति अनवस्थाप्रसङ्गात्। खलु=यतो भावानां शक्तय उपकारप्रभाविताः=उपकारप्रकल्पिताः, कृभ्वस्तयः क्रियासामान्यवचना इत्यभ्युपगमात्। देशेषु पूर्वापरादिव्यवहारस्य दिक्कृतस्य दर्शनेन दिशि तादृशव्यवहारानुकूला शक्तिः स्वत एवास्ति, न तु निमित्तान्तराधेयेति गम्यत इति।

अयं भावः—देशानां स्वतन्त्ररूपमाधारादिरूपकारकस्वभावं शतशो व्यवहारदर्शनादवसीयत इति देशेषु पूर्वापरादित्वस्य स्वाभाविकस्यासम्भवादपरं निमित्तं तत्र दिक्कृतपूर्वापरादित्वव्यवहाररूपोपकारं दृष्ट्वा कल्प्यते। तत्र भावस्वरूपात् पृथग्भावशक्तेरनुपलम्भात् पूर्वापरादिव्यवहाररूपोपकाररूपकार्यानुमेयत्वेन वह्न्यादिशक्तिवत् शक्तिमत्परतन्त्रस्वभावा कल्प्यमाना दिगाख्या भावानां मूर्तानां शक्तिः पूर्वापरादिमात्रादन्यं स्वभावं नावलम्बितुमुत्सहते। कार्यानुकूलस्यैव शक्तिस्वभावस्य कल्पयितुं युक्तत्वात्। यदि तु पूर्वापरादिभावादन्यस्तस्याः स्वभावः कल्प्येत, तदा तस्मिन् स्वभावेऽवस्थिते सत्येव देशेष्विव पूर्वापरादिभावार्थं स्वभावादतिरिक्तं निमित्तमेषणीयं स्यात्।

यादृक्स्वभावा हि शक्तिः कार्यानुमेया तावदेव हि तस्यास्तत्त्वम्=पारमार्थिकं रूपम्, नापरम्। तत्र शक्तीनां सर्वासामपि पारतन्त्र्यस्यैवोपपत्तिः, तासां स्वातन्त्र्यमाश्रित्य तत्र परतन्त्रशक्त्यन्तरकल्पने तासां शक्तिमत्त्वापत्तेः, शक्तित्व-

शक्तित्वमेवास्याः स्वतन्त्रभावरूपतापाकरणाय पोषयितुमाह –

**प्रत्यस्तरूपा भावेषु दिक् पूर्वेत्यभिधीयते ।**
**पूर्वबुद्धिर्यतो दिक् सा समाख्यामात्रमन्यथा ।। ७ ।।**

प्रत्यस्तम् उपाधित्वेन भावेषु समारोपितं रूपम् अस्याः, तथाभूता पूर्वा दिग् इति व्यवह्रियते, यतो यस्याः सकाशात् पूर्वबुद्धिः पूर्वोऽयमर्थ इति ज्ञानम् । पूर्वत्वमुपलक्षणम् । परत्वादिरपि गृह्यते । दिक् सा परोपाधिरूपेत्यर्थः ।

अन्यथा तूपाधिरूपानपेक्षायां स्वातन्त्र्याश्रयणे भावतो दिङ् न भवति; अपि तु

---

हानिप्रसङ्गात् । प्रागुक्तो दिग्विभागहेतुः सूर्यसंयोगोऽपि तत्र - दिशि नापूर्वं पूर्वापरादित्वं विधत्ते; अपि तु तथाभूतं स्वभावमेवाभिव्यनक्ति, इत्येतत्कारिकाया अभिप्राय इति ।। ६ ।।

दिशः स्वतन्त्रभावस्वरूपत्वनिरासपूर्वकं तस्याः शक्तित्वमेव पोषयितुमाह— प्रत्यस्तरूपा भावेष्विति ।

अयमर्थः—नहि पृथिव्यादिवत् स्वतन्त्रभावरूपा दिक्; अपि तु भावेषु अव्यापिषु मूर्तेषु तेषां दिगुपाधित्वेन तेषु प्रत्यस्तरूपा समारोपितरूपा दिक् पूर्वेत्यभिधीयते । इदमुपलक्षणं परत्वस्यापि । यथा कालोपाधिः क्रियादण्डघटिकादिकालपदेनाभिधीयते, तथा दिगुपाधिर्भाव एव पूर्वादिदिक्पदेनाभिधीयत इति तात्पर्यम् । इदानीं दिशोऽनौपाधिकं रूपमाह—पूर्वबुद्धिर्यतो दिक् सा इति । यतः=यां निमित्तीकृत्य, पूर्वबुद्धिः=पूर्वोऽयमर्थ इति ज्ञानम्, जायते सा दिगिति लक्षणम् ।

तथा चेदमायातम्—भावरूपैरुपाधिभिः परिच्छिद्यमाना भावपरतन्त्रा भावानां पूर्वापरादिबुद्धिहेतुरेतादृशबुद्धिरूपकार्यानुमेया भावस्वरूपात् पृथगनुपलभ्यमाना भावानां शक्तिरेव दिगिति ।

अन्यथा तु=भावरूपोपाध्यनपेक्षायां तु भावरूपोपाधिपारतन्त्र्यानाश्रयणे स्वातन्त्र्याश्रयणे चेति यावत् । भावरूपा काचन दिङ् न भवति ; अपि तु तदानीं दिगिति पदं समाख्यामात्रम्, अर्थासंस्पर्शि=अर्थाविषयकम्=अर्थरहितमिति ।

अयं भावः—भावानां दिगुपाधित्वेन तेषु प्रत्यस्तं समारोपितं रूपं यस्याः सा तथाभूता, भावेषु प्रत्यस्तरूपा पूर्वा दिगिति व्यवह्रियते । यतः=यस्याः सकाशाद् अत्रावधित्वविवक्षायामपादाने पञ्चमी । यां निमित्तीकृत्येत्यर्थे तु ल्यब्लोपे पञ्चमी । पूर्वबुद्धिः=पूर्वोऽयमर्थ इति ज्ञानं जायते । अत्र पूर्वत्वमुपलक्षणं परत्वादेरपि । सा दिक् परोपाधिकरूपेत्यर्थः । सर्वेष्वव्यापिषु भावेष्वनुगताया दिक्शक्तेः स्वरूपं हि एकत्वेनापरिच्छिन्नमपि परिच्छिन्नैर्भावैरुपाधिभिः पूर्वापरत्वादिरूपेण परिच्छिद्यत इत्येवं परोपाधिकरूपा दिग् भवति । अन्यथा तूपाधिरूपानपेक्षायां स्वतन्त्रभावरूप-

सा तदानीं समाख्यामात्रं दिगिति, स्वतन्त्रद्रव्यविषयं शब्दमात्रं वस्त्वसंस्पर्शि। तथा ह्युक्तम्—

दिक् साधनं क्रिया काल इति वस्त्वभिधायिनः।
शक्तिरूपे पदार्थानामत्यन्तमनवस्थिताः॥ इति।
(वा० प० ३, दिक्० १)

तदेवं नित्यपारतन्त्र्याद् दिशः कार्यैककल्प्यायाः स्वतन्त्रपदार्थगतविकल्पानवसर इति स्वतो नानास्वभावत्वे सहकारिसूर्यसञ्चारविशेषेण किमेकस्वभावत्वे वा सहकारिभेदेऽपि न विचित्रं कार्यं कुर्यादित्येतदशक्यं वक्तुम्। यथा हि पूर्वापरादिप्रत्ययलक्षणेन कार्येणानुमितसतत्त्वा तथाभ्युपगन्तव्या शक्तिरूपा दिक्॥७॥

ननु च पूर्वापरादिप्रत्ययः सम्मुखासम्मुखादिनिमित्तो भविष्यति। यथोक्तं भरते—"यतोऽभिमुखं भरताः प्रविशन्ति सा पूर्वा दिङ् मन्तव्या" इति। तथा

---

त्वाश्रयणे तु भावतः=वस्तुतो दिङ् न भवति; अपि तु सा तदानीं समाख्यामात्रम्=संज्ञामात्रं दिगिति। यदि दिक्पदं स्वतन्त्रद्रव्यविषयकम्, तदा शब्दमात्रं वस्त्वसंस्पर्शि। तथा ह्युक्तम्—

दिक् साधनं क्रिया काल इति वस्त्वभिधायिनः।
शक्तिरूपे पदार्थानामत्यन्तमनवस्थिताः॥ इति।
(वा० प० ३, दिक्० १)

यदा दिगादयः शब्दाः स्वतन्त्रद्रव्याभिधायिनः, तदा पदार्थानां शक्तिरूपे दिगाद्यर्थेऽत्यन्तमनवस्थिता अबोधका इति तदानीं दिगादयः शब्दाः संज्ञामात्रम्, न त्वर्थवन्त इति प्रकृतेः कारिकार्थः।

तदेवं कार्यैककल्प्याया दिक्शक्तेर्नित्यं स्वपरिच्छेदकोपाधिभावपरतन्त्रत्वात् स्वतन्त्रपदार्थगतानां विकल्पानामनवसर इति दिशः स्वतो नानास्वभावत्वे किं वा स्वत एकस्वभावत्वेऽपि सहकारिसूर्यसञ्चारविशेषेण नानास्वभावत्वे औपाधिके स्वीक्रियमाणे "सहकारिभेदेऽपि न विचित्रं कार्यं दिक्शक्तिः कुर्यात्" इति वक्तुमशक्यम्।

एवञ्च यथा हि पूर्वापरादिप्रत्ययरूपेण कार्येणानुमितस्वभावा शक्तिरूपा दिक्, तथैवाभ्युपगन्तव्येति नास्ति विविधविकल्पानामवसर इति॥७॥

ननु च भावेषु पूर्वापरादिप्रत्ययः परम्परया दिङ्निमित्तकः; किन्तु सम्मुखासम्मुखादिदेशनिमित्तको भविष्यति। मुखस्य हि पुरोऽग्रे वर्तमानो देशः सम्मुखमित्युच्यते, तद्विपरीतस्तु असम्मुखमिति।

यथोक्तं भरते सूत्रे—"यतोऽभिमुखं भरताः प्रविशन्ति सा पूर्वा दिङ् मन्तव्या" इति।

लोकेऽप्यभिमुखस्थः पुरोवर्ती भण्यते, पृष्ठतः स्थितः पश्चात् स्थित इत्युच्यते । तथा "इह हस्तदक्षिणः पन्थाः, इह हस्तवामः" इत्यादिव्यवहारः स्वाङ्गनिमित्त इति नास्ति दिक्कल्पनानिमित्तमित्याशङ्क्याह—

**स्वाङ्गाद् व्यवस्था या लोके न तस्यां नियता दिशः ।**
**प्रत्यङ्गमुखस्य यत् पश्चात् तत् पुरस्ताद् विपर्यये ॥ ८ ॥**

स्वाङ्गं मुखमवधिमपेक्ष्य या पूर्वादिव्यवस्था तत्र दिशो नियता न व्यवतिष्ठन्ते । पश्चान्मुखस्य हि यद्वस्तु पश्चादभूत्, तदेव प्राङ्मुखत्वे तस्य पूर्वस्मिन् देशे भवतीति प्राङ्मुख उदङ्मुखो वा भुञ्जीतेति व्यवस्था न स्यात् । तस्मादनादिरूढदिङ्निमित्ता पूर्वापरादिव्यवस्थाङ्गीकार्या ॥ ८ ॥

---

अस्यार्थः—यं देशमित्यर्थे सार्वविभक्तिकस्तसिः । यं देशम् अभिमुखम्=मुखस्य पुरः अग्रेऽवस्थितमाश्रित्य भरताः कुशीलवा रङ्गं प्रविशन्ति, स देशः पूर्वा दिङ् मन्तव्या, नापूर्वा इति । लोकेऽपि अभिमुखदेशस्थः पुरोवर्ती=पूर्वदिगवस्थितः, भण्यते । पृष्ठदेशे स्थितश्च पश्चात्=परस्यां दिशि स्थित इत्युच्यते । तथा—'इह हस्तदक्षिणः पन्थाः, इह हस्तवामः' इत्यादिव्यवहारोऽपि पूर्वापरप्रत्ययवत् स्वाङ्गनिमित्तक एव ।

तदेवं देशे पूर्वापरादिप्रत्ययः स्वाङ्गनिमित्तकः, भावेषु तु स देशनिमित्तक इति नास्ति अपूर्वदिक्शक्तिकल्पनायां किञ्चिन्निमित्तमित्याशङ्क्याह--स्वाङ्गाद् व्यवस्थेति ।

अयमर्थः—या लोके तदनुसारिणि भरतसूत्रे च प्रागुक्ते स्वाङ्गान् मुखादितः पूर्वापरादिव्यवस्थाऽस्ति, तस्यां दिशो नियता न भवन्ति । तथा हि—प्रत्यङ्मुखस्य=पश्चात्कृतमुखस्य पुरुषस्य यद् वस्तु पश्चादिति व्यवह्रियमाणमभूत्, तदेव वस्तु विपर्यये तस्यैव पुरुषस्य प्राङ्मुखत्वरूपे प्रत्यङ्मुखत्वाभावे पुरस्तादिति व्यवह्रियते । अतः 'प्राङ्मुख उदङ्मुखो वा भुञ्जीत' इति नियताया व्यवस्थाया उपपत्तये नियताः प्राच्यादिरूपा दिशोऽङ्गीकार्या इति ।

अयं भावः—स्वाङ्गं मुखमवधिं स्वनिमित्तत्वेनापेक्ष्य या पूर्वापरादिप्रत्ययनिमित्तभूता पूर्वापरादिदिग्व्यवस्था, तत्र दिशो नियता न व्यवतिष्ठन्ते । यद्धि वस्तु पश्चान्मुखस्य यस्य पुरुषस्य पश्चादभूत्, तदेव वस्तु तस्य पुरुषस्य प्राङ्मुखत्वे पूर्वस्मिन् देशे भवतीति प्राङ्मुख उदङ्मुखो वा भुञ्जीतेति व्यवस्था नियता न स्यात् । तस्माल्लोकेऽनादिकालतो रूढत्वेनाप्रत्याख्येयदिङ्निमित्तैव पूर्वापरादिव्यवस्थाऽङ्गीकार्या इति ॥ ८ ॥

काचित् तु दिगनपेक्षापि पूर्वापरादिता देशानां रूढेत्याह—

देशव्यवस्थानियमो दिक्षु न व्यवतिष्ठते ।
रूढमप्यपरत्वेन पूर्वमित्यभिधीयते ॥ ६ ॥

दिक्षु दिङ्निमित्तः पूर्वदेशदक्षिणापथोत्तरापथादीनां नियमो न व्यवस्थितः । तथा हि दिगपेक्षया पाश्चात्योऽपि पूर्वदेश इति व्यवह्रियते । तथा च दक्षिणापथात् पूर्वदेशं गच्छन् पूर्वदेशं गच्छामीति ब्रूते । दिग्व्यवस्थया तु स उत्तरो

---

तत्र देशे पूर्वापरादिव्यवस्था द्विविधा—काचिद् दिक्सापेक्षा, काचित् तु दिगनपेक्षा । तत्र प्रायेण दिक्सापेक्षैव पूर्वापरादिव्यवस्था लोकव्यवहारे दृश्यते । काचित् तु दिगनपेक्षापि दिशानां पूर्वापरादिता रूढाऽस्त्येव व्यवहारविषयत्वमाप्ता लोक इत्याह—**देशव्यवस्थानियम** इति ।

अयमर्थः—दिक्षु इति सत्सप्तमीनिमित्तत्वरूपेऽर्थे पर्यवसितान्वयं निमित्तत्वावधारकं द्योतयन्ती । तथा च दिङ्निमित्तो देशव्यवस्थानियमो देशे पूर्वापरादित्वव्यवस्थाया नियमो न व्यवतिष्ठते, न व्यवस्थितोऽस्ति, क्वचिद्देशे पूर्वापरादित्वव्यवस्थाया दिगनपेक्षाया अपि दर्शनात् । तदेव दर्शयत्युत्तरार्धेन—रूढमपीति । यद्दिगपेक्षया व्यवस्थया लोकेऽपरत्वेन=पाश्चात्यत्वेन रूढम्, तदपि पूर्वमित्यवधीयते । यथा जापानदेशात् सारनाथतीर्थं बौद्धानामागच्छन् गयां वा आगच्छन् केनचित् स्ववयस्येन पृष्टः पाश्चात्यदेशान् योरोपसंज्ञान् गच्छसि पूर्वदेशं वा इति स ब्रूते पूर्वदेशं गच्छामीति ।

अयं भावः—भारतस्य मानदण्डौ हिमवद्विन्ध्यौ विनशनञ्च=कुरुक्षेत्रमिति । तत्र हिमवद्विषये उक्तं कविभिः -"पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः" ( कु० सं० १।१ ) इति ।

तत्र विन्ध्याद् दक्षिणो दक्षिणापथ इत्युच्यते । हिमवान् तत्परिसरदेशश्च उत्तरापथ इति । विनशनञ्च सन्निहत्यपदेनाप्युच्यते । तत्र च काले काले सर्वेषां तीर्थानां सन्निधिरप्यभिहितेति विज्ञेयं बहुश्रुतैरित्यलं प्रसक्तानुप्रसक्तचिन्तया । तथा च विनशनान्महातीर्थात् पूर्वे पूर्वदेशा आसमुद्रम् । तत्राप्युक्तं कविभिः—"आसमुद्रक्षितीशानाम्" इति । विनशनात् परं तु पश्चिमदेशाः परंपरं ह्लसमानधर्माणः परम्परया आर्याः क्षत्रिया वा एव भारतस्य प्रत्यन्तवासिनो ब्राह्मणानामदर्शनेन म्लेक्षत्वमुपागता इति । तथा च स्मर्यते—"वृषलत्वमनुप्राप्ता ब्राह्मणानामदर्शनात्" इति । एतद्धि भारतस्य मानचित्रम् । तत्र दिक्षु=दिङ्निमित्तः, पूर्वदेशदक्षिणापथोत्तरापथादीनां नियमो न व्यवस्थितः । तथा हि दिगपेक्षया जापानदेशीयानां पाश्चात्यमपि भारतं वर्षं पूर्वदेश इति तैर्व्यवह्रियते । यथोदाहृतं प्राक् । अन्यदप्युदाहृतं हेलाराजेन—"तथा च दक्षिणापथात् पूर्वदेशं गच्छन् पर्वदेशं गच्छामीति ब्रूते ।

भवति। तस्मात् पूर्वादित्वमत्र दिगनपेक्षं रूढम्। दिगपेक्षया तु यथायथं व्यवहारोऽत्राप्युपपद्यते।

तथा च "इह कस्मान्न भवति पूर्वस्मिन् देशे वसति" इति भाष्ये चोदयित्वा—"नैष दोषः, देशविशेषणमेतत्" (म० भा० ५।३।२७) इति परिहृतम्।

नायं पूर्वशब्दो रूढत्वादवध्यपेक्षः प्रवृत्तः, तेन न दिक्शब्दः सन् देशे वर्तते। देशसामान्यं तु देशशब्दादवगम्यमानं विशिनष्टि। ततो दिक्शब्दाद् देशवृत्तेर्विधीयमानः प्रत्ययो नातो रूढशब्दाद् भवतीति भाष्यार्थः।

केचिद् व्याचक्षते—नायं पूर्वशब्दो देशं देशरूपेण कथयति, देशशब्देनैव तस्याभिहितत्वात्। देशाधिकरणस्तु कश्चिद् विशेषो देशशब्दादप्रतीयमानः पूर्वशब्देनाभिधीयते दिग्विशेषावच्छेदनिबन्धन इति।

एतदयुक्तम्, देशसामानाधिकरण्याद् देशवृत्तिभ्यः प्रत्ययस्येष्टः। अवश्यं हि दिक्कालयोर्व्यवच्छेदार्थं देशशब्द उपादातव्य इति। तत्र प्रत्ययाभावे को विषयः स्यात्?

---

दिग्व्यवस्थया तु स उत्तरो भवति" इति। अत्र भारतीयानां दक्षिणापथभुवामपि काश्यादिः पूर्वदेशत्वेन प्रसिद्धः। दक्षिणापथात् तु स उत्तरो भवति। तस्मात् पूर्वापरादित्वमत्र दिगनपेक्षं रूढम्। दिगपेक्षया तु यथातथं व्यवहारोऽपि अत्रोपपद्यते।

तथा च —"इह कस्मान्न भवति, पूर्वस्मिन् देशे वसति" इति भाष्ये चोदयित्वा—'नैष दोषः, देशविशेषणमेतत्" इति परिहृतम्।

नायं पूर्वशब्दो लोकपालपरिगृहीतपुरीप्रदेशरूपावध्यपेक्षः प्रवृत्तः, रूढत्वात्। तेनायं दिक्शब्दः सन् देशे वर्तते। देशसामान्यं तु देशशब्दादवगम्यमानं विशिनष्टि। ततो दिक्शब्दाद् देशवृत्तेर्विधीयमानः प्रत्ययो नातो रूढशब्दाद् भवति, दिक्शब्दत्वाभावादिति भाष्यार्थः।

केचिद् व्याचक्षते—(१) 'नायं पूर्वशब्दो देशं देशरूपेण कथयति। देशशब्देनैव तस्याभिहितत्वात्।

(२) किन्तु देशाधिकरणः=देशवृत्तिः कश्चिद् विशेषः पूर्वदिग्भवत्वरूपोऽसाधारणो धर्मः। देशशब्दादप्रतीयमानो दिग्विशेषावच्छेदनिबन्धनः=पूर्वदिक्कृतो य इतरदेशव्यावृत्तिरूपोऽच्छेदस्तन्निमित्तकः पूर्वशब्देनाभिधीयत इति।

तदेतदयुक्तम्।

तथा हि अत्रास्ति वाक्यद्वयम्। तत्र द्वितीयवाक्यस्य देशाधिकरणस्तु इत्यादिकस्यायुक्तता देशसामानाधिकरण्याद् देशवृत्तिभ्यः पूर्वादिभ्यो दिक्शब्देभ्यः प्रत्ययस्येष्टेरिति। प्रथमवाक्यस्य नायं पूर्वशब्द इत्यादिकस्यायुक्तता तु 'पूर्वस्मिन् देशे वसति' इत्यत्र दिक्कालयोर्व्यवच्छेदार्थमवश्यं देशशब्द उपादातव्य इति तत्र प्रत्ययाभावे को विषयभूमिः स्याद् दिक्शब्देभ्यस्तद्धितप्रत्ययस्य प्रकृतस्येति।

तदेवं पूर्वदेशो दक्षिणापथ इत्यादावनन्यापेक्षे रूढेऽपि पूर्वादित्वे सहजे दिङ्निमित्तमपरं रूपान्तरमपि भवति। यथा स्वाङ्गनिमित्तेऽन्यथा व्यवहारे दिङ्निमित्तोऽन्यथा व्यवहार इति मुख्यं दिङ्निमित्तमेव पूर्वादित्वमित्युपपादितम् ॥९॥

तथा च दिश्यपरोपाधिका पूर्वादीनां वृत्तिः, देशे तु दिक्सम्बन्धादिति भाष्येण संवादयति—

**अतोऽभाषितपुंस्कत्वात् पुंवद्भावो न सिद्ध्यति।**
**अस्मिन्नर्थे न शब्देन प्रसवः क्वचिदुच्यते ॥ १० ॥**

"दक्षिणोत्तराभ्यामतसुच्" (पा० ५।३।२८) इत्यत्र भाष्यम्—"अकारः किमर्थः, न तसुजेव क्रियताम्। एवं च स्वरार्थश्चकारो न करिष्यते प्रत्ययस्वरेणैव सिद्धेः।" तत उक्तम्—"लिङ्गविशिष्टपरिभाषया दक्षिणाशब्दादप्ययं भवति। तत्रासत्यकारे यस्येति लोपो न स्यात्" (म० भा० ५।३।२८) इति।

अत्र प्रत्ययस्याकारमाक्षिप्य लिङ्गविशिष्टपरिभाषया टाबन्ताभ्यां विधाव-

---

तदेवं पूर्वदेशो दक्षिणापथ उत्तरापथ इत्यादौ दिगनपेक्षे रूढेऽपि सहजे पूर्वादित्वे दिङ्निमित्तमपरमपि पूर्वादिदिग्भवत्वरूपं भवति रूपान्तरम्। यथा मुखहस्तादिरूपस्वाङ्गनिमित्तोऽन्यथा पूर्वादित्वव्यवहारे सत्यपि दिङ्निमित्तकोऽन्यथा व्यवहार इति। मुख्यं दिङ्निमित्तकमेव पूर्वादित्वमित्युपपादितं प्रागिति ॥ ९ ॥

तथा च पूर्वादिशब्दानां दिशि वृत्तिरपरोपाधिका=दिगतिरिक्तभावनिमित्तिका न भवति; किन्तु सहजैव। देशे तु तेषां वृत्तिर्दिक्सम्बन्धादिति। प्रकृतसन्दर्भपर्यवसितमर्थं भाष्येण संवाद्य प्रमाणयति—अतोऽभाषितपुंस्कत्वादिति।

अयमर्थः—यतो दिशि पूर्वादिशब्दानां न परोपाधिका वृत्तिः, अतो दिशि तेषामभाषितपुंस्कत्वात्, अतसुच्प्रत्ययस्याद्यकाराभावे दक्षिणत उत्तरत इत्यादौ पुंवद्भावो न सिध्यति, यतोऽस्मिन्नर्थे=दिग्रूपेऽर्थे दक्षिणशब्देन उत्तरशब्देन वा क्वचिदपि व्यवहारे प्रसवः=पुंस्त्वं नोच्यत इति। देशे तु यद्यपि दक्षिणादिशब्दैः पुंस्त्वमुच्यते, तथापि प्रवृत्तिनिमित्तभेदाद् न तेषां दिशि भाषितपुंस्कत्वमिति बोध्यमिति।

अयं भावः—"दक्षिणोत्तराभ्यामतसुच्" (पा० ५।३।२८) इति सूत्रे भाष्यम्—'अकारः किमर्थः, न तसुजेव क्रियताम्। एवञ्च स्वरार्थश्चकारो न करिष्यते। प्रत्ययस्वरेणैव सिद्धेः" इति।

तत उक्तम्—"लिङ्गविशिष्टपरिभाषया दक्षिणाशब्दादप्ययं भवति। तत्रासत्यकारे यस्येति लोपो न स्यात्" इति।

अत्रातसुच्प्रत्यये प्रत्ययस्याकारमाक्षिप्य लिङ्गविशिष्टपरिभाषया टाबन्ता-

सत्यकारे यस्येति लोपाभावाद् दक्षिणत उत्तरत इति रूपं न सिद्धयेदिति सत्यकारे आकारलोपेन तथाकारस्तु श्रूयेतेति प्रयोजनमुक्त्वा पुंवद्भावेन सिद्धमिति पुनराक्षिप्य न सिद्धयति, भाषितपुंस्कस्य पुंवद्भावः। न चैतौ भाषितपुंस्कावित्युक्तम्।

पुनरप्याक्षिप्तम्—"ननु चैतावपि भाषितपुंस्कौ, दक्षिण उत्तर इति पुमान् भाष्यत इति"।

तत उक्तम्—"समानायामाकृतौ भाषितपुंस्कस्य पुंवद्भावः। आकृत्यन्तरे चैतौ भाषितपुंस्कौ। दक्षिणोत्तरा इति दिक्शब्दौ, दक्षिण उत्तर इति व्यवस्थाशब्दौ"।

तदेतद् भाष्यं रूढिशब्दत्वे दिशि पूर्वादीनां युज्यते, नान्यथा।

तथा ह्ययमर्थः—भाषितः पुमान् यस्मिन्नित्यर्थोऽन्यपदार्थः समाश्रीयते, स

---

भ्यां दक्षिणोत्तराशब्दाभ्यां तसुज्विधौ प्रत्ययाद्याकारेऽसति यस्येति लोपाभावाद् दक्षिणत उत्तरत इति रूपं न सिद्धयेदिति। अतसुच्प्रत्ययाद्यकारे सति तु दक्षिणोत्तराशब्दयोराकारलोपेन अतसुच्प्रत्ययाद्यकारः श्रूयेतेति प्रयोजनमुक्त्वा अतसुच्प्रत्ययाद्यकाराभावेऽपि दक्षिणत उत्तरत इति रूपं पुंवद्भावेन सिद्धमिति पुनराक्षिप्य, न सिध्यति भाषितपुंस्कस्य पुवद्भावः। न चैतौ भाषितपुंस्कावित्युक्तम्।

ततः पुनरप्याक्षिप्तम्—ननु चैतावपि भाषितपुंस्कौ, दक्षिण उत्तर इति पुमान् भाष्यत इति।

अत्र दक्षिण इति दक्षिणदेशस्थितः, उत्तर इति उत्तरदेशस्थित उच्यते।

तदनन्तरमुक्तम्—'समानायामाकृतौ भाषितपुंस्कस्य पुंवद्भावः, आकृत्यन्तरे चैतौ भाषितपुंस्कौ। दक्षिणोत्तरा इति दिक्शब्दौ, दक्षिण उत्तर इति व्यवस्थाशब्दौ' इति।

अत्र भाष्ये 'आकृतौ' इत्यस्य प्रवृत्तिनिमित्ते इत्यर्थः। 'आकृत्यन्तरे' इत्यस्य भिन्ने प्रवृत्तिनिमित्ते इत्यर्थः। अत्र 'व्यवस्थाशब्दौ इत्यस्य देशवाचिनौ' इति शेषः। अत्र "परस्परापेक्षा आत्मस्थितिर्व्यवस्था" इति हेलाराजोऽत्रैव कारिकायाम्। अत एव "स्वाभिधेयापेक्षावधिनियमो व्यवस्था" (पा॰ १।१।३४) इति कौमुद्यां पूर्वपरादिसूत्रे दीक्षितः।

तदेतद् भाष्यं पूर्वादिशब्दानां दिशि रूढिशब्दत्व एव युज्यते, नान्यथा। दिशि पूर्वादिशब्दानां देश इव परोपाधिकवृत्तित्वे तु भाषितपुंस्कत्वस्य सम्भवे नेदं भाष्यमसंगतं स्यात्।

तथा हि भाषितपुंस्कशब्दस्यायमर्थः—भाषितः पुमान् यस्मिन्नर्थे इत्यर्थोऽन्यपदार्थो यदि समाश्रीयते, तदा स चार्थसामान्यरूपोऽभिधेयो भाषितपुंस्कशब्दस्य

**चाभिधेयो नोपपद्यते। तस्य पदार्थ आत्मा स्वभाव इत्यन्ततो व्यपदेशेन भाषितपुंस्कताव्यभिचारात् किमनेन व्यवच्छिद्येत ? तस्मात् प्रवृत्तिनिमित्तलक्षणोऽर्थोऽन्यपदार्थः। तत्रापि भिन्ने प्रवृत्तिनिमित्ते सर्वत्रैव भाषितपुंस्कता अन्ततोऽर्थस्वभावादिशब्देनेत्येकस्मिन् प्रवृत्तिनिमित्ते सामर्थ्याद् भाषितपुंस्कता समाश्रीयते।**

**अर्थे च कार्यस्यासम्भवादभिधेयधर्मेण तद्वचनः शब्दो भाषितपुंस्क इत्युच्यत इति प्रवृत्तिनिमित्तस्यान्यपदार्थत्वे समानायामाकृतौ यो भाषितपुंस्कः शब्दस्तस्य पुंवद्भाव इत्यर्थोऽवतिष्ठते।**

**दिशि च दक्षिणोत्तरेति स्वाभाविकत्वादभिधानस्य, अस्मिन् दिग्लक्षणेऽर्थे प्रसवः पुंस्त्वमाभ्यां शब्दाभ्यां न क्वचिद्विषयेऽभिधीयते; अपि तु दिङ्निमित्ता यदा देशेन तयोर्वृत्तिः, तदा व्यवस्थाशब्दौ प्रसवमभिधत्तः। परस्परापेक्षात्मस्थितिर्व्यवस्था। यथा दक्षिणः शैलाभोग इत्युक्ते कुत इत्यवधिप्रतीतिः।**

**तत्र चैतौ भाषितपुंस्कावित्याकृत्यन्तरे भाषितपुंस्कत्वादेकस्मिन् प्रवृत्तिनिमित्ते तदभावात् पुंवद्भावो न भवति अत्र सौत्रः। "सर्वनाम्नो वृत्तिमात्रे**

---

नोपपद्यते। पदार्थ आत्मा स्वभाव इत्यन्ततस्तस्य व्यपदेशेन भाषितपुंस्कत्वाव्यभिचारात् किमनेन व्यवच्छिद्येत ? तस्मात् प्रवृत्तिनिमित्तलक्षणोऽर्थविशेषोऽन्यपदार्थः। तत्रापि भिन्ने प्रवृत्तिनिमित्तेऽन्ततोऽर्थस्वभावादिशब्देन सर्वत्रैव भाषितपुंस्कता इति कस्मिन् प्रवृत्तिनिमित्ते भाषितपुंस्कता समाश्रीयते सामर्थ्यात्।

प्रवृत्तिनिमित्तरूपेऽर्थे च पुंवद्भावादिलक्षणस्य कार्यस्यासम्भवादभिधेयधर्मेण भाषितपुंस्कत्वेन तद्वचनः=भाषितपुंस्कप्रवृत्तिनिमित्ताधायी शब्दो भाषिकपुंस्क इत्युच्यत इति प्रवृत्तिनिमित्तस्यान्यपदार्थत्वे समानायामाकृतौ यो भाषितपुंस्कः शब्दस्तस्य पुंवद्भाव इत्यर्थोऽवतिष्ठते।

दिशि च दक्षिणोत्तरेत्यभिधानस्य=शब्दस्य स्वाभाविकत्वात्=परोपाधिकवृत्तिराहित्येन सहजवृत्तिमत्वात्, रूढिशब्दत्वादिति यावत्। अस्मिन् दिग्लक्षणेऽर्थे दक्षिणोत्तराशब्दाभ्यां प्रसवः पुंस्त्वं क्वचिद् व्यवहाररूपे विषये नाभिधीयते; अपि तु यदा देशे तु दिङ्निमित्ता दक्षिणोत्तरशब्दयोर्वृत्तिः, तदा एतौ व्यवस्थाशब्दौ=व्यवस्थार्थकौ शब्दौ, प्रसवम्=पुंस्त्वमभिधत्तः। परस्परापेक्षा आत्मस्थितिर्व्यवस्था। यथा दक्षिणः शैलाभोग इत्युक्ते सति कुत्र इत्यवधेर्नियमेन प्रतीतिर्भवति।

तत्र चैतौ दक्षिणोत्तरशब्दौ भाषितपुंस्कावित्याकृत्यन्तरे=दिक्त्वसमानाधिकरणदक्षिणात्वादिरूपाकृतेर्भिन्ने दक्षिणदिग्भवदेशत्वरूपे प्रवृत्तिनिमित्ते, भाषितपुंस्कत्वाद् एकस्मिन् प्रवृत्तिनिमित्ते भाषितपुंस्कत्वाभावात्। अत्र=दक्षिणत उत्तरत इत्यत्र 'तद्धितेष्वाकृत्वसुचः' (पा० ६।३।३५) इति सूत्रविहितः पुंवद्भावो न भवति। तत्र सूत्रे पूर्वसूत्राद् भाषितपुंस्कादित्यस्यानुवृत्तेः। 'सर्वनाम्नो वृत्तिमात्रे

पुंवद्भावः'' इत्यौपसंख्यानिकं पुंवद्भावमाश्रित्य टाबन्ताभ्यामपि दक्षिणोत्तरशब्दाभ्यामतसुचोऽकारं विनाऽपि सिद्धेः 'षष्ठ्यतसर्थप्रत्ययेन' ( पा० २।३।३० ) इति विशेषणार्थोऽकारो व्यवस्थापितः।

अत्र तु चोदितम्---ननु च दक्षिणोत्तरेत्येतावपि व्यवस्थाशब्दाविति।

अयमर्थः--उत्तरा पूर्वेति चोक्ते कुतः पूर्वा कुतश्चोत्तरेत्यवश्यमवधिरपेक्षणीयः, विना तेन स्वार्थासम्भवात्।

तथा च दिश्यप्यवध्यपेक्षत्वात् पूर्वादिशब्दानां प्रवृत्तेस्तत्रापि व्यवस्थाशब्दत्वमित्येकस्यां व्यवस्थाकृतावस्त्येव भाषितपुंस्कत्वम्। केवलं च परोपाश्रयत्वाद् दिशि वृत्तेर्देशशब्देभ्यो दिक्शब्दा भिद्यन्ते।

अतः परमुक्तम्—दिक्शब्दकार्याण्येव न प्राप्नुवन्तीति। नामधेयत्वेन दिशामप्रवृत्तेर्नैते दिक्शब्दाः स्युरित्याशयः।

तत्रोत्तरम्—''दिशो यदा व्यवस्थां वक्ष्यन्ति''।

''यदि तर्हि यो यो दिशि वर्तते स स दिक्शब्दो रमणीयादिष्वतिप्रसङ्गः'' (म० भा० २।२।२८) इति।

---

पुंवद्भावः' (वा० २।१।५१) इति वार्तिकविहितं पुंवद्भावमाश्रित्य टाबन्ताभ्यामपि दक्षिणोत्तरशब्दाभ्यामतसुचोऽकारं विनापि दक्षिणत उत्तरत इति रूपसिद्धेः 'षष्ठ्यतसर्थप्रत्ययेन' (पा० २।३।३०) इति सूत्रे तसि व्यावृत्त्यर्थमतसुचोऽकारो व्यवस्थापितः।

अत्र तु चोदितम्—ननु च दक्षिणोत्तरेत्येतावपि व्यवस्थाशब्दाविति।

अयमर्थः—उत्तरापूर्वेति चोक्ते कुतः पूर्वा कुतश्चोत्तरेति नियमेनावधिरपेक्षणीयः, विना तेन तयोरर्थासम्भवात्।

तथा च दिश्यपि पूर्वादिशब्दानां प्रवृत्तेरवध्यपेक्षत्वात् तत्रापि व्यवस्थाशब्दत्वमित्येकस्यां व्यवस्थारूपायामाकृतौ अस्त्येव भाषितपुंस्कत्वं पूर्वादिशब्दानाम्। केवलं च तेषां दिशि वृत्ते रूढिरूपाया अपरोपाधिकत्वेन देशशब्देषु तेषां वृत्तेश्च परोपाधिकत्वेन = दिगुपाधिकत्वेन देशशब्देभ्यो दिक्शब्दा भिद्यन्ते।

अतः परमुक्तम्—दिक्शब्दकार्याण्येव न प्राप्नुवन्तीति। दिश्यपि पूर्वादिशब्दानां परोपाधिकानां दिशां नामधेयत्वेना वृत्तेर्नैते दिक्शब्दाः स्युरित्याशयः।

तत्रोत्तरम्—''दिशो यदा व्यवस्थां वक्ष्यन्ति'' इति। दिग्वाचकाः शब्दा यदा व्यवस्थामपि वक्ष्यन्ति =अभिधास्यन्तीति तदा ते दिक्शब्दा इति तदर्थः।

पुनरपि शङ्कते—'यदि तर्हि यो यो दिशि वर्तते स स दिक्शब्दो रमणीयादिष्वतिप्रसङ्गः' इति। रमणीयादिषु दिक्समानाधिकरणेषु दिक्शब्दत्वातिप्रसङ्ग इत्यर्थः।

यथा हि पूर्वादयः शब्दा व्यवस्थानिमित्ता देशकालसाधारणा अपि यदा दिशि वर्तन्ते तदा दिक्शब्दा इत्युच्यन्ते। तथा रमणीयादयोऽपि गुणनिमित्ता दिशि वर्तमाना दिक्शब्दाः स्युः।

अत्र परिहार उक्तः—"दिशि दृष्टः शब्दो दिक्शब्दः। दिशं यो न व्यभिचरतीति।" ( म० भा० २।२।२८ ) इति।

तत्र देशकालयोरपि व्यवस्थाशब्दाः पूर्वादयो वर्तन्ते। तथा चाभेदेन दिक्शब्देभ्यो दिग्देशकालेषु वर्तमानेभ्य इत्युच्यत इति ॥ १० ॥

कथं दिशं यो न व्यभिचरतीत्युक्तमित्येतद्भाष्यं समर्थयितुमाह—

**दिक्शक्तेरभिधाने तु नियतं दिशि दर्शनम्।**
**पूर्वादीनां यथा षष्टेर्जीवितस्यावधारणे ॥ ११ ॥**

शक्तिग्रहणेन तत्रार्थान्तरानपेक्षा रूढा पूर्वादिशब्दानां प्रवृत्तिः, देशकालयोस्तु तदुपाधित्वाद् व्यवस्थानिमित्तेति सूचयति।

---

अयं भावः—यथा हि पूर्वादयः शब्दा व्यवस्थाप्रवृत्तिनिमित्तका देशकालसाधारणा अपि यदा दिशि वर्तन्ते, तदा दिक्शब्दा इत्युच्यन्ते। तथा रमणीयादयोऽपि शब्दा रमणीयत्वादिगुणप्रवृत्तिनिमित्तका दिशि वर्तमाना दिक्शब्दाः स्युरिति।

अत्र परिहार उक्तः—'दिशि दृष्टः शब्दो दिक्शब्दः। दिशं यो न व्यभिचरतीति"। रमणीयादिशब्दास्तु पटादीनां विशेषणेषु वर्तमाना दिशं व्यभिचरन्त्येव। पूर्वादिशब्दास्तु देशेऽपि वर्तमाना दिशं न व्यभिचरन्ति, देशेऽपि दिक्सम्बन्धादेव पूर्वादिशब्दानां प्रवृत्तेरिति।

तथा च दिग्देशकालवाचिनां पूर्वादिशब्दानां व्यवस्थावाचकत्वाविशेषेण सादृश्याद् देशकालवाचकेष्वपि दिक्शब्दत्वारोपेण दिक्शब्देभ्य इत्यनेन दिग्देशकालेषु वर्तमानेभ्य इत्यर्थ उच्यत इति ॥ १० ॥

दिशं यो न व्यभिचरति इत्युक्तं भाष्ये तत्कथं दिगव्यभिचारित्वं पूर्वादिशब्दानां इत्याशङ्क्य तद्भाष्यं समर्थयितुमाह—दिक्शक्तेरभिधाने त्विति।

अयमर्थः—दिग्देशकालाभिधायित्वेन पूर्वादिशब्दास्त्रिविधाः, परस्परं भिन्नाश्च। व्यवस्थावाचकत्वाविशेषेण तु सादृश्येन तेषु एकत्वाध्यवसाय इति त्रयोऽपि दिक्शब्दा इव दिक्शब्दा इत्युच्यन्ते। त्रयाणां व्यवस्थावाचकत्वसामान्ये सत्यपि 'निर्विशेषं न सामान्यम्' इति न्यायेन अस्ति कश्चनावान्तरो विशेषः। तथा हि—दिशि रूढया वर्तमानः पूर्वादिशब्दो व्यवस्थितां दिशमभिधत्त इति दिशो नाम। व्यवस्था च तत्र नामार्थेऽन्तर्भूतेति न तत्र कुत इत्यवधेराकाङ्क्षा। देशकालयोस्तु पूर्वादिशब्दो न रूढ इति न स तयोर्नामधेयमिति अस्ति तत्र नियमेनावध्याकाङ्क्षा कुत इति। तथा च तत्र व्यवस्था स्वार्थाद् बहिर्भूतेति।

तथा च नियतमव्यभिचारि दिशि दर्शनं पूर्वादिशब्दानां प्रयोगः। देशकालयोस्तु व्यवस्थानिमित्तत्वेन न रूढः प्रयोगः। पूर्वा दिगित्युक्तनामधेयत्वेनान्तर्णीतावधिभावा रूढिप्रतीतिः। पूर्वो घट इति तु कुत इत्यवधिमपेक्षते। घटशब्दाच्च स्वार्थोऽवगम्यते, तदुपरि व्यवस्थां गमयति पूर्वशब्दो न तु तस्य नामधेयम्।

तथा च दिक्शब्देभ्यो देशकालशब्दानामेषां भावतो भेद एव, सादृश्यात् त्वेकत्वाध्यवसायः। न हि रूढीनां नैमित्तिकैः सहाभेदः सम्भवति।

---

तथा चैवमस्याः कारिकायाः पदयोजना—पूर्वादिशब्दानां दिक्शक्तेः = शक्तिरूपाया दिशोऽभिधाने तु नियतम् = दिग्रूपार्थाव्यभिचारि दिशि प्रयोगरूपेण दर्शनमस्ति। दिशो नामत्वेन न तत्र पूर्वादिशब्दानां दिगर्थव्यभिचार इत्यर्थः। देशे तु पूर्वो घट इत्यादौ रमणीयादिशब्दवद् अनियतानन्तघटादिविशेषणतया प्रयुज्यमानो नियमेनावधिसाकाङ्क्षश्च पूर्वादिशब्दो घटादीनां नामत्वाभावेन घटादिरूपमर्थं व्यभिचरत्येव। एवं दिक्शब्देभ्यो देशकालवाचिनां पूर्वादिशब्दानां वस्तुतो भेदः।

पूर्वादिशब्दानां नामत्वेन दिगर्थाव्यभिचारे दृष्टान्तमभिधत्ते—यथा षष्टेरिति।

अयमर्थः—यथा जीवितस्य आयुषः, अवधारणे = परिमाणपरिच्छेदे षष्टिवर्षाणि भूतः षष्टिक इति वृत्तौ वर्षपदप्रयोगं विना प्रयुज्यमानस्य षष्टेः = षष्टिशब्दस्य वर्षरूपसंख्येयकालनामत्वेन काले नियतं दर्शनमिति कालवाचित्वेन "तमधीष्टो भृतो भूतो भावी" (पा० ५।१।८०) इति कालाधिकारविहितटक्प्रत्ययसिद्ध्या षष्टिक इति रूपसिद्धिरिति।

अयं भावः—शक्तिग्रहणेन तत्र = दिशि अवधिरूपार्थान्तरानपेक्षा नामत्वेन रूढा च पूर्वादिशब्दानां प्रवृत्तिः। देशकालयोस्तु तदुपाधिकत्वाद् = दिक्सम्बन्धनिमित्तकत्वात् स्वार्थदेशकालबहिर्भूतव्यवस्थानिमित्तिका तेषां प्रवृत्तिरिति सूचयति।

तथा च नियतमव्यभिचारि दिशि दर्शनम् = पूर्वादिशब्दानां प्रयोगः। देशकालयोस्तु स्वार्थबहिर्भूतव्यवस्थाहेतुकत्वेन नामत्वाभावेन न रूढः प्रयोगः। दिशि तु = पूर्वा दिगित्युक्ते नामधेयत्वेन नामार्थान्तर्णीतावधिभावा रूढचर्थप्रतीतिः। पूर्वो घट इति तु कुत इत्येवमवधिमपेक्षते। घटशब्दाच्च स्वार्थोऽवगम्यते पूर्वशब्दस्तु न तस्य नामधेयम्; अपि तु तदुपरि = घटशब्दात् स्वार्थावगमोत्तरम्, व्यवस्थां गमयति, न तु पूर्वशब्दो घटस्य नामधेयम्, पटादिसाधारणत्वात्।

तथा च दिग्शब्देभ्यः पूर्वादिभ्यो देशकालशब्दानां पूर्वादीनां भावतः = वस्तुतो भेद एव, व्यवस्थावाचकत्वरूपाद् आनुपूर्वीरूपाद् वा सादृश्यात्तु एकत्वाध्यवसायः = अभेदारोपः। नहि दिशि रूढानां संज्ञारूपाणां पूर्वादिशब्दानां नैमित्तिकैः = दिक्

तथा च—"दिक्शब्देभ्यो दिग्देशकालेषु" (पा० ५।३।२७) इत्यत्र पूर्वादिशब्दानां कार्यभाक्त्वेन विवक्षितत्वात् शब्दग्रहणसामर्थ्याद् दिक्शब्द इव शब्दो येषामिति देशकालप्रवृत्तयो रूपसाम्याद् विशेष्यन्ते। सदृशानां च शब्दानां क्वचिद् विषये स्वभावान्नियमेन प्रत्यायनशक्तिर्दृश्यते। तद्यथा 'षष्टिं भूतः षष्टिकः' इति जीवितपरिमाणे प्रतिपाद्ये कालवाची नियमेन संख्याशब्दोऽपि षष्टिशब्दः।

तथा च कालाधिकारविहितं प्रत्ययमुत्पादयति –'तमधीष्टो भृतो भूतो भावी" (पा० ५।१।८०) इति। वृत्तिविषयेऽत्र षष्टिशब्दो वाक्ये संख्याशब्दोऽपि नियतं कालं संख्येयमुपादत्ते शब्दशक्तिप्रतिनियमात्। अतो हि शब्दाद् वर्षाख्य एव कालो जन्मनः परिमाणं प्रतीयते। न च वृत्तौ कालवचनः प्रयुज्यते, येन तत्सामानाधिकरण्यात् कालवृत्तित्वं संख्याशब्दस्यापि प्रतीयेतेति मासादिशब्दवत् पदान्तरानपेक्षः कालेऽयं वर्षाख्ये रूढः।

तथा च "तदस्य परिमाणम्" (पा० ५।१।५०) इत्यत्र "जीवितपरिमाणे चेत्यनर्थकं वचनम्, कालादिति सिद्धत्वात्" (वा० ५।१।५७-५८) इत्युक्तम्।

---

सम्बन्धरूपनिमित्तमाश्रित्य प्रयुज्यमानैः पूर्वादिशब्दैः सहाभेदः सम्भवति, अर्थभेदात्। तथा च 'प्रत्यर्थं शब्दाभिनिवेशः' इति भाष्ये पठ्यते।

तथा च—'दिग्शब्देभ्यो दिक्देशकालेषु" इत्यत्र पूर्वादिशब्दानामस्तीति प्रत्ययप्रकृतित्वेन विवक्षितत्वाद् दिक्शब्देभ्य इत्यत्र शब्दग्रहणसामर्थ्याद् दिक्शब्द इव शब्दो येषामिति देशकालयोः प्रवर्तमानाः पूर्वादिशब्दा आनुपूर्वीसाम्याद् दिक्शब्द इत्यनेन विशेष्यन्ते। सदृशानाञ्च शब्दानां क्वचिद् विषये नियमेन प्रत्यायनशक्तिरूपः स्वभावो दृश्यते। तद्यथा 'षष्टिं वर्षाणि भूतः षष्टिकः' इत्यत्र जीवितपरिमाणे=आयुःपरिमाणे प्रतिपाद्ये वाक्ये संख्यावाचकोऽपि कोऽपि षष्टिशब्दो वृत्तौ नियमेन आयुःपरिमाणरूपकालवाची दृश्यते, वृत्तौ वर्षशब्दं विनैव तस्य प्रयोगात्।

तथा च "तमधीष्टो भृतो भूतो भावी" इति कालाधिकारविहितं प्रत्ययमुत्पादयति। 'षष्टिं वर्षाणि भूतः' इति लौकिकविग्रहवाक्ये संख्याशब्दोऽपि षष्टिशब्दः षष्टिक इत्यत्र वृत्तिविषये कालरूपं संख्येयं नियतमुपादत्ते=वाच्यतया प्रतिगृह्णाति, शब्दशक्तिप्रतिनियमात्=शब्दशक्तिस्वभावात्। अतो हि षष्टिशब्दाद् वर्षाख्य एव कालो जन्मनः परिमाणं प्रतीयते। न च षष्टिक इति वृत्तौ कालवचनो वर्षशब्दः प्रयुज्यते, येन संख्याशब्दस्यापि षष्टिशब्दस्य तत्सामानाधिकरण्यात् कालवृत्तित्वं प्रतीयेत इति मासादिशब्दवत् कालवाचकपदान्तरानपेक्षोऽयं षष्टिशब्दो वृत्तौ वर्षाख्ये काले रूढः।

तथा च—"तदस्य परिमाणम्" इत्यत्र "जीवितपरिमाणे चेत्यनर्थकं वचनम्, कालादिति सिद्धत्वात्" इत्युक्तं भाष्ये।

यो हि षष्टिं वर्षाणि भूतस्तस्य षष्टिर्जीवितपरिमाणं भवत्येवेत्युपसंख्यानेन नार्थः।

न चैवं रमणीयादिष्वतिप्रसङ्गः, तेषां काले नियतत्वस्याप्रतीतेः। प्रयुक्तानां चेदमन्वाख्यानमिति लौकिकी प्रतीतिरनुसर्तव्या। तथा चोक्तम्—"अनभिधानाद्रमणीयादिषूत्पत्तिर्न भविष्यति" (म० भा० ५।१।५७-५८) इति।

तदेवं यथा षष्टिशब्दः संख्याशब्दः संख्येयविषयोऽन्यत्र स्वभावात् काले सङ्ख्येये रूढः, तथा पूर्वादिशब्दोऽन्यत्र देशे काले च व्यवस्थावचनोऽपि दिशि स्वभावान्नियमेन रूढ इति युक्तमुक्तं दिशं यो न व्यभिचरतीत्यर्थः।

इत्थं च दिशि नियतत्वात् प्रयोगस्य समानायामाकृतौ भाषितपुंस्कत्वाभावात् पुंवद्भावाभावात् "सर्वनाम्नो वृत्तिमात्रे" (पा० २।१।५१) इत्युक्तम्। "व्यवस्थायामसंज्ञायाम्" (पा० १।१।३४) इति तु सर्वनामसंज्ञायामवधिनियममात्रानुगमाद् दिग्देशकालवचना अपि पूर्वादयोऽविशेषेण विशेष्यन्ते।

---

यो हि षष्टिं वर्षाणि भूतः=प्राप्तः तस्य षष्टिं वर्षाणि जीवितपरिमाणं भवत्येवेत्युपसंख्यानेन नार्थः।

न चैवं रमणीयादिशब्दानामपि कालसामानाधिकरण्येन कालवाचकत्वाद् रमणीयादिषु कालाधिकारविहितप्रत्ययस्यातिप्रसङ्ग इति वाच्यम्, रमणीयादिशब्दानां नियमेन कालवत् कालवाचकत्वस्याप्रतीतेः।

किञ्च, प्रयुक्तानामिदमन्वाख्यानं व्याकरणमिति प्रयोगसाधुत्वविषये लौकिकप्रतीतिरनुसर्त्तव्या। लोके च षष्टिक इति प्रयोगदर्शनात् तस्य कालाधिकारविहितठगुत्पत्त्या साधुत्वम्। रमणीयादिशब्देभ्यस्तु कालसमानाधिकरणेभ्यः कालाधिकारविहितप्रत्ययादर्शनेन न रमणीयादीनां शब्दानां कालवाचित्वं कथमप्यापाद्यम्, आपादकाभावात्। तथा चोक्तम्—"अनभिधानाद् रमणीयादिषूत्पत्तिर्न भविष्यति" इति।

तदेवं यथा षष्टिशब्दो वाक्ये संख्याशब्दः षष्टिक इत्यत्र वृत्तिविषये संख्येयविषयोऽपि स्वभावात् काले संख्येये रूढः, तथा पूर्वादिशब्दोऽन्यत्र देशे काले च व्यवस्थावचनोऽपि दिशि शब्दशक्तिस्वभावान्नियमेन रूढ इति युक्तमुक्तं दिशं यो न व्यभिचरतीत्यर्थः।

इत्थञ्च दिशि पूर्वादिशब्दप्रयोगस्य नियतत्वात्=नामत्वप्रयुक्तरूढत्वेन दिगर्थाव्यभिचारित्वाद् देशे काले च व्यवस्थावचनत्वेनानियतत्वात्। समानायामाकृतौ भाषितपुंस्कत्वाभावात् सूत्रेण पुंवद्भावाभावात् "सर्वनाम्नो वृत्तिमात्रे" इति वार्त्तिकमुक्तम्। तत्र सर्वनामत्वं दिग्देशकालवचनानां सर्वेषाम्, व्यवस्थावचनत्वाविशेषात्। "व्यवस्थायामसंज्ञायाम्" इति तु सर्वनामसंज्ञायामवधिनियममात्रस्यानुगमाद् दिग्देशकालवचनाः सर्वेऽपि पूर्वादयोऽविशेषेण व्यवस्थायामित्यनेन विशेष्यन्ते।

तथा हि अवधिना यः प्रतिपादितो रूपावच्छेदः पूर्वादित्वं तस्यानुगमोऽस्ति । देशकालयोरिव दिक्ष्वपि व्यवस्थितार्थाभिधानात् । पूर्वशब्दो ह्यवधिभिन्नामेव व्यवस्थितां दिशमाह । अवधिं तूपाधित्वेन न स्पृशति । यथा शोणशब्दो लोहित एवार्थे वर्तते । अथ च लौहित्यं प्रवृत्तिनिमित्तत्वेन नापेक्षते । कृष्णशब्दश्च भगवति वासुदेवे वर्तते । न च कृष्णं गुणं निमित्तत्वेनोपादत्ते ।

तदित्थमन्तर्भावितावधयो दिक्शब्दाः पूर्वादयो रूढाः । देशकालयोस्तु शब्दोपात्तावध्यपेक्षा इत्येतावान् विशेषः ।

अवधिनियमस्तु समान इति व्यवस्थायामित्यपि विशेषणे दिग्वाचिनां पूर्वादीनां सर्वनामसंज्ञाकार्यं प्रवर्तत एव ।। ११ ।।

इदानीं कार्यान्तरमपि दिशः प्राह—

छायाभाभ्यां नगादीनां भागभेदः प्रकल्पते ।
अतद्धर्मस्वभावेषु भागभेदो न कल्पते ।। १२ ।।

---

तथा हि अवधिना येन केनापि भावेन प्रतिपादितः = सम्पादितः, यो रूपावच्छेदः = पूर्वादिशब्दार्थस्यावच्छेदको धर्मः पूर्वादित्वं तस्यानुगमो दिग्देशकालरूपेषु त्रिष्वपि अर्थेष्वस्ति । देशकालयोरिव दिक्ष्वपि व्यवस्थितार्थाभिधानात् । पूर्वशब्दो ह्यवधिभिन्नामेव व्यवस्थितां दिशमाह — अवधिं तु स्ववाच्यत्वेन न स्पृशति, उपाधित्वेन तस्यावाच्यत्वात् । यथा शोणशब्दो न विशेषवाचको वस्तुतो लोहित एवार्थे वर्तते । अथ च लौहित्यं प्रवृत्तिनिमित्तत्वेन नापेक्षते । कृष्णशब्दश्च भगवति वासुदेवे वर्तते । न च कृष्णं गुणं प्रवृत्तिनिमित्तत्वेनोपादत्ते ।

तदित्थं स्वार्थान्तर्भावितावधयो दिक्शब्दाः पूर्वादयो रूढाः । देशकालयोस्तु स्वशब्दव्यतिरिक्तशब्दोपात्तावध्यपेक्षा इत्येतावान् विशेषः ।

अवधिनियमस्तु त्रिष्वपि समान इति व्यवस्थायामिति सौत्रे पूर्वादीनां विशेषणे सत्यपि दिग्वाचिनां पूर्वादीनां सर्वनामसंज्ञाकार्यं प्रवर्तत एवेति ।। ११ ।।

पूर्वं देशे पूर्वपरादिव्यवस्थारूपं दिशः कार्यमुक्तम्, इदानीं नगादीनां परमाण्वन्तानां भागभेदप्रकल्पनारूपं कार्यान्तरमपि दिशः प्राह—छायाभाभ्यामिति ।

अयमर्थः—छाया = आलोकाभावः, आभा = आलोकः, ताभ्यां नगादीनाम् = पर्वतानाम्, भागभेदः = अवयवभेदः, प्रकल्पते = प्रसिध्यति सत्यामेव दिशि । तथा हि शिखरिण एकः शिखरो दिनकरकरालोकवान्, अपरस्तु मेघच्छायावानिति व्यवहारो दृश्यते । स चासत्यां दिशि न प्रसिध्यति ।

तथा हि दिगुपाधिकं पूर्वापरादित्वं देशे तदुपाधिकश्च तत्र स्थितानां भावानामवयवभेदकल्पनमिति परम्परया दिगुपाधिकत्वं नगादीनां भागभेदकल्पनस्य ।

छाया निरालोकता। आभा आलोकः। दिनकरकरनिकररञ्जितः पर्वत-शिखर एकः, बहुलच्छायाच्छुरितश्चापर इत्यवयवविभागः। छायातपाभ्यामुपलक्षितोऽसत्यां दिशि न कल्प्येत, पूर्वापरादित्वाभावात्, तदुपाधिकावयवनानात्वायोगात्।

तथा ह्यविद्यमानः स दिगुपाधिको धर्मः पूर्वापरादित्वं येषाममूर्तानामर्थानां तेष्वेवंविधावयवभेदाभाव इति दिक्सम्बन्धनिमित्तोऽवयवभेदोऽपि-दिङ्लिङ्गमित्यर्थः ॥ १२ ॥

तथा हि मूर्त्तानां प्रथमत एव भागभेदप्रकल्पनं दिगायत्तमित्याह—

**परमाणोरभागस्य दिशा भागो विधीयते।**
**भागप्रकल्पनाशक्तिं प्रथमां तां प्रचक्षते ॥ १३ ॥**

---

तथा च यत्र यत्र भागभेदप्रकल्पनम्, तत्र तत्र दिगुपाधिकं पूर्वापरादित्वमिति व्याप्तिः। एतस्यैव व्यतिरेकव्याप्तिमुत्तरार्धेनाह—अतद्धर्मस्वभावेष्विति। स धर्मः-सतद्धर्म इति कर्मधारयः। द्विगुपाधिको धर्मः पूर्वापरादित्वरूप इत्यर्थः।

अविद्यमानस्तद्धर्मो येषामिति अतद्धर्माः, त एव स्वभावाः स्वरूपाणि येषामिति अतद्धर्मस्वभावाः, तेषु दिगुपाधिकपूर्वापरादित्वरूपधर्मशून्येषु अमूर्त्तेषु भागभेदोऽवयवभेदो न प्रकल्पत इति।

तथा च यत्र दिगुपाधिकं पूर्वापरादित्वं नास्ति तत्र भागभेदप्रकल्पनमपि नास्ति इति व्यतिरेकव्याप्तिरिति।

अयं भावः—साम्प्रतं शरदि एकः पर्वतशिखरो दिनकरकरनिकररञ्जितः, अपरश्च शिखरो मेघानां बहुलच्छायाच्छुरित इति छायातपाभ्यामुपलक्षितोऽवयवविभागोऽसत्यां दिशि न कल्प्येत, दिगभावे पूर्वापरादित्वाभावेन तदुपाधिकावयवनानात्वायोगात्।

तथा हि—अविद्यमानः स दिगुपाधिकः=दिङ्निमित्तकः पूर्वापरादित्वरूपो धर्मो येषाममूर्तानामात्मादीनामर्थानां तेषु अतद्धर्मस्वभावेषु एवंविधावयवभेदाभाव इति दिक्सम्बन्धहेतुकोऽवयवभेदोऽप्यनुभूयमानो दिशो लिङ्गमित्यर्थः।

तथा चायं प्रयोगः—नगादयो दिक्सम्बन्धिनः, पूर्वापरादित्ववदवयवभेदवत्त्वात्, यन्नैवम्, तन्नैवम्, यथाऽमूर्तं द्रव्यमिति ॥ १२ ॥

तथा हि=तथैव हि घटादिरूपानारम्भकावयविवदेव हि निरवयवं परमाणुमारभ्य महावयविपर्यन्तानां मूर्तानां मध्ये प्रथमत एव=प्रथमस्यैव परमाणुरूपस्य मूर्तस्यापि भागभेदप्रकल्पनं दिगायत्तम्=दिङ्निमित्तकमित्याह-परमाणोरभागस्येति।

अयमर्थः—नित्यत्वादभागस्य=अनवयवस्य परमाणोर्दिशो भागः पार्श्वचतुष्टयमूर्ध्वाधोभागरूपश्च विधीयते=परिकल्प्यते। नहि परमाणोरभागस्य वास्तवो भागभेदः सम्भवतीति। दिगारोपित एव तस्य पूर्वोक्तलक्षणो भागभेदः।

अकृतकत्वान्नित्यानां निरवयवानामपि परमाणूनां पार्श्वचतुष्टयमूर्ध्वाधोभागरूपं च दिशा परिकल्प्यते। न हि परमाणोरभागस्य वास्तवो भागभेद इति दिगाहित एव सः।

तथा च तत्रस्थैः षड्भिः परमाणुभिर्योगो भवति। सति च योगे द्व्यणुकादिक्रमेण कार्यमाजायते। ततश्च तत्रापि पूर्वापरादिव्यवहारः। असत्यां तु दिशि षड्भिर्योगेऽपि निरवयवः पिण्डः स्यादणुमात्रक इति स्थूलावयव्युत्पत्तिर्न स्यात्। तस्मादुत्पत्तिप्रभृतिभागसमारोपे प्रथमा दिशामेव शक्तिरिति दिग्भिः सर्वे पदार्था मूर्त्ता भागभेदप्रकल्पनेनोपक्रियन्ते।

अन्ये नगादीनां सावयवानां छायातपाभ्यां भागभेदः प्रकल्पते। येषां तु निरवयवानां छायातपनिमित्तः स न भवति, तेषां परमाणूनां दिङ्निमित्त इति व्याचक्षते।

---

तथा च तत्तद्देशस्थैः षड्भिः परमाणुभिः सह कल्पिततत्तद्भागावच्छेदेन तस्य=परमाणोः योगो भवतीति। तस्यैकेन परमाणुना योगे द्व्यणुकम्, द्वाभ्यां योगे त्र्यणुकम्, त्रिभिर्योगे चतुरणुकम्, पञ्चभिर्योगे षडणुकम्, षड्भिर्योगे सप्ताणुकमित्येवमस्य सप्ताणुकस्यापरेणेदृशेनैव सप्ताणुकेन, अन्येन वा योगे उत्तरोत्तरं महन्महत्तरं महत्तमं कार्यमाजायते महावयविपर्यन्तम्, प्रारब्धादृष्टसहकृतपरमेश्वरसंकल्पात् तदानीं जायमानात्।

तथा च श्रूयते—"तदैक्षत् बहु स्याम, प्रजायेय" इति "तत्तेजोऽसृजत" इत्यादि। अत्राकाशं वायुश्च सृष्ट्वेति शेषः। अत्रेक्षणञ्च भगवतः स्रष्टव्यविषयकः संकल्प एव। अत्रैतादृशशेषपूरणञ्च श्रुत्यन्तरानुरोधात्।

तथा चान्यत्र श्रूयते—'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या अन्नौषधयः" इत्यादि। अत्रात्मपदेन परमेश्वरः, तस्यैवाकाशादिसर्गसामर्थ्यात्। एवं जातेष्ववान्तरावयविषु महावयविषु च कार्येष्वपि पूर्वापरादिव्यवहारो दिशैव परिकल्प्यते। असत्यां तु दिशि निरवयवस्य परमाणोर्भागभेदकल्पकाभावेन तदभावे तस्य षड्भिः परमाणुभिर्योगो न स्यात्, कथञ्चित् षड्भिर्योगेऽपि निरवयवः पिण्डः स्यादणुमात्रक इति स्थूलावयविसमुत्पत्तिर्न स्यात्। तस्मादुत्पत्तिप्रभृतिभागसमारोपे=द्व्यणुकरूपकार्योत्पत्तेरादौ परमाणौ प्रागुक्तक्रमेण भागकल्पनायाम्, यद्वा द्व्यणुकोत्पत्तिमारभ्य महावयविपर्यन्ते कार्ये भागभेदकल्पनायां दिशामेव प्रथमा शक्तिः, द्वितीयादिका तु छायातपादीनामिति दिग्भिः सर्वे मूर्ताः पदार्था भागभेदप्रकल्पनेनोपक्रियन्ते।

अन्ये तु व्याख्यातारः--नगादीनां सावयवानां छायातपाभ्यां भागभेदः प्रकल्पते। येषान्तु निरवयवानां परमाणूनां छायातपनिमित्तो भागभेदो न सम्भवति, तेषां दिङ्निमित्तको भागभेद इति श्लोकद्वयमभिप्रायतो व्याचक्षते।

१०

तथा हि—यत्र निमित्तान्तरं नास्ति, तत्रातद्धर्मसु निरवयवेषु दिशां व्यापारः। यत्र त्वन्यन्निमित्तमस्ति भागभेदस्य ज्ञापकं छायातपादिकं सावयवानां तत्र तदेव भागभेदव्यवहारप्रवर्तकम्। एतत्प्रथमश्लोकेनोक्तम्। दिग्व्यापारस्तु द्वितीयश्लोकेन कथितः।

तथा हि यतो न निरवयवत्वाच्छायादिको भागभेदप्रकल्पकः, अतोऽत्र परमाणौ दिशा दिक्पदार्थेन भागोऽभिधीयते। भागव्यवहारः पूर्वापरादिकः प्रवर्तत इत्यर्थः।

यथा हेत्वन्तरकृतो भागभेदव्यवहारः पर्वतादिषु, तथा परमाणुष्वपि छायातपसंयोगविविक्तेषु, निमित्तान्तरमेषणीयम्। तच्च दिगिति दृष्टान्तोपन्यासोऽयमाद्यकारिकया कृत इति अपरे व्याचक्षते। तदेतत् सर्वमनुपपन्नम्।

तथा हि ये घटस्यैकस्मिन् पार्श्वे सूर्यरश्मयः पतन्ति, ते तद्देशैः कपालैरेव सम्बध्यन्ते। तदन्यपार्श्वे च छायया कपालानामेव संयोग इति घटस्य छायातपाभ्यामसम्बन्धः।

अथ तद्देशत्वात् सन्निहितमवयविद्रव्यमपि सम्बध्यते, अवयववत् सर्वात्मना, तर्हि, परिसमाप्तत्वात् सर्वप्रकारं सोऽवभासेत आतपेनेति पार्श्वान्तराभावात् छाययात्यन्तमसम्बन्धः स्यात्।

---

तथा हि—यत्र छायातपादिरूपं निमित्तान्तरम्=दिगतिरिक्तं निमित्तं नास्ति, तत्रातद्धर्मसु=दिगुपाधिकपूर्वापरादित्वरूपधर्मशून्येषु निरवयवेषु परमाणुषु भागभेदप्रकल्पको दिशां व्यापारोऽस्ति। यत्र त्वन्यत् छायातपादिकं भागभेदस्य ज्ञापकं निमित्तमस्ति सावयवेषु पर्वतादिषु, तत्र तदेव भागभेदव्यवहारप्रवर्त्तकं भवतीत्येतत् प्रथमश्लोकेनोक्तम्। दिग्व्यापारस्तु द्वितीयश्लोकेन कथितः।

तथा हि—यतः परमाणोर्निरवयवत्वान्न छायादिको भागभेदप्रकल्पकोऽस्ति, अतोऽत्र परमाणो दिशा=दिक्पदार्थेन भागोऽभिधीयते। भागव्यवहारः पूर्वापरादिकः प्रवर्त्तत इत्यर्थः।

अपरे तु यथा सावययेषु पर्वतादिषु भागभेदव्यवहारो हेत्वन्तरकृतः=दिगतिरिक्तच्छायातपादिरूपहेतुकृतः, तथा निरवयवेषु नित्येषु तत एव छायातपसंयोगरहितेषु निमित्तान्तरम्=छायातपादिव्यतिरिक्तं निमित्तमेषणीयम्। तच्च निमित्तं दिगिति दृष्टान्तोऽयमत्राद्यकारिकया कृत इति। तदेतत् सर्वमनुपपन्नम्।

तथा हि—ये घटस्यैकस्मिन् पार्श्वे सूर्यरश्मयः पतन्ति, ते तद्देशैः=तस्मिन् पार्श्वदेशस्थितैरेव कपालैः सम्बध्यन्ते, तदन्यपार्श्वेऽपि छायया कपालानामेव संयोग इति रीत्या घटस्य छायातपाभ्यामसम्बन्धः।

अथ तद्देशत्वात्=अवयवसमानदेशत्वात् सन्निहितमवयविद्रव्यमपि सम्बध्यते, आतपेन अवयववत् सर्वात्मना, न तु किञ्चिद्भागावच्छेदेनेत्युच्यते। तर्हि अवयवे

अथ तद्देशोऽपि नातपेन सम्बध्यते, तदा भिन्नदेशत्वमवयवावयविनोः स्यात्, आतपेन संयुक्तासंयुक्तत्वात्, अवयवोऽपि चावयवीति तत्रापि छायादिसम्बन्धोऽवयवानामेव, अनेन न्यायेन तत्राप्यवयवान्तराणामिति परमाणुपर्यन्तता।

ततश्च दिक्सम्बन्धादेव परमाणुवत् स्थूलोऽपि पदार्थः पूर्वापरादिभागव्यपदेशमुच्चनीचादित्वं च प्रतिपद्यते। तथा च 'निर्भागात्मकता तुल्या परमाणोर्घटस्य च' (वा० प० ३, दिक्० १५) इत्यादि वक्ष्यत्येव॥ १३॥

ननु स्वत एव पदार्था विशिष्टसंस्थानाः प्रभवन्ति, क एषां दिक्कृत उपकार इत्याशङ्क्याह—

**अदेशाश्चाप्यभागाश्च निष्क्रमा निरुपाश्रयाः।**
**भावाः संसर्गरूपात् तु शक्तिभेदः प्रकल्पते॥ १४॥**

---

परिसमाप्तत्वात् = सर्वात्मना वर्तमानत्वात् सर्वप्रकारं सः = अवयवी घटादिः अवभासेत आतपेनेति पार्श्वान्तराभावात् = पार्श्वद्वयातिरिक्तपार्श्वाभावाद् घटस्य छाययात्यन्तमसम्बन्धः स्यात्।

अथ तद्देशोऽपि = अवयवसमानदेशोऽपि नातपेनाऽवयवी, तदाऽवयवावयविनोर्भिन्नदेशत्वं स्यात्, आतपेन संयुक्तत्वासंयुक्तत्वरूपविरुद्धधर्मवत्त्वात्, सामानाधिकरण्ये तदसम्भवात्। अपि चातपेन संयुक्तासंयुक्तत्वरूपविरुद्धधर्मवत्त्वाद् अवयवोऽवयवी इत्येवं भावद्वयेऽभ्युपगम्यमाने तत्रापि छायादिसम्बन्धोऽवयवानामेव, नावयविनाम्। पर्वतस्यैकः शिखर आतपरञ्जितः, अपरः छायाच्छुरित इति अवयवेष्वेव, छायादिसम्बन्धानुभवात्। अनेन न्यायेन तत्रापि = तेषामवयवानामवयवेष्वपि अवयवान्तराणामेव छायादिसम्बन्धः, नावयविनामित्येवं परमाणुपर्यन्तानुधावने द्व्यणुकं यावदवयवानामेव छायादिसम्बन्धः, नावयविनामिति सिध्यति।

एवञ्च 'छायाभाभ्यां नगादीनां भागभेदः प्रकल्पते' इत्युक्तेरनुपपत्तौ निर्भागा अवयविन इति सिध्यति। परमाणोस्तु नित्यत्वेन निर्भागत्वं युक्तमेवेति न तत्रापि छायातपाभ्यां भागभेदकल्पना।

ततश्च दिक्सम्बन्धादेव यथा परमाणुषु प्रागुक्तरीत्या भागषट्ककल्पना, तथा स्थूलोऽपि पदार्थः अवयविरूपः पूर्वापरादिभागव्यपदेशमुच्चनीचादित्वञ्च = ऊर्ध्वाधरभागवत्त्वञ्च प्रतिपद्यते। तथा च—"निर्भागात्मकता तुल्या परमाणोर्घटस्य च" इत्यादि वक्ष्यत्येवाग्रे इति॥ १३॥

ननु स्वत एव = स्वभावादेव पदार्था विशिष्टसंस्थानाः = विलक्षणाः पूर्वापरादिरूपावयवभेदाः प्रभवन्तीति क एषां दिक्कृत उपकार इत्याशङ्क्याह— अदेशाश्चेति।

अयमर्थः—इह जगति द्विविधाः खलु भावाः—आकाशादिरूपा विभवः,

विभूनामाकाशादीनां नास्ति देशः। पृथिव्यादीनां तु मूर्तानामवयविनामात्मभूतदेशाभावः। उभयेषामपि च कल्पिता देशाः संयोगिनः समवायिनश्च। एवं स्वतः पदार्थानामवयवा न सन्ति, कल्पितास्त्वर्थान्तरभूताः संसर्गिणः। अवयवभेदाभावाच्च क्रमोऽप्यमुख्यः, भेदाधिष्ठानत्वात् क्रमस्य। तथा अविद्यमान उपाश्रय उपाधिः स्वभावान्यथात्वापादको येषां ते निरुपाश्रयाः।

---

पृथिव्यादिरूपास्तु मूर्ताः। तत्रोभयेषामपि आत्मभूतदेशाभावः। विभूनां नित्यत्वेन, मूर्तानां तु स्वभावतः प्रागुक्तरीत्या निर्भागत्वात्। उभयेषामपि च कल्पिता देशाः संयोगिनः समवायिनश्च। तत्र विभूनामाकाशादीनां कल्पिता देशाः, तत्संयोगिनो घटादयः। मूर्तानां तु कल्पिता देशाः समवायिनः संसर्गिणः स्वावयवाः। एवं पदार्थानां सर्वेषामपि स्वतोऽवयवाभावाददेशाः सर्वे भावाः। चो हेतौ। यतोऽदेशा अतोऽभागा अपि। अत्रापि चो हेतौ। यतोऽभागा अतो निष्क्रमाः, अवयवभेदाभावे क्रमासम्भवात्। तथा निरुपाश्रयाः=निर्गतो अर्थादविद्यमान उपाश्रय उपाधिः स्वभावान्यथात्वापादको येषां ते निरुपाश्रयाः, स्वभावस्यान्यथाकृत्य सम्भवात्। जपाकुसुमादीनामुपाधीनां हि स्फटिकादिस्वभावान्यथात्वकल्पकत्वमेव, न तु तत्कारकत्वमित्यस्य सर्वानुभवसिद्धत्वात्। यद्यपि सर्वेऽपि भावाः सन्ति ; किन्तु संसर्गिरूपात्= संसर्गिणाम्, संयोगिनाम्, समवायिनां वा कल्पितानामर्थान्तर्भूतानामवयवानां पूर्वापरादित्वात्मकाद् रूपात् शक्तिभेदः दिग्रूपः कल्पितेषु अवयवेषु पूर्वापरादित्वकल्पकः शक्तिविशेषः प्रकल्पते=प्रसिध्यति, कार्येण कारणानुमानात्। यथा धूमेन कार्येण तत्कारणं वह्निरनुमीयत इति।

अत्र भावानां पूर्वापरादिभागभेदकल्पनं कार्यम्, दिग्रूपः शक्तिभेदश्च कारणमिति विवेक इति।

अयं भावः—विभूनामाकाशादीनामात्मभूतोऽर्थान्तरभूतो वाऽवयवरूपो वस्तुभूतो देशो नास्ति, विभुत्वान्नित्यत्वाच्च। पृथिव्यादीनां तु मूर्तानाम्=परिच्छिन्नानामवयविनामर्थान्तरभूतकल्पितावयवरूपदेशसत्त्वेऽपि आत्मभूतदेशाभावः। उभयेषामपि च=विभूनां मूर्तानाञ्च दिग्रूपशक्तिभेदकल्पिता अवयवरूपा देशा यथायथं विभूनां संयोगिनो घटादयः, मूर्तानां तु समवायिनो घटादीनां कपालादयः। एवं पदार्थानामुभयेषामपि स्वतोऽवयवा न सन्ति वस्तुभूताः, कल्पितास्तु अर्थान्तरभूताः प्रागुक्तरीत्या संसर्गिणः। अवयवभेदाभावाच्च तद्भागानां कल्पितानां पौर्वापर्यरूपः क्रमोऽपि अमुख्यः=कल्पित एव, भेदाधिष्ठानत्वात्=भेदरूपनिमित्ताश्रितत्वात् क्रमस्य। तथा निरुपाश्रया इत्यत्र निरुपसर्गो नञर्थे। अविद्यमान उपाश्रय उपाधिः स्वभावान्यथात्वापादकः=भावानां स्वभावो निर्भागत्वं तस्यान्यथात्वं पूर्वापरादिभागवत्त्वं तस्यापादको येषां ते निरुपाश्रयाः।

**एवंभूता अपि च भावाः संसर्गिरूपोपहितेन शक्तिभेदेनासत्यपि स्वरूपान्यथात्वे देशादिभेदेन प्रतीयन्ते। तथा ह्यपरया दिशा योगात् सम्बन्धाविशेषेऽपि कश्चिदाधारतां प्राप्तो देश इति प्रतीयत इति दिङ्निमित्तो देशव्यवहारः। स एव च देशः समवायवशेन तिरोहितभेद इति भागोऽवयवश्च व्यवह्रियते। तद्वशेन च क्रमेणोत्पत्तेः क्रमावभासो गुणादिभिश्च समवायाद्भेदापोहे विशिष्टावसाय इति संसर्गिनिमित्तो भावानां व्यवहारः। आत्मा तु तेषां तत्रायोग्यस्वभावः।**

**तदेवं यथा देशादिकार्यमदेशाद्या अपि भावाः संसर्गिभेदात् प्रतिपद्यन्ते, तथा दिशा सम्पादितभागाः पूर्वादिभागभेदव्यवहारं प्रतिपद्यन्त इति दृष्टान्तोपन्यासेन समर्थितम्॥ १४॥**

**ननु देशभेदभिन्नः प्रतीयमानावयवो महापरिमाणो घटादिरवयवी दृश्यत इति कथं तत्रादेशताद्युपपद्यत इत्याशङ्क्याह—**

---

निरुपाधित्वञ्च स्वभावान्यथात्वस्य कर्त्तुमशक्यत्वात्। स्वभावान्यथात्वकल्पकास्तु उपाधयः सन्त्येव स्फटिकादौ रक्तत्वकल्पका जपाकुसुमादयः।

एवंभूता अपि च भावाः संसर्गिरूपोपहितेन=विभुसंसर्गिणां मूर्तसंसर्गिणाञ्च भावानां यद्रूपं पूर्वापरत्वादिकं तदुपहितेन दिग्रूपशक्तिभेदेन पूर्वापरादिरूपदेशादिभेदेन देशादिभेदवत्तया प्रतीयन्तेऽसत्यपि स्वरूपान्यथात्वे। तथा हि—अपरया दिशा योगात् कश्चिदेव भावो दिक्सम्बन्धाविशेषेऽपि आधारतां प्राप्तः=आधारत्वेन कल्पितो देश इति प्रतीयत इति दिङ्निमित्तो देशव्यवहारः। स एव च देशः समवायवशेन तिरोहितभेद इति भागोऽवयवश्च व्यवह्रियते। तद्वशेन=भागवशेन चावयविनः क्रमेणोत्पत्तेः अवयविषु अवयवद्वारकः पौर्वापर्यरूपक्रमावभासः, गुणादिभिश्च=गुणादिभिस्तु सह अवयविनः समवायाद् भेदापोहे=भेदतिरोधाने, विशिष्टावसायः=नीलः शुक्ल इत्यादिरूपो विलक्षणः प्रत्यय इति रीत्या संसर्गिभावनिमित्तको भावानां सर्वोऽपि क्रमविशिष्टादिव्यवहारः। तेषां भावानामात्मा=स्वरूपं तु तत्र=व्यवहारे अयोग्यस्वभावः, देशभागादिशून्यत्वात्।

तदेवं यथा वस्तुतो देशभागादिरहिता अपि भावा देशादिकार्यम्=क्रमोत्पत्तिव्यवहारादिकं संसर्गिभावभेदवशात् प्रतिपद्यन्ते, तथा दिशा सम्पादितभागाः पूर्वादिभेदभागव्यवहारं प्रतिपद्यन्त इति दृष्टान्तोपन्यासेन समर्थितमिति॥ १४॥

ननु देशभेदभिन्नः प्रतीयमानावयवो महापरिमाणो घटादिरवयवी दृश्यते। तत्र देशभेदभिन्नत्वे अदेशता कथम्? प्रतीयमानावयवत्वेऽभागता कथम्? महापरिमाणत्वे निष्क्रमत्वं कथम्? दृश्यते हि अल्पपरिमाणमहापरिमाणयोरवयवानां पौर्वापर्यरूपस्य क्रमस्य दैशिकस्य भेदः।

**निर्भागात्मकता तुल्या परमाणोर्घटस्य च ।**
**भागः शक्त्यन्तरं तत्र परिमाणं च यत्तयोः ॥ १५ ॥**

स्वभावभूताऽवयवशून्यता घटपरमाण्वोः समाना । दिग्लक्षणेन शक्तिविशेषेण तु प्रकल्पितपौर्वापर्याः स्वाधारभूता एव समवायवशादविवेकेन भासमानाः शक्तिनिमित्तत्वाच्छक्तिव्यपदेश्या भागा इति व्यवह्रियन्ते । स्वतो भागवत्त्व एकत्वायोगात् ।

अर्थान्तरसम्बन्धनिमित्ता च भागवत्ता न मुख्या, परमाणोरपि प्रसङ्गात् । न चापि परिमाणकृतो मुख्यो भागभेदः, परिमाणस्यापि तयोर्घटाण्वोर्महत्त्वाणुत्वलक्षणस्य भावादर्थान्तरत्वात्, महदणुत्वप्रत्ययहेतुर्हि शक्तिविशेषः परिमाणम् । अत एव परिमाणविशेषाद् घटाण्वोर्विशेषः । न त्ववयवसम्बन्धासम्बन्धाभ्यामित्युपाधिसम्बन्धानपेक्षायामव्यपदेश्यं वस्तु ब्रह्मकल्पं सर्वं समानम् ॥ १५ ॥

---

किञ्च, तयोरुत्पत्तावपि कालिकस्य अवयवक्रमप्रयुक्तस्य अवयविनि पौर्वापर्यरूपस्य उत्पत्तिक्रमस्य भेदः अनुभूयत एवेति कथं तत्रादेशत्वाभागत्वाद्युपपद्यत इत्याशङ्क्याह—निर्भागात्मकतेति ।

अयमर्थः—परमाणोर्घटस्य च निर्भागात्मकता = स्वभावभूतावयवशून्यता तुल्या । तत्र = घटे परमाणौ च दिग्रूपया शक्त्या परिकल्पितः, संसर्गिभावरूपो भागस्तु शक्त्यन्तरम् । शक्तिनिमित्तकत्वात् शक्तित्वेन व्यपदिश्यते । यच्च तयोः परिमाणं महत्त्वमणुत्वञ्च, तदपि शक्त्यन्तरम् = शक्तिविशेष एव । तथा च दिक्सम्बन्धपरिकल्पितः परिमाणपरिकल्पितो वा भागो न मुख्यः, परमाणोरपि सावयवत्वप्रसङ्गादिति ।

अयं भावः—स्वभावभूतावयवशून्यत्वरूपा निर्भागात्मकता घटपरमाण्वोरुभयोरपि समाना । दिग्रूपेण शक्तिविशेषेण तु = प्रकल्पितपौर्वापर्याः घटादेरवयविनः आधारभूता अर्थान्तरभूताश्चैव कपालादयः समवायसम्बन्धवशाद् विवेकेन भासमाना भागा इति व्यवह्रियन्ते । दिगात्मकशक्तिरूपनिमित्तपरिकल्पितत्वाच्च शक्तित्वेन चाप्यत्र व्यपदिश्यन्ते । स्वतो भागवत्त्वे चैकत्वायोगात् ।

अर्थान्तरसम्बन्धनिमित्ता च = दिक्सम्बन्धरूपनिमित्तपरिकल्पिता च भागवत्ता न मुख्या । परमाणोरप्येवं सति भागवत्त्वप्रसङ्गात् । न च परिमाणकृतोऽपि मुख्यो भागभेदः, तयोर्घटपरमाण्वोर्महत्त्वाणुत्वलक्षणस्य परिमाणस्यापि भावादर्थान्तरत्वात् । महदणुत्वप्रत्ययहेतुर्हि शक्तिविशेषः परिमाणम् । अत एव परिमाणविशेषाद् घटपरमाण्वोर्विशेषः, न तु सावयवत्वनिरवयवत्वाभ्यामिति दिगादिरूपोपाधिसम्बन्धानपेक्षायामव्यपदेश्यं ब्रह्मकल्पं सर्वं वस्तु समानमेव, उपाधिसम्बन्धपरिकल्पितस्य वैषम्यस्यावस्तुत्वादिति ॥ १५ ॥

**न चापि वस्तूनामुपाधिविहितो भेदः स्वरूपसमवायीत्याह—**

**यतः प्रकल्पते भेदो भेदस्तत्रापि दृश्यते ।**
**अदृष्टोपरतिं भेदमतोऽयुक्ततरं विदुः ॥ १६ ॥**

**अवयवैरवयविनां भेदः, अवयवानामपि स्वावयवैः, तेषामपि स्वावयवैरिति यावत् परमाणुपर्यन्तं प्राप्तिः । तत्रापि दिशा भागभेदप्रकल्पनम् । दिगप्यनाश्रितभेदा कथं भेदायोपकल्पेत । दिग्भेदोऽपि सूर्यसंयोगभेदविहितः । तेऽपि सूर्यसंयोगा मेरुप्रदेशभेदात् । तत्राप्यवयवभेदाद् भेदः । तत्राप्यवयवभेदादिति पुनर्दिश्येवावस्थानम् । तत्राप्येवमिति 'चक्रतुल्यमिदम्' इत्यदृष्टा उपरतिर्निष्ठा यस्य भेदस्य तमनवस्थादोषादतिशयेनानुपपन्नं मन्यन्ते । न केवलं स्वतो भेदोऽयुक्तो भावानां यावदुपाधीनामप्यन्यापेक्षणादपर्यवसितो भेदः सुतरां भावभेदाय नालमिति प्रकर्षः ।**

**तदेवं देशादिभेदस्य भावेषु स्वत उपाधिवशाच्चाप्ययोगाद् व्यवहारमात्रं सांवृतेन रूपेण प्ररूढमशक्यापह्नवमिति निगमयिष्यति चैतन्यवदित्यादिना ॥१६॥**

---

अपि च वस्तूनां दिग्रूपोपाधिविहितो भागात्मको भेदः स्वरूपसमवायी=स्वरूपान्तर्गतो न ; किन्तु उपाधिप्रकल्पितत्वेनावस्तुभूते वस्तुस्वरूपाद् बहिर्भूतोऽयुक्तोऽयुक्ततरश्चेत्याह—यतः प्रकल्पत इति ।

अयमर्थः—यतः, अवयवेभ्यः अवयविनां भेदः प्रकल्पते=दिशा विधीयते । तत्रापि=अवयवेष्वपि, स्वावयवैः सह भेदो दृश्यते । अस्य द्वितीयपादरूपस्य वाक्यस्यावृत्तिः कार्या । अतोऽनवस्थयाऽदृष्टोपरतिम्=अदृष्टविरामम्, वस्तुनि उपाधिपरिकल्पितं भेदमयुक्ततरं विदुः सर्वाद्वैतवादिन औपनिषदाः ।

अयं भावः—स्वावयवैः सह अवयविनां भेदः, अवयवानामपि स्वावयवैः सह भेदः, तेषामपि स्वावयवैः सहेति परमाणुपर्यन्तं यावद् भेदस्य प्राप्तिः । तत्राऽपि=परमाणुष्वपि दिशा भागभेदप्रकल्पनम् । दिगपि अभिन्ना कथं भेदायोपकल्पेत=प्रभवेदिति दिग्भेदोऽपि सूर्यसंयोगभेदविहितः कल्प्यते । तेऽपि सूर्यसंयोगा मेरुप्रदेशभेदाद् भिन्नाः । तत्रापि=मेरुप्रदेशेष्वपि अवयवभेदाद् भेदः ।

एवं तत्राप्यवयवभेदादिति पुनर्दिश्येवावस्थानम् । तत्राप्येवं प्रागुक्तरीत्या पुनर्दिश्येवावस्थानमिति चक्रकदोषेण चक्रवद् भ्रमणशीलेन अदृष्टोपरतिम् अदृष्टा उपरतिर्निष्ठाऽवसानं यस्य भेदस्य तमनवस्थादोषादतिशयेनानुपपन्नं मन्यन्तेऽद्वैतिनः । न केवलं भावानां स्वतो भेदोऽयुक्तः, यतो भावभेदकल्पकानामुपाधीनामपि स्वभेदार्थमन्यापेक्षणादपर्यवसितो भेदः सुतरां भावभेदाय न प्रभवतीत्ययुक्ततरमित्यत्र प्रकर्षप्रत्ययः । तदेवं देशभागक्रमादिभेदस्य भावेषु स्वतो दिगादिरूपोपाधिवशाच्चाप्ययोगाद् वस्तुहीनं भेदव्यवहारमात्रं सांवृतेन रूपेण प्ररूढम्=आविद्यकं

सम्प्रति व्यापकत्वममूर्तत्वे दिशः प्राह—

सर्वत्र तस्य कार्यस्य दर्शनाद् विभुरिष्यते ।
विभुत्वमेतदेवाहुरन्यः कार्यवतां विधिः ।। १७ ।।

व्यतिरेकादेः पूर्वोदितस्य कार्यस्य सार्वत्रिकत्वाद् व्यापिनी दिग् विभु-स्वभावा। अमूर्तानां ह्येतदेव विभुत्वं सर्वत्र स्वकार्यसम्पादकत्वम्, मूर्तानां तु सशरीराणामवयवैर्विततदेशव्याप्तिर्विभुत्वम् ।। १७ ।।

इदानीं पूर्वोक्तं निगमयति—

चैतन्यवत् स्थिता लोके दिक्कालपरिकल्पना ।
प्रकृतिं प्राणिनां तां हि कोऽन्यथा स्थापयिष्यति ।। १८ ।।

---

भेदस्वरूपमादायानादिकालात् प्रवृत्तम्, अशक्यापलापमिति उपसंहरिष्यति चैतन्य-वदित्यादिनेति ।। १६ ।।

सम्प्रति दिशोऽमूर्तत्वेऽपि व्यापकत्वमाह—सर्वत्र तस्येति ।

अयमर्थः—तस्य कार्यस्य पूर्वोक्तस्य भागभेदादेः कार्यस्य सर्वत्र दर्शनाद् दिग् विभुरिष्यते । अमूर्तानामेतदेव=सर्वत्र स्वकार्यसम्पादकत्वमेव विभुत्वमाहुः पूर्वे विद्वांसः । कायवताम्=विग्रहवतां मूर्तानां तु विभुत्वेऽन्यो विधिः=अन्यः प्रकारः । मूर्तेषु विभुत्वञ्च अवयवैर्विततदेशव्यापकत्वरूपम् ।

महीमहीभृन्नववारिवाहप्रसेकपूर्णोदधिकामिनीषु ।
समुद्यदिन्दुप्रभवप्रहर्षप्रसर्पदम्भोधिकदम्बकेषु ।। इति ।

अयं भावः—व्यतिरेकादेः=देशभागभेदक्रमकल्पनादेः । पूर्वोक्तस्य दिक्कार्यस्य सर्वत्र मूर्तेषु अनारम्भकमवयविनमारभ्य परमाणुपर्यन्तेषु दर्शनाद् व्यापिका दिक् परिकल्प्यते विभुस्वभावा । अमूर्तानां हि दिक्कालाकाशादीनामेतदेव विभुत्वं यत् सर्वत्र स्वकार्यसम्पादकत्वम् । मूर्तानां तु सशरीराणाम्=मूर्तिमतां त्ववयवद्वारा विततदेशव्यापकत्वं विभुत्वमिति ।। १७ ।।

पूर्वोक्तं पूर्वापरादित्वव्यवहारेण भागभेदादिव्यवहारेण च कार्येण दिग्रूप-कारणानुमानं चैतन्यदृष्टान्तेनेदानीं निगमयति=उपसंहरति—चैतन्यवदिति ।

इतः पूर्वं ह्ययं न्यायप्रयोगोऽभिप्रेतः । पूर्वापरादित्वव्यवहारो भागभेदादि-व्यवहारश्च सकारणकः, कार्यत्वात् , ज्ञानकारणकघटादिव्यवहारवदिति ।

अयमर्थः—लोके पूर्वापरादित्वव्यवहारादिना कार्येण क्रियमाणा कारणीभूत-योर्दिक्कालयोः परिकल्पनानुमितिरूपा चैतन्यवत्=चैतन्यस्यैव, चैतन्य इव वा स्थिता, चैतन्यवदित्यत्र "तत्र तस्येव" ( ५।१।११६ ) इति शास्त्रेण इवार्थे वतिप्रत्ययः ।

सन्नपि हि पदार्थो यावन्न संवेद्यते तावदप्राप्तसत्त्व इव नार्थक्रियासूपयुज्यत इति चैतन्यं ज्ञानं सर्ववादिभिरशक्यनिह्नवम्। आत्मा वा चैतन्यम्। यथाहुः सांख्याः–"चैतन्यं पुरुषस्य स्वरूपम्" इति। तच्चाशक्यापह्नवम्। तद्वदनुपपद्यमानभेदापि दिक्कालयोः परिकल्पना यथाप्रतीति रूढा। भावानां हि परमार्थतः पूर्वोक्तनयेन भेदाभेदभावाभावादिरूपैरयोगादनादिप्ररूढाविद्यावशाद् विचित्रो व्यवहारो रूढः प्रकृतिं स्वभावमिव व्यवहर्तॄणां प्राप्त इति विद्वद्भिरपि यथातत्त्ववेदिभिरन्यथा व्यवस्थापयितुं न पार्यते। यथा हि चैतन्यं स्वभावभूतम्, एवं सर्वव्यवहाराणां पूर्वापरादित्वेन दिक्कालावपि रूढौ, तावन्तरेणार्थक्रियाया

---

यथा घटादिभिरर्थक्रियारूपेण व्यवहारेण कार्येण तत्कारणस्य चैतन्यरूपस्य ज्ञानस्य परिकल्पना, तथा पूर्वापरादित्वव्यवहाररूपेण कार्येण तत्कारणयोर्दिक्कालयोः परिकल्पना इत्यर्थः। तां हि लोके प्रसिद्धां प्राणिनां व्यवहर्तॄणां प्रकृतिं भावेषु पूर्वापरादित्वव्यवहाररूपं स्वभावम्, अन्यथा=दिक्कालयोरभावे, को भावः स्थापयिष्यति ? यद् वा को यथातत्त्वविद् विद्वानपि भावानां पूर्वापरादित्वविषयकं व्यवहारमनाद्यविद्यावशात् प्रवृत्तं व्यवहर्तॄणां स्वभावमिव प्राप्तम्, अन्यथा दिक्कालयोरभावे स्थापयिष्यतीत्यर्थः। दिक्कालातिरिक्तस्य भावस्य पूर्वापरादित्वव्यवहारस्थापनायामयोग्यत्वात्।

अनेन दिक्कालाभावे पूर्वापरादित्वव्यवहाराभाव इति तद्व्यवहारे तयोः कारणत्वसाधको व्यतिरेको दर्शितः। पूर्वार्धेन च दिक्कालसत्त्वे तादृशव्यवहारसत्त्वमिति तयोस्तत्र कारणत्वसाधकोऽन्वयः सूचित इति तयोस्तत्र कारणत्वसिद्धिरित्यवधेयमिति।

अयं भावः—तत्र विद्यमानोऽपि हि पदार्थो यावदज्ञातस्तावदप्राप्तप्राण इव न स्वसाध्यार्थक्रियासूपयुज्यत इति भावानां स्वस्वसाध्यार्थक्रियासु प्रवृत्तिं प्रति ज्ञानस्य हेतुत्वेन सिद्धं चैतन्यरूपं ज्ञानं सर्ववादिभिरशक्यापलापम्। आत्मा वा=एव चैतन्यम्। यथाहुः सांख्याः—"चैतन्यं पुरुषस्य स्वरूपम्" इति। तच्च चैतन्यमशक्यापलापम्, पुरुषस्य स्वरूपत्वात्। नहि— नाहमस्मि' इति कश्चिदात्मानं प्रत्याख्यातुं प्रभवति, तद्वदनुपपद्यमानविशेषाऽपि दिक्कालयोः परिकल्पना यथाप्रतीति=दिक्कालयोर्लोके प्रतीत्यनुसारेण व्यवहर्तॄणां मनःसु रूढा। पूर्वोक्तनयेन हि भेदाभेदभावाभावादिभिर्विरुद्धै रूपैर्भावानां व्यवहारस्य परमार्थतोऽयोगात् तै रूपैर्भावानां विचित्रो व्यवहारोऽनादिप्ररूढाविद्यावशाद् रूढः=लोके प्रसिद्धः, व्यवहर्तॄणां प्रकृतिं स्वभावमिव प्राप्त इति यथातत्त्ववेदिभिर्विद्वद्भिरपि भावानां स्वरूपमन्यथा=व्यवह्रियमाणरूपाद् विलक्षणपूर्वापरादित्वशून्येन रूपेण व्यवस्थापयितुं न पार्यते। यथा हि चेतन्यं पुरुषस्य स्वभावभूतं लोके रूढम्, एवं पूर्वापरादित्वविषयकाणां सर्वेषां व्यवहाराणां कारणत्वेन दिक्कालावपि लोके रूढौ। तौ विना अर्थक्रियाया

अनिष्पत्तेः प्राणित्वमेव विघटेतेति प्राणिग्रहणेन सूचयति । व्यवहारे च यथाप्रतीति पदार्थप्रत्याख्यानं न युज्यते ॥ १८ ॥

यस्मात्—

सङ्करो व्यवहाराणां प्रकृतेः स्याद् विपर्यये ।
तस्मात् त्यजन्निमान् भावान् पुनरेवावलम्बते ॥ १९ ॥

दृष्टादृष्टफला व्यवहाराः 'प्राङ्मुखोऽन्नानि भुञ्जीत, पूर्वाह्णे श्राद्धं कुर्यात्' इत्यादयः प्रत्याख्याने दिक्का[ल]योर्न कल्पेरन् । प्रकृतेः स्वभावरूपतां प्राप्ताया दिक्कालकल्पनाया विपर्यये वैपरीत्ये, अपूर्वापरादिनिमित्तत्वेऽङ्गीक्रियमाणे मिश्रीभावोऽनवस्थितत्वं प्रत्यक्षागमरूढानां सन्ध्योपासनादिरूपाणां व्यवहाराणां स्यात्,

---

अनिष्पत्तेः प्राणित्वमेव भावानां विघटेत । निर्जीवत्वमेव सर्वे भावा आपद्येरन्निति कारिकायां प्राणिग्रहणेन सूचयति । व्यवहारे च यथाप्रतीतिसिद्धानां पदार्थानां प्रत्याख्यानं न युज्यत इति पूर्वापरादित्वव्यवहारेण प्रतीत्या च सिद्धयोर्दिक्कालयोः प्रत्याख्यानं न युक्तमिति ॥ १८ ॥

यदि भावानामव्यपदेश्य पूर्वापरादित्वशून्यं निर्भागं ब्रह्मकल्पं समानं तत्त्वं पञ्चदशकारिकोक्तमाश्रित्य यथा तत्त्वविदो विद्वांसोऽपि व्यवहरेयुः, तदा व्यवहाराणां प्रकृतिविपर्ययेण प्रवृत्तौ सर्वेऽपि व्यवहाराः संकीर्येरन्निति महानुपप्लव इत्याह—सङ्करो व्यवहाराणामिति ।

अयमर्थः—व्यवहाराणामित्यस्य काकाक्षिगोलकन्यायेन मध्यमणिन्यायेन वाऽऽवृत्त्या पूर्वोत्तराभ्यां सम्बन्धे=व्यवहाराणां पूर्वापरादित्वविषयकत्वादिरूपायाः प्रकृतेर्विपर्यये व्यवहाराणामपूर्वापराभागवस्तुविषयकत्वे व्यवहाराणां सङ्करः स्यात् । तस्माद् भावानां यथातत्त्वविद् विद्वानपि इमान्=पूर्वापरादिभागत्त्वादिना प्रत्यक्षान् भावान् बाधकैर्दोषैस्त्यजन्=निराकुर्वन्नपि व्यवहारार्थं पुनरेव=पुनरपि तानेव भावान् तत्तद्रूपापन्नानेवावलम्बते=आश्रयतीत्यर्थः ।

अयं भावः—दृष्टादृष्टफलाः शास्त्रीया व्यवहारास्तत्र दृष्टादृष्टफलो व्यवहारः 'प्राङ्मुखोऽन्नानि भुञ्जीत' इति । अत्र भोजनस्य तृप्तिर्दृष्टं फलम् । प्राङ्मुखत्वस्य चादृष्टं फलम् । 'पूर्वाह्णे श्राद्धं कुर्यात्' इत्यत्र श्राद्धस्यादृष्टमेव फलं धर्मरूपं पितृतृप्तिरूपं वा । एवंविधा व्यवहाराश्च दिक्कालयोः प्रत्याख्याने न प्रसिद्धेरन् । प्रकृतेर्विपर्यये तु=व्यवहर्तॄणां स्वभावरूपतां प्राप्ताया दिक्कालकल्पनाया वैपरीत्ये तु=पूर्वापरादिव्यवहारनिमित्तकत्वाभावे अङ्गीक्रियमाणे तु सङ्करो मिश्रीभावोऽनवस्थितत्वञ्च प्रत्यक्षागमरूढानाम्=प्रत्यक्षरूढानामागमरूढानाञ्च सन्ध्योपासनादिरूपाणां व्यवहाराणां स्यात् । तस्माद् यद्यपीदं विश्वं मूर्तित उत्पत्ति-

तस्माद् यद्यप्यपूर्वापरं हीदं विश्वं मूर्तितः क्रियातश्च, तथापि विद्वान् व्यवहार-पतितस्त्यक्तप्रपञ्चावभासोऽपि प्रपञ्चमवलम्बत एवेति इमान् दिक्कालप्रकारान-र्थान् बाधकाभासोपन्यासेन निराकुर्वन्नप्यवलम्बते, तदुपाधिप्रत्ययस्यानिवार्यत्वात् ।

बहुवचनेनावयव्यादिरप्यर्थोऽशक्यपरित्यागो व्यवहार इति दर्शयति—'त्यजन्नवलम्बते' इति समानकालत्वेन त्यागावलम्बनयोरतिशयोक्त्या युगपद्विरुद्धार्थाभ्युपगमात् परस्य स्ववचनविरोधं ध्वनयति ॥ १९ ॥

यथा च कालो ब्रह्मणः शक्तिः, भावेषु प्रतिबन्धाभ्यनुज्ञाव्यापारोपाध्यध्यस्त-नानात्वा, तथा दिगपि स्वोपाधिभिन्ना पूर्वापरादित्वेन भाग(व)भेदव्यवहारनिब-न्धनीत्याह—

तस्यास्तु शक्तेः पूर्वादिभेदो भावान्तराश्रयः ।
भिन्ना दिक् तेन भेदेन भेदायैवोपकल्पते ॥ २० ॥

---

क्रियातश्चापूर्वापरं हि=दैशिककालिकोभयपूर्वापरत्वादिशून्यं हि, तथापि विद्वान् व्यवहारे पतिते व्यवहारात् प्राक् त्यक्तप्रपञ्चावभासोऽपि व्यवहारार्थं प्रपञ्चमव-लम्बत एवेति इमान्=बुद्धौ सन्निहितान् दिक्कालप्रकारकानर्थान् बाधकाभासोप-न्यासमुखेन=दिक्कालयोः सिद्धौ बाधको य आभासो दूषणं तदुपन्यासमुखेन निराकुर्वन्नपि व्यवहारनिर्वाहाय पुनस्तानेवावलम्बते । तदुपाधिप्रत्ययस्य=दिक्का-लोपाधिकस्य पूर्वापरादिप्रत्ययस्यानिवार्यत्वात् ।

इमान् भावान् इति बहुवचनेन अवयव्यादिरप्यर्थो बाधकयुक्त्या निराक्रिय-माणोऽपि व्यवहारे अशक्यपरित्यागोऽबाध्यमानानाद्यविद्याप्रत्ययगोचरत्वादिति दर्शयति—त्यजन्नवलम्बत इति त्यागावलम्बनयोः समानकालत्वेनातिशयोक्त्या युगपद् विरुद्धार्थाभ्युपगमात् परस्य=विदुषोऽद्वैतिनो मिथ्यात्वोक्त्या विश्वं निरा-कुर्वतः, व्यवहारार्थं च विश्वं सत्यत्वेनावलम्बमानस्य विश्वमिथ्यात्वविश्वसत्यत्व-कर्मकयोः स्ववचनयोः परस्परं विरोधं ध्वनयति । अतो विश्वमिथ्यात्वं विश्व-निषेधरूपब्रह्मरूपतया तथ्यं विश्वसत्यत्वं तु व्यावहारिकमिति न तयोर्विरोध इति मन्यन्तेऽद्वैतवादिन इत्यवधेयमिति ॥ १९ ॥

यथा च कालरूपा ब्रह्मणः शक्तिरेकापि एकस्य भावस्य स्थितिविसर्गयोः, अपरस्य भावस्योत्पत्तिप्रतिबन्धरूपव्यापाररूपोपाधिमत्तया सर्गे च उत्पत्त्यभ्यनुज्ञा-रूपव्यापाररूपोपाधिमत्तया च अध्यारोपितभेदा, तथा दिगपि ब्रह्मणः शक्तिरेकाऽपि प्रागुक्तसूर्यसंयोगरूपस्वोपाधिभिन्ना पूर्वापरादित्वेन भाग(व)भेदव्यवहारस्य निमित्तमित्याह—तस्यास्तु शक्तेरिति ।

अयमर्थः—तस्या दिग्रूपाया एकस्या ब्रह्मणः शक्तेः पूर्वापरादिभेदस्तु प्रागुक्तसूर्यसंयोगरूपभावान्तरनिमित्तकः । तेन=तत्तत्सूर्यसंयोगरूपेण भेदेन=

सा स्वैरुपाधिभिर्भिन्नेति सामान्येनोक्तेऽपि पूर्वादितया विशेषरूपेण भेदः पुनरिहोपात्तः। सूर्यसंयोगाश्च भावान्तराख्या व्याख्याताः। भेदायैव इति स्वविशेषणोपरक्तविशेष्यप्रत्ययजननायेत्यर्थः। अवधारणेन भिन्नविशेष्यप्रत्ययकाल एवौपाधिकं भेदं समवलम्बते, नान्यदा स्वतोऽभिन्ना दिगित्याह ॥ २० ॥

इदानीं दिङ्निमित्तं शास्त्रे कार्यमाह—

**अवधित्वेन चापेक्षायोगे दिग्लक्षणो विधिः।**
**पूर्वमस्येति षष्ठ्येव दृष्टा धर्मान्तराश्रये ॥ २१ ॥**

इदमस्मात् पूर्वं परमिति मर्यादारूपेणापेक्षणं लौकिकं कार्यम्, तत्रैव शास्त्रीयदिग्योगलक्षणपञ्चमी विशेषविषया।

---

भिद्यमानेन भावान्तरेण भिन्नैव दिग् भेदाय तत्तन्मूर्तभावभागभेदाय उपकल्पते प्रभवतीति।

अयं भावः—सा स्वैरुपाधिभिर्भिन्ना शक्तिर्दिगिति कथ्यते। इत्यत्र सामान्येन दिग्भेदः प्रागुक्तः। अत्र तु पूर्वादितया विशेषरूपेण दिग्भेदः पुनरुपात्त इत्युक्तिप्रकारभेदान् न पुनरुक्तिः। अत्र=भावान्तराश्रया इत्यत्र भावान्तरपदेनोच्यमानाः सूर्यसंयोगास्तु दिग्भेदकतया प्राग् व्याख्याता इति नेह पुनर्व्याख्यायन्ते। भेदायैव इत्यस्य स्वविशेषणीभूतपूर्वापरादित्वोपरक्तभावान्तररूपविशेष्यप्रत्ययजननायेत्यर्थः। अत्रैवकारो भिन्नक्रमः, भिन्ना दिग् इत्यत्र भिन्नापदोत्तरं द्रष्टव्यः। अत्रावधारणेन पूर्वापरादिभेदभिन्नविशेष्यप्रत्ययकाल एव औपाधिकं भेदं दिक् समवलम्बते, नान्यदा, अन्यदा तु स्वतोऽभिन्ना दिगित्याहेति ॥ २० ॥

इदानीं दिङ्निमित्तकं शास्त्रीयं कार्यमाह—**अवधित्वेन चेति।**

अयमर्थः—कस्यचिद् भावस्य अवधित्वेन अपेक्षायोगे चापेक्षायोगे तु तद्वाचकपदाद् दिग्लक्षणो दिग्योगनिमित्तको विधिः पञ्चमीविधिर्भवति। अयमस्मात् पूर्वं इति। धर्मान्तराश्रये तु=अवधित्वापेक्षयान्यो धर्मो धर्मान्तरमवयवित्वं तदाश्रये तु 'अस्य पूर्वम्, कायस्य पूर्वम्' इति षष्ठ्येव दृष्टा। अत एवैकदेशिसमासे पूर्वकाय इति भवति। 'पूर्वं नाभेः कायस्य' इति षष्ठी तु कायस्यावयवित्वात्, नाभेस्तु अवधित्वात् पञ्चमी। एवमत्र विभक्तिद्वयोपपत्तिरिति।

अयं भावः—'इदमस्मात् पूर्वम्, इदमस्मात् परम्' इति मर्यादारूपेण कस्यचिद् भावस्यापेक्षणं लौकिकं दिशोः कार्यम्। तत्रैव—शास्त्रीया दिग्योगलक्षणा पञ्चमी। दिग्योगसमानाधिकरणापायावधित्वरूपविशेषविषया। विशेषो दिग्योगो निमित्तत्वेन विषयो यस्याः सा तथाभूता। अपादाने पञ्चमी तु अपायावधित्वरूपसामान्यविषया। अपायावधित्वरूपं सामान्यं तु सर्वत्रापि पञ्चम्यामस्त्येवेति "भीत्रार्थानां भयहेतुः" इत्यादीनि सूत्राणि प्रत्याख्यातानि भाष्ये।

कथं तर्ह्यत्र विषये षष्ठी दृश्यत इत्याह—"पूर्वमस्येति षष्ठ्येव दृष्टा" इत्यादि। अवध्यवधिमत्सम्बन्धेऽपेक्षिते पञ्चमीति, तया षष्ठी तत्रैवापवादत्वाद् बाध्यते। धर्मान्तरस्य अवयवित्वस्य त्वपेक्षायामवयविनि षष्ठ्येव भवति 'पूर्वं कायस्य' इति। न ह्यत्रावधित्वेनावयविनोऽपेक्षेति दिग्योगपञ्चम्या अविषयोऽयम्।

अवयवावयविसम्बन्धे हि न पञ्चमी; किन्त्ववध्यवधिमत्सम्बन्धे। अत एव चावयवान्तरापेक्षया अवयवान्तरस्यावधित्वे भवत्येव पञ्चमी, 'पूर्वं कायस्य नाभेः' इति कायावयव्यपेक्षावयवता, अवयवान्तरापेक्षा तु पूर्वतेति सम्बन्धिभेदादविरोधे विभक्तिद्वयोपपत्तिः। समासविधौ त्वेकदेशिनेत्यवयविपरिग्रहे दिग्रूपता नाश्रीयते ॥ २१ ॥

व्यवहारे च पूर्वादिभावः पूर्वादिदिङ्निमित्तोऽर्थानां न स्वाङ्गिनिमित्त इतो नानवस्थित इत्याह—

**पूर्वादीनां विपर्यासोऽदृष्टश्चावध्यसङ्करे।**
**ऋज्वेतदस्येत्येतच्च लिङ्गं न व्यतिकीर्यते ॥ २२ ॥**

---

कथं तर्हि अत्र विषये=दिग्योगलक्षणपञ्चमीविषये षष्ठी दृश्यत इति प्राप्ते आह—"पूर्वमस्येति षष्ठ्येव दृष्टा" इति। अवध्यवधिमद्भावरूपे सम्बन्धे वक्त्राऽपेक्षिते=विवक्षागोचरीकृते सति अवधिवाचकाद् दिग्योगलक्षणा पञ्चमी इति तया षष्ठी तत्रैव=अवध्यवधिमद्भावविषय एव अपवादत्वाद् बाध्यते। धर्मान्तरस्यावयवित्वस्य तु अपेक्षायाम्=विवक्षायाम्, अवयविनि षष्ठ्येव भवति, पूर्वं कायस्येति। न ह्यत्रावधित्वेनावयविनोऽपेक्षेति दिग्योगपञ्चम्या अविषयोऽयम्।

अवयवावयविभावरूपे सम्बन्धे हि न पञ्चमी; किन्तु अवध्यवधिमद्भावरूपे सम्बन्धे। अत एवावयवान्तरापेक्षयाऽवयवान्तरस्यावधित्वे सति भवत्येवावयवान्तरवाचकात् पञ्चमी पूर्वं कायस्य नाभेरिति कायरूपमवयविनमपेक्ष्यावयवत्वं कायपूर्वभागस्य, नाभिरूपावयवान्तरापेक्षा तु पूर्वता इति सम्बन्धस्यैक्येऽपि सम्बन्धिभेदादविरोधे=अवधित्वावयवित्वयोर्विरोधाभावे सति विभक्तिद्वयोपपत्तिः। समासविधौ त्वेकदेशिनेत्यधिकारादवयविन एव परिग्रहे पूर्वशब्दार्थस्यावयवरूपतैव स्वीक्रियते, न तु दिग्रूपता इति पञ्चम्यभावे पूर्वं कायस्येति षष्ठीति ॥ २१ ॥

व्यवहारे चार्थानां पूर्वपरादित्वं पूर्वपरादिदिङ्निमित्तकम्, न तु स्वाङ्गमुखादिनिमित्तकमिति नानवस्थितम्, नापि संकीर्णमित्याह—**पूर्वादीनां विपर्यास इति।**

अवधेः अपेक्षणीयस्य असङ्करे अनियमाभावे पूर्वादीनां विपर्यासो न दृष्ट इति व्यवस्थित एवायं व्यवहारः। तथा हि यदपेक्ष्य पूर्वत्वं व्यवह्रियते, न तदेवापेक्ष्य तस्यैवापरत्वमिति परत्वापरत्वे दिक्कृते नियते। एवमस्य वंशस्य ऋजु स्पष्टं मूलमित्येतदपि दिशो लिङ्गं न व्यतिकीर्यंते, अवधेरेवानपेक्षणाद् अवध्यपेक्षायां हि साङ्कर्यं सम्भाव्येतापि, अवधेरनवस्थितत्वात्। न चात्र लिङ्गेऽवध्यपेक्षेत्य-व्यतिकीर्णा एव दिशः। इत्थं च स्वाङ्गादपि व्यवस्थानेऽवधिनियमादसाङ्कर्यमेव। दृष्टादृष्टप्रयोजनस्तु व्यवहारोऽनादिसिद्धादित्यसम्प्रयोगाख्यावधिनिबन्धनदिग्-व्यवस्था नियतैवैषणीयेति ( नियत एवैषणीय इति ) न यः कश्चनावधिरा-श्रयणीयः॥ २२॥

---

अयमर्थः—अवध्यसङ्करे पूर्वादिभिरपेक्षणीयस्यावधेः—असङ्करे = सङ्करोऽत्र तन्निमित्तभूतोऽनियमस्तदभावे, नियमे इति यावत्। पूर्वादीनां नियमेनावध्यपेक्षाया-मित्यर्थः। पूर्वादीनां विपर्यासः = पूर्वादिषु परत्वादिव्यवहाररूपं वैपरीत्यमदृष्टम् = न दृष्टमिति पूर्वादिदिङ्निमित्तक एवार्थानां पूर्वादित्वव्यवहारः, न स्वाङ्गनिमित्तकः, तत्र व्यवहारे पूर्वादीनां विपर्यासस्य लोके दृष्टत्वात्, पूर्वत्र दर्शितत्वाच्च। किञ्च, अस्य वंशस्य, एतन्मूलम्, स्पष्टमेव ऋजु इत्येतच्च = एतदपि दिशो लिङ्गम्, न व्यतिकीर्यंते = न संकीर्यंते, अत्र व्यवहारेऽवधेरसत्त्वादनपेक्षणाच्चेति दिशोऽपि असंकीर्णा इति 'प्राङ्मुखोऽन्नानि भुञ्जीत' इत्यादिकः शास्त्रीयो व्यवहारः सुष्ठूपपद्यत इति।

अयं भावः--पूर्वादिभिरपेक्षणीयस्यावधेरसङ्करेऽनियमाभावे = नियमे पूर्वा-दीनां विपर्यासो विपर्ययः परादित्वव्यवहारसङ्कररूपः, अदृष्टः इति व्यवस्थित एवायं पूर्वादिदिङ्निमित्तकोऽर्थानां पूर्वादित्वव्यवहारः। तथा हि यं भावमवधिम-पेक्ष्य यस्य पूर्वत्वं व्यवह्रियते न तदेवापेक्ष्य तस्यैवापरत्वमिति हेतोः परत्वापरत्वे दिक्कृते नियते मन्तव्ये। एवमस्य वंशस्य मूलं स्पष्टमेव ऋजु इत्येतदपि व्यवहार-रूपं दिशो लिङ्गं न व्यतिकीर्यंते = न संकीर्यंते, सङ्करसम्भावनामूलस्यावधेरेवात्रा-नपेक्षणात्। अवध्यपेक्षायां हि साङ्कर्यं सम्भाव्येतापि। अत्र व्यवहाररूपे दिशो लिङ्गेऽवधेरसत्त्वाद् अनपेक्षणाच्चासंकीर्णा एव सर्वा अपि दिशः। इत्थञ्च स्वाङ्गा-न्मुखादेरपि पूर्वादीनां व्यवस्थाने क्रियमाणे यत्रावधिनियमस्तत्रासांकर्यमेव अवधि-नियमाभावे साङ्कर्यस्य प्राग्दर्शितत्वात्। दृष्टादृष्टफलस्तु-'प्राङ्मुखो अन्नानि भुञ्जीत' इत्यादिकः शास्त्रीयव्यवहारोऽनादिसिद्धादित्यसम्प्रयोगाख्यावधिनिबन्धना दिग्व्यवस्था नियत एव = अनादिसिद्धो य आदित्यसम्प्रयोगाख्योऽवधिस्तन्निबन्धना या पूर्वा दिग्व्यवस्था तया नियत एव एषणीय इति नयः कश्चनावधिराश्रयणीय इति असंकीर्णस्य तादृशव्यवहारस्य सिद्धिरिति॥ २२॥

**एवं तावद् बाह्यार्थनयेन दिक् समर्थिता। इदानीमन्तर्ज्ञेयनयेनाह—**

**अन्तःकरणधर्मो वा बहिरेवं प्रकाशते।**
**अस्यां त्वन्तर्बहिर्भावः प्रक्रियायां न विद्यते॥ २३॥**

**अन्तरवस्थितस्य करणं व्यापारोऽस्येति चैतन्यमेवमुच्यते। तस्य ह्यनाद्यविद्यावशात् स्वरूपनिष्कर्षेणेदमिति बहिराकारावभासेऽपि परमार्थतो बाह्यस्यायोगात् स्वकुक्षावेव जगत् प्रत्यवभासत इत्यन्तरवस्थितस्यैव व्यापारः। तथा च वक्ष्यति—**

**द्यौः क्षमा वायुरादित्यः सागराः सरितो दिशः।**
**अन्तःकरणतत्त्वस्य भागा बहिरवस्थिताः॥ इति।**

**( वाक्य० ३, साधन० ४१ )**

**तस्यान्तःकरणस्यायं धर्मो बाह्यार्थानपेक्षोऽविद्यावशात् स्वभावभूतोऽवभासते। एवं पूर्वाद्याकारेण बहिरध्यवसीयते। असति बाह्ये कथं बहिरित्युच्येत इति चेत्,**

---

एवं तावद् बाह्यार्थनयेन = बाह्यार्थसत्त्ववादिसौत्रान्तिकवैभाषिकमतेन, दिक् समर्थिता। इदानीमन्तर्ज्ञेयनयेन = सर्वेषां भावानां ज्ञेयानां विज्ञानाकारत्वेन विज्ञानान्तरवस्थितत्वं वदतां योगाचाराणां मतेनाह —अन्तःकरणधर्मो वा इति।

अयमर्थः—वा = अथवा, दिग् अन्तःकरणधर्मः। अत्रान्तःकरणपदेन चैतन्यमुच्यते। मनसो ग्रहणेऽपसिद्धान्तापत्तेः अनाद्यविद्यावशाद् बाह्यत्वेनावभासमानस्य भावस्य स्वान्तरवस्थित्यनुकूलं करणं व्यापारोऽस्येति व्युत्पत्तेः अन्तःकरणमत्र चैतन्यम्। तस्य धर्मोऽपि पृथिव्यादिरेव गन्धवत्त्वादिभिः प्रकारैर्बहिः प्रकाशते। तु = किन्तु, अस्यां संवृतिकल्पितायां प्रक्रियायां मुख्योऽन्तर्बहिर्भावो न विद्यत इति।

अयं भावः—चैतन्यान्तरवस्थितस्य करणं प्रकाशनरूपो व्यापारोऽस्येति व्युत्पत्त्या चैतन्यमेवमुच्यते। तस्य हि = विज्ञानान्तरवस्थितस्य विज्ञानाकारस्य भावस्य हि अनाद्यविद्यावशाच्चैतन्यस्वरूपान्निष्कर्षणेन इदमिति बहिराकारावभासेऽपि वस्तुतो बाह्यस्यार्थस्याभावात् स्वकुक्षावेव = विज्ञानात्मचैतन्यकुक्षावेव जगत् प्रत्यवभासते इत्यन्तरवस्थितस्यैव प्रकाशनरूपो व्यापारः। तथा च वक्ष्यति—

द्यौः क्षमा वायुरादित्यः सागराः सरितो दिशः।
अन्तःकरणतत्त्वस्य भागा बहिरवस्थिताः॥ इति।

( वाक्य० ३, साधन० ४१ )

तस्यान्तःकरणरूपस्य चैतन्यस्य धर्मोऽयं बाह्यार्थानपेक्षः स्वभावभूतोऽविद्यावशादवभासते। एवं विज्ञानधर्मोऽपि सर्वो भावो दिग्देशकालादिरूपः पूर्वाद्याकारेणानाद्यविद्यया बहिरध्यवसीयते। असति बाह्ये कथं बहिरित्युच्येत इति चेदुत्तरमाहोत्तरार्धेन—अस्यां त्विति। विज्ञानाकारस्यान्तरवस्थितस्यैव भावावभास्या-

अस्यामविद्यावशादवभासस्यैव बाह्यत्वावसायरूपायां कल्पनायामन्तारूपता बही-रूपता च न मुख्या, परानुरोधात् तु प्रतिभासवशेनैवमुच्यत इत्यर्थः। असति हि बाह्ये तदपेक्षमान्तरत्वमपि न मुख्यमिति काल्पनिकोऽन्तर्बहिर्भावः।

एवं च पूर्वापरत्वमविद्याध्यस्तं भावेषु आन्तररूपेष्वनादिमिथ्याभ्यास-वासनालक्षणान्तःकरणधर्मरूपं चकास्तीति न बाह्या काचिद् दिगस्ति ॥ २३ ॥

अतश्चैकत्वनानात्वविचारोऽपि निष्फल एवेत्याह—

**एकत्वमासां शक्तीनां नानात्वं वेति कल्पने ।**
**अवस्तुपतिते ज्ञात्वा सत्यतो न परामृशेत् ॥ २४ ॥**

भावोपाधिरूपाणां पूर्वादित्वेन भिन्नानां दिक्शक्तीनां मुख्यमेकत्वम्, उपाधिभेदात् तु नानात्वम्। मुख्यमेव चानादिसिद्धं नानात्वं भिन्नाकार्यानुमेय-मित्येते द्वे कल्पने अवस्तुपतिते। दिशः परमार्थतोऽवस्तुत्वाद् विज्ञाननये व्यतिरिक्त-

---

विद्यावशादस्यां बाह्यत्वावसायरूपायां कल्पनायामन्तःस्थितत्वरूपता बहीरूपता च न मुख्या। प्रतिवाद्यनुरोधात्तु प्रतिभासवशेनैवमुच्यत इत्यर्थः। यतोऽसति बाह्ये तदपेक्षमान्तरत्वमपि न मुख्यमिति अविद्याकल्पितोऽन्तर्बहिर्भावः।

एवञ्च विज्ञानाकारत्वेनान्तररूपेषु भावेषु अनादिमिथ्याध्यासजनितवासना-हेतुकं विज्ञानधर्मरूपमविद्याध्यस्तं पूर्वापरादित्वं चकास्तीति न बाह्या काचिद् दिगस्ति।

एष च सर्वोऽपि कारिकार्थो हरिसमादृतेऽद्वैतिनयेऽपि विज्ञानवादिसजातीयेऽ-वसेयः। अत एवास्याः पातनिकायाम् "इदानीमन्तर्ज्ञेयनयेनाह" इति दर्शनसामान्य-माश्रित्योक्तं हेलाराजेनेति ॥ २३ ॥

प्रागुक्तरीत्या ज्ञेयानामन्तर्बहिर्भावस्य काल्पनिकत्वाच्च दिश एकत्वनानात्व-विचारोऽपि निष्फल एवेत्याह—एकत्वमासां शक्तीनामिति।

अयमर्थः—आसां पूर्वादिभेदभिन्नानां दिग्रूपाणां शक्तीनामेकत्वं मुख्यम्, नानात्वं चामुख्यमिति द्वे अपि कल्पनेऽवस्तुमध्यपतिते = असत्ये ज्ञात्वा सत्यतः = परमार्थतः = परमार्थरूपेण, न परामृशेत् = न विचारयेदित्यर्थः।

अयं भावः—भावोपाधिरूपाणाम् = भावानां भावभागानाञ्च पूर्वादिप्रत्यये भेदप्रत्यये च उपाधिरूपाणाम् = निमित्तभूतानाम्। पूर्वापरादिभेदभिन्नानां दिक्-शक्तीनां मुख्यमेकत्वम्, सूर्यसम्प्रयोगरूपोपाधिभेदात् तु नानात्वं कल्पितम्। मुख्यमेव चानादिसिद्धम्, तु नानात्वं भिन्नव्यपदेशरूपकार्यानुमेयमित्येते द्वे अपि कल्पने अवस्तुपतिते = अद्वैतवादानुसारिशाब्दिकनये दिशो वस्तुतोऽवस्तुत्वात्, विज्ञाननये च

वस्त्वभावादित्यवस्तुविषये बुध्वा परमार्थतो न विचारणीये इत्यर्थः। यथा-प्रतीति व्यवहारसिद्धेः। अत एव संवेद्यमानं प्रतीतिभेदान्नानात्वमभिप्रेत्यासामिति बहुत्वेन निर्देशः ॥ २४ ॥

न च पदार्थविचारे किञ्चित् प्रयोजनमस्ति। तथा हि—

विकल्पातीततत्त्वेषु सङ्केतोपनिबन्धनाः।
भावेषु व्यवहारा ये लोकस्तत्रानुगम्यते ॥ २५ ॥

इह पदार्थास्तीर्थिकपरिकल्पितनियतसङ्केतपरिघटितशरीरास्तांस्तीर्थिक-परिकल्पितान् विकल्पानतिक्रम्य भावतो वर्तन्ते। न हि प्रतिदर्शनदर्शितविरुद्धरूप-योगस्तत्त्वं भावानाम्। तस्मादविचारितरमणीया लोकसिद्धाः पदार्थाः समा-श्रयणीया विद्वद्भिरपि। अलमेभिरप्रतिष्ठितैस्तर्कविकल्पैः। तथा च लोके प्रसिद्धा दश दिशः सिद्धाः ॥ ९५ ॥

---

विज्ञानव्यतिरिक्तवस्त्वभावादित्येवमवस्तुविषये बुद्ध्वा परमार्थतो न विचारणीये इत्यर्थः। भ्रान्तिरूपया दिक्प्रतीत्या पूर्वापरादिव्यवहारसिद्धेः। अत एव प्रतीति-भेदात् संवेद्यमानं दिशां नानात्वमभिप्रेत्य कारिकायामासामिति तासां बहुत्वेन निर्देशः कृत इति ॥ २४ ॥

किञ्च, शब्दसाधुत्वं मृगयमाणानामस्माकं पदार्थविचारे न च किञ्चित्प्रयो-जनमस्ति। तथा हि दर्शयति—विकल्पातीततत्त्वेष्विति।

अयमर्थः—इह खलु भावेषु शास्त्रकाराणां विविधा इतरेतरविरुद्धाश्च विकल्पाः कल्पनारूपाः। न च तदनुसारि तेषां तत्त्वम्. परस्परविरुद्धत्वेनाव्यवस्था-नात्। अतो विकल्पातीततत्त्वेषु=शास्त्रकृतां विकल्पान् तर्कानतिक्रान्तं तत्त्वं येषां तेषु भावेषु, संकेतोपनिबन्धनाः=भावस्वरूपविषयकोषव्याकरणकृतसंकेतनिमित्तका ये व्याकरणाचार्यकृता दिगादिशब्दव्यवहारास्तत्र लोकोऽनुगम्यते दिगादिशब्दार्थाव-धारणाय वैयाकरणैरिति।

अयं भावः—इह शास्त्रेषु पदार्थास्तीर्थिकपरिकल्पितनियतसंकेतपरिघटित-शरीराः=तीर्थिकैः=शास्त्रकारैः परिकल्पिता ये तत्तदर्थेषु तत्तच्छब्दानां नियता संकेतास्तैः परिघटितशरीराः=परिकल्पितस्वरूपाः, तान् शास्त्रकृत्परिकल्पितान् विकल्पानतिक्रम्य भावतः=वस्तुत, वर्तन्ते। प्रतिदर्शनदर्शितविरुद्धरूपयोगः=प्रति-दर्शनं दर्शितः परस्परं विरुद्धः स्वरूपस्य योगः सम्बन्धः, भावानां तत्त्वं नहि भवति। तस्मादविचारितरमणीया लोकसिद्धाः पदार्था विद्वद्भिरपि समाश्रयणीयाः। अल-मेभिरप्रतिष्ठितैस्तर्करूपैर्विकल्पैः। तथा च लोके दिग्विदिगूर्ध्वाधरभेदेन प्रसिद्धा दश दिशोऽत्र व्याकरणेऽपि अनुसर्तव्यत्वेन सिद्धा इति ॥ २५ ॥

तर्कविकल्पैस्तु भेदाभेदौ न व्यवतिष्ठेते इत्याह—

**नैकत्वमस्त्यनानात्वं विनैकत्वेन नेतरत् ।**
**परमार्थे तयोरेष भेदोऽत्यन्तं न विद्यते ॥ २६ ॥**

अन्योन्याश्रयस्य रूपस्यैकासिद्धावितरासिद्धेरुभयासिद्धिप्रसङ्ग इति दिशामेकत्वनानात्वे न व्यवतिष्ठेते । व्यवहारे गजनिमीलनेन तु यथावभासं लौकिको व्यवहारो रूढः । परमार्थविचारे तु परस्परप्रतियोगिनो भेदाभेदयोरप्यसत्यता, मुख्याभिन्नस्य परस्यैव तत्त्वरूपत्वादित्यर्थः । किञ्च परोपाधितया शक्तिर्दिगित्युक्तम् ॥ २६ ॥

शक्तेश्च भेदाभेदविचारानर्हतेत्याह—

**न शक्तीनां तथा भेदो यथा शक्तिमतां स्थितिः ।**
**न च लौकिकमेकत्वं तासामात्मसु विद्यते ॥ २७ ॥**

---

तर्कमूलककल्पनाभिस्तु भेदाभेदौ न व्यस्थितौ भवत इत्याह—**नैकत्वमस्त्यनानात्वमिति** ।

अयमर्थः—अनानात्वम् = नानात्वरहितम् एकत्वं नास्ति । नानात्वस्य स्वभावरूपकत्वप्रतियोगित्वात् । एकत्वेन विना इतरत् = नानात्वं न । नानात्वस्य एकत्वाभावरूपत्वात् । परमार्थे = परमार्थविचारे तु तयोः = एकत्वनानात्वयोः, एषः—लोकेऽनुभूयमानः, अत्यन्तं भेदः = अभेदासमानाधिकरणो भेदः, न विद्यते । एकत्वनानात्वयोरुभयोरपि सर्वाधिष्ठाने ब्रह्मणि कल्पितत्वेनाधिष्ठानरूपत्वेनैकत्वादिति ।

अयं भावः—यद्यद्रूपमन्योन्यमाश्रितं तयोरेकासिद्धावितरासिद्धेरुभयासिद्धिप्रसङ्ग इति रीत्या दिशामेकत्वनानात्वे न व्यवतिष्ठेते । तयोः परस्पराभावरूपत्वेनान्योन्याश्रितत्वात् । व्यवहारे गजनिमीलनेन तु यथावभासं लौकिको भेदाभेदव्यवहारो रूढः । परमार्थविचारे तु परस्परप्रतियोगिनोर्भेदाभेदयोरप्यसत्यता, अन्योन्याश्रितत्वेनासिद्धत्वात् । मुख्यादभिन्नस्य सत्यस्य परस्यैव ब्रह्मणः सर्वाधिष्ठानत्वेन तत्त्वरूपत्वादित्यर्थः । किञ्च, परोपाधितया = स्वातिरिक्तस्य भावस्य पूर्वादित्वेन रूपेण भेदकतया शक्तिर्दिगित्युक्तं प्रागिति ॥ २६ ॥

शक्तेश्चानिर्वाच्याविद्याया अवस्थाविशेषरूपत्वेनानिर्वाच्यतया भेदाभेदविचारानर्हता इत्याह—न शक्तीनामिति ।

शक्तिमतां स्वतन्त्राणां पदार्थानां पृथगेवावधारणाद् भेदो निश्चीयते, न शक्तीनामाधारपारतन्त्र्येणावभासमानानाम्। तस्मादाधारात् परस्परतश्च भेदः प्रत्यक्षसिद्धः। नापि स्वतन्त्रस्य शक्तिमतो यथाऽभेदो घटादेरेकत्वं लोकप्रसिद्धम्, अभेदावभासात्, तथा शक्तीनां कार्यनानात्वोन्नीयमानभेदानां स्वत आधाराच्चाभेदोऽस्तीत्यनिर्वाच्या एव भेदाभेदाभ्यां सर्वाः शक्तयः। अत एवाविद्याशक्तिर्ब्रह्मणो भेदं न विधत्ते, येन द्वैतापत्तिः॥ २७॥

यदुक्तम्--'नैकत्वमस्त्यनानात्वम् · · ·' (वाक्य० ३, दिक्० ३६) इत्यादि तदेवाव्यवस्थितत्वेन निगमयँस्तार्किकाणामेकपक्षावलम्बनं न युक्तमित्याह—

नैकत्वं व्यवतिष्ठेत नानात्वं चेन्न कल्पयेत्।
नानात्वं चावहीयेत यद्येकत्वं न कल्पयेत्॥ २८॥

प्रतियोगिभूतं नानात्वं यदि बुद्धया न कल्पयेत्, नाश्रयेत, एकत्वं कर्तृ तदा न स्वरूपं नियतं लभेत। एवं नानात्वमपि यदि प्रतियोग्येकत्वं नाश्रयेत्, तदा

---

अयमर्थः—यथा शक्तिमतां स्वतन्त्राणां पदार्थानां घटादीनां परस्परतो भिन्नतया स्थितिर्निश्चयः, तथा शक्तीनामाधारपारतन्त्र्येण प्रतीयमानानां तस्मादाधारात् परस्परतश्च भेदो न प्रत्यक्षसिद्धः।

यथा लौकिकमेकत्वं घटादीनां स्वरूपे विद्यते, एकत्वेनावभासात्। तथा तासाम्=शक्तीनामात्मसु स्वरूपेषु स्वत आधाराच्च लौकिकमेकत्वं न च=नापि विद्यते। प्रत्यक्षसिद्धेन कार्यनानात्वेन तासां नानात्वस्योन्नीयमानत्वादिति।

अयं भावः—यथा शक्तिमतां स्वतन्त्राणां पदार्थानां पृथगेवावधारणात्=भिन्नदेशस्थितत्वेन निश्चयाद् भेदो निश्चीयते, न ह्यभिन्नानां भिन्नेषु देशेषु स्थितिः सम्भवति। तथा न शक्तीनामाधारपारतन्त्र्येण प्रतीयमानानां तस्मादाधारात् परस्परतश्च भेदः प्रत्यक्षसिद्धः। शक्तीनामतीन्द्रियाणां कार्यानुमेयत्वेनाप्रत्यक्षत्वात्। स्वतन्त्रस्य शक्तिमतो यथाऽभेदो घटादेरेकत्वरूपो लोकप्रसिद्धः, एतद्देशविद्यमाने घटे अभेदरूपस्यैकत्वस्यावभासात्, तथा शक्तीनां कार्यनानात्वेनानुमीयमाननानात्वानां स्वत आधाराच्चाभेदो न चास्ति इत्यनिर्वाच्या एव भेदाभेदाभ्यां सर्वाः शक्तयः। अत एव=शक्तीनामेकत्वनानात्वयोरसत्यत्वादेव अविद्यारूपा स्वशक्तिर्ब्रह्मणो भेदं न विधत्ते, येन द्वैतापत्तिः स्यादिति॥ २७॥

यदुक्तम्—"नैकत्वमस्त्यनानात्वम्" इत्यादि तदेवाव्यवस्थितत्वेनोपसंहरन् तार्किकाणामेकत्वनानात्वयोरन्यतरपक्षावलम्बनं न युक्तमित्याह—नैकत्वं व्यवतिष्ठेत इति।

तदपि नावतिष्ठेतेति परस्परापेक्षत्वादनयोर्नैकत्रावस्थातुं पार्यत इत्यविचारितरमणीया दिगाश्रयणीया लौकिकीति सिद्धम् ॥ २८ ॥

॥ इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे दिक्समुद्देशः षष्ठः ॥

---

अयमर्थः—स्वभावभूतस्यैकत्वस्य प्रतियोगिनानात्वं चेद् यदि, न कल्पयेत्=बुद्धया नाश्रयेत बोद्धा, तदा एकत्वं न व्यवतिष्ठेत न व्यवस्थितं भवेत्, न नियतं स्वरूपं लभेत इति यावत्। एवं नानात्वं च=अपि, यदि स्वप्रतियोगि एकत्वं न कल्पयेत्=नाश्रयेत, तदा तदपि अवहीयेत। न व्यवतिष्ठेत इत्येवमेकत्वनानात्वयोरन्योऽन्याश्रितत्वादेकस्मिन् पक्षेऽवधारणपूर्वकमवस्थातुं न शक्यत इति विविधतर्कासहत्वेनाविचारितरमणीया लोकप्रसिद्धरूपा अत्र शास्त्रे व्यवहाराय दिगाश्रयणीयेति सिद्धमिति ॥ २८ ॥

॥ इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथोपज्ञातायामम्बाकर्त्र्यां दिक्समुद्देशः षष्ठः ॥

# अथ साधनसमुद्देशः

'दिक् साधनम्' ( वा० प० ३, दिक्० १ ) इति दिशोऽनन्तरं साधनमुद्दिष्टं लक्षयितुमाह—

स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे ।
क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः ॥ १ ॥

---

विद्योतमानविधुभूषितभालभागे दुर्भागधेयदवथुं मम दूरयाम्ब ।
कामाक्षि माक्षिकपरीतवचोविभूते सूनुद्वयं सृज शिवे मम पुत्रकस्य ॥
सौधाब्धिमध्यगमहामणिसौधमूर्च्छत्संगीतनीतदिवसे त्रिदशेश्वरि त्वम् ।
क्रन्दन्तमन्तकभयादभयार्पणेन मातर्विलोकय विलोकनकौतुकेन ॥
सा धनं विधुविभूषणस्य या साधनं मम करोतु मानसे ।
साधनं सकलसम्पदामियं याऽधनं खलु करोति साधनम् ॥

दिक्साधनं क्रियाकाल इति वस्त्वभिधायिन इत्यत्र दिशोऽनन्तरं साधननामत उपात्तम्, तल्लक्षणतो निरूपयन्नाह—**स्वाश्रये समवेतानामिति** ।

अयमर्थः—स्वाश्रये=साधनाश्रये, समवेतानां क्रियाणाम्, तद्वदेवाश्रयान्तरे समवेतानां क्रियाणामभिनिष्पत्तौ सिद्धौ यत्सामर्थ्यं तद् भाष्यकारप्रभृतयः साधनं विदुरिति पदयोजना । तत्र कर्तृत्वशक्तिरूपं सामर्थ्यं स्वाश्रये समवेतानां व्यापार-रूपाणां क्रियाणां सिद्धौ साधनम् । कर्मत्वशक्तिरूपं सामर्थ्यं तु स्वाश्रये समवेतानां क्रियत इति कर्मव्युत्पत्त्या फलरूपाणां क्रियाणां सिद्धौ साधनम् । करणत्वादि-शक्तिरूपं तु सामर्थ्यमाश्रयान्तरे=स्वाश्रयातिरिक्ते आश्रये समवेतानां क्रियाणां फलरूपाणां व्यापाररूपाणां वा सिद्धौ साधनमिति विवेकः । तत्रापि करणत्वम्=फलरूपाणां क्रियाणां साधनम् । तदुक्तम्—

क्रियायाः परिनिष्पत्तिर्यद् व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत् तदा स्मृतम् ॥ इति ।
( वा० ३, साधन० ९० )

अत्र क्रिया फलम्, सम्प्रदानत्वं तु दातृगतानां व्यापाररूपाणां क्रियाणां साधनम् । 'अश्वात् पतति' इत्यादावपादानत्वमपि परसमवेतानां व्यापाररूपाणामेव क्रियाणां साधनम् । अधिकरणत्वं तु परसमवेतानां फलरूपाणां क्रियाणां साधनम् । तदुक्तम्—

क्रियानिर्वृत्तौ द्रव्यस्य शक्तिः साधनम्, साध्यतेऽनया क्रियेति भाष्यकारप्रभृतयो विदुः। तथा हि "गुणः साधनम्" (म० भा० ३।२।११५) इति भाष्य उक्तम्। शक्तिरेवात्राधारपारतन्त्र्यादन्यस्माच्च स्वाश्रयस्य भेदकत्वाद् गुणशब्देनोक्ता। कृदाख्याताभिहितयोर्भावयोर्भेदाभिधानप्रसङ्गे तु यद् भाष्यम् "द्रव्यं क्रियाभिनिर्वृत्तिं प्रति साधनभावमुपैति" (म० भा० ३।१।०६७) इति, तदन्यत्राहत्य द्रव्यस्य साधनत्वव्युदासाच्छक्तिव्यवधानाश्रयेण गमयितव्यम्।

शक्तं हि द्रव्यं साधनम्, न तु निराधारा शक्तिः सम्भवति। "परोक्षे लिट्" (पा० ३।२।११५) इत्यत्रापि। "यदि गुणसमुदायः साधनम्, साधनमप्यनुमानगम्यम्। अथान्यद्गुणेभ्यः साधनम्, भवति प्रत्यक्षपरोक्षतायाः सम्भवः" (म० भा० ३।२।११५) इति यद् भाष्यं तदप्येवमेव नेतव्यम्, शक्तेर्नित्यपरोक्षत्वात्।

---

कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम्।
उपकुर्वत्क्रियासिद्धौ प्राश्चोऽधिकरणं विदुः॥ इति।

अत्रोत्तरार्धे क्रियापदेन फलं विवक्षितमिति।

अयं भावः—क्रियायाः व्यापाररूपायाः फलरूपाया वा निर्वृत्तौ=सिद्धौ द्रव्यस्य कर्तृत्व-कर्मत्वप्रभृतिका शक्तिः साधनमिति साध्यतेऽनया क्रियेति व्युत्पत्त्या भाष्यकारप्रभृतयो विदुः। शक्तिरेवात्राधारपारतन्त्र्येणाप्रधानत्वाद् गुणशब्देनोक्ता। यद् वा अन्यस्मादशक्तात् स्वाश्रयस्य भेदकत्वरूपाद् विशेषणरूपाप्रधानसाधर्म्याद् गुणशब्देन सोक्ता।

यत्तु, 'भवनम्, भूयते' इत्यादौ यथायथम्—कृदाख्याताभिहितयोर्भावयोर्भेदाभिधानप्रसङ्गे भाष्यम्—"द्रव्यं क्रियाभिनिर्वृत्तिं प्रति साधनभावमुपैति" इति। तत् शक्तिव्यवधानाश्रयेण=शक्तिं द्वारीकृत्य समर्थयितव्यम्, अन्यत्र द्रव्यस्य साक्षात्साधनत्वनिषेधात्। तथा हि—"गुणः साधनम्" इति भाष्यस्यासति बाधके गुण एव साधनम्, न तु द्रव्यमित्यवधारणपरतया व्याख्यानेन द्रव्यस्य साक्षात्साधनत्वनिषेधः।

किञ्च, शक्तमेव द्रव्यं साधनं भवति, न त्वशक्तम्। न च निराश्रया शक्तिः सम्भवतीति रीत्यापि शक्तिद्वारैव द्रव्यस्य साधनत्वम्, न तु साक्षात्। "परोक्षे लिट्" (३।२।११५) इति सूत्रेऽपि यद् भाष्यम्—"यदि गुणसमुदायः साधनम्, साधनमप्यनुमानगम्यम्। अथान्यद् गुणेभ्यः साधनम्, भवति प्रत्यक्षपरोक्षतायाः सम्भवः" इति। तदपि शक्तेः क्रियां प्रति साक्षात् साधनत्वम्, द्रव्यस्य तु शक्तिद्वारैव इत्येवमेव नेतव्यम्, शक्तेः सदा परोक्षत्वात्।

अत्र भाष्ये—"साधनमप्यनुमानगम्यम्" इत्यत्र शक्तिरूपस्य साधनस्यातीन्द्रियत्वं हेतुः। प्रत्यक्षपरोक्षतायाः सम्भव इत्यस्य द्रव्यस्य प्रत्यक्षत्वसम्भवः, शक्तेस्तु अतीन्द्रियत्वेन परोक्षत्वसम्भव इत्यर्थः।

क्रियावद्विशेषणमव्यभिचारादयुक्तमिति परोक्षताविशेषणसामर्थ्याच्छक्त्याविष्टं द्रव्यं साधनमुपन्यस्तम् ।

एवम् "उपसर्गाच्छन्दसि धात्वर्थे" ( पा० ५।१।११८ ) इत्यत्र "साधनेऽयं भवँल्लिङ्गसंख्याभ्यां योक्ष्यते" ( म० भा० ५।१।११८ ) इति भाष्यं साधनशक्तिविशिष्टे द्रव्य इति व्याख्येयम् ।

तथा हि—धाताविति एवोक्ते शब्दे वृत्त्यसम्भवात् क्रियाप्रतिपत्तौ सिद्धायामर्थग्रहणाद्धातुकृतोऽर्थ इति समासप्रतिपत्त्यर्थाद् द्रव्यमाश्रितम् । वस्तुपर्यायो ह्यर्थशब्दः । द्रव्यस्य च स्वरूपेण सिद्धस्वभावत्वात् क्रियया करणानुपपत्तेः कर्मादिकारकरूपेणैव तस्य करणम् । क्रिया हि कारकाणि करोति, तदपेक्षत्वात् तद्व्यवहारस्येति साधनात्मना द्रव्यस्य क्रियया करणादेवमुक्तम् । धातुरर्थः प्रयोजनमस्येत्येतत्तु भाष्यव्याख्यानमयुक्तम् ।

एवं हि शक्तेरेव क्रिया साध्यत्वेन प्रयोजनमिति द्रव्यं न प्रत्याय्येत ।

यत्तु "साधनं वै द्रव्यम्, न च द्रव्यस्य प्रकर्षापकर्षौ स्तः"

( म० भा० ५।३।५५ )

---

क्रियावत् साधनमित्येवं साधनस्य क्रियावद् विशेषणमयुक्तम्, साधनस्य क्रियावत्त्वाव्यभिचारात्, अतः परोक्षं साधनमित्येवं साधनस्य परोक्षता विशेषणसामर्थ्याच्छक्त्याविष्टं द्रव्यं साधनमुपन्यस्तम् ।

एवम्—"उपसर्गाच्छन्दसि धात्वर्थे" ( पा० ५।१।११८ ) इत्यत्र 'साधनेऽयं भवँल्लिङ्गसंख्याभ्यां योक्ष्यते" इति भाष्यम् ।

अस्यार्थः—'यदुद्वतो निवतो याति' इत्यत्र 'उद्' इत्ययं 'नि' इत्ययश्चोपसर्गः । अपादानत्वशक्तिरूपे साधने भवन् वर्तमानोऽव्ययत्वादलिङ्गासंख्योऽपि पुंस्त्वेन लिङ्गेन एकत्वादिकया संख्यया च योक्ष्यत इत्यर्थः । 'उद्वत' इत्यस्य उद्गतादिति, 'निवतः' इत्यस्य निर्गतादित्यर्थः । अत्र भाष्ये साधने इति साधनरूपशक्तिविशिष्टे द्रव्ये इत्येवं व्याख्येयम् ।

तथा हि—सूत्रे धात्वर्थे इत्यस्य स्थाने 'धातौ' इत्येवोक्ते धातुरूपे शब्दे उपसर्गस्य वृत्त्यसम्भवाद् धातुपदेनैव धात्वर्थक्रियाप्रतिपत्तौ सिद्धायामपि पुनरर्थग्रहणाद् धातुकृतोऽर्थ इति समासप्रतिपत्त्यर्थाद् द्रव्यमाश्रितम् । वस्तुपर्यायो ह्यर्थशब्दः । द्रव्यस्य च स्वरूपेण सिद्धस्वभावत्वात्, क्रियया करणानुपपत्तेः कर्मादिकारकरूपेणैव तस्य क्रियया करणम् । क्रिया हि कारकाणि करोति, क्रियापेक्षत्वात् कारकव्यवहारस्येति द्रव्यस्य साधनात्मना क्रियया करणाद् धातुकृतोऽर्थ इत्येवमुक्तम् । धातुः = क्रियारूपो धात्वर्थः । अर्थः प्रयोजनमस्येत्येतत्तु भाष्यव्याख्यानमयुक्तम् ।

एवं हि क्रिया साध्यत्वेन शक्तेरेव प्रयोजनमिति धात्वर्थपदेन शक्तिरेव प्रत्याय्येत, न तु द्रव्यमिति धात्वर्थपदस्य द्रव्यपरतया व्याख्यानभाष्यविरोधः ।

इत्यद्रव्यप्रकर्षंव्याख्याने भाष्ये द्रव्यस्य साधनत्वाभिधानं तच्छक्तिशक्तिमतोर्भेदाविवक्षयेत्यवगन्तव्यम् ।

तथा हि—तिङन्तात् क्रियासाधनाभिधायिनः प्रकर्षप्रत्यय इति शक्तेः क्रियालक्षणकार्यानुमेयायाः कार्यद्वारेणैव प्रकर्ष इति क्रियाप्रकर्षे प्रत्ययस्येष्टस्य संग्रहे द्रव्याधारत्वाच्छक्तेः कार्यमुखवत् कारणभूतद्रव्यमुखेनापि कथं न प्रकर्ष इत्याशङ्क्य द्रव्यस्य तदभावमभिधातुमेतदुक्तमिति व्यतिरेकोऽनादृतः। तत्र कर्तृकर्मणोः क्रिया समवैतीति स्वाश्रयसमवेतक्रियानिष्पत्तौ तयोः कारकता, करणादीनां तु पराश्रयसमवेतायां क्रियायां साधनभावः ।

न हि करणादिषु क्रिया समवैति। 'क्रियाणाम्' इति व्यक्तिभेदापेक्षं बहुवचनम् । गुणक्रियापेक्षया वा सर्वेषां स्वाश्रयसमवेतक्रियापेक्षं साधनत्वम् । गुणक्रियायां हि कर्तारः सर्वे, अकिञ्चित्करस्य साधनत्वानुपपत्तेः ।

अत एव करणं कारकमित्यादिसाधनसामानाधिकरण्योपपत्तिः ।

---

ननु "साधनं वै द्रव्यम्, न च द्रव्यस्य प्रकर्षापकर्षौ स्तः" इत्यामुप्रत्ययविधायकसूत्रस्थाद्रव्यप्रकर्षपदव्याख्यानावसरे भाष्ये द्रव्यस्य साधनत्वमुक्तम्, तत्कथं शक्तिः साधनमुच्यत इति चेत्, शक्तिशक्तिमतोर्भेदाविवक्षया तथोक्तेः ।

तथा हि—तिङन्तात् प्रकृत्यंशेन क्रियाऽभिधायिनः प्रत्ययांशेन च साधनाभिधायिनः प्रकर्षार्थक आमुप्रत्यय इति क्रियारूपकार्यानुमेयायाः शक्तेः कार्यद्वारेणैव प्रकर्षस्तदनुभवश्चेति क्रियाप्रकर्षे इष्टस्यामुप्रत्ययस्य, संग्रहेऽपि द्रव्याधारत्वाच्छक्तेः कार्यमुखवत् स्वाधाररूपक्रियाकारणभूतद्रव्यमुखेनापि कथं न प्रकर्ष इत्याशङ्क्य द्रव्यस्य प्रकर्षाभावमभिधातुम् साधनं वै द्रव्यम्' इत्यादिकमुक्तमिति व्यतिरेकोऽनादृतः = द्रव्यस्य साधनत्वाभावः सन्नपि समाधानावसरे नादरेण पुरस्कृतः। द्रव्यस्य प्रकर्षाभावेनैव प्रकर्षप्रत्ययानुत्पत्त्या किं द्रव्यस्य साधनत्वाभावस्य सतोऽपि समाधानरूपतयोपन्यासेनेति समाधानस्यान्यथासिद्धिस्तदनादरबीजम् । तत्र प्रधानीभूता व्यापाररूपधात्वर्थक्रिया, फलरूपा च सा कर्तृकर्मणोः समवैतीति स्वाश्रयसमवेतक्रियानिष्पत्तौ तयोः कारकता। करणादीनां तु कर्तृकर्मसमवेतत्वेन पराश्रयसमवेतायां क्रियायां साधनभावः।

न हि करणादिषु सा क्रिया समवैति। कारिकायाम्—क्रियाणामिति बहुवचनं न जात्यपेक्षम्, धात्वर्थक्रियागतजातेरेकत्वात्; किन्तु क्रियाव्यक्तिभेदापेक्षं बहुवचनम् । यद्वा सर्वेषां कारकाणां स्वमात्रसमवेतगुणक्रियापेक्षया स्वाश्रयसमवेतक्रियापेक्षं साधनत्वम् । गुणक्रियायां हि कर्तारः सर्वे, अकिञ्चित्करस्य साधनत्वानुपपत्तेः । अत एव करणं कारकम्, सम्प्रदानं कारकमित्यादिरूपस्य साधनसामानाधिकरण्यस्योपपत्तिः । सा करणादीनामकिञ्चित्करत्वेन स्यात् ।

इत्थं च 'क्रियाणाम्' इति बहुवचनं सुष्ठु गमितं भवति। कर्तृकर्मस्था तु प्रधानक्रिया करणादीनामाश्रयान्तरसमवेता ॥ १ ॥

कथं पुनरेतदवगम्यते शक्तिः साधनम्, न पुनर्द्रव्यमित्याशङ्क्याह—

शक्तिमात्रासमूहस्य विश्वस्यानेकधर्म्मणः।
सर्वदा सर्वथा भावात् क्वचित् किञ्चिद् विवक्ष्यते ॥ २ ॥

घटादयो भावा विश्वशब्दवाच्याः। ते च तत्तदुदकाहरणादिकार्यसाधिकानां शक्तीनां समूहरूपाः। अत एव ताः शक्तयस्तत्र मात्रा भागा इति शक्तिसमाहारमात्रं घटादयः। ताश्च शक्तयोऽनेकविधाः। काश्चित् स्वहेतोरेव प्रभवन्ति, आश्रयविनाशमन्वपि च विनश्यन्ति। यथा बोधप्रदीपादीनां प्रकाशशक्तयः। काश्चित् पौरुषेय्यः स्थित एवाश्रये निरुध्यन्ते। यथा बलादिशक्तयः।

---

इत्थश्च गुणक्रियाणां बहुत्वेन कारिकायां क्रियाणामिति बहुवचनं सुष्ठु उपपादितं भवति। प्रधानक्रिया तु कर्त्तृकर्मस्था करणाद्यपेक्षयाऽऽश्रयान्तरसमवेतेति विवेक इति ॥ १ ॥

ननु 'क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः' ( वा० प० ३, साध० १ ) इत्युक्तम्, तत्कथं पुनरेतदवगम्यते शक्तिः साधनं न पुनर्द्रव्यमित्याशङ्क्याह—शक्तिमात्रासमूहस्येति।

अयमर्थः—शक्तय एव मात्रा भागाः समूहस्येति शक्तिमात्राः तासां तत्तदुदकाहरणादिकार्यसाधिकानां शक्तीनां समूहस्य विश्वस्य घटादिप्रपञ्चरूपस्य अनेकधर्मणः=अनेकविधशक्तिरूपधर्मवतः सर्वदा=यावत्स्थिति, सर्वथा=सर्वप्रकारेण सर्वविधशक्तिमत्तया, भावात्=सत्त्वात्, क्वचिद् देशे कस्मिंश्चित्काले किञ्चिदेव=शक्तिरूपं बुद्धौ यदुद्भूतं कार्यार्थमपेक्षितं तदेव विवक्ष्यते, न तु विद्यमानमप्यन्यत् शक्तिकदम्बकमिति।

एवञ्च शक्तिसमूह एव द्रव्यम्, न तु शक्त्याधारभूतम्, ततोऽन्यदिति शक्तिरेव साधनम्, न तु तदाधारभूतं द्रव्यमसत्त्वादिति।

अयं भावः—घटादयः कार्यरूपा अर्थक्रिया समर्थभावा अत्र विश्वशब्दवाच्याः। ते च तत्तदुदकाहरणादिकार्यसाधिकानां शक्तीनां समूहरूपाः। अत एव प्रत्येकं ताः शक्तयस्तत्र समूहे मात्रा भागा इति शक्तिसमाहारमात्रं घटादयः। ताश्च शक्तयोऽनेकरूपाः। काश्चित् स्वहेतोरेव प्रभवन्ति, न तु स्वाश्रयहेतोः। स्वाश्रयविनाशकसामग्रीत एवाश्रयविनाशमन्वपि च विनश्यन्ति। यथा बोधप्रदीपादीनां प्रकाशशक्तयः। एता अपि मन्दत्वामन्दत्वाभ्यां तरतमभावेन चानेकरूपाः।

वस्तुतस्तु बोधप्रदीपादीनां शक्तयः स्वाश्रयहेतोरेव प्रभवन्ति, न तु स्वहेतोः, स्वाश्रयहेत्वतिरिक्तस्वहेतुकल्पने मानाभावात्। काश्चित्तु शक्तयः पौरुषेय्यः—पुरुषैः

ता हि श्रमाभ्यासेन वृष्यद्रव्योपयोगेन च जायन्ते। अन्याः सत्येवाश्रये पुरुषप्रयत्नेन विधार्य्यन्ते। यथा विषस्य मारणशक्तिः। बीजस्याङ्कुरजननशक्तिः। अन्याः प्रभावातिशयवता विपरिवर्त्यन्ते। यथा योगिना सर्वभावानां रूपपरिवृत्तिराधीयते। काश्चित् कालपरिवासेन व्यज्यन्ते, यथा धर्माधर्मादिशक्तिः फलदान इत्याद्यनेकविधमुन्नेयम्।

एवमनेकस्वभावत्वे शक्तिसमुदायस्य विचित्रे कार्ये यथाशक्ति भेदविवक्षायां प्रतिनियतसाधनभावोपपत्तिः। द्रव्यस्य तु साधनत्वे तस्यैकरूपत्वात् कार्यवैचित्र्यं न स्यादित्यर्थः। तदुक्तं भाष्ये—

"गुणसमुदायः साधनम्" ( म० भा० ३।२।११५ ) इति।

प्रधानक्रियाया एकैकशक्तिसाध्यत्वाभावात् समुदायग्रहणम्। गुणक्रियापेक्षया तु प्रत्येकं शक्तेः साधनता। तस्याश्च प्रधानक्रियापेक्षया वैचित्र्यात् कर्मादिरूपता।

---

कृताः, आश्रयस्थित्यनधीनस्थितिकाः स्थित एवाश्रये निरुध्यन्ते = पुरुषप्रयत्ननिष्पाद्यमानानां स्वकारणानां पुरुषप्रयत्नाभावप्रयुक्ताभावे तिरोभवन्ति। यथा पुरुषस्य बलप्रभावप्रतापपराक्रमादिशक्तयः। ता हि श्रमाभ्यासेन वृष्यद्रव्यभक्षणेन कोषदण्डसम्पादनादिना च जायन्ते, तन्निरोधे च निरुध्यन्ते। अन्याश्च शक्तयः सत्येव स्वाश्रये पुरुषप्रयत्नेन विधार्यन्ते = प्रतिबध्यन्ते। यथा इन्दुरमारादिविषस्य मारणशक्तिः संशोधनकर्मणा आयुर्वेदविहितेन प्रतिबध्यते सत्येव स्वाश्रये। बीजस्य चाङ्कुरजननशक्तिः कुशूलादिरूपनिर्जलनिर्वातनिस्तापनिवासनिधानादिकर्मणा प्रतिबध्यते। अन्याश्च शक्तयो योगादिजनितप्रभावातिशयवता पुरुषेण विपरिवर्त्यन्ते। यथा योगिना सति संकल्पे तदनुसारेण सर्वभावानां रूपपरिवृत्तिः = स्वरूपपरिवर्तनं क्रियते। काश्चित् शक्तयः स्वाश्रये दीर्घकालात् प्रसुप्ता इव नियतकालपरिवासरूपपरिधिपरिसमाप्त्या व्यज्यन्ते = प्रबोध्यन्ते। यथाऽनेकजन्मसञ्चितधर्माधर्मादिशक्तिः चिरप्रसुप्ता सुखदुःखोपभोगरूपफलदानसमये प्रत्युपस्थिते कालपरिवासेन प्रबोध्यत इत्याद्यनेकविधं शक्तिस्वरूपमुन्नेयम्।

एवं शक्तिसमुदायस्यानेकविधस्वभावत्वे स्थिते कार्यवैचित्र्येण शक्तिवैचित्र्यकल्पनया यथाशक्ति तत्तत्क्रियासु साधनभेदविवक्षायां क्रियाभेदेन कर्तृकरणादिरूपप्रतिनियतसाधनभावोपपत्तिः। द्रव्यस्य तु साधनत्वे तस्य सिद्धस्वभावत्वे नैकरूपत्वात् कार्यवैचित्र्यं न स्यादित्यर्थः। तदुक्तं भाष्ये—"गुणसमुदायः साधनम्" इति। गुणसमुदाय इत्यस्य शक्तिसमुदाय इत्यर्थः प्राग् व्याख्यातः। गुणक्रियाणां कर्मकरणादिरूपैकैकशक्तिसाध्यत्वेऽपि प्रधानक्रियाया एकैकशक्तिसाध्यत्वाभावाद् गुणसमुदायः साधनमित्युक्तम्, न तु गुणः साधनमिति। गुणक्रियापेक्षया तु एकैकशक्तेः साधनता। तस्याश्च प्रधानक्रियापेक्षया वैचित्र्यात् तत्साधनानां कर्मादिरूपता एव, न तु कर्तृरूपता।

यद् वा प्रत्येकं साधनत्वेऽपि समुदायग्रहणं शक्तीनां साधनत्वे तासां भेदादेकस्य कार्यभेदोपपत्तिख्यापनार्थम्। तेनानेकशक्तेरपि पदार्थस्य सदैव तथावस्थानेऽपि काचिच्छक्तिः क्वचिदुद्भूता विवक्ष्यत इति 'घटं पश्य, घटेनोदकमानय, घटे उदकं निधेहि' इत्यादिकर्मकरणादिभावो नियमेनोपपद्यत इति न कारकसाङ्कर्यप्रसङ्गः। द्रव्यस्य त्वेकस्वभावत्वात् कर्मकरणादित्वं नोपपद्यत इति गर्भीकृतेयमत्र युक्तिः शक्तेः साधनत्वे बोद्धव्या ॥ २ ॥

ननु च यत्र सन्ति शक्तयस्तत्र युक्तं यन्नियमेन विवक्ष्येरन्। यत्र दृश्यन्ते पुनरसत्यस्तत्र कथं तासां विवक्षा ? तद्यथा शक्तिमादधाति, शक्त्या साधयति, शक्तावायतते, शक्तेर्व्यपैतीति। न हि शक्तेः शक्त्यन्तरयोगः, अनवस्थापातात्। तथा धनविनाशं करोति, धनाभावेन युक्त इति निरूपाख्येऽभावे का शक्तिः ? 'स्थाल्यां पचति, स्थाल्या पचति' इति सम्भवनधारणोपकारा स्थाली करणाधिकरणभिन्ना कथमित्याशङ्क्याह—

साधनव्यवहारश्च बुद्ध्यवस्थानिबन्धनः।
सन्नसन् वार्थरूपेषु भेदो बुद्ध्या प्रकल्प्यते ॥ ३ ॥

---

यद्वा प्रत्येकं शक्तेः साधनत्वेऽपि समुदायग्रहणं शक्तीनां साधनत्वे तासां भेदादेकस्य समुदायस्य कार्यभेदोपपत्तिख्यापनार्थम्। तेनानेकशक्तेरपि पदार्थस्य सदैव तथा अनेकशक्तिमत्तयाऽवस्थानेऽपि काचिच्छक्तिः कदाचित् क्वचिदुद्भूता=पुरुषप्रयत्नेन कार्यार्थं तत्तदुपायैरुद्बोधनानुगुणैरुद्भाविता वक्त्रा विवक्ष्यत इति 'घटं पश्य, घटेनोदकमानय, घटे उदकं निधेहि' इत्यादिकः कर्मकरणादिभावो नियमेनोपपद्यत इति न कारकसाङ्कर्यप्रसङ्गः। द्रव्यस्य तु सिद्धत्वेनैकस्वभावत्वात् कालभेदेन क्रियाभेदेनापि कर्मकरणादित्वं विरोधान्नोपपद्यत इति शक्तेः साधनत्वयुक्तिरत्र कारिकायां निगूहिता बोद्धव्या इति ॥ २ ॥

ननु च यत्र शक्तयः सन्ति, तत्र यन्नियमेन विवक्ष्येरन्, तद् युक्तम्। यत्र तु शक्तयो दृश्यन्ते=अनुभूयन्ते; किन्तु अनुभूयमाना अपि असत्यस्तत्र कथं तासां विवक्षा ? तद्यथा—धनविनाशं करोति, धनाभावेन युक्त इति निरुपाख्ये=निःस्वरूपे अभावे का कर्मत्वादिशक्तिः ? 'स्थाल्यां पचति, स्थाल्या पचति' इत्यादिप्रतीत्या यथायथं सम्भवनधारणयोः क्रिययोरुपकारकत्वेन यथायथं करणाधिकरणरूपा या स्थाली, सैव स्थाली पचति इत्यादौ करणाधिकरणभिन्ना कर्त्तृरूपा कथमित्याशङ्क्य समाधत्ते—साधनव्यवहारश्चेति।

यत्तु अस्या एव कारिकाया अवतारणावसरे 'शक्तौ शक्त्यन्तरस्यानवस्थाभयादसम्भवेन 'शक्तिमादधाति' इत्यादौ कर्मत्वादिशक्तीनामनुपपत्तिराशङ्किता श्रीहेलाराजेन। तद्यथा-"शक्तिमादधाति, शक्त्या साधयति, शक्तावायतते, शक्तेर्व्य-

विवक्षारूपाया बुद्धेः शब्दनिमित्ता येऽवस्थाविशेषाः प्रतिनियतशब्दनिबन्धनाः, तदाश्रयः कर्त्रादिकारकव्यवहारः। तथा हि—निरूपितेऽर्थे शब्दप्रयोगाद् यथानिरूपणं शब्दोपपत्तिः। निरूपणं चानपेक्ष्यापि बाह्यमर्थं स्वातन्त्र्यात् परिकल्पयति तांस्तानर्थविशेषान्।

तथा हि सत्यपि वस्तुनि यावद् बुद्ध्या निरूपणं नास्ति तावदविषयः

---

पैतीति। नहि शक्तेः शक्त्यन्तरयोगः, अनवस्थापातात्" इत्युक्तवता। तदेतदसमीचीनं प्रतिभाति। तथा हि—सजातीयशक्तौ सजातीयशक्त्यन्तरस्य योगो न सम्भवति, अनवस्थापातात्। प्रकृते तु विजातीयशक्तौ विजातीयशक्तियोगे नानवस्था, नाप्यसम्भवः। तथा च 'शक्तिमादधाति' इत्यादिषु बलरूपायां शक्तौ कर्मत्वकरणत्वादिशक्तियोगस्य नासम्भवः, वैजात्यादिति।

यद्वा श्रीहेलाराजोक्तमपि समर्थयितुं शक्यते। तथा हि—हननक्रियानिरूपितकरणत्वशक्तिमति बाणं दृशिक्रियानिरूपितकर्मत्वशक्तिमादधाति बाणगतया करणत्वशक्त्या हननक्रियां साधयति। कुम्भकारो घटस्य जलाधारत्वशक्तावियतत निश्छिद्रत्वसम्पादनेन। भुजिक्रियानिरूपितकर्तृत्वशक्तिमानश्वः पतनक्रियानिरूपितापादानत्वशक्तेर्व्यपैतीत्येव शक्तेः शक्त्यन्तरयोगेऽनवस्थापातः सम्भवति।

अयमर्थः—साधनव्यवहारश्च=कारकव्यवहारस्तु, बुद्धेर्विवक्षारूपाया ये तत्तच्छब्दनिमित्तका अवस्थाविशेषाः कर्त्रादितत्तत्कारकविषयकविवक्षाविशेषरूपास्तन्निबन्धनस्तदाश्रयस्तत्प्रयुक्तः। यतोऽर्थरूपेषु अभिधेयस्वरूपेषु सन् असन् वा=विद्यमानोऽविद्यमानो वा, भेदः=कर्त्रादितत्तत्कारकशक्तिरूपो विशेषः, बुद्ध्या=निरूपणपुरःसरविवक्षारूपया प्रकल्प्यते। अतो धनविनाशं करोतीत्यादौ अभावे निरुपाख्येऽसत्या अपि कर्मत्वादिशक्तेर्बुद्ध्या प्रकल्पनेन न काप्यनुपपत्तिरिति बोध्यम्।

अयं भावः—ज्ञानेच्छाकृतिभेदेन वृत्तिभेदेन च बुद्धेर्बहवो भेदास्तत्र विवक्षारूपाया बुद्धेः शब्दनिमित्तका ये अवस्थाविशेषाः=कर्त्रादितत्तत्कारकविषयकविवक्षाविशेषरूपाः प्रतिनियतविभक्तिकसुबन्ततिङन्तशब्दनिबन्धनाः, तन्निबन्धनः कर्त्रादिकारकव्यवहारः। तथा हि—पूर्वमर्थं विवक्षति, ततो बुद्धौ तमर्थं तत्तत्कारकशक्तिमत्तया निरूपयति, ततस्तद्बोधानुगुणं शब्दं प्रयुङ्क्ते इति हि क्रमः।

तथा च बुद्ध्या निरूपितेऽर्थे शब्दप्रयोगाद् यथा निरूपणं तत्तद्कारकशक्तिमद्द्रव्यबोधकशब्दोपपत्तिः। निरूपणञ्च बाह्यमर्थमनपेक्ष्यापि स्वातन्त्र्यात् तांस्तानविशेषान् परिकल्पयति।

तथा हि सत्यपि वस्तुनि यावद् बुद्ध्या तस्य निरूपणं नास्ति, तावत् सोऽर्थः

शब्दानामव्यवहार्यं इति व्यवहारेषु बुद्धिरेव प्रभवतीति 'सन्' इति निदर्शनगर्भमभिधानम् । तत्र शक्तेर्द्रव्यायमाणाया बुद्धया स्वातन्त्र्येण निरूपणाच्छब्देनाभिधाने शक्त्यन्तरयोगोऽविरुद्धः ।

न हि तदा शक्त्यवस्थायामेव तस्यां तद्योगः, येनानवस्था स्यात्; अपि तु द्रव्यावस्थायाम्, अभावोऽपि बुद्धया निरूपिताकारो द्रव्यायमाण एव शब्दवाच्यः ।

एवं तनुतरकपालत्वात् स्थाली पाकेऽनपेक्षितकर्तृविनियोगा स्वातन्त्र्येण विवक्ष्यत इति कर्त्री, इन्धनोपकारानपेक्षया तस्या एव साधकतमत्वविवक्षायां तु करणम्, वास्तवाधारविवक्षायां त्वधिकरणमिति सर्वमुपपद्यते ।

अत एव 'हन्त्यात्मानमात्मना, आत्मनः स्वात्मन्यवस्थानम्, इत्यादयोऽपि प्रयोगाः प्रथितसाधमानः । वक्ष्यति चैतत्—"बुद्धयैकं भिद्यते भिन्नमेकत्वं चोपगच्छति ।" ( वा० प० ३, वृत्ति० १ ) इत्यादि ।

---

शब्दानामविषयोऽव्यवहार्यं इति रीत्या 'व्यवहारेषु निरूपणात्मिका बुद्धिरेव प्रभवति' इत्यस्यां कारिकाया सन्निति दृष्टान्तगर्भमभिधानम् । तत्र 'शक्तिमादधाति' इत्यादौ द्रव्यायमाणायाः शक्तेर्बुद्धया स्वातन्त्र्येण निरूपणाच्छब्देनाभिधाने शक्त्यन्तरयोगोऽविरुद्धः ।

नहि तदा शक्त्यवस्थायामेव शक्तौ शक्त्यन्तरयोगः येनानवस्था स्यात्; अपि तु द्रव्यावस्थायाम् । एव 'धनविनाशं करोति' इत्यादौ अभावोऽपि बुद्धया निरूपिताकारो द्रव्यायमाण एव शब्दवाच्य इति तत्रापि द्रव्यायमाणे कर्मत्वादशक्त्युपपत्तिः ।

एवं सूक्ष्मतरकपालत्वात् स्थाली ओदनादिपाकेऽनपेक्षितकर्तृव्यापारा स्वातन्त्र्यरूपेण कर्तृत्वेन विवक्ष्यत इति कर्त्री सम्भवति, पाकक्रियायामिन्धनरूपकरणकृतो य उपकारस्तदनपेक्षया स्थाल्या एव साधकतमत्वविवक्षायां तु सैव करणम् । तद्गतवास्तवाधारत्वशक्तिविवक्षायां तु अधिकरणमिति सर्वमुपपद्यते ।

अत एव=साधनस्य विवक्षाधीनत्वादेव एकस्यैव युगपदीप्सिततमत्वसाधकतमत्वादिविरुद्धधर्मविवक्षया बुद्धयाभेदं परिकल्प्य 'हन्त्यात्मानमात्मना, आत्मनः स्वात्मन्यवस्थानम्' इत्यादयोऽपि प्रयोगाः प्रथितसाधिमानः । वक्ष्यति चैतदत्रैवाग्रे—"बुद्धयैकं भिद्यते भिन्नमेकत्वं चोपगच्छति" इत्यादि ( वा० ३, वृत्ति० १५ ) ।

तत्र भिन्नमेकत्वमुपगच्छति इत्यस्योदाहरणम्—'घटं करोति' इति । अत्र हि घटद्वयमभेदाध्यवसायेनैकत्वापन्नं सद् वाक्यार्थबोधविषयीभूतम् । तथा हि—एको घटो दृश्यो बहिरस्ति पार्थिवो यदुत्पत्त्यनुकूलः कर्तुः प्रयत्नः । अपरश्च घटो बौद्धो विकल्परूपो यस्य करोति क्रियाकर्मत्वम् । बाह्यस्य हि घटस्य न कर्मत्वसम्भवः, क्रियापूर्वभावित्वाभावेन कारकत्वासम्भवात् । एवञ्च घटद्वयस्याभेदाध्यवसायेनास्य व्यवहारस्योपपत्तिरिति ।

दृश्यविकल्पयोरभेदाध्यवसायेन व्यवहारोपपत्तेर्बहिरन्यव्यावृत्तिपरतया समन्वयोऽत्र समर्थनीयः, स्वात्मनि नान्यस्मिन्, स्वात्मन एव, नापरस्यावस्थानमित्यादि। यथा शिलापुत्रकस्य शरीरमिति।

---

'बुद्धचैकं भिद्यते' इत्यस्योदाहरणम्—'हन्त्यात्मानमात्मना' इति। आत्मनः स्वात्मन्यवस्थानमित्यादि।

तथा हि—अत्र प्रथमोदाहरणे एकस्यैवात्मन औपाधिकभेदाद् बौद्धात् कर्मत्व-करणत्वे, द्वितीयोदाहरणे चैकस्यैव सम्बन्धित्वाधारत्व इति। अत्र च बहिर्विद्यमान-स्यैकस्य बुद्धिपरिकल्पितस्य भेदस्य सत्त्वेऽपि वस्तुभूतानेकत्वानुपपत्तेरन्यव्यावृत्ति-परतयाऽयमुदाहरणरूपः पदसमन्वयः (परस्परं समन्वीयमानानि पदानि) समर्थनीयः।

तथा हि—'स्वात्मनि' इत्यस्य 'नान्यस्मिन्' इत्यत्र तात्पर्यम्, आत्मन इत्यस्य आत्मन एव, नापरस्यावस्थानमित्यत्र तात्पर्यमिति।

एवं 'हन्त्यात्मानमात्मना' इत्यत्रापि आत्मानमेव, न परमिति, आत्मनैव, नापरेण साधनेनेति रीत्या पदसमन्वयः समर्थनीयः।

एतत्सर्वमभिप्रेत्यैव—'बुद्धचैकं भिद्यते भिन्नमेकत्वं चोपगच्छति' इत्यादिकारि-कार्धमुपन्यस्य—"दृश्यविकल्पयोरभेदाध्यवसायेन व्यवहारोपपत्तेर्बहिरन्यव्यावृत्ति-परतया समन्वयोऽत्र समर्थनीयः" इति श्रीहेलाराजेनोक्तमिति।

एवम्—'बुद्धचैकं भिद्यते' इत्यस्योदाहरणम्—'शिलापुत्रकस्य शरीरम्' इति। अत्र नानावस्थावतः शिलापुत्रकस्यैव बुद्धिपरिकल्पितं भेदमादाय वर्तमानावस्थापन्ने तत्रैव शरीरत्वव्यपदेश इति।

किञ्चास्ति वैयाकरणनिकाये पदावधिकमन्वाख्यानम्, वाक्यावधिकमन्वा-ख्यानम्=अनुशासनमिति पक्षद्वयम्। पदानुशासनपक्षेऽपि—'वाक्यादपोद्धृत्य पदानि संक्रियन्ते' इत्येकः पक्षः। 'अप्रयुक्त एव पदान्तरे पदानि संस्क्रियन्ते' इत्यपरः पक्षः। तत्र च पदानि संस्कृत्य संस्कृत्य उत्सृज्यन्ते, पश्चाच्च तेषां परस्परमाकांक्षा-दिवशात् समन्वयः क्रियते, तदेव वाक्यमित्यपरः प्रकारः। तत्रापि पदान्वाख्यानोप-क्रम एव स्वार्थान्वययोग्यपदार्थविशेषापेक्षायां वाक्यावधिकमन्वाख्यानं कथ्यते। अस्त्येव किञ्चिन्मदर्थसम्बन्धिपदार्थान्तरमित्येवंरूपायां स्वार्थसम्बन्धिसामान्यापेक्षायां तु पदावधिकमन्वाख्यानमिति। तत्र वाक्यस्यानन्त्यात् साक्षादन्वाख्यानं न युज्यते। प्रकृतिप्रत्ययादिविभागकल्पनया हि पदस्यैवानुशासनमुपपद्यते। पदस्य च केवलस्य व्यवहारे प्रयोगासम्भवाद् वाक्यस्थत्वे स्वार्थसम्बन्धिपदार्थसामान्यापेक्षायां पदाव-धिकमन्वाख्यानम्, तद्वाक्योपात्तस्वार्थसम्बन्धिपदार्थविशेषापेक्षायां तु वाक्याव-धिकमन्वाख्यानमितीयाननयोः पक्षयोर्विशेषः।

इत्थं च वाक्यादपोद्धृतस्यापि पदस्य संस्कारे प्रथमत एव वाऽप्रयुक्ते पदान्तरे विवक्षितस्यापि विशेषस्य रूपसामान्यादनवधारणे सम्भवत्येव पदावधिकमन्वाख्यानं सम्बन्धिसामान्येऽपेक्षिते। अन्यथा बुद्धया नियतमर्थरूपं क्रियादिसम्बन्ध्यपेक्षं कथं निरूप्येत ? अनपेक्षितसम्बन्धिरूपस्यार्थसामान्यस्याभावादभ्युपगतं पदावधिकमन्वाख्यानं शास्त्रे।

"धातुसम्बन्धे प्रत्ययाः" ( पा० ३।४।१ )

इत्येवमादीनां प्रत्याख्यानात्।

---

तत्र च "वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः" इत्यभ्युपगमेन वाक्यस्य समस्तविशेषणविशिष्टस्य वाक्यार्थस्य च निरंशत्वाद् वाक्यात् पदस्य, वाक्यार्थाच्च पदार्थस्य बुद्धयाऽपोद्धारे=प्रविभागकल्पनायां क्रियमाणे पदरूपा वाक्यस्य मात्रा, पदार्थरूपा च वाक्यार्थस्य सामान्यमात्रा बुद्धिपरिकल्पितशरीरैव। तदेवम्—'बुद्धयैकं भिद्यते भिन्नमेकत्वं चोपगच्छति' इत्यस्यानयोः पक्षयोरुदाहरणम्।

तथा हि वाक्यावधिकान्वाख्यानपक्षे—एकं वाक्यं पदापोद्धारबुद्धया, एकश्च वाक्यार्थः पदार्थापोद्धारबुद्धया भिद्यते, वाक्यघटकानां पदानां वाक्यार्थघटकानां पदार्थानाञ्चानेकत्वात्। पदान्वाख्यानपक्षे च भिन्नानि पदानि संस्कृतानि परस्परं समन्वयं प्राप्य वाक्यरूपेणैकत्वमुपगच्छन्तीति।

इत्थञ्च वाक्यादपोद्धृतस्यापि पदस्य संस्कारे अनुशासने प्रथमत एव वाऽप्रयुक्ते पदान्तरे वाक्यघटकत्वदशायां पदेन पदान्तरसमन्वयवशाद् विवक्षितस्यापि पदार्थविशेषस्य अपोद्धारदशायां रूपसामान्यादनवधारणे सम्भवत्येव पदावधिकमन्वाख्यानं पदार्थसामान्येन सम्बन्धिसामान्येऽपेक्षिते। अन्यथा पदावधिकेऽन्वाख्याने बुद्धयां निरूपितस्य अर्थरूपस्य क्रियादिरूपसम्बन्धिसामान्यापेक्षाया अभावे बुद्धया नियतम्=निरूपितम् अर्थरूपं यतः क्रियादिरूपसम्बन्ध्यपेक्षं ततस्तदभावे कथं निरूप्येत ? अनपेक्षितसम्बन्धिरूपस्यार्थसामान्यस्याभावादित्यतोऽभ्युपगतं पदावधिकमन्वाख्यानं व्याकरणशास्त्रे वाक्यस्यानियतानुपूर्वीकस्यानन्तस्यान्वाख्यातुमशक्यत्वात्। पदावधिकेऽन्वाख्यानेऽपि सम्बन्धिसामान्यापेक्षाया नियतत्वेन "धातुसम्बन्धे प्रत्ययाः" ( पा० ३।४।१ ) इत्येवमादीनां सूत्राणां वाक्यान्वाख्यानपराणां प्रत्याख्यानात्।

किञ्च, पदावधिकेऽन्वाख्याने द्वयी गतिः। पूर्वं विवक्षारूपया बुद्धया वाक्यं वाक्यार्थश्च निरूप्यते=गोचरीक्रियते, तदनन्तरं वाक्यात् पदानि, वाक्यार्थाच्च पदार्था बुद्धयाऽपोद्ध्रियन्त इत्येका गतिः।

पूर्वं सम्बन्धिसामान्यापेक्षं पदार्थसामान्यं विवक्षाबुद्धया गोचरीक्रियते, ततः पदमन्वाख्यायते, अन्वाख्यातानाञ्च पदानां पश्चादाकाङ्क्षादिवशात् परस्परं सम्बन्धः, ततो वाक्यवाक्यार्थयोः सिद्धिरिति द्वितीया गतिः।

यत्र च सर्वथाऽसङ्गतिः 'स्थालीमोदनेन काष्ठे पचति' इत्यादौ तद् वाक्यमेव न भवतीति कथं वाक्यादपोद्धृतानां पदानामन्वाख्यानेऽत्र प्रसङ्गः ? अत एव च 'अक्षीणि मे दर्शनीयानि' इत्यादेर्विप्रयोगस्य निवृत्तये शास्त्रमर्थवदेव ।

सामान्यमपि हि पदार्थरूपमर्थान्तरसंसर्गयोग्यमेव संस्तूयते, न तु 'अङ्गुल्यग्रे करिशतमास्ते' इत्याद्यसमन्वितमेव ।

एवं च कृत्वा छन्दसि "चषालं ये अश्वयूपाय तक्षति" इत्यादावसाधुत्वशङ्कापनुत्तये व्यत्यययोऽर्थवानेव, नियतानुपूर्वीकस्य छन्दोवाक्यस्य सम्भवात्, ततस्तथैव पदापोद्धारस्य न्याय्यत्वात् । लोके तु नानवस्थितं ( नावस्थितं ) नियतानुपूर्वीकमसङ्गतं वाक्यमिति न ततोऽपोद्धारप्रसङ्गः । तस्माद् वाक्यादपोद्धृत्य पदानुशासनेऽपि निर्दोषमेव पदावधिकमन्वाख्यानम् ।

---

तथा च यत्र वाक्याभासे पदानां पदार्थानाञ्च परस्परं सम्बन्धस्य सर्वथा असंगतिः 'स्थालीमोदनेन काष्ठे पचति' इत्यादौ तद्वाक्यमेव न भवतीति कथं वाक्यादपोद्धृतानां पदानामन्वाख्यानपक्षेऽत्र वाक्ये पदानां साधुत्वप्रसङ्गः ? अत एव च=वाक्याभासघटकानां पदानां प्रागुक्तरीत्या साधुत्वाभावादेव च 'अक्षीणि मे दर्शनीयानि=सुन्दराणि' । यद्धि सुन्दरं तत्प्रदर्श्यते, यच्चासुन्दरं तन्निगूह्यत इत्येष खलु लोकस्वभाव इत्यादेरक्षणोर्बहुत्वासम्भवेन विप्रयोगस्य=विरुद्धप्रयोगस्य साधुत्वनिवृत्तये व्याकरणशास्त्रमर्थवदेव=सार्थकमेव ।

पदान्वाख्यानात् पूर्वं सामान्यमपि हि पदार्थरूपमर्थान्तरसंसर्गयोग्यमेव बुद्धया संस्तूयते=परिचीयते—'गोचरीक्रियते, न तु "अंगुल्यग्रे करिशतमास्ते" इत्यादिवाक्यार्थेऽसमन्वितमेव ।

एवञ्च कृत्वा छन्दसि नियतानुपूर्वीके—"चषालं ये अश्वयूपाय तक्षति" इत्यादौ चषालमित्यस्य सन्निहितेऽव्यवहितेऽनन्वितत्वेनासाधुत्वशङ्कापनुत्तये चषालमित्यस्य तक्षतीत्यनेन सहान्वयेनानुपूर्वीव्यत्यययोऽर्थवान् एव=सार्थक एव, नियतानुपूर्वीकस्य छन्दोवाक्यस्य सम्भवात्, ततः=छन्दोवाक्यात्, यथैव=येन क्रमेणानुपूर्वी पठिता, तेनैव क्रमेण पदापोद्धारस्य न्याय्यत्वात् । पदापोद्धारे नानुपूर्वीव्यत्ययः, नापि यज्ञादिप्रयोगे । लोके तु नावस्थितं वाक्यतावदेवेति । 'घटोऽस्ति, घटोऽस्ति नीलः' इति, 'घटोऽस्ति नीलः शोभनश्च' इत्यादिरीत्या विशेषणवृद्धया वाक्यवृद्धेः । नापि लोके वाक्यं नियतानुपूर्वीकम्, 'दण्डेन गामानय, गां दण्डेनानय, आनय गां दण्डेन' इत्यादिरीत्या वाक्यानुपूर्वीव्यत्ययदर्शनात् । नापि असंगतम्=परस्परमसमन्वितं पदकदम्बकम्=वाक्यम्; किन्तु वाक्याभासं तत् । अङ्गुल्यग्रेकरिशतं विचरतीति न तेभ्योऽपोद्धारप्रसङ्गः; किन्तु अनवस्थितादेव= अनियतानुपूर्वीकादेव च वाक्यात् पदापोद्धारः । असमन्वितात्तु वाक्याभासान्नैव

तत्र च समस्तविशेषणविशिष्टस्यार्थस्य निरंशत्वादपोद्धारे सामान्यमात्रा बुद्धिपरिकल्पितशरीरैव। उपक्रम एव तु विशेषापेक्षायां वाक्यावधिकमन्वाख्यानं कथ्यते, न तु वाक्यस्यानन्त्यात् साक्षादन्वाख्यानं युज्यते। प्रकृतिप्रत्ययादि-विभागकल्पनया हि पदस्यैवानुशासनमुपपद्यते।

तस्य च केवलस्यासम्भवाद् वाक्यस्थत्वे सम्बन्धिसामान्यापेक्षायां पदावधिकं तद्वाक्योपात्तसम्बन्धिविशेषापेक्षायां तु वाक्यावधिकमन्वाख्यानमितीयाननयोः पक्षयोर्विशेषः॥ ३॥

बौद्धे साधनव्यवहारे भाष्यकाराभ्युपगमं संवादकमाह—

**बुद्धया समाहितैकत्वान् पञ्चालान् कुरुभिर्यदा।**
**पुनर्विभजते वक्ता तदाऽपायः प्रतीयते॥ ४॥**

कुरुभ्यः पञ्चाला अभिरूपतरा इति "पञ्चमी विभक्ते" (पा० २।३।४२) इति पञ्चम्यर्थं सूत्रं भाष्ये प्रत्याख्यातम्, बौद्धस्यापायस्य सम्भवादपादान इत्येव सिद्धेः।

---

पदापोद्धारप्रसङ्गः, वाक्याभासत्वादेवेति। तस्माद् वाक्यादपोद्धृत्य पदानाम-नुशासनमिति पक्षेऽपि निर्दोषमेव पदावधिकमन्वाख्यानमिति।

तत्र च समस्तकर्तृकरणादिरूपक्रियाविशेषणतद्विशेषणविशिष्टस्य वाक्यार्थस्य निरंशत्वात्=अखण्डत्वात्। ततः पदार्थापोद्धारे पदार्थसामान्यरूपा वाक्यार्थमात्रा वाक्यार्थभागः, बुद्धिपरिकल्पितशरीरैवान्तरास्ते, न बहिः। पदानामनुशासनोपक्रम एव तु अनुशिष्यमाणपदार्थस्य स्वसम्बन्ध्यर्थविशेषापेक्षायां वाक्यावधिकमन्वाख्यानं कथ्यते, न तु वाक्यस्य साक्षादन्वाख्याने शास्त्रेण कर्तुं युज्यते, वाक्यानामानन्त्यादिति वाक्यान्वाख्यानपक्षेऽपि पदान्वाख्यानद्वारैव वाक्यान्वाख्यानमिति। यतः प्रकृतिप्रत्ययादिविभागकल्पनया पदस्यैवानुशासनमुप-पद्यते, न वाक्यस्येति।

तस्य च=अनुशिष्यमाणस्य पदस्य केवलस्य व्यवहारे प्रयोगासम्भवाद् वाक्यघटकत्वे स्थितेऽनुशासनार्थं ततोऽपोद्धारे पदान्तराप्रयोगे वा तदर्थस्य सम्बन्धि-सामान्यापेक्षायां पदावधिकम्, तद्वाक्योपात्तसम्बन्धिविशेषापेक्षायां तु वाक्यावधिकमन्वाख्यानमितीयाननयोः पक्षयोर्विशेष इति॥ ३॥

साधनव्यवहारो हि द्विविधः—बौद्धो बाह्यश्च। तत्र बौद्धः साधनव्यवहारो व्याकरणशास्त्रोपयोगी, बाह्यस्तु लौकिकः। तत्र बौद्धसाधनव्यवहारे भाष्यकाराभ्यु-पगम संवादकमाह—बुद्धया समाहितैकत्वानिति।

अयमर्थः—यदा वक्ता कुरुभिः सह बुद्धया समाहितैकत्वान्=आपादितै-कत्वान् पञ्चालान् बुद्धयैव पुनर्विभजते, तदा कुरुभ्यः पञ्चालानामपायः प्रतीयते

तथा ह्याभिरूप्येण समानेन गुणेन कुरुभिः सह पञ्चालान् बुद्धयैकत्वं समुदायभावमापाद्यातिशयाभिरूपतावशात् कुरुभ्यः पञ्चालाः पृथक् क्रियन्त इत्यस्ति संश्लेषपूर्वको विश्लेषोऽपायः। तदुक्तं भाष्ये—

'यस्तैः साम्यं गतवान् स एवं प्रयुङ्क्ते" (म० भा० १।४।२४) इति।

तैः कुरुभिः पञ्चालानां सादृश्यं सम्प्रधारणासामर्थ्यादाभिरूप्येण प्रथमं यो ज्ञातवानित्यर्थः। अनेन चैकबुद्धिनिवेशित्वेन कुरुपञ्चालानां देशप्रत्यासत्तिमाह भाष्यकारः। तत्पूर्वकस्तु सातिशयस्य निरतिशयाद् विभागः। पञ्चमीशब्दोऽपादान-संज्ञानत्वान्नोक्तो भाष्यकृता। सूत्रारम्भवादिनापि निर्धारणाश्रयत्वेनैषां बुद्धयैव समुदायभावः समानगुणत्वादाश्रयणीयः, अन्यथा निर्धारणाधिकारादेव विभागे लब्धे विभक्तग्रहणादत्यन्तविभागप्रतीतौ न वास्तवः समुदायभावो युज्येत। तदेवं

---

इति कुरुभ्यः पञ्चाला अभिरूपतरा इत्यत्र "अपादाने पञ्चमी" (पा० २।३।२८) इत्येव पञ्चमी सिद्धेति। अत्र पञ्चम्यर्थम् "पञ्चमी विभक्ते" (पा० २।३।४२) इति सूत्रं भाष्ये प्रत्याख्यातमिति।

अयं भावः—'कुरुभ्यः पञ्चाला अभिरूपतराः सुन्दरतराः' इत्यत्र पञ्चम्यर्थं क्रियमाणं 'पञ्चमी विभक्ते" इति सूत्रं भाष्ये प्रत्याख्यातम्। अत्र बौद्धस्यापायस्य सम्भवाद् 'अपादाने पञ्चमी' इत्येव सिद्धेः।

तथा हि—आभिरूप्येण=सौन्दर्येण कुरुषु पञ्चालेषु च समानेन गुणेन कुरुभिः सह पञ्चालान् बुद्धयैकत्वं समुदायभावमापाद्य अतिशयिताभिरूपतावशात् कुरुभ्यः पञ्चालाः पृथक् क्रियन्ते इत्यस्ति पञ्चालानां कुरुषु संश्लेषपूर्वकस्तेभ्यो विश्लेषोऽपायः। तदुक्तं भाष्ये—'यस्तैः साम्यं गतवान् स एवं प्रयुङ्क्ते" (म० भा० १।४।२४) इति।

अस्यार्थः—यः पुरुषस्तैः कुरुभिः सह पञ्चालानामाभिरूप्यरूपं तत्प्रयुक्तं वा साम्यं सादृश्यं सम्प्रधारणासामर्थ्याद् पूर्वं गतवान्=ज्ञातवान् स एव पञ्चालेष्वतिशयिताभिरूप्यज्ञाने सति तेनैव गुणेन पञ्चालान् कुरुभ्यो विभजन्नेवं प्रयुङ्क्ते 'कुरुभ्यः पञ्चाला अभिरूपतरा' इति। अनेन च वाक्येनैकबुद्धिनिवेशित्वहेतुकां कुरुपञ्चालानां देशप्रत्यासत्तिमाह भाष्यकारः। एकबुद्धिरूपदेशप्रत्यासत्तिपूर्वकस्तु सातिशयानां पञ्चालानां निरतिशयेभ्यः कुरुभ्यो विभागः। 'स एवं प्रयुङ्क्ते' इत्यत्र पञ्चमीशब्दस्तु नोक्तो भाष्यकृता, अपादानसंज्ञानत्वात्=अपादानसंज्ञया तस्य संज्ञायमानत्वादिति। "पञ्चमी विभक्ते" इति सूत्रस्यारम्भवादिनापि निर्धारणाश्रयत्वेन कुरुपञ्चालानां बुद्धयैव समुदायभावः। आभिरूप्यरूपसमानगुणत्वादाश्रयणीयः। अन्यथा निर्धारणाधिकारादेव विभागे लब्धे सूत्रे पुनर्विभक्तग्रहणादत्यन्तविभागप्रतीतौ सत्यां न वास्तवः समुदायभावो युज्येत। तदेवं बौद्धः साधनभावोऽ-

बौद्धः साधनभावोऽस्मादवसीयते। कारकप्रकरणे च तमब्ग्रहणात् प्रकर्षो न विवक्ष्यत इति गौणेऽप्यत्रापायेऽपादानसंज्ञा भवति ॥ ४ ॥

अन्यदपि भाष्योक्तं संवादकमाह—

शब्दोपहितरूपाँश्च बुद्धेर्विषयतां गतान्।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते ॥ ५ ॥

"हेतुमति च" (पा० ३।१।२६) इत्यत्र "अख्यानात् कृतस्तदाचष्टे ·" (वा० ३।१।२६) इत्येवमाद्युपसंख्यानम्, "न वा सामान्यकृतत्वाद्धेतुतो ह्यविशिष्टम्" (वा० ३।१।२६) इत्येवं प्रत्याख्यातम्।

---

स्माद् विभक्तग्रहणादवसीयते। "कर्त्तुरीप्सिततमं कर्म" (पा० १।४।४९) इत्यत्र तमब्ग्रहणाच्च कारकप्रकरणे प्रकर्षो न विवक्ष्यत इति 'कुरुभ्यः पञ्चालाः' इत्यत्र गौणेऽपि बौद्धेऽपायेऽपादानसंज्ञा भवतीति ॥ ४ ॥

बौद्धे साधनव्यवहारे पूर्वकारिकोक्तादन्यदपि भाष्योक्तं संवादकमाह— शब्दोपहितरूपांश्चेति।

अयमर्थः-- लोके कथकेन भागवतकथायां प्रवर्तितायाम् 'इदानीं कथको वासुदेवेन कंसं घातयति, रम्या खलु कथा श्रोतव्या' इति लोकः प्रयुङ्क्ते। तत्र कथकोदीरितशब्दसामर्थ्येन उपजातरूपविशेषान् = उपजाताकारविशेषान् शब्दोपहितरूपाँश्च = कंसवासुदेवादिशब्दानुविद्धाकारांश्च, बुद्धेर्विषयतां गतान् = श्रोतृबुद्धिगोचरत्वमापन्नान् सव्यापाराकारान् कंसादीन् लोकः साधनत्वेन = यथायथं कर्तृकर्मादिसाधनरूपतया प्रत्यक्षमिव = प्रत्यक्षकंसादिविषयकज्ञानमिव मन्यते = जानाति।

अत्र प्रत्यक्षमिति अव्ययीभावः "मननक्रियाविशेषणं चेतत्" इति हेलाराजः, तच्चिन्त्यम्। अक्षं प्रतिगतं ज्ञानम्- अक्षसम्बन्धिज्ञानमित्यर्थे "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" (पा० १।४।७९) इति तत्पुरुषाभ्युपगमे को दोषः? अव्ययीभावस्वीकारे तु तस्याव्ययत्वेन क्रियायामभेदेन विशेषणत्वकर्मत्वयोरनुपपत्तिः। यदप्युक्तम्—"कंसादीन् कर्मादिसाधनतया भाष्यकारो मन्यते" इति, तन्न सम्यगिति भाति, 'प्रत्यक्षमिव मन्यते' इत्यत्र भाष्यकारस्य कर्तृत्वानुपपत्तेः, भाष्यकारस्य कथाश्रोतृत्वाभावेन प्रत्यक्षज्ञानसदृशज्ञानाभावात्। तस्यापि यथाकथञ्चित् श्रोतृत्वान्तःपाते तु श्रोतृलोकस्यैव कर्त्तृत्वमुचितम्, न तु विशिष्य तस्य, कथाश्रोतृलोकस्यैव कर्त्तृत्वौचित्यात्। प्रत्यक्षमिवेत्यस्य मननक्रियातोऽन्यत्रानुपपत्तेश्चेति।

अयं भावः-'हेतुमति च' (पा० ३।१।२६) सूत्रे 'आख्यानात् कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्ययापत्तिः प्रकृतिवच्च कारकम्" इति वार्त्तिकं पठ्यते, तच्च-"न वा सामान्यकृतत्वाद् हेतुतो ह्यविशिष्टम्"इत्येवं प्रत्याख्यातम्। अस्य हि प्रत्याख्यानवाक्यस्यायमर्थः—वा = अथवा, इदं वार्त्तिकं न वक्तव्यम्। सामान्येन बौद्धे बाह्ये च

चित्रपुस्तादौ हि प्रतिकृतिरूपस्य प्रयोज्यप्रयोजकभावाध्यवसायात् कंसं घातयति, बलिं बन्धयतीति सिद्धम् ।

एवं कृतानुकरणे नाट्येऽपि नटानां कंसवासुदेवानुकारेण सादृश्यात् तद्रूपतोपपत्तिः ।

तत्र "ग्रन्थिकेषु कथम्" ( म० भा ३।१।२६ ) इति चोदितम् । तत्र ग्रन्थिका इतिवृत्तरूपेणैव कंसवधमाचक्षते । तत्र च प्रतिकृतिरूपस्याभावात् कथं प्रयोज्यप्रयोजकत्वमिति पर्यनुयोगः ।

अत्र परिहार उक्तः—

"तेऽपि हि तेषामुत्पत्तिप्रभृत्याविनाशादृद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति" (म० भा० ३।१।२६ ) इति ।

चिरकालातीतत्वात् कंसादीनां बहिरसत्त्वाद् बुद्धिगोचरतया सतो विद्यमानांस्तान् प्रकाशयन्ति शब्देनावभाषयन्ति । बुद्धिप्रतिभाष्येव ह्याकारः शब्दार्थः, न वस्त्वर्थः ।

---

साधनव्यवहारे साधारणेन "तत्करोति तदाचष्टे" (ग०) इति वचनेन कृतत्वाद्=गतार्थत्वाद्, हि=यतः, हेतुतः=साधनतः साधनत्वेन रूपेण, अविशिष्टम्=तुल्यम्; चित्रपुस्तादिषु प्रतिकृतिरूपेण दृश्यमानम्, नाट्ये चाभिनयेनोपनीयमानम् कथायाञ्च कथकेन आख्यानद्वारा श्रोतृबुद्धिगोचरतामापाद्यमानं वासुदेवकंसादिरूपं बौद्ध साधनं वासुदेवकंसादिरूपेण बाह्येन साधनेनेति ।

चित्रपुस्तादौ हि प्रतिकृतिरूपस्य=प्रतिमारूपस्य प्रयोज्यप्रयोजकभावाध्यवसायात्=बौद्ध वासुदेवब्रह्मादिरूपे साधने बाह्यवासुदेवब्रह्मादिरूपसाधनस्य सादृश्यमूलकतादात्म्याध्यासेन प्रयोज्यत्वप्रयोजकत्वयोरारोपात्, 'ब्रह्मा वासुदेवेन कंसं घातयति, इन्द्रो वामनेन बलिं बन्धयति' इति सिद्धम् ।

एवं कृतानुकरणे वृत्ताभिनयरूपे नाट्येऽपि नटानां कंसवासुदेवाद्यनुकारेण सादृश्यात् कंसवासुदेवादिरूपतोपपत्त्या बौद्धं साधनमादायैव प्रागुक्तप्रयोगोपपत्तिः ।

तत्र भाष्ये—"ग्रन्थिकेषु कथम्" इति चोदितम् । तत्र ग्रन्थिकाः कथका इति वृत्तरूपेणैव=इतिहासरूपेणैव कंसवधमाचक्षते । तत्र च प्रतिकृतिरूपस्यापि कंसादेरभावाद् 'ब्रह्मा वासुदेवेन कंसं घातयति स्वसृष्टिसंरक्षणाय' इत्यत्र कथं प्रयोज्यत्वप्रयोजकत्वयोरुपपत्तिरिति पर्यनुयोगः=प्रश्नः ।

अत्र परिहार उक्तस्तत्रैव । 'तेऽपि हि तेषामुत्पत्तिप्रभृत्याविनाशाद् ऋद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति" इति ।

अस्यार्थः—तेऽपि हि कथकाः, तेषाम्=कंसादीनाम्, उत्पत्तिप्रभृत्याविनाशाद्=उत्पत्तिमारभ्य विनाशपर्यन्तम्, ऋद्धीः=समृद्धीः, समृद्धियुक्तानि चरितानि,

तथा च कथकः श्रोतरि कंसाद्याकारप्रत्ययजननात् बुद्धिवासुदेवेन बुद्धिकंसं घातयतीति प्रयोजकत्वसमारोपात् प्रयोगोपपत्तिः।

तथा हि—कथकोदीरितशब्दसामर्थ्योपजातरूपविशेषान् श्रोतृबुद्धिगोचरमापन्नान् सव्यापाररूपान् कंसादीन् कर्मादिसाधनतया भाष्यकारो मन्यत इति बुद्ध्यवस्थानिबन्धनः साधनव्यवहारः सिद्धः।

गौणेऽपि च प्रयोजके कारकप्रकरणे प्रकर्षानाश्रयाद्धेतुसंज्ञायां तद्व्यापारेऽत्र णिच् सौत्रः। 'प्रत्यक्षम्' इत्यव्ययीभावः। मननक्रियाविशेषणं चैतत्। इन्द्रियनिमित्तेन ज्ञानेन परिस्फुटानवधारयतीत्यर्थः।

एतच्च 'ऋद्धीर्व्याचक्षाणा' इति भाष्यस्याभिप्रायव्याख्यानम्।

प्रभावातिशययुक्ते हि वस्तुन्यादरवशात् स्पष्टरूपः प्रत्ययः प्रसूयते। स्पष्टे च ज्ञानेऽवभासमान आकारो बाह्यात्मकोऽवसीयते ॥ ५ ॥

---

व्याचक्षाणाः कंसादीनां चिरकालातीतत्वेन बहिरसत्त्वात् = स्वबुद्धिगोचरतया सतो विद्यमानान् तान् प्रकाशयन्ति = शब्देनावभासयन्ति इति।

अतश्चेदमायाति—बुद्धिप्रतिभास्ये बाह्याकारः शब्दार्थः, न वस्त्वर्थो बाह्यः।

तथा च कथकः श्रोतरि कथया कंसाद्याकारप्रत्ययजननाद् बुद्धिवासुदेवेन बुद्धिकंसं घातयतीति कथके कंसवधकर्तृवासुदेवप्रयोजकत्वसमारोपात् प्रयोगोपपत्तिः।

तथा हि—कथकोदीरितशब्दसामर्थ्योपजातबौद्धाकारविशेषान् श्रोतृबुद्धिगोचरत्वमापन्नान् सव्यापारान् साकारांश्च कंसादीन् कर्मादिसाधनरूपतया लोको मन्यत इति बुद्ध्यवस्थानिबन्धनः साधनव्यवहारः सिद्धः।

'भाष्यकारो मन्यते' इति हेलाराजोक्तिस्तु प्राक् प्रत्याख्याता।

यद्यपि "गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः" इति न्यायेन गौणे प्रयोजके कथके हेतुसंज्ञाया अभावेन अत्र "हेतुमति च" इति सौत्रो णिज् दुर्लभः, तथापि 'कर्त्तुरीप्सिततमं कर्म" इति सूत्रे तमब्ग्रहणेन कारकप्रकरणे प्रकर्षानाश्रयाद् गौणेऽपि च प्रयोजके हेतुसंज्ञायां तद्व्यापारेऽत्र वार्त्तिकं विनापि सौत्रो णिच् सिद्धः। प्रत्यक्षमिव मन्यत इत्यस्य इन्द्रियनिमित्तकेन ज्ञानेन परिस्फुटानवधारयतीत्यर्थः।

एतच्च—ऋद्धीर्व्याचक्षाणा इति भाष्यस्याभिप्रायव्याख्यानम्।

प्रभावातिशययुक्ते हि भावे आदरवशात् स्पष्टरूपः प्रत्ययो जायते। स्पष्टे च ज्ञाने विषयीभवन्नाकारो बाह्यवस्तुतादात्म्येनाध्यवसीयत इति प्रत्यक्षमिव मन्यत इत्यस्य भावार्थ इति ॥ ५ ॥

तदेवं बुद्धचा साधनव्यवहारोपपत्तौ एकस्यापि वस्तुनः शक्तिनानात्वं बौद्धमुपपद्यत इति निगमयति—

बुद्धिप्रवृत्तिरूपं च समारोप्याभिधातृभिः ।
अर्थेषु शक्तिभेदानां क्रियते परिकल्पना ।। ६ ।।

बुद्धेः प्रवृत्तिः व्यापारः परिच्छेदलक्षणः । तस्या रूपमाकारो विषय आभासमानः । तमर्थेषु बाह्येष्वध्यस्य तेषां शक्तिनानात्वं परिकल्प्यते वक्तृभिः ।

अयमर्थः—दृश्यविकल्पयोरभेदाध्यवसायाद् बौद्धः शक्तिभेदो बाह्य एवेत्यभिमानात् तत्र विचित्रं साधनभावमभिमन्यन्ते । बुद्धिप्रतिभासस्य स्वप्रतिष्ठत्वेनानवगमात् । तत्र क्रियाभेदं प्रतिपत्तृव्यपेक्षां चानुवर्त्य वस्त्वेव नानाशक्तिकमवगम्यत इति बहिरर्थे शब्दः प्रमाणम् । क्रियाकारकसंसर्गस्य बाधकाभावात् सति संवादे च वाक्यस्य प्रामाण्यमवगमयन्ति व्यवहर्तारः ।

---

तदेवं बौद्धे साधनव्यवहारे उपपन्ने एकस्यापि वस्तुनः स्थाल्यादेः 'स्थालीं पचति, स्थाल्या पचति, स्थाल्यां पचति' इत्यादौ कर्तृत्वकरणत्वाधारत्वादिरूपशक्तिनानात्वं बौद्धमुपपद्यत इत्युपसंहरति—बुद्धिप्रवृत्तिरूपञ्चेति ।

अयमर्थः—बुद्धिप्रवृत्तिरूपञ्च=बुद्धेः प्रवृत्तिः प्रकृष्टा वृत्तिः—अध्यवसायलक्षणो व्यापारः, तस्या रूपं=भासमानमाकारम् अर्थेषु बाह्येषु समारोप्य तादात्म्येनाध्यस्य बौद्धार्थगतानां कर्मत्वादिशक्तिभेदाना बाह्यार्थेषु भ्रान्त्या परिकल्पना क्रियते वक्तृभिरिति ।

अयं भावः—बुद्धेः प्रवृत्तिर्व्यापारः परिच्छेदलक्षणः=अध्यवसायात्मकवृत्तिरूपः, तस्या रूपमाभासमान आकारो बौद्धः तमर्थेषु बाह्येषु तादात्म्येनाध्यस्य तेषां बाह्यार्थानां शक्तिनानात्वमसदपि वक्तृभिः परिकल्प्यते ।

अयं तु निष्कर्षः—दृश्यविकल्परूपयोर्बाह्यार्थबौद्धार्थयोः परस्परमभेदाध्यवसायाद् भ्रान्तिकल्पिताद् बौद्धः शक्तिभेदो बाह्य एवेत्यभिमानात् तत्र=बाह्यार्थे विचित्रं विविधं विरुद्धं वा कर्तृकर्मादिशक्तिरूपं साधनभावमभिमन्यन्ते । बुद्धिप्रतिभासस्य=बुद्धौ प्रतिभासमानस्य अर्थस्य आन्तरस्य स्वप्रतिष्ठत्वेन=बाह्येन सह तादात्म्याध्यासाद् हेतोः बुद्धौ प्रतिष्ठितत्वेनानवगमात् । तत्र=बौद्धेऽर्थे बाह्यार्थगतं क्रियाभेदं तयोस्तादात्म्याध्यासादनुवर्त्य प्रतिपत्तृव्यपेक्षां च=बोद्धुर्वक्त्रभिप्रायजिज्ञासां च अनुवर्त्य अनुसृत्य बाह्यं वस्त्वेव नानाशक्त्यभावेऽपि नानाशक्तिकमवगम्यत इति रीत्या विज्ञानाकारातिरिक्ते बाह्येऽर्थे शब्दः प्रमाणम् । क्रियाकारकसंसर्गस्य वाक्यार्थरूपस्य शब्दात् प्रतीतस्य बौद्धस्य तादात्म्याध्यासापन्ने बाह्ये तादृशि बाधकाभावात् सति प्रमाणान्तरसंवादे च वाक्यस्य प्रामाण्यमवगमयन्ति व्यवहर्त्तारः ।

सौगतानां विकल्पप्रतिबिम्बस्य भेदानध्यवसायाद् बहिष्प्रवृत्तिः । प्रामाण्यं तु वक्त्रभिप्राय एव शब्दानाम्, न बाह्ये, व्यभिचाराशङ्कनात्, अन्यव्यावृत्तिमात्रनिष्ठता तु बहिः ।

वैयाकरणानां तु व्यावृत्तवस्तुविषयता, तथाध्यवसायात्, तत्रैव प्रामाण्यमिति दर्शनभेदः । नियतोपाधिनियमितत्वाच्च न साङ्कर्यम् ।

उपकारिकाश्च शक्तयः प्रत्युपाधिभिन्नाः सम्मूर्च्छितशरीरत्वाद् वस्तुनस्तत्त्वान्यत्वाभ्यामनिर्वाच्या इति नानुपाध्युपकाराङ्गत्वादेरप्रसङ्गः ( प्रसंगः ) ॥ ६ ॥

बुद्धयवस्थासमाश्रये च साधनभावे सतीदमपि सिद्धं भवतीत्याह—

व्यक्तौ पदार्थे शब्दादेर्जन्यमानस्य कर्मणः ।
साधनत्वं तथा सिद्धं बुद्धिरूपप्रकल्पितम् ॥ ७ ॥

---

सौगतानां विज्ञानवादिनां मते तु विकल्पप्रतिबिम्बस्य = विकल्पो ज्ञानाकारस्तस्य यो बुद्धौ प्रतिबिम्बस्तस्य विकल्पेन सह भेदानध्यवसायाद् बहिरर्थे प्रतिबिम्बरूपे प्रवृत्तिः । शब्दानां प्रामाण्यं तु वक्त्रभिप्राय एव = वक्त्रभिप्रायगोचरे ज्ञानाकारे एव, न बाह्ये, शब्दानां बाह्यार्थव्यभिचारस्य, 'एष बन्ध्यासुतो याति' इत्यादौ दर्शनेन अन्यत्रापि तेषां बाह्यार्थव्यभिचाराशङ्कासमुद्भवात् । बहिरर्थे तु शब्दानामन्यव्यावृत्तिमात्रनिष्ठता, बाह्यार्थाभावात् । तद्यथा घटोऽस्ति' इति वाक्यस्य 'अघटो नास्ति' इत्यत्रैव पर्यवसानम्, न तु घटसत्त्वे इति ।

बौद्धार्थबाह्यार्थोभयवादिनां वैयाकरणानां तु व्यावृत्तबाह्यार्थवस्तुविषयकत्वमपि शब्दानाम् तथाऽध्यवसायात् = बौद्धार्थबाह्यार्थयोस्तादात्म्याध्यवसायात् । तत्रैव = व्यावृत्तबाह्यवस्तुन्येव शब्दानां प्रामाण्यमिति सौगतवैयाकरणयोर्दर्शनभेदः ।

कर्मत्वादिकारकशक्तीनां नियतोपाधिनियमितत्वाच्च न साङ्कर्यम् । तथा हि—यथा कपिसंयोगतदभावयोर्विरुद्धयोरपि शाखामूलरूपावच्छेदकभेदेनैकस्मिन् वृक्षे सत्त्वेऽपि न विरोधः, न साङ्कर्यम् । तथा एकस्मिन्नेव तण्डुले ईप्सिततमत्वस्वातन्त्र्यरूपोपाधिद्वयेन तस्य सम्मूर्च्छितशरीरत्वात् = प्रवृद्धशरीरत्वात् तस्येप्सिततमत्वरूपोपाधिविवक्षायां तदवच्छेदेन तत्र कर्मत्वशक्तिः । तस्य स्वातन्त्र्यरूपोपाधिविवक्षायां तु तदवच्छेदेन तत्र कर्तृत्वशक्तिः । तथा चोभयं दृश्यते—'तण्डुलं पचति, तण्डुलः पच्यते स्वयमेव' इति ।

क्रियाया उपकारिकाश्च कर्मत्वादिशक्तयः प्रत्युपाधिभिन्नाः = ईप्सिततमत्वादिरूपावच्छेदकोपाधिभेदेन भिन्नाः, उपाधिभिर्वस्तुशरीरस्य सम्मूर्च्छितत्वात् = उपचितत्वात् । ताश्च शक्तयोऽविद्याकार्यत्वेन सेव स्वाश्रयनिरूपिततत्त्वान्यत्वाभ्यामनिर्वाच्या इति न शक्तीनामनुपाधेः क्रियोपकाराङ्गत्वस्य, न वा साङ्कर्यादेः प्रसङ्ग इति ॥ ६ ॥

जातौ पदार्थे तज्जातीयाभेदेनानागतं निरूप्य योग्यसाधनविनियोगाज्जातिद्वारेण क्रियासिद्धावङ्गता, व्यक्तिद्वारेण तु निर्वर्त्यमानता कर्मणो युज्यत इत्युक्तम्—

"निर्वर्त्यमानं यत्कर्म जातिस्तत्रापि साधनम्" इति ।

(वा० प० ३, जाति० २७)

व्यक्तौ तु पदेन प्रत्याय्यायाम् 'शब्दं जनयति', 'संयोगं करोति' इत्यादौ जन्यमानस्य निर्वर्त्यस्य शब्दादेः कर्मणोऽनागतस्यापि वर्तमानव्यक्तिसारूप्यादसत्यपि जातेः प्रत्यायने भेदानध्यवसायाद् बुद्ध्याकारमुल्लिख्य योग्यसाधनविनियोगाद् बौद्धस्यैव बहीरूपताध्यवसायाद् बाह्येन रूपेण निर्वर्त्यमानता, बौद्धेन तु साधनभावो युज्यत इत्यर्थः ।

---

विवक्षारूपबुद्ध्यवस्थानिमित्तके च साधनत्वे प्रागुक्तरीत्या व्यवस्थापिते सति अर्थेषु कर्मत्वादिशक्तिनानात्वमेव जन्यमानस्य कर्मणः साधनत्वमपि सिद्धं भवतीत्याह—व्यक्तौ पदार्थे इति ।

अयमर्थः—यथा विवक्षारूपबुद्ध्यवस्थासमाश्रयेण बाह्यार्थेषु शक्तिनानात्वं सिद्धम्, तथा व्यक्तिः पदार्थ इति मते जन्यमानस्य—उत्पाद्यमानस्य कर्मणः शब्दादेः 'शब्दं करोति', 'संयोगं करोति' इत्यादौ बुद्धिरूपप्रकल्पितम्, बुद्ध्या सम्पादितं साधनत्वं सिद्धम् । अन्यथाऽनागतत्वेनासतो बाह्यस्य क्रियापूर्वभावित्वाभावेन कर्मत्वानुपपत्तिः । बौद्धार्थसमाश्रये साधनत्वे तु बौद्धार्थस्य क्रियापूर्वभावित्वेन कर्मत्वं तत्तादात्म्याध्यासेन बाह्यार्थस्यापि कर्मत्वमुपपद्यते । जातिः पदार्थ इति पक्षे तु कर्मकारकत्वानुपपत्तिः, जातेः क्रियापूर्वभावित्वात् । जातावुत्पत्तिक्रियाकर्मत्वं तु व्यक्तिद्वारकमिति ।

अयं भावः—जातौ पदार्थे वर्तमानतज्जातीयाभेदेनानागतं तज्जातीयं बुद्धौ निरूप्य तत्र तत्क्रियायोग्यकर्मत्वादिसाधनविनियोगाज्जातिद्वारेण तस्य तत्क्रियासिद्धावङ्गता, साधनत्वेन रूपेण जातेः क्रियापूर्वभावित्वेन कर्मत्वात् । व्यक्तिद्वारेण तु नित्यस्यापि निर्वर्त्यमानताजातिरूपस्य कर्मणो युज्यत इत्युक्तम्—

"निर्वर्त्यमानं यत्कर्म जातिस्तत्रापि साधनम्" (वा० प० ३, जाति० २७) इति ।

अस्यार्थः—निर्वर्त्यविकार्यप्राप्येषु कर्मसु यद् निर्वर्त्यमानं कर्म तत्रापि जातिर्व्यक्तिद्वारेण निर्वर्त्यमानकर्मरूपं क्रियायां साधनमिति । व्यक्तौ तु पदेन प्रत्याय्यायाम्=व्यक्तिः पदार्थ इति पक्षे तु 'शब्दं जनयति', 'संयोगं करोति' इत्यादौ निर्वर्त्यस्य शब्दादेः कर्मणोऽनागतस्यापि जातेः प्रत्यायनेऽसत्यपि वर्तमानव्यक्तिसारूप्येण वर्तमानेन सह भेदानध्यवसायात् तस्य भाविनोऽपि बुद्ध्याकारमुल्लिख्य तस्य तत्क्रियायोग्यकर्मत्वसाधनरूपतया तस्यां क्रियायां विनियोगाद् बौद्धस्यैव बाह्यरूपतया तादात्म्याध्यवसायात्, बाह्येन रूपेण निर्वर्त्यमानता, बौद्धेन रूपेण तु साधनभावो युज्यत इति ।

जन्यमानस्येत्यनेन विकार्यप्राप्ययोर्व्यवच्छेदः। विकार्यं हि प्रकृतिरूपेण स्थितमेव। प्राप्यमपि स्वत एव ॥ ७ ॥

कियद्वा बुद्धया नाध्यारोप्यत इत्याह—

स्वतन्त्रपरतन्त्रत्वे क्रमरूपं च दर्शितम्।
निरीहेष्वपि भावेषु कल्पनोपनिबन्धनम् ॥ ८ ॥

सदसत्पक्षभेदेन कार्यकारणभावस्य निराकृतत्वात् सर्वे भावाः क्रियारहिताश्चेष्टाशून्याः। तत्र क्रियायां स्वातन्त्र्यपारतन्त्र्यादिलक्षणं कर्तृकरणादिरूपं कारकत्वम्। क्रियारूपमेव च सक्रमत्वं यथावभासमानादिमिथ्याभ्यासवासनावशेन कल्पनाबुद्धयुपरचितसतत्त्वम्। अपूर्वापरस्यापि भावतो विश्वस्य पूर्वापरतया

---

जन्यमानस्येत्यनेन विकार्यप्राप्यकर्मणोर्व्यवच्छेदः, तत्र तयोः कर्मणोः स्वयोग्यपूर्वक्रियाभावित्वेन कर्मत्वोपपत्तेः।

विकार्यं हि प्रकृतिरूपेण तत्र क्रियातः पूर्वं स्थितमेव। प्राप्यमपि स्वत एव = स्वरूपेणैव क्रियातः पूर्वं स्थितमिति ॥ ७ ॥

न केवलं बौद्धं साधनत्वमेव बाह्येऽध्यारोप्यते; किन्त्वन्यदपि तत्र बुद्धयाऽध्यारोप्यते। तदुक्तं हेलाराजेन—"कियद् वा बुद्धया नाध्यारोप्यते" इति। तदाह—स्वतन्त्रपरतन्त्रत्व इति।

अस्यार्थः—निरीहेष्वपि=अचेतनत्वात् क्रियारहितेष्वपि भावेषु, स्वतन्त्रपरतन्त्रत्वे यथायथं कर्तृत्वकरणत्वादिलक्षणे पौर्वापर्यात्मकं क्रमरूपञ्च कल्पनोपनिबन्धनम्=अनाद्यविद्याप्रयुक्ताऽध्यारोपरूपकल्पनाहेतुकं दर्शितमद्वैतमार्गानुसारिभिर्महाभाष्यकारादिभिः 'कूलं विपतिष्यति' इत्यादिप्रयोगसिद्धयर्थम्। "धातोः कर्मणः समानकर्तृकादिच्छायां वा" (पा० ३।१।७) इति सूत्रे भाष्ये 'कूलं पिपतिषति' इति प्रयोगसिद्धये वक्तृगताया इच्छाया अचेतने कूले अध्यारोपस्य दर्शितत्वादिति।

अयं भावः—लोके कार्यं कारणञ्च सक्रियमेव दृश्यते। तद्यथा कार्यस्य व्यावहारिकं सत्त्वं वदतामद्वैतिनां तदनुसारिणाञ्च वैयाकरणानां नये अनुभूयते खलु कारणलीने घटे स्वकारणत्वेनाभिमतदण्डादिक्रियाप्रयुक्तास्वाविर्भावानुकूला काचन क्रिया। दण्डे चापि घटकारणे कुलालक्रियाप्रयुक्ता चक्रभ्रम्यनुकूला क्रिया। तथापि कार्यस्य कारणस्य च भावस्य सत्त्वं व्यावहारिकमेव, न तु पारमार्थिकम्। सदसत्पक्षभेदेन कार्यकारणभावस्य खण्डनादौ निराकृतत्वात्। तदुक्तं खण्डनखण्डखाद्ये आदावेव श्रीहर्षमिश्रैः—

स्वातन्त्र्यादिनात्रा( चा )वभासनादिति मिथ्यावभासोऽयमर्थेषु क्रियाकारकभाव इत्यर्थः। अद्वैतनये हि सर्वमुपप्लवते, असत्यत्वादिति विकल्पपरिघटितः शाब्दो व्यवहारो यथाप्रतीत्यविचारितसिद्धोऽभ्युपगन्तव्य इति दिगादिपदार्थवत् साधनपदार्थसिद्धिः। 'दर्शितम्' इत्यद्वैतनयावलम्बिभिर्भाष्यकारप्रभृतिभिः, "कूलं पिपतिषति" इत्यादिप्रयोगसिद्ध्यर्थमाख्यातमित्यर्थः ॥ ८ ॥

एवं तावद् द्रव्यव्यतिरिक्तशक्तिदर्शनेन साधनं लक्षितम्। अव्यतिरिक्तशक्तिदर्शनेनाप्याह—

**शक्तयः शक्तिमन्तश्च सर्वे संसर्गवादिनाम्।**

**भावास्तेष्वस्वशब्देषु साधनत्वं निरूप्यते ॥ ९ ॥**

---

अन्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः।
नान्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः॥ इति।
अन्तर्भावितसत्त्वं चेत् कार्यं स्यात् तदसत्ततः।
नान्तर्भावितसत्त्वं चेत् कार्यं स्यात् तदसत्ततः॥ इति च।

अनयोश्च पद्ययोर्व्याख्यानं विस्तृतं तत्रैव द्रष्टव्यम्। एवञ्च सर्वे भावा अचेतनत्वात् क्रियारहिताश्चेष्टाशून्याः। यद्यपि सांख्यैरचेतनेष्वपि क्षीरनद्यादिषु प्रवृत्तिरूपा क्रियाऽभ्युपगता अचेतनायाः प्रकृतेश्चेतनाधिष्ठानं विनैव प्रवृत्तिसिद्ध्यर्थम्, तथापि तत्प्रत्याख्यातम्, "पयोऽम्बुवच्चेत् तत्रापि हि" इत्यादिभिर्ब्रह्मसूत्रैः। एवं स्थिते स्वातन्त्र्यलक्षणं कर्तृत्वम्, पारतन्त्र्यादिलक्षणञ्च करणादिरूपं कारकत्वं क्रियायामेव, न तु भावेषु। अत एव "कारके" (पा० १।४।२३) इति सूत्रे भाष्ये—करोतीति कारकमिति व्युत्पत्त्या क्रियैव कारकमित्युपवर्णितम्।

किञ्च, क्रियारूपमेव च सक्रमत्वम्, न तु भावेषु क्रमः। तदेवं स्वतन्त्रपरतन्त्रत्वे क्रमरूपञ्च क्रियागतम्, क्रियारूपञ्च भावेषु प्रतीयमानं यथावभासमनादिमिथ्याप्रत्ययरूपाविद्यासञ्जनितवासनावशेन कल्पनाबुद्ध्युपरचितस्वरूपम्। भावतोऽपूर्वापरस्यापि=स्वरूपतोऽक्रमस्यापि विश्वस्य पूर्वापरतया स्वातन्त्र्यादिना चावभासनादिति मिथ्यैवावभासमानोऽयमर्थेषु क्रियाकारकभाव इति कारिकाया अस्या अभिप्रायः। क्रियायामपि च मिथ्यैव स्वप्ने स्वप्नान्तरदर्शनमिव तस्या अपि अद्वैते ब्रह्मणि कल्पितत्वात्। अद्वैतनये हि सर्वमविद्याकल्पितत्वेन उपप्लवते=मिथ्यैवावभासते, असत्यत्वादिति विकल्पपरिघटितः=अविद्याविषयविषयपरिनिष्पन्नः सर्वोऽपि शाब्दो व्यवहारो यथाप्रतीति अविचारितसिद्धोऽभ्युपगन्तव्य इति प्रागुक्तदिगादिपदार्थवदविद्याप्रत्ययादेव साधनपदार्थसिद्धिः, न तु प्रमाणत इति। 'दर्शितम्' इति प्रकृतकारिकाघटकपदस्य च अद्वैतनयानुसारिभिर्भाष्यकारादिभिः 'कूलं पिपतिषति' इत्यादिप्रयोगसिद्ध्यर्थमाख्यातमित्यभिप्राय इति ॥ ८ ॥

समवायवशाद् धर्मधर्मिणोरभेदमिव भेदेऽपि ये वदन्ति ते संसर्गवादिनो वैशेषिकाः। ते च स्वरूपं सहकारिणश्च भावानां स्वकार्यजनने शक्तिरिति प्रतिपन्नाः। सहकारिणः शक्तिः, कारणं शक्तिमत्। एवं सहकारिणामपि कारणं शक्तिमत्, शक्तिः स्वकार्ये सहकारि रूपमिति शक्तिशक्तिमन्तः सर्व एव भावाः, न त्वन्या काचिदतीन्द्रिया शक्तिः षट्पदार्थव्यतिरिक्ता विद्यते। एवमपि साधनत्वं भावानां पदार्थानामपादानादिशब्दैर्न प्रत्याय्यते; अपि तु विभक्तिभिरेव। तथा च प्रत्यायन-योग्यतामात्रेण त्वपादानादिशब्दप्रवृत्तिः। 'घटं पश्यति' इत्यादावेव द्वितीयादिभि-र्महत्त्वाद्याधारनियतं प्रत्याय्यमानं शक्तिः साधनं भवति। आधारानवच्छिन्नस्तु

---

एवं तावत् स्वाधारद्रव्यव्यतिरिक्ता शक्तिरिति दर्शनमाश्रित्य कर्मत्वादि-शक्तिरूपं साधन लक्षितम्। इदानीं तदव्यतिरिक्ता शक्तिरिति दर्शनेनाप्याह--- शक्तयः शक्तिमन्तश्चेति।

अस्यार्थः—यथा क्वचित् समवायसम्बन्धवशाद् धर्मधर्मिणोरभेदः, तथा भेदेऽपि एककार्यकारित्वे कारणसहकारिणोः शक्तिशक्तिमद्रूपाभ्यामभेद इति संसर्ग-वशाद्भेदं वदन्तः संसर्गवादिनो वैशेषिकाः। तथा च संसर्गवादिनां वैशेषिकाणां मते सर्वे भावाः सहकारिरूपेण शक्तयः, कारणरूपेण शक्तिमन्तश्च। तेषु भावेषु ये अस्वशब्दास्तेषु=स्ववाचकशब्दावाच्येषु, न स्वशब्दो वाचको येषां तेऽस्वशब्दा इति विग्रहः। महत्त्वरूपत्वादिषु स्वशब्दावाच्येषु कर्मादिशब्दावाच्येषु द्वितीयादिविभक्ति-वाच्येषु साधनत्वं निरूप्यते साम्प्रतमिति प्रतिज्ञा इति।

अयं भावः—समवायसंसर्गवशाद् धर्मधर्मिणोर्नीलादिघटाद्योरभेदमिव भेदेऽपि ये संसर्गवशाद् धर्मधर्मिभावमादायाभेदं वदन्ति, ते संसर्गवादिनो वैशेषिकाः। ते च स्वकार्यजनने प्रधानकारणीभूतं भावानां स्वरूपं शक्तिमत् सहकारिणश्च शक्तिरिति विभागसत्त्वेऽपि संसर्गवशाद् धर्मधर्मिभावापन्नयोरभेदेन द्वयमपि शक्तिरिति प्रति-पन्नाः। एवं सहकारिणामपि कारणं शक्तिमत्,शक्तिः स्वकार्ये सहकारिरूपमिति रीत्या शक्तिशक्तिमन्तः सर्व एव भावाः, न त्वन्या द्रव्यगुणादिषड्भावपदार्थव्यतिरिक्ता काचिदतीन्द्रिया शक्तिर्मीमांसकाभ्युपगता विद्यते=उपपद्यते, स्वक्रियते वा वैया-करणैः। एवं सत्यपि भावानां पदार्थानामपादानत्वादिरूपं साधनत्वमपादानादि-शब्दैर्न प्रत्याय्यते; अपि तु विभक्तिभिरेव। तथा च 'अश्वः पततेरपादानम्, ग्रामो गमेः कर्म' इत्यादावपादानादिशब्दप्रयोगस्त्वपादानत्वादिप्रतिपादनयोग्यतामात्रेण, न तु वस्तुतोऽपादानादिशब्दानामपादानत्वादिरूपसाधनप्रतिपादनशक्तिरस्ति। अतः 'घटं पश्यति' इत्यादावेव, न तु 'घटः कर्म' इत्यादौ, आधारनियतम्=आधारेणा-वच्छिन्नम्. महत्त्वादिद्वितीयादिविभक्तिभिः प्रत्याय्यमानं कर्मत्वशक्तिरूपं साधनं भवति। महत्त्वादेराधारावच्छिन्नत्वं तु अनेकद्रव्यारब्धक्रियाफलाधारनिष्ठत्वेन रूपेणेति, आधारानवच्छिन्नस्तु महत्त्वादिः कर्मादिशब्दवाच्यो न किञ्चनापि क्रिया-

महत्त्वादिः कर्मादिशब्दवाच्यो न किञ्चनापि साधयतीति विभक्त्येकसमधिगम्यः, प्रातिपदिकादाधारवाचिनस्तदुत्पत्तेः। आधारसमवाये साधनत्वस्य संस्पर्शादुपकारावस्थायां शक्तित्वम्, उपकार्यावस्थायां तु शक्तिमत्त्वं प्रमाणदृष्टमिति न काचिदनुपपत्तिः। अत एव शक्त्यवस्थायां शक्त्यन्तरेणायोगादनवस्थापि नास्ति। अभावस्यास्मिन् दर्शने सप्तमपदार्थरूपत्वेन भा( व )व्यत्वाच्छक्तियोगोऽविरुद्धः ॥ ९ ॥

तत्र को भावः, कस्य क्व शक्तिरित्युदाहरणमाह —

**घटस्य दृशिकर्मत्वे महत्त्वादीनि साधनम् ।**
**रूपस्य दृशिकर्मत्वे रूपत्वादीनि साधनम् ॥ १० ॥**

'घटं पश्यति' इति दर्शनक्रियाकर्मभावापन्नस्य घटद्रव्यस्य महत्त्वानेकद्रव्यवत्त्वरूपाणि शक्तिः स्वसमवेतानि साधनं कर्मकारकम् । तथा हि कणादसूत्रम्—

"महत्यनेकद्रव्यवत्त्वाद् रूपाच्चोपलब्धिः" (वै० सू० ४।१।६) इति ।

---

फलं साधयतीति विभक्त्येकसमधिगम्य एव सः। क्रियाफलाधारवाचिनः प्रातिपदिकात् तदुत्पत्तेः = द्वितीयादिविभक्त्युत्पत्तेः, महत्त्वादेरनेकद्रव्यारब्धक्रियाफलाधारसमवाये सति घटादेर्दृशिकर्मत्वे साधनत्वस्य संस्पर्शात् = सम्बन्धात्, आकाशादिरूपैकद्रव्यवृत्तित्वे तु तदभावदर्शनादुपकारावस्थायां तस्य कर्मादिशक्तित्वम्, क्रियाफलाधाररूपोपकार्यावस्थायां तु शक्तिमत्त्वमिति 'घटं पश्यति' इत्यादिव्यवहारान्यथाऽनुपपत्तिरूपप्रमाणदृष्टमिति न काचिदनुपपत्तिः। अत एव शक्त्यवस्थायां शक्त्यन्तरेण सम्बन्धाभावादनवस्थापि नास्ति। अभावस्य अस्मिन् दर्शने = वैशेषिकदर्शने सप्तमपदार्थरूपत्वेन भावत्वात् शक्तियोगोऽविरुद्ध इति ॥ ९ ॥

तत्र को भावः, कस्य कस्मिन् कार्ये शक्तिरूप इत्युदाहरणमाह—**घटस्य दृशिकर्मत्व इति ।**

अस्यार्थः—'घटं पश्यति' इत्यादौ घटस्य दृशिकर्मत्वे महत्त्वादीनि = महत्त्वानेकद्रव्यारब्धोपादानकत्वोद्भूतरूपवत्त्वादीनि, साधनम् = कारकशक्तिः। 'रूपं पश्यति शुक्लं पश्यति' इत्यादौ रूपस्य दृशिकर्मत्वे = दर्शनकर्मत्वे, रूपत्वादीनि = रूपत्वोद्भूतत्वादीनि साधनमिति। अत्रोद्भूतत्वं दर्शनविषयत्वयोग्यतावच्छेदकीभूतो धर्मविशेष उत्कटत्वापरपर्यायो रूपनिष्ठ इति।

अयं भावः—'घटं पश्यति' इत्यत्र दर्शनक्रियाकर्मत्वापन्नस्य घटरूपस्य द्रव्यस्य महत्त्वानेकद्रव्यारब्धोपादानकत्वरूपाणि स्वसमवेतानि = घटसमवेतानि शक्तिरूपं साधनं कर्मकारकम्। तथा च कणादसूत्रम्—"महत्यनेकद्रव्यवत्त्वाद् रूपाच्चोपलब्धिः" इति।

अस्यार्थः—अनेकं द्रव्यं समवायिकारणं यस्य तदनेकद्रव्यं द्व्यणुकादि। तद् यस्यास्ति तदारब्धस्य तदनेकद्रव्यवत्। तद्भावस्तत्त्वम्। तस्माद्धेतोरुपलब्धिर्महति द्रव्ये तेन बहुव्रीहिणा मतुपा च द्वौ मत्वर्थावुक्तौ। तत्रैकेन परमाणोर्व्यवच्छेदः। स हि रूपवानप्यनेकस्य द्रव्यस्यारम्भकस्याभावान्नोपलभ्यते। अपरेण तु मत्वर्थेन द्व्यणुकादेर्व्यवच्छेदः। अत एव सूत्रान्तरमुक्तम्—

"अद्रव्यत्वात् परमाणावनुपलब्धिः" ( वै० सू० ४।१।७ ) इति।

परमाणुग्रहणमत्रादृश्यमानस्योपलक्षणार्थम्। महति दृश्यमाने चानेकद्रव्यवत्त्वं दर्शनहेतुरिति त्र्यणुकस्य कारणबहुत्वमहत्त्वप्रचयेभ्यो महत्त्वस्योत्पत्तिरिति त्रिभिर्द्व्यणुकैरारम्भान्महतोऽनेकद्रव्यवत्त्वेऽपि तदभावः। महतो हि दृश्यमानस्यानुवादेनेदं विधीयत इत्यदृश्ये नायने रश्मौ नास्या(स्य) दृश्यतापत्तिः।

न हि महत्त्वमप्यत्र दर्शनकारणं विधीयते।

एवं ह्येकस्या आकृतेश्चरितः प्रयोग इति न्यायात् प्रक्रमो भेदार्थः ( प्रक्रमा-

---

अस्यार्थः अनेकं द्रव्यं यस्य समवायिकारणम्=आरम्भकम्, तदनेकद्रव्यं द्व्यणुकादि। तद् यस्यास्ति तदारब्धस्य=तादृशानेकद्रव्यारब्धस्य द्व्यणुकाद्यारब्धस्य तदनेकद्रव्यवत्, तस्य भावस्तत्त्वम्। तस्माद् हेतोर्महति द्रव्ये=महत्त्ववद् द्रव्यविषया उपलब्धिर्भवति। अस्मिन् विग्रहे बहुव्रीहिणा मतुपा च द्वौ मत्वर्थावुक्तौ। तत्रैकेन=बहुव्रीहिणा परमाणोर्व्यवच्छेदः। तस्य न प्रत्यक्षमिति यावत्। स हि रूपवानपि अनेकस्य द्रव्यस्य स्वारम्भकस्याभावान्नोपलभ्यते। अपरेण तु मत्वर्थेन= अनेकद्रव्यारब्धोपादानकत्वरूपेण द्व्यणुकादेर्व्यवच्छेद इति न तत्प्रत्यक्षम्। अत एव तत्रैव सूत्रान्तरमुक्तम्—"अद्रव्यत्वात् परमाणावनुपलब्धिः" इति।

अस्यार्थः—परमाणोर्नित्यत्वेनारम्भकद्रव्याभावात् तद्विषयकप्रत्यक्षाभाव इति।

अत्र सूत्रे परमाणुग्रहणमदृश्यमानस्य भावस्योपलक्षणार्थं कृतम्। महति दृश्यमाने च द्रव्येऽनेकद्रव्यवत्त्वं दर्शनहेतुरिति कारणबहुत्वप्रचयेभ्यः त्र्यणुके महत्त्वस्योत्पत्तिरिति त्र्यणुकस्य त्रिभिर्द्व्यणुकैरारम्भाद् महतोऽप्यनेकद्रव्यवत्त्वेऽपि तदभावः—दर्शनाभावः। महतो हि दृश्यमानस्यानुवादेनेदं विधीयते=अनेकद्रव्यवत्त्वं दर्शनहेतुत्वेन विधीयत इत्यदृश्ये नायने=चाक्षुषे रश्मौ नास्य=न वैशेषिकस्य मते दृश्यमानतापत्तिः।

किञ्चात्रोपन्यस्ते प्रथमसूत्रे रूपानेकद्रव्यवत्त्व इव महत्त्वमपि नहि दर्शनकारणं विधीयते।

एवं हि=तथा तस्य विधाने हि एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च कर्तव्य इति न्यायेन प्रक्रमाभेदार्था=प्रक्रमस्योपसंहारेण सहाभेदार्था

भेदार्था ) पञ्चम्येव क्रियेत। अनेकद्रव्यवतश्च महत्त्वाव्यभिचारात् 'महति' इति न हेतुनिर्देशः; अपि तु विषयोपलक्षणमेव। 'रूपात्' इति च द्वितीयो दर्शनहेतुः। नीरूपस्य वाणोर्महतोऽनेकद्रव्यवतश्चाप्यनुपलम्भात्। तदुक्तं सूत्रम्—

"रूपसंस्काराभावाच्च वायावनुपलब्धिः" ( वै० सू० ४।७।१ ) इति।

यतश्चानेकद्रव्यवत्त्वस्य रूपस्य च दर्शनहेतुत्वम्, न महत्त्वस्यापि। ततो द्वयोरेव व्यतिरेकः प्रदर्शितः। महत्त्वस्याकारत्वेऽपि च तद्विषयत्वाद् दर्शनस्य पारम्पर्येणोपयोगात् 'महत्त्वादीनि साधनम्' इति बहुवचनम्।

यद्वा, द्रव्यत्वादीनां सामान्यविशेषाणामप्यादिशब्देन सङ्ग्रहणाद् बहुवचनम्। अत्र सामान्यविशेषा हि प्रधानं दर्शननिबन्धनम्। तदुपाधिकत्वेनार्थानां पररूपव्यावृत्तस्यात्मन उपलम्भात्।

---

पञ्चम्येव क्रियेत, न तु महति इति सप्तमी। किञ्चानेकद्रव्यवतो महत्त्वाव्यभिचाराद् महति इति न निमित्तसप्तमीमाश्रित्य हेतुनिर्देशः; अपि त्वत्रोपलब्धिविषये महत्त्वमुपलक्षणमेव, न तु विशेषणतया हेतुः। सूत्रे रूपादिति चानेकद्रव्यवत्त्वापेक्षया द्वितीयो दर्शनहेतुः। नीरूपस्य चाणोः, महतोऽनेकद्रव्यवतश्चापि त्रसरेणोरनुपलम्भात्। तदुक्तं सूत्रम्—"रूपसंस्काराभावाच्च वायावनुपलब्धिः" इति।

अस्यार्थः—रूपकृतस्य विषयसंस्कारस्य प्रत्यक्षविषयत्वयोग्यतापादकस्य रूपवत्सु घटादिष्विव रूपरहिते वायावभावाद् वायुविषयकस्योपलम्भस्याभाव इति। इन्द्रियसंस्कार इव विषयसंस्कारोऽपि प्रत्यक्षे उपयुज्यत इत्युक्तं ब्रह्मकाण्डे हरिणैव—

इन्द्रियस्यैव संस्कारः समाधानाञ्जनादिभिः।
विषयस्य तु संस्कारस्तद्गन्धप्रतिपत्तये॥ इति।

( वा० प० १।७९ )

यतश्चानेकद्रव्यवत्त्वस्य रूपस्य च दर्शनहेतुत्वम्, न तु महत्त्वस्यापि। ततो द्वयोरेव व्यतिरेकोऽनुपलम्भहेतुत्वेन प्रदर्शितः सूत्रद्वये—अद्रव्यत्वात् परमाणावनुपलब्धिः, रूपसंस्काराभावाच्च वायावनुपलब्धिरिति। एवं महत्त्वस्य द्रव्यप्रत्यक्षेऽकारणत्वेऽपि च द्रव्यदर्शनस्य महत्त्वविषयकत्वात् तत्र महत्त्वस्य पारम्पर्येणोपयोगान् महत्त्वादीनि साधनमिति कारिकायां बहुवचननिर्देशः।

यद्वा, सत्तारूपमहासामान्यव्याप्यानां द्रव्यत्वादीनां सामान्यविशेषाणामपि आदिशब्देन साधनत्वेन संग्रहणाद् बहुवचनम्। अत्र=रूपानेकद्रव्यवत्त्वसामान्यविशेषेषु दर्शनसाधनेषु। सामान्यविशेषा हि प्रधानं दर्शननिमित्तम्। तदुपाधिकत्वेन=सामान्यविशेषरूपोपाधिमत्तया। परस्वरूपव्यावृत्तस्यार्थानामात्मनः=स्वरूपस्य उपलम्भात्।

'महति' इत्येव तूक्ते व्यभिचार आकाशादिनेत्यनेकद्रव्यत्वादिति, मतुपाऽवयविद्रव्ये प्रतीतिरभिव्यज्यते। 'अनेकद्रव्यत्वात्' इति पुनरुच्यमाने तत्पुरुषसम्भावनया द्रव्यप्रचयमात्रं गम्येत।

'रूपं पश्यति' इत्यत्र रूपस्य दर्शनक्रियायां रूपत्वं स्वसमवेतं सामान्यमनेकद्रव्ये च द्रव्ये समवायः साधनम्। तथा च सूत्रम्—

"अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः" ( वै० सू० ४।१।८ ) इति।

अनेके आरम्भका यस्यावयविद्रव्यस्य तदनेकद्रव्यम्, तेन समवायात्, तत्र समवेतत्वाद् रूपस्य विशेष उद्भूतत्वम्। अतो नायनरश्मिरूपं बाह्यतैजसद्रव्यरूपेणाभिभूतमपोह्यते।

अन्ये तु रूपं विशेष्यते व्यावर्त्यतेऽनेनान्यस्माद् रसादेरिति रूपत्वमेव सामान्यविशेष एवमुपदिष्ट इति वर्णयन्ति। अनेकद्रव्यत्वाभावाच्च परमाणोस्तद्गतरूपस्यादृश्यता। योग्यदेशत्वादयोऽपि सामर्थ्यात् साधनमिति बहुवचननिर्देशः ॥ १० ॥

---

सूत्रे 'महति' इत्येव तूक्ते अनेकद्रव्यवत्त्वाद् रूपाच्चेत्यनुक्तौ महता आकाशादिना व्यभिचारः, तस्य महत्त्वेऽपि अप्रत्यक्षत्वादिति अनेकद्रव्यवत्त्वादित्युक्तम्। अत्र मतुपाऽवयविद्रव्यविषया प्रतीतिरभिव्यक्ता भवति। अनेकद्रव्यत्वादिति मतुब्विरहिते पुनरुच्यमाने अनेकं द्रव्यम्, अनेकद्रव्यमिति कर्मधारयरूपतत्पुरुषविशेषसम्भावनया द्रव्यप्रचयमात्रम् = द्रव्यसमूहमात्रं ज्ञायेत।

'रूपं पश्यति' इत्यत्र रूपस्य दर्शनक्रियायां स्वसमवेतं रूपत्वं सामान्यम्, अनेकद्रव्ये च = अनेकद्रव्यरूपावयवारब्धे च द्रव्येऽवयविरूपे दृश्यमाने समवायः साधनम्। तथा च सूत्रम्—'अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः' इति।

अस्यार्थः—अनेकानि द्रव्याणि अवयवरूपाणि आरम्भकाणि यस्यावयविद्रव्यस्य तदनेकद्रव्यम्, तेन सह समवायात्, तत्र समवेतत्वाद् रूपस्य विशेष उद्भूतत्वम्, तस्माच्च रूपोपलब्धिरिति। अतो नेत्ररश्मिरूपं बाह्यतैजसद्रव्यस्य रूपेणाभिभूतत्वादनुद्भूतमिति व्युदस्यते।

अन्ये तु रूपं विशेष्यते व्यावर्त्यतेऽन्यस्माद् रसादेरनेनेति रूपत्वमेव सामान्यविशेष एवमुपदिष्टः = रूपविशेषादिति सौत्रेण पदेनोपदिष्ट इति वर्णयन्ति। परमाणोश्चानेकद्रव्यत्वाभावात् = अनेकद्रव्यारब्धत्वाभावात् तद्गतरूपस्यादृश्यता। अनेकद्रव्यारब्धद्रव्यसमवायाभावात्। योग्यदेशवृत्तित्वजाग्रत्कालवृत्तित्वादयोऽपि सामर्थ्यात्, अन्यथा प्रत्यक्षानुपपत्तिरूपप्रमाणगम्यात् साधनमिति 'महत्त्वादीनि' इति कारिकाघटके पदे बहुवचननिर्देश इति ॥ १० ॥

**स्वैः सामान्यविशेषैश्च शक्तिमन्तो रसादयः।**
**नियतग्रहणा लोके शक्तयस्तास्तथाश्रयैः ॥ ११ ॥**

**'रसं रसयति, गन्धं जिघ्रति, स्पर्शं स्पृशति, शब्दं शृणोति' इति रसत्वादयः सामान्यविशेषाः समवेता रसादीनां रसनादिक्रियासाधनम्। तथा हि तैस्तैः 'नियतग्रहणाः' नियतं स्वजातिबलादेव गृह्यन्ते, न तु द्रव्यवदनियतग्रहणाः। द्रव्यं हि कदाचित् सामान्योपाधिना गृह्यते 'द्रव्यम्' इति, कदाचिद् गुणेन 'शुक्लम्' इति, कदाचित् कर्मणा 'गच्छति' इति। रसत्वादीनां तु शक्तीनां स्वाधारा एवावच्छेदकाः स्वरूपग्रहणे शक्तिः। यथा हि रसस्योपलम्भे रसत्वमप्युपलभ्यते। तद्विशिष्टस्य तस्योपलम्भादित्याश्रिताक्षेपः, तथा रसत्वोपलम्भेऽपि स्वाश्रयाक्षेपः।**

---

भावानां परस्परं शक्तिशक्तिमद्भावं प्रदर्शयन् शक्तेरनियतत्वं प्रब्रूते—**स्वैः सामान्यविशेषैश्चेति।**

अस्यार्थः—रसादयश्च = रसगन्धस्पर्शशब्दादयो गुणास्तु, स्वैः सामान्यविशेषैः स्वसमवेतै रसत्वादिभिः सामान्यविशेषैः शक्तिमन्तः, 'रसं रसयति, गन्धं जिघ्रति' इत्यादौ रसादिसमवेता रसत्वादिरूपाः सामान्यविशेषा एव रसनादिक्रियासु कर्मत्वशक्तयः साधनरूपाः। अतो रसादयो गुणा लोके नियतग्रहणाः। गृह्यते येन तद् ग्रहणम् = ग्राहकम्। नियत स्वसमवेतरसत्वादिसामान्यविशेषरूपं ग्रहणं येषां ते नियतग्रहणाः, न तु द्रव्यवदनियतग्रहणाः। द्रव्यं हि कदाचिद् जातिरूपेणोपाधिना गृह्यते घट इति, कदाचिद् गुणरूपेणोपाधिना शुक्ल इति, कदाचित् कर्मरूपेणोपाधिना गच्छति इति। गुणास्तु स्वसमवेतैः सामान्यविशेषैरेव गृह्यन्त इति नियतग्रहणाः। ताः = गुणसमवेता रसत्वादिसामान्यविशेषरूपाः शक्तयोऽपि, आश्रयैः = स्वाधाररूपैः स्वावच्छेदकैः, तथा = शक्तिमत्यः। रसाद्युपलम्भे सति रसत्वादिरूपसामान्यस्याप्युपलम्भादिति।

अयं भावः—'रसं रसयति' गन्धं जिघ्रति, स्पर्शं स्पृशति, शब्दं शृणोति' इत्यादौ रसत्वादयः सामान्यविशेषा रसादिसमवेता रसादीनां रसनादिक्रियासु कर्मत्वशक्तिरूपं साधनम्। तथा हि ते तैस्तैः सामान्यविशेषैः स्वसमवेतैर्नियतग्रहणाः=स्वसमवेतजातिविशेषबलादेव हि ते नियतं गृह्यन्ते, न तु द्रव्यवदनियतग्रहणाः। द्रव्यं हि कदाचित् सामान्योपाधिना=स्वसमवेतजातिविशेषरूपस्यावच्छेदकधर्मेण परस्मादद्रव्यादव्यवच्छिन्नं गृह्यते—द्रव्यमिति। कदाचिद् गुणेन इतरव्यावृत्तं गृह्यते–शुक्लमिति। कदाचित् क्रियया इतरस्माद् व्यवच्छिन्नं गृह्यते—गच्छतीति। अत्र हि कर्तृरूपं द्रव्यं गमनक्रियया इतरस्माद् व्यावृत्तं गृह्यत इति अनियतग्रहणम्। रसादिशक्तिरूपाणां रसत्वादीनां तु स्वाधारा एव रसादयः समवेतत्वसम्बन्धेनावच्छेदका रसत्वादिस्वरूपग्रहणे शक्तयः। यथा हि रसस्योपलम्भे रसत्वमप्युपलभ्यते, रसत्वविशिष्टस्यैव रसस्योपलम्भादित्याश्रयेण रसेना-

तथा रसस्योपलम्भे तदाश्रयं द्रव्यमपि शक्तिरित्यपि ज्ञेयम्। पूर्ववच्चानेकद्रव्ये समवायोऽपि गृह्यते, परमाणुगतस्य रसादेरनुपलम्भात्। एवं शेषेष्वपि वाच्यम्।

इत्थं परस्परं शक्तिशक्तिमन्तो भावाः। तथा च न काचिन्नियता शक्तिः। संसर्गिणां परस्परं तत्त्वात्, अन्यस्य च योग्यदेशत्वादेः सहकारिणस्तथात्वात्॥ ११॥

इन्द्रियार्थमनःकर्तृसम्बन्धः साधनं क्वचित्।
यद् यदा यदनुग्राहि तत् तदा तत्र साधनम्॥१२॥

आत्मेन्द्रियमनोऽर्थसन्निकर्षाद् ज्ञानं निष्पद्यते रूपादाविति संयोग एव साधनम्। सुखादौ त्वात्मान्तःकरणसंयोगादिति 'क्वचित्' इत्याह।

---

श्रितस्य रसत्वस्याक्षेपः, तथा रसत्वमात्रोपलम्भेऽपि स्वाश्रयस्य रसस्याक्षेप इति द्वयोरपि रसरसत्वयोरविनाभूतोपलब्धिकत्वात् परस्परस्योपलम्भे शक्तित्वम्। तथा रसस्योपलम्भे तदाश्रयं द्रव्यमपि रसत्ववत् शक्तिरित्यपि ज्ञेयम्। पूर्ववच्चानेकद्रव्यारब्धे द्रव्ये समवायोऽपि रसादिगुणग्रहणे शक्तिरित्यपि गृह्यतेऽत्र, परमाणोरनेकद्रव्यारब्धत्वाभावेन तद्गतस्य रसादेरनुपलम्भात्। एवं शेषेष्वपि गुणेषु शक्तिस्वरूपं वाच्यम्।

एवं परस्परं शक्तिशक्तिमन्तः सर्वे भावा इति न काचिन्नियता शक्तिः, संसर्गिणां परस्परं शक्तित्वात्। अन्यस्य योग्यदेशत्वजाग्रत्कालत्वादिरूपस्य सहकारिणोऽपि शक्तित्वादिति॥ ११॥

न केवलं संसर्गिणां भावानामेव परस्परं शक्तिरूपत्वम्; अपि तु संसर्गस्यापि क्वचित् शक्तित्वमिति दर्शयन् परोपकारित्वात् परतन्त्रं सर्वं भावजातं शक्तिलक्षणमनुपततीत्युपसंहरति—इन्द्रियार्थमनःकर्तृसम्बन्ध इति।

अस्यार्थः—इन्द्रियार्थमनःकर्त्तार इति इतरेतरयोगः, तेषां यथासम्भवं मिलितानां सम्बन्धः=संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, अभावस्याधिकरणातिरिक्तत्वे विशेषणविशेष्यभावः। अन्यथा तु पञ्चैव। क्वचित्=अपरोक्षज्ञाने परोक्षज्ञाने च 'घटं पश्यति', 'वह्निमनुमिनोति' इत्यादौ कर्मत्वशक्तिरूपं साधनम्, तत्रापरोक्षज्ञाने यथायथं सम्बन्धपञ्चकम्। परोक्षज्ञाने तु आत्ममनःसंयोग एव। किं बहुना, यद् यदा यदनुग्राहि=यस्योपकारकम्, तत् तदा तत्र साधनमिति। यस्यां क्रियायां यद् येन रूपेण=ईप्सिततमत्व-साधकतमत्वादिना यदा उपकारकत्वेन परतन्त्रं तत्तदा तत्र साधनमिति निष्कर्षः।

अत्र कारिकायां कर्त्तृपदेनात्मा गृह्यते। तत्र बाह्यद्रव्यप्रत्यक्षे आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियं विषयेणेति क्रमः। आत्ममानसप्रत्यक्षे सुखादि-

किं वात्र परिगणनया यद् यत्रोपकरोति, तत् तत्र साधनमिति यथायोगं सर्वे भावाः शक्तिशक्तिमन्तः। तथा हि संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाण्युक्तानि। अवयवानामवयविनिष्पत्तौ संयोगः शक्तिः, गुणनिष्पत्तौ त्ववयविनः समवायः शक्तिरिति परोपकारि परतन्त्रं सर्वं शक्तिलक्षणमनुपतति ॥ १२ ॥

सा च स्वकार्यपरतन्त्रावस्था साधनादिना सिद्धस्वभावार्थाभिधायिना शब्देन नाभिधातुं शक्यते; अपि तु यथायथं विभक्त्यादिरस्याः प्रत्यायने समर्थ इत्याह—

स्वशब्दैरभिधाने तु स धर्मो नाभिधीयते।
विभक्त्यादिभिरेवासावुपकारः प्रतीयते ॥१३॥

---

प्रत्यक्षे च आत्ममनःसंयोगः मनःसंयुक्तात्मसमवायश्च साधनम्। सुखादिना सह तु संयुक्तसमवायः सन्निकर्षः साधनमिति।

अयं भावः—आत्ममन-इन्द्रियार्थसम्बन्धात् प्रागुक्तक्रमेण जायमानाद् ज्ञानं यथासम्भवमपरोक्षं परोक्षञ्च निष्पद्यते। द्रव्यगुणादिरूपबाह्यभावविषयकमिति। तत्रात्ममनःसंयोगो मन-इन्द्रियसंयोगश्चैवावान्तरं साधनम्, बाह्यं तु इन्द्रियार्थसंयोगादिः। आन्तरसुखादिविषयकं प्रत्यक्षं तु 'आत्ममनःसंयोगात्' इति कारिकायां क्वचिदित्युक्तम्।

अथवा किमत्र शक्तीनां प्रागुदाहृतानां परिगणनया यद् यत्रोपकरोति, तद् अत्र साधनमिति यथायोगं सर्वे भावाः परस्परं शक्तिशक्तिमन्तः।

तथा हि एकत्वादिकाः परार्धान्ता संख्या महत्त्वदीर्घत्वादीनि परिमाणानि, भावानां पृथग्व्यवहारहेतुभूतं पृथक्त्वम्, संयोगविभागौ क्रिया चेति इमानि रूपिद्रव्यसमवायाच्चाक्षुषाण्युक्तानि। कपालद्वयं घटमारभते इत्यादौ घटरूपावयविनिष्पत्तौ कपालरूपावयवद्वयस्य परस्परं संयोगः कर्तृत्वरूपा शक्तिः साधनम्। 'उत्पन्नो घटः स्वं रूपादिकं गुणं जनयति' इत्यादौ गुणनिष्पत्तौ त्ववयविनो घटादेः रूपादिगुणप्रतियोगिकः समवायः कर्तृत्वरूपा शक्तिः साधनमिति रीत्या परोपकारितया परतन्त्रां सर्वं भावजातं शक्तिलक्षणमनुसरतीति ॥ १२ ॥

सा च भावस्य स्वकार्यपरतन्त्रावस्था क्रियोपकारलक्षणा कर्तृकरणादिकारकशक्तिरूपा सिद्धस्वभावार्थाभिधायिना विभक्तिप्रकृतिभूतेन प्रातिपदिकेन शब्देन साधनादिना=करणादिरूपेण नाभिधातुं शक्यते; अपि तु यथायथं विभक्तितद्धितादिरस्याः प्रत्यायने समर्थ इत्याह—स्वशब्दैरभिधाने त्विति।

अस्यार्थः—स्वशब्दैः=क्रियोपकाररूपस्वशब्दार्थस्य अप्राधान्येन बोधकैः

**स धर्मः, क्रियां प्रति शेषभावः। कारकं साधनमपादानमित्यादिशब्दैः क्रियोपकारोपलक्षितं द्रव्यमभिधीयते प्राधान्येन, न तु क्रियोपकारलक्षणः साधनभावः समुद्भूतोऽस्मात् प्रतीयते।**

**तथा हि—अत्रापि द्रव्यरूपतया साधनमामुखीकरोति। क्रियोपकारलक्षणो धर्मो द्वितीयां (द्वितीयया) प्रतिपाद्यत इति परिगृहीतक्रियोपकारं द्वितीयादिविभक्तिप्रतिपाद्यं वस्त्विति शक्तिर्विभक्तिवाच्या, क्वचित् तद्धितवाच्या। 'शतेन क्रीतः शत्यः शतिकः' इति क्रये साधकतमत्वं प्रत्ययवाच्यम्। 'यत्र' 'तत्र' इत्याधारभावस्त्रल्वाच्यः। 'पयः पयो जरयति, मधु निरीक्षते, दधि समश्नाति' इति प्रातिपदिकादेव शक्तिः प्रतीयते। अन्तरा त्वां च मां च कमण्डलुरित्यन्तराशब्दोऽव्ययोऽधिकरणमाहेत्यादिग्रहणम्॥ १३॥**

---

कारकसाधनापादानादिशब्दैः, तस्याः क्रियोपकारकत्वरूपायाः कारकशक्तेरभिधाने तु=अपि, स धर्मः, क्रियोपकारलक्षणो धर्मः प्राधान्येन समुद्भूतत्वेन च तैर्नाभिधीयते। अतो विभक्त्यादिभिरेव=विभक्तितद्धितप्रातिपदिकाव्ययैरेव असौ उपकारः कारकशक्तिलक्षणो यथायथं शब्दशक्तिस्वभावात् समुद्भूतत्वेन प्रतीयते। तत्र विभक्त्या 'घटं पश्यति' इत्यत्र कर्मत्वशक्तिः प्राधान्येन प्रत्याय्यते। तद्धितेन—'शत्यः शतिकः' इत्यत्र क्रयणनिरूपिता करणत्वशक्तिः। प्रातिपदिकेन—'दधि मधु' इत्यादिस्थले कर्मत्वशक्तिः। अव्ययेन—'यत्र तत्र' इत्यादावधिकरणत्वशक्तिरिति। विभक्तिसमभिव्याहारे तु प्रातिपदिकेन न क्वापि न कदापि प्राधान्येन समुद्भूतत्वेन चाभिधानसम्भव इति।

अयं भावः—स धर्मः क्रियां प्रति शेषभावः=अङ्गत्वम्, उपकारकत्वमिति। कारकम्, साधनम्, अपादानमित्यादिशब्दैः क्रियोपकारोपलक्षितम्=क्वचित् क्रियोपकारकत्वेन दृष्टं द्रव्यमभिधीयते प्राधान्येन, न तु क्रियोपकारलक्षणः साधनभावः सम्यगुद्भूत एभ्यः शब्देभ्यः प्रतीयते।

तथा हि 'घटं पश्यति' इत्यत्रापि वक्ता श्रोतारं प्रति घटस्वरूपं साधनं द्रव्यरूपतया=लिङ्गसंख्याद्यन्वयिरूपेण घटशब्देन विभक्तिप्रकृतिभूतेन अभिमुखीकरोति। दर्शनक्रियोपकारलक्षणो धर्मस्तु तत्र द्वितीयया प्राधान्येन प्रतिपाद्यत इति घटनिष्ठकर्मतानिरूपकं दर्शनमिति बोधे विशेष्यतया परिगृहीतक्रियोपकारं घटादिस्वरूपं साधनं वस्तु प्रकृतिसमभिव्याहृतद्वितीयादिविभक्तिप्रतिपाद्यमिति कर्मत्वादिरूपा कारकशक्तिर्विभक्तिवाच्या। क्वचित् तद्धितवाच्या—'शतेन क्रीतः शत्यः शतिकः' इत्यत्र क्रये साधकतमत्वं सम्यगुद्भूतरूपं प्रत्ययवाच्यम्। 'यत्र तत्र' इत्यादो आधारत्वरूपा शक्तिस्त्रल्रूपतद्धितप्रत्ययवाच्या। 'पयः पयो जरयति, मधु निरीक्षते, दधि समश्नाति' इत्यादौ विभक्तिलुकि प्रातिपदिकादेव कर्तृत्वकर्मत्वादिरूपा शक्तिः प्रतीयते। अन्तरा=मध्ये त्वाञ्च माञ्च कमण्डलुरित्यत्रान्तराशब्दोऽ

कः पुनरसावुपकारलक्षणो धर्मः साधनमित्याह—

**निमित्तभावो भावानामुपकारार्थमाश्रितः ।**
**नतिरावर्जनेत्येवं सिद्धः साधनमिष्यते ॥१४॥**

साध्यस्वभावायां क्रियायामुपकाराय सिद्धस्वभावानां भावानां निमित्तभावो हेतुभावः । 'नतिः' नमनमुपकाराभिमुख्यम्, 'आवर्जनम्' अङ्गभावेन स्वात्मप्रत्यर्पणम्, क्रियोपजननतात्पर्य्यम् । इतिशब्दः प्रकारे । इत्येवमादिभिः शब्दैरभिधीयमानोऽन्योऽपि (जन्योऽपि) सिद्धः निष्पन्नतया प्रतीयमानः । एवंभूतेन वा धर्मेण निश्चितः, न वस्तु सम्भवमात्रेण साधनमित्युच्यते ॥ १४ ॥

एवं मीमांसकवैशेषिकदर्शनेन शक्तिः साधनमित्युपपाद्य स्वदर्शने व्यतिरेकाव्यतिरेकग्रहं त्यजति—

**स तेभ्यो व्यतिरिक्तो वा तेषामात्मैव वा तथा ।**
**व्यतिरेकमुपाश्रित्य साधनत्वेन कल्प्यते ॥१५॥**

---

व्ययोऽधिकरणशक्तिमाहेति कारिकायां विभक्त्यादिभिरित्यत्रादिग्रहणं कृतमिति ॥ १३ ॥

कः पुनरसौ क्रियोपकारेण लक्ष्यमाणो धर्मः साधनमित्याशङ्क्याह—**निमित्तभाव इति ।**

अस्यार्थः—क्रियाया उपकारार्थमाश्रितो भावानां निमित्तभावः = निमित्तत्वम्, नतिः = नमनमिव, उपकाराभिमुख्यम् । आवर्जनम् = अनुकूलत्वसम्पादनमिव अङ्गभावेन स्वात्मप्रत्यर्पणम्, क्रियोपजननतत्परत्वरूपम्—इत्येवमादिभिः शब्दैरभिधीयमानो जन्योऽपि = साध्योऽपि सिद्धः = निष्पन्नतया प्रतीयमानः, नत्यावर्जनादिरूपेण धर्मेण निश्चितो वा स भावानां क्रियोपकारं प्रति निमित्तभावः साधनमित्युच्यते, न वस्तुसम्भवमात्रेण = न वस्तुनः क्रियोपकारं प्रति निमित्तभावस्य सम्भावनामात्रेण; किन्तु उपपत्त्याऽपि तथोच्यत इति ।

अयं भावः—क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मरूपं यत्साध्यत्वं तत्स्वभावायां क्रियायामुपकाराय सिद्धस्वभावानां भावानां निमित्तभावो हेतुभावः । नत्यावर्जनादिभिः शब्दैरभिधीयमानः साध्योऽपि सिद्धतया प्रतीयमानः, नत्यावर्जनादिधर्मैर्निश्चितो वा साधनमित्युच्यते । तत्तत्क्रियोपकारं प्रति ईप्सिततमत्वसाधकतमत्वादिभिस्तत्तद्रूपैर्भावानां निमित्तभावः साधनमिति निष्कर्षः । स च तत्र तत्र भावे तत्तत्क्रियां प्रति नत्यावर्जनादिभिर्धर्मैरनुमीयत इत्युपपत्तिः, न तु सम्भवमात्रमिति ॥ १४ ॥

एवं मीमांसकदर्शने वैशेषिकदर्शने च शक्तिः साधनमित्युक्तम्, शक्तिश्च मीमांसकदर्शनेऽतिरिक्तः पदार्थः, वैशेषिकदर्शने च सप्तस्वेव भावेषु अन्तर्भवति

'सः' इति हेतुभावः शक्त्यपरपर्यायः। "शक्तयः सर्वभावानां कार्यार्थापत्तिगोचराः" इत्यतीन्द्रियाः पदार्थाद् व्यतिरिक्ताः शक्तयः केषाञ्चिद् भवन्तु। सहकारिसमवधानोपकृतो भावः स्वरूपेणैव कार्यजनकः, किमदृष्टशक्तिपरिकल्पनेनेत्यात्मैव भावानां शक्तिः। संसर्गिणः सहकारिणो वार्थान्तरभूताः। स्वकारणपरम्परया हि पदार्थः समुपजातो विशिष्टो यस्तत्तत्सहकारिसम्पर्के तत्तत्कार्यजनने शक्त इति किमदृष्टया व्यतिरिक्तया शक्त्या ? तत्कल्पने तस्या नियमहेतुर्भावस्वभाव एव वक्तव्य इति वरं स एवास्तु। तदत्राव्यतिरेकवादो वास्तु व्यतिरिक्ता वा शक्तयः सन्तु। नास्माकमत्र कश्चिद् ग्रहो व्यतिरेकाव्यतिरेकवादे। शब्दप्रमाणका हि वयम्, यच्छब्द आह तदस्माकं प्रमाणम्। शब्दश्च

---

इत्युपपाद्य व्यतिरेकाव्यतिरेकाग्रहम्=सप्तसु पदार्थेषु अन्तर्भावानन्तर्भावाग्रहं स्वमते त्यजति—स तेभ्य इति।

अस्यार्थः—स तत्तत्क्रियोपकारं प्रति भावानां निमित्तभावः शक्तिरूपः, तेभ्यः=स्वाधारभूतेभ्यो भावेभ्यः, व्यतिरिक्तोऽतीन्द्रियश्च वा=एव, केषाञ्चिन्मते भवतु। वा=अथवा, केषाञ्चिन्मते तेषाम्=भावानामात्मा स्वरूपमेव तथा=शक्तिरूपो भवतु। नास्माकमत्राग्रहः; किन्तु घटस्य दृशिक्रियायां कर्मभाव इन्द्रियादिव्यतिरेकव्यवहारदर्शनेन अभेदेऽपि 'राहोः शिरः, आम्राणां वनम्' इत्यादाविव कल्पितम्, घटपटयोरिव वास्तवं वा व्यतिरेकम्=भेदम्, उपाश्रित्य शक्तिः साधनत्वेन कल्प्यते। तत्र साधनत्वं प्रकल्प्य तेन रूपेण व्यवह्रियत इति।

अयं भावः—कारिकायां स इत्यनेन क्रियोपकारं प्रति हेतुभावः शक्त्यपरपर्यायोऽभिप्रेयते। "शक्तयः सर्वभावानां कार्यार्थापत्तिगोचराः" इति। अस्यार्थः—सर्वेषां भावानां शक्तयः प्रागुक्ताः कार्यार्थापत्तिगोचराः=कार्यान्यथानुपपत्तिरूपार्थापत्तिप्रमाणसिद्धा इति। एतद्वचनबलादतीन्द्रियाः स्वाश्रयपदार्थाद् व्यतिरिक्ताः शक्तयः केषाञ्चिन्मते भवन्तु। सहकारिसन्निधानोपकृतो भावः स्वरूपेणैव कार्यजनकः, किमदृष्टस्वरूपशक्तिपरिकल्पनेनेति भावानां स्वरूपमेव शक्तिः। सहकारिणश्च भावाः प्रधानकारणभावसंसर्गिण इति ततोऽर्थान्तरभूता इति न तस्य शक्तिरूपाः। यतः स्वकारणपरम्परया समुपजातो यो विशिष्टः=विलक्षणः पदार्थः स तत्तत्सहकारिसम्पर्के सति तत्तत्कार्यजनने शक्त इति किमदृष्टया भावस्वरूपव्यतिरिक्तया शक्त्या इति तत्तत्सहकारिसम्पर्कसंस्कृतं भावस्वरूपमेव शक्तिः। भावस्वरूपव्यतिरिक्तशक्तिकल्पने तु तस्या उत्पत्तिस्थितिनियमहेतुर्भावस्वभाव एव वक्तव्य इति वरं स एव शक्तिरस्तु। तदत्राव्यतिरिक्ता व्यतिरिक्ता वा शक्तयः सन्तु, नास्माकमत्राग्रहो व्यतिरेकाव्यतिरेकवादे, शब्दप्रमाणका हि वयम्। यच्छब्द आह तदस्माकं प्रमाणम्। शब्दश्च घटस्य दृशिक्रियायां कर्मभाव इत्यादिव्यवहार-

पदार्थानां व्यतिरिक्तमेव साधनभावं प्रत्याययति, घटस्य दृशिक्रियायां कर्मभाव इत्यादाविति व्यतिरेकोपाश्रयः शब्दनिबन्धनो व्यवहारः। तथा च प्रातिपदिकेन द्रव्येऽभिहिते शक्तौ कृतसम्बन्धा शक्तिः (विभक्तिः) प्रवर्तते ॥ १५ ॥

"यद् यदा यदनुग्राहि तत् तदा तत्र साधनम्" (वा० ३, साधन० १२) इति व्याप्तिमुक्तां क्रियाया अपि साधनत्वेन भाष्यकाराभिमतेन संवादयितुमाह—

सन्दर्शनं प्रार्थनायां व्यवसाये त्वनन्तरा।
व्यवसायस्तथारम्भे साधनत्वाय कल्पते ॥१६॥

पूर्वस्मिन् या क्रिया सैव परस्मिन् साधनं मता।
सन्दर्शने तु चैतन्यं विशिष्टं साधनं विदुः ॥१७॥

---

रूपः पदार्थानां शक्तिरूपं साधनभावं स्वव्यतिरिक्तमेव प्रत्याययति इति कल्पिताकल्पितसाधारणव्यतिरेकोपाश्रयः शाब्दः शक्तिविषयको व्यवहारः। तथा च 'घटं पश्यति' इत्यादौ प्रातिपदिकेन द्रव्येऽभिहिते सति कर्मत्वादिरूपायां शक्तौ कृतसम्बन्धः=स्मृतकृतसम्बन्धा द्वितीयादिविभक्तिः कर्मत्वादिरूपां शक्तिं बोधयितुं प्रवर्तत इति ॥ १५ ॥

"यद् यदा यदनुग्राहि तत् तदा तत्र साधनम्" इत्युक्तामुपकारकत्वसाधनत्वयोर्नियतसामानाधिकरण्यरूपां व्याप्तिं भाष्यकाराभिमतेन क्रियाया अपि पूर्वस्या उत्तरां क्रियां प्रति साधनत्वेन संवादयितुमाह पद्यद्वयेन—सन्दर्शनं प्रार्थनायामिति, पूर्वस्मिन् या क्रियेति च।

अस्यार्थः=फलस्य कर्मविषयस्य भाविनः सम्यक् समन्ताद् वा मनसा दर्शनं सन्दर्शनं फलविषयकः संकल्पः। तत् प्रार्थनायां फलसाधनविषयकाभिलाषरूपायां साधनत्वाय कल्पते, साधनं भवति। व्यवसायः=क्रियाविशेषस्य फलसाधनत्वेन निश्चयः, तत्रानन्तरा अव्यवहिता पूर्वा क्रिया प्रार्थनारूपा साधनम्। व्यवसायश्च आरम्भे फलार्थं मानसप्रवृत्तिरूपे यत्नाख्ये साधनम्। स च भौतिक्यां देहक्रियायां चेष्टारूपायां साधनं भवतीत्यनुक्तमपि संगृह्यते, अनुभवाद् व्यवहारे क्रमदर्शनाच्चेति। 'जानाति, इच्छति, अध्यवस्यति, यतते, चेष्टते' इति हि क्रमो व्यवहारेऽनुभूयत इति। अत्र संदर्शनादीनां क्रियाणां परस्परं व्यतिरेकमुपाश्रित्यैव साध्यसाधनभावोपपत्तिः, नान्यथेति।

द्वितीयस्य त्वयमर्थः—पूर्वस्मिन् पूर्वस्मिन् व्यापारे क्रियारूपे साधनत्वेनोत्तरोत्तरक्रिययाऽपेक्षिते या उत्तरोत्तरभाविनी कर्तव्यत्वात् क्रिया, सैव यदा स्वोत्तरक्रियातः पूर्वकालभाविनी पूर्वस्माद् व्यापारान्निवृत्ता, तदा परस्मिन् उत्तरोत्तर-

सम्प्रदानसंज्ञायाम् "क्रियाग्रहणमपि कर्तव्यम्" ( वा० १।४।३२ ) इत्युक्ते इह कश्चित् कञ्चिदर्थं सम्पश्यति, स दृष्ट्वा प्रार्थनया व्यवसायं करोति, अध्यवसाये प्रारम्भः, प्रारम्भे फलप्राप्तिरिति सन्दर्शनादिभिराप्यमानत्वात् "क्रियापि कृत्रिमं कर्म" इति भाष्य उक्तम्। तत्र साध्यस्वभावाया अपि सन्दर्शनादिक्रियायाः साधनत्वमापेक्षिकम्। सम्यक् समन्ताद् वा दर्शनं सन्दर्शनं फलविषयः सङ्कल्पः। तत् प्रार्थनायां फलोपायविषयेऽभिलाषे साधनत्वाय कल्पते, साधनं भवति। अर्थदर्शने हि सत्यभिलाषोत्पत्तिः। व्यवसायो दृढग्राहिता, क्रियाविशेषस्य फलसाधनत्वेन निश्चयः। तत्र 'अनन्तरा' प्रार्थना साधनम्, अभिलाषे सति निश्चयकरणात्। व्यवसायश्चारम्भक्रियायां मानस्यां प्रवृत्तौ साधनम्, व्यवसायबलेनार्थक्रियाकरणारम्भात्। तया च क्रिययाऽऽप्यमानत्वाद् भौतिकी क्रिया कर्म भवति संक्षेपतः।

---

भाविनि साध्ये व्यापाररूपे साधनं मता इष्टा। 'संदर्शने तु' इत्यत्र 'तु' शब्द इतरस्माद् व्यापाराद् संदर्शने विशेषमवद्योतयति। इतरक्रियासु उत्तरासु पूर्वा क्रिया साधनम्, संदर्शने तु फलाभिलाषयोग्यतारूपक्रियाविशिष्टं चैतन्यं साधनं विदुः शब्दव्याकृतिविद इति विशेषः।

यद्यपि फलाभिलाषस्य इच्छारूपस्य मानसवृत्तिविशेषस्य मनःस्पन्दरूपतया मानसक्रियात्वेऽपि तद्योग्यताया न क्रियात्वम्, तथापि क्रियासम्बन्धात् तत्र क्रियात्वारोप इति हृदयमिति।

अयं भावः—सम्प्रदानसंज्ञासूत्रे कर्मग्रहणवत्—"क्रियाग्रहणमपि कर्तव्यम्" इति वार्त्तिककृतोक्ते—"इह कश्चित् कञ्चिदर्थं संपश्यति, स दृष्ट्वा प्रार्थनया व्यवसायं करोति, अध्यवसाये सति प्रारम्भः, प्रारम्भे सति फलप्राप्तिरिति सन्दर्शनादिभिराप्यमानत्वात् क्रियाऽपि कृत्रिमं कर्म" इति भाष्ये उक्तम्। तत्र साध्यस्वभावाया अपि सन्दर्शनादिक्रियायाः पूर्वकालभावित्वेन भूतत्वरूपं सिद्धत्वमाश्रित्य साधनत्वमापेक्षिकम्। सम्यग् दर्शनम्=प्रमारूपं दर्शनम्, समन्ताद्वा दर्शनम्=सर्वात्मना दर्शनम्, सन्दर्शनम्=प्रार्थ्यफलविषयकः संकल्पः, तत्फलोपायविषयकेऽभिलाषे साधनत्वाय कल्पते=साधनं भवति। अर्थदर्शने सत्येव तत्राभिलाषोत्पत्तेः। व्यवसायो दृढग्राहिता=अर्थस्य दृढं ग्रहणम्, ग्रहणे दृढत्वञ्च संशयासम्भावनाराहित्यम्। तथा च क्रियाविशेषस्य फलसाधनत्वेन निश्चयो व्यवसाय इति फलितम्। तत्र अनन्तरा अव्यवहितपूर्वा क्रिया प्रार्थनारूपा साधनम्, तदर्थविषयकेऽभिलाषे सति इदमेव तत्फलसाधनमिति निश्चयकरणात्। व्यवसायश्चारम्भक्रियायां मानसप्रवृत्तिरूपायां यत्नपदवाच्यायां साधनम्, व्यवसायबलेनार्थक्रियाकरणारम्भात्। तया च क्रियया यत्नरूपया आरम्भपदवाच्ययाऽऽप्यमानत्वाद् भौतिकी=पाञ्चभौतिकशरीरजन्या क्रिया चेष्टारूपा कर्म भवति संक्षेपतः। तथा च—"क्रियाग्रहणमपि

पूर्वस्मिन् पूर्वस्मिन् व्यापारेऽपेक्षिते या क्रिया कर्तव्यत्वात् सैव पूर्वस्मान्निर्वृत्ता पूर्वकालभाविनी क्रिया परस्मिन् उत्तरोत्तरभाविनि साध्ये साधनं भवति, तदात्मलाभे सिद्धत्वेनोपयोगात् ।

तदयमर्थः—पूर्वस्मिन् सन्दर्शने या क्रिया प्रार्थनादिका, सैवोत्तरां प्रति साधनं मता ।

अथ सन्दर्शनक्रियायाः किं साधनमित्याह—"सन्दर्शने तु चैतन्यम्" इति । 'तुः' विशेषद्योतकः । चैतन्यं चिद्रूप आत्मा यो भुङ्क्ते भावान् । विशेषोऽस्य फलाभिलाषयोग्यता । यद्यपि च क्रिया साध्यस्वभावाऽनिष्पन्ना, तथापि निष्ठावस्थायां सिद्धत्वात् साधनम् । साधनशब्देन च शक्तेस्तत्रासमवायेऽपि व्यतिरेकेणाश्रयाद् युक्तः साधनभावः । क्रियायां च क्रियान्तरस्यासमवेतत्वात् सैव क्रियान्तरभावने कर्तुः करणम् ।

---

कर्तव्यम्" इति वार्त्तिकं न कर्तव्यम्, सूत्रघटककर्मग्रहणेनैव क्रियाया अपि कर्मत्वेन ग्रहणोपपत्तेरिति ।

द्वितीयपद्यस्यायं भावः—पूर्वस्मिन्नित्यत्रार्थवशेन वीप्साऽभिप्रेता । तथा च लक्षणयाऽध्याहारेण वा वीप्सार्थः संग्राह्यः । पूर्वस्मिन् पूर्वस्मिन् क्रियारूपे व्यापारे उत्तरक्रियां प्रति साधनत्वेनापेक्षिते सति या उत्तरा कर्तव्यत्वात् क्रिया, सैव पूर्वस्मान्निर्वृत्ता पूर्वकालभाविनी क्रिया परस्मिन् उत्तरोत्तरभाविनि साध्ये साधनं भवति, तस्याः क्रियायाः सिद्धत्वेन उत्तरकालिकक्रियाया आत्मलाभे साधनत्वेनोपयोगात् ।

तदयमर्थः—पूर्वस्मिन् संदर्शने साधने सति या क्रिया प्रार्थनादिका कार्यभूता, सैवोत्तरां प्रति साधनं मता ।

ननु संदर्शनक्रियायाः किं साधनमित्याह—संदर्शने तु चैतन्यमिति । 'तु' शब्दो विशेषद्योतकः । चैतन्यं चिद्रूप आत्मा यो भुङ्क्ते भावान् । विशिष्टं चैतन्यम्—इत्यत्र यो विशेषः, सोऽस्य फलाभिलाषयोग्यता । योग्यता स्वयमक्रियाऽपि अभिलाषरूपमानसक्रियासम्बन्धात् क्रियेव भाति । यद्यपि च क्रिया साध्यस्वभावा इत्यनिष्पन्ना, तथापि निष्ठावस्थायाम्=समाप्त्यवस्थायां सिद्धत्वात् साधनम् । शक्तेः करणत्वरूपायास्तदवस्थक्रियायामसमवायेऽपि क्रियारूपभावव्यतिरेकेण शक्तेराश्रयात्, यद्वा पूर्वापरक्रिययोः परस्परं व्यतिरेकेण भेदेन आश्रयात् साधनशब्देन च उच्यमानः साधनभावः पूर्वस्याः क्रियाया युक्त एव । क्रियायाञ्च क्रियान्तरस्यासमवेतत्वात् फलाश्रयत्वाभावेन कर्मत्वाभावात् सैव=पूर्वा क्रियैव कर्तुः क्रियान्तरभावने करणम् ।

अयमत्र परमार्थः—यदपेक्षया यत् सिद्धं तत् तस्य साधनं निष्पादकं कारकं भवति। तदानीं हि कर्तुः क्रियानिष्पत्तौ करणान्तरं नास्ति। भावौ चांशो भूतेनांशेनाप्यमानत्वात् कर्म भवति। कर्ता हि क्रियया यदीप्सति तत्कर्म। अत्र च क्रियांश एवेप्स्यतेऽपरेण सिद्धेन क्रियांशेनेत्यारम्भेण मानसव्यापारेणाप्यमानत्वाद् भौतिकी क्रिया कर्मेति तेनाभिप्रेयमाणस्य सम्प्रदानत्वं सिद्धम्, 'युद्धाय सन्नह्यते', 'श्राद्धाय निगल्हते' इति। गत्यर्थधातुविषये संदर्शनादीनां भेदाभेदविवक्षा, पंक्त्यादावभेदविवक्षैव, श्राद्धाय निगल्हत इत्यादौ भेदविवक्षैवेति च वक्ष्यते।

तदेवं 'व्यतिरेकमुपाश्रित्य साधनत्वेन कल्पते' इति क्रियाया अपि साध्यसाधनभावो व्यतिरेकाश्रयेणोपकार्योपकारकभावेन भाष्योक्त उदाहृत इति स्थितमेतत्। शक्तिव्यतिरिक्ता क्रियोपकारार्थमाश्रिता साधनमिति सामान्येनोच्यत इति ॥ १६--१७ ॥

---

अयमत्र परमार्थः—यदपेक्षया यत् सिद्धं तत्तस्य साधनम्, निष्पादकं कारकं भवति। तदानीं हि कर्त्तुः क्रियानिष्पत्तौ करणान्तरं नास्ति। भावौ चांशो भूतेनांशेनाप्यमानत्वात् कर्म भवति। कर्त्ता हि क्रियया यदीप्सति तत्कर्म। अत्र चोत्तरः क्रियांश एवेप्स्यते। पूर्वेण सिद्धेन क्रियांशेन करणेन कर्त्ता इत्यारम्भेण मानसव्यापारेणाप्यमानत्वाद् भौतिकी क्रिया पञ्चभूतारब्धदेहचेष्टारूपा कर्मेति। तेनाभिप्रेयमाणस्य सम्प्रदानत्वं सिद्धम्। 'युद्धाय संनह्यते, श्राद्धाय निगल्हते' इति। अत्र हि संहननक्रियया आरम्भाख्यमानसक्रिया कर्मभूतया युद्धमभिप्रैति इति युद्धस्य सम्प्रदानत्वम्। तादृशमानसक्रियाकर्मभूतया अश्राद्धकर्त्तृकुत्सारूपया निगल्हनक्रियया च श्राद्धमभिप्रैति इति श्राद्धस्य सम्प्रदानत्वम्। तत्र गत्यर्थकधातुविषये संदर्शनादीनां गमनान्तानां क्रियाणां परस्परं भेदाभेदविवक्षा। तत्र भेदविवक्षया परस्परं साध्यसाधनभावोपपत्त्या पूर्वया मानसक्रियया आरम्भाख्यया गमनस्य आप्यमानत्वेन कर्मत्वात् तेनाभिप्रेयमाणस्य युद्धस्य सम्प्रदानत्वम्—युद्धाय गच्छति इति। तासां क्रियाणां परस्परमभेदविवक्षायाञ्च साध्यसाधनभावानुपपत्त्या गमनेनाप्यमानस्य युद्धभूम्यादेः कर्मत्वम्, युद्धभूमिं गच्छतीत्यादि। पच्यादौ संदर्शनादीनां पाकान्तानां परस्परमभेदविवक्षैव। तेन तण्डुलं पचतीत्येव प्रयोगः। न त्वत्र कदाचित् कस्यचिदपि सम्प्रदानत्वम्। 'श्राद्धाय निगल्हते' इत्यादौ संदर्शनादीनां कुत्सान्तानां क्रियाणां परस्परं भेदविवक्षैव। तेनारम्भेण कुत्साया आप्यमानत्वेन कर्मत्वाद् तया अभिप्रेयमाणस्य श्राद्धस्य सम्प्रदानत्वमेवेति। एतच्च सर्वमग्रे वक्ष्यते।

तदेवं 'व्यतिरेकमुपाश्रित्य साधनत्वेन कल्पते' इति वक्ष्यमाणया कारिकया क्रियाया अपि साध्यसाधनभावो व्यतिरेकाश्रयेण उपकार्योपकारकभावेन भाष्योक्त

वार्त्तिके कारकमिति संज्ञा साधनमिति संज्ञिनिर्देशेन कर्तव्या। अन्वर्थ-संज्ञाविज्ञानाद् वा साधकस्य लाभ इति। "अन्वर्थमिति चेदकर्तरि कर्तृशब्दानुपपत्तिः" ( वा० १।४।२३ ) इत्युक्तम्। तत्राकर्तरि करणादौ कर्तृशब्दस्य कारकमित्यस्योपपत्तिं समर्थयितुमाह—

निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके।
व्यापारभेदापेक्षायां करणादित्वसम्भवः ।। १८ ।।

सामग्रीसाध्यत्वात् क्रियाणां सर्वे कारकत्वं क्रियानिष्पत्तिविषयमभेदेन प्रतिपद्यन्ते, पचन्त्येत इति।

यदा तु कः कथं पचतीति विवक्षा, तदा प्रधानक्रियानिष्पादने विचित्र-व्यापाराणि कारकाणि यथास्वं व्यापारातिशयवशेन करणादिसंज्ञाः प्रतिलभन्ते, तथा हि साधनान्तरविनियोगव्यापारः कर्ता। निर्वृत्तिविकारप्राप्त्याहितसंस्कारं कर्तुः क्रिययेप्सिततमं कर्म। ज्वलनाद्यनुभवात् कारकान्तरव्यापारैरव्यवहितव्यापारं

---

उदाहृत इति एष सिद्धान्तः। कारकशक्तिव्यतिरिक्ता पूर्वा क्रिया परस्याः क्रियाया उपकारार्थमाश्रिता साधनमिति सामान्येनोच्यत इति स्थितम् ।। १६--१७ ।।

वार्त्तिके—"कारकमिति संज्ञा, साधनमिति संज्ञिनिर्देशेन कर्त्तव्या। अन्वर्थ-संज्ञाविज्ञानाद् वा साधकस्य लाभः" इत्युक्तम्। तदनन्तरम्—"अन्वर्थमिति चेद-कर्तरि कर्तृशब्दानुपपत्तिः" इत्युक्तम्। तत्र अन्वर्थसंज्ञाविज्ञानादित्यस्य 'करोति' इति कारकमित्यन्वर्थसंज्ञाविज्ञानादित्यर्थः। तत्राकर्त्तरि करणादौ कर्तृशब्दस्य कारक-मित्यस्योपपत्तिं समर्थयितुमाह—निष्पत्तिमात्रे कर्तृत्वमिति।

अस्यार्थः—प्रधानक्रियाः खलु कर्मकरणादिसमूहसाध्या भवन्ति इति प्रधान-क्रियानिष्पत्तिमात्रे तादृशनिष्पत्तिसामान्ये कर्तृत्वं सर्वेष्वेव कर्मकरणादिषु कारके-ष्वस्ति। अवान्तरक्रियाविशेषरूपव्यापारभेदापेक्षायां तु कर्मकरणादित्वस्य सम्भव उपपत्तिरिति।

अयं भावः—तत्तद्धातुवाच्यप्रधानीभूततत्तत्क्रियाणां कर्मकरणादिसामग्री-साध्यत्वात् तादृशक्रियानिष्पत्तिविषयकं कारकत्वं सर्वे कर्मकरणादिरूपा भावा अभेदेन = विवेकराहित्येन प्रतिपद्यन्ते = पचन्त्येत इति। एते इत्यस्य कर्मकरणादि-रूपा भावा इत्यर्थः।

यदा तु कः कथं पचतीति जिज्ञासापूर्विका विवक्षा, तदा प्रधानक्रियानिष्पादने विभिन्नव्यापाराणि कारकाणि यथायथं स्वस्वव्यापारातिशयवशेन कर्मकरणादि-संज्ञाः प्रतिलभन्ते। तथा हि—कारकान्तरस्य विनियोगः प्रेरणं व्यापारो यस्य स कर्ता भवति। उत्पत्तिविकृतिप्राप्तिजनितसंस्कारकं कर्त्तुः क्रिययेप्सिततमं कर्म।

करणम्। प्रेरणानुमननानिराकरणव्यापारं कर्मणा सम्बध्यमानं सम्प्रदानम्। अपायमवधिभावोपगमनेन साधयदपादानम्। कर्तृकर्मव्यवहितक्रियाधारकमधिकरणम्। स्वतन्त्रं प्रेषयद्धेतुरिति। सामान्यपूर्वकत्वाच्च विशेषस्यावान्तरव्यापारेऽपि कारकत्वमनुवृत्तमिति करणं कारकमिति सामानाधिकरण्योपपत्तिः। अकारकस्य च विशेषसंज्ञाभावः वृक्षस्य पर्णं पततीति। अनपेक्षिते च कर्तृव्यापारे 'स्थाली पचति, एधाः पचन्ति, असिश्छिनत्ति' इति प्रधानक्रियायामेवैषां कर्तृत्वम्।

सम्प्रदानापादानयोः स्वव्यापारे स्वातन्त्र्यविवक्षा नास्ति। द्वितीयस्य दातुरपगन्तुश्चापेक्षणात्। अत एव "सिद्धं तु प्रतिकारकं क्रियाभेदात्" (वा० १।४।२३) इति प्रधानक्रियार्थेषु यथास्वं कारकव्यापारेषु पचादीनामेव वृत्ति-

---

ज्वलनादिक्रियामनुभवत् कारकान्तरक्रियाभिरव्यवहितक्रियं करणम्। 'मह्यं गां देहि' इत्यादिप्रेरणया दीयमानेन यद् गवादिकर्मणा सम्बध्यते, स्वयं दीयमानस्यानुमत्या दीयमानेन कर्मणा यत् सम्बध्यते, स्वयं दीयमानस्यानिराकरणाद् दीयमानेन कर्मणा यत् सम्बध्यते, तदेतत् त्रयं सम्प्रदानम्। अवधिभावोपगमनेन=स्वयमवधिभावस्वीकृत्या अपायम्=विश्लेषम, साधयदपादानम्। कर्तृकर्मव्यवहितायाः क्रियाया धारकमधिकरणम्। तद्यथा 'कटे शेते चैत्रः, स्थाल्यां तण्डुलं पचति' इति। तदुक्तम्—

कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम्।
उपकुर्वन् क्रियासिद्धौ शास्त्रेऽधिकरणं विदुः॥इति। (वा० ३, साधन० १४८)

अणौ स्वतन्त्रं णौ प्रेषयद्धेतुरिति। देवदत्तो यज्ञदत्तेन पाचयतीति। निर्विशेषं न सामान्यमिति न्यायेन सामान्यपूर्वकत्वाच्च विशेषस्य सामान्यव्यापारे कारकस्य अवान्तरव्यापारेऽपि कारकत्वमनुवृत्तमिति करण कारकमिति सामानाधिकरण्योपपत्तिः। अकारकस्य च कर्तृकर्मादिरूपविशेषसंज्ञाया अभावः। वृक्षस्य पर्णं पततीति। कर्मकरणादीनां व्यापारातिशयेन हेतुना क्रियाफलसिद्धौ कर्तृव्यापारेऽनपेक्षिते च अवान्तरव्यापाराणामेव प्राधान्यमिति तन्निरूपितं कर्तृत्वं कर्मकरणादीनाम्। तद् यथा 'स्थाली पचति, एधाः पचन्ति, असिश्छिनत्ति' इति प्रधानीभूतायां स्वक्रियायामेवैषां कर्तृत्वम्।

सम्प्रदानापादानयोस्तु स्वव्यापारे स्वातन्त्र्यविवक्षा नास्ति, सम्प्रदाने द्वितीयस्य दातुः, अपादाने च द्वितीयस्य अपगन्तुरपेक्षणेन तदसम्भवात्। अत एव=सामान्यक्रियायां कर्मकरणादीनां सर्वेषां कारकत्वादेव "सिद्धं तु प्रतिकारकं क्रियाभेदात्" इति।

अस्यार्थः—सामान्यक्रियायां यानि कारकाणि तेषु प्रतिकारकमवान्तरक्रिया-

र्वर्णिता। तदेतद्भाष्य उक्तम्—"सामान्यभूता क्रिया वर्तते, तस्या निर्वर्तकं कारकम्" ( म० भा० १।४।२३ ) इति ॥ १८ ॥

अत्रैव दृष्टान्तमाह—

**पुत्रस्य जन्मनि यथा पित्रोः कर्तृत्वमुच्यते ।**
**अयमस्यामियं त्वस्मादिति भेदो विवक्षया ॥ १९ ॥**

'पितरौ पुत्रं जनयतः' इत्यविवक्षिते जननव्यापारभेदे जनिक्रियाकर्तृत्वमुभयोः प्रसिद्धम्। कः कथं जनयतीति भेदविवक्षायाम्—'अयं पिता बीजमादधदस्यां मातरि गर्भमाधत्ते। इयं तु माताऽस्मात् पितुः पतद् बीजं धारयन्ती जनिक्रियाकर्तृत्वमनुभवति' इत्यधिकरणत्वं मातुः। कर्तृत्वमपादानत्वं च पितुः, कर्तृत्वं मातुरिति भिद्यते प्रवृत्तिः। सामान्यपूर्वकत्वाच्च विशेषस्य जनिः सामान्ये-

---

भेदात् तु तेषां कर्मत्वकरणत्वादिकं सिद्धमिति। एवं प्रधानक्रियाजनकेषु यथायथं कारकव्यापारेषु धातूनां पचादीनामेव वृत्तिर्वर्णिता। तदेतदुक्तं भाष्ये—"सामान्यभूता क्रिया धातुवाच्या वर्तते, तस्या निर्वर्तकं कारकम्" इति।

अस्यार्थः—अवान्तरक्रियारूपविशेषवती सामान्यभूता क्रिया धातुवाच्या वर्तते, तस्या निर्वर्तकम्, निष्पादकं कर्तृकर्मकरणादिकं सर्वमपि कारकमिति कर्मकरणादीनामपि अन्वर्थं तन्निरूपितकर्तृत्वरूपं कारकत्वमिति ॥ १८ ॥

सामान्यभूता विशेषभूताश्च सर्वा अपि क्रिया धातुवाच्याः। तत्र सामान्यस्य विशेषवत्त्वनियमेन सामान्यभूतक्रियानिरूपितकर्तृत्वरूपं कारकत्वं सर्वेषां कर्मकरणादीनां कारकाणाम्, विशेषक्रियामादाय च कर्मत्वकरणत्वादिकमित्यत्रैव दृष्टान्तमाह—पुत्रस्य जन्मनीति।

अस्यार्थः—यथा 'पितरौ पुत्रं जनयतः' इत्यत्र जननावान्तरभेदेऽविवक्षिते पुत्रस्य जन्मनि जनिक्रियासामान्ये मातापित्रोर्द्वयोरपि कर्तृत्वमुच्यते। अवान्तरक्रियाभेदविवक्षया तु—'अयमस्यां बीजमादधद् गर्भमाधत्ते, इयमस्मात् पतद्बीजं धारयति' इति गर्भाधानरूपायां जन्यावान्तरक्रियायां पितुः कर्तृत्वम्, मातुस्तु अधिकरणत्वम्। बीजपतनक्रियायां तु पितुरपादानत्वम्। बीजधारणक्रियायां तु मातुः कर्तृत्वमिति भेद इति।

अयं भावः—'पितरौ पुत्रं जनयतः' इत्यत्र जननान्तरक्रियाभेदेऽविवक्षिते जनिक्रियासामान्यनिरूपितं कर्तृत्वं मातापित्रोरुभयोरपि प्रसिद्धम्। कः कथं जनयति इत्यवान्तरक्रियाभेदविवक्षायां तु—'अयं पिता स्वबीजमादधद् अस्यां मातरि गर्भमाधत्ते, इयं तु माता अस्मात् पितुः पतद् बीजं धारयन्ती जनिक्रियाकर्तृत्वमनुभवति' इत्यत्र पूर्वस्मिन् वाक्येऽधिकरणत्वं मातुः, कर्तृत्वञ्च पितुः, उत्तरस्मिन्

नात्मलाभवचनो विशेषविषये प्रेषणविषयबीजधारणबीजच्युतिवचनः। यद् वा प्रकृत्यर्थोऽविशिष्टः, प्रत्ययार्थस्तु णिजर्थो जनयतीति प्रेषणादिः, यत्रायं विभागः। साध्यपक्षनिक्षिप्तमपीदं प्रसिद्धत्वान्निदर्शनम् ॥ १९ ॥

तदेवं प्रधानक्रियायामेव सामान्यविशेषभावेन कारकं करणमित्यादि-सामानाधिकरण्यमुपपादितम्। इदानीं गुणक्रियापेक्षया स्वातन्त्र्यं प्रधानक्रिया-पेक्षयाऽस्वातन्त्र्ये सत्यप्यनुगतमिति प्रकारान्तरेण "सामान्यभूता क्रिया वर्तते" (म० भा० १।४।२३) इत्येतद्भाष्यं गमयितुमाह—

गुणक्रियाणां कर्तारः कर्त्रा न्यक्कृतशक्तयः।
न्यक्कृतायामपि सम्पूर्णैः स्वैर्व्यापारैः समन्विताः ॥ २० ॥

करणत्वादिभिर्ज्ञाताः क्रियाभेदानुपातिभिः।
स्वातन्त्र्यमुत्तरं लब्ध्वा प्रधाने यान्ति कर्तृताम् ॥ २१ ॥

---

वाक्ये तु अपादानत्वं पितुः, कर्तृत्वञ्च मातुरिति धर्मभेदेन द्वयोः प्रवृत्तिर्भिद्यते।

तत्रायं निष्कर्षो बोध्यः–विशेषस्य सामान्यपूर्वकत्वात् क्रियासामान्यविवक्षायां जन्धातुरात्मलाभरूपक्रियासामान्यवचनः, क्रियाविशेषविवक्षायां तु प्रेषणविषयबीज-धारणबीजच्युतिवचन इति सामान्यविशेषौ द्वावप्यर्थौ णिच्प्रकृतिभूतजन्धातुवाच्यौ।

यद्वा, णिच्प्रकृत्यर्थोऽविशिष्टः=सामान्यम्, प्रत्ययार्थस्तु णिजर्थो जनयती-त्यत्र प्रेषणादिर्यत्रायं क्रियाविशेषरूपो विभागः। यद्यपि—'धातुवाच्यं क्रियासामान्यं स्वतन्त्रकर्तृकत्वे सति कर्मकरणादिपञ्चककर्तृकं सामग्रीसाध्यत्वात् पितरौ पुत्रं जनयत इत्यत्रैव' इति निदर्शनम्=दृष्टान्तो न संभवति। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे अत्रापि साध्यसन्देहसम्भवात्, तथाप्यत्र साध्यस्य प्रसिद्धत्वात्=अबाधितेन लोकव्यवहारेण निश्चितत्वात्, अत्र साध्यसन्देहाभावेन पक्षतावच्छेदक-सामानाधिकरण्येनैव साध्यसिद्धेरुद्देश्यत्वेनेदं निदर्शनं सम्भवत्येवेति ॥ १९ ॥

तदेवं प्रधानक्रियायामेव सामान्यविशेषभावमाश्रित्य प्रधानक्रियानिरूपितमेव कर्तृत्वमादाय करणं कारकम्, कर्मकारकमित्यादिसामानाधिकरण्यमुपपादितम्। इदानीं कर्मकरणादीनां प्रधानक्रियापेक्षया स्वातन्त्र्याभावेऽपि गुणक्रियापेक्षया स्वातन्त्र्यमप्यनुगतमिति प्रकारान्तरमाश्रित्य—"सामान्यभूता क्रिया वर्तते" इत्येतद् भाष्यम्। सामान्यभूता क्रिया धातुवाच्या वर्तते, तस्या निर्वर्तक यथा कर्तृरूपं कारकम्, तथा कर्मकरणादिकमपि स्वस्वक्रियायां स्वतन्त्राणां तेषां स्वक्रियानिष्पाद्यसामान्यक्रियायामपि स्वातन्त्र्यस्यानुवृत्तेरित्यर्थं गमयितुमाह—गुणक्रियाणामिति, करणत्वादिभिरिति च पद्यद्वयेन।

ज्वलनाद्यवान्तरव्यापाररूपाणां गुणक्रियाणां स्वातन्त्र्यात् सर्वे कर्तारः, प्रधानक्रियाविषये तु कर्त्रा स्वतन्त्रेण विनियोक्त्रा न्यक्कृता तिरस्कृता शक्तिः स्वातन्त्र्यमेषामिति। तेन यथायथं न्यग्भावमस्वातन्त्र्यमापादिताः सन्तो न्यक्तायां न्यग्भावेऽपि स्वव्यापारे स्वातन्त्र्यानपगमाद् अकिञ्चित्करस्य क्रियासिद्धौ हेतुभावानुपपत्तेर्यथास्वं स्वव्यापारानुष्ठानेन प्रधानक्रियाङ्गभावगमनात् कर्तृविनियोगेऽपि यथायथमात्मीयैः सर्वैरेव ज्वलनादिव्यापारैरवियुक्ताः, तत्क्रियाविशेषविषयैः करणादिसंज्ञारूपैरधिगतास्तद्रूपमत्यजन्त एव विनियोगोत्तरकालमपि स्वव्यापारानुष्ठानलक्षणं स्वाधीनत्वमासाद्य स्वस्मिन् क्रियाभेदे स्वतन्त्राः प्रधानक्रियायामेव कर्तृतां कारकत्वं भजन्त इति करणं कारकमित्याद्युपपत्तिरित्यर्थः।

करणादीनि हि कर्तृप्रैषे न्यग्भूतानि स्वव्यापारमनुतिष्ठन्ति तथा भवन्तीति

---

अस्यार्थः—गुणक्रियाणाम्=सामान्यक्रियायां गुणभूतानामवान्तरक्रियाणाम्, कर्त्तारः=सामान्यक्रियायां कर्मकरणादयः, कर्त्रा=सामान्यक्रियाकर्त्रा, न्यक्कृतशक्तयः=तिरस्कृतसामान्यक्रियानिरूपितकर्तृत्वशक्तयः सन्तः, न्यक्तायामपि=तिरस्कृतायामपि सामान्यक्रियानिरूपितस्वकर्तृत्वशक्तौ, यतः सम्पूर्णैः स्वैः=स्वकीयैः, व्यापारैः=अवान्तरव्यापारैः=समन्विताः, अतः क्रियाभेदानुपातिभिः=क्रियाविशेषानुसारिभिः करणत्वादिभिर्ज्ञाताः सन्तः अवान्तरक्रियासु स्वातन्त्र्यं कर्तृत्वं लब्ध्वा, उत्तरम्=सामान्यक्रियाकर्तृकर्तृकविनियोगोत्तरकालमपि प्रधाने=प्रधानक्रियायां कर्तृतां यान्ति, स्वक्रियायां स्वातन्त्र्यस्यैव स्वक्रियानिष्पाद्यप्रधानक्रियायामपि स्वातन्त्र्यरूपत्वादिति।

अयं भावः—ज्वलनाद्यवान्तरव्यापाररूपाणां गुणक्रियाणां सर्वेऽपि करणकर्मादयः कर्तारः, तेषां तासु स्वातन्त्र्यात्। प्रधानक्रियाविषये तु कर्त्रा=स्वतन्त्रेण विनियोक्त्रा न्यक्कृता=तिरस्कृता शक्तिः स्वातन्त्र्यं येषामिति व्युत्पत्त्या कर्त्रा यथायथं न्यग्भावमस्वातन्त्र्यलक्षणमापादिताः सन्तः, न्यक्तायामपि प्रधानक्रियायाम्—न्यग्भावे सञ्जातेऽपि स्वव्यापारे स्वातन्त्र्यस्यानपायात् प्रधानक्रियासिद्धौ अकिञ्चित्करस्य तत्र हेतुभावानुपपत्तेर्यथायथं कर्मकरणादीनां स्वव्यापारानुष्ठानद्वारा प्रधानक्रियाङ्गभावगमनात् कर्तृकृतविनियोगविषयत्वेऽपि यथायथं स्वकीयैः सर्वैरेव ज्वलनादिव्यापारैरवियुक्ताः=तत्तत्क्रियाविशेषविषयैः करणादिसंज्ञारूपैरधिगताः=ज्ञाताः, तद्रूपमत्यजन्त एव कर्तृकृतविनियोगोत्तरकालमपि स्वव्यापारानुष्ठानलक्षणं स्वाधीनत्वमासाद्य स्वकीये क्रियाविशेषे स्वतन्त्राः प्रधानक्रियायामेव=अपि कर्तृताम्=कारकत्वं भजन्त इति रीत्या करणं कारकमित्यादिसामानाधिकरण्योपपत्तिरित्यर्थः।

यतः करणादीनि कर्तृप्रैषे=कर्तृकृते विनियोगे सति। प्रधानक्रियायां न्यग्-

कर्त्रा स्वव्यापारे कर्तृत्वार्थमेवैषां नियोगात्, नियुक्तानां सतां स्वव्यापारे स्वातन्त्र्यमनुभवतां करणादित्वे प्रधानक्रियानिष्पत्तिरित्यविरोधः स्वातन्त्र्यपारतन्त्र्ययोः ।

यदेव हि स्वव्यापारे स्वातन्त्र्यम्, तदेव प्रधानक्रियायां पारतन्त्र्यम्, नान्यत् किञ्चित् । तच्च कर्तृविनियोगे सत्युत्तरकालमेव भवति । पूर्वं तु कर्तृविनियोगादयोग्यतामात्रेण स्वातन्त्र्यमुच्यते ।

इत्थं च करणं कारकमिति विषयभेदोऽपि नास्ति, स्वव्यापारे स्वातन्त्र्यस्यैव प्रधानक्रियायां करणादित्वात् तदेतदुक्तम्—"सिद्धं तु प्रतिकारकं क्रियाभेदात् पचादीनां करणाधिकरणयोः कर्तृभावः" ( वा० १।४।२३ ) इति । तत्र 'अधिश्रयणोदकासेचन " ( वा० १।४।२३ ) इत्यादिना कर्तृकरणाधिकरणानां गुणक्रियामुक्त्वा "अपादानादीनां त्वप्रसिद्धिः" ( वा० १।४।२३ ) इति पुनश्चोदिते "न वा स्वतन्त्रपरतन्त्रत्वात् तयोः पर्यायेण वचनं वचनाश्रया च संज्ञा" ( वा० १।४।२३ ) इति पुनः सिद्धान्तितम् ।

---

भूतानि=कर्त्रा तिरस्कृतानि स्वव्यापारमनुतिष्ठन्ति सन्ति तथा भवन्ति=प्रधानक्रियायां कर्तृरूपाणि भवन्ति इति । कर्त्रा प्रधानक्रियारूपे स्वव्यापारे कर्तृत्वार्थमेव कर्मकरणादीनां विनियोगात्, कर्त्रा नियुक्तानां सतां स्वव्यापारे गुणक्रियारूपे स्वातन्त्र्यमनुभवतां प्रधानक्रियायां करणादित्वे प्रधानक्रियानिष्पत्तिरित्यविरोधः करणादीनां स्वातन्त्र्यपारतन्त्र्ययोः ।

यदेव हि प्रधानक्रियापरतन्त्रे स्वव्यापारे स्वातन्त्र्यम्, तदेव प्रधानक्रियायां पारतन्त्र्यं तेषाम् नान्यत् किञ्चित् । तच्च कर्तृविनियोगे सत्युत्तरकालमेव भवति । कर्तृविनियोगात् पूर्वं तु प्रधानक्रियानिरूपितकर्तृत्वयोग्यतामात्रेण स्वातन्त्र्यमुच्यते ।

इत्थश्च करणं कारकमिति विषयभेदोऽपि=अर्थभेदोऽपि नास्ति, स्वव्यापारे स्वातन्त्र्यस्यैव प्रधानक्रियायां करणादित्वात् । तदेतदुक्तम्—"सिद्धं तु प्रतिकारकं क्रियाभेदात् पचादीनां करणाधिकरणयोः कर्तृभावः" इति ।

अस्यार्थः -प्रतिकारकम्=सर्वेषु कारकेषु प्रत्येकम्, क्रियाभेदात्=स्वस्वव्यापारभेदात्, पचादीनां धातूनां करणादिकरणयोः कर्तृभाव इत्येतद्वस्तुसिद्धं तु सिद्ध एवेति । तत्र "अधिश्रयणोदका सेचना" इत्यादिना कर्तृकरणाधिकरणानां गुणक्रियामुक्त्वा 'अपादानादीनां त्वप्रसिद्धिः" इति=अपादानसम्प्रदानकर्मणां तु गुणक्रियाणामप्रसिद्धिरिति पुनश्चोदिते—"न वा स्वतन्त्रपरतन्त्रत्वात् तयोः पर्यायेण वचनं वचनाश्रया च संज्ञा" इति पुनः सिद्धान्तितम् ।

अस्यार्थः—न वा एष दोषः, कुतः ? कर्तृत्वस्य स्वतन्त्ररूपत्वात्, अपादान-

तथा हि 'वलाहको विद्योतते" इति विद्युदभेदविवक्षायां प्रयोगात् "स्वव्यापारेऽस्त्येवापादानस्य स्वातन्त्र्यम्" इत्याहुः।

ग्राम आगच्छतीति तूक्तेऽर्थान्तरावगमादपादानव्यापारानवसायात् प्रयोगाभावः।

अस्ति तु ग्रामस्यापादानस्य क्रियासिद्धौ कश्चिद् व्यापारोऽवधिभावापत्तिलक्षणः। अन्यथा ग्रामस्य समीपादागच्छतीतिवद् ग्रामादागच्छतीत्यत्रापि ग्रामस्याकारकत्वं स्यात्।

सम्प्रदानस्यापि अनिराकरणात् कर्तुः, प्रेरणानुमतिभ्यां च तत्त्वमित्यस्त्येव स्वव्यापारः। ब्राह्मणो ददातीति तु प्रयोगाभावः, सम्प्रदानत्वे ब्राह्मणस्यास्माद् विवक्षितार्थानवसायात्। अत एवापादानसम्प्रदानव्यापारे धातोर्न वृत्तिः; अपि तु कर्मकरणादिव्यापार एव, 'पच्यते ओदनः स्वयमेव, असिश्छिनत्ति, स्थाली पचति' इत्यादौ।

---

त्वादेश्च परतन्त्रत्वरूपत्वात् तयोः स्वतन्त्रत्वपरतन्त्रत्वयोः 'वलाहको विद्योतते, वलाहकाद् विद्योतते' इत्यादौ विद्युद्भेदाभेदयोर्विवक्षया पर्यायेण वचनम्, स्वतन्त्रत्वपरतन्त्रत्ववचनाश्रया च कर्तृत्वसंज्ञा अपादानत्वादिसंज्ञा चेति।

तथा हि—विद्युद्वलाहकयोरभेदविवक्षायां वलाहको विद्योतत इति प्रयोगादस्त्येवापादानस्यापि वलाहकस्य विद्युद्व्यापाररूपे विद्योतने स्वातन्त्र्यमित्याहुः।

ननु यथा विद्युद्वलाहकयोरभेदविवक्षया वलाहको विद्योतत इति प्रयोगः, तथा ग्रामतद्वास्तव्यलोकानां परस्परभेदविवक्षया ग्राम आगच्छतीति प्रयोगः कुतो नेति चेत्, न, ग्राम आगच्छतीत्युक्ते लोकनिवासभूतभूभागरूपस्यार्थान्तरस्यावगमात्, तत्र चापादानभूते निश्चेष्टेऽप्राणिनि आगमनरूपस्य व्यापारस्यानवसायाद् एतादृशप्रयोगाभावात्।

ननु यदि नास्ति भूभागविशेषरूपे ग्रामे निजः कश्चन व्यापारः, तदा कथं तस्याक्रियस्य कारकत्वम्, कथञ्चापादानत्वमिति चेत्, न, अस्ति तु ग्रामस्यापादानस्य प्रधानक्रियासिद्धौ कश्चिद् व्यापारोऽवधिभावापत्तिलक्षणस्तस्य कारकत्वापादानत्वयोः प्रयोजकः। अन्यथा ग्रामस्य समीपादागच्छतीतिवद् ग्रामादागच्छतीत्यत्रापि ग्रामस्याकारकत्वमनपादानत्वञ्च स्यात्।

विप्रादिरूपस्य सम्प्रदानस्यापि यजमानादिरूपस्य दानकर्तुरनिराकरणात्, अनुमत्यनुमित्या प्रेरणया च सम्प्रदानत्वमित्यस्त्येव प्रेरणारूपः अनुमतिरूपश्च= स्वीकारलक्षणश्च स्वव्यापारः। सम्प्रदानरूपस्य ब्राह्मणस्य स्वव्यापारे प्रागुक्ते स्वातन्त्र्यविवक्षया 'ब्राह्मणो ददाति' इति तु न प्रयोगः, अस्मात् प्रयोगाद् ब्राह्मणनिष्ठसम्प्रदानत्वरूपविवक्षितार्थानवगमात्। कर्तृत्वरूपस्यैवार्थस्यावगमात्।

तदेवं सर्वत्र क्रियाभेदसम्भव इति तत्र स्वातन्त्र्यात् करणादित्वेऽपि कर्तृशब्दः प्रवर्तते ।

यद्येवं करणादित्वेऽपि स्वातन्त्र्यात् कर्तृसंज्ञा स्यात् । नैतदस्ति, कारकाधिकाराल्लब्धे स्वातन्त्र्ये स्वतन्त्रः कर्तेति पुनः श्रुतिः पारतन्त्र्यानाच्छुरितस्वातन्त्र्यप्रतिपत्त्यर्थेति मुख्य एव स्वतन्त्रे कर्तृसंज्ञावतिष्ठते ।

एवमपि परत्वात् करणादीनां करणादिसंज्ञां बाधित्वा कर्तृसंज्ञा प्राप्नोति । नैष दोषः, करणादिसंज्ञानामनवकाशत्वात् ताभिः कर्तृसंज्ञाया अत्र बाधनात् ।

कारकव्यपदेशस्त्वनुवृत्तिसामर्थ्याद् भवति । अथवा स्वातन्त्र्यनिमित्ता कारकसंज्ञेति नात्र बाध्यबाधकभावो निमित्तनिमित्तिनोः ।

---

अत एवापादानसम्प्रदानव्यापारे धातोर्न वृत्तिः; अपि तु 'पच्यते ओदनः स्वयमेव, असिश्छिनत्ति, स्थाली पचति' इत्यादौ कर्मकरणादिव्यापार एव धातोर्वृत्तिः ।

तदेवं सर्वत्र कारकेषु प्रधानक्रियातिरिक्ततत्तत्कारकनिष्ठनिजनिजक्रियाभेदसम्भव इति तत्र स्वातन्त्र्यात् करणादिष्वपि कर्तृशब्दः प्रवर्तते ।

यद्येवं तर्हि करणादित्वसत्त्वेऽपि निजक्रियायां स्वातन्त्र्यात् तेषां कर्तृसंज्ञा स्यात् । नैतदस्ति, "स्वतन्त्रः कर्ता" इत्यत्र स्वतन्त्रग्रहणं न कर्त्तव्यम्, कारकाधिकारेणाधिकृतात् कारकपदात् स्वातन्त्र्यं लप्स्यते । एवं सति क्रियमाणस्य स्वतन्त्रपदस्य पुनः श्रुतिः पारतन्त्र्यानालिङ्गितस्वातन्त्र्यप्रतिपत्त्यर्थेति प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः' इति न्यायमाश्रित्यापि प्रधानक्रियाश्रयीभूते मुख्य एव स्वतन्त्रे कर्तृसंज्ञा व्यवतिष्ठते, न तु करणादिषु निजनिजक्रियानिरूपितस्वातन्त्र्यवत्सु कर्तृपरतन्त्रेषु ।

यत्त्वत्र हेलाराजेनोक्तम्—"एवमपि परत्वात् करणादीनां करणादिसंज्ञां बाधित्वा कर्तृसंज्ञा प्राप्नोति । नैष दोषः, करणादिसंज्ञानामनवकाशत्वात् ताभिः कर्तृसंज्ञाया अत्र बाधनात्" इति ।

अत्रेदं चिन्त्यम्—"मुख्य एव स्वतन्त्रे कर्तृसंज्ञाऽवतिष्ठते" इत्यव्यवहितपूर्वग्रन्थविरोधात् । यत्र तु प्रधानक्रियाया अविवक्षयाऽस्ति स्वक्रियायामेव करणादीनां मुख्यं स्वातन्त्र्यम् , तत्र तु भवत्येव करणादेः कर्तृसंज्ञा । असिश्छिनत्ति, स्थाली पचति, पच्यते ओदनः स्वयमेवेति ।

अस्वातन्त्र्येऽपि करणादीनां कारकत्वव्यपदेशस्तु कारकपदानुवृत्तिसामर्थ्याद् भवति । अथवा तत्तत्क्रियानिरूपितस्वातन्त्र्यनिमित्ताकारकसंज्ञा पारतन्त्र्यनिमित्ता च करणादिसंज्ञा इति नात्र बाध्यबाधकभावो निमित्तनिमित्तिभूतयोः कारककरणसंज्ञयोः ।

१८

अत्र हि स्वातन्त्र्यनिमित्तं पारतन्त्र्यमिति करणादिभावेऽप्यनुमितं स्वातन्त्र्यं निविशत एव कारकसंज्ञेत्यपादानादिसंज्ञाभिः समावेश एवास्याः। यत्र तु पारतन्त्र्यविवक्षानान्तरीयिका स्वातन्त्र्यविवक्षा, तत्र करणं पराणि बाधन्त (ते) इत्युच्यते। तद्यथा धनुषा विध्यतीति।

तत्र हि धनुषः साधकतमत्वाविनाभाविनी स्वातन्त्र्यविवक्षा। स्वतन्त्रः कर्तेत्यत्र च नैवमवधार्यते यत् सर्वास्ववस्थासु स्वतन्त्रमिति; अपि तु यत् स्वतन्त्रमेवेति 'स्थाली पचति' इतीत्यादावपि कर्तृसंज्ञासिद्धिः। अधिकारसामर्थ्याच्च करणाद्यवस्थायामप्यनुमितस्वातन्त्र्यहेतुककारकशब्दप्रवृत्तिरविरुद्धेति सर्वं सुस्थम्।

तदेवं पूर्वं क्रियाया अभेदमाश्रित्य निष्पत्तिमात्रे कर्तृत्वमिति सामान्यभूता क्रिया निष्पत्तिमात्रस्वभावा व्याख्याता। इदानीं तु गुणप्रधानभावेन क्रियाभेदमप्याश्रित्याकर्तरि कर्तृशब्द उपपादितः।

तत्र च सामान्यभूता साध्यत्वेन सर्वेषां साधारणत्वं प्राप्ता प्रधानक्रिया वर्तत इति भाष्यार्थः॥ २०–२१॥

---

अत्र हि स्वातन्त्र्यनिमित्तकं पारतन्त्र्यमिति पारतन्त्र्यनिमित्तककरणादिभावेऽप्यनुमितं स्वातन्त्र्यं निविशत एव=भजत एव कारकसंज्ञेत्यपादानादिसंज्ञाभिः सह समावेश एवास्याः। यत्र तु प्रधानक्रियानिरूपितपारतन्त्र्यविवक्षानान्तरीयिका स्वक्रियानिरूपितस्वातन्त्र्यविवक्षा तत्र करणमनवकाशत्वात् पराणि बाधत इत्युच्यते। तद्यथा धनुषा विध्यतीति।

तत्र हि धनुषः साधकतमत्वाविनाभाविनी स्वातन्त्र्यविवक्षेति करणेनेतरकारकबाधः। स्वतन्त्रः कर्तेत्यत्र च नैवमवधार्यते यत् सर्वास्ववस्थासु स्वतन्त्रमिति; अपि तु यत्प्रकृतधातूपात्तव्यापारे स्वतन्त्रमेव=स्वातन्त्र्येण विवक्षितमेव, न तु पारतन्त्र्यालिङ्गितस्वातन्त्र्यवदिति। स्थाली पचति' इत्यादावपि कर्तृसंज्ञासिद्धिः। अत्र हि पाकानुकूलः स्थालीव्यापार एव प्राधान्येन विवक्षितः, न तु देवदत्तादिरूपकर्तृव्यापार इति। कारकपदाधिकारसामर्थ्याच्च करणाद्यवस्थायामपि पारतन्त्र्यानुमितस्वातन्त्र्यहेतुककारकशब्दप्रवृत्तिरविरुद्धेति सर्वं सुस्थम्।

तदेवं पूर्वं तत्तत्कारकनिष्ठाभिर्विशेषक्रियाभिः सह सामान्यरूपाया निष्पत्तिक्रियाया अभेदमाश्रित्य सर्वेषां कारकाणां निष्पत्तिमात्रे कर्तृत्वमिति सामान्यभूता क्रियानिष्पत्तिमात्रस्वभावा व्याख्याता। इदानीं तु तत्तत्कारकक्रियाणां परस्परं गुणप्रधानभावेन क्रियाभेदमप्याश्रित्याकर्तरि करणादौ कर्तृशब्दः 'स्थाली पचति' इत्यादावुपपादितः।

तत्र च सामान्यभूता साक्षात् परम्परया वा साध्यत्वेन सर्वेषां कारकाणां

स्वव्यापारे स्वतन्त्राणामेव प्रधानव्यापारे पारतन्त्र्ये दृष्टान्तमाह—

यथा राज्ञा नियुक्तेषु योद्धृत्वं योद्धृषु स्थितम् ।
तेषु भृत्तौ तु लभते राजा जयपराजयौ ॥ २२ ॥
तथा कर्त्रा नियुक्तेषु सर्वेष्वेकार्थकारिषु ।
कर्तृत्वं करणादित्वैरुत्तरं न विरुध्यते ॥ २३ ॥

यथा राज्ञा स्वामिना नियुक्तेषु प्रेषितेषु योद्धृत्वं व्यूहविभागादिना योद्धृषु स्थितम् । तेषु युध्यमानेषु च या वृत्तिः शत्रुभङ्गदेशोत्सादनादिका, तस्यां कृतायां राजा जयं पराजयं वाऽपि पर्यायेण लभते ।

एतदाह—योद्धारो योद्धृत्वे कर्तारः. पूर्वं तद्व्यापारस्य तत्रस्थत्वात् । पुना राजनियोगादस्वतन्त्राः । पुनश्च तन्नियोगे निरपेक्षाः स्वतन्त्राः । एवं कर्त्रा

---

साधारणत्वं प्राप्ता प्रधानक्रिया वर्तते । यामादाय तदाश्रयस्य कर्तृसंज्ञा विशेषक्रियामादाय तु तदाश्रयस्य करणादिसंज्ञेति न वा स्वतन्त्रपरतन्त्रत्वादित्यादिपूर्वोक्तभाष्यार्थं इति ॥ २०-२१ ॥

स्वव्यापारे स्वतन्त्राणामेव करणादीनां प्रधानव्यापारे कर्तृपारतन्त्र्ये दृष्टान्तमाह श्लोकद्वयेन—यथा राज्ञेति, तथा कर्त्रेति ।

अस्य पद्यद्वयस्यायमर्थः—यथा राज्ञा नियुक्तेषु योद्धृषु नियोगात् पूर्वं युद्धक्रियायोग्यतारूपं योद्धृत्वम्, नियोगोत्तरकालेऽपि नियोगनिरपेक्षं युध्यतां युद्धक्रियायां स्वातन्त्र्यरूपं योद्धृत्वम्, नियोगकाले तु युध्यतां न युद्धक्रियायां स्वातन्त्र्यरूपं योद्धृत्वम्, नियोगपरतन्त्रत्वात् । अत एव तेषु तु नियोगकाले युध्यमानेषु सत्सु वृत्तौ=निष्पन्नौ जयपराजयौ युद्धफलरूपौ नियोक्ता राजा लभते, न तु योद्धारः । तेषां तदानीं युद्धक्रियायां नियोगपारतन्त्र्येण स्वातन्त्र्याभावात् । तथा कर्त्रा नियुक्तेषु सर्वेषु कारकेषु सम्भूयार्थं पाकादिरूपं फलं कुर्वत्सु सत्सु नियोगोत्तरकालिकं करणादीनां कर्तृत्वं नियोगकालिकैः करणादित्वैर्न विरुध्यत इति ।

अयं भावः—यथा राज्ञा स्वामिना स्वामित्वादेव नियुक्तेषु प्रेषितेषु=युद्धार्थं प्रेरितेषु, योद्धृत्वं व्यूहविभागादिना=युद्धकर्तृत्वं नियोगोत्तरकालिकं योद्धृषु स्थितम् । तेषु युध्यमानेषु च या वृत्तिः=यो व्यापारः, शत्रुविनाशतद्देशोध्वंसनादिकः, तस्मिन् कृते राजा जयं पराजयं वाऽपि पर्यायेण यथायथं लभते ।

एतदुक्तं भवति—योद्धारो योद्धृत्वे=युद्धक्रियायां कर्तारः । राजनियोगात् पूर्वं युद्धक्रियायोग्यतालक्षणस्य तद्व्यापारस्य=योद्धृव्यापारस्य तत्रस्थत्वात्—योद्धृषु स्थितत्वात् । राजनियोगकाले तु तत्र अस्वतन्त्राः=तदुत्तरकाले तन्नियोगे निरपेक्षास्तु स्वतन्त्राः । एवमेव कर्त्रा कारकेण नियुक्तेषु=प्रेरितेषु । अर्थम्=धात्वर्थं

नियुक्तेषु सम्भूयार्थं पाकादिकं कुर्वत्सु भृत्येष्विव करणादिषु यत् स्वातन्त्र्यं जायते नियोगादुत्तरकालभवं तत्करणत्वादिभिर्नियोगकालभाविभिर्न विरुध्यत इत्यर्थः।

तदेवम् 'कारक इति संज्ञानिर्देशश्चेत् संज्ञिनोऽपि निर्देशः। इतरथा ह्यनिष्ट-प्रसङ्गो ग्रामस्य समीपादागच्छतीत्यकारकस्य" (वा० १।४।२३) इत्यादिना साधकं निर्वर्तकं वा संज्ञि निर्देष्टव्यमिति चोदिते, अन्वर्थसंज्ञाविज्ञानाद् विशिष्टसंज्ञि-सिद्धचा परिहृते, अधिकारेणोत्तरत्रानुवृत्तेः कारकसंज्ञायाः करणादिष्वनुपपत्तेः(त्तौ) उद्भावितायां निष्पत्तिमात्रापेक्षया कर्तृत्वाश्रयणेन प्रतिकारकं क्रियाभेदेन गुणक्रियायां स्वातन्त्र्याश्रयणेन च परिहृतमिति प्रकरणार्थः॥ २२-२२॥

अन्वर्थसंज्ञाश्रयेण क्रियानिर्वर्तकस्य साधकत्वेऽ(न)भिहिते हेतुरपि क्रिया-निर्वर्तक इति करण इत्येव सिद्धायां तृतीयायां किमर्थं हेताविति पुर्नविधान-मित्याशङ्क्य हेतोः साधनाद् व्यतिरेकं दर्शयति--

अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते।
आश्रितावधिभावं तु लक्षणे लक्षणं विदुः। २४॥

---

पाकादिकं फलं सम्भूय कुर्वत्सु भृत्येष्विव करणादिषु इतरकारकेषु यत्स्वातन्त्र्यं नियोगोत्तरकालिकं जायते, तन्नियोगकालभाविभिः करणत्वादिभिर्न विरुध्यते, भिन्नकालिकत्वादित्यर्थः।

तदेवम्—"कारक इति संज्ञानिर्देशश्चेत् संज्ञिनोऽपि निर्देशः। इतरथा ह्यनिष्ट-प्रसगः, ग्रामस्य समीपादागच्छतीत्यकारकस्य" इति।

अस्यार्थः—कारकमिति प्रथमया निर्देशे कर्तव्ये 'छन्दोवत्सूत्राणि भवन्ति' इति सिद्धान्तमाश्रित्य सुब्व्यत्ययेन कारके इति सप्तमीत्याश्रित्य कारके इति संज्ञाया निर्देशश्चेत्, संज्ञिनोऽपि निर्देशः कर्तव्यः। अन्यथा हि 'ग्रामस्य समीपादागच्छति' इत्यत्र क्रियान्वयित्वाभावेनाकारकस्य ग्रामस्य अपादानकारकत्वापत्तिरूपोऽनिष्टप्रसङ्ग इति। इत्यादिना—भाष्येण साधकं निर्वर्त्तकं वा कारकसंज्ञायाः संज्ञिनिर्देष्टव्यमिति आशङ्किते "लघ्वर्थं संज्ञाकरणम्" इति सिद्धान्तमनादृत्य कारकमिति महासंज्ञा-करणेन अन्वर्थसंज्ञाविज्ञानात् कारकरूपविशिष्टसंज्ञिसिद्धचा परिहृते, 'कारके' इत्यस्याधिकारत्वाभ्युपगमेन उत्तरत्रानुवृत्तेरस्वातन्त्र्येण करणादिषु कारकसंज्ञाया अनुपपत्तावुद्भावितायां निष्पत्तिमात्रापेक्षया—निष्पत्तिरूपक्रियासामान्यापेक्षया करणादीनां कर्तृत्वरूपकारकत्वाश्रयणेन, प्रतिकारकं स्वस्वक्रियाभेदेन तद्रूपायां गुण-क्रियाया स्वातन्त्र्याश्रयणेन च कारकत्वमिति परिहृतमिति एतत्प्रकरणार्थं इति॥ २२-२३॥

कारके इत्यन्वर्थसंज्ञाश्रयणेन क्रियासाधकस्य साधनत्वेऽभिहिते हेतुरपि क्रिया-साधक इति हेतोरपि करणत्वात् कर्तृकरणयोस्तृतीयेति सूत्रेणैव सिद्धायां तृतीयायां

व्यापारमनाश्रित्य विवक्षितार्थसिद्धौ योग्यतामात्रेण निमित्तत्वेनाश्रीयते यः स हेतुः । स चाकारकविभक्तेः शेषलक्षणाया विषयस्तृतीयायाः सम्बन्धषष्ठी-बाधिकायाः । तद्यथा अध्ययनेन वसतीति । अध्ययनं हेतुः, वासो हेतुमान् । तयोः सम्बन्धे शेषषष्ठ्यां प्राप्तायां हेतौ तृतीया ।

नैयायिकास्त्वाचक्षते—गुणद्रव्ययोर्यन्निमित्तं स हेतुः । स चाकारकविभक्ते-र्विषयः । यत्तु क्रियापदोपात्तायाः क्रियाया निमित्तं तत्कारकमेव । यथा 'विद्यया वसति' इत्यादाविति ।

"अनुर्लक्षणे" ( पा० १।४।८४ ) इत्यत्र हेतोरपि लक्षणशब्देनाख्यानाद-विशेषमनयोः सम्भाव्यापाकरोति—आश्रितेत्यादिना । लक्षणे इत्यत्र लक्षणशब्दो

---

किमर्थं हेताविति पुनर्विधानमित्याशङ्क्य हेतोः साधनाद् भेदं दर्शयति—अना-श्रिते त्विति ।

अस्यार्थः—व्यापारमाश्रित्य क्रियायां निमित्तं साधनम् । व्यापारे अनाश्रिते तु=व्यापारमनाश्रित्य तु सम्बन्धमात्रेण क्रियायां निमित्तं तु हेतुरिष्यते । तत्राद्य-स्योदाहरणम्-बाणेन हत इति । अत्र हननक्रियायां बाणस्य व्यापारः शरीरभेद-नादिः । द्वितीयस्य तूदाहरणम्—अध्ययनेन वसतीति । अत्राध्ययनं वासक्रियायां सम्बन्धमात्रेण फलत्वेन हेतुः । यत्तु लक्षणे=लक्ष्यमाणवस्तुप्रकाशने, आश्रितावधिं-भावम्=अवधिभावमाश्रित्य निमित्तं तल्लक्षणं लक्ष्यते अनेनेति व्युत्पत्त्या ज्ञापक-हेतुं विदुः जानन्ति तज्ज्ञाः, न तु कारकहेतुमिति साधनकारकहेतुज्ञापकहेतूनां भेद इति विवेक इति ।

अयं भावः—व्यापारमनाश्रित्य=व्यापारं विना योग्यतामात्रेण विवक्षितार्थ-सिद्धौ निमित्तत्वेन य आश्रीयते स हेतुः । यथा दण्डेन घट इति । तदुक्तम्—'द्रव्यादि-विषयो हेतुः कारकं नियतक्रियम्' ( वा० प० ३, साधन० २५ ) इति । स चाकारक-विभक्तेः शेषलक्षणायाः सम्बन्धार्थकषष्ठ्या बाधिका या तृतीयाविभक्तिस्तस्या विषयः । तद् यथा—अध्ययनेन वसति इति । अत्राध्ययनं वासं प्रति फलतया हेतुः । वासो हेतुमान् कार्यरूपः । तयोः सम्बन्धे हेतुहेतुमद्भावरूपे शेषषष्ठ्यां प्राप्तायां हेतौ ( पा० २।३।२३ ) तृतीया ।

नैयायिकास्त्वाचक्षते—यद् गुणद्रव्ययोरन्यतरस्योभयस्य वा निमित्तं स हेतुः । स चाकारकविभक्तेर्हेतुतृतीयाया विषयो हेतुत्वविवक्षायाम् । सम्बन्धित्वविवक्षायां तु शेषषष्ठ्यास्तादृश्या विषय इति ।

यत्तु क्रियापदोपात्तायाः क्रियाया व्यापारवन्निमित्तम्, न तु योग्यतामात्रेण, तत्कारकमेव न तु हेतुः, यथा विद्यया वसति इत्यादौ । अत्र हि वासे विद्याया

**भावसाधनः 'लक्षणं विदुः' इत्यत्र तु करणसाधनः। लक्षणे लक्ष्यमाणवस्तुप्रकाशने। यद् 'आश्रितावधिभावम्', आश्रितोऽवधिभावो मर्यादारूप यत्र तल्लक्ष्यतेऽनेनेति लक्षणं ज्ञापकं विदुः जानन्ति तज्ज्ञाः। यत्रावधिभावः प्रज्ञायते हेतावपि तल्लक्षणम्। अत एव 'तुः' विशेषावद्योतकः।**

**अन्ये त्वाहुः—कार्योत्पत्तावुपयोगो हेतोः, प्रत्ययोत्पत्तौ तु लक्षणस्येति। तदसत्। हेतोरपि प्रत्ययोत्पत्तौ व्यापारदर्शनाद् विद्यादेरपि हि वासादिनिश्चये व्यापाराल्लक्ष्यमाणवस्तूपजनने योग्यतामनादृत्यावधित्वेनाश्रितो जनको भवतु मा वा भूदिति लक्षणम्। तद्यथा वृक्षमनु विद्योतते विद्युदिति वृक्षो लक्षणं विद्योतनस्य। वृक्षं प्राप्य विद्योतत इत्यर्थः। कथं तर्ह्यनुर्लक्षण इत्यत्र शाकल्यस्य संहितामनु प्रावर्षद् इत्युदाहरणम्। यावता संहिता नावधिमात्रेण वर्षणस्य परिच्छेदिका प्रतीयते; अपि तु जनकत्वेन। जनकश्च हेतुः, न लक्षणमिति हेतुरेवात्र ज्ञापकत्वसामान्याल्लक्षणशब्देनोक्त इत्यविरोधः।**

---

निमित्तत्वप्रयोजको व्यापारो धनार्जनादिः। अ० यनेन वसति इत्यादौ अध्ययनं तु वासे योग्यतामात्रेण निमित्तम्, न तु व्यापारवदिति स हेतुरेव।

अत एव नैयायिका अप्याहुः—'व्यापारवत् कारणं करणम्' इति। अत्र क्रियायाः क्रियापदोपात्तत्वेन विशेषणात्—'यत् काश्यां वसति तद् धनेन' इत्यत्र तत्पदोपात्तायां वासक्रियायां धनं हेतुरेव, न तु करणम्। अत्र क्रियाया नामपदोपात्तत्वेन सिद्धस्वभावतया द्रव्यत्वात्, द्रव्ये निमित्तस्य च हेतुत्वादिति। अनुलक्षणे इत्यत्र हेतुरपि लक्षणशब्देनाख्यानाद् हेतुलक्षणयोरविशेषम्=अभेदं सम्भाव्य निराकरोति कारिकायाम्—आश्रितावधिभावं त्विति। लक्षणे इत्यत्र लक्षणशब्दो भावसाधनः, तस्य लक्ष्यमाणवस्तुप्रकाशन इत्यर्थः। लक्षणे यद् आश्रितावधिभावम्=आश्रितोऽवधिभावो मर्यादारूपं यत्र तद् लक्ष्यतेऽनेनेति लक्षणं ज्ञापकं विदुर्जानन्ति तज्ज्ञाः। यत्र वस्तुतो हेतुत्वसत्त्वेऽपि अवधिभावः प्रज्ञायते तल्लक्षणमेव, न तु हेतुः। अत एव हेतोर्लक्षणस्य विशेषावद्योतकोऽत्र तुशब्दः प्रयुक्तः।

अन्ये त्वाहुः—हेतोरुपयोगः कार्योत्पत्तौ, लक्षणस्य तूपयोगः प्रत्ययोत्पत्तौ=ज्ञानोत्पत्तौ इति। तदसत्। हेतोरपि प्रत्ययोत्पत्तौ व्यापारदर्शनेन लक्षणतोऽविशेषात्। विद्यादेः करणस्यापि हि वासादिकार्यनिरूपितकरणत्वनिश्चये व्यापारात्। एवञ्च लक्षणस्य लक्ष्यमाणवस्तूत्पत्तौ योग्यतासत्त्वेऽपि तामनादृत्य 'अवधित्वेनाश्रितो लक्षणम्' लक्ष्यमाणवस्तुनिरूपितजनकत्वस्य सत्त्वेऽसत्त्वे वा इति। तद्यथा 'वृक्षमनु विद्योतते विद्युत्' इत्यत्र विद्युद् विद्योतनस्य वृक्षो लक्षणम्। वृक्षं प्राप्य विद्योतत इत्यर्थः। अत्र वृक्षो न विद्युद्विद्योतनस्य जनकः; किन्तु तदवधित्वेनाश्रितो ज्ञापक इति लक्षणम्। कथं तर्ह्यनुर्लक्षणे इत्यत्र 'शाकल्यस्य संहितामनुप्रावर्षत्' इत्यु-

ननु च धूमोऽग्निना प्रसिद्धसाहचर्योऽसकृद्दर्शनावधृतः केवलोऽप्यदृश्यमानमग्निं कारणान्तरप्रभवं लक्षयतीत्येवं लक्षणं स्यात्। संहिता तु प्रथममेव दृश्यमाना, न तस्या असकृद्दर्शनं दर्शनावृत्तिरस्तीति कथमसौ लक्षणं स्यात्?

अत्रोच्यते—यद्यप्येतदस्ति लोके येनासकृल्लक्ष्यते तल्लक्षणमिति, तथापि प्रतीता कार्योदये शक्तिर्यस्य कारणस्य तथाविधमपि कारणं लक्षणं भवति। कार्यस्य हि यः परिच्छेदः, तत्र हेतुभावेन कारणमपि लक्षणम्, कार्यपरिच्छेदकत्वात्। यथैव हि भूयोदर्शनेन गृहीताविनाभावोऽन्यं गमयति तथा हेतुरपि परानपेक्षो जनयन् कार्यस्याव्यभिचारात् परिच्छेदकत्वेन भवति लक्षणम्। यथा मेघोदयो वृष्टेः कारणत्वेन निश्चितोऽसत्यामपि वृष्टौ तत्परिच्छेदक इति लक्षणं भवति यल्लोको मेघोदयं दृष्ट्वा वृष्टिमनुमिनोति।

---

दाहरणं लक्षणस्य। यतः शाकल्यस्य संहितापाठो नावधिमात्रेण वृष्टेः परिच्छेदकः प्रतीयते; किन्तु जनकत्वेनेत्यवधित्वेन परिच्छेदकत्वाभावे कथं संहिताया लक्षणत्वम्? अवधित्वाभावे जनको हि हेतुः, न लक्षणमिति।

अत्रोच्यते—अत्र हेतुरेव लक्षणशब्देनोक्तः, गौण्या वृत्त्या साध्यावसानरूपया हेतुलक्षणयोरुभयोरपि ज्ञापकत्वसामान्यात्। लक्षणस्य लक्ष्यमाणवस्तुज्ञापकत्ववद् हेतोरपि कार्यवस्तुज्ञापकत्वादित्येवमविरोधः।

ननु ययोर्व्यभिचाराभावरूपा व्याप्तिर्गृहीता, तयोर्व्याप्यं लक्षणम्, व्यापकं तु लक्ष्यम्। तद्यथा धूमोऽग्निना सह प्रसिद्धसाहचर्योऽसकृद्दर्शनावधृतः=असकृद्वह्निसामानाधिकरण्यस्याव्यभिचरितस्य दर्शनेन वह्निव्याप्यतयाऽवधृतः केवलोऽपि दृश्यमानोऽदृश्यमानमग्निं कारणान्तरप्रभवम्=स्वकारणातिरिक्तकारणजन्यम्, समानकारणकत्वाभावेऽपि लक्षयतीति रीत्या लक्षणं स्यात्। शाकल्यस्य संहिता तु प्रथममेव दृश्यमाना, तस्यादर्शनावृत्तिरूपमसकृद्दर्शनं नास्ति इति कथमसौ लक्षणं स्यात्।

अत्रोच्यते—यद्यप्येतदस्ति लोके येन व्याप्यतया यद् व्यापकमसकृद् लक्ष्यते=ज्ञाप्यते तल्लक्षणमिति। तथापि यस्य कारणस्य कार्योत्पत्तौ अव्यभिचरिता शक्तिः प्रतीता=अनुमिता, तथाविधमपि कारणं लक्षणं भवत्येव। कारणसत्त्वे हि कार्यस्य योऽव्यभिचरितोत्पत्तिकत्वविषयकः परिच्छेदोऽनुमितिरूपस्तत्र हेतुभावेन कारणमपि लक्षणम्, कार्यपरिच्छेदकत्वात्=कार्यानुमापकत्वात्। यथैव हि, भूयोदर्शनेन=भूयोऽव्यभिचरितसहचारदर्शनेन गृहीतव्याप्तिको हेतुरदृष्टमन्यं साध्यं गमयति, तथा हेतुरपि स्वकार्योत्पत्तौ स्वसाहाय्ये परानपेक्षत्वेन दृष्टः स्वकार्यं जनयन् अव्यभिचारात्=कार्यसमव्याप्यत्वात् कार्यस्य परिच्छेदकत्वेन=अनुमापकत्वेन लक्षणं भवति। यथा मेघोदयो वृष्टेः कारणत्वेन निश्चितोऽसत्यामपि वृष्टौ तत्परिच्छेदक इति वृष्टेर्लक्षणं भवति, यस्माल्लोको मेघोदयं दृष्ट्वा वृष्टिमनुमिनोति।

नन्वन्वयव्यतिरेकबलाद्धेतुत्वं निश्चीयते। यस्मिन् सति यद्भवति अन्यस्मिंस्तु सत्यपि विना तेन न भवति स तस्य हेतुः। अन्वयव्यतिरेकौ चासकृद्दर्शनाद्भवतः सकृद्दर्शनेऽन्वयव्यतिरेकयोरनिश्चयात्। संहिता च यद्यपि कारणं प्रवर्षणस्य, तथापि सकृत्प्रवृत्तेर्न निश्चीयते तत्र कारणत्वम्. तत्कालसन्निहितार्थान्तरादपि कदाचित् कार्योत्पत्तेः सम्भावनात्। एवं च मेघोदयवन्न लक्षणमसौ युज्यते।

अत्र ब्रूमः—सकृद्दर्शनादपि हेतुभावोऽवगम्यते। यस्य हि यज्जनकं न भवति तस्मात् सकृदपि तन्न दृश्यते, यथा शाल्यङ्कुरो यवात्। न च तत्कालभवोऽन्यो जनकोऽन्यदा तस्माददृष्टेः। तथा चाहुः—

यस्मिन् सति भवत्येव यत्ततोऽन्यस्य कल्पने।
तद्धेतुत्वेन सर्वत्र हेतूनामनवस्थितेः॥ इति।

न च काकतालीयन्यायेन तत उत्पत्तिः, अतत्स्वभावस्य सकृदप्यजननात्। संहिता च प्रत्यक्षेण दृश्यते वर्षं जनयन्तीति सकृद्दर्शनादपि हेतुभावोऽत्र निश्चीयते।

किं चागमादपि हेतुत्वमत्र निश्चितं संहितायाः प्रवर्षण इति हेतुरेवात्र ज्ञापकत्वसामान्याल्लक्षणमित्युक्तम्। तदुक्तं भाष्ये –

---

नन्वन्वयव्यतिरेकबलाद् हेतुत्वं निश्चीयते। यत्सत्त्वे यत्सत्त्वम्, अन्यस्मिंस्तु सत्यपि यदभावे यद्भावः, स तस्य हेतुरित्यन्वयव्यतिरेकौ, तौ चासकृद्दर्शनाद् गृह्येते, सकृद्दर्शनेऽन्वयव्यतिरेकयोरनिश्चयात्। शाकल्यसंहिता च यद्यपि प्रवषणस्य कारणम्, तथापि तत्र कारणत्वं न निश्चीयते, कारणत्वनिश्चयहेत्वन्वयव्यतिरेकनिश्चयहेतोरसकृत्कार्यकारणयोः सामानाधिकरण्यनिश्चयस्यात्राभावात्। तत्कालसन्निहितादर्थान्तरदर्शनादपि कदाचित् कार्योत्पत्तेः सम्भावनात्। एवञ्च मेघोदयवन्न लक्षणमसौ युज्यते, असकृत्प्रवृत्तिसकृत्प्रवृत्तिभ्यां विशेषात्।

अत्र ब्रूमः—कार्यकारणयोः सकृत्सामानाधिकरण्यदर्शनादपि अन्वयनिश्चयं विनाऽपि हेतुभावोऽवगम्यते। यस्य हि यज्जनकं न भवति, तस्मात् सकृदपि तन्न दृश्यते, यथा 'शाल्यङ्कुरो यवात्' इति केवलाद् व्यतिरेकादपि सकृत्सामानाधिकरण्यदर्शनेऽपि हेतुभावावगमदर्शनात्। न च तत्कालभवोऽन्यो जनकोऽन्यदा तस्माददृष्टेः। तथा चाहुः—

यस्मिन् सति भवत्येव यत्ततोऽन्यस्य कल्पने।
तद्धेतुत्वेन सर्वत्र हेतूनामनवस्थितेः॥ इति।

अस्यार्थः--यस्मिन् सति यद् भवत्येव ततोऽन्यस्य तद्धेतुत्वेन कल्पने सर्वत्र हेतूनामवस्थितेः=प्रतिष्ठायाः, अभावात्। सकृत्सामानाधिकरण्यदर्शनेऽपि हेतुभावोऽवगम्यत इति।

न च काकतालीयन्यायेन आकस्मिकी ततः=सकृददृष्टात् कार्योत्पत्तिः।

"लक्षणेन हेतुरपि व्याप्तः" ( म० भा० १।४।८४ ) इति ।

लक्षणस्य व्यापकत्वात् । कारणमपि हि कार्यं लक्षयल्लक्षणं भवति, यथा मेघोदयो वृष्टेः । न च व्यभिचारः, समग्रस्याविकलस्य जनकत्वात् । तथा विवेचने चाव्यभिचारात् । प्रापणशक्तिश्च प्रामाण्यं न प्रापणमेवेति ( प्रमापणशक्तिश्च प्रामाण्यं न प्रमापणमेवेति ) न्यायः । यदि तर्हि लक्षशब्देन पदार्थान्तरपरिच्छेदहेतुभावो वर्ण्यते, तदाश्रितावधिभावेत्येतत् कथम् ? आश्रितावधिभावेऽपि लक्षणे परिच्छेदहेतुत्वमेव लक्षणम्, अन्यथा कथमलक्षयल्लक्षणं स्यात् ?

इयांस्तु विशेषो यद् वृक्षोऽवधिभावेन परिच्छेदहेतुः, संहितादेस्त्ववधित्वानाश्रयेऽपि ज्ञापकत्वसामान्याल्लक्षणत्वम् । बहुधा हि लक्षणं भवति ।

---

अतत्स्वभावस्य=तज्जनकत्वस्वभावाभाववतः सकृदप्यजननात्=स्वभावावधारणस्य चासकृद्दर्शनसकृद्दर्शनोभयसाध्यत्वात् । शाकल्यसंहिता च प्रत्यक्षणे वर्षं जनयन्ती दृश्यत इति सकृद् दर्शनादपि हेतुभावोऽत्र निश्चीयते ।

किञ्चाऽत्र संहितायाः प्रवर्षणे हेतुत्वमागमादपि निश्चितमिति संहितारूपो हेतुरेवाऽत्र लक्षणमित्युक्तम्, ज्ञापकत्वरूपधर्मसामान्यात् । तदुक्तं भाष्ये—"लक्षणेन हेतुरपि व्याप्तः" इति ।

अस्यार्थः—लक्षणेन=लक्षणत्वेन धर्मेण न केवलं ज्ञापको हेतुः; अपि तु कारको हेतुरपि व्याप्तः=सम्बद्धः, कार्यपरिच्छेदकत्वादिति । यत्रावधिभावः प्रज्ञायते तल्लक्षणमिति लक्षणलक्षणस्य ज्ञापकहेतुवत् कारकहेतोरपि व्यापकत्वात् । कारणमपि हि कार्यं लक्षयल्लक्षणं भवति । यथा मेघोदयो वृष्टेः । न च क्वचिन्मेघोदयस्य वृष्टिव्यभिचारितया व्याप्यत्वाभावेन न लक्षणत्वमिति वाच्यम्, समग्रस्य=तत्तत्सहकारिकारणसहितस्य अविकलस्य जनकत्वेनाव्यभिचारित्वात् । 'प्रमापणशक्तिश्च प्रामाण्यं न प्रमापणमेव' इति हि न्यायः । अस्ति च क्वचित् सहकारिकारणवैकल्येन मेघोदयस्य वृष्टिव्यभिचारेऽपि तत्र वृष्टिं प्रति प्रमापणशक्तिः, अन्यथा सहकारिकारणसत्त्वेऽपि स तां नानुमापयेत् । अतो मेघोदयो वृष्टिं प्रति प्रमाणत्वेन लक्षणम् । यदि तर्हि पदार्थान्तरपरिच्छेदे हेतुभावो लक्षणशब्देन वर्ण्यते, तदा आश्रितावधिभावेत्येतद् लक्षणलक्षणे विशेषणं कथमिति चेत्, उच्यते—लक्षणे आश्रितावधिभाव इत्येतत् क्वाचित्कम्, न तु सार्वत्रिकम्, अतो न लक्षणघटकम्; अपि तु कस्यचिल्लक्ष्यस्य परिचायकम् । लक्षणं तु लक्ष्यव्यापकत्वेनाव्यभिचारित्वात् परिच्छेदहेतुत्वमेव । अन्यथा कथमलक्षयत्=अपरिच्छिन्नलक्षणं स्यात् ?

इयांस्तु विशेषः—यद् 'वृक्षमनुविद्योतते विद्युत्' इत्यत्र वृक्षोऽवधिभावेन विद्युद्विद्योतनपरिच्छेदहेतुः । संहितादेर्वर्षादिकारणस्य त्ववधित्वानाश्रयत्वेऽपि ज्ञापकत्वसामान्याल्लक्षणत्वं गौणम् । बहुधा हि लक्षणं भवति । क्वचिदवधिभावेन=

क्वचिदवधिभावेन, यथा—विद्योतमानायास्तडितो वनस्पतिरवसायनिबन्धनम् । क्वचित् कारणावच्छेदेन, यथा—धूमो वह्नेः । क्वचित् कार्यपरिच्छेदहेतुतया, यथा—मेघोदयो वृष्टेः । संहितापि चोक्तेन प्रकारेण लक्षणं हेतुश्चेति ।

यद्येवं "लक्षणेत्थं भूताख्यान " "(पा.१०।४।९०)इत्यादिना सामान्यलक्षणेनैव सिद्धायां कर्मप्रवचनीयसंज्ञायाम् "अनुर्लक्षणे" ( पा. १।४।४८ ) इति पुनर्विधानमनर्थकम् ।

तदुक्तम्—"अनुर्लक्षणे वचनानर्थक्यं सामान्यकृतत्वात्" (वा०पा० १।४।८४) इति । अत्रोत्तरम्—

"हेत्वर्थं तु वचनम्" ( वा० पा० १।४।८४ ) ।

इत्युक्तम् । नायमभिधेयपर्यायोऽर्थशब्दः; किन्तु निवृत्तिवचनः । कार्ये च कारणशब्दमुपचर्य हेतुशब्देन हेतुतृतीयोक्ता । बाधोऽपि बाध्यान्नान्येति ( न्नान्य इति ) 'हेतुरेवार्थो निवर्त्यो यस्ये'ति समासः । तेन हेतुसंज्ञाबाधनार्थं पुनः संज्ञाविधानमित्युक्तं भवति ।

ननु च पुनः संज्ञाविधानात् प्रदेशेषु संज्ञिप्रत्ययः स्थिरतरो भवेत् । तृतीया तु कथं बाध्येत ? परत्वेन हि बाधिकासौ । नैतत्, असकृद् विधीयमाना संज्ञा

---

यथा विद्योतमानाया विद्युतो वनस्पतिरवधिभावेनावसायनिमित्तम् । क्वचित् कारणत्वावच्छेदेन=व्यापके व्याप्यकारणत्वग्रहेण । यथा धूमो वह्नेः । क्वचित् कार्यपरिच्छेदहेतुतया—यथा मेघोदयो वृष्टेः । संहिताऽपि चोक्तेन प्रकारेण=वृष्टिरूपकार्यस्य परिच्छेदहेतुतया लक्षणं हेतुश्चेति । यद्येवम् 'लक्षणेत्थं भूताख्यान०" इत्यादिना सामान्यरूपेणैव सिद्धायां कर्मप्रवचनीयसंज्ञायाम् 'अनुर्लक्षणे" इति पुनर्विधानमनर्थकम् । तदुक्तम्—'अनुर्लक्षणे वचनानर्थक्यम्, सामान्यकृतत्वात्' इति । अत्र सामान्यकृतत्वादित्यस्य सामान्यसूत्रेण लक्षणेत्थंभूतेत्यादिना गतार्थत्वादित्यर्थ इति ।

अत्रोत्तरम्—हेत्वर्थं तु वचनमित्युक्तम् । हेतुसंज्ञानिवृत्त्यर्थं तु अनोः पुनः कर्मप्रवचनीयसंज्ञावचनमित्यर्थः । तथा हि—नायमभिधेयपर्यायोऽर्थशब्दः; किन्तु निवृत्तिवचनः । 'अर्थोऽभिधेयैरवस्तुप्रयोजननिवृत्तिषु" इति कोषात् । कार्ये च कारणशब्दमुपचर्य=लक्षणया प्रयुज्य अत्र हेतुशब्देन हेतुतृतीयोक्ता । बाधोऽपि बाध्यान्नान्य इति हेतुरेवार्थो निवर्त्यो यस्येति समासेन हेतुतृतीयाप्रयोजकहेतुसंज्ञाबाधनार्थं पुनः कर्मप्रवचनीयसंज्ञाविधानमित्युक्तं भवति ।

ननु च पुनः कर्मप्रवचनीयसंज्ञाविधानात् प्रदेशेषु संज्ञिप्रत्ययः स्थिरो भवेत्, तृतीया तु न बाध्येत । परत्वेन हि बाधिकाऽसौ कर्मप्रवचनीयसंज्ञाप्रयुक्तद्वितीयायाः ।

'कर्मप्रवचनीययुक्ते द्वितीया' ( पा० २।३।८ ) इत्यादि प्रदेशेषु द्विरुपतिष्ठते। तत्रैकमुपस्थानं द्वितीयार्थम्। यत्तु द्वितीयमुपस्थानमनुर्लक्षणे (पा० १।४।८४) इति तदनर्थकं मा भूदिति हेतुतृतीयां बाधित्वा द्वितीयामेव स्थिरयति।

ननु द्विरुपस्थानात् संज्ञिप्रत्ययो द्विर्भवेत्, न तु द्वितीयाविधिः प्रचयमनुभवति। कार्यार्थी संज्ञा गुणभूता। कार्यं द्वितीयाख्यं प्रधानम्। न च गुणभेदे प्रधानभेदः। किमर्थं तर्हि गुणो द्विरुक्तः ? निरर्थको भवतु, न त्वियता प्रधानमावर्तते। यद्यपि च प्रधानमात्मसंस्कारार्थं गुणदेशं गच्छति यथोद्देशे संज्ञापरिभाषे, तथापि साकांक्षस्य गुणदेशगमनादेकेनैव गुणेन नैराकांक्ष्यादपरगुणदेशं किमर्थं व्रजेदिति एकैव द्वितीया। तां परत्वात् तृतीया बाधेत।

ननु च प्रधानमन्तरेण गुणानां स्वरूपहानिप्रसङ्गाद् गुणान्तरमकृतार्थं प्रधानान्तरमाविर्भावयेत्। यथा अमात्या राजाभावे स्वात्मनो गुणरूपमीहमाना राजान्तरं स्थापयन्ति। तत्स्थापने तेषामात्मरूपं सम्पद्यते। राजानमन्तरेणामात्यादेरभावात्। नैतत् समानम्, राजामात्ययोः परस्परमुपकार्योपकारकभावात्, गुणप्रधानभावनियमस्यैवानिश्चयात्।

---

नैतत् समीचीनम्, असकृद् विधीयमाना हि कर्मप्रवचनीयसंज्ञा "कर्मप्रवचनीययुक्ते द्वितीया" इत्यादिप्रदेशेषु द्विरुपतिष्ठते। तत्रैकमुपस्थानं द्वितीयार्थम्। यत्तु द्वितीयमुपस्थानम् "अनुर्लक्षणे" इति, तदनर्थकं मा भूदिति हेतुतृतीयां बाधित्वा द्वितीयामेव स्थिरयति=दृढीकरोति।

ननु संज्ञाया द्विरुपस्थानात् संज्ञिप्रत्ययो द्विर्भवेत्, न तु द्वितीया विधिः प्रचयम्=वृद्धिमावृत्तिरूपामनुभवति। तथा हि–संज्ञा कार्यार्थी कार्यं प्रति गुणभूता। तस्या कार्यं प्रधानं द्वितीयाख्यम्। न च गुणभेदानुरोधेन प्रधानभेदो युक्तः, लोकेऽदर्शनात्। नहि अमात्यादिप्रकृतभेदानुरोधेन राजभेदो दृष्टः, राजभेदेनैव प्रकृतिभेददर्शनात्। किमर्थं तर्हि प्रकृते संज्ञारूपो गुणो द्विरुक्तः। निरर्थको भवतु, न त्वेतावता द्वितीयाख्यं प्रधानमावर्त्तते। यद्यपि च यथोद्देशे संज्ञापरिभाषे इति पक्षे द्वितीयाख्यं प्रधानमात्मसंस्काराय संज्ञारूपगुणदेशं गच्छति, तथापि स्वसंस्कारेऽङ्गसाकांक्षस्य प्रधानस्य गुणादेशगमनादेकेनैव संज्ञारूपेण गुणेन नैराकाङ्क्ष्यादपरगुणदेशं किमर्थं प्रधानं व्रजेदिति एकैव द्वितीया। तां परत्वात् तृतीया बाधेत इति रीत्या पुनः संज्ञाविधानं व्यर्थमेव।

ननु च प्रधानमन्तरेण गुणानां स्वरूपहानिप्रसङ्ग इति पुनः संज्ञारूपं गुणान्तरमकृतार्थं सत् पुनर्द्वितीयारूपं प्रधानान्तरमाविर्भावयेत्। यथा अमात्या राजाभावेऽनुपपद्यमानं स्वात्मनो राजनिरूपितं गुणस्वरूपं कामयमाना राजान्तरं स्थापयन्ति, तत्स्थापने तेषामात्मरूपं सम्पद्यते, राजानमन्तरेणामात्यादेरभावादिति चेत्,

तथा हि—राजा प्रकृतीर्धर्मशास्त्रोक्तायां मर्यादायां स्थापयति, स्वयं चानुवर्तते। ताः प्रकृतयोऽपि राजानं विनयन्तीति प्रधानभेदादेव तत्र गुणभेदः। एवं तर्हि उपायविधिरेवोपेयविधिर्भवति। तद्यथा 'अनीकस्थो भव' इत्युक्तेऽनीकस्थता हस्तिनामन्नयवसरक्षासम्पादनमिति अनीकस्थताविधानद्वारेण तदेव कार्यं विहितं भवति। एवं कर्मप्रवचनीयसंज्ञाविधानद्वारेण तत्कार्यं द्वितीयाख्यमेव विहितं भवति। तथा च पुनर्द्वितीया विधीयमाना बाधकबाधनार्था जायते, येन नाप्राप्तिन्यायेन। सम्बन्धे हि षष्ठी प्राप्ता, तस्या बाधिका कर्मप्रवचनीयद्वितीया, तस्या अपि हेतुतृतीया, तस्यां प्राप्तायामनुर्लक्षण इति कर्मप्रवचनीयसंज्ञाविधानद्वारेण द्वितीयेति येनाप्राप्तिन्यायेन चतुर्थस्थानप्राप्तोत्कृष्टबला बाधिका। अत्र वचनसामर्थ्यं निबन्धनम्। अन्यथा पुनः संज्ञाविधानमेव द्वितीयाविधानार्थं कथमुपपद्यते ?

---

नैतत् समानम्, राजामात्ययोः परस्परमुपकार्योपकारकभावात्, गुणप्रधानाभावनियमस्यैवानिश्चयात्।

तथा हि–राजा अमात्यादिकाः प्रकृतीर्धर्मशास्त्रोक्तायां स्वस्वमर्यादायां स्थापयति, स्वयश्च धर्मशास्त्रोक्तां मर्यादामनुवर्त्तते। अमात्यादिकाः प्रकृतयोऽपि राजानमुत्पथगामिनं विनयन्ति=शिक्षयन्ते इति रीत्या राजामात्ययोर्द्वयोरपि पर्यायेण प्राधान्यमप्राधान्यञ्चेति प्रधानभेदादेव तत्र गुणभेदः, नान्यथा वैपरीत्येन। प्रकृते तु न गुणप्रधानभावस्यानिश्चयः; किन्तु तस्य निश्चय एव।

तथा हि—द्वितीया विधेयत्वेन प्रधानमेव, कर्मप्रवचनीयसंज्ञा तु तदुपकारकत्वेन गुण एवेति नैतत् संज्ञाभेदेन प्रधानीभूतद्वितीया भेदकल्पनेति। एवं तर्हि उपायविधिरेवोपेयविधिर्भवति। तद्यथा 'अनीकस्थो भव' इत्युक्ते अनीकस्थता=सैन्यस्थितिः पत्तिपुरगहस्तिनामनीकस्थानामन्नयवसरक्षासम्पादनमिति अनीकस्थताविधानद्वारेण तदेव कार्यम्=अन्नयवसरक्षासम्पादनं विहितं भवति। तथा च=तद्वदेव पुनः कर्मप्रवचनीयसंज्ञाविधानद्वारा पुनर्द्वितीया विधीयमाना येन नाप्राप्तिन्यायेन बाधकबाधनार्था जायते।

तथा हि—पूर्वं लक्ष्यलक्षणभावे हेतुहेतुमद्भावे वा सम्बन्धे षष्ठी प्राप्ता, तस्या बाधिका कर्मप्रवचनीयद्वितीया, तस्या अपि हेतुतृतीया, तस्यां प्राप्तायाम् 'अनुर्लक्षणे' इति। कर्मप्रवचनीयसंज्ञाविधानद्वारेण पुनर्द्वितीयेति 'येन नाप्राप्ति'न्यायेन चतुर्थस्थानप्राप्ता उत्कृष्टबलेति हेतुतृतीया बाधिका। अत्र "अनुर्लक्षणे" इति पुनः कर्मप्रवचनीयसंज्ञावचनसामर्थ्यं निबन्धनम्=प्रयोजकम्, अन्यथा पुनः संज्ञाविधानमेव द्वितीयाविधानार्थं नोपपद्येत।

इत्थं च कृत्वा कल्पनान्तरमप्युपपद्यते। गुणभेदेन प्रधानभेद इति वचनेन न्यायस्य बाधनात्। तथा च भाष्यम्—"दृष्टान्तस्यापि पुरुषारम्भो निवर्तको भवति" (म० भा० १।१।८५) इति।

यद्वा, संज्ञाभेदादनुशब्दः संज्ञी भिद्यते। न तु द्वितीयाविधिः प्रधानभूतः, येनान्याय्यो गुणभेदात् प्रधानभेदो भवेत्। संज्ञिभेदाच्च लब्धबलातिशयो द्वितीया-विधिस्तृतीयाविधिं बाधते।

यथोद्देशपक्षे च गुणदेशं गच्छत् प्रधानमेकेन गुणेन कृतार्थं न भवति। तत्प्रकरणगतेन सर्वेणार्थित्वात्, सम्बन्धस्याविशेषात्। अत एव प्रधानान्तरं गुणोऽकृतार्थः कल्पयतु, राजान्तरं यथा प्रकृतयः।

न च वैसादृश्यम्, प्रकृतीनां राजकृतोपकारापेक्षित्वेऽपि सर्वथा गुणत्वात्, तदङ्गभावपरिपोषार्थमेव हि तत्कृतोपकारापेक्षणम्, न तु स्वप्राधान्यार्थम्।

---

इत्थञ्च कृत्वा वचनसामर्थ्यात् कल्पनान्तरमपि प्रधानभेदेन गुणभेद इति-वदुपपद्यते। गुणभेदेन प्रधानभेद इति वचनसामर्थ्यात् कल्पितेन वचनेन येन नाप्राप्तिन्यायस्य बाधनात्। तथा च भाष्यम्—"दृष्टान्तस्यापि पुरुषारम्भो निवर्त्तको भवति" (म० भा० १।१।८५) इति।

प्रकृतसम्बद्धोऽस्यार्थः—लोकदृष्टान्तसिद्धस्यापि येन नाप्राप्तिन्यायस्य प्रकृते पुरुषारम्भः=पुरुषप्रयत्नः 'अनुर्लक्षणे' इति पुनः संज्ञाविधानविषयकः पाणिनिप्रयत्नः, निवर्त्तकः=बाधको भवतीति।

यद्वा, कर्मप्रवचनीयसंज्ञाभेदादनुशब्दः संज्ञी भिद्यते। न तु द्वितीयाविधिः प्रधानभूतः, येनान्याय्यो गुणाभेदात् प्रधानभेदो भवेत्।

एवञ्च कर्मप्रवचनीयसंज्ञाऽत्र विधेयत्वात् प्रधानम्, संज्ञी अनुशब्दस्तु उद्देश्य-त्वाद् गुणभूतमित्येवमत्र प्रधानभेदादेव गुणाभेदः। संज्ञिभेदाच्च लब्धबलातिशयो द्वितीयाविधिस्तृतीयाविधिं बाधते। द्वितीयाविधेर्बलातिशयलाभस्तु एतदुद्देश्यस्य संज्ञाभेदभिन्नस्य संज्ञिनोऽनोर्नवत्वेन हेतुतृतीययाऽन्यत्र लब्धावकाशयाऽनाघ्रातत्वात्।

किञ्च, यथोद्देशपक्षे गुणदेशं गच्छत् प्रधानमेकेन गुणेन कृतार्थं न भवति, तत्प्रकरणगतेन सर्वेण गुणेन तस्यार्थित्वात्। सर्वेण सह तत्सम्बन्धस्याविशेषेण न्याय्यत्वात्। अत एव प्रधानसम्बन्धं विनाऽकृतार्थो गुणः प्रधानान्तरं कल्पयतु, यथाऽमात्यादिकाः प्रकृतयो राजान्तरं कल्पयन्ति।

न च संज्ञायाः प्रकृतीनाञ्च वैसादृश्यम्। तथा हि—राजाऽमात्ययोः परस्परमुपकार्योपकारकभावात् परस्परं गुणत्वं प्रधानत्वञ्च समानम्। अत्र तु

कार्यकालपक्षेऽपि कार्यवाक्ये संज्ञाद्वयं भेदेनैव संज्ञिद्वयमुपस्थापयति। तस्मात् पुनः संज्ञाविधानलक्षणाद् वचनसामर्थ्यात् प्राप्तातिशयः कक्ष्यान्तरप्राप्तो द्वितीयाविधिः परमपि तृतीयाविधिमपसारयतीत्येव युक्तम्।

तथा च वक्ष्यति—

हेतुहेतुमतोर्योगपरिच्छेदेऽनुना कृते।
आरम्भाद् बाध्यते प्राप्ता तृतीया हेतुलक्षणा ॥ इति।
(वा० प० २।२०३)

तदित्थम् "अनुर्लक्षणे" (पा० १।४।८४) इत्यत्र हेतुरेव लक्षणव्यापकत्वं कथयितुं लक्षणंतयोपात्तः सत्यप्यवान्तरभेदेऽनयोः। तथा हि "लक्षणहेत्वोः क्रियायाः" (पा० ३।२।१२६) इत्यत्र लक्षणाद् भेदेन जनकत्वविवक्षया हेतुरुपात्तः। तदेवं निमित्तसामान्यं त्रिधा विभक्तम्—स्वरूपभेदेन क्रियानिर्वर्तकं कारकम्, सामान्येन जनको हेतुः, ज्ञापके (कं) लक्षणमिति ॥ २४ ॥

---

संज्ञाया द्वितीयाविधिं प्रति सर्वथा गुणत्वमेवेति वाच्यम्, प्रकृतीनां राजकृतोपकारापेक्षित्वेऽपि सर्वथा गुणत्वेन संज्ञया समानत्वात्। स्वस्मिन् राजाङ्गभावपरिपोषार्थमेव हि राजकृतोपकारापेक्षणं तासाम्, न तु स्वप्राधान्यार्थम्। कार्यकालपक्षेऽपि संज्ञाद्वयं कार्यवाक्ये=विधेयवाक्ये भेदेनैव संज्ञिद्वयमुपस्थापयति। तस्मात् पुनः संज्ञाविधानलक्षणाद् वचनसामर्थ्यादनवकाशत्वेन प्राप्तबलः कोटघन्तरप्राप्तो द्वितीयाविधिः परमपि तृतीयाविधिमपसारयतीत्येव युक्तम्।

तथा च वक्ष्यति—

हेतुहेतुमतोर्योगपरिच्छेदेऽनुना कृते।
आरम्भाद् बाध्यते प्राप्ता तृतीया हेतुलक्षणा ॥ इति।
(वा० प० २।२०३)

अस्यार्थः—हेतुहेतुमद्भावरूपस्य सम्बन्धस्य परिच्छेदे=निश्चये, अनुना कृते सति प्राप्ता हेतुलक्षणा=हेतुत्वहेतुका तृतीया आरम्भाद्="अनुर्लक्षणे" इति सूत्रारम्भसामर्थ्याद् बाध्यत इति।

तदित्थमनुर्लक्षणे इत्यत्र हेतुरेव हेतुत्वं लक्षणत्वव्यापकत्वं कथयितुं लक्षणतयोपात्तः सत्यपि हेतुलक्षणयोरवान्तरभेदे। तथा हि—"लक्षणहेत्वोः क्रियायाः" इत्यत्र जनकत्वविवक्षया लक्षणाद् भेदेन हेतुरुपात्तः। तदेवं निमित्तसामान्यं त्रिधा विभक्तम्—कर्तृत्वकरणत्वादिलक्षणस्वरूपभेदेन क्रियाजनकं कारकम्, सामान्येन=द्रव्यादिसाधारण्येन कार्यं प्रति योग्यत्वेन वा जनको हेतुः, ज्ञापकं लक्षणमिति ॥२४॥

जनकत्वसाम्येऽपि हेतुसाधनयोर्विषयभेदाद् भेदमाह—

**द्रव्यादिविषयो हेतुः कारकं नियतक्रियम् ।**

द्रव्यगुणक्रियासाधनसमर्थं वस्तु द्रव्यादीनां हेतुः । तद्यथा 'बीजेनाङ्कुरः, धनेन कुलम्, कन्यया शोकः, विद्यया यशः, शिल्पाभ्यासेन नैपुण्यम्, अग्निना पाकः ।' क्रियासाधनसमर्थमप्यनाश्रितव्यापारं हेतुरेवेति पाकादयो यद्यपि क्रियाः,

---

हेतुकारकयोर्जनकत्वसाम्येऽपि विषयभेदात्=कार्यभेदाद् भेदमाह—द्रव्यादिविषय इति ।

अस्यार्थः—द्रव्यादिः=द्रव्यं गुणः क्रिया इति, विषयः कार्यं यस्यासौ हेतुरिष्यते । तद्यथा -'बीजेनाङ्कुरः, धनेन कुलम्' इति द्रव्यरूपं कार्यम् । कन्यया जातया तत्प्रदानादिचिन्ताकृतः शोकः । तदुक्तं कविभिः—

पुत्रीति जाता महतीह चिन्ता कस्मै प्रदेयेति महान् विषादः ।
दत्ता सुखं यास्यति वा न वेति कन्यापितृत्वं खलु नाम कष्टम् ।। इति ।।

विद्यया अनुत्तमया प्रज्ञासमुत्साहपूर्वकानुष्ठिताध्यापनादिक्रियाद्वारकं यश इति । तदाह कौटल्यः—"विद्यातः प्रज्ञा, प्रज्ञातः समुत्साहः" इति ।

कविभिरप्युक्तम्—

विद्वत्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ।। इति ।।

"काव्यं यशसे" इति च ।

"शिल्पाभ्यासेन नैपुण्यम्" इति । तदुक्तं हरिणा ब्रह्मकाण्डे—

परेषामसमाख्येयमभ्यासादेव जायते ।
मणिरूप्यादिविज्ञानं तद्विदां चानुमानिकम् ।।

( वा० प० १।३५ )

इति पद्येनाभ्यासस्य नैपुण्यहेतुत्वम् । अत्र शोकयशोनैपुण्यानि गुणरूपाणि कार्याणि । 'अग्निना पाकः' इत्यत्र क्रियारूपं कार्यम् ।

इदं त्ववधेयम्—अत्र धात्वर्थक्रियानिरूपितहेतुत्वेऽग्नेः करणत्वम् । प्रातिपदिकार्थक्रियानिरूपितनिमित्तत्वे च हेतुत्वमिति । अत्र यद्यप्युभयमपि कार्यं क्रियारूपमेव, तथापि धात्वर्थस्यासत्त्वभूतत्वेन साध्यत्वरूपं क्रियात्वमिति अग्नेस्तन्निरूपितं करणत्वम् । प्रातिपदिकार्थस्य च सत्त्वभूतत्वेन द्रव्यत्वमिति अग्नेस्तन्निरूपितं हेतुत्वमिति । कारकं नियतक्रियमिति । कार्यत्वेन नियता क्रिया यस्य तन्नियतक्रियं कारकमित्यर्थः । क्रियारूपकार्यनियतपूर्ववर्त्ति कारकमिति यावत् । क्वचित् तु कर्त्रन्तरापेक्षः क्रियायां कर्त्ता हेतुरिष्यते, यथा 'यज्ञदत्तो देवदत्तेन पाचयति' इत्यत्र देवदत्तापेक्षं पाकक्रियाकर्तृत्वं यज्ञदत्तस्येति । अत्र प्रयोजकः कर्त्ता शास्त्रे हेतुत्वेनेष्यते ।

तथाप्यत्रोपरतव्यापाराणां सन्निधिमात्रोपकारितया तेजःप्रभृतीनां विवक्षितत्वाद-विद्यमानकरणभावाः,ते हेतुतृयीयया सम्बध्यन्ते। धनेन सह सम्पत्तिक्रियाप्रभावितः कुलस्य सम्बन्धः। कुलस्य हि धनेन प्रसिद्धिरुपजन्यते। तत्र चोपरतव्यापारं धनं योग्यतामात्रात् कुलस्य हेतुरिति शेषषष्ठीबाधिकया हेतुतृतीयया संयुज्यते। कन्यापि जनयितुः शोकस्य जननक्रियाद्वारेण। विद्यापि यशस्विना प्राप्यमाणैव यशसो हेतुरिति प्राप्तिक्रियाजनितोऽत्र शेषसम्बन्धः। एवमन्यत्रापि यथायोग-मभ्यूह्यम्।

'शिल्पाभ्यासेन नैपुण्यम्, अध्ययने वसति' इति गुणक्रियाविषयता हेतोः। क्रियासाधननियतं तु कारकम्। तत्र हि क्रियैव विषयभूता नियता, व्यापाराविष्टत्वं च स्वरूपभेदः।

कस्यचित्तु व्यापाराविष्टस्यापि क्रियाविषयस्य शास्त्रीयं हेतुत्वमुक्तमित्याह—

---

अयश्च प्रयोजकः कर्ता कारकविशेषोऽपि शास्त्रकृत्कल्पितपरिभाषाविषयो हेतुः, न तु रूढ इत्यवधेयमिति।

अयं भावः—द्रव्यगुणक्रियासिद्धौ समर्थं वस्तु द्रव्यादीनां हेतुरिष्यते। तद्यथा—'बीजेनाङ्कुरः, धनेन कुलम्, कन्यया शोकः, विद्यया यशः, शिल्पाभ्यासेन नैपुण्यम्, अग्निना पाकः' इति। अत्र पाकक्रियासाधनसमर्थोऽप्यग्निरनाश्रितस्थालीसन्तपनादि-व्यापारो हेतुरेवेति पाकादयो यद्यपि क्रियाः, तथाप्यत्र निवृत्तव्यापाराणामग्नि-प्रभृतीनां सन्निधिमात्रेणोपकारितया विवक्षितत्वादविद्यमानकरणभावास्ते=अग्न्या-दयो हेतुतृतीयया सम्बध्यन्ते। धनेन सह सम्पत्तिक्रियाकृतः कुलस्य सम्बन्धः। धनेन सम्पद्यमानं कुलमिति। कुलस्य हि धनेन सम्पत्तिपूर्विका प्रसिद्धिरुपजन्यते। तत्र चोपरतसम्पत्तिरूपव्यापारं धनं योग्यतामात्रात् कुलस्य हेतुरिति शेषषष्ठीबाधिकया हेतुतृतीयया संयुज्यते। कन्यापि जनयितुः शोकस्य हेतुर्जननक्रियाद्वारेण कन्यया जातया शोक इति। विद्याऽपि यशस्विना गुरुणा शिष्यं प्रति प्राप्यमाणैव शिष्यसम-वेतस्य यशसो हेतुरिति प्रतिक्रियाजनितोऽत्र विद्यायशसोः शेषसम्बन्धः। विद्यया प्राप्यमाणं यश इति। एवमन्यत्रापि यथासम्भावितत्तत्क्रियाद्वारकः शेषसम्बन्ध ऊह्यः।

शिल्पाभ्यासेन नैपुण्यमित्यत्र गुणरूपकार्यविषयता हेतोः। कार्यकारणयोश्चात्र सम्पत्तिक्रियाद्वारकः शेषसम्बन्धः। शिल्पाभ्यासेन सम्पद्यमानं नैपुण्यमिति। 'अध्यय-नेन वसति' इत्यत्राध्ययनक्रियारूपकार्यविषयता हेतोः। अत्र हेतुहेतुमद्भावरूपः साक्षादेव सम्बन्धः, न तु यत्किञ्चित् क्रियाद्वारकः, अननुभवात्। क्रियासाधने नियतं तु=धात्वर्थक्रियामात्रजनकं तु निमित्तकरणरूपं कारकम्। तत्र हि क्रियैव कार्यत्वेन विषयभूता नियता, व्यापाराविष्टत्वञ्च करणत्वरूपं कारकस्य स्वरूपविशेषः।

**कर्त्ता कर्त्रन्तरापेक्षः क्रियायां हेतुरिष्यते ॥२५॥**

कर्ता प्रयोजकः प्रयोज्यकर्तृशक्तिव्यवधानेन क्रियायामुपयुज्यमानः प्रयोज्यकर्तारं प्रेषयन् "तत्प्रयोजको हेतुश्च" (पा० १।४।५५) इति शास्त्रे हेतुत्वेनेष्यते। वचनात् कारकविशेषोऽपि, न त्वयं रूढो हेतुरित्यर्थः ॥ २५ ॥

इदानीं क्रियाविषयत्वे समानेऽपि हेतुकरणयोर्विशेषमाह—

**क्रियायै करणं तस्य दृष्टः प्रतिनिधिस्तथा।**
**हेत्वर्था तु क्रिया तस्मान्न स प्रतिनिधीयते ॥ २६ ॥**

क्रियासाधनाय प्रकृष्टोपकारकं करणमप्रधानम्, क्रिया तु साध्यस्वभावा प्रधानम्। अत एव प्रधानानुरोधित्वाद् गुणानामसति श्रुते करणे शिष्टैः प्रतिनिधिराचरितः। प्रधानभूता हि क्रिया साध्यत्वाद् योग्यसाधनाक्षेपसमर्थेति

---

कस्यचित्तु व्यापाराविष्टस्यापि क्रियारूपकार्यविषयकस्य शास्त्रीयं हेतुत्वमुक्तम्, "तत्प्रयोजको हेतुश्च" इति सूत्रे इत्याह-कर्त्ता कर्त्रन्तरापेक्ष इति। कर्त्ता= प्रयोजककर्त्ता, प्रयोज्यकर्तृशक्तिद्वारा क्रियायामुपयुज्यमानः प्रयोज्यकर्त्तारं प्रेषयन् तत्प्रयोजको हेतुश्चेति शास्त्रे हेतुत्वेनेष्यते। अत्र सूत्रे चकारवचनात् कर्त्तृरूपकारकविशेषोऽपि, न त्वयं रूढो द्रव्यादिनियतो निर्व्यापारो योग्यतामात्रेण हेतुरित्यर्थ इति ॥२५॥

इदानीं हेतुकरणयोः क्रियारूपकार्यविषयकत्वे समानेऽपि विशेषमाह— **क्रियायै करणमिति।**

अस्यार्थः—क्रियायै करणम्=क्रियासिद्धयर्थं करणमिति क्रिया उपकार्यत्वात् प्रधानम्, करणं तूपकारकत्वादप्रधानमिति तस्य करणस्याप्रधानस्य प्रतिनिधिर्दृष्टः। यथा—'बाणेन हतः' इत्यादौ हननक्रियायाः प्रधानीभूताया न प्रतिनिधिः, करणस्य त्वप्रधानस्य बाणस्य शक्तिप्रासतोमरमुद्गरादिः प्रतिनिधिः। तथा क्रिया तु हेत्वर्था इति क्रियाऽप्रधानम्, हेतुः प्रधानमिति तस्मात् प्रधानत्वात् स हेतुः। न प्रतिनिधीयते=न प्रतिनिधिमान् क्रियते। यथा 'अध्ययनेन वसति' इत्यत्राध्ययनरूपस्वहेतुफलावासक्रिया इत्यध्ययनं प्रधानमिति न तस्य प्रतिनिधिः, वासक्रिया तु अध्ययनसाधनीभूताऽप्रधानमिति तस्याः प्रतिनिधिः क्रियतेऽर्जनभिक्षणादिः। 'अध्ययनेन अर्जयति, अध्ययनेन भिक्षते' इत्यादाविति।

अयं भावः—क्रियासिद्धौ प्रकृष्टोपकारकं करणमप्रधानम्, क्रिया तु साध्यस्वभावा साध्यत्वादेव प्रधानम्। अत एव प्रधानानुरोधित्वाद् गुणानां श्रुते करणेऽविद्यमाने शिष्टैस्तस्य प्रतिनिधिः कृतः। 'यथा दर्भाणां स्थाने शरैः प्रस्तरितव्यम्' इत्यत्र वेदिप्रस्तरणक्रियायां प्रधानीभूतायां दर्भाणां तत्साधनत्वेनाप्रधानानां प्रतिनिधयः शराः कृताः। प्रधानभूता हि क्रिया साध्यत्वेन साधनसाकाङ्क्षत्वाद् योग्य-

साधनसामान्यस्याक्षेपेऽध्यावापार्थं श्रुतः साधनविनियोग इति तदसम्भवेऽपि प्रधानेन क्रियास्वरूपेण यदाक्षिप्तं साधनसामान्यम्, तद्विशेषान्तरेणापि परिपोष्यमाणं न श्रौतार्थत्यागाय प्रभवति। सामान्यस्यापि श्रुतत्वात् तस्य च सर्वविशेषस्वीकारयोग्यत्वादिति प्रतिनिध्युपपत्तिः पूर्वमेव चर्चिता विस्तरतः। अङ्गभ्रेषेऽपि प्रधानानुच्छेदात् प्रधानक्रियास्वरूपसंरक्षणाय शिष्टैः सम्प्रदायपारम्पर्यावगतं सदृशमङ्गं मुख्यबुद्धचैवोपादीयत इति क्रियायाः प्राधान्यस्यैतत् फलम्।

अत एव केचित्—करणशब्दोऽत्र सर्वकारकवचनः, जातौ चैकवचनमिति सर्वाणि कारकाणि गुणभूतानीति गुणस्य प्रतिनिधिरुपपद्यत इति व्याचक्षते। 'अध्ययनेन वसति' इति तु वसतिक्रियाऽऽख्यातात् प्राधान्येनापि प्रतीयमाना वस्तुसामर्थ्यादध्ययनाख्यहेतुपरतन्त्रा। तथा ह्यध्ययनार्थो ममात्र वास इति वक्तारो भवन्ति।

न च गुणानुरोधि प्रधानमित्यध्ययनाभावे वासार्थमन्यत् किञ्चिदत्र प्रतिनिधातुं युक्तम्। अन्यस्य ह्युपादाने तादर्थ्यं क्रियायाः प्रतीयेतेति तदानीं स एव

---

साधनाक्षेपसमर्थेति साधनसामान्यस्याक्षेपेऽध्यावापार्थम्=आक्षिप्ते साधनसामान्येऽधिकस्य साधनविशेषस्य आवापार्थम्=प्रक्षेपार्थम्, प्रवेशार्थमिति यावत्। साधनविनियोगः श्रुतः—दर्भैः प्रस्तरितव्यमित्यर्थक इति तदसम्भवेऽपि=श्रुतसाधनासम्भवेऽपि प्रधानेन क्रियास्वरूपेण यदाक्षिप्तं साधनसामान्यम्, तद्विशेषान्तरेणापि अश्रुतेन परिपोष्यमाणं न श्रौतार्थपरित्यागाय प्रभवति। साधनसामान्यस्यापि श्रुतेन प्रधानीभूतेन क्रियास्वरूपेणाक्षिप्ततया श्रुतप्रायत्वात्। तस्य च सर्वविशेषस्वीकारयोग्यत्वात्=स्वात्मनि सर्वविशेषान्तर्भावनयोग्यत्वादिति प्रतिनिध्युपपत्तिः पूर्वमेव विस्तरतः कृता। अङ्गभ्रेषेऽपि=अङ्गभ्रंशेऽपि=श्रुताङ्गालाभेऽपि प्रधानानुच्छेदात्=प्रधानस्य कर्मणोऽवश्यकार्यत्वात् प्रधानक्रियास्वरूपसंरक्षणाय सम्प्रदायपारम्पर्यावगतं सदृशमङ्गं शिष्टैर्मुख्यबुद्धचैवोपादीयत इति क्रियायाः प्राधान्यस्यैतत् फलम्=श्रुताङ्गाभावे सदृशाङ्गकल्पनरूपं फलम्, प्रधानानुरोधेनैव प्रतिनिधिरूपाङ्गान्तरकल्पनसम्भवात्।

अत एव केचित्—करणशब्दोऽत्र=कारिकायां सर्वकारकवचनो जातौ चैकवचनमिति सर्वाणि कारकाणि क्रियायां गुणभूतानीति गुणस्य प्रतिनिधिरुपपद्यत इति व्याचक्षते। 'अध्ययनेन वसति' इति तु आख्यातात् प्राधान्येन प्रतीयमानापि वसतिक्रिया वस्तुसामर्थ्यात्=वस्तुस्वभावाद् अध्ययनाख्यहेतुपरतन्त्रा। तथा हि—'अध्ययनार्थो ममात्र काश्यां वासः' इति वक्तारो भवन्ति।

न चाध्ययनस्य करणत्वमभ्युपेत्य गुणत्वमेवास्तु गुणानुरोधि=गुणापेक्षं च प्रधानमिति अध्ययनरूपगुणाभावे वासार्थमन्यत् किञ्चिद् भिक्षादिकं प्रतिनिधातुं युक्तम्। अन्यस्य हि प्रतिनिधित्वेनोपादाने तादर्थ्यं क्रियायाः प्रतीयेतेति तदानीं स एव मुख्यो

मुख्यो हेतुः स्यात्। तस्मादध्ययनेन वसतीति नेयं करणतृतीया; अपि तु हेतु-तृतीयैवेति।

न ह्यध्ययनेन व्यापाराविष्टेन वासो निर्वर्त्यते; अपि तु वासस्याध्ययनमेव सम्पाद्यं प्रधानमिति निर्व्यापारं योग्यतामात्रेणोद्देश्यमध्ययनं वासस्य हेतुः। व्यापाराविष्टत्वेऽध्ययनस्य वासं प्रत्यानुकूल्यविवक्षायां भिक्षादिवत् तत्समर्थाचरणात् प्रयोजककर्तृत्वम्, अध्ययनं वासयतीति। तदेवं कारकविषये क्रिया प्रधानम्; कारकं गुणभूतम्। हेतुविषये तु विपर्यय इत्यनेनापि विशेषेण कारकाद्धेतोर्व्यतिरेक उक्तः ॥ २६ ॥

इदानीं चतुर्थीविषयं तादर्थ्यं तृतीयाविषयाद्धेतोर्व्यतिरेचयितुमाह –

प्रातिलोम्यानुलोम्याभ्यां हेतुरर्थस्य साधकः।
तादर्थ्यमानुलोम्येन हेतुत्वानुगतं तु तत्। २७ ॥

---

हेतुः स्यादिति घट्टकुटीप्रभातन्याय आपतेत्। तथा च प्रतिनिधेर्हेतुत्वाभ्युपगमेऽध्ययनस्यैव हेतुत्वं युक्तम्। तस्मादध्ययनेन वसतीति नेयं करणतृतीया; अपि तु हेतुतृतीयैवेति।

न ह्यध्ययनेन व्यापाराविष्टेन वासो निर्वर्त्यते, येनाध्ययनस्य करणत्व स्यात्; अपि तु वासस्याध्ययनमेव सम्पाद्यं प्रधानमिति निर्व्यापारं योग्यतामात्रेणोद्देश्यमध्ययनं वासस्य हेतुः। निर्व्यापारत्वेन करणत्वासम्भवात्। अध्ययनस्य व्यापाराविष्टत्वे तु वासं प्रत्यानुकूल्यविवक्षायां भिक्षादिवत् तत्समर्थाचरणात्=वाससिद्ध्यनुकूलाचरणात् प्रयोजककर्त्तृत्वम्। अध्ययनमत्र वासयतीति। व्यापाराविष्टत्वेन करणत्वम्, तेन गुणत्वं तु अध्ययनस्य अनुपदमेव पूर्वं निराकृतमेव। तदेवं कारकविषये क्रियाप्रधानम्, कारकं गुणभूतम्, हेतुविषये तु हेतुः प्रधानम्, क्रिया तु गुण इत्यनेनापि विशेषेण करणाद् हेतोर्विशेष उक्त इति ॥ २६ ॥

इदानीं चतुर्थीविषयम्=चतुर्थीवाच्यं तादर्थ्यं तृतीयावाच्यात् तादर्थ्यरूपाद्धेतोर्व्यतिरेकेण बोधयितुमाह—प्रातिलोम्यानुलोम्याभ्यामिति।

अस्यार्थः—तृतीयावाच्यो हेतुः प्रातिलोम्यानुलोम्याभ्यामर्थस्य साधकः। यथा कृत्तिकाजलं प्रातिलोम्येन कीटादिसमुत्पादनद्वारा कृष्यपचयरूपस्यार्थस्य साधकम्, स्वातीजलन्तु आनुलोम्येन कृष्युपचयरूपस्यार्थस्य साधकम्। तथा च प्रातिलोम्यानुलोम्याभ्यामर्थसाधकत्वरूपं तादर्थ्यं हेतुत्वरूपं तृतीयावाच्यम्, आनुलोम्येन तु तत्=अर्थस्य साधकत्वम्, हेतुत्वानुगतम्=उपादानत्वरूपहेतुत्वसम्बद्धम्, तादर्थ्यं चतुर्थीवाच्यम्। आनुकूल्येन उपादानत्वरूपहेतुत्वेन कार्यजनकत्वरूपं तादार्थ्यं चतुर्थीवाच्यमिति फलितम्। तद्यथा –'यूपाय दारु, कुण्डलाय हिरण्यम्, अश्वाय घासः' इति। अत एवोक्तम्—"तादर्थ्येन प्रकृतिविकृतिभाव एवेष्यते' (२।१।३६) इति कौमुद्याम्।

अपचीयमानावस्थो हेतुरपचितमेव कार्यं जनयन् प्रातिलोम्योपलक्षितः। तद्यथा जलमातपसंसर्गविशेषोपजातापचितरूपमुत्तरोत्तरापचिततरापचिततमलक्षणावस्थापरम्परासादनानुगुणम्। अर्थान्तरसंसर्गोपचीयमानरूपविशेषं तु कार्यमुपचिततरमेव जनयत् कारणमानुकूल्योपलक्षितो हेतुः। तद्यथा बीजमुदकातपसंयोगाहितविशेषमुच्छूनतरावस्थमङ्कुरप्रसवसमर्थम्।

इत्थं द्विप्रकारो हेतुः। तद्विशेषस्तु तादर्थ्यम्। आनुकूल्यैकनियतमर्थसिद्धिनिमित्तमानुकूल्येन यद्धेतुत्वं जनकत्वम्, तदनुगतं हेतुविशेषरूपं तादर्थ्यं कार्यकारणसम्बन्धस्योद्भूतरूपमित्यर्थः। तत्र चतुर्थी कुण्डलाय हिरण्यमिति। 'तस्मा इदं तदर्थम्' इति इदमोपकारकस्य निर्देशः, तच्छब्देनोपकार्यस्य। समासाद् भावप्रत्ययेन सम्बन्धस्योद्भूतरूपाभिधानम्। तत्र चोत्तरपदार्थस्य कारणरूपस्य प्रज्ञापनीयत्वेन प्राधान्यात् तच्छब्दवाच्ये गुणे सम्बन्धः पदं बध्नाति। तत्र ह्यसावुद्भूत इति तादर्थ्ये कारणस्योपकारित्वे गम्यमाने कार्यकारणसम्बन्धोद्भवे चतुर्थी विधीय-

---

अयं भावः—अपचीयमानावस्थो हेतुरपचितमेव कार्यं जनयन् प्रातिलोम्योपलक्षितः। तद्यथा—जलमातपसंसर्गविशेषोपजातापचितरूपं स्वस्योत्तरोत्तरापचिततरापचिततमरूपावस्थापरम्पराप्रापणानुगुणम्। पूर्ववातवृष्टयादिरूपपदार्थान्तरसंसर्गोपचीयमानरूपविशेषं तु जलरूपं कारणमुपचिततरमेव कार्यं जनयदानुकूल्योपलक्षितो हेतुः। तद्यथा बीजमुदकातपसंयोगाहितविशेषमुच्छूनतरावस्थमङ्कुरप्रसवसमर्थम्।

इत्थं द्विप्रकारं हेतुसामान्यं प्रातिलोम्यानुलोम्याभ्याम्, निमित्तोपादानत्वाभ्याञ्च। तद्विशेषस्तु=हेतुविशेषस्तु तादर्थ्यम्। तदपि द्विविधम्—निमित्तकारणत्वरूपमाद्यम्, द्वितीयं तु उपादानकारणत्वरूपं चतुर्थीवाच्यं कारिकोत्तरार्धेनाह—तादर्थ्यमानुलोम्येनेति। आनुकूल्यैकनियतम्=प्रातिकूल्यपरिहारेणानुकूल्यमात्रस्वभावम्। आनुकूल्येन अर्थसिद्धिनिमित्तं यद् हेतुत्वं जनकत्वम्, तदनुगतं हेतुविशेषरूपम् उपादानकारणत्वरूपं तादर्थ्यं कार्यकारणयोः सम्बन्धस्योद्भूतं रूपमित्यर्थः। तत्र चतुर्थी—'कुण्डलाय हिरण्यम्' इति। 'तस्मा इदं तदर्थम्' इति व्युत्पत्तिवाक्ये उपकारकस्येदमा निर्देशः। उपकार्यस्य तु तच्छब्देन स इति। तदर्थमिति समासाद् ब्राह्मणादिष्यञा भावप्रत्ययेन उपकार्योपकारकभावरूपस्य सम्बन्धस्योद्भूतरूपाभिधानम्। तादृशसम्बन्धस्यैवात्र भावरूपत्वात्। तत्र चार्थपदरूपोत्तरपदार्थस्य कारणरूपस्य प्रज्ञापनीयत्वेन प्राधान्यात् पूर्वपदरूपतच्छब्दवाच्ये कार्यरूपे गुणे अनुयोगितया सम्बन्धः पदं बध्नाति। तत्र हि=कार्यरूपे गुणे हि असौ=उपकार्योपकारकभावरूपः सम्बन्ध उद्भूत इति तादर्थ्यघटकतया कारणस्य कार्यं प्रति उपकारित्वे गम्यमाने कार्यकारणसम्बन्धोद्भव उद्भूते कार्यकारणसम्बन्धे चतुर्थी विधीयमाना कार्यवाचिन एव भवति, तत्रैव कार्य-

माना कार्यवाचिन एव भवति, तथैव(तयैव) कारणगतस्यापि सम्बन्धस्य निर्भोगात् कारणवचनात् तृतीया न भवति। कार्यमेव प्रयोजकतया परिणतं तदर्थमित्युच्यत इत्ययुक्तमभिधानम्। उत्तरपदार्थप्रधानत्वात् तदर्थशब्दस्य कारणवचनता न्याय्या यतः। अत एव तु हेतुत्वानुगतं तादर्थ्यम्। कारणविशेषः, न कार्यम्।

'यदर्थमस्य गमनम्, तदनेन साधितम्' इत्यत्र तूपसर्जनस्यैव यच्छब्देनोद्दिष्टस्य समानाधिकरणेन तच्छब्देन निर्देशात् सर्वनामार्थः कार्ययोगी युक्तः। न त्वेतावतेह सर्वनामार्थस्य प्राधान्यम्, उत्तरपदार्थे गुणत्वात्॥ २७॥

तदेवं कारकं हेतुर्लक्षणं तादर्थ्यमिति निमित्तत्वसाम्येऽपि प्रविभक्तस्वरूप विषयाः पदार्था इति न तत्र लक्षणसाङ्कर्यप्रसङ्ग इत्यानुषङ्गिकेऽर्थे निर्णीते प्रस्तुतमेव कारकविषयकं विचारं प्रस्तावयितुमाह –

---

कारणसम्बन्धस्योद्भूतत्वात्। कारणे च निलीनकार्यकेण तस्य सम्बन्धस्योद्भव इति। तयैव च चतुर्थ्या कार्यगतसम्बन्धवत् कारणगतस्यापि सम्बन्धस्य निर्भोगात्=निर्भुज्यमानत्वात्=निरुच्यमानत्वात् कारणवाचिपदात् तृतीया न भवति। कार्यमेव स्वोत्पत्तौ कारणप्रयोजकतया परिणतं तदर्थमित्युच्यत इत्यभिधानं तु अयुक्तम्, यत उत्तरपदार्थप्रधानत्वाच्चतुर्थीतत्पुरुषरूपस्य तदर्थशब्दस्य कारणवचनता न्याय्या। अत एव हेतुत्वानुगतं हेतुत्वसमानाधिकरणं तादर्थ्यमित्युक्तं प्रकृतकारिकोत्तरार्धे।

न च कार्यं कारणस्यैवावस्थाविशेषः। यथा 'मृदः कम्बुग्रीवाद्यवस्था पृथुबुध्नोदरत्वाद्यवस्था च घट इति, तथा च कार्यवाचिन एव हेत्वर्थे तृतीयां बाधित्वा वचनारम्भसामर्थ्यात् चतुर्थीति रीतिः साध्वी। कार्यकारणयोराकारप्रकारभेदस्यानुभवसिद्धत्वेनैक्यविरोधात्। अत एव नैयायिकानामसत्कार्यवादोऽप्युपपद्यते।

न च यथा— यदर्थमस्य गमनम्, तत्कार्यमनेन साधितम्' इत्यत्र उपसर्जनस्यापि यत्पदार्थस्याग्रे तत्पदेन निर्दिष्टस्य विधेययोगः। तथा तादर्थ्यपदे उपसर्जनस्यापि तत्पदार्थस्य कार्यस्य चतुर्थीरूपविधेययोग इति सरणिः साध्वी। 'यदर्थमस्य गमनम्, तदनेन साधितम्' इत्यत्र उपसर्जनस्यैव यच्छब्देनोद्दिष्टस्य समानाधिकरणेन=समानार्थकेन तच्छब्देन प्राधान्येन निर्देशादुपसर्जनीभूतोऽपि यच्छब्दार्थरूपः सर्वनामार्थः कार्ययोगी=विधेयान्वयी युक्तः। न त्वेतावता=सर्वनामार्थत्वेन तादर्थ्यपदार्थघटकस्य कार्यरूपस्य तत्पदार्थस्य सर्वनामार्थस्य प्राधान्यम्, तत्प्रयुक्तश्च चतुर्थीरूपविधेययोगो युक्तः, उत्तरपदार्थभूतेऽर्थपदार्थे गुणत्वात्। तस्मात्—"कार्यकारणसम्बन्धोद्भवे चतुर्थी विधीयमाना कार्यवाचिन एव भवति" इति प्रागुक्तरीतिरेवात्र साध्वीति युक्तम्॥ २७॥

तदेवं निमित्तत्वरूपधर्मसाम्येऽपि—कारकम्, हेतुः, लक्षणम्, तादर्थ्यमिति

**सर्वत्र सहजा शक्तिर्यावद्द्रव्यमवस्थिता ।**
**क्रियाकाले त्वभिव्यक्तेराश्रयादुपकारिणी ।। २८ ।।**

अनित्यानां पदार्थानां स्वहेतोरेव शक्तीनामुद्भव इति सहजाता शक्तिः । न ह्यनाधेयातिशयत्वाद् भावानामशक्तस्योत्पत्तावनन्तरमाधातुं शक्यते शक्तिः । नित्यानां तु स्वाभाविकी शक्तिः । आश्रयसमवेतास्तु शक्तयः । तदपाये निराधारा नावस्थातुं पारयन्तीति यावद्द्रव्यभाविन्यः । एवमपि सहकारिसन्निधाने स्वकार्योद्युक्ताः शक्त्यभिव्यक्तिमाश्रयन्ते भावा इत्यभिव्यक्तिकाल एव कार्योपयोगित्वात् साधनमित्युच्यन्ते, नान्यदा सत्त्वेऽपि ।। २८ ।।

तथा हि—

**कुड्यस्यावरणे शक्तिरस्यादीनां विदारणे ।**
**सर्वदा स तु सन् धर्मः क्रियाकाले निरूप्यते ।। २९ ।।**

---

भिन्नस्वरूपाः = भिन्नविषयाश्च पदार्था इति न तेषु लक्षणसाङ्कर्यप्रसङ्ग इत्यानुषङ्गिकेऽर्थे निर्णीते प्रकृतमेव कारकविषयकं विचारं प्रवर्त्तयितुमाह—सर्वत्र सहजेति ।

अस्यार्थः—सर्वत्र = नित्येषु अनित्येषु च भावेषु, सहजा नित्येषु स्वाभाविकी, अनित्येषु तु स्वहेतुसमुद्भवा शक्तिः, यावद्द्रव्यम् = द्रव्यस्य स्थितिकाले कार्यानुकूलव्यापारवत्त्वे तदभावे वा सदैव अवस्थिता; किन्तु क्रियाकाले = द्रव्यस्य कार्यानुकूलव्यापारकाले अभिव्यक्तेराश्रयात् = शक्तेरभिव्यज्यमानत्वात्, शक्तेः कार्योपयोगित्वात् सा शक्तिरुपकारिणी इति कर्त्तृत्वकरणत्वादिरूपं साधनमित्युच्यत इति ।

अयं भावः—जन्यानां पदार्थानां स्वहेतोरेव स्वशक्तीनामुद्भव इति सहजाता शक्तिः । न ह्युत्पत्त्यनन्तरं भावानामतिशय आधातुं शक्यते । स्वरूपविलोपे सत्येव तथात्वात् ।

अतोऽशक्तस्योत्पत्तौ सत्यामनन्तरं शक्तिराधातुं न शक्यत इति अनित्यानां भावानां सहजातैव शक्तिः, नित्यानां तु स्वाभाविकी शक्तिः,अतो नित्यैव । शक्तयस्तु आश्रयसमवेता इति आश्रयनाशे निराधारा अवस्थातुं न शक्नुवन्ति इति यावद्द्रव्यभाविन्यः । एवमपि सहकारिसन्निधाने स्वकार्योद्युक्ताः कारणीभूताः कारकरूपा भावाः शक्त्यभिव्यक्तिमाश्रयन्ते, नान्यदा इत्यभिव्यक्तिकाल एव कार्योपयोगित्वात् साधनमित्युच्यन्ते, नान्यदा शक्तेः सहजत्वेन सत्त्वेऽपीति ।। २८ ।।

इममेवार्थमुदाहरणेन द्रढयति—कुड्यस्यावरण इति ।

अस्यार्थः—कुड्यस्य = भित्तेः आवरणे सर्वदा शक्तिः, अस्यादीनाञ्च शस्त्राणां विदारणे सर्वदा शक्तिः । तु = किन्तु, सर्वदा तत्र सन् = विद्यमानः, सः = शक्तिरूपो धर्मः क्रियाकाले = स्वकार्योत्पादनकाले निरूप्यते = अभिव्यज्यत इति ।

आवरकं कुडचम्, पाटकं च शस्त्रम्, छेद्यावरीतव्यवस्तुसन्निधाने ज्ञायत इति विद्यमाना शक्तिर्विषयायत्ताऽभिव्यक्तिः। परिच्छिद्यते त्रिकालाऽप्यर्वाग्दर्शनैः। उपादाननियमाद्धि कार्यात् पूर्वमपि शक्तिरस्ति। पुनरपि कार्यकारणादुत्तर-कालमपि ॥ २९ ॥

आगमेनाप्येतत् संवादयति—

**स्वाङ्गसंयोगिनः पाशाः दैत्यानां वारुणा यथा।**
**व्यज्यन्ते विजिगीषूणां द्रव्याणां शक्तयस्तथा ॥ ३० ॥**

दैत्यानां स्वकर्मनिर्माणा वारुणाः पाशाः स्वहस्ततलावलीनाः सदा सन्नि-हिताः शक्तिरूपेणेत्यागमः। ते तु परसैन्यविजयवेलायामभिव्यज्यन्त इति श्रूयते। एवं द्रव्याणां सदा सन्निहिताः शक्तयः स्वकार्यनिष्पादनकाले प्रकाशन्त इत्यपि युक्तम् ॥ ३० ॥

---

अयं भावः—यद्यपि सर्वदा कुडचमावरकं शस्त्रञ्च पाटकम्, तथापि छेद्यावरी-तव्यवस्तुसन्निधान एव तेन-तेन रूपेण ज्ञायत इति शक्तिः सर्वदा विद्यमाना। तस्या अभिव्यक्तिस्तु विषयायत्ता इति त्रिकालाऽपि शक्तिरर्वागदर्शनैः वर्तमानमात्रग्राहिभिः कार्यकालिकत्वेनैव परिच्छिद्यते। उपादाननियमाद्धि कार्यात् पूर्वमपि शक्तिरस्ति। अन्यथा हि घटार्थिभिर्मृदेव नोपादीयेत। पटादिभिस्तन्तव एव नोपादीयेरन्। अतो विज्ञायते मृद्येव घटानुकूला शक्तिः, तन्तुष्वेव पटानुकूला इति। घटनाशोत्तरं तयैव मृदा पुनरपि घटरूपकार्यकरणाद् घटनाशोत्तरकालमपि मृदि घटानुकूला शक्तिर-स्तीति विज्ञायत इति ॥ २९ ॥

एतमर्थमागमेनापि संवादयति—स्वाङ्गसंयोगिन इति।

अस्यार्थः—यथा वारुणाः पाशा दैत्यानां स्वजन्मारम्भककर्मनिर्मिताः सदा स्वाङ्गसंयोगिनः=सदैव तद्हस्ततलसंयोगिनः, ते तु परसैन्यविजिगीषूणां तेषां युद्ध-काले हस्तद्लेऽभिव्यज्यन्ते, तथा द्रव्याणां कारकरूपाः शक्तयः सर्वदा सत्योऽपि स्वकार्यनिष्पादनकालेऽभिव्यज्यन्त इति।

अयं भावः—दैत्यानां स्वदेहारम्भकर्मनिमित्ता वारुणाः=वरुणदेवताकाः पाशास्तद्हस्ततलान्तर्हिता सदा परबन्धनानुकूलशक्तिरूपेण सन्निहिता इत्यागमः=वेदसम्प्रदायः, ते तु परसैन्यविजयवेलायामभिव्यज्यन्त इति श्रूयते। एवं द्रव्याणां शक्तयः सदा तत्र सन्निहिता अन्तर्हिताः स्वकार्यनिष्पादनकालेऽभिव्यज्यन्त इति युक्तमिति ॥ ३० ॥

यदुक्तमस्यादीनां विदारणे शक्तिरिति तदेव प्रतन्यते—

तैक्ष्ण्यगौरवकाठिन्यसंस्थानैः स्वैरसिर्यदा ।
छेद्यं प्रति व्याप्रियते शक्तिमान् गृह्यते तदा ।। ३१ ।।

निविडतरसंहनननामवयवानां क्रमेणाग्रे सूक्ष्मीभवतां तनुत्वप्रकर्षस्तैक्ष्ण्यम्, छेदनिमित्तं धर्मः । भिन्नजातीयावयवसम्भेदविच्छेदे विच्छिन्नान्तरालानामवयवानामुपचयाद् गौरवं निपतनहेतुर्धर्मः । तापनोत्तेजितानां लोहावयवानां निविडत्वं काठिन्यं नाम धर्मः, यतः प्रहारविशेषो निष्पद्यते । सन्निवेशविशेषो मण्डलाग्रादिव्यपदेशनिबन्धनमस्यन्तराद् विभागहेतुः संस्थानम् । यतः प्रहारवैचित्र्यमाजायते । तदेतैर्धर्मैरसियष्टिश्छेद्यविपाटनमारभमाणा शक्तिमतीति गृह्यते । व्यापारशून्या तु सत्स्वप्येतेषु धर्मेषु न तथावसीयते । एवमन्येषामपि पदार्थानां यथायोगं वाच्यम्, असेरुपलक्षणत्वात् ।। ३१ ।।

---

अस्यादीनां 'विदारणे' शक्तिरिति यत्प्रागुक्तं तदेव वैशद्याय विस्तरेणोच्यते—तैक्ष्ण्यगौरवेति।

अस्यार्थः—असिः=खड्गतैक्ष्ण्यम्=स्थूलावयवानां शाणमारोप्य निशातनपूर्वकः तनुत्वप्रकर्षः । गौरवम्=भिन्नजातीयानां द्रव्याणामस्यावयवैः सह संयोगस्य अग्नौ असेः सन्तपनेन विच्छेदे विच्छिन्नान्तरालानाम्=विभक्तावकाशानाम् अस्यवयवानां सजातीयैरवयवैः सह संयोगेन उपचयाद् गौरवं खड्गस्य छेद्ये निपतनहेतुर्धर्मः । तापनोत्तेजितानां लोहावयवानां ताडनेन निविडत्वं काठिन्यं नाम धर्मो यतः प्रहारविशेषो निष्पद्यते, असिधारायाश्च वैमुख्यं प्रहारकालेनोत्पद्यते । संस्थानम्=सन्निवेशविशेषो मण्डलाग्रादिव्यपदेशहेतुरस्यन्तराद् अस्त्रान्तराच्च कुन्तप्रासतोमरमुद्गरादितो विभागहेतुः, येनास्यन्तरकरणकादस्त्रान्तरकरणकाच्च प्रहारादेतदसिप्रहारे वैचित्र्यमाजायते । एतैस्तैक्ष्ण्यगौरवकाठिन्यसंस्थानैः स्वकीयैर्धर्मविशेषैर्विशिष्टश्छेद्यं प्रति यदा व्याप्रियते तदा शक्तिमान् गृह्यते, तदा तस्य शक्तिः गृह्यत इति यावत् । छेद्यं प्रति व्यापार एव तैक्ष्ण्यादिधर्मविशिष्टस्य भङ्गस्य शक्तेरभिव्यञ्जक इति हृदयम् ।

अयं भावः—निविडतरसंयोगानामवयवानां संयोगतारतम्येन क्रमेणाग्रेऽधोऽधः सूक्ष्मीभवतां तनुत्वप्रकर्षस्तैक्ष्ण्यम्, स च छेदक्रियानिमित्तभूतो धर्मः अग्नौ सन्तापेन भिन्नजातीयद्रव्यैः सहास्यावयवानां संयोगविच्छेदे सति विच्छिन्नान्तरालानाम्=विभक्तावकाशानाम् अस्यावयवानां सजातीयैरवयवान्तरैः सह संयोगेनोपचयाद् गौरवमसेर्लक्ष्ये छेद्ये निपतनहेतुर्धर्मः । अग्नौ सन्तापनेनोत्तेजितानां लोहावयवानां ताडनेन निविडत्वं काठिन्यं नाम धर्मो यतोऽसिधारावैमुख्याभावेन गम्भीरतमः प्रहारो निष्पद्यते । सन्निवेशविशेषः=असेस्तत्तदाकारसम्पादकोऽवयवसंयोगविशेषः । मण्डलाग्रादिव्यपदेशनिबन्धनमस्यन्तरादस्त्रान्तराच्च विभागहेतुः संस्थानम् । यतः प्रहारविशेषः=दीर्घप्रहारः दीर्घक्षतहेतुरुपजायते । तदेतैर्धर्मैरसियष्टिश्छेद्यविपाटन-

पक्षान्तराण्यप्यत्र साधने सम्भवन्तीत्याह—

**प्राङ्निमित्तान्तरोद्भूतं क्रियायाः कैश्चिदिष्यते ।**
**साधनं सहजं कैश्चित् क्रियान्यैः पूर्वमिष्यते ।। ३२ ।।**

सिद्धे सत्त्वेऽभिव्यक्तिप्रतीक्षा शोभते। सत्त्वमेव तु शक्तीनां कार्यानुमेयत्वात् क्रियातः पूर्वमसिद्धमिति क्रियायाः पूर्वमपेक्षणीयाद् निमित्ताच्छक्तयो द्रव्याणां क्रियानुगुणा जायन्त एव। सत्त्वेऽप्यभिव्यक्तिनिमित्तमपेक्षणीयमिति तदेव जनकम्। तथा हि सहकारिसव्यपेक्षाणां भावानां जनकत्वात् परम्पराहितशक्तयस्ते स्वकार्यहेतव इत्युन्नीयन्ते, केवलानामजनकत्वाद् न तदानीं शक्ता इति

---

मारभमाणा शक्तिमतीति गृह्यते। छेद्यं प्रति व्यापारशून्या तु सा सत्स्वपि एतेषु तैक्ष्ण्यादिधर्मेषु न विदारणशक्तिमत्तया गृह्यते। एवमन्येषामपि पदार्थानां यथासम्भवं स्वकार्यं प्रति शक्तिमत्त्वं वाच्यम्, असेरुपलक्षणत्वादिति ।। ३१ ।।

पक्षान्तराण्यप्यत्र शक्तिरूपे साधने सम्भवन्तीत्याह—प्राङ्निमित्तान्तरोद्भूतमिति ।

अस्यार्थः—क्रियाया उत्पत्तेः प्राक् निमित्तान्तरोद्भूतम्=द्रव्यस्य यन्निमित्तं तदपेक्षयाऽन्यद् यन्निमित्तं क्रियाया जनकं सहकारि सामग्रीरूपं ततः परस्परस्मादुद्भूतं=जातं क्रियानुगुणं शक्तिरूपं साधनं सहकारिसमवायि कैश्चिदिष्यते। कैश्चित्तु शक्तिरूपं साधनं सहजमिष्यते, द्रव्येण सहजातमिष्यत इति पूर्वप्रतिपादितपक्षानुवादः। केचित्तु क्रियाभिः सहजं साधनशक्तीनां जन्म तच्च द्रव्यजनकनिमित्तापेक्षया निमित्तान्तरसमुद्भवम्=सहकारिषु परस्परस्मात्=परस्परस्मिन् क्रियाभिः सहजं शक्तिजन्मेति व्याचक्षते। अन्यैस्तु साधनरूपशक्तितः पूर्वं क्रिया दृष्यते। रजोलक्षणायाः प्रवृत्तिरूपायाः क्रियाया नित्यत्वात्। नदीस्रोतोवत् सततं व्यापाररूपेण प्रवहद्रूपायाः नित्यत्वाद्वा। अत्र च मते क्रियायाः स्वरूपतो जन्यत्वेऽपि प्रवाहरूपेणानादित्वान्नानित्यत्वमिति ।

अयं भावः—शक्तेः सत्तायां सिद्धायां तदभिव्यक्तिप्रतीक्षा शोभते; किन्तु शक्तीनां कार्यानुमेयत्वात् तदभिव्यञ्जकक्रियातः पूर्वं तासां सत्त्वमेवासिद्धमिति क्रियायाः पूर्वं तदुत्पत्तयेऽपेक्षणीयान्निमित्तात् सहकारिकारणरूपाद् उपादानकारणरूपाच्च सहकारिकारणरूपाणामुपादानकारणरूपाणाञ्च द्रव्याणां शक्तयः क्रियानुगुणाः परस्परात् = परस्परस्मिन् जायन्त एव। क्रियातः पूर्वं द्रव्ये शक्त्यभ्युपगमेऽपि तदभिव्यक्तिनिमित्तमपेक्षणीयमिति तदभिव्यञ्जकमेव तज्जनकमस्तु। तथा हि—सहकारिसहकृतानामेव भावानामुपादानकारणरूपाणां जनकत्वात् परस्परेण परस्परस्मिन् आहितशक्तयस्ते स्वकार्यहेतव इत्यनुमीयन्ते। केवलानां जनक-

न स्वाधारजनकादेव शक्तिजन्म; अपि तु निमित्तान्तरादेव। प्रत्यभिज्ञायमानत्वाच्च शक्ताशक्तत्वेऽपि न वस्तुभेद इति केचित्। अत एवोपादाननियमोऽपि योग्यतावधारणात् सिद्धः।

अन्ये तु शक्तेर्वस्तुनोऽनन्यत्वात् स्वभावभेद एव शक्ताशक्तत्वे मन्यन्ते। सहजं कैश्चित् साधनं शक्तिर्द्रव्याणामिष्यत इति पूर्वप्रतिपादितपक्षानुवादः।

केचित्तु न येनैव कारणेन क्रिया जन्यते, तेनैव साधनम्; अपि त्वन्येनैवेति क्रियापेक्षया निमित्तान्तरत्वं मन्यमाना सहजत्वमपि क्रियापेक्षयैव व्याचक्षते। तथा हि इतरेतरस्य शक्तिमर्पयन्तः क्रियां निर्वर्तयन्ति भावाः सहकारिण इति साधनशक्तिभिः सहैव क्रियाणां व्यापाररूपाणां जन्म मन्यन्ते। तथा च येभ्य एव क्रिया जायन्ते तेभ्य एव शक्तय इति सहजत्वम्। उपजातशक्तयस्तु क्षणान्तरे क्रियानिर्वर्तका इति साध्यसाधनभावे नास्ति क्षतिः। न हि साध्यसाधनयोः सहभावः प्रमाणोपपन्नः। अन्ये तु साधनात् पूर्वभाविनीं क्रियां मन्यन्ते ।। ३२ ।।

---

त्वाद् न तदानीम् — सहकारिसमाधानाभावे शक्ता इति न शक्त्याधारद्रव्यजनकादेव शक्तिजन्म; अपि तु ततो निमित्तान्तरादेव। न च तस्यैव द्रव्यस्य कदाचित् शक्तत्वे कदाचिच्चाशक्तत्वे वस्तुभेदप्रसङ्गोऽनिष्टोऽनुभवविरुद्धश्चापद्येतेति वाच्यम्। तदेवेदमिति प्रत्यभिज्ञाविषयत्वेनैकत्वाभ्युपगमात्। अत एवोपादाननियमोऽपि अन्वयव्यतिरेकाभ्यां तत्रैव कार्यं प्रति योग्यतावधारणात् सिद्धः।

अन्ये तु शक्तेः स्वाधारवस्तुनोऽनन्यत्वात् स्वभावविशेष एव वस्तुनः शक्तमशक्तत्वञ्चेति मन्यन्ते। कैश्चिद् द्रव्याणां शक्तिरूपं साधनं द्रव्यैः सहजं सहजातमिष्यत इति पूर्वप्रतिपादितपक्षानुवादः।

केचित्तु येनैव कारणेन क्रिया जन्यते, तेनैव शक्तिरूपं क्रियानुकूलं साधनं द्रव्ये जन्यत इति न साम्प्रतम्। साध्यसाधनयोर्युगपदुत्पत्त्ययोगात्; अपि तु अन्येनैव कारणेन जन्यत इति क्रियानिमित्तापेक्षया निमित्तान्तरत्वं मन्यमानाः सहजत्वमपि क्रियापेक्षयैव, न तु द्रव्यापेक्षयेति व्याचक्षते। तथा हि—द्रव्यस्य प्रधानकारणरूपस्य सहकारिणो भावाः क्रियातः प्राग् इतरेतरस्य शक्तिमर्पयन्तः क्रियां निर्वर्तयन्तीति साधनशक्तिभिः सहैव व्यापाररूपाणां क्रियाणां जन्म मन्यन्ते। तथा च येभ्य एव क्रिया जायन्ते तेभ्य एव शक्तय इति सहजत्वम्, न तु सहोत्पत्तिकत्वेन, साध्यसाधनयोर्युगपदुत्पत्त्यसम्भवात्। कार्यनियतपूर्ववर्तिन एव साधनत्वात्; किन्तु उपजातशक्तयो भावाः क्षणान्तरे क्रियानिर्वर्तका इति रीत्या साध्यसाधनभावे नास्ति काचित्क्षतिः। नहि साध्यसाधनयोः सहभावः प्रमाणेन प्रमितः। अन्ये तु क्रियां नित्यत्वेन साधनात् पूर्वभाविनीं मन्यन्त इति ।। ३२ ।।

तत् कथं युज्यत इत्याह—

प्रवृत्तिरेव प्रथमं क्वचिदप्यनपाश्रिता ।
शक्तीरेकाधिकरणे स्रोतोवदपकर्षति ।। ३३ ।।

अनपेक्षितहेतुव्यापारा नित्या क्रिया अनपाश्रिता क्वचिदपि भण्यते । स्वाश्रये तु समवेतैव । अत एव तत्राश्रये साधनशक्तीराविर्भावयति प्रतिनियतस्वकार्यसम्पादिकाः ।

अन्ये त्वनाश्रितैवेत्याहुः । सततव्यापारप्रवहद्रूपा नदीप्रवाह इव तृणपर्णलतादीन् साधनशक्तीः प्रवृत्तिलक्षणा क्रिया कर्षति वहतीति केषाञ्चिज्जरन्मीमांसकानामागमः ।

रजोलक्षणा वा प्रवृत्तिर्नित्या सर्वभावेष्वनुयायिनी स्वकार्यप्रसवसमर्था

---

साध्यस्य साधनात्पूर्ववृत्तित्वं कथं युज्यत इत्याशङ्क्याह - प्रवृत्तिरेवेति ।

अस्यार्थः—प्रथमम् = स्वाश्रयसाधनद्रव्यजन्मनः प्राक्, आधाराभावेन क्वचिदपि अनपाश्रिता प्रवृत्तिरेव = क्रियैव, एकाधिकरणे = एकस्मिन्नधिकरणे द्रव्ये जाते स्थिता सती तत्र स्रोतोवत् = तृणपर्णलतादीन् स्रोत इव = नदीप्रवाह इव, शक्तीः = कर्तृत्वादिरूपाः साधनशक्तीः प्रतिनियतस्वस्वकार्यसम्पादिकाः, अपकर्षति = धातूनामनेकार्थत्वाद् आविर्भावयति, वहति, जनयति इति मतभेदेनार्थत्रयम् । स्पष्टञ्चैतद् हेलाराजीये ।

अयं भावः—अनवस्थाभिया अनपेक्षितहेतुव्यापारत्वेन क्रिया नित्या, सा च स्वाश्रयसाधनद्रव्यजन्मनः प्राक् क्वचिदपि अनपाश्रिता = अनाश्रिता इति भण्यते । जाते तु स्वाश्रये समवेतैव । अत एव तत्राश्रये साधनशक्तीराविर्भावयति प्रतिनियतस्वस्वकार्यसम्पादिकाः ।

अन्ये तु साधने जातेऽपि वस्तुस्वभावादनाश्रितैवेत्याहुः ।

वस्तुतस्तु नैतद् युक्तम्, क्रियाया अनाश्रितत्वस्यानुभवविरुद्धत्वात् । अविच्छिन्नशाश्वतिकव्यापाररूपेण प्रवहद्रूपा प्रवृत्तिलक्षणा क्रिया स्वरूपतो जन्याऽपि अनादिप्रवाहरूपेण नित्या तृणपर्णलतादीन् नदीप्रवाह इव साधनशक्तीः कर्षति वहत्यादाय इति केषाञ्चिज्जरन्मीमांसकानामागमः ।

अथवा सर्वजगन्निदानगुणत्रयान्तर्गतरजोलक्षणा प्रवृत्तिः परिणामिनित्या सर्वभावेष्वनुगता 'इष्टमुपष्टम्भकं चलञ्च रजः' ( सां० का० ) इत्युक्तदिशा रागोपष्टम्भचलनरूपस्वकार्यप्रसवसमर्था व्यापाराविष्टानि सर्वाणि साधनरूपाणि कार्याणि जनयतीति सांख्यनयः । व्यापाराविष्टस्यैव सर्वस्य साधनरूपतया कार्यजनकत्वात् साधनविशेषणतया साधनात् पूर्वभावी व्यापारः समवस्थितः ।

कार्याणि जनयतीति सांख्यनयः। व्यापाराविष्टस्य सर्वस्य कार्यजनकत्वाद् व्यापारः पूर्वभावी समवस्थितः। तेन च शक्त्याक्षेप इति युक्तम् ॥ ३३ ॥

केयं प्रवृत्तिरनपाश्रया नित्येत्याह—

[ इतो ग्रन्थपातसन्धानाय फुल्लराजकृतिर्लिख्यते । ]

इदानीं मतान्तरानुसारेण साधनस्वरूपं वर्णयितुमाह—

**अपूर्वं कालशक्तिं वा क्रियां वा कालमेव वा ।**
**तमेवंलक्षणं भावं केचिदाहुः कथञ्चन ॥ ३४ ॥**

अपूर्वं धर्माधर्माख्यमदृष्टसंज्ञकं केचिदेवंरूपं तं सामर्थ्यलक्षणं भावमाहुः।

---

तेन च व्यापारेण शक्त्याक्षेपः=शक्त्याकर्षणं शक्तीनामाविर्भावन-वहनजनननानामन्यतमरूपं युक्तमिति ॥ ३३ ॥

चतुस्त्रिंशत्कारिकाया हेलाराजीया अवतरणिका—"केयं प्रवृत्तिरनपाश्रया नित्येत्याह—अपूर्वमिति।"

फुल्लराजकृतेरवतरणिका तु—"इदानीं मतान्तरानुसारेण साधनस्वरूपं वर्णयितुमाह—अपूर्वमिति।"

अनयोरवतरणिकयोर्हेलाराजीयाऽवतरणिकैव युक्ता, पूर्वकारिकयाऽव्यवहितसंगतिकत्वात्। फुल्लराजीयाऽवतरणिकायास्तु न व्यवहितया द्वात्रिंशकारिकयाऽपि सह संगतिः। तस्याः साधनोत्पत्तिविमर्शपरत्वेन साधनस्वरूपविमर्शविषये उदासीनत्वात्।

अथवा फुल्लराजावतरणिकैव युक्ता। सिंहावलोकनन्यायेनास्याः कारिकायाः सुदूरप्रक्रान्तेनाऽपि साधनस्वरूपविमर्शेन सह संगतिसम्भवात्। अत एव—'क्रियां वा' इति क्रियाविषयको विकल्पनिर्देशो युज्यते। अनपाश्रयनित्यप्रवृत्तिपरत्वे तु तस्याः पूर्वोक्तत्वाद् अयं विकल्पो न युज्यते।

अस्याः कारिकाया अर्थस्तु—तं पूर्वोक्तम्, एवंलक्षणं नित्यमेकमनेकार्थमित्यादिसाधनलक्षणलक्षितं भावम्=साधनाख्यम्, केचिद् अव्यक्तत्वेन दुर्निरूपत्वात् कथञ्चन=कथमपि महता कृच्छ्रेणाहुः। तथा हि केचित्—अपूर्वं धर्माधर्माख्यमदृष्टसंज्ञकमेव साधनमाहुः। अदृष्टस्यैव सर्वजगत्प्रतिबन्धाभ्यनुज्ञासाधनत्वात्। कालशक्तिमेव वा केचित्साधनमाहुः। कालशक्त्यैव हि सर्वस्य स्वासु क्रियासु प्रभुत्वात्। क्रियामेव वा पूर्वोपवर्णितां राजसीं केचित्साधनमाहुः। क्रियोत्तरकालभाविनः साधनस्य पूर्वोक्तस्य निरूपयितुमशक्यत्वात्। कालमेव वा केचिद् द्रव्यकालवादिनः साधनमाहुः। कालवशादेव हि सर्वेषां भावानां स्वस्वकार्यसम्पत्तौ प्रभुत्वात् काल एव साधनमिति।

अयं भावः—अपूर्वंधर्माख्यमदृष्टसंज्ञकं केचिदेवंरूपं नित्यमेकमित्यादिलक्षण-

अदृष्टवशाद्धि सर्वं भवति वा न वेत्यदृष्टमेव सर्वकार्याणां निमित्तं बोद्धव्यम्।

केचित्तु वादिनः कालशक्तिम् एव भगवतो ब्रह्मणः सम्बन्धिनीं साधनमाहुः। कालशक्त्यनुप्राणितं हि सर्वं क्रियायै प्रभवति। क्रियां वा राजसीमनन्तरोपवर्णितस्वरूपां साधनमाहुः। न तूत्तरकालभावि किञ्चन साधनं नाम शक्यं निरूपयितुम्। पूर्वं क्रियामूलं साधनं व्याख्यातम्। अधुना क्रियैव साधनमिति विशेषः। सैव हि स्वयं प्रवर्तमाना विशेषीभवतीति।

कालमेव वा नित्यमेकमित्यादिलक्षणलक्षितं द्रव्यकालवादिनः साधनमाहुः। कालवशाद्धि सर्वे भावाः प्रभवन्ति कार्यसम्पत्तय इति काल एव साधनम्। यथा वक्ष्यति—

'यदि न प्रतिबध्नीयात्… ' ( वा० प० ३, काल० ५ ) इति ।। ३४ ।।

अथ शक्तेः सामर्थ्यलक्षणाया साधनत्वेन पूर्वं निरूपितायाः संख्याविचारं कर्तुमाह—

---

लक्षितं सामर्थ्याख्यं भावमाहुः। अदृष्टवशाद्धि सर्वं भवति, न वा इत्यदृष्टमेव सर्वकार्याणां प्रतिबन्धाभ्यनुज्ञयोर्निमित्तं बोद्धव्यम्।

केचित्तु वादिनः 'कालः कलयतामहम्', 'कालोऽस्मि लोकक्षयकृत् प्रवृद्धः' इत्युक्तदिशा कालस्य भगवतो ब्रह्मणो यथायथं परमार्थापरमार्थभेदाभेदरूपतादात्म्यसम्बन्धवतीमनिर्वाच्यां शक्तिमेव साधनमाहुः। कालशक्त्युपकृतं हि सर्वं स्वस्वकार्यानुकूलक्रियायै प्रभवति। क्रियां वा राजसीम्=रजोगुणपरिणामरूपाम् अनन्तरोपवर्णितां प्रवाहनित्यां परिणामिनित्यां वा साधनं केचिदाहुः, न तु प्रागुपवर्णितं क्रियोत्तरकालभावि किञ्चन साधनं नाम निरूपयितुं शक्यम्। कार्यरूपाया हननादिक्रियाया बाणादिरूपकरणव्यापाररूपाया वा विदारणादिक्रियाया उत्तरकालभाविशक्तिरूपं साधनं शक्तिमद् बाणादिकं वा साधनमित्यस्य युक्त्यसहत्वात् पूर्वं कारिकायां क्रियामूलकं साधनमिति व्याख्याय प्रदर्शितम्। अधुना तु करणादीनां क्रियैव साधनमुच्यत इति पूर्वापरग्रन्थयोर्विशेषः। या आश्रयसम्बन्धात् प्राक् क्वचिदपि अनपाश्रिता नित्या सामान्यरूपा क्रिया, सैव हि आश्रयसम्बद्धा कार्यं जनयितुं स्वयं प्रवर्त्तमानाऽऽश्रयविशेषसम्बन्धाद् विशेषरूपा भवतीति।

द्रव्यविशेषः कालो न तु भगवद्रूप इति वादिनो गौतमीयास्तु—कालमेव वा नित्यमेकमित्यादिलक्षणलक्षितं साधनमाहुः। सर्वे भावा हि कालवशादेव स्वस्वकार्यसम्पत्तये प्रभवन्ति इति काल एव साधनम्। तथा च वक्ष्यति—

"यदि न प्रतिबध्नीयात्" ( वा० प० ३, काल० ५ ) इति ।। ३४ ।।

नित्याः षट् शक्तयोऽन्येषां भेदाभेदसमन्विताः ।
क्रियासंसिद्धयेऽर्थेषु जातिवत् समवस्थिताः ।। ३५ ।।

अन्येषां मतेनार्थेषु नित्याः षट् शक्तयः पृथग्लक्षणलक्षिताः कर्माद्या व्यवस्थिता इति स्थितम् । कीदृश्यः ? भेदाभेदसमन्विताः, एकान्तेनार्थेभ्यश्चेत् भेदसमन्विता अभिधीयेरन्नर्थस्य शक्तिवैकल्यान्नीरूपता स्यात् । अथाभिन्नाः कथ्यन्ते तर्हि विभिन्नकार्योदयो नावतिष्ठेत् । तस्मात् कथञ्चिद् भेदेन, कथञ्चिद- भेदेनेति भेदाभेदाभ्यां समन्विताः शक्तयोऽर्थजातिवदवस्थिताः, यथा सत्त्वद्रव्यत्व- गोत्वशाबलेयत्वादिजातयः सततं भेदाभेदसमन्वयेनार्थेष्वित्येके मन्यन्ते ।। ३५ ।।

---

अथ शक्तेः प्रधानीभूतक्रियानुकूलायाः सामर्थ्यलक्षणायाः साधनत्वेन पूर्वं निरूपितायाः संख्याविचारं कर्त्तुमारभते—नित्याः षडिति ।

अस्यार्थः—अन्येषां केषाञ्चिद् वादिनां मतेऽर्थेषु कर्त्तृत्वादिरूपाः कारक- शक्तयो नित्याः षट् चेति । तदाहुः—

कर्त्ता कर्म च करणं च सम्प्रदानं तथैव च ।
अपादानाधिकरणे इत्याहुः कारकाणि षट् ।। इति ।

ताश्च पृथग्लक्षणलक्षिताः स्वाश्रयार्थेन सह भेदाभेदसमन्विताः । तथा हि— यदि अर्थेभ्यो नियमेन भेदसमन्वितास्ता अभिधीयेरन्, तदाऽर्थस्य शक्तिविरहितत्वाद् निःस्वरूपता स्यात् । यदि तु स्वाश्रयार्थादभिन्नाः कथ्यन्ते, तर्हि एकस्मादर्थाद् विभिन्नकार्योदयो विभिन्नशक्त्यभावेन नावतिष्ठेत् । आश्रयैक्येन तदभिन्नानां शक्ती- नामप्यैक्यात् । तस्मात् कथञ्चिद् भेदेन=व्यवहारार्थं कल्पितेन भेदेन, कथञ्चिद- भेदेन=परमार्थेनाभेदेन इति भेदाभेदाभ्यां समन्विताः शक्तयोऽर्थेषु जातिवदव- स्थिताः, यथा सत्त्वद्रव्यत्वादिजातयोऽर्थेषु भेदाभेदसमन्विता इति ।

अयं भावः—अन्येषां मते स्वाश्रयार्थजन्मनः प्राक् क्वचिदनपाश्रितेऽपि जातेऽर्थे तत्र समवेता नित्याः कर्त्तृत्ववाचिरूपाः षट् शक्तयः स्वातन्त्र्य-कर्त्तुरीप्सित- तमत्वादिरूपपृथग्लक्षणलक्षिता इति स्थितम् । कीदृश्यः ? स्वाश्रयाद् भेदाभेद- समन्विताः स्वाश्रयार्थेभ्यो नियमेन भेदसमन्विताश्चेत् ता अभिधीयेरन्, तदाऽर्थस्य स्वाश्रयस्य शक्तिवैकल्यान्निःस्वरूपता स्यात् । अथ स्वाश्रयार्थादभिन्नाः कथ्यन्ते, तर्हि अभिन्नाश्रयाभिन्नानां तासामैक्याद् विभिन्नं कार्योदयो नावतिष्ठेत् । तस्माद् व्यवहारार्थं कल्पितेन कथञ्चिद् भेदेन परमार्थेन, कथञ्चिदभेदेनेत्येवं भेदाभेदाभ्यां समन्विताः शक्तयोऽर्थगतजातिवदवस्थिताः, यथा सत्ता द्रव्यत्वगोत्वशाबलेयत्वा- दिका गोगताः परापरजातयः सततं कथञ्चिद् भेदाभेदसमन्वयेनार्थेष्ववस्थिता इत्येके मन्यन्त इति ।। ३५ ।।

तासां तु द्रव्यादिभेदेनानन्त्येऽपि षट्त्वमेव=षड्विधत्वमेव तत्त्वं नातिवर्तत इत्याह—

**द्रव्याकारादिभेदेन ताश्चापरिमिता इव ।**
**दृश्यन्ते तत्त्वमासां तु षट् शक्तीर्नातिवर्तते ॥ ३६ ॥**

द्रव्यभेदेन भिन्ना शक्तिः । यथा 'दात्रमन्यथा छिनत्ति, खड्गोऽन्यथा' इति । आकारभेदेन खड्गोऽन्यथा, खड्गलता त्वन्यथा' इति । आदिग्रहणाद् देशकालभेदेन सैव दहनशक्तिरग्निवैचित्र्यमुपयाति, षट्त्वं पुनस्तत्स्वरूपं नातिक्रामति ॥ ३६ ॥

अथैकैव शक्तिर्निमित्तभेदाद्विशेषरूपतया षोढात्वमापन्ना वा साधनमित्याह—

**निमित्तभेदादेकैव भिन्ना शक्तिः प्रतयीते ।**
**षोढा कर्तृत्वमेवाहुस्तत्प्रवृत्तेर्निबन्धनम् ॥ ३७ ॥**

---

तासां तु कर्तृत्वादिरूपशक्तीनां स्वाश्रयद्रव्याकारादिभेदेनानन्त्येऽपि षट्त्वमेव=षड्विधत्वमेव तत्त्वम् । तच्च षट्शक्तीर्नातिवर्तत इत्याह—**द्रव्याकारादिभेदेनेति ।**

अस्यार्थः—ताश्च कर्तृत्वादिरूपाः कारकशक्तयः षट्त्वेन परिमिता अपि यद्यपि द्रव्यतदाकारदेशकालादिभेदेन अपरिमिता इव दृश्यन्ते, तथापि त्वासां शक्तीनां सम्बन्धितत्वमाश्रयस्वरूपं षट्त्वं वा षट्शक्तीर्नातिवर्तते=नातिक्रामतीति ।

अयं भावः—एकाऽपि कर्तृत्वशक्तिः करणत्वशक्तिर्वा द्रव्यभेदेन भिन्ना लोके दृश्यते । यथा 'दात्रमन्यथा छिनत्ति, खड्गोऽन्यथा' इत्याकारभेदेन भिन्ना शक्तिः । यथा—खड्गो भिन्नाकारः, काठिन्येन मोटयितुमशक्यतया सदा दीर्घतयैव वर्तमानत्वात्, खड्गलता तु भिन्नाकारा, मृदुतया विमोट्य संकोचयितुं शक्यत्वात् । आदिग्रहणाद् देशकालभेदेन भिन्ना शक्तिः, यथाऽग्नेरेकाऽपि दहनशक्तिर्हि भवनमर्वादिदेशभेदेन शीतग्रीष्मादिकालभेदेन चाग्नौ वैचित्र्यं कर्मोपयाति । षट्त्वं पुनस्तासां शक्तीनां स्वरूपं नातिक्रामतीति ॥ ३६ ॥

अथवा एकैव शक्तिः कर्तृत्वरूपा सामान्यभूता ईप्सिततमत्वज्वलनत्वादिरूपनिमित्तभेदात् करणत्वभेदविशेषरूपतया षोढात्वमापन्ना साधनमित्याह—**निमित्तभेदादिति ।**

अस्यार्थः—एकैव कर्तृत्वरूपा सामान्यभूता शक्तिः ईप्सिततमत्वज्वलनत्वादिरूपनिमित्तभेदाद् भिन्ना सती षोढा प्रतीयते । तत्प्रवृत्तेः=शक्तिभेदप्रवृत्तेः कारकव्यवहारभेदरूपाया निबन्धनं निमित्तभूतं कर्तृत्वमेवाहुरिति ।

यस्मात् कर्तृत्वमेव निमित्तभेदेनेप्सिततमत्वादिना ज्वलनत्वादिना वा षोढावस्थितं सत् तत्प्रवृत्तेः शक्तिभेदप्रवृत्तेः कारकव्यवहारभेदस्य निबन्धनं निमित्तभूतं बोद्धव्यम्। यथोक्तम्–"एधाः पक्ष्यन्त्याविक्लित्तेः ज्वलिष्यन्तीति तस्माद् ज्वलनक्रियाकरणस्य पाकः" इत्यादिन्यायेन कर्तृत्वमेवावान्तरव्यापारविवक्षया करणादिव्यपदेशरूपतां भजते ।। ३७ ।।

तदेवमेकाऽनेका वा शक्तिरुपपादिता। अथासौ व्यतिरिक्ता वा स्यात्, अव्यतिरिक्ता वेत्याशङ्क्याह—

तत्त्वे वा व्यतिरेके वा व्यतिरिक्तं तदुच्यते।
शब्दप्रमाणको लोकः स शास्त्रेणानुगम्यते ।। ३८ ।।

---

अयं भावः—यस्मात् कर्तृत्वमेव सामान्यं कारकशक्तिरूपेप्सिततमत्वादिना ज्वलनत्वादिना वा निमित्तभेदेन करणत्वादिरूपविशेषरूपतामाप्य षोढाऽवस्थितं सत् तत्प्रवृत्तेः=कारकव्यवहाररूपायाः शक्तिभेदप्रवृत्तेर्निबन्धनं निमित्तभूतं बोद्धव्यम्। यथोक्तम्—'एधाः पक्ष्यन्ति=आविक्लित्तेर्ज्वलिष्यन्तीति। तस्माद् 'एधाः पक्ष्यन्ति' इत्यत्र ज्वलनक्रिया एधकर्तृकः पाकः, विक्लित्त्यनुकूलव्यापाररूपे तु पाके एधः करणमित्यादिन्यायेन=इत्यादिरीत्या कर्तृत्वमेव प्रधानीभूते व्यापारे तत्तदवान्तरव्यापाराश्रयत्वविवक्षया करणादिरूपतत्तत्कारकविशेषव्यपदेशरूपतां भजत इति ।। ३७ ।।

तदेवमनन्तरोक्तकारिकाद्वयेन एकाऽनेका वा साधनरूपा शक्तिरुपपादिता। अथाऽसौ शक्तिः स्वाश्रयादव्यतिरिक्ता वा स्यात्, व्यतिरिक्ता वेत्याशङ्क्याह—तत्त्वे वेति।

अस्यार्थः—साधनरूपायाः शक्तेः स्वाश्रयात् तत्त्वे=अभेदे वा, व्यतिरेके वा भेदे वा सन्दिग्धे स्थिते सति वैयाकरणमतानुसारिभिस्तत्साधनं शक्तिरूपं स्वाश्रयाद् व्यतिरिक्तमुच्यते। तथा हि—यतो लोकः शब्दप्रमाणकः, अतः स शब्दो लोकानुसारिणाऽनेन शास्त्रेणापि प्रमाणत्वेन अनुगम्यते। 'शब्दप्रमाणकः' इत्यत्र गुणीभूतस्यापि शब्दस्यात्र तत्पदेन परामर्शः। सर्वनाम्नां प्रधानपरामर्शित्वस्यौत्सर्गिकत्वेनात्र वाक्यार्थानुरोधेन त्यागात्। तथा च पस्पशाह्निके भाष्यम्—"शब्दप्रमाणका वयम्" (म० भा० पस्पशा०) इत्यादि। "कर्तृकरणयोस्तृतीया" (पा०सू० २।३।१८) इत्यादीनि कारकविभक्तिविधिपराणि शास्त्राणि च शक्तिशक्तिमतोर्भेदमेवाभिदधति।

तथा हि—कर्तृकरणयोरिति भावप्रधानो निर्देशः। कर्तृत्वं करणत्वञ्च न यावद्द्रव्यभावि किन्तु आगन्तुकम्। तयोर्यावद्द्रव्यभावित्वे हि सततं क्रियानिष्पत्तिप्रसङ्गः। कर्तृत्वस्यायावद्द्रव्यभावित्वञ्च दर्शितम्—"यथा च तक्षोभयथा" इति

भेदाभेदाभ्यां तावदनिर्वाच्यासौ केवलं भेदाभेदसमन्वितेत्युक्तम्। अथात्र निष्कोषणिकां करोषि तत्त्वया सहास्माकं किं प्रयोजनम्। सर्वथा शक्तिशक्तिमतोरेकान्तेन तत्त्वमव्यतिरेको वा भेद एव वा। वैयाकरणनयानुसारिभिस्त्वस्माभिः सामर्थ्यं व्यतिरिक्तमेवोच्यते। यस्मात् शब्दप्रमाणको लोकः। शास्त्रे चानेन स एवानुगम्यत इत्याह--स शास्त्रेणानुगम्यते। लोकप्रतीत्यनुसारेण हि शब्दस्यार्थो वितन्यते। लोकश्च शब्दक्रियानिमित्तायाः शक्तेर्व्यतिरेकमेवानुगच्छति। अव्यतिरेके हि सततं क्रियानिष्पत्तिप्रसङ्ग इत्युक्तम्।। ३८।।

अतः परमार्थपर्यालोचनां विना न निर्वृत्तिमुपलभसे तदत्रोच्यते किञ्चिदित्याह--

परमार्थे तु नैकत्वं पृथक्त्वाद्भिन्नलक्षणम्।
पृथक्त्वैकत्वरूपेण तत्त्वमेव प्रकाशते।। ३९।।

---

ब्रह्मसूत्रे। एवं कर्तृत्वादीनां शक्तिरूपाणां धर्माणामागन्तुकत्वे तेषां स्वाश्रयाद् व्यतिरेकः सिद्ध एवेति।

अयं भावः—असौ साधनरूपा शक्तिस्तावदात्यन्तिकाभ्यां स्वाश्रयाद् भेदाभेदाभ्यामनिर्वाच्या, केवलं भेदसहिष्णुना अभेदेन कल्पितेन भेदेन परमार्थेन चाभेदेन वा समन्विता इति कृत्वा भेदाभेदसमन्विता इत्युक्तम्। यद्यत्र शक्तेः साधनरूपायाः स्वाश्रयाद् भेदाभेदविषये निष्कोषणिकाम्=एकतरपक्षतत्त्वनिर्णयम्, करोषि=पृच्छसि—कृञ्वस्तयः क्रियासामान्यवचनाः, तर्हि त्वया सहास्माकं वैयाकरणनयमाश्रित्य भेदपक्ष एवाभिनिविष्टानां किं प्रयोजनम्।

सर्वथा शक्तिशक्तिमतोर्नियमेनाभेदो वा 'भेद एव वा भवतु। वैयाकरणनयानुसारिभिस्त्वस्माभिः सामर्थ्यम्=शक्तिरूपं साधनं स्वाश्रयाद् व्यतिरिक्तमेवोच्यते। यस्मात् शब्दप्रमाणको लोकः' शास्त्रेण चानेन स एव=लोक एव अनुगम्यते इत्याह—स शास्त्रेणानुगम्यत इति। अत्र तत्पदेन लोकस्य परामर्शो वाक्यार्थे प्राधान्यमाश्रित्य कृतो हेलाराजेन।

वस्तुतस्तु अप्रधानस्यापि शब्दस्य परामर्श एव तत्पदेन युक्त इत्युक्तं प्राक्। लोकः शास्त्रेणानुगम्यत इत्यस्य परिपोषस्तु तत्रैव कृतः। लोकप्रतीत्यनुसारेण हि शब्दस्यार्थो वितन्यते=विस्तरेण निरूप्यते। लोकश्च सर्वनिमित्तायाः शक्तेः स्वाश्रयाद् व्यतिरेकमेवानुगच्छति। ततोऽव्यतिरेके हि स्वाश्रयस्य सततं सत्त्वात् सततं क्रियानिष्पत्तिप्रसङ्ग इत्युक्तं प्रागिति।। ३८।।

अथ परमार्थपर्यालोचनां विना न निर्वृत्तिम्=शान्तिम् उपलभसे, तर्हि अत्रोच्यते किञ्चिदित्याह—परमार्थे त्विति।

पृथक्त्वाद् भिन्नलक्षणं पृथक्त्वव्यतिरिक्तं नैकत्वमस्ति, पृथक्त्वैकत्वरूपेण हि तत्त्वमेव प्रकाशते। तद्धि व्यवहारदशायां पृथक्त्वेन प्रकाशते। अविद्याविलये त्वेकत्वेन प्रकाशत इति बोद्धव्यम् ।। ३९ ।।

एतदेव व्याख्यातुमाह —

यत् पृथक्त्वमसन्दिग्धं तदेकत्वान्न भिद्यते।
यदेकत्वमसन्दिग्धं तत पृथक्त्वान्न भिद्यते ।। ४० ।।

असन्दिग्धं याथात्म्यावगमात् सन्देहं विना कृतं यत् पृथक्त्वम्, तदेकत्वान्न भिद्यते। यच्चैकत्वमसन्दिग्धं विगतभ्रमं तत् पृथक्त्वान् नानात्वान् न भिद्यते ।। ४० ।।

---

अस्यार्थः—परमार्थे तु=परमार्थदशायां तु एकत्वम्=अभेदः, पृथक्त्वाद्=भेदाद् भिन्नलक्षणं न; किन्तु एकत्वमेव भ्रान्त्या पृथक्त्वरूपेण भासते। एकत्वे परमार्थेऽधिष्ठानभूते पृथक्त्वस्य अविद्यया कल्पितत्वाद् एकस्मिन् चन्द्रे चन्द्रद्वित्ववत्। तदुक्तं नैषधीयचरिते—

अस्ति द्विचन्द्रमतिरस्ति जनस्य तत्र
भ्रान्तौ दृगन्तचिपिटीकरणादिरादिः।
स्वच्छोपसर्पणमपि प्रतिमाऽभिमाने
भेदभ्रमे पुनरमीषु न मे निमित्तम् ।। इति।

यतस्तत्त्वमेव=स्वगतसजातीयविजातीयभेदशून्यं ब्रह्म तत्त्वमेव अविद्यादशायां व्यवहारकाले पृथक्त्वरूपेण, विद्ययाऽविद्याविलये त्वेकत्वरूपेण प्रकाशत इति।

अयं भावः—यद्धि लोके पृथक्त्वलक्षण विश्ववैचित्र्यमनुभूयते ततो भिन्नलक्षणं पृथक्त्वव्यरिक्तं नैकत्वमस्ति, अविद्ययाध्यस्तस्य पृथक्त्वस्य अधिष्ठानभूतैकत्वानतिरेकात्। पृथक्त्वैकत्वरूपेण हि ब्रह्म तत्त्वमेव प्रकाशते। तद्धि व्यवहारदशायामविद्यया पृथक्त्वेन प्रकाशते। विद्ययाऽविद्याविलये तु परमार्थदशायां तदेव तत्त्वमेकत्वेन प्रकाशत इति बोद्धव्यमिति ।। ३९ ।।

पूर्वपद्यमेव व्याख्यातुमाह—यत् पृथक्त्वमिति।

अस्यार्थः—यत् पृथक्त्वम्=नानात्वम्, असन्दिग्धम्=आविद्यकभ्रान्तिरूपनिश्चयगोचरीभूतम्, अधिष्ठानभूते एकत्वे परमार्थेऽध्यस्तम्, तद् अधिष्ठानभूतादेकत्वान्न भिद्यते। यश्चैकत्वमसन्दिग्धम्=विद्यया याथात्म्यावगमात् सन्देहरहितम्, तद् भ्रान्तिगोचरात् पृथक्त्वान्न भिद्यते, तदधिष्ठानत्वादिति।

अयं भावः—असन्दिग्धम्=अधिष्ठानयाथात्म्यावगमात् सन्देहरहितं यत् पृथक्त्वं तदेकत्वात् स्वाधिष्ठानान्न भिद्यते। यश्चैकत्वमसन्दिग्धम्=विगतभ्रमम्,

तथा च तदैकत्वं काष्ठामनुप्राप्तम्, तदा सर्वत्र तदेव प्रकाशत इत्याह—

द्यौः क्षमा वायुरादित्यः सागराः सरितो दिशः।
अन्तःकरणतत्त्वस्य भागा बहिरवस्थिताः ॥ ४१ ॥

अथवास्तां कतिपयवस्तुविषयो नानात्वैकत्वविचारः। य इमे द्यौश्चाकाशं च पृथिवी च द्यावापृथिव्यौ महत्यौ महाभूतसंज्ञिके वस्तुनी, तदन्तरे च वायुरपि तृतीयः, तथादित्यलक्षणमपि सकलतेजसां प्रधानं दिव्यं तेजः, आपः सरित्समुद्रा वा विकाराः, सर्वाण्येतानि महाभूतानि, सकलजगज्जीवितभूतानि दिशो वा लोकव्यवहारनिमित्तभूताः, कालश्च वक्ष्यमाणः, तदेतत् सर्वम् 'अन्तःकरणतत्त्वस्य' इति अन्तःकरणसंज्ञकम् अन्तःकरणत्वेनान्तररूपतया प्रतिभासमानं यत्

---

प्रमितमिति यावत्, तत् पृथक्त्वात् = नानात्वात् स्वस्मिन् कल्पिताद् भ्रान्तिगोचरान्न भिद्यते, अधिष्ठानातिरिक्ताया अध्यस्तसत्ताया अनभ्युपगमादिति ॥ ४० ॥

तथा चैकत्वं यदा काष्ठामनुप्राप्तम् = दीर्घकालादेरनैरन्तर्यसत्कारसेवितत्वेन दृढभूमित्वमुपगतम्, तदा सर्वत्र = सर्वेषु भावेष्वेकत्वमेव भासत इत्याह— द्यौः क्षमा इति।

अस्यार्थः— द्यौः क्षमा = पृथिवी वायुरादित्यः सागराः सरितो दिश एतदात्मकं सकलं जगत्, अन्तःकरणतत्त्वस्य = अन्तःकरणस्वरूपस्य चित्तस्य = समष्टिरूपस्य वेधसो भागाः = वृत्तिरूपाः परिणामा बहिरवस्थिताः = व्यष्टिदेहाद् बहिरवस्थिताः, न तु समष्टिदेहाद् विराजो बहिरवस्थिता इति।

तदुक्तं परमार्थसारे—

विप्र पृथ्व्यादिचित्तस्थं न बहिष्ठं कदाचन।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते ॥

एवमन्तःकरणतत्त्वमपि स्वोपादानभूतया मायया कल्पितमेव। एवं मायाऽपि स्वाधिष्ठाने परस्मिन् ब्रह्मणि कल्पितैव, न परमार्थरूपेत्येकत्वमेव तत्त्वमवशिष्यत इति।

अयं भावः—आस्तां कतिपयवस्तुविषयो नानात्वैकत्वविचारः। यदिदं द्यौश्चाकाशश्च पृथिवी चेति त्रयम्, तत्र द्यावापृथिव्यौ महत्यौ महाभूतसंज्ञिके वस्तुनी, तयोर्मध्ये वायुरपि तृतीयः, तथाऽऽदित्यलक्षणमपि सकलतेजसां प्रधानं दिव्यं तेजः, आपः सरित्समुद्रा वा तद्विकाराः, सर्वाण्येतानि पृथिव्याकाशवायुतेजोजललक्षणानि महाभूतानि सकलजगतः प्रकृतित्वेन प्राणभूतानि दिशो वा लोकस्य तत्तद्देशयात्रारूपे गृहमार्गनिर्माणादिरूपे च व्यवहारे निमित्तभूताः कालश्च समनन्तरे द्वाचत्वारिंशपद्ये वक्ष्यमाणः। तदेतत् सर्वम्—अन्तःकरणतत्त्वस्य = अन्तःकरणसंज्ञकम् =

तत्त्वं तस्यैवैते भागाः प्रतिबिम्बका आभासा बहिरवस्थिताः। परमार्थे तु कीदृशोऽन्तर्बहिर्भावः ? एकमेव संविन्मयं परं शब्दब्रह्म तथा तथावस्थितमिति कारिकार्थः ॥ ४१ ॥

महाभूतरूपत्वं दिग्रूपतां चाभिधाय कालरूपतां तस्यैव प्रतिपादयन्नाह—

कालविच्छेदरूपेण तदेवैकमवस्थितम् ।
स ह्यपूर्वापरोऽभागः पररूपेण लक्ष्यते ॥ ४२ ॥

स ह्यपूर्वापरः परमार्थेन अथवा कालशक्तिवशात् चिरक्षिप्रादिक्रमेण लक्ष्यते ॥ ४२ ॥

तदेवं पदार्थसामर्थ्यमेव लोकप्रसिद्धया वैयाकरणमतेन साधनम्। अथवा

---

अन्तःकरणत्वेनान्तररूपतया प्रतिभासमानं यत्तत्त्वं तस्यैवैते भागाः प्रतिबिम्बका आभासा बहिरवस्थिताः। परमार्थे तु कीदृशोऽन्तर्बहिर्भावः ? एकमेव संविन्मयं परं शब्दब्रह्म तथा तथाऽवस्थितमिति कारिकार्थः।

अयञ्च कारिकोत्तरार्धार्थो हेलाराजमतमनुरुध्य दर्शितः। स्वाभिमतं तु व्याख्यानं प्राग् दर्शितम्। हेलाराजीयव्याख्यानं तु स्वरूपव्याक्रिययैव पराकृतमिति न तस्य पराक्रियायां प्रयत्नः कृतः।

तथा हि –'अन्तःकरणतत्त्वस्य' इत्यस्य—"आन्तररूपतया प्रतिभासमानं यत्तत्त्वं" तस्य इति, 'भागाः' इत्यस्य–' प्रतिबिम्बका आभासाः" इति व्याख्यानं कथं नाम प्रेक्षावत्प्रतिपत्तृभ्यो रोचेत ? "अन्तःकरणसंज्ञकम्" इति चानन्वितार्थकमित्यत्र न कस्यापि विमतिर्जायत इति ॥ ४१ ॥

संविन्मयस्य शब्दब्रह्मणः सर्वाधिष्ठानस्य महाभूतरूपत्वं दिग्रूपताञ्चाभिधाय कालरूपतां तस्यैव प्रतिपादयन्नाह—कालविच्छेदरूपेणेति।

अस्यार्थः—तदेव=शब्दब्रह्मतत्त्वमेव, एकं कालविच्छेदरूपेण=कालविभागरूपेण क्षणकाष्ठकालवादिनाऽवस्थितम्। हि=यतः, सः=शब्दब्रह्मात्मकः कालः, अपूर्वापरः, वस्तुतः पौर्वापर्यरहितः, अभागः=अवयवरहितोऽपि पररूपेण=कालोपाधिक्रियागतपौर्वापर्येण तदुपाधिक्रियासमूहगतभागवत्तया च पौर्वापर्यवानिव भागवानिव च लक्ष्यत इत्यर्थः।

अथवा परमार्थेनापूर्वापरोऽपि सः स्वगतकालशक्तिवशात् चिरक्षिप्रादिक्रमेण लक्ष्यते=प्रतीयत इत्यर्थः ॥ ४२ ॥

तदेवं पदार्थानां तत्तत्क्रियाजननसामर्थ्यमेव लोकप्रसिद्धया प्राप्तं वैयाकरणमतेन साधनम्। अथवा बुद्धया प्रकल्पितं पदार्थेषु करणत्वादिकमेव विज्ञानवादाभिप्रायेण साधनम्। क्रियासंसर्गिरूपं वा पदार्थेष्वनुयोगितया अभेदान्वयिपदार्थान्तरभूतं

बुद्धिप्रकल्पनारूपं विज्ञानवादाभिप्रायेण, संसर्गरूपं वा पदार्थान्तरभूतं संसर्गवादानुसारेण, अदृष्टलक्षणमपूर्वशब्दवाच्यं वा मीमांसकदृष्ट्या, ब्रह्मसम्बन्धिनी वा कालशक्तिरद्वैतदर्शनेन, क्रिया राजसी प्रवृत्तिरूपा वा सांख्यदर्शनानुसारेण, नित्यमेकं द्रव्यलक्षणं वा कालरूपं द्रव्यकालवादिनां मतेन विज्ञेयम्।

साधनप्रस्तावेन च कारकशब्दविचारः, तत् प्रसङ्गेन च हेतुलक्षणकारककरणतादर्थ्यानां भेदनिरूपणपूर्वकं लेशतः स्वरूपमुक्तम्। ततः शक्तेः किं सह प्रागुत्तरकालं वा भाव इति कालविकल्पः। सा च किं कर्मादिभेदेन भिन्नैव, आहोस्विदेकैव तथा तथा परिकल्प्यत इति संख्याविकल्पः।

सा च किं पदार्थाद् व्यतिरिक्तैवाथाव्यतिरिक्तेति व्यतिरेकाव्यतिरेकचिन्ता तत्प्रस्तावेन च ब्रह्मस्वरूपनिरूपणमिति प्रकरणस्य समुदायार्थः।

इदानीं प्रकृतं वैयाकरणमतमेवानुबध्नन् शक्तेर्व्यतिरेकमुखेन परिघटयन् सद्भावमुपपादयितुमाह।

दृष्टो ह्यव्यतिरेकेऽपि व्यतिरेकोऽन्वयेऽसति।
वृक्षाद्यर्थान्वयस्तस्माद् विभक्त्यर्थोऽन्य इष्यते ॥ ४३ ॥

---

संसर्गवादानुसारेण साधनम्, अपूर्वशब्दवाच्यमदृष्टलक्षणं वा मीमांसकदृष्ट्या साधनम्, ब्रह्मसम्बन्धिनी कालशक्तिर्वाऽद्वैतदर्शनानुसारि साधनम्, साधनस्य करणत्वादिकस्य आगन्तुकत्वेन कालिकत्वात्। राजसी=रजसःकार्यभूता प्रवृत्तिरूपा क्रिया वा सांख्यदर्शनानुसारेण साधनम्। क्रियायास्तज्जनकशक्तेश्च करणत्वादिकायास्तन्मते रजःप्रभवत्वात्। नित्यमेकं द्रव्यलक्षणं कालरूपं वा द्रव्यकालवादिनां गौतमीयानां मतेन साधनं विज्ञेयम्।

साधननिरूपणप्रसङ्गेन च कारकशब्दार्थविचारः, तत्प्रसङ्गेन च हेतुलक्षणकारकतादर्थ्यानां परस्परं भेदनिरूपणपूर्वकं लेशतः स्वरूपमुक्तम्। ततः क्रियया सह शक्तेर्भावः, किं वा क्रियातः प्राक् तस्याभावः, किं वा क्रियात उत्तरकालं तस्याभाव इति साधनरूपायाः शक्तेः कालविकल्पः।

सा च शक्तिः किं कर्मादिरूपधर्मिभेदेन भिन्नैव, आहोस्विद् धर्मिभेदेऽप्येकैव क्रियाभेदेन तथा तथा=करणत्वादिरूपैः परिकल्प्यत इति संख्याविकल्पः। सा च किं पदार्थाद् धर्मिणो व्यतिरिक्तैव, अथवाऽव्यतिरिक्ता इति व्यतिरेकाव्यतिरेकचिन्ता, तत्प्रसङ्गेन च ब्रह्मस्वरूपनिरूपणमितीयान् प्रकरणस्य प्रारब्धस्य समुदायार्थः।

इदानीं प्रकृतं वैयाकरणमतमेवानुरुन्धन् शक्तेः स्वाश्रयाद् व्यतिरेकमेवान्वयव्यतिरेकमुखेन परिघटयन्=साधयन् तस्याः सद्भावमुपपादयितुमाह—दृष्टो हीति।

अव्यतिरेके अभेदेऽपि प्रकृत्यर्थस्य 'वृक्षं वृक्षेण वृक्षा' इत्यादौ विभक्त्यर्थस्य साधनलक्षणस्य व्यतिरेकः। तथा तत्रैव विभक्त्यर्थस्यासत्यन्वये प्रातिपदिकार्थस्यान्वयोऽनुगमो दृष्टः। ततो मन्यामहे अस्ति कश्चिद् व्यतिरिक्तः प्रत्ययार्थभूतोऽनपह्नवनीयः साधनलक्षणः शक्तिशब्दवाच्योऽर्थ इति साधनसिद्धिः॥ ४३॥
इदानीं व्याख्यातस्योपसंहाराय व्याख्येयस्योपक्रमाय कारिकामाह—

**सामान्यं कारकं तस्य सप्ताद्या भेदयोनयः।**
**षट् कर्माख्यादिभेदेन शेषभेदस्तु सप्तमी॥ ४४॥**

'सामान्यं कारकम्' इति व्याख्यातार्थोपसंहारः। तस्य 'सप्त' इत्यादिना व्याख्येयार्थोपोद्घातः। तत्र आद्याः प्रधानभूताः सामान्यसाधनापेक्षया भेदरूपाश्च ता योनयः स्वकानां भेदानामिति भेदयोनयः। अथवा आद्याः सप्त भेदानां च स्वकानां योनयः कारणानि।

---

अस्यार्थः—हि=यतः प्रकृत्यर्थस्य अव्यतिरेकेऽपि=अभेदेऽपि साधनरूपस्य विभक्त्यर्थस्य 'वृक्षः वृक्षं वृक्षाय' इत्यादिव्यतिरेको=भेदो दृष्टः। तथा विभक्त्यर्थस्य साधनस्य असति अन्वये=अनुगमे व्यतिरेके भेदो दृष्टः। तस्मात् प्रकृत्यर्थादन्यो विभक्त्यर्थः साधनरूप इष्यत इति।

अयं भावः—'वृक्षो वृक्षं वृक्षेण वृक्षाय' इत्यादौ प्रकृत्यर्थस्य वृक्षादिरूपस्याभेदेऽपि विभक्त्यर्थस्य साधनरूपस्य कर्तृत्वकरणादिरूपेण व्यतिरेकः=भेदो दृष्टः। तथा तत्रैव विभक्त्यर्थस्य साधनस्यानुगमाभावेऽपि प्रातिपदिकार्थस्यानुगमो दृष्टः। इत्येवमन्वयव्यतिरेकयोर्भेदानुगमरूपयोर्दर्शनान्मन्यामहे "अस्ति कश्चिद् प्रकृत्यर्थाद् व्यतिरिक्तः प्रत्ययार्थरूपः साधनलक्षणः शक्तिशब्दवाच्योऽर्थोऽपलपितुमशक्यः" इति पदार्थसामर्थ्यलक्षणसाधनसिद्धिः॥ ४३॥

इदानीं पूर्वव्याख्यानं प्रकरणार्थमुपसंहरन् व्याख्येयसाधनभेदस्योपक्रमाय कारिकामाह—सामान्यं कारकमिति।

अस्यार्थः—यत्कारकम्=सामर्थ्यलक्षणं साधनं पूर्वं व्याख्यातं तत्सामान्यम्, तस्य=साधनसामान्यस्य, भेदयोनयः=विभागकारणानि, आद्याः=स्वस्वावान्तरविभागशक्तीनां प्रथमाः प्रधानभूता वा, सप्तशक्तयः।

कास्ता इति जिज्ञासायामाह षट्कर्माख्यादिभेदेनेति। कर्तृकर्मकरणसम्प्रदानापादानाधिकरणरूपव्यपदेशभेदेन षट् शक्तयः, शेषभेदस्तु=कारकप्रातिपदिकार्थव्यतिरिक्तः, सम्बन्धविशेषस्तु सप्तमीसाधनशक्तिरिति कृत्स्नस्य साधनसमुद्देशप्रकरणस्य सङ्गतिरिति।

अयं भावः—सामान्यं कारकमिति पूर्वव्याख्यातस्य साधनरूपस्यार्थस्योपसंहारः। 'तस्य सप्ताद्याः' इति व्याख्येयस्य शक्तिसप्तकरूपस्यार्थस्य उपोद्घातः=

कथमित्याह—'षट्कर्माख्यादिभेदेन' इत्यादि। कर्मादिव्यपदेशभेदेन सप्त कारकशक्तयो लक्ष्यन्तेऽधुनेति साधनसमुद्देशसङ्गतिः ॥ ४४ ॥

कर्मादिभेदेन सप्तभेदभिन्नं तावत् कारकमुद्दिष्टम्। अथ तदनुक्रमेण कर्म तावत् संख्याभेदप्रदर्शनपूर्वकं व्याख्यातुमाह—

**निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम्।**
**तत्रेप्सिततमं कर्म चतुर्धान्यत् तु कल्पितम् ॥ ४५ ॥**

कारकविशेषनिर्देशश्च विभक्त्यनुक्रमानुसारेणेह प्रदर्शितः। सूत्रेषु तु विप्रतिषेधपरिभाषामनुरुध्यापादानादिक्रमेणोक्तम्। तत्र विभक्तयः स्वौजसमाद्याः। कारकमभिहितमनभिहितं च भवति। तत्र प्रथमाभिहितकारकविभक्तिः प्रातिपदिकार्थमात्र एव विधीयते। द्वितीयादयश्च सर्वा अनभिहिते कारके विभक्तय इत्येकप्रक्रमत्वाद् द्वितीयाद्यर्थानुसारेणैवोपक्रमते। द्वितीयाद्यर्थश्च कर्मादिः।

---

उपक्रमः, तत्र। आद्याः=स्वस्वावान्तरभेदापेक्षया प्रधानभूताः, साधनसामान्यापेक्षया भेदरूपाश्च=विशेषरूपाश्च ताः स्वकानामवान्तरभेदानां योनयः कारणानि। अथवा आद्याः प्रथमाः सप्तशक्तयः स्वकानां भेदानां योनयः=कारणानि।

कथं सप्तशक्तय इति जिज्ञासायामाह—षट्कर्माख्यादिभेदेनेति। कर्तृकर्मकरणादिव्यपदेशभेदेन षट्, शेषव्यपदेशभेदेन च सप्तमी इत्येवं सप्तकारकशक्तयो लक्ष्यन्तेऽधुनेति साधनसमुद्देशनाम्नोऽस्य प्रकरणस्य संगतिरिति ॥ ४४ ॥

वक्ष्यमाणकर्मादिभेदेन भेदसप्तकभिन्नं तावत् कारकसामान्यं संक्षेपेण कीर्तितम्। अथेदानीं तदनु=तस्य पश्चात् क्रमेण=विभक्त्यनुक्रमानुसारेण "स्वौजसमौट्०" (पा० ४।१।२) निर्दिष्टेन प्रथमं संख्याभेदप्रदर्शनपूर्वकं कर्मव्याख्यातुमाह—निर्वर्त्यं चेति।

अस्यार्थः—तत्र=कारकषट्कमध्ये ईप्सिततमम्=कर्तुः क्रिययाऽऽप्तुमिष्यमाणतमम्, कर्म निर्वर्त्यञ्च विकार्यञ्च प्राप्यञ्चेति त्रिधा मतम्। अन्यत्तु=अनीप्सितं तु कर्म अग्रिमपद्ये वक्ष्यमाणभेदेन चतुर्धा कल्पितमिति।

अयं भावः—इह साधनसमुद्देशनाम्नि प्रकरणे "स्वौजसमौट्०" इति सूत्रनिर्दिष्टविभक्त्यनुक्रमानुसारेण कर्मादिकारकविशेषनिर्देशः प्रदर्शितः। अष्टाध्याय्यां तु विप्रतिषेधसूत्रमनुरुध्यापादानादिक्रमेण स उक्तः। विभक्तयः स्वौजसमादयः। तत्र कारकमभिहितमनभिहितञ्च भवति। तत्राभिहितकारकविभक्तिः प्रथमा प्रातिपदिकार्थमात्र एव विधीयते। द्वितीयादयश्च सर्वा अनभिहिते कारके विभक्तय इति विप्रतिषेधसूत्रानुरोधेन अष्टाध्याय्यां कृतस्यापादानादिकारकविशेषनिर्देशस्यानेकप्रक्रमत्वात् 'स्वौजसमौट्०' इति द्वितीयादिनिर्देशस्य चैकप्रक्रमत्वाद् द्वितीयाद्यर्थानुसारे-

यदुक्तम्—'कर्मणि द्वितीया' (पा० २।३।२) इत्यादि। अतः कर्मण एवादौ व्याख्या-वसरप्राप्ता। तत्र कर्त्तुः क्रियया यदीप्सिततममाप्तुमिष्यमाणतमं तदेव लक्षणं प्रथमसूत्रनिर्दिष्टम्। कर्म त्रिधा त्रिभिः प्रकारैर्निर्वर्त्यविकार्यप्राप्यरूपैर्भिन्नमनेका-न्तिवन्निर्दिष्टं बोद्धव्यम्।

अथ अन्यत् सूत्रान्तरनिर्दिष्टमपि भेदयितुमाह—'चतुर्धान्यत्तु कल्पितम्' इति॥ ४५॥

कथमित्याह—

**औदासीन्येन यत् प्राप्यं यच्च कर्तुरनीप्सितम्।**
**संज्ञान्तरैरनाख्यातं यद् यच्चाप्यन्यपूर्वकम्॥ ४६॥**

औदासीन्येन ताटस्थ्येन यत् प्राप्यम्। यथा ग्रामं गन्तुर्वृक्षमूलादि। तथा यत् कर्तुरनीप्सितं चोरविषादि। एतत् ''तथायुक्तं चानीप्सितम्'' (पा० १।४।५०) इति द्वितीयसूत्रनिर्दिष्टं तावद् द्विविधम्। तथा च येनैव प्रकारेण कर्तुरीप्सिततमं

---

णैवेहोपक्रमते। द्वितीयाद्यर्थश्च कर्मादिः। यदुक्तम्—"कर्मणि द्वितीया" (पा० २।३।२) इत्यादि। अतः कर्मण एवादौ व्याख्या क्रमप्राप्ता। तत्र कर्त्तुः क्रियया यदीप्सित-तममाप्तुमिष्यमाणतमं तदेव कर्मलक्षणम् "कर्त्तुरीप्सिततमं कर्म" (पा० १।४।४९) इति प्रथमसूत्रनिर्दिष्टम्। कर्म त्रिधा=त्रिभिः प्रकारैः, निर्वर्त्यविकार्यप्राप्यरूपैर्वक्ष्य-माणैर्भिन्नमनेकान्तिवत्=सव्यभिचारवत्—एकान्तो नियमो व्याप्तिः, तदभावोऽने-कान्तम्, व्याप्त्यभावरूपो व्यभिचारः, सोऽस्यास्ति यस्य हेतोः सोऽनेकान्ती व्यभि-चारी, तद्वत् त्रिविधं कर्म। सव्यभिचारो हेतुरपि साधारणासाधारणानुपसंहारि-भेदात् त्रिविधः।

यद्वा—एकान्ती=व्याप्तिमान् हेतुः, तद्भिन्नोऽनेकान्ती व्यभिचारी= व्याप्त्यभाववान् हेतुस्तद्वत् त्रिविधं कर्म निर्दिष्टं बोद्धव्यम्।

अथ अन्यत् सूत्रान्तरनिर्दिष्टमपि कर्म भेदयितुम्=भेदेन विभागेन बोधयितु-माह—चतुर्धाऽन्यत्तु कल्पितमिति॥ ४५॥

कथमन्यच्चतुर्धा इत्याशङ्क्याह—औदासीन्येनेति।

अस्यार्थः—औदासीन्येन=ताटस्थ्येन—ईप्सिततमत्वानीप्सितत्वविरहेऽपि यत्प्राप्यं क्रियाजन्यफलाश्रयीभूतम्। यच्च कर्त्तुरनीप्सितम्=ईप्सितादन्यद् द्वेष्यं चोरविषादि। यत् संज्ञान्तरैः=कर्मसंज्ञाभिन्नाभिः, अपादानादिसंज्ञाभिरनाख्यातम-कथितमपि प्रकृतक्रियानिमित्तम्। तथा यच्चापि अन्यपूर्वकम्=अन्यत् कारकम्, कर्मातिरिक्तमपादानादिकारकं पूर्वम्=पूर्वकालप्राप्तं यस्य तत्तथा इति।

अयं भावः—औदासीन्येन=ताटस्थ्येन ईप्सिततमत्वानीप्सितत्वाभावपुरस्सरं यत् प्राप्यम्, यथा ग्रामं गन्तुर्वृक्षमूलादिकम्, तथा यत्कर्त्तुरनीप्सितं द्वेष्यं चोरव्याघ्र-

तेनैव चेत्, अनीप्सितम्---ईप्सितादन्यद् द्वेष्यं विषादि, इतरच्च यदौदासीन्येन प्राप्यं वृक्षमूलादि युक्तम्। तथा संज्ञान्तरैः अपादानादिसंज्ञाभिरनाख्यातमपि क्रियानिमित्तम्। एतत् 'अकथितं च" ( पा० १।४।५१ ) इति तृतीयसूत्रनिर्दिष्टं वेदितव्यम्।

तथा 'यच्चाप्यन्यपूर्वकम्' इति अन्यत् कारकं पूर्वं यस्य। यथा 'देवदत्तमभिक्रुध्यति, देवदत्तमभिद्रुह्यति' इति।

अत्र हि "क्रुधद्रुहोरुपसृष्टयोः कर्म" ( पा० १।४।३८ ) इत्यनेन क्रुधद्रुहोरुपसृष्टयोः उपसर्गसंवद्धयोः यं प्रति कोपः तत् कारकं पूर्वसूत्रेण संप्रदानसंज्ञमपि कर्मसंज्ञमेव भवति। तथा 'अक्षान् दीव्यति' इत्यत्र, 'दिवः कर्म च' (पा० १।४।४३) इत्यनेन दिवः साधकतमं यत् पूर्वसूत्रेण करणसंज्ञमेव कर्मसंज्ञं भवति ॥ ४६ ॥

अथ निर्वर्त्यादि त्रिविधमुद्दिष्टं व्याख्यातुमाह—

सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥ ४७ ॥

---

विषादि। एतत्—"तथायुक्तं चानीप्सितम्" ( पा० १।४।५० ) इति द्वितीयसूत्रनिर्दिष्टं तत्तावद् द्विविधम्—द्वेष्यं चोरविषादि, औदासीन्येन प्राप्यं वृक्षमूलादि। एतत्सूत्रार्थस्तु—तथा च येनैव प्रकारेण कर्त्तुरीप्सिततमं युक्तम्, तेनैव प्रकारेण चेत्, अनीप्सितम्=ईप्सितादन्यद् द्वेष्यम्, अन्यच्च यदौदासीन्येन प्राप्यं युक्तम्, तथा संज्ञान्तरैरपादानादिसंज्ञाभिरनाख्यातमपि=अकथितमपि क्रियानिमित्तम्। एतच्च "अकथितञ्च" ( पा० १।४।५१ ) इति तृतीयसूत्रनिर्दिष्टं कर्म वेदितव्यम्।

यच्चाप्यन्यपूर्वकमिति। यच्चान्यपूर्वकं तदपि इति योजना। अन्यत् कारकं पूर्वम्=पूर्वकालिकं यस्य तत्तथा इत्यर्थः। यथा—"देवदत्तमभिक्रुध्यति देवदत्तमभिद्रुह्यति" इति।

अत्र हि "क्रुधद्रुहोरुपसृष्टयोः कर्म" ( १।४।३८ ) इत्यनेन 'क्रुधद्रुहोरुपसृष्टयोरुपसर्गसम्बद्धयोर्यं प्रति कोपः, तत् कारकम्—"क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" ( पा० १।४।३७ ) इति पूर्वसूत्रेण सम्प्रदानसंज्ञमपि कर्मसंज्ञमेव भवति। तथा "अक्षान् दीव्यति" इत्यत्र "साधकतमं करणम्" ( पा० १।४।४२ ) इत्यनेन पूर्वसूत्रेण दिवः साधकतमं यत् करणसंज्ञकमेव, तत् ' दिवः कर्म च" ( पा० १।४।४३ ) इत्यनेन कर्मसंज्ञं भवतीति ॥ ४६ ॥

अथ निर्वर्त्यादिकं कर्म यत् पूर्वं त्रिविधमुद्दिष्टम्=संक्षेपेण नाममात्रेण कीर्तितम्, तद् विस्तरेण विवरीतुमाह—सती वा इति।

यस्य निर्वर्त्यमानस्य घटादेः प्रकृतिः सती वा, यथा मृदादिका; अविद्यमाना वा, यथा शब्दः संयोगादेः ( शब्दस्य संयोगादिः ) परिणामिनी अभेदेन नाश्रीयते मृदं घटं करोति इत्याद्येवंरूपतया न विवक्ष्यते; किं तर्हि, 'मृदा घटं करोति' इत्यादिभेदेनैव यदा प्रकृत्या सह विवक्षा, तदा तन्निर्वर्त्यं कर्म प्रचक्षते कर्मविदः ॥ ४७ ॥

विकार्यं व्याख्यातुमाह—

**प्रकृतेस्तु विवक्षायां विकार्यं··· ··· ··· ··· ··· ··· ··· ···**

प्रकृतेः कारणस्य परिणामित्वेन यदा विवक्षा क्रियते मृदं घटं करोति, काशान् कटं करोति, अङ्गारान् भस्म करोति' इत्यादि, तदा विकार्यं कर्म प्रचक्षते ।

---

अस्यार्थः—यस्य निर्वर्त्यमानस्य = निष्पाद्यमानस्य घटादेः = प्रकृतिः उपादानकारणम् । सती वा = उत्पत्तेः पूर्वं विद्यमाना वा, यथा मृदादिकाः, कार्योत्पत्तेः पूर्वमविद्यमाना वा, यथा शब्दस्य संयोगादिः । अभिघाताख्यः संयोगः, वंशादेर्दलद्वयविभागश्च शब्दस्य प्रकृतिः । यथा "शब्दः संयोगादेः" इति पाठे तु "यथा" शब्दः कर्णाद्यभिघातरूपस्वसंयोगस्य प्रकृतिः, यथा वा भुशुण्डीमुच्यमानगोलकशब्दो हृदयदलद्वयविभागस्य प्रकृतिरिति ।

वस्तुतस्तु 'शब्दः संयोगादेः" इति पाठ एव युक्तः । वैयाकरणनये मीमांसकमतवत् शब्दस्य क्रियादिमत्त्वेन द्रव्यत्वात् प्रकृतित्वस्यौचित्यात् । तदुक्तं काणादगौतमीयैः—"समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम्" ( कारिकावली ) ।

अत्र कार्योत्पत्तेः पूर्वं प्रकृतेरविद्यमानत्वञ्च अनभिव्यक्तस्वरूपं वेदितव्यम् । स्वरूपतस्तदानीमसत्त्वे उपादानकारणत्वरूपप्रकृतित्वविलोपापत्तेरिति । यद्वा, घटादिकार्यसहभाविन एव मृदादेस्तत्प्रकृतित्वम् न तु ततः पूर्वभाविन इति रीत्या प्रकृतेरविद्यमानत्वम् । सा च परिणामिनी प्रकृतिर्यदि अभेदेन नाश्रीयते, 'मृदं घटं करोति' इत्याद्येवंरूपतया न विवक्ष्यते, किं तर्हि, यदा प्रकृत्या सह 'मृदा घटं करोति' इत्यादिभेदेनैव विवक्षा, तदा तन्निर्वर्त्यं कर्म प्रचक्षते कर्मविद इति ।

अयं भावः—यथा विद्यमानाया अविद्यमानाया वा प्रकृतेर्विकृत्या सह 'मृदं घटं करोति' इत्यादिरूपतयाऽभेदविवक्षा, तदा न तन्निर्वर्त्यं कर्म, प्रकृतिरूपेण पूर्वसिद्धत्वात् । यदा तु भेदविवक्षा तयोः, मृदा घटं करोतीति, तदा तन्निर्वर्त्यं कर्म, प्रकृतेः पूर्वसिद्धत्वेऽपि तदानीं विकृतेर्निर्वर्त्यमानत्वादिति ॥ ४७ ॥

विकार्यं कर्म व्याख्यातुमाह—प्रकृतेस्त्विति ।

अस्यार्थः—प्रकृतेरुपादानकारणस्य अभेदेन परिणामित्वेन विवक्षायाम् 'मृदं घटं करोति' इत्यादौ घटादिकं विकार्यं कर्म केचित् प्रचक्षत इति पूर्वेण सम्बन्धः ।

अथापरस्य मतान्तरोपन्यासच्छलेन प्रकारभेदस्य कथनवाञ्छया निर्वर्त्य-विकार्ये निरूपयितुमाह—

कैश्चिदन्यथा ।
निर्वर्त्यं च विकार्यं च कर्म शास्त्रे प्रदर्शितम् ।। ४८ ।।

कथमित्याह—

यदसज्जायते सद् वा जन्मना यत् प्रकाश्यते ।
तन्निर्वर्त्यं विकार्यं च कर्म द्वेधा व्यवस्थितम् ।। ४९ ।।

यदसद् वैशेषिकाद्यनुसारेण जायते, सांख्यमतेन सदेव वा जायते तदुभयमपि जन्मना प्रकाश्यमानत्वान्निर्वर्त्यं कथ्यते ।

एतदुक्तं भवति सत्कार्यवादिनामस्माकं निर्वर्त्यं कर्मास्तीति वक्तुं पार्यते । सती तस्य प्रकृतिर्भवतु, असती वा । सर्वथा जन्मना प्रकाश्यमानत्वेन निर्वर्त्यत्वस्य

---

कैश्चित्तु अन्यथा = भिन्नप्रकारेण, "यदसज्जायते" ( वा० प० ३, साधन० ४९ ) इति, "प्रकृत्युच्छेदसंभूतम्" ( वा० प० ३, साधन० ५० ) इति च । निर्वर्त्यश्च विकार्यश्च कर्म व्याकरणशास्त्रे प्रदर्शितमिति ।

अयं भावः—यदा प्रकृतेरभेदेन परिणामित्वेन विवक्षा क्रियते 'मृदं घटं करोति, काशान् कटं करोति, अङ्गारान् भस्म करोति' इत्यादिरीत्या, तदा विकार्यं प्रचक्षते । 'कैश्चिदन्यथा' इत्यादिना त्वपरस्य मतान्तरोपन्यासच्छलेन निर्वर्त्य-विकार्ययोः प्रकारभेदस्य कथनवाञ्छया ते निरूपयितुमुपक्रान्ते इति ।। ४८ ।।

कथं निर्वर्त्यविकार्ययोर्लक्षणरूपप्रकारभेद इत्याह—यदसज्जायत इति ।

अस्यार्थः—यद् उत्पत्तेः पूर्वमसद् घटादिकं कार्यं जायत इति न्यायनयः, वा=अथवा, उत्पत्तेः पूर्वं यद् घटादिकं स्वोपादानकारणे सूक्ष्मेण शक्तिरूपेणावस्थितम्, तिरोधाय यद् जन्मना प्रकाश्यते=आविर्भाव्यत इति सत्कार्यवादिनां सांख्यानां नयः, तदुभयं स्वोत्पत्तेः पूर्वमसत् सद्वा जन्मना प्रकाश्यमानत्वात् प्रकृतिविवक्षायां निर्वर्त्यं कर्म कथ्यते । विकार्यश्च = विकार्यं तु कर्म वक्ष्यमाणरीत्या द्वेधा व्यवस्थितमिति ।

अयं भावः—यद् न्यायवैशेषिकाद्यनुसारेणोत्पत्तेः पूर्वमसद् बन्ध्यापुत्रादिवदलीकं कारणसामग्र्या जायते, सांख्यमतेनोत्पत्तेः पूर्वं सदेव वा जायते, तदुभयमप्युत्पत्तेः पूर्वमसदनभिव्यक्तं वा जन्मना प्रकाश्यमानत्वान्निर्वर्त्यं कर्म कथ्यते ।

एतदुक्तं भवति—सांख्यानामिवाद्वैतवादानुसारेण न सत्कार्यवादिनामस्माकं मते निर्वर्त्यं कर्म अस्तीति वक्तुं शक्यते, तस्य प्रकृतिः प्रागुक्तरीत्या सती असती

न काचित् क्षतिः। सदसद् वा जन्मना यत् प्रकाश्यते तन्निर्वर्त्यम्। असज्जायते इत्यविद्यमानप्रकृतेः कर्मणो निर्वर्त्यमानता पूर्वोक्तैवानूदिता, सज्जन्मना प्रकाश्यत इति।

अयमत्र विशेषः—तद्यथा 'पुत्रं प्रसूते, शब्दं प्रयुङ्क्ते' इत्यत्र कुक्षिस्थस्य सत एव पुत्रस्य, विवक्षितस्य च शब्दस्य प्रसवप्रयोगाभ्यां प्रकाशनम्। सतः प्रकाशनं हि जन्मात्र विवक्षितम्। जन्मग्रहणेन प्रकृतिविवक्षायां विकार्यतामाह। अन्यथाभिव्यज्यमानस्य निर्वर्त्यकर्मत्वाभावमपि जन्मग्रहणेनाह। तेन वेदमधीते' इत्यादौ वेदादेरध्ययनेन प्रकाश्यमानस्य निर्वर्त्यकर्मत्वाभावात् ''कर्म(णि) निर्वर्त्यमानविक्रियमाणे इति चेत् वेदाध्यायादीनामुपसंख्यानम्'' (वा० ३।२।१) इत्युच्यते।

इत्थं च प्रकृत्यर्थविवक्षायामेवैतन्निर्वर्त्यं कर्मोक्तमिति 'कैश्चिदन्यथा' इत्यसङ्गतम् (इति नासंगतम्)। तस्मात् सदसत्कार्यवादिमतभेदेनैतद् व्याख्येयम्।

पूर्वं लोकप्रतीत्यनुसारेणोक्तम्, इह तु तीर्थिकमताश्रयेणापीति विशेषः ॥४९॥

---

वा भवतु, सर्वथा जन्मना प्रकाश्यमानत्वेन तत्र निर्वर्त्यत्वस्य न काचित् क्षतिः, यत् सदसद्वा जन्मना प्रकाश्यते तन्निर्वर्त्यम्। असज्जायते इत्यविद्यमानप्रकृतेः=अविवक्षितप्रकृतिकस्य कर्मणो निर्वर्त्यमानता 'सती वाऽविद्यमाना वा'(वा० प० ३, साधन० ४७) इत्यादिना पूर्वोक्तैवानूदिता, सज्जन्मना प्रकाश्यत इति।

अयमत्र विशेषः—तद् यथा 'पुत्रं प्रसूते', 'शब्दं प्रयुङ्क्ते' इत्यत्र कुक्षिस्थस्य सत एव पुत्रस्य, विवक्षितस्य च शब्दस्य प्रसवप्रयोगाभ्यां प्रकाशनम्। अत्र विकार्यत्वस्थापनम्। सतः प्रकाशनं हि जन्मात्र विवक्षितम्। 'जन्मना यत्प्रकाश्यते' इत्यत्र जन्मग्रहणेन प्रकृतिविवक्षायां पूर्वोक्तां विकार्यतामेवान्वाह। अन्यथा=प्रकृत्यर्थाविवक्षायाम्, अभिव्यज्यमानस्य नित्यकर्मत्वाभावमपि जन्मग्रहणेनाह। तेन वेदमधीते' इत्यादावध्ययनस्य वेदप्रभृतिप्रकृतित्वाविवक्षायां वेदादेरध्ययनेन प्रकाश्यमानस्य नित्यकर्मत्वाभावात्—'कर्मणि निर्वर्त्यमानविक्रियमाणे इति चेत्, वेदाध्यायादीनामुपसंख्यानम्'' इति वार्त्तिकमुच्यते।

इत्थञ्च प्रकृत्यर्थविवक्षायामेवैतन्निर्वर्त्यं कर्मोक्तमिति—'कैश्चिदन्यथा' इति निर्वर्त्यकर्माभिप्रायेण प्रयुक्तं नासंगतम्। तस्मात् सदसत्कार्यवादिमतभेदेनैतद् व्याख्येयम्।

पूर्वं लोकप्रतीत्यनुसारेणैव केवलेन निर्वर्त्यविकार्यकर्मभेद उक्तः, इह तु सदसत्कार्यवादितीर्थिक( शास्त्रकार )मताश्रयेणापीति विशेषः।

इदन्त्ववधेयम्—निर्वर्त्यांशे एवात्र पूर्वस्माल्लक्षणभेदः, न तु विकार्यांशे। विकार्यांशे तु विभागकथनमात्रम्। अग्रिमकारिकायां तु विभक्तस्य विकार्यस्य प्रतिव्यक्ति पूर्वलक्षणादन्यथालक्षणभेदकथनमिति ॥ ४९ ॥

'विकार्यं च कर्म द्वेधा व्यवस्थितम्' प्रतिव्यक्ति लक्षणं वक्तुं व्यक्तिभेदः पूर्वमुक्तः, लक्षणमाह—

प्रकृत्युच्छेदसंभूतं किञ्चित् काष्ठादिभस्मवत् ।
किञ्चिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ।। ५० ।।

निरन्वयविनाशात् प्रकृतेरुच्छेदः। तद्यथा काष्ठादेर्भस्मादि। काष्ठानि भस्म करोति। पूर्ववत् प्रकृतिविकारयोः क्रियासम्बन्धो योज्यः. पूर्वेण तु लक्षणेन निर्वर्त्यमेतत् कर्म प्रकृतेरविवक्षायाम्। विवक्षायां तु विकार्यम्। इह त्वविवक्षाया-

---

विकार्यस्य कर्मणः प्रतिव्यक्ति लक्षणं विवक्षता---'विकार्यञ्च कर्म द्वेधा व्यवस्थितम्' इति व्यक्तिभेदः पूर्वमुक्तः। इदानीं लक्षणमाह–प्रकृत्युच्छेदसंभूतमिति।

अस्यार्थः---प्रकृत्युच्छेदसंभूतम् = प्रकृतेरुच्छेदो निरन्वयो विनाशस्तस्मात् संभूतं जातं किञ्चिद् विकार्यं कर्म। तत्र दृष्टान्तः - काष्ठादिभस्मवदिति। काष्ठादिरूपायाः प्रकृतेर्विकारभूतम्, यथा भस्म करोत्यादेर्विकार्यं कर्म। इदञ्च---सती वाऽविद्यमाना वा इति पूर्वलक्षणेन प्रकृतेरविवक्षायां निर्वर्त्यं कर्म, प्रकृतिविवक्षायां तु विकार्यं कर्म। अनेन द्वितीयलक्षणेन तु प्रकृतेरविक्षायामपीदं विकार्यं कर्म, काष्ठादिकमुपमृद्य भस्मोपजातमिति रूपविशेषादेव प्रतीतेः।

किञ्च, पूर्वलक्षणे प्रकृतिः काष्ठादिका साक्षाद् विकार्यं कर्म तदभेदेन विकारोऽपि, द्वितीयलक्षणे तु प्रकृतेरविवक्षायां साक्षाद् विकार एव विकार्यं कर्मेति विशेषः। किञ्चित् तु कर्म गुणान्तरोत्पत्त्या = संस्थानान्तरापत्त्या विकार्यं कर्म, सुवर्णादिविकारवत्, यथा सुवर्णपिण्डविकारभूते कुण्डले इति।

एतच्च विकार्यं कर्म प्रकृतिविवक्षायां पूर्वलक्षणेनापि संगृहीतम्। अत्र प्रकृतेरविवक्षायां तु द्वितीयलक्षणेन कुण्डलं विकार्यं कर्म। प्रकृतेर्विवक्षाऽविवक्षे त्वत्र प्रयोगाप्रयोगरूपे बोध्ये इति।

अयं भावः—प्रकृतेर्विकारे सत्त्वमन्वयः। यथा चतुष्कपादादौ काष्ठस्य। प्रकृतेर्निरन्वयो विनाशः, यथा भस्मनि काष्ठस्य। तत्र निरन्वयविनाशात् प्रकृतेरुच्छेदः। तद्यथा—काष्ठादेर्भस्मादिप्रकृत्युच्छेदसंभूतो विकार इति विकार्यं कर्म। 'काष्ठानि भस्म करोति' इति। अत्र प्रकृतिविकारयोः क्रियासम्बन्धः पूर्ववद् योज्यः। तथा हि—अत्र प्रकृतिभूतानि काष्ठानि साक्षाद् विकार्यं कर्मेति तेषां क्रियासम्बन्धः प्राक्, तदभेदेन भस्मरूपो विकारोऽपि विकार्यं कर्मेति, तस्य क्रियासम्बन्धः पश्चादिति। अत्र काष्ठादिरूपायाः प्रकृतेरप्रयोगरूपायामविवक्षायाम् "सती वाऽविद्यमाना वा" इत्यादिना पूर्वेण तु लक्षणेनैतद् भस्मरूपं निर्वर्त्यं कर्म। प्रकृतिविवक्षायां तु काष्ठरूपा प्रकृतिर्विकार्यं कर्म तदभेदेन भस्मापि। इह तु 'केश्चिदन्यथा' इति

मपि प्रकृतौ भस्मादिकार्यं रूपविशेषादेव काष्ठादिकमुपमृद्योपजातमिति प्रतीतेर्विकार्यम् ।

पूर्वत्र तु प्रकृतिः साक्षाद् विकार्यं कर्म, तदभेदेन विकारोऽपि । इह तु साक्षाद् विकार एवेति विशेषः ।

काष्ठानि दहतीति तु प्रकृतिरेव शब्दवती, सामर्थ्यगम्यस्तु विकारो भस्म ।

एवं 'काण्डानि लुनाति, चर्म करोति' इत्यादौ वेदितव्यम् ।

काचित्तु प्रकृतिरत्यजन्ती स्वरूपं संस्थानान्तरापत्त्या विकृतेत्युच्यते इति गुणान्तरस्य सन्निवेशादेर्धर्मस्योत्पत्त्योपलक्षितमपरं विकार्यं कर्म । तद्यथा 'सुवर्णं कुण्डले भवतः' इति ।

असत्कार्यनये यद्यप्यत्रापूर्वोत्पत्तिः, तथापि प्रत्यभिज्ञानाल्लोके तत्त्वाध्यवसायाद् गुणान्तरमात्रापत्तिरुच्यते । एतच्च प्रकृतिविवक्षायां पूर्वलक्षणेनापि संगृहीतम् ॥ ५० ॥

---

द्वितीयलक्षणे प्रकृतेरविवक्षायामपि भस्मादिकार्यं रूपविशेषादेव=आकारविशेषादेव काष्ठादिकमुपमृद्योपजातमिति प्रतीतेर्विकार्यं कर्म ।

पूर्वलक्षणे तु प्रकृतिः साक्षाद् विकार्यं कर्म, तदभेदेन विकारोऽपि तथा । द्वितीयलक्षणे तु साक्षाद् विकार एव विकार्यं कर्म प्रकृतेरविवक्षितत्वादिति विशेषः ।

भस्मादिरूपविकाराप्रयोगरूपायां विकाराविवक्षायां तु 'काष्ठानि दहति' इति प्रकृतिरेव शब्दवती=शब्दोपात्ता विकार्यं कर्म, भस्मरूपो विकारस्तु सामर्थ्यगम्यो न शब्दवाच्य इति न तत्र विकार्यकर्मविचारचर्चा ।

एवं 'काण्डानि लुनाति, चर्म करोति' इत्यादौ गृहव्याघ्राद्याकारोपानदादिरूपविकाराविवक्षायां प्रकृतेः काण्डादेर्विकार्यत्वमवगन्तव्यम् ।

काचित्तु प्रकृतिरत्यजन्ती स्वं रूपं संस्थानान्तरापत्त्या विकृतेत्युच्यत इति गुणान्तरस्य सन्निवेशादेर्धर्मस्य उत्पत्त्योपलक्षितमपरं विकार्यं कर्म । तद्यथा 'सुवर्णं कुण्डले भवतः' इति ।

असत्कार्यवादिनये यद्यप्यत्रापूर्वस्य कुण्डलरूपकार्यस्योत्पत्तिः, तथापि तदेवेदं सुवर्णमिति प्रत्यभिज्ञानाल्लोके तत्त्वाध्यवसायाद्=अभेदनिश्चयात् सन्निवेशान्तरमात्रापत्तिरुच्यते, न त्वपूर्वकार्योत्पत्तिरिति । एतच्च विकार्यं कर्म प्रकृतिविवक्षायां पूर्वलक्षणेनापि संगृहीतम् । प्रकृतेरविवक्षायां तु द्वितीयलक्षणेनैवेति । तदिदमत्र निर्वर्त्यविकार्यकर्मविचारसारम् ।

"सती वाऽविद्यमाना वा" इति कारिकोक्तं प्रथमं निर्वर्त्यलक्षणम् । प्रकृतेस्तु विवक्षायां विकार्यमिति प्रथमं विकार्यलक्षणम् । 'यदसज्जायते' इत्यादि कारि-

इदानीं प्राप्यकर्मलक्षणमाह—

क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते॥ ५१॥

निर्वर्त्ये कर्मणि निर्वृत्तिरात्मलाभ एव क्रियाकृतो विशेषो दर्शनात् प्रत्यक्षादेवावधार्यते। विकार्ये तु भस्मकुण्डलादौ विकारः क्रियाकृतो विशेषोऽवधार्यते प्रत्यक्षेण।

क्वचित् पुनरनुमानाद् विशेषावसायो यथा परत्र जनितानां सुखादीनां मुखप्रसादादिना लिङ्गेनावसायः। जलावसेकादिक्रियावेशितश्च वनस्पतीनां विशेषः प्रतिकलमवाप्तजन्मा सूक्ष्मत्वादुत्पत्त्यनन्तरमनवसीयमानश्चरमावस्थायां प्रचिततरविशेषदर्शनादवधार्यते।

---

कार्योक्तं द्वितीयं निर्वर्त्यलक्षणम्। विकार्यस्य पूर्वलक्षणापेक्षया लक्षणान्तरे व्यक्तिभेदेन द्विधा विभज्य क्रियमाणे प्रकृत्युच्छेदसंभूतमिति प्रथमं विकार्यलक्षणम्। 'किञ्चिद् गुणान्तरोत्पत्त्या' इति द्वितीयं विकार्यलक्षणमिति॥ ५०॥

पूर्वं समुद्दिष्टस्य प्राप्यकर्मण इदानीं प्राप्तावसरं लक्षणमाह—क्रियाकृतविशेषाणामिति।

अस्यार्थः-यत्र दर्शनात् = प्रत्यक्षात्, अनुमानाद् वा क्रियाकृतविशेषाणां सिद्धिः = निश्चयः प्रमात्मको न गम्यते = न ज्ञायते तत्प्राप्यमिति कथ्यते। यथा 'ग्रामं गच्छति, वनं पश्यति' इति। न ह्यत्र गतेऽगते वा ग्रामे गमनक्रियाकृतं वैलक्षण्यमनुभूयते। न वा दृष्टेऽदृष्टे वा वने दर्शनक्रियाकृतं वैजात्यं प्रत्यक्षीक्रियतेऽनुमीयते वा इति ग्रामवने प्राप्यकर्मणी। 'ग्रामं दहति, वनं छिनत्ति' इत्यत्र तु ते न प्राप्यकर्मणी, दग्धेऽदग्धे च ग्रामे रूपतो विशेषोपलम्भात्। एवं छिन्नेऽछिन्ने च वने वैजात्योपलम्भात्। अतस्ते प्रागुक्तरीत्या विकार्यकर्मणी एवेति।

अयं भावः—निर्वर्त्ये कर्मणि घटादौ निर्वृत्तिरात्मलाभ एव उत्पत्तिरूपः क्रियाकृतो विशेषो दृश्यते = प्रत्यक्षादवधार्यते। भस्मकुण्डलादौ तु विकार्ये कर्मणि विकारः क्रियाकृतो विशेषोऽवधार्यते प्रत्यक्षेण।

क्वचित् पुनरनुमानाद् विशेषनिश्चयः। यथा परत्र देशे स्रक्चन्दनवनितादिसङ्गजनितानां सुखादीनां मुखप्रसादादिना लिङ्गेनावगमोऽनुमानरूपः। जलावसेकादिक्रियावशतश्च वनस्पतीनां परस्परं स्वरूपे वा विशेषः प्रतिक्षणं प्राप्तजन्मा उत्पत्त्यनन्तरं सूक्ष्मत्वादनवसीयमानश्चरमावस्थायां प्रचिततरस्वरूपविशेषदर्शनाल्लिङ्गादनुमीयते।

न ह्ययं प्रचिततरो विशेषोऽनपेक्षितक्रमो झटित्यशङ्कित एवोदेतुं प्रभवतीति प्रतिक्षणमनुमीयमानः सूक्ष्मरूपः, तस्य हि सूक्ष्मस्य रूपस्य दुरवधारत्वम्। यथा षड्जादिस्वरविशेषयोस्ताराततितारयोः। तदेवंविधो विशेषो यत्र क्रियाकृतो न संदृश्यते, तत्कर्तुः क्रियाया विषयभावमात्रेणेप्सिततमत्वात् प्राप्यं कर्म। तद्यथा 'आदित्यं पश्यति, नगरमुपसर्पति, वेदमधीते' इत्यादि। आदित्यादीनां हि संदर्शनादिक्रियया कश्चिदाहितो विशेषो नावधार्यते। प्रमाणाभ्यां क्रियासम्बन्धमात्रं तु लक्ष्यते, न च स एव विशेषः, वृत्ते क्रियासम्बन्धे वस्तुगतस्य भेदस्य निर्वर्त्यविकार्ययोर्दृष्टत्वात्। नगरे तु गमनक्रियाजनितः संयोगो द्विष्ठो विशेषो भवन्नपि नगरस्य महापरिमाणत्वादल्पपरिमाणेन देवदत्तेन हिमवदङ्गुलिसम्बन्धवदलक्ष्यः पृथिव्येकदेशश्च स्वावयवापेक्षया कल्पितो विशिष्टस्वाधेयाधाररूपो नगरशब्दवाच्यः प्रसिद्ध एवेति न काचिदनुपपत्तिः॥ ५१॥

नास्त्येव प्राप्यं कर्म, सर्वत्र क्रियाकृतविशेषावधारणादिति केचित्। तथा हि—

**विशेषलाभः सर्वत्र विद्यते दर्शनादिभिः।**
**केषाञ्चित् तदभिव्यक्तिसिद्धिर्दृष्टिविषादिषु॥ ५२॥**

---

न ह्ययं प्रचिततरस्वरूपो विशेषो दृश्यमानोऽनपेक्षितक्रमः=क्रमशून्यः। झटित्यशङ्कित एवोदेतुं प्रभवतीति तस्य सूक्ष्मरूपः प्रतिक्षणमनुमीयते। तस्य हि सूक्ष्मस्य रूपस्यानुमीयमानस्य दुरवधारत्वम्। यथा षड्जादिस्वरविशेषयोस्तारातितारयोर्दुरवधारत्वम्। तदेवंविधो विशेषः क्रियाकृतो यत्र न संदृश्यते तद् अदृश्यमानत्वेऽपि कर्त्तुः क्रियाया विषयभावमात्रेणेप्सिततमत्वात् प्राप्यं कर्म। तद् यथा 'आदित्यं पश्यति, नगरमुपसर्पति, वेदमधीते' इत्यादि। न ह्यत्रादित्यादीनां दर्शनोपसर्पणाध्ययनादिक्रियाकृतः कश्चन विशेषः प्रत्यक्षानुमानाभ्यामवधार्यते। प्रमाणाभ्यां प्रत्यक्षानुमानाभ्यां क्रियासम्बन्धमात्रं तु लक्ष्यत इति। न च तत्र क्रियासम्बन्ध एव तत्र क्रियाकृतविशेष इति वाच्यम्, जाते क्रियासम्बन्धे वस्तुगतस्य क्रियाकृतविशेषस्य निर्वर्त्यविकार्यकर्मणोर्घटवनयोर्दृष्टत्वात्। नगरे तु गमनक्रियाजनितः संयोगो द्विष्ठो विशेषो भवन्नपि नगरस्य महापरिमाणत्वादल्पपरिमाणेन देवदत्तेन सह हिमवदङ्गुलिसम्बन्धवदलक्ष्यः। पृथिव्यवयवग्रामग्रामटिकाखर्वटाद्यपेक्षया महत्त्वेन कल्पितो बहुभूमिकाट्टालिकान्यायालयमहाविद्यालयादिरूपविशिष्टस्वाधेयाधाररूपः पृथिव्येकदेशश्च नगरशब्दवाच्यः प्रसिद्ध एव महापरिमाणो गन्त्रपेक्षयेति न काचिदनुपपत्तिरिति॥ ५१॥

नास्त्यत्र प्राप्यं कर्म, सर्वत्र क्रियाकृतविशेषाणां सूक्ष्माणामसूक्ष्माणाञ्च प्रत्यक्षानुमानाभ्यामन्यतरेण प्रमाणेन येन केनापि अवधारणादिति केचिदित्याह—विशेषलाभ इति।

दर्शनादिक्रियाहितविशेषलाभो विकारः सर्वत्र विद्यते, सौक्ष्म्यात्तु नावधार्यते सर्वेणेति केषाञ्चिन्मतम्। तस्य विशेषस्य दृष्टौ विषं येषां तेषु तद्विषयेऽभिव्यक्तेर्निश्चयस्य (निश्चयात्तस्यान्यत्रापि) सिद्धिः। दृष्टिविषैरहिभिर्निरीक्षितो हि विषयो ज्वलनज्वालावलीढो लक्ष्यते। तत्साधर्म्यादन्यत्रापि दर्शनादिनाहितः कश्चिद् विशेषो विषये समुन्नेयः। तैजसं हि चक्षुः प्राप्यकारीति तेन युक्तो विषयोऽवश्यं विक्रियते यथा दृष्टिविषदर्शनेन।

इयांस्तु विशेषः। दृष्टिविषे तेज उत्कटं विषसंपर्काद्विषयं दहति, अन्यत्र तनुतरस्थितिः। आदिशब्देनायस्कान्तादीनां ग्रहणम्। तत्सन्निधौ लोहं भ्रमति।

---

अस्यार्थः—दर्शनादिभिः=दर्शनोपसर्पणाध्ययनादिभिः आहितः=सम्पादितः विशेषलाभः=विकारः सर्वत्र सर्वेषु भावेषु विद्यते, सौक्ष्म्यात्तु सर्वेषु भावेषु स प्रत्यक्षेण नावधार्यते यतो दृष्टिविषसर्पादिषु तद्विषये तदभिव्यक्तिसिद्धिः, तेषां दर्शनादिक्रियाकृतविशेषाणां विषयदाहादीनां सिद्धिः प्रत्यक्षेण निश्चयोऽप्यापि भवति। तेन दृष्टान्तेन सर्वत्रैव क्रियाकृतविशेषाणां सिद्धिरनुमानेन भविष्यतीति नास्त्येव प्राप्यं कर्मेति केषाञ्चिन्मतम्।

अयमत्रानुमानप्रयोगः। सर्वे भावाः क्रियाकृतविशेषवन्तः, तत्तत्क्रियाविषयत्वात्, दृष्टिविषसर्पकर्तृकदर्शनक्रियाविषयतृणादिवत्, इति।

अयं भावः–दर्शनोपसर्पणाध्ययनादिक्रियाकृतो विकाराख्यो विशेषलाभः सर्वेषु भावेषु विद्यते, सौक्ष्म्यात्तु न सर्वत्र सर्वेणावधार्यते प्रमाणाभ्यामिति केषाञ्चिन्मतम्। दृष्टौ विषं येषान्तेषु दृष्टिविषेषु तद्विषये तस्य विशेषस्याभिव्यक्तेर्निश्चयात्तस्य विशेषस्यान्यत्रापि भावे सिद्धिः। दृष्टिविषैरहिभिर्हि निरीक्षितो विषयो ज्वलनज्वालावलीढो दृश्यते। तत्साधर्म्यादन्यत्रापि भावे दर्शनाध्ययनादिक्रियाकृतः कश्चिद् विशेषः समुन्नेयः=अनुमेयः। चक्षुर्हि तैजसं प्राप्यकारि चेति तेन युक्तो विषयोऽवश्यं विक्रियते, यथा दृष्टिविषदर्शनेनेति।

तदयमत्र प्रयोगः—चक्षुःसंयुक्तो विषयोऽवश्यं विक्रियते, प्राप्यकारितैजसस्वभावचक्षुःसंयुक्तत्वाद् दृष्टिविषसर्पदृष्टतृणादिवदिति।

इयांस्तु विशेषः—दृष्टिविषदृष्टौ विषसम्पर्कादुत्कटं तेजो विषयं दहति, अन्येषां दृष्टौ तु तनुतरस्थितिकं तेजो विषयं स्वसंयुक्तं न दहति, विकरोति तु अवश्यमेव, स तु विकारः पूर्वोक्तरीत्याऽनुमेयः सूक्ष्मत्वादप्रत्यक्षः। कारिकायां दृष्टिविषादिषु इत्यत्रादिग्रहणेनायस्कान्तादीनां ग्रहणम्। 'अयस्कान्तसन्निधौ हि

कतकफलसन्निधौ हि जलं प्रसीदतीत्यादावस्त्येव क्रियाकृतो विकारः। एतच्च न शास्त्रकारस्य मतम्। केषाञ्चिदित्यन्यमतत्वेनोपन्यासात्।

क्वचिद्विशेषदर्शनेऽपि न सर्वत्र तथा भावोऽदृश्यमानविशेषेऽपि युक्तः। किं च क्रियाफलेऽत्र विकारोऽभिप्रेतः। परिदृश्यमानस्तु विषयः क्रियाया हेतुः, न फलम्। दृष्टिविषादावपि तेजःसंयोगाद्विषये विकारो न क्रियाबलात्। एवमयस्कान्तादेर्वस्तुस्वभावोऽयं न क्रियाकृतो विकारः कश्चित्। तस्मादस्त्येव प्राप्यं कर्म क्रियाकृतोपकारानपेक्षम्॥ ५२॥

न चेद्विकारयोगः प्राप्यकर्मणः कथमस्य क्रियासिद्धावङ्गभावः साधनतासम्पत्त्यर्थः। उच्यते—

**आभासोपगमो व्यक्तिः सोढत्वमिति कर्मणः।**
**विशेषाः प्राप्यमाणस्य क्रियासिद्धौ व्यवस्थिताः॥ ५३॥**

---

लोहं भ्रमति, कतकसन्निधौ हि जलं प्रसीदति' इत्यदावस्त्येव सन्निधानादिक्रियाकृतो भ्रमणप्रसादादिरूपः सन्निहिते भावे विकारः। तेनेयं व्याप्तिसिद्धिः। या या क्रिया, सा सा स्वविषयं विकरोत्येव, अयस्कान्तकतकादिगतसन्निधानादिक्रियावदिति। दृष्टश्च श्वश्वपचकुक्कुटदरिद्रादिदृष्टिकृतो भक्ष्ये विकारो धर्मशास्त्रेषु, लोके च दृष्टिदोषो बालादीनां भोजने परिह्रियत इति।

एतच्च न शास्त्रकारस्य हरेर्मतम् केषाञ्चिदित्यन्यमतत्वेनोपन्यासात्।

क्वचिद् विशेषदर्शनेऽपि न सर्वत्र तथाभावोऽदृश्यमानविशेषेऽपि युक्तः, पूर्वोक्तानुमानस्य प्रत्यक्षविसंवादिनः प्रत्यक्षेण बाधात्।

ननु पूर्वोक्तानुमानस्य प्रत्यक्षविसंवादः, विशेषस्य प्रत्यक्षायोग्यत्वात्, अस्ति तु पूर्वोक्तानुमानस्य श्वश्वपचादिदृष्टिकृतविशेषे धर्मशास्त्ररूपागमसंवाद इति चेत्, सत्यम्, क्रियाफले ओदनादौ घटादौ च विकारोऽत्राभिप्रेतः, प्राप्यकर्मलक्षणे निषेध्यत्वेन। परिदृश्यमानस्तु विषय आदित्यादिः दर्शनादिक्रियाया हेतुः, न फलम्। दृष्टिविषादावपि तेजःसंयोगाद् विषये तृणादौ विकारो न क्रियाकृतः कश्चिद् विकारः। तस्मादस्त्येव प्राप्यं कर्म क्रियाकृतविकाररूपोपकारानपेक्षमिति॥ ५२॥

प्राप्यकर्मणः क्रियाकृतविकारयोगाभावेऽप्यस्त्येव तस्य क्रियासिद्धावङ्गभावप्रयोजकः साधनतासम्पादकश्च विकारयोगः क्रियाया हेतुरिति तत्स्वरूपं दर्शयितुमाह—आभासोपगम इति।

अस्यार्थः—आभासोपगमः=दर्शनविषयत्वापत्तिः, तेन दर्शनयोग्यदेशापत्तिर्लक्ष्यते। तुषारतिमिरादिरूपाणां प्रकाशप्रतिबन्धकभावानामभावादिः प्रदीपादिनिमित्ता व्यक्तिः, सोढत्वम्—दृश्यस्वभावत्वरूपं बोधक्षमत्वमिति प्राप्यमाणस्य कर्मण

योग्यदेशावस्थानेन दर्शनपथमवतरति विषय इति योग्यदेशापत्तिः आभासोपगमः स्वभावादस्य दर्शने उपकारः। योग्यदेशस्थितस्यापि नीहारादिप्रकाशप्रतिबन्धकभावाभावादिः=प्रदीपादिनिमित्ता व्यक्तिः अङ्गम्। विषयस्य प्रकाशयोग्यदेशस्थितस्यासत्यावरकेऽदृश्यस्वभावः पिशाचादिरिति सोढत्वम्, बोधक्षमता, दृश्यस्वभावताङ्गम्। एतैरतिशयैर्दर्शने साधनभावमनुभवति प्राप्यं कर्म। एते च दर्शनक्रियाहेतवो न तत्कृताः। ग्रामं गच्छतीत्यादावपि यथायोगं सोढत्वादयो ग्रामादेर्वाच्याः। समीहाविषयीकृता हि ग्रामादयोऽवभासमाना गमनादिसहाः साधयन्ति गमनादिक्रियाम्। एवमधीयमानं वेदादि अध्ययनसहम्। 'मातरं स्मरति' इत्यपि माता कृतोपकारा क्रूरहृदयस्यापि स्मृतिपथमनुपतन्ती

---

स्त्रयो विशेषाः क्रियासिद्धौ व्यवस्थिताः। विशेषरूपेण=क्रियाकृतत्वाद् विलक्षणेन रूपेण क्रियाया हेतुत्वेन रूपेणावस्थिताः। एतान् विशेषानुपगतस्यैव प्राप्यस्य कर्मणः क्रियायामङ्गभावः, साधनत्वञ्चेति।

अयं भावः—दर्शनयोग्यदेशावस्थानेन=अनावृते निस्तिमिरे प्रकाशवति समीपे च देशेऽवस्थानेन दर्शनपथमवतरति विषय इति योग्यदेशापत्तिः=दर्शनयोग्यदेशस्थितिः। आभासोपगमः=स्वभावादेव प्राप्यस्य कर्मणो दर्शने उपकारः। योग्यदेशस्थितस्यापि प्राप्यस्य कर्मणो नीहारादिरूपाणां प्रकाशप्रतिबन्धकभावानां प्रागभावप्रध्वंसाभावात्यन्ताभावरूपा प्रदीपादिनिमित्ता व्यक्तिः, तस्य क्रियासिद्धावङ्गम्। विषयस्य=स्वप्रकाशयोग्यदेशस्थितस्यापि आवरकेऽसत्यपि अदृश्यस्वभावः पिशाचादिरिति सोढत्वम्=दृश्यस्वभावत्वरूपं बोधक्षमत्वमपि तस्य क्रियासिद्धावङ्गम्। एतैरतिशयैः=विशेषैः, दर्शनक्रियायां साधनत्वमनुभवति प्राप्यं कर्म। एते च विशेषा दर्शनक्रियाहेतवः, न तु तत्कृताः। 'ग्रामं गच्छति' इत्यादावपि प्राप्ये कर्मणि ग्रामादौ यथासंभवं सोढत्वादयो ग्रामादेर्वाच्याः। समीहाविषयीकृता हि=जिगमिषागोचरीकृता हि ग्रामादयोऽवभासमाना गमनादिसहाः साधयन्ति गमनादिक्रियाम्।

तथा हि—अस्ति जिगमिषिते ग्रामे यदि दर्शनयोग्यदेशावस्थितिरूप आभासोपगमः, यदि च तिरोधायकभावाभावरूपा व्यक्तिः, यदि च गमनसहत्वरूपं सोढत्वम्, तदैव स गमनक्रियां साधयति, नान्यथा नान्यदा च। एवमधीयमाने वेदेऽप्यवभासमानत्वं व्यक्तिः—अध्ययनसहत्वञ्चेति त्रयमध्ययनकर्मत्वरूपतत्साधनत्वसंपादकं बोध्यम्। 'मातरं स्मरति' इत्यत्रापि माता कृतोपकारा तत्त्वादेव क्रूरहृदयस्यापि स्मृतिपथमनुपतन्ती साधयति स्मृतिमिति अस्त्येवात्रापि उद्बुद्धसंस्कारगोचरत्वेन स्मृतियोग्यत्वापत्तिरूप आभासोपगमः, संस्कारोद्बोधप्रतिबन्धकभावाभावरूपा व्यक्तिः कृतोपकारत्वेन स्मरणसहत्वरूपं सोढत्वमिति त्रयं मातुः स्मरणक्रियाकर्मत्व-

साधयति स्मृतिम्। ईप्सिततमत्वानपेक्षायां तु सम्बन्धित्वसामान्यविवक्षायां शेषषष्ठी 'मातुः स्मरति' इति ।। ५३ ।।

एवं तावद् यथाविभागं कर्म लक्षितम्। इदं तु वक्तव्यम्—पूर्वमुक्तं गुणक्रियाणां कर्तारः सर्वे साधनविशेषा इति । तत्कथं कर्मतासंभव इति कर्मकर्तृविचारपातनिकां करोति—

निर्वृत्त्यादिषु तत्पूर्वमनुभूय स्वतन्त्रताम् ।
कर्त्रन्तराणां व्यापारे कर्म संपद्यते ततः ।। ५४ ।।

निर्वृत्तिविक्रियाभासापत्तिक्रियासु यथासंख्यं निर्वर्त्यविकार्यप्राप्यलक्षणं कर्म स्वातन्त्र्यं कर्तृत्वमाश्रित्य तदपेक्षयान्येषां निर्वर्त्यादिकर्मविषयत्वाद् बहूनां कर्तॄणां निर्वर्तनादिव्यापारे प्रैषलक्षणे कर्म जायते, तेनाप्यमानत्वात् ।

तथा हि—निर्वर्तते विकुरुते आभासमुपैति प्रकाशत इति कर्तारः स्वव्यापारे कर्मभेदात् प्रधानकर्तृव्यापारे विवक्षिते निर्वर्तयति, विकारयति, आभासादिविषय-

---

रूपतत्साधनत्वसम्पादकम् । मातुरीप्सिततमत्वानपेक्षायां तु सम्बन्धित्वसामान्यविवक्षायां शेषषष्ठी भवति 'मातुः स्मरति' इति ।। ५३ ।।

एवं तावद् यथाविभागं कर्मलक्षणं पुरस्कृत्य दर्शितम् । इदं तु वक्तव्यम्—पूर्वमुक्तं सर्वे साधनविशेषा गुणक्रियाणां कर्तार इति, तत्कथं गुणक्रियायाः कर्त्तुः कर्मत्वसंभव इत्याशङ्क्य कर्मकर्तृविचारपातनिकां करोति -- निर्वृत्त्यादिष्विति ।

अस्यार्थः—निर्वृत्तिविक्रियाभासापत्तिक्रियासु तत् =यथासंख्यं निर्वर्त्यविकार्यप्राप्यलक्षणं कर्म पूर्वं निर्वर्त्तते, विकुरुते, आभासमुपैतीति रीत्या स्वतन्त्रतां कर्त्तृतामनुभूय, कर्त्रन्तराणां व्यापारे=प्रधानकर्त्तृव्यापारे विवक्षिते ततः=कर्त्तृत्वात्, कर्त्तृत्वं विहाय निर्वर्तयति, विकारयति, आभासविषयभावमापादयति, इत्यादौ कर्म सम्पद्यते । स्वव्यापारे कर्तृत्वम्, कर्त्रन्तरव्यापारे तु कर्मत्वमिति नैकस्मिन् कर्त्तृत्वकर्मत्वयोर्विरोधः, क्रियाभेदादिति बोध्यमिति ।

अयं भावः—निर्वर्त्तयति, विकारयति, आभासविषयभावमापादयति, इत्यत्र यथासंख्यं निर्वर्त्यविकार्यप्राप्यलक्षणं कर्म निर्वर्त्तते, विकुरुते, आभासमुपैति, इत्यत्र निर्वृत्तिविक्रियाभासापत्तिक्रियासु स्वातन्त्र्यं कर्त्तृत्वमाश्रित्य तदपेक्षयाऽन्येषां बहूनां कर्तॄणां निर्वर्त्तनादिव्यापारे निर्वर्त्यादिकर्मविषयकत्वात् प्रैषरूपे कर्म जायते । तेन= प्रैषकर्त्रा आप्यमानत्वेनेप्सिततमत्वात् ।

तथा हि निर्वर्त्तते, विकुरुते, आभासमुपैति=प्रकाशते इत्यत्र स्वव्यापारे कर्तारः प्रधानकर्त्तृव्यापारे विवक्षिते निर्वर्त्तयति, विकारयति, आभासादिविषय-

भावमापादयतीति कर्तृप्रैषे स्वामिसन्निधाविव भृत्या न्यग्भवन्तः कर्मभावमनुभवन्ति॥ ५४॥'

एवं तर्हि कर्ता भूत्वा कर्म भवतीति, कर्म भूत्वा कर्ता कथं भवति, येन कर्मकर्तृत्वसंभव इत्यत आह—

तद्व्यापारविवेकेऽपि स्वव्यापारे व्यवस्थितम्।
कर्मापदिष्टान् लभते क्वचिच्छास्त्राश्रयान् विधीन्॥ ५५॥

'भिद्यते कुसूलः' इत्यादौ यदा कर्तृप्रैषस्य निवृत्तिः कुसूलादेर्विशरारुरूपतया स्वयमेव भिदानुभवात्, 'लूयते केदारः' इत्यादावपि शुष्कतरत्वात् कर्तृप्रयत्नानपेक्षणात् 'पच्यते ओदनः स्वयमेव' इत्यादावपि सौकर्यातिशयवशात् कर्तुरनपेक्षणात् तदा स्वव्यापारे स्वातन्त्र्याश्रये कर्तृत्वे शास्त्रेण यत्नेन कर्मकार्यप्राप्त्यर्थः कर्मवद्भावो विधीयत इति कर्मणि अपदिष्टान् विहितान् विधीन् कार्याणि कर्ताऽपि सन् प्राप्नोति। कर्त्रन्तरव्यापारपातनेन हि स्वव्यापारे कर्तृत्वात् कर्मकार्याणि न

---

भावमापादयति इति कर्तृप्रैषे कर्मभेदात्=क्रियाभेदात् स्वामिसन्निधौ भृत्या इव न्यग्भवन्तः=गुणीभवन्तः कर्मभावमनुभवन्तीति॥ ५४॥

एवं तर्हि कर्त्ता भूत्वा कर्म भवतीति युक्तम्, कर्म भूत्वा कर्त्ता कथं भवति? येन पच्यते ओदनः स्वयमेवेति कर्मकर्तृत्वसंभव इत्यत आह—तद्व्यापारविवेकेऽपीति।

अस्यार्थः—तद्व्यापारविवेकेऽपि=तद्व्यापारस्य प्रधानकर्तृव्यापारस्य प्रैषाख्यस्य 'भिद्यते कुसूलः स्वयमेव' इत्यादौ विवेकेऽपि प्रधानकर्तुर्देवदत्तादेरविवक्षयाऽभावेऽपि, स्वव्यापारे=विशरणादौ व्यवस्थितम्=कर्तृरूपतयाऽवस्थितम्—कुसूलादि क्वचित्=कर्मस्थभावकानां कर्मस्थक्रियाणां च धातूनां विषये, अपरिस्पन्दनसाधनसाध्यो धात्वर्थो भावः, सपरिस्पन्दनसाधनसाध्यो धात्वर्थः क्रिया इति विवेकः। कर्मापदिष्टान्=कर्मणि विहितान् यक्चिणादीन् शास्त्राश्रयान्=शास्त्रविहितान् विधीन् कर्तृभूतमपि संल्लभत इति।

अयं भावः—'भिनत्ति कुसूलं चैत्रः' इत्यादौ अस्ति कुसूलरूपकर्मस्थविशरणक्रियाया अनुकूलश्चैत्रनिष्ठः प्रैषाख्यो व्यापारः, तस्य यदा 'भिद्यते कुसूलः स्वयमेव' इत्यादौ निवृत्तिः, कुसूलादेर्विशरारुरूपतया स्वयमेव भिदाया अनुभवात्। 'लूयते केदारः स्वयमेव' इत्यादावपि केदारस्थसस्यस्य छिदादिक्रियायां शुष्कतरत्वेन कर्तृप्रयत्नानपेक्षणात्, पच्यते ओदनः स्वयमेव' इत्यादावपि सौकर्यातिशयवशात् कर्तृव्यापारानपेक्षणात् स्वव्यापारे स्वातन्त्र्यमाश्रित्य कर्तृत्वे स्थिते कर्मत्वप्रयुक्तचिण्यगादिकार्यप्राप्त्यर्थः शास्त्रेण यत्नेन कर्तुः कर्मवद्भावो विधीयत इति कर्मणि अपदिष्टान्=विहितान् विधीन्=कार्याणि कर्त्ताऽपि सन् प्राप्नोति। कर्त्रन्तर-

स्युरिति शास्त्रारम्भः। क्वचिद् इति। कर्मस्थभावानां कर्मस्थक्रियाणां च धातूनां विषय इत्यर्थः॥ ५५॥

ननु च कर्तृप्रैषे निवृत्ते तदायत्तं कर्मत्वमत्र मा भूत्, कर्तृत्वं तु कथम्; येन कर्मकर्त्तेति व्यपदेशः। तथा हि—सति प्रधानकर्तरि कर्मणः स्वक्रियायां व्यापारो दृष्ट इति तदभावे कर्मत्ववत् कर्तृत्वमपि कुत इत्याशङ्क्याह—

**निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम्।**
**निवर्तमाने कर्मत्वे स्वे कर्तृत्वेऽवतिष्ठते॥ ५६॥**

---

व्यापारपातनेन हि = प्रधानकर्त्तृव्यापाराविवक्षया हि स्वव्यापारे कर्त्तृत्वात् कर्मकार्याणि चिण्यगादीनि न स्युरिति 'कर्मवत् कर्मणा तुल्यक्रियः'' (पा० ३।१।८७) इत्यादिशास्त्रारम्भः।

कारिकायां क्वचिदित्यस्य कर्मस्थभावकानां कर्मस्थक्रियाणाञ्च विषये इत्यर्थः। तत्र कर्मस्थभावकोदाहरणम्—'पच्यते ओदनः स्वयमेव', कर्मस्थक्रियोदाहरणं तु—'भिद्यते कुसूलः स्वयमेव' इति। कर्त्तृस्थभावकानां कर्त्तृस्थक्रियाणाञ्च धातूनां कर्ता न कर्मवद् भवति। तत्र कर्त्तृस्थभावकोदाहरणम्—'मास आस्ते स्वयमेव', कर्त्तृस्थक्रियोदाहरणन्तु—'गच्छति ग्रामः स्वयमेव'।

अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च।
यत्कृपावशतस्तस्मै नमोऽस्तु गुरवे सदा॥

इत्यपि कर्त्तृस्थभावकोदाहरणमेव। तदुक्तं कर्मवत्कर्मणेति सूत्रे काशिकायाम्—

कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया।
मासासिभावः कर्त्तृस्थः कर्त्तृस्था च गमेः क्रियाः॥ इति॥ ५५॥

ननु च कर्त्तृप्रैषे निवृत्ते कर्मव्यापारानुकूले तदधीनम् = प्रेषणरूपकर्त्तृव्यापाराधीनं कर्मत्वमत्र = 'भिद्यते कुसूलः स्वयमेव' इत्यादौ मा भूत्; किन्तु कर्त्तृत्वमपि तस्य कथम्? येन कर्मकर्त्तेति व्यपदेशः क्रियते। तथा हि—सति प्रधानकर्त्तरि कर्मण इतरस्वक्रियापेक्षया प्रधानीभूतस्वक्रियायामनुकूलो व्यापारो दृष्ट इति तदभावे = प्रधानकर्त्तुरविवक्षारूपेऽभावे कर्मत्ववत् कर्त्तृत्वमपि नोपपद्यत इत्याशङ्क्याह—**निवृत्तप्रेषणमिति।**

अस्यार्थः—निवृत्तं प्रेषणं कर्त्तृव्यापाररूपं यस्मात् तन्निवृत्तप्रेषणं कर्मेति भूतपूर्वगत्योच्यते। स्वक्रियावयवे = स्वस्मिन्—स्वकीये क्रियारूपे अवयवे प्रधानक्रियापेक्षया गुणभूते स्वव्यापारे भूतपूर्वगत्या कर्म इदानीं कर्त्तृतया स्थितं सत्। अवयवशब्दोऽत्र लक्षणया गुणपरः। प्रेषणनिवृत्त्या कर्मत्वे निवर्तमाने स्वे कर्त्तृत्वे =

धात्वर्थानुकूल्येन चेष्टनं कर्तुः प्रेषणं स्वव्यापारः कारकान्तरविनियोग- लक्षणम्। तदनभिधीयमाने कर्त्तरि 'पच्यते ओदनः स्वयमेव' इत्यादौ निवर्तते। कर्त्राश्रयस्य व्यापारस्य कर्तरि प्रत्ययेनानभिधीयमाने धातुनाऽनभिधीयमानत्वात्। प्रतीयमानत्वं तु तस्य 'द्व्यर्थः पचिः' इति भाष्यविरोधादसङ्गतमित्याख्यातम्। 'तानि धात्वन्तराणि' ( वा० पा० ३, साधन० ५४ ) इति च वक्ष्यमाणत्वाद् विषय- विभागेन धात्वर्थता कर्तृव्यापारस्य ग्रन्थकृतोऽभिप्रेता। तस्मिन्निवृत्ते स्वस्मिन् क्रियावयवे प्रधानक्रियापेक्षया गुणभूते स्वव्यापारे कर्म स्थितं कर्तृतया, भूतपूर्व- गत्या त्वस्य कर्मव्यपदेशः।

यद्यपि च कर्तृव्यापारे विवक्षिते स्वक्रियायामेवावस्थानं सर्वत्र भवति, तद्द्वारेण प्रधानक्रियानिर्वर्तनात्, कारकं कर्मेति सामानाधिकरण्याच्च, तथापि सामर्थ्यादत्र प्राधान्येनावस्थानं बोद्धव्यम्। अत एव कर्तृव्यापारापेक्षस्य कर्मत्वस्य निवृत्तावात्मीये स्वक्रियाविषये कर्तृत्वेऽवतिष्ठत इति कर्तृव्यापारापेक्षया पूर्वं कर्म भूत्वा सौकर्यातिशयप्रतिपादनपरतया तदविवक्षायां कर्ता सम्पद्यत इति भवति कर्मकर्ता।

---

स्वव्यापारप्रयुक्ते कर्त्तृत्वे व्यपदेशतोऽवतिष्ठत इति। कर्त्तृत्वेन व्यपदिश्यत इति यावदिति।

अयं भावः—धात्वर्थफलानुकूलतया कर्त्तुश्चेष्टनं साधनान्तराणां प्रेषणं प्रेरणं नाम स्वव्यापारः कारकान्तरविनियोगरूपः, तच्च पच्यते ओदनः स्वयमेव' इत्यादौ कर्त्तरि अनभिधीयमाने सति निवर्तते। कर्त्तरि तिङ्प्रत्ययेनानभिधीयमाने सति कर्त्तृनिष्ठस्य व्यापारस्य धातुनानभिधीयमानत्वात्। तत्र कर्त्राश्रयस्य व्यापा- रस्य प्रतीयमानत्वं तु 'द्व्यर्थः पचिः' इति भाष्यविरोधादसंगतमित्याख्यातम्। तस्मादत्र कर्तुरविवक्षायां कर्तृव्यापारस्य धातुशक्यत्वेऽपि अविवक्षारूपमनभिधान- मेव बोद्धव्यम्।

"तानि धात्वन्तराणि" ( वा० प० ३, साधन० ५४ ) इति च वक्ष्यमाणत्वाद् विषयविभागेन = कर्तुरभिधानानभिधानरूपविषयविभागेन कर्तृव्यापारस्य समाना- नुपूर्वीकभिन्नभिन्नधातुवाच्यता ग्रन्थकृतोऽभिप्रेता। तस्मिन्निवृत्ते प्रैषाख्ये कर्तृ- व्यापारे, स्वस्मिन् क्रियावयवे प्रधानक्रियापेक्षया गुणभूते स्वव्यापारे कर्त्तृतया स्थितं कर्म, भूतपूर्वगत्या त्वस्य कर्मव्यपदेशः।

यद्यपि च प्रधानेऽप्रधाने वा कर्तृव्यापारे विवक्षिते स्वक्रियायामेव कर्तृतयाऽ- वस्थानं सर्वत्र भवति, तद्द्वारेणैव प्रधानक्रियानिष्पादनात्। कारकं कर्मेति कर्त्तृ- वाचककारकपदेन सामानाधिकरण्येन व्यवहाराच्च। तथापि स्वक्रियावयवे स्थित- मिति वाक्यार्थसामर्थ्यादत्र प्राधान्येनावस्थानं बोद्धव्यम्।

अयं भावः—न केवलं कर्तृव्यापारस्याविवक्षामात्रे कर्मकर्तृता; अपि तु स्वव्यापारे स्वातन्त्र्यविवक्षायामपि सत्याम्। ततश्चाप्राप्तानि यगादीनि कर्मकार्याणि "कर्मवत् कर्मणा तुल्यक्रियः" ( पा० ३।१।८७ ) इति शास्त्रेण प्राप्यन्ते। तदुक्तं वार्तिककृता "कर्मकर्तरि कर्तृत्वं स्वातन्त्र्यस्य विवक्षितत्वात्" ( वा० पा० ३।१।८७ ) इति।

तत्र परायत्तोपजनेऽपि भिदादौ कुसूलादेः परानपेक्षा प्रतिपादिता भाष्ये "यस्तु खलु निवाते निरभिवर्षे अचिरकालकृतः कुसूलः स्वयमेव भिद्यत इति"। ( म० भा० ३।१।८७ ) निवात इति समीरसम्पातमनवाप्येति कर्तृव्यापारो व्युदस्तः। निरभिवर्ष इति सलिलकला(ण)संस्पर्शो व्युदस्तः। अचिरकृत इति कालान्तरपरिवासाधीयमानविशेषव्युदासः।

एते हि पातहेतवः कुसूलस्य संभाव्येरन् इति व्युदस्ताः। एवं चादृढसन्निवे-

---

अत एव कर्तृव्यापारापेक्षस्य कर्मत्वस्याविवक्षया निवृत्तावात्मीये=स्वक्रियाविषये, कर्तृत्वेऽवतिष्ठत इति कर्तृव्यापारापेक्षया पूर्वं कर्म भूत्वा सौकर्यातिशयप्रतिपादनपरतया तदविवक्षायां कर्ता सम्पद्यत इति भवति कर्मकर्ता।

अयं भावः—न केवलं कर्तृव्यापारस्याविवक्षामात्रे कर्मकर्तृता; अपि तु स्वव्यापारे स्वातन्त्र्यविवक्षायामपि सत्यां सा। ततश्चाप्राप्तानि यगादीनि कर्मकार्याणि "कर्मवत् कर्मणा तुल्यक्रियः" ( पा० ३।१।८७ ) इति शास्त्रेण प्राप्यन्ते। तदुक्तं वार्त्तिककृता—"कर्मकर्तरि कर्तृत्वं स्वातन्त्र्यस्य विवक्षितत्वात्" (वा० पा० ३।१।८७ ) इति।

अस्यार्थः—कर्मकर्तरि न केवलं कर्तृव्यापारस्याविवक्षामात्रम्; किन्तु स्वव्यापारे कर्तृत्वमपि, स्वव्यापारे स्वातन्त्र्यस्य विवक्षितत्वादिति। तत्र परतन्त्रोपजनेऽपि भिदिक्रियादौ कुसूलादेः कर्मकर्तुः परानपेक्षालक्षणं स्वातन्त्र्यं प्रतिपादितं भाष्ये—"यस्तु खलु निवाते निरभिवर्षे अचिरकृतः कुसूलः स्वयमेव भिद्यते" ( म० भा० ३।१।८७ ) इति।

अस्यार्थः—यस्तु खलु अचिरकृतः कुसूलो निवाते=वातरहिते, निरभिवर्षे=अभिमुखवृष्टिरहिते च देशे भिद्यते स स्वयमेव भिद्यत इति। निवाते इति समीररूपकर्तृकृतं सम्पातमनवाप्येति कर्तृव्यापारो निरस्तः। निरभिवर्षे इति सलिलकलायाः सलिलकणस्य संस्पर्शो व्युदस्तः। तेन सलिलमपि नात्र भिदा कर्तृ इति सूचितम्। अचिरकृत इति कालान्तरस्थित्याऽधीयमानस्य कुसूले विशरणरूपस्य विकारविशेषस्य व्युदासः।

एते हि=समीरसलिलचिरकालाः कुसूलस्य पाते प्रयोजकहेतवः संभाव्येरन्, इति व्युदस्ताः पूर्वोक्तैस्त्रिभिर्विशेषणैः। एवञ्च अदृढसन्निवेशित्वात्=स्वसन्नि-

शित्वात् स्वयमेव विशीर्यत इति कर्तृत्वोपपत्तिः। यत्रापि दात्रहस्तो देवदत्तः परिपतन् दृश्यते, लूयते केदारः स्वयमेवेति। अत्रापि तीव्रतरकिरणसम्पर्कसमुत्सारितस्नेहः, परिजर्जरितनालः, विशीर्यमाणः केदारः तात्स्थ्यात् व्रीहिरूपो लवने सुकरतामेति। सामग्रीसाध्यत्वाच्च क्रियाणां प्रत्येकं व्यापारोत्कर्षणार्थं स्वातन्त्र्याध्यारोपेणाप्युपपन्नः प्रयोगः 'देवदत्तः छिनत्ति, असिः छिनत्ति, स्थाली पचति' इत्यादिः। तत्र च कर्मण एव कर्तुः कर्मवद्भावो नान्यस्य, छिद्यते रज्जुः, पच्यते ओदनः स्वयमेवेति। तदेतदुक्तं भाष्ये—"तत्रापि याऽसौ सुकरता नाम तस्या नान्यः कर्ता" (म० भा० ३।१।८७) इति। सौकर्यातिशयवद्व्यापारे केदारे समीहिते न देवदत्तश्छेदस्य कर्तृव्यपदेशं प्रतिपत्तुं योग्योऽपि तु केदार एवेत्यर्थः। ओदनविक्लित्तौ तु छेदनवत् कर्तृव्यापारोऽपि नावश्यमपेक्ष्यः। अनपेक्षितकर्तृप्रयत्ना एव हि तण्डुला विक्लिद्यन्ति। करणादिकारकविनियोग एव ह्यत्र मुख्यः (मुख्य) कर्तृव्यापारो लक्ष्यते ॥ ५६ ॥

---

वेशस्यादार्ढ्यात् कुसूलः स्वयमेव विशीर्यत इति कुसूलस्य भिदा कर्तृत्वोपपत्तिः। यत्रापि दात्रहस्तो देवदत्तः केदारे परिपतन् दृश्यते, तत्रापि लूयते केदारः स्वयमेव इत्यत्र तीव्रतररविकिरणसम्पर्कसंशोषितस्नेहं परिजर्जरितनालं तत एव विशीर्यमाणं केदारस्थं व्रीहिरूपं सस्यं लवने सुकरतामेतीति सौकर्यातिशयप्रतिपादनपरतया कर्त्रविवक्षायां तथाप्रयोगः। प्रधानक्रियाणां सामग्रीसाध्यत्वादपि प्रत्येकं साधनानां व्यापारोत्कर्षणार्थं तत्तत्साधनेषु स्वातन्त्र्याध्यारोपेणाप्युपपन्नस्तत्तत्साधनेषु कर्तृत्वप्रयुक्तः प्रयोगः, 'देवदत्तः छिनत्ति, असिः छिनत्ति, स्थाली पचति' इत्यादिः। तत्र प्रधानक्रियानिरूपितं देवदत्तस्य कर्तृत्वम् स्वक्रियानिरूपितं चासेः छिदा करणस्य कर्तृत्वम्। स्वक्रियानिरूपितश्च अधिकरणरूपायाः स्थाल्याः पचौ कर्तृत्वमिति। तत्र च कर्मण एव कर्तुः=स्वक्रियानिरूपितकर्तृत्ववतः कर्मवद्भावो नान्यस्य साधनस्य कर्तृत्वमुपागतस्य। तत्र कर्मस्थक्रियस्य कर्मकर्तुरुदाहरणं 'छिद्यते रज्जुः स्वयमेव' इति। कर्मस्थभावकस्य कर्मकर्तुरुदाहरणं—'पच्यते ओदनः स्वयमेव' इति।

तदेतदुक्तं भाष्ये—'तत्राऽपि याऽसौ सुकरता नाम तस्या नान्यः कर्ता" (म० भा० ३।१।८७) इति।

अस्यार्थः तत्रापि—सर्वेषु साधनेषु स्वस्वक्रियानिरूपितकर्तृत्ववत्सु सत्स्वपि' येयं सुकरता नाम तस्याः कर्ता अन्यः कर्मातिरिक्तो न; किन्तु कर्मैव तस्याः कर्तेत्यर्थः। सौकर्यातिशयवद्व्यापारे केदाररूपे कर्मणि समीहिते=विवक्षिते न देवदत्तः छेदनक्रियायाः कर्तृव्यपदेशं प्राप्तुं योग्योऽपि तु केदार एवेत्यर्थः।

अत्र स्वानुभवमूलको लोकव्यवहार एव मानम्। यथा रज्जुरूपे छेदकर्मणि सुकरताकर्तृत्वे विवक्षितेऽपि रज्जोः स्वयं छेदे प्रधानकर्तृव्यापारोऽवश्यमपेक्ष्यते तथा ओदनविक्लित्तौ तु नावश्यमपेक्ष्यते। अनपेक्षितकर्तृप्रयत्ना एव हि तण्डुला

ननु चैक एव पच्यादिर्धातुः क्वचित् कर्तृव्यापारे गुणभूतमर्थमाह—पचत्योदनं भिनत्ति कुसूलं लुनाति केदारं देवदत्त इति। क्वचित्तु कर्तृव्यापारेऽप्रतिपन्नगुणभावं स्वप्रतिष्ठमर्थमाह—पच्यत ओदनः स्वयमेवेत्यादावित्येषोऽसति रूपभेदे धातूनां विवेको दुर्लभ इति कर्तृप्रत्ययवाच्यैव भावना भवत्वित्याशङ्क्याह—

तानि धात्वन्तराण्येव पचिसिद्ध्यतिवद् विदुः।
भेदेऽपि तुल्यरूपत्वादेकत्वपरिकल्पना ॥ ५७ ॥

कर्मकर्तृविषयाणि पच्यादीनि विक्लित्त्यादिमात्रवचनानि तदुपसर्जनविक्लेदनादिव्यापारवाचिपच्यादिधातुभ्यो धात्वन्तराणि बोद्धव्यानि। अर्थभेदेन शब्दभेदात्। प्रधानं हि शब्दानां प्रतिपाद्योऽर्थः। प्रधानानुयायी च गुण इति

---

विक्लिद्यन्ति। कर्मेतरकरणादिकारकप्रेरणमेव ह्यत्र मुख्यकर्तृव्यापारो लक्ष्यते, न तु कर्मणो विनियोग इति ॥ ५६ ॥

ननु 'पचत्योदनम्, पच्यते ओदनः स्वयमेव' इत्यादौ कर्तृप्रत्यये कर्मकर्तरि चैक एव पच्यादिर्धातुः, आनुपूर्व्या एकत्वश्रवणात्।

तथा हि—'पचत्योदनम्, भिनत्ति कुसूलम्, लुनाति केदारं देवदत्त' इत्यादौ कर्तृप्रत्ययस्थले कर्तृव्यापारे गुणभूतं विक्लित्तिद्विधाभावादिरूपमर्थमाह—पच्यादिर्धातुः। 'पच्यते ओदनः स्वयमेव, भिद्यते कुसूलः स्वयमेव, लूयते केदारः स्वयमेव' इत्यादौ कर्मकर्तरि तु कर्तृव्यापारे गुणभावमप्राप्तं प्राधान्येन स्वप्रतिष्ठं तमेवार्थमाह—इत्येष विवेकः=अर्थभेदो धातूनां स्वरूपभेदेऽसति दुर्लभ इति कर्तृप्रत्ययवाच्यैव भावना भवतु, धातुवाच्यस्तु विक्लित्त्यादिरेवेत्याशङ्क्याह—तानि धात्वन्तराणीति।

अस्यार्थः— तानि=कर्तृप्रत्ययसमभिव्याहृतानि कर्मकर्तृप्रत्ययसमभिव्याहृतानि च धातुरूपाणि नैकत्ववन्ति; किन्तु धात्वन्तराण्येव, पचिसिध्यतिवत्, यथा पच्धातुः सिध्यतेः स्वरूपतोऽर्थतश्च भिन्नस्तथा विदुर्वैयाकरणाः। पचिर्हि विक्लेदने वर्तते—पचत्योदनं देवदत्त इति। सिध्यतिस्तु विक्लित्तौ—सिध्यन्ति तण्डुला इति। पचिरप्येवं कर्तृप्रत्ययसमभिव्याहारे विक्लेदने वर्तते। 'पचत्योदनं देवदत्तः' इति। कर्मकर्तृप्रत्ययसमभिव्याहारे तु विक्लित्तौ वर्तते 'पच्यते ओदनः स्वयमेव' इति। ततश्चार्थभेदात् शब्दभेद आवश्यक आनुपूर्वीसाम्येऽपि। तदुक्तं भाष्ये—प्रत्यर्थं शब्दाभिनिवेश इति। अर्थमर्थं प्रति प्रत्यर्थं भिन्नभिन्नशब्दप्रवृत्तिरिति तदर्थः।

एवं कर्तृप्रत्ययसमभिव्याहारे कर्मकर्तृप्रत्ययसमभिव्याहारे च पचेर्भेदेऽपि एकत्वपरिकल्पना उभयत्रापि पचिरेक एवेति कल्पनातुल्यरूपत्वात् समानानुपूर्वीकत्वादिति।

न्यायात् प्रत्यर्थं भिद्यते शब्दः। तद्यथा पचेर्विक्लेदनवचनात् सिध्यतिरन्यो धातुर्विक्लित्तिवचनः। धात्वन्तरत्वेऽपि चैकत्वेन रूपाभेदादुपदेशो धातुपाठे डुपचष् पाक इत्यादि अभिन्नरूपं ह्येकत्वकल्पनासहं वस्तु। यत्र तूपदेशभेदे फलभेदोऽस्ति, तत्र द्विस्त्रिरुपदेशः, तद्यथा क्षियत्यादीनां विकरणभेदात् क्षि क्षये भ्वादौ, क्षि निवासगत्योरिति तुदादौ दिवादौ च, क्षीष् हिंसायामिति च क्रयादौ ॥ ५७ ॥

इदानीम् एकमाहुरनेकार्थं शब्दमन्ये परीक्षका इति नयेनाह—

एकदेशे समूहे च व्यापाराणां पचादयः।
स्वभावतः प्रवर्तन्ते तुल्यरूपसमन्विताः ॥ ५८ ॥

तुल्येनाभिन्नेन रूपेण स्वभावेन युक्ता एते धातवोऽभिन्नाः, अबाध्यमानस्यैकाकारप्रत्ययस्याभेदावेदकत्वात्। अनेकार्थत्वमेव बाधकमिति चेत्, न, शक्ति-

---

अयं भावः— कर्मकर्तृप्रत्ययविषयाणि पच्यादीनि विक्लित्त्यादिमात्रवचनानि, कर्तृप्रत्ययविषयाणि तु पच्यादीनि विक्लित्त्याद्युपसर्जनविक्लेदनादिव्यापारवाचीनि, तानि उभयान्यपि परस्परं समानानुपूर्वीकत्वेऽपि भिन्नानि बोद्धव्यानि। अर्थभेदेन शब्दभेदात्।

शब्दानां हि प्रतिपाद्यत्वेनार्थः प्रधानम्। गुणश्च प्रधानमनुसरति इति न्यायः, तस्मात् प्रत्यर्थं शब्दो भिद्यते। प्रधानीभूतार्थभेदे तमनुसरतो गुणस्य शब्दस्यापि भेदावश्यंभावात्। तद्यथा विक्लेदनवचनात् पचेर्विक्लित्तिवचनः सिध्यतिरन्यः। रूपभेदादर्थभेदाच्च। उभयोः पच्योरेवं भेदेऽपि धातुपाठे 'डुपचष् पाके' इत्यादिरेकत्वेनोपदेशो रूपाभेदात्=आनुपूर्व्या एकत्वात्। अभिन्नरूपं हि=समानसंस्थानं हि एकत्वकल्पनसहम्=अभेदविभ्रमं सहते वस्तु। यत्र तूपदेशभेदे=उपदेशावृत्तौ फलभेदोऽस्ति, तत्र युक्त एव द्विस्त्रिरुपदेशः। तद्यथा क्षियत्यादीनां गणपाठभेदेन तत्तद्विकरणरूपफलभेदात् पुनः पुनरुपदेशः। 'क्षि' क्षये इति भ्वादौ 'क्षि' निवासगत्योरिति तुदादौ दिवादौ च, क्षीष् हिंसायामिति च क्रयादौ। तत्र भौवादिकस्य शपि क्षयति इति रूपम्, तौदादिकस्य शप्रत्यये क्षियति इति, दैवादिकस्य तु श्यनि क्षीयते इति, क्रैयादिकस्य तु श्नाप्रत्यये क्षिणाति इति ॥ ५७ ॥

पूर्वं 'प्रत्यर्थं शब्दाभिनिवेशः' इत्यत्र प्रत्यर्थमित्यस्य अर्थमर्थं प्रति इति व्याख्यानमाश्रित्य अर्थभेदेन शब्दभेद उक्तः, इदानीन्तु अर्थौ अर्थौ प्रति, अर्थान् अर्थान् प्रति यत्तदपि प्रत्यर्थमेवेति भाष्यानुसारि व्याख्यानमाश्रित्य—

"एकमाहुरनेकार्थं शब्दमन्ये परीक्षका" (वा० प० २।२५०) इति कारिकोक्तनयेन अर्थभेदेऽपि न शब्दभेदः; किन्तु शक्तिभेद इत्याशयेनाह—एकदेश इति।

भेदेन तदुपपत्तेः। अनेकार्थप्रतिपादनशक्तिर्ह्येकोऽपि शब्दो दृष्टः। यथा ग्रामशब्दः शालासमुदायवाटकपरिक्षिप्तदेशजनसमुदायवचनः। यथा वाक्षादिशब्दाः। तत्र कर्मकर्तृविषये विक्लित्तिमात्रवचनः पचिः, पच्यते ओदनः स्वयमेवेति। देवदत्तस्य कर्तुः प्रत्ययेनाभिधानात्तद्व्यापारस्यात्र धातुवाच्यत्वाभावः। प्रधानभूतो हि पच्यर्थो विक्लित्तिः, सर्वत्र सम्भवात्। अपेक्षितेऽपि हि कर्तृव्यापारे देवदत्तः पचतीत्यत्र विक्लित्त्यर्थत्वाद्विक्लेदनस्य कर्तृव्यापारस्यार्थेन रूपेण विक्लित्तेरेव प्राधान्यात्, अत्र च द्वयस्याभिधानात् समूहवृत्तित्वम्। अत्रैव द्व्यर्थतोपपत्तिरुक्ता।

कर्मकर्तृविषये तु कर्तृप्रत्ययस्याभावात् तद्व्यापारो भावना नाभिधीयते। कर्मैव ह्यत्र कर्ता, तद्व्यापारश्च विक्लित्तिरेवेति सैवाभिधीयते। तद्यथा विक्लिद्यन्ति सिद्ध्यन्ति तण्डुला इति विक्लित्तेरेव कर्तृव्यापारस्याभिधानम्। एवं भिद्यते कुसूलः स्वयमेवेति द्विधाभवनं धात्वर्थः। भिनत्ति कुसूलं देवदत्त इति तदुपसर्जनं द्विधाभावनमित्युदाहार्यम्॥ ५८॥

---

अस्यार्थः—कर्तृप्रत्ययसमभिव्याहारे तत्तत्कारकव्यापाराणां समूहे, कर्मकर्तृविषये, अन्येषां साधनानां सौकर्यातिशयमूलिकायां कर्तृत्वविवक्षायाञ्च व्यापाराणामेकदेशे तुल्यरूपसमन्विताः=समानानुपूर्वीका अतोऽभिन्नाः पचादिधातवः स्वभावतः प्रवर्त्तन्ते। तत्र समूहे उदाहरणम्—देवदत्तः काष्ठैः स्थाल्यां तण्डुलं पचति इति। एकदेशे उदाहरणम्—पच्यते ओदनः स्वयमेव, एधाः पचन्ति, स्थाली पचति इति।

अयं भावः—यतो व्यापाराणां समूहे एकदेशे वा स्वभावतः प्रवर्तमानाः पचादयो धातवः तुल्येनाभिन्नेन रूपेण स्वभावेन आनुपूर्व्येण युक्ता अतोऽभिन्नाः। अबाध्यत्वेन प्रमारूपस्यैकाकारप्रत्ययस्याभेदावेदकत्वात्। अनेकार्थकत्वमेवैकाकारप्रत्ययस्य बाधकमिति चेत्, न, धातुरूपस्य शब्दस्यैक्येऽपि शक्तिभेदेनार्थभेदोपपत्तेः। एकोऽपि हि शब्दोऽनेकार्थप्रतिपादनशक्तिमान् दृष्टः। यथा ग्रामशब्दः शालासमुदायवाटकपरिवृत्तदेशजनसमुदायवचनः। यथा वाऽक्षादिशब्दा द्यूतरथाङ्गविभीतकवचनाः। तत्र पच्यते ओदनः स्वयमेवेत्यादौ कर्मकर्तृविषये विक्लित्तिमात्रवचनः पच्धातुः। देवदत्तादिरूपस्य कर्तुरत्र प्रत्ययेनाभिधानात् तद्व्यापारस्यात्र धातुवाच्यत्वाभावः। सर्वेषां साधनव्यापाराणामुद्देश्यत्वेन प्रधानभूतो हि पच्यर्थो विक्लित्तिः, सर्वत्र=कर्तरि कर्मकर्तरि च सम्भवात्। 'देवदत्तः पचति' इत्यत्र विक्लित्तिसिद्ध्यर्थमपेक्षितेऽपि हि कर्तृव्यापारे विक्लेत्तेरेव प्राधान्यात्। अत्र च=देवदत्तस्तण्डुलं पचतीत्यत्र द्वयस्य=कर्तृव्यापारस्य, विक्लित्तिरूपस्य कर्मव्यापारस्य च अभिधानाद् व्यापारसमूहवृत्तित्वं प्रचेः। अत्रैव द्व्यर्थोपपत्तिः=पचेरनेकार्थत्वोपपत्तिरुक्ता।

कर्मकर्तृविषये तु कर्तृप्रत्ययस्याभावात् तद्व्यापारो भावना धातुना नाभिधीयते। कर्मैव ह्यत्र कर्ता, तद्व्यापारश्च विक्लित्तिरेवेति सैवात्राभिधीयते।

तदेवं विचित्रशक्तित्वाच्छब्दानां विषयभेदेनार्थविवेकः समुदितः। इदानीं कर्मकर्तृप्रसङ्गेन "णेरणौ यत्कर्म" (पा० १।३।६७) इत्यत्र "कर्मकर्तृत्वात् सिद्धम्" (वा० पा० १।३।६७) इत्युक्तत्वाद् विचारयति—

न्यग्भावना न्यग्भवनं रुहौ शुद्धे प्रतीयते।
न्यग्भावना न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते ॥ ५९ ॥

अवस्थां पञ्चमीमाहुर्ण्यन्ते तां कर्मकर्तरि।
निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते ॥ ६० ॥

इहारोह्यते हस्ती स्वयमेवेत्ययं हस्तिव्यापाराभिधायी प्रयोगोऽस्ति कर्मकर्तृविषयः। तस्य चान्वाख्यानोपायपरिकल्पना कर्तव्या। तत्र रूपसामान्यानुगमप्रवर्तितेन रेखागवयवदवयवापोद्धारेण तदर्थाश्रयणेन चान्वाख्यानं प्रवर्तते। तथा च यावतीषु सोपानस्थानीयासु अर्थविभागभूमिषु पदं विन्यस्येयं प्रायोगिकी पर्यन्तभूमिः प्राप्यते ता अन्तरालभाविन्यो गण्यमाना भूमयोऽवस्थाशब्दवाच्याः। तत्राद्ये भागे रुहिधातुः प्रत्यभिज्ञायते। तस्य चान्यत्रावस्थाद्वयरूपोऽर्थः प्रसिद्धः, स एवेहाङ्गीक्रियते। तदेतदाह—

---

तद्यथा—विक्लिद्यन्ति सिध्यन्ति तण्डुला' इति विक्लित्तेरेव कर्तृप्रत्ययस्याभिधानं तथा 'पच्यते ओदनः स्वयमेव इत्यत्रापि। एवं भिद्यते कुसूलः स्वयमेवेति। अत्र द्विधाभवनं धात्वर्थः। 'भिनत्ति कुसूलं देवदत्तः' इत्यत्र तु द्विधाभवनोपसर्जनं द्विधाभावनं धात्वर्थं इत्युदाहार्यमिति ॥ ५८ ॥

तदेवं शब्दानां शक्तिभेदात् तत्तत्प्रत्ययरूपविषयभेदेनार्थभेदः समुदितः। इदानीं कर्मकर्तृप्रसङ्गेन—'णेरणौ यत्कर्म' (पा० १।३।६७) इति सूत्रे "कर्मकर्तृत्वात् सिद्धम्" (वा० पा० १।३।६७) इति भाष्यवार्तिके उक्तत्वाद् विचारयति—न्यग्भावनेति, अवस्थां पञ्चमीमिति च।

अस्य पद्यद्वयस्यार्थः—शुद्धे=णिज्रहिते केवले, रुहौ—रुह्धातौ, न्यग्भावना, न्यग्भवनमिति अर्थद्वयं प्रतीयते 'आरोहन्ति हस्तिनं हस्तिपकाः' इत्यत्र ततो न्यग्भावनारूपस्य प्रेषणस्याविवक्षायाम्—सूत्रकारभाष्यकारमतावलम्बेन—आरोहति हस्ती स्वयमेवेति, वाक्यकारमतावलम्बेन तु—'आरुह्यते हस्ती स्वयमेवेति।' तथा हि—'कर्मवत् कर्मणा तुल्यक्रियः' (पा० ३।१।८७) इति सूत्रे तत्त्वबोधिन्यामुक्तम्—"दर्शनारोहणाभ्यां विषये न्यग्भूते च विशेषानुपलम्भात् कर्तृस्थता" इति। ततश्च यगात्मनेपदयोरप्राप्त्या 'आरोहति हस्ती स्वयमेवेति'।

हेलाराजेन तु अस्यैव कारिकाद्वयस्य व्याख्या अन्ते उक्तम्—"न्यग्भवनञ्च विक्लित्तिवत् कर्मस्थमिति रुहिः कर्मस्थक्रियो वाक्यकारस्य कर्मवद्भावविषयः"

न्यग्भावना न्यग्भवनं रुहौ शुद्धे प्रतीयते । इति ।

शुद्धे केवले णिज्रहित इत्यर्थः। आरोहन्ति हन्तिनं हस्तिपका इत्यत्र न्यग्भवन्तं न्यग्भावयन्तीत्यर्थः। अत्र च धात्वर्थमात्रप्रदर्शने तात्पर्यम्। विकरण-प्रत्ययाद्युपादानं तु नान्तरीयकम्। नान्यथा प्रयोगार्हः प्रदर्शकः शब्दो लभ्यत इत्यारोहयते हस्ती स्वयमेवेत्यस्यैव धातोरयमर्थः प्रदर्शितो भवति।

एवं च कृत्वैकेन शब्देन धातुना नान्तरीयकतयोपात्तप्रत्ययसहायेनावस्था-द्वयं न्यग्भावनान्यग्भवनलक्षणमुपात्तम्। धातुभागादूर्ध्वं चात्र गुणायादेशलक्षण-कृतविकारो णिच् प्रत्यभिज्ञायते। स यदि यथास्थितप्रकृत्यर्थनिष्ठे प्रयोजकव्या-पारेऽन्वाख्यायते तदा न्यग्भावनिष्ठापरप्रयोजकव्यापारप्रतीतिप्रसङ्गात् प्रकृत-वैगुण्यं स्यात्। तेन रुहिधात्वर्थसङ्कोचलभ्यं मध्येऽवस्थान्तरं प्रकृत्यर्थत्वेन णिच आश्रीयते हस्तिव्यापारमात्ररूपम्। तत्पर्यन्तेऽपूर्वत्वशङ्कापरिहाराय दर्शितम्--

निवृत्तप्रेषणाद्

---

इति। ततश्चैतन्मते कर्मवद्भावेन यगात्मनेपदयोः प्राप्त्या आरुह्यते हस्ती स्वयमेव' इति। ततः पुनरपि प्रेषणस्य विवक्षायां हेतुमण्णिचि—'आरोहयन्ति हस्तिनं हस्तिपकाः' इति। अत्र आरोहन्ति हस्तिनं हस्तिपका इति प्रथमेन तुल्यार्थता।

अत एवोच्यते—"न्यग्भावना न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते" इति। अत्र प्रतिपद्यत इत्यस्य ज्ञायत इत्यर्थः। ततः पुनरपि प्रेषणस्याविवक्षायाम्—"आरोहयते हस्ती स्वयमेव" इति णेरणौ ( पा० १।३।६७ ) सूत्रस्योदाहरणम्। अस्य तु 'आरोहति हस्ती स्वयमेव' इति द्वितीयेन तुल्यार्थता इति अस्यां चतुर्थकोटौ अपि न्यग्भवनमात्रमेवार्थः।

इत्थम् 'आरोहन्ति हस्तिनं हस्तिपकाः' इति प्रथमकोटौ न्यग्भवनं न्यग्भावनञ्चेति अर्थद्वयमवस्थापदवाच्यम्। 'आरोहति हस्ती स्वयमेव' इति द्वितीयकोटौ तु न्यग्भवनमात्रमर्थोऽवस्थापदवाच्यः। 'आरोहयन्ति हस्तिनं हस्तिपकाः' इति तृतीयकोटौ अपि न्यग्भवनं न्यग्भावनञ्चेति अर्थद्वयमवस्थापदवाच्यम्। ततः 'आरोहयते हस्ती स्वयमेव' इति चतुर्थकोटौ न्यग्भवनमात्रमर्थोऽवस्थापदवाच्यः।

ततश्च प्रथमकोटौ अर्थद्वयात्मिका एकैवावस्था=एकेन धातुना समूहरूपेण प्रतिपाद्यत्वात्। द्वितीयकोटौ तु एकार्थरूपा एकैवावस्था, एकधातुप्रतिपाद्या च। तृतीयकोटौ तु णिच् तत्प्रकृतिप्रतिपाद्यमर्थद्वयमवस्थाद्वयरूपम्। चतुर्थकोटौ तु णिजर्थस्याविवक्षितत्वात् णिच्प्रकृतिप्रतिपाद्य एक एवार्थ एकावस्थारूप इति रीत्येयमवस्था पञ्चमी। एतदेवोच्यते—'अवस्थां पञ्चमीमाहुर्ण्यन्ते तां कर्मकर्तरि' इति। ( वा० प० ३, साधन० ६० )

इत्यादिना । ततस्तन्निष्ठे प्रयोजकव्यापारे प्रागवस्थोपचयकारिणि णिजुत्पादितः केवलरुहितुल्यार्थतां सम्पादयति । तदाह —

न्यग्भावना न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते । इति ।

आरुह्यते हस्ती स्वयमेव, आरोहयन्ति हस्तिनं हस्तिपका इत्युदाहरणद्वयमत्र । एकेन प्रयोज्यव्यापारो णिच्प्रकृत्यर्थरूपो दर्शितः । स च नान्यथा शक्यदर्शन इति यगात्मनेपदे कर्मवद्भावात् प्राप्ते नान्तरीयकतयोपात्ते । द्वितीयेन णिजर्थो हस्तिपकव्यापारः प्रदर्शितः । स च प्रयोज्यव्यापारपृष्ठपातित्वेन शक्यदर्शन इति रुहिरुपात्तः । प्रत्ययाद्युपादानं तु नान्तरीयकतया पूर्ववत् । तदेताश्चतस्रोऽवस्थाः । तत ऊर्ध्वमात्मनेपदसरूपो भागो दृश्यते हस्तिव्यापारमात्रप्रतीतिश्च ।

एतच्च कर्मकर्त्रवस्थामन्तरेणाशक्यमिति पूर्वावस्थासंकोचलभ्या साश्रीयते । तदाह—

---

ण्यन्ते कर्मकर्त्तरि तामवस्थां पञ्चमीमाहुर्वैयाकरणाः । यतोऽत्र तृतीयकक्षायां प्रेषणस्याविवक्षया निवृत्तप्रेषणाद् रुह्धातोः प्राकृतेऽर्थे=रुह् धातोः प्रकृतिरूपस्य स्वाभाविकेऽर्थे न्यग्भवनानुकूलव्यापाररूपे णिजुच्यत इति ।

अयं भावः—लोके—आरोहयते हस्ती स्वयमेवेत्ययं न्यग्भवनरूपहस्तिव्यापाराभिधायी कर्मकर्त्तरि प्रयोगोऽस्ति प्रसिद्धः । तस्य चान्वाख्यानोपायपरिकल्पना कर्त्तव्याऽत्र शास्त्रे । तत्र च 'आरोहन्ति हस्तिनं हस्तिपकाः' इत्यत्र यो रुहिः, यश्च 'आरोहति हस्ती स्वयमेव' इत्यत्र रुहिः, 'आरोहयन्ति हस्तिनं हस्तिपकाः' इत्यत्र य 'आरोहयतिः, यश्च—आरोहयते हस्ती स्वयमेव' इत्यत्र आरोहयतिः, तयोस्त्रयोश्च रूपसामान्यानुगमप्रवर्त्तितेन=आनुपूर्वीरूपसाधारणधर्मानुगमकृतेन रेखागवयवत् कल्पितेन पदस्य अवयवापोद्धारेण तदर्थाश्रयेण चान्वाख्यानमत्र प्रवर्त्यते । तथा च यावतीषु सोपानस्थानीयासु अर्थविभागभूमिकासु पदं विन्यस्येयं प्रायोगिकी पर्यन्तभूमिः प्रासादोपरितलवत् प्राप्यते ता अन्तरालभाविन्यो गण्यमाना भूमयोऽवस्थाशब्दवाच्याः । तत्राद्ये भागे 'आरोहन्ति हस्तिनं हस्तिपका इत्यत्र रुहिधातुः प्रत्यभिज्ञायते । तस्य च न्यग्भवनन्यग्भावनारूपावस्थाद्वयरूपोऽर्थः । अन्यत्र=न्यग्भवति, न्यग्भावयन्ति' इत्यत्र प्रसिद्धः, स एवेहाङ्गीक्रियते । तदेतदाह—

न्यग्भावनान्यग्भवनं रुहौ शुद्धे प्रतीयते ॥ इति ।

शुद्धे केवले णिज्रहित इत्यर्थः । 'आरोहन्ति हस्तिनं हस्तिपकाः' इत्यत्र न्यग्भवन्तं न्यग्भावयन्तीत्यर्थः ।

अवस्थां पञ्चमीम् इत्यादि ।

तदेवं कर्मकर्तृत्वाद् आरोहयते इत्यात्मनेपदे सिद्धे णेरणौ ( १।३।६७ ) इत्यत्र "कर्मकर्तृत्वात् सिद्धमिति चेद् यक्चिणोर्निवृत्त्यर्थं वचनम्" ( वा० १।३।६७ ) इति वार्त्तिककारेणोक्तम् । तत्र "न वा यक्चिणोः प्रतिषेधात्"

अत्र च तिसृषु कक्षासु प्रागुक्तासु धात्वर्थप्रदर्शनमात्रे तात्पर्यम् । विकरणविभक्त्याद्युपादानन्तु नान्तरीयकम् । यतो नान्यथा प्रयोगार्होऽर्थप्रदर्शकः शब्दो लभ्यत इति अरोहयते हस्ती स्वयमेवेत्यस्यैव धातोरयमर्थस्तिसृभिः कक्षाभिः प्रदर्शितो भवति ।

एवञ्च कृत्वैकेन शब्देन रुहिधातुना नान्तरीयकतयोपात्तविकरणविभक्त्यादिरूपप्रत्ययसहायेन न्यग्भावनान्यग्भवनरूपमवस्थाद्वयमुपात्तम् । धातुभागादूर्ध्वञ्चात्र गुणायादेशरूपौ विकारौ प्राप्तौ णिच् प्रत्यभिज्ञायते । स यदि यथास्थितप्रकृत्यर्थनिष्ठे = कर्त्तृव्यापारे गुणतया स्थितन्यग्भावरूपणिच्प्रकृत्यर्थानुकूले प्रयोजकव्यापारेऽन्वाख्यायते तदा न्यग्भावानुकूलापरप्रयोजकव्यापारप्रतीतिप्रसंगाद् न्यग्भावानुकूलैकमात्रव्यापाराप्रतीत्या प्रकृतार्थवैगुण्यं स्यात् । तेन रुहिधातोर्न्यग्भावनारूपार्थस्याविवक्षारूपतद्धात्वर्थसंकोचलभ्यं प्रथमतृतीयावस्थयोर्मध्ये न्यग्भवनरूपमवस्थान्तरं हस्तिव्यापारमात्ररूपं तृतीयकक्षायां जायमानस्य णिचः प्रकृत्यर्थत्वेनाश्रीयते । तत्पर्यन्ते = तस्य पूर्वोक्तस्य कक्षात्रयस्य अनुक्रमेण दर्शितस्य पर्यन्ते चतुर्थकक्षारूपे 'आरोहयते हस्ती स्वयमेव' इत्यत्र अपूर्वधातुत्वशङ्कापरिहाराय ततः पूर्वा कक्षा दर्शिता निवृत्तप्रेषणादित्यादिना । ततः = अविवक्षया निवृत्तप्रेषणाद् रुह्धातोः तन्निष्ठे = तदर्थन्यग्भवनमात्रानुकूले प्रयोजकव्यापारे न्यग्भवनमात्ररूपप्रागवस्थोपचयकारिणि णिजुत्पादितः केवल-( णिज्रहित-)प्रथमकक्षागतरुहितुल्यार्थतां सम्पादयति । तदाह—न्यग्भावनान्यग्भवनं ण्यन्तेऽपि प्रतिपद्यत इति । अत्रैव अग्रे वक्ष्यमाणेन वार्त्तिककारमतेन -- 'आरुह्यते हस्ती स्वयमेव, आरोहयन्ति हस्तिनं हस्तिपकाः' इत्युदाहृणद्वयमत्र । तत्र प्रथमेन उदाहरणेन प्रयोज्यहस्तिव्यापारो णिच्प्रकृत्यर्थन्यग्भवनरूपो दर्शितः । स च नान्यथा शक्यदर्शन इति यगात्मनेपदे कर्मवद्भावात् प्राप्ते नान्तरीयकतया = अविनाभूततया उपात्ते । द्वितीयेन उदाहरणेन णिजर्थो हस्तिपकव्यापारो न्यग्भावनरूपः प्रदर्शितः । स च प्रयोज्यहस्तिव्यापाररूपन्यग्भवनस्य पृष्ठपातित्वेन = पश्चाद्भवत्वेन शक्यदर्शन इति प्रथमोदाहरणे प्रयोजकव्यापारस्य न्यग्भावनस्याविवक्षया न्यग्भवनमात्रार्थको रुहिरुपात्तः । यगात्मनेपदादिरूपप्रत्ययाद्युपादानन्तु नान्तरीयकतया पूर्ववत् ।

तदेवमेताश्चतस्रोऽवस्थाः कक्षात्रयेण प्रागुक्ताः । तत ऊर्ध्वं चतुर्थ्यां कक्षायामात्मनेपदसरूपो भागो दृश्यते आरोहयते हस्ती स्वयमेव' इत्यत्र हस्तिव्यापारमात्रप्रतीतिश्च ।

( वा० १।३।६७ ) इत्यादिना कर्मवद्भावेनैवात्रात्मनेपदमिति सिद्धान्तितम्। 'गणयति गणः स्वयमेव' इत्यत्र तु आत्मनेपदनिवृत्त्यर्थं नियमार्थतया 'णेरणौ' ( पा० १।३।६७ ) इति सूत्रं वार्तिककारेण स्थापितम्। न्यग्भवनं च विक्लित्तिवत् कर्मस्थमिति रुहिः कर्मस्थक्रियो वाक्यकारस्य कर्मवद्भावविषयः ॥५९-६० ॥

दृश्यते च धातूनां प्रकृत्यन्तण्यन्तानां केषाञ्चित् समानोऽर्थं इत्यत्र दृष्टान्तमाह–

**ब्रवीति पचतेरर्थं सिद्धचतिर्न विना णिचम्।**
**स ण्यन्तः पचतेरर्थे प्रकृते व्यवतिष्ठते ॥ ६१ ॥**

---

एतच्च कर्मकर्त्रवस्थामन्तरेणाशक्यमिति पूर्वणिजवस्था लभ्या=पूर्वा या णिजवस्था न्यग्भवनन्यग्भावनारूपार्थद्वयरूपा तस्याः संकोचः प्रयोजकव्यापार-स्याविवक्षया केवलन्यग्भवनरूपार्थपरत्वं तल्लभ्या, सा=कर्मकर्त्रवस्था पञ्चमी आश्रीयत इति। तदाह—"अवस्थां पञ्चमीम्" इत्यादि।

तदेवं कर्मकर्तृत्वाद् आरोहयते इत्यात्मनेपदे सिद्धे–"णेरणौ" (पा०१।३।६७) इति सूत्रे–"कर्मकर्तृत्वात् सिद्धमिति चेत्, यक्चिणोर्निवृत्त्यर्थं वचनम्" इति वार्त्तिककारेणोक्तम्।

अस्यार्थः–'आरोहयते हस्ती स्वयमेव' इत्यत्रात्मनेपदं कर्मणः कर्त्तृत्वात् कर्त्तरि लकारोत्पत्त्या सिद्धमिति चेत्, अत्र यक्चिणोर्निवृत्त्यर्थं णेरणावित्यत्र नियमाभ्युपगमेन यक्चिणोः प्रतिषेधार्थं णेरणाविति वचनमिति। तत्र–'न वा यक्चिणोः प्रतिषेधात्' ( वा० १।३।६७ ) इत्यादिना णेरणाविति कर्मवद्भावेनैवा-त्रात्मनेपदमिति सिद्धान्तितम्। 'गणयति गणः स्वयमेव' इत्यत्र कर्त्तृस्थक्रिये चतुर्थ-कक्षायान्तु आत्मनेपदनिवृत्त्यर्थं नियमार्थतया 'णेरणौ' ( पा० १।३।६७ ) इति सूत्रं वार्त्तिककारेण स्थापितम्। नियमाकारश्च—कर्मस्थयैव क्रियया तुल्यक्रियः कर्त्ता कर्मवद् भवति, न तु कर्तृस्थया क्रियया तुल्यक्रिय इति। न्यग्भवनञ्च विक्लित्तिवत् कर्मस्थमिति रुहिः कर्मस्थक्रियः, न तु कर्त्तृस्थक्रिय इति वार्त्तिककारस्य मते कर्म-वद्भावविषय इति यगात्मनेपदयोः सिद्धिः—'आरुह्यते हस्ती स्वयमेव' इति ॥ ५९-६० ॥

अत्र='आरोहति, आरोहयते' इत्यत्र केषाञ्चिद्धातूनां प्रकृत्यन्तण्यन्तानां समानोऽर्थो दृश्यतेऽपि इति मनसि कृत्वा दृष्टान्तमाह—ब्रवीति पचतेरिति।

अस्यार्थः–सिध्यतिः=सिध्धातुर्णिचं विना पचतेरर्थं न ब्रवीति। स एव सिध्यतिर्ण्यन्तः सन् 'ओदनं साधयति' इति प्रयोगे प्राकृते स्वाभाविके पचतेरर्थे विक्लित्त्यनुकूलव्यापाररूपे व्यवतिष्ठते व्यवस्थितो भवतीति।

सिद्धयत्योदन इति विक्लित्तिमात्रवचनो धातुः। पचत्योदनमिति विक्लित्युपसर्जनं विक्लेदनलक्षणं पचत्यर्थं णिच्सहितोऽभिधत्ते साधयत्योदनमिति। एवमारुहिर्ण्यन्तोऽपि क्वचित् तदर्थे वर्तत इति।

इदमत्र तात्पर्यम्—भिन्नावेवारुही प्रकृत्यन्तण्यन्तरूपौ पचति साधयतिवदेकार्थौ, ण्यन्ते तु प्रैषस्य निवृत्तावारोहयते हस्ती स्वयमेवेत्यपि न्यग्भवनवचनोऽन्य एव धातुरेवमुपायपरिकल्पनया व्युत्पाद्यते।

न त्वयमत्र परमार्थतो णिज् येनार्थनिवृत्तौ कथमवतिष्ठेतेति चोद्येत। अन्वाख्येयं हि लौकिकं शब्दमुद्दिश्य प्रतिपादकशब्दनिष्ठमुपायपरिकल्पनया प्रकृतिप्रत्ययविभागेनासत्येन सर्वत्रानुशासनं लौकिकार्थानुसारेणैवं(व) क्रियते।

नन्वेवमप्यसत्यस्यापोद्धारपदार्थस्यासम्भवे कथं तच्छब्दः। एवं तर्हि

---

अयं भावः—सिध्यत्योदन इत्यत्र सिध्धातुर्विक्लित्तिमात्रवचनः। स एव णिच्सहितः पचत्योदनमित्यत्र प्रतीयमानं विक्लित्त्युपसर्जनं विक्लेदनरूपं पचत्यर्थमभिधत्ते साधयत्योदनमिति। एवमाङ्पूर्वको रुहधातुर्ण्यन्तोऽपि क्वचित्=णिच्प्रकृतेरारुहेर्न्यग्भावनारूपार्थाविवक्षायां न्यग्भवनरूपार्थमात्रपरत्वे तदर्थे=प्राथमकल्पिकारोहत्यर्थे वर्तत इति।

इदमत्र तात्पर्यम्—'आरोहन्ति हस्तिनं हस्तिपकाः' इत्यत्र, 'आरोहयन्ति हस्तिनं हस्तिपकाः' इत्यत्र च भिन्नावेवारुही प्रकृत्यन्तण्यन्तरूपौ पचति, साधयति' इति भिन्नधातुवदेकार्थौ, ण्यन्ते तु प्रैषस्य निवृत्तौ 'आरोहयते हस्ती स्वयमेव' इत्यपि न्यग्भवनवचनोऽन्य एव धातुरुभयार्थकादारोहयतेर्ण्यन्ताद् न्यग्भवनवचनादारुहेश्चैवमुपायपरिकल्पनया प्रागुपदर्शितकोटिचतुष्टयरूपोपायपरिकल्पनया व्युत्पाद्यते=ग्राह्यते अर्थतः शब्दतश्च।

न त्वयमत्र=चतुर्थकोटौ परमार्थतो णिज् येनाविवक्षयाऽर्थनिवृत्तौ कथमवतिष्ठेतेति चोद्येत। अन्वाख्येयं हि लौकिकं शब्दम्—'आरोहयते हस्ती स्वयमेव' इतीममुद्दिश्य प्रतिपादकशब्दनिष्ठम्=चतुर्थकोटेः प्रतिपादको व्युत्पादको यः कोटित्रयात्मकः शब्दसमूहस्तन्निष्ठम्, सर्वत्र=तिसृष्वपि कोटिषु अनुशासनम्=व्याकरणकृतं साधुत्वान्वाख्यानम्, शब्दसिद्धयुपायपरिकल्पनारूपेण असत्त्वेन प्रकृतिप्रत्ययविभागेन लौकिकार्थानुसारेणैव क्रियते।

तथा च यदि प्रागुक्तप्रतिपादकशब्दकोटित्रयेऽसत्यः प्रकृतिप्रत्ययापोद्धारः, तदा चतुर्थकोटावपि तथैवेत्यविवक्षया णिजर्थनिवृत्तौ कथं चतुर्थकोटौ णिजवतिष्ठत इति चोदना न प्रसरति। प्रकृतिप्रत्यययोस्तदर्थयोश्च तत्राभावेन समुदायार्थस्यैवाखण्डस्य तत्र सत्त्वेन णिजर्थविवक्षाऽविवक्षयोस्तत्राभावात्।

नन्वेवमप्यसत्यस्यापोद्धारपदार्थस्य तत्रासम्भवे कथं तत्र तद्वाचको णिच् शब्दः,

कर्मव्यापारातिशयस्य णिच्प्रत्याय्यस्याऽस्ति सम्भव इत्यदोषः ॥६१॥

एवं प्रैषस्य निवृत्त्या कर्मणः कर्तृत्वमुपपाद्य प्रैषाध्यारोपेणाप्युपपादयितुमाह —

केषाञ्चिद् देवदत्तादेर्व्यापारो यः सकर्मके ।
स विना देवदत्तादेः कटादिषु विवक्ष्यते ॥ ६२ ॥

कटं करोति इत्यादौ सकर्मके धात्वर्थे देवदत्तादिप्रधानकर्तृविषये प्रधानकर्तुः प्रयोजकस्य यः प्रैषलक्षणो व्यापारः, असौ यदा सौकर्यातिशयविवक्षा कर्मणस्तदा कर्तारमन्तरेण तत्र कर्मणि विवक्ष्यते। यथा हि देवदत्तः प्रयुङ्क्ते एवं कटोऽपि सुकरो देवदत्तमिति भवति विवक्षा ॥ ६२ ॥

तदेतत् सामान्येनोक्तं प्रकृते योजयति —

निवृत्तप्रेषणं कर्म स्वस्य कर्तुः प्रयोजकम् ।
प्रेषणान्तरसम्बन्धे ण्यन्ते तेनाभिधीयते ॥ ६३ ॥

---

अर्थाभावे शब्दप्रयोगस्यानौचित्यादिति चेत्, एवं तर्हि प्रथमतृतीयकोटचोः कर्मभूतस्य हस्तिनो यो व्यापारातिशयो न्यग्भवनसौकर्यरूप, तस्य णिच्प्रत्याय्यस्य अस्ति सम्भव इति न चतुर्थकोटौ णिच्प्रयोगाभावापत्तिरूपो दोष इत्यवधेयमिति ॥ ६१ ॥

एवं कर्तृव्यापारस्य प्रैषस्याविवक्षया निवृत्त्या कर्त्तुर्निवृत्तौ कर्मणः कर्त्तृत्वमुपपाद्य कर्मणि स्वव्यापारातिशयविवक्षया कर्त्तृप्रैषाध्यारोपेणापि कर्त्तृत्वमुपपादयितुमाह—केषाञ्चिदिति।

अस्यार्थः—केषाञ्चिन्मते सकर्मके धातौ करोत्यादौ यो देवदत्तादेः कर्त्तुर्व्यापारः, स स्वाविवक्षया देवदत्तादेः प्रयोगं विना प्रयोगाभावे कटादिषु कर्मसु विवक्ष्यते। तदा स्वव्यापारातिशयविवक्षया प्रैषाध्यारोपेण कर्मैव कर्त्तुः प्रयोजको भवतीति यावदिति।

अयं भावः—'कटं करोति' इत्यादौ सकर्मके करोत्यादिधात्वथ देवदत्तादिरूपस्य प्रधानकर्त्तुर्विषये प्रधानकर्त्तुरितरकारकप्रयोजकस्य यः प्रैषरूपो व्यापारः, असौ यदा कर्मणः सौकर्यातिशयविवक्षा तदा कर्त्तारं विना तत्र कर्मणि विवक्ष्यते। तदा हि—यथा देवदत्तः कटं भवनाय प्रयुङ्क्ते, तथा कटोऽपि सुकरो देवदत्तं भावनाय प्रयुङ्क्ते इति रीत्या भवति कर्मणः कर्त्तृत्वविवक्षा।

एवञ्च 'कटः कारयते' इति लौकिकः कर्मकर्त्तृप्रयोगः सिद्धः कर्मणोऽविवक्षायामिति। एवमेव 'आरोहयते हस्ती' इति कर्मकर्त्तृप्रयोगः सिध्यतीति ॥ ६२ ॥

तदेतत् सामान्येन पूर्वकारिकयोक्तं प्रकृते विशेषे योजयति—निवृत्तप्रेषणमिति।

कर्तृव्यापारः प्रैषः कर्मण्यध्यारोपित इति निवृत्तप्रेषणं तदविवक्षितप्रयोजकव्यापारं स्वातन्त्र्यविवक्षायामात्मीयस्य प्रयोजकस्य प्रयोजकतां सौकर्यातिशयवशात् प्रतिपद्यमानं तत्र कटादिकर्मसम्बन्धिनि देवदत्तादिकर्तृविषये प्रेषणान्तरे प्रयोजकव्यापारान्तरे णिचि सति कारयते कटः स्वयमेवेति ण्यन्ताल्लकारेण कर्मकर्तृविषयेणाभिधीयत इति णिजभिधेयः प्रैषोऽस्तीति भावः ।

अत्र चोपायपरिकल्पना प्रैषो णिचः, न तु वस्तुतस्तत्सम्भव इति प्रयोज्यापेक्षाभावः । तथा च प्रयोज्यकर्मसम्भवादविद्यमानकर्मान्तरसम्बन्धाद्धातोर्विधीयमानं णेरणावित्यात्मनेपदं कथमिति न चोदनीयम् ।

तथा हि—सौकर्यातिशयप्रतिपादनाय कर्मणोऽवास्तवः प्रैषोऽध्यारोपित इति प्रतीते तस्मिन् प्रयोजकत्वस्याविवक्षा, कर्मकर्तृप्रतीतिसामर्थ्यात् तु भूतपूर्वप्रेषणावस्थावगम्यत इति तद्विषयो णिज् न निवर्तते ॥६३॥

---

अस्यार्थः--निवृत्तप्रेषणं कर्म निवृत्तं प्रेषणं यस्य तत्तथा---यद्विषयकं प्रेषणं कर्तृनिष्ठमविवक्षया निवृत्तम्, तत् कर्म सौकर्यातिशयवशात् कर्तृरूपं भूत्वा स्वस्य कर्त्तुः प्रयोजकं सत् प्रेषणान्तरसम्बन्धे सति कर्तृनिष्ठप्रैषातिरिक्तप्रैषसम्बन्धे सति ण्यन्ते 'कारयते कटः स्वयमेव' इत्यत्र कर्त्तरि जातेन तेनाभिधीयत इति ।

अयं भावः—प्रैषः कर्तृव्यापारः, स यदि कर्तरि न विवक्ष्यते, कर्मणि चाध्यारोप्यते, तदा निवृत्तप्रेषणं कर्म अविवक्षितस्वप्रयोजककर्तृव्यापारं सत् स्वस्य स्वातन्त्र्यविवक्षायामात्मीयस्य प्रयोजकस्य कर्त्तुः प्रयोजकतां सौकर्यातिशयबलात् प्रतिपद्यमानं सत् तत्र कटादिकर्मनिष्ठे देवदत्तादिरूपकर्तृविषयकप्रेषणान्तरे=प्रयोजककर्तृव्यापारान्तरे णिचि सति कारयते कटः स्वयमेवेति ण्यन्ताल्लकारेण कर्मकर्तृवाचकेनाभिधीयत इति णिज्वाच्यः प्रैषोऽस्ति इति णिजर्थाभावे 'कारयते कटः स्वयमेव' इत्यत्र कथं णिजिति चोद्यं नावतरति ।

अत्र च प्रैषो णिच उपायपरिकल्पना, न तु वस्तुतोऽत्र तत्सम्भव इति प्रयोज्यस्य देवदत्तादेः प्रयोगापेक्षाया अत्राभावः । तथा च अविद्यमानकर्मान्तरसम्बन्धाद् धातोर्विधीयमानं णेरणावित्यात्मनेपदं कथम् ? अत्र प्रयोज्यकर्मणो देवदत्तादेः सम्भवादिति न शङ्कनीयम् ।

तथा हि—कर्मणः सौकर्यातिशयप्रतिपादनाय कर्मण्यवास्तवः प्रैषोऽध्यारोपित इति प्रतीते सति कर्मणि प्रयोजकत्वस्याविवक्षा, कर्मकर्तृप्रतीतिसामर्थ्यात्तु=पुरेदं कर्म अधुना तु कर्तृरूपं सम्पन्नं कर्त्तुः प्रयोजकत्वेन इति प्रतीतिसामर्थ्यात्तु भूतपूर्वा प्रेषणावस्थाऽवगम्यत इति तद्विषयः प्रेषणार्थको णिज् न निवर्त्तते 'कटः कारयते स्वयमेव' इत्यत्रेति ॥ ६३ ॥

एव कर्मकर्तृप्रसङ्गेन णेरणावित्यत्र विचारितम् । "त्यदादिषु दृशोऽनालोचने कञ् च" (पा० ३।२।६०) इत्यत्र वार्तिके "कृदर्थानुपपत्तिस्तु" (वा० ३।२।६०) इति चोदितम् ।

"कर्त्तरि कृत्" (पा० ३।४।६७) इति वचनात् कर्त्रा प्रत्ययार्थेन भाव्यम् । स चात्र नोपपद्यते । सदृशलक्षणं ह्यर्थं तादृशादयः शब्दाः प्राहुः, न तु दर्शनक्रियायाः कर्त्तारमिति वार्त्तिकार्थः । तत्रोक्तम्—"इवार्थे चायं तद्धितः" (वा० ३।२।६०) इति ।

"इवे प्रतिकृतौ"(पा० ५।३।९६)इत्यत्र प्रकरणेऽयं तद्धितसंज्ञः प्रत्ययो वक्तव्यः । तथा च स इव तादृश इत्याद्यर्थसिद्धिरित्यर्थः । एवं वार्त्तिककारेण सिद्धान्तितम् ।

भाष्यकारस्तु कृदर्थानुपपत्तिरिति चोद्यं यथान्यासमेव परिहर्तुम् 'कर्मकर्तृत्वात् सिद्धम्" इति ।

तत्र दृशः कर्त्तृस्थभावकत्वात् कर्त्तृव्यापारदर्शनमात्रवाच्यतया प्रैषस्या-

---

कर्मकर्त्तृप्रसङ्गेन णेरणाविति सूत्रे एवम्=पूर्वोक्तरीत्या विचारितम् । "त्यदादिषु दृशोऽनालोचने कञ् च" (पा० ३।२।६० ) इति सूत्रे वार्त्तिके तु कर्मकर्त्तृप्रसङ्गागतोऽपरो विचारः । तथा हि—तत्र वार्त्तिके "कृदर्थानुपपत्तिस्तु" (वा० ३।२।६०) इत्याशङ्कितम् ।

"कर्त्तरि कृत्" (पा० ३।४।६७) इति सूत्रबलाद् यादृशतादृशादिषु कञ्प्रत्ययान्तेषु कर्त्ता कञ्प्रत्ययार्थो भवितुमर्हति । स चात्र नोपपद्यते । सदृशरूपं ह्यर्थं तादृशयादृशादयः शब्दाः प्राहुः, न तु दर्शनक्रियायाः कर्तारमिति प्रकृतवार्त्तिकार्थः ।

तत्रोक्तं वार्त्तिककृता—"इवार्थे चायं तद्धितः" (वा० ३।२।६०) इति । अत्र चो हेतौ । यतोऽयं कञ्प्रत्ययस्तद्धित इवार्थे "इवे प्रतिकृतौ" (पा० ५।३।९६) इत्यस्य प्रकरणे वक्तव्यः, अतो न काप्यनुपपत्तिः । तथा च स इव तादृश इत्याद्यर्थसिद्धिरिति वार्त्तिकार्थः । इत्येवमिदं वार्त्तिककारेण सिद्धान्तितम् ।

भाष्यकारस्तु—कृदर्थानुपपत्तिरिति आक्षेपं यथान्यासमेवाभ्युपेत्य तत्परिहाराय—"कर्मकर्त्तृत्वात् सिद्धम्" इत्युक्तम् ।

तस्यायमाशयः—"तमिवेमं पश्यन्ति जनाः" । अत्र 'पश्यन्ति' इत्यस्य चाक्षुषप्रत्यक्षगोचरं कुर्वन्तीत्यर्थः । ततः कर्मव्यापारस्य सौकर्यातिशयविवक्षायां कर्तृव्यापारस्याविवक्षायां स इवायं स्वयमेव पश्यति=दृग्गोचरो भवतीत्यर्थः, इत्येवं कर्मणः कर्त्तृत्वसिद्धौ तादृश इत्यादिप्रयोगस्य कर्मकर्त्तरि सिद्धिरित्यर्थः ।

इममाशयमबुद्ध्वा तत्र दृशः कर्तृस्थभावकत्वात् कर्त्तृव्यापारस्य दर्शनमात्रस्य वाच्यतया कर्मव्यापारस्य प्रैषस्याभावात् कथं कर्मणः कर्त्तृत्वसम्भवः, कर्मणि प्रैष-

भावात् कथं कर्मकर्त्तृत्वसम्भवः। प्रेषणाध्यारोपे तु णिच् स्यात्। अण्यन्तश्च सूत्रे दृशिरुपात्तः। अत्र—

निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम्।
निवर्तमाने कर्मत्वे स्वे कर्त्तृत्वेऽवतिष्ठते॥

इत्यनेन न्यायेन कर्मकर्त्तृत्वं केचित् समर्थयमानाः प्राहुः—

**सदृशादिषु यत् कर्म कर्तृत्वं प्रतिपद्यते।**
**आपत्त्यापादने तत्र विषयत्वं प्रति क्रिये॥ ६४॥**

सदृशतादृशादिषु शब्देषु व्युत्पाद्येषु यत् कर्म कर्तृत्वं प्रतिपद्यते, यत् कर्मणः कर्तृत्वमुक्तम्, तत्र दृशेर्विषयभावविषये हि आपत्त्यापादने क्रिये वाच्ये इति तदाश्रयेण कर्मकर्त्तृत्वसमर्थना।

---

ध्यारोपे तु णिच् स्यात्, अण्यन्तश्च दृशिः—"त्यदादिषु दृशो" (पा० ३।२।६०) इत्यादिसूत्रे उपात्त इत्याशङ्क्य—

निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम्।
निवर्तमाने कर्मत्वे स्वे कर्त्तृत्वेऽवतिष्ठते॥
(वा० प० ३, साधन० ६१)

इति प्रागुक्तपद्याभिप्रेतेन न्यायेन अत्र कर्मकर्त्तृत्वं समर्थयमानाः केचित् प्राहुः—सदृशादिष्विति।

अस्यार्थः—यद् दृशेः कर्म सदृशतादृशादिषु कर्त्तुरविवक्षया स्वव्यापारे स्वस्य स्वातन्त्र्यविवक्षया दृशेः कर्त्तृत्वं प्रतिपद्यते, तत्र दर्शनविषयत्वं प्रति आपत्तिरापादनञ्च क्रिये भवतः।

तथा हि—'स इवेमं पश्यन्ति जनाः' दृग्विषयत्वमापादयन्ति इत्यर्थः। सन्निहितस्पष्टालोकदेशस्थित्या दर्शनसौकर्यातिशयविवक्षया तु 'स इवायं पश्यति', दर्शनगोचरत्वमापद्यत इत्यर्थः। पूर्वत्रापादनं क्रिया विषयत्वं प्रति, अत्र तु विषयत्वं प्रति आपत्तिः क्रिया। दृशेः कर्त्तृस्थभावकत्वाच्च नात्र कर्मवद्भावः, न वा तत्कार्यं णिज्यगादि।

अयं भावः—सदृशतादृशादिषु शब्देषु व्युत्पादनीयेषु यद् दृशेः कर्म स्वव्यापारे स्वातन्त्र्यविवक्षया कर्त्तृत्वं प्रतिपद्यते, यच्च तत्र—कर्मकर्त्तृत्वात् सिद्धमिति भाष्येण कर्मणः कर्त्तृत्वमुक्तम्, तत्र दृशेर्विषयभावस्य विषयभूते हि आपत्त्यापादने क्रिये दृशेर्वाच्य इति तयोः क्रिययोराश्रयणेन कर्मकर्त्तृत्वसमर्थना।

तथा हि पश्यतीति कोऽर्थः ? विषयं घटादिकं दर्शनविषयभावमापद्यमानमापादयतीति ।

तत्र विषयस्य, परिच्छेद्यत्वेन व्यापार आपत्तिः कर्मभूतस्य, तद्विषयमापादनं कर्त्तृव्यापारो दृश्यर्थः, न केवलः ।

तत्र कर्त्तृव्यापारे आपत्तिलक्षणो विषयव्यापारो न्यग्भवतीति तत्सन्निधौ स्वव्यापारे स्वातन्त्र्यं विषयस्य तिरोभवति ।

यदा तु योग्यदेशावस्थितः स्पष्टतरालोकमध्यपरिवर्ती विषयः, तदा सुदर्शनो भवन् स्वयमभिव्यक्तदर्शनः कर्त्तृविनियोगमपाकरोतीति स्वव्यापारे स्वातन्त्र्यविवक्षायां कर्म भूत्वा कर्त्ता सम्पद्यत इति भवति कर्मकर्त्तृविषयः ।। ६४ ।।

एतत्तु नोपपद्यत इत्याह—

कुतश्चिदाहृत्य पदमेवं च परिकल्पने ।
कर्मस्थभावकत्वं स्याद् दर्शनाद्यभिधायिनाम् ।। ६५ ।।

---

तथा हि—घटादिकं विषयं दर्शनविषयभावमापाद्यमानमापादयतीति पश्यतीत्यस्यार्थः ।

तत्र विषयस्य घटादेर्दृशि कर्मभूतस्य परिच्छेद्यत्वेन व्यापारः=परिच्छेदविषयीभावाभिन्नो व्यापार आपत्तिः तद्विषयम्=आपत्तिविषयकम्, आपत्त्यनुकूलम् आपादनं कर्त्तुर्देवदत्तादेर्व्यापारो दृशेरर्थः, न तु केवलः ।

तत्र कर्तृव्यापारे आपत्तिलक्षणो विषयव्यापारो न्यग्भवति = विशेषणतयाऽप्रधानं भवतीति तत्सन्निधौ=कर्त्तृव्यापारसन्निधौ विषयस्य स्वव्यापारे आपत्तिलक्षणे स्वातन्त्र्यं तिरोभवति ।

यदा तु विषयो घटादिश्चक्षुर्ग्रहणयोग्यसन्निहितदेशावस्थितः स्पष्टतरालोकमध्यपरिवर्त्ती च, तदा सुदर्शो भवन् स्वयं स्फुटदर्शनः कर्त्तृविनियोगम्=कर्तृप्रैषम्-विषयस्य दर्शनविषयत्वापादनरूपम् अपाकरोतीति पूर्वं दृशेः कर्म भूत्वा स्वव्यापारे=दर्शनविषयत्वापत्तिलक्षणे स्वातन्त्र्यविवक्षायां कर्त्ता सम्पद्यत इति भवति कर्मकर्त्तृविषयकः सदृशतादृशादिषु दृशिरिति ।। ६४ ।।

एतत्तु नोपपद्यत इत्याह—कुतश्चिदिति ।

अस्यार्थः—दृश्धातोर्दर्शनमात्रमर्थः, तत्रैवान्वयव्यतिरेकदर्शनात् । दर्शनञ्च विषयं विना कृतं न भवति इत्यस्मात् कुतश्चित् सामर्थ्याद् विषयाक्षेपद्वारेण विषयभावापत्त्यादिवाचिपदमध्याहृत्य दर्शनविषयभावमापाद्यमानं विषयं दर्शनविषयभावमापादयति इत्येवं परिकल्पने च विषयगतापत्त्यादिव्यापारोपसर्जनकापादनादिरूपकर्त्तृव्यापारवाचित्वकल्पने च दर्शनाद्यभिधायिनाम्=दर्शनश्रवणाद्यभिधायिनां

इह दृशेः कर्त्तृस्थं दर्शनमात्रं वाच्यं पश्यतीति। न ह्यतो विषयभावापत्तिरवगम्यते; किन्तु विषयज्ञानमेव धात्वर्थः। विषयभावापत्तिर्हि सर्वस्य धात्वर्थस्यास्तीति विशिष्टमेव दर्शनं दृशेरभिधेयं न्याय्यम्।

तच्च दर्शनं विषयप्रतिष्ठमित्यस्मात् कुतश्चित् सामर्थ्याद् विषयाक्षेपद्वारेण विषयभावापत्त्यादिवाचिपदाध्याहारे विषयगतव्यापारप्रत्यायनात् तदुपसर्जनकर्तृव्यापारवाचित्वकल्पने दर्शनासनाद्यभिधायिनामपि कर्मस्थभावकत्वमेव स्यादिति न कश्चिद्धातुः कर्तृस्थभावक्रियो नाम स्यात्।

अथैतदयुक्तमिति प्रतिपादयितुमाह —कर्मस्थभावकत्वमिति।

आपद्यमानमापादयतीत्येवं विचक्षणतया यतः कुतश्चित् पदमध्याहृत्य भवतेदमुपकल्प्यते। तदेवं सति दर्शनाद्यभिधायिनां दृश्यादीनां धातूनां कर्मस्थ-

---

धातूनां कर्मस्थभावकत्वमेव स्यात्, न तु कर्त्तृस्थभावकत्वम्। तथा च तेषु कर्मवद्भावेन चिण्यगाद्यापत्त्या पश्यति भवः स्वयमेव—

अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च।
यत्कृपावशतस्तस्मै नमोऽस्तु गुरवे सदा॥

इत्यादयः कर्मकर्तृप्रयोगा न सिध्येरन्। तस्माद् दर्शनमात्रमेव दृशेरर्थ इति। दर्शनञ्च कर्त्तृनिष्ठमिति कर्त्तृस्थभावकत्वमेव दृशेरिति।

अयं भावः—इह=पश्यतीत्यत्र दृशेः कर्त्तृस्थं दर्शनमात्रमेव वाच्यम्, न तु दर्शनविषयभावापत्तिः, पश्यतीत्यत्र तस्या अनवगमात्; किन्तु विषयज्ञानमेव=विषयदर्शनमेव धात्वर्थः। विषयभावापत्तिर्हि सर्वस्य ज्ञानार्थकस्य धातोरर्थोऽस्ति इति विशिष्टमेव=ज्ञानविशेषरूपमेव दर्शनं दृशेरभिधेयं समुचितम्।

तच्च दर्शनं विषयप्रतिष्ठम्=विषयाविनाभूतम् इत्येतद्रूपात् कुतश्चित् सामर्थ्याद् विषयाक्षेपद्वारा विषयभावापत्त्यादिवाचिपदाध्याहारे=विषयभावमापद्यमानमापादयतीति पदाध्याहारे दृश्धातुना विषयगतापत्त्यादिव्यापारप्रत्यायनात् तदुपसर्जनककर्त्तृव्यापारवाचित्वकल्पने=दृशेर्विषयगतापत्त्यादिरूपव्यापारोपसर्जनकापादनरूपकर्त्तृव्यापारवाचित्वकल्पने दर्शनासनाद्यभिधायिनामपि धातूनां कर्मस्थभावकत्वमेव स्यादिति न कश्चिदपि धातुः कर्त्तृस्थभावकः कर्त्तृस्थक्रियो वा स्यात्।

एतच्च=सर्वेषां धातूनां कर्मस्थक्रियत्वञ्च अयुक्तमिति प्रतिपादयितुमाह—कर्मस्थभावकत्वमिति। यतः कुतश्चित् सामर्थ्यात् प्रागुक्तरीत्या—आपद्यमानमापादयतीत्येवं पदमध्याहृत्य विचक्षणतया भवतेदम्=कर्मकर्त्तृत्वात् सिद्धमिति भाष्यम् उपकल्प्यते=उपपाद्यते। तदेवं सति=तस्मादेवं सति दर्शनाद्यभिधायिनां धातूनां दृश्यादीनां कर्मस्थभावकत्वं स्यात्, आपत्तिरूपस्य भावस्य कर्मस्थत्वात्।

भावकत्वं स्यात् । आदिग्रहणादासनाद्यभिधायिनामासिप्रभृतीनामपि । न चैतदुपपन्नम्, कर्तृस्थभावकत्वाद् दृश्यादीनामिति ।

अत्र 'कर्मस्थभावकत्वं स्यात्' इत्यभिदधता कर्तृस्थभावकत्वं यदुपपन्नमेषां तदेवं विघटेतेत्युक्तं भवति ॥ ६५ ॥

अथ कथं कर्तृस्थभावकत्वं कथं वा कर्मस्थभावकत्वं विज्ञायेतेत्याशङ्क्य प्रसङ्गाद् व्याख्यातुमाह—

**विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।**

यत्र कर्त्तरि कर्मणि वा विशेषः कश्चित् परिदृश्यते, तत्रैव क्रिया व्यवस्थितेति बोद्धव्यम् । सपरिस्पन्दसाधनसाध्या क्रिया, अपरिस्पन्दसाधनसाध्यो भाव इति विशेषमनपेक्ष्य सूत्रकाराभिप्रायेण क्रियापि भावोऽभिधीयत इति टीकाकारस्याभिप्रायः ।

तथा च "लक्षणहेत्वोः क्रियायाः"(पा० ३।२।१२६),"यस्य च भावेन भावलक्षणम्"(पा० २।२।३७)इत्यादावभेद एव सूत्रकारस्य क्रियाभावयोश्चेतसि वर्तते ।

अन्ये त्वेतन्नेच्छन्तीत्याह—

---

आदिग्रहणादासनाद्यभिधायिनामासिप्रभृतिधातूनामपि कर्मस्थभावकत्वं स्यात् । तत्रापि आसनेन व्याप्नोतीति पदमध्याहृत्य व्याप्तिरूपस्य भावस्य कर्मस्थत्वसम्भवात् । न चैतदुपपन्नम्, दृश्यादिधातूनां दर्शनासनाद्यभिधायित्वेन कर्त्तृस्थभावकत्वस्यैव प्रसिद्धेरिति ।

अत्र कर्मस्थभावकत्वं स्यादित्यभिधानेन यदेषां धातूनां दृश्यादीनां कर्तृस्थभावकत्वं 'पश्यति भवः', 'आस्ते देवदत्तः' इत्यादिप्रयोगान्यथाऽनुपपत्तिरूपयोपपत्त्या प्रसाधितं प्रसिद्धञ्च लोके, तदेवं सति विघटेतेत्युक्तं भवति । तस्माद् दृश्यादिधातूनां कर्तृस्थभावकत्वमाश्रित्यैव कर्मकर्तृत्वात् सिद्धमिति भाष्योपपत्तिः कार्या, न तु प्रागुक्तरीत्याः; यतः कुतश्चित् पदमध्याहृत्य, तथा सति दृश्यादिधातूनां कर्मस्थभावकत्वापत्तेरिति हृदयम् ॥ ६५ ॥

अथ कथं कर्तृस्थभावक्रियत्वम्, कथं वा कर्मस्थभावक्रियत्वं विज्ञायतेत्याशङ्क्य कर्मकर्तृनिरूपणप्रसङ्गात् तद्द्वयमपि विशेषेणाख्यातुमाह—विशेषदर्शनमिति ।

अस्यार्थः – यत्र कर्तरि कर्मणि वा विशेषदर्शनम्=क्रियाकृतस्य कस्यचिद् विशेषस्य फलस्य दर्शनम्, तत्रैव कर्तरि कर्मणि वा क्रिया व्यवस्थितेति बोद्धव्यम् ।

अत्र भावक्रिययोरभेदमाश्रित्य कारिकायां क्रियापदप्रयोगः । 'ग्रामं गच्छति चैत्रः' इत्यत्र कर्त्तृस्था क्रिया । गमनक्रियाकृतस्य विशेषफलस्य तत्तद्देशसंयोग-

क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकाश्यते ॥ ६६ ॥

अन्येषां मते क्रियाव्यवस्था शब्दैरेव प्रकाश्यते ।

एतदुक्तं भवति—येऽपि कर्मस्थभावकाः पचयादयस्तत्रापि कर्तर्यपि परिश्रमादिको विशेषः परिदृश्यते । ततो नैतद् व्यवस्थापकम्, विशेषदर्शनं यत्र तत्र क्रियेति । तस्माच्छब्दैरेव च यत्र विशेषः प्रकाश्यते, प्रतिपाद्यते तत्रैव क्रिया स्थितेति वक्तुं युक्तम् ।

---

विभागादिरूपस्य कर्त्तरि उपलम्भात्=गतेऽगते वा ग्रामरूपे कर्मणि गमनक्रियाकृतस्य कस्यचिद् विशेषस्यानुपलम्भाद् ।

अन्येषां मते तु क्रियाव्यवस्था=क्रियायाः कर्त्तरि कर्मणि वा विशेषरूपेणावस्थितिः शब्दैरेव=धातुभिरेव प्रकाश्यते, न तु विशेषदर्शनेन, कर्मस्थभावकेष्वपि पचत्यादिषु पाकक्रियाकृतस्य विशेषस्य परिश्रमादिरूपस्य कर्त्तरि उपलम्भेन विशेषदर्शनस्य क्रियाया अव्यवस्थापकत्वात् ।

तथा च 'पश्यति घटं चैत्रः' इत्यत्र दर्शनरूपा कर्त्तृस्था क्रिया दृश्धातुना प्रकाश्यते । दर्शनविषयो घटश्च दृष्टचदृष्टयोरविशिष्ट एव दृश्धातुसमभिव्याहृतेन घटशब्देन प्रकाश्यते । 'भिनत्ति कुसूलम्' इत्यत्र तु कर्मस्था क्रिया शब्देन प्रकाश्यत इति ।

अयं भावः—यत्र कर्त्तरि कर्मणि वा कश्चित् क्रियाकृतो विशेषः परिदृश्यते, तत्रैव=कर्त्तरि कर्मणि वा क्रिया व्यवस्थितेति विज्ञेयम् । सपरिस्पन्दसाधनसाध्या क्रिया, अपरिस्पन्दसाधनसाध्यो भाव इति कैश्चिद् विशेष उक्तः, तमनपेक्ष्य=उपेक्ष्य सूत्रकाराभिप्रायमाश्रित्यात्र भावोऽपि क्रियाऽभिधीयत इति भाष्यटीकाकारस्य भर्तृहरेरभिप्रायः ।

तथा च—"लक्षणहेत्वोः क्रियायाः" ( पा० ३।२।१२६ ), "यस्य च भावेन भावलक्षणम्" ( पा० २।३।३७ ) इत्यादिसूत्रेषु क्रियाभावयोरभेद एव सूत्रकारस्य चेतसि वर्तते । अत एव यस्य क्रियया क्रियान्तरं लक्ष्यते, तत्र सप्तमी इति व्याख्यायत इति ।

अन्ये त्वेतत्="विशेषदर्शनं यत्र" इत्यादि पूर्वार्धोक्तं नेच्छन्ति इत्याह—क्रियाव्यवस्था त्विति । अन्येषां मते क्रियाव्यवस्था=कर्त्तरि कर्मणि वा क्रियाया विशेषरूपेणावस्थितिः शब्दैरेव प्रकाश्यते ।

अनेनेदमुक्तं भवति—येऽपि कर्मस्थभावकत्वेन सम्मताः पच्यादयः, तत्रापि कर्त्तर्यपि परिश्रमादिको विशेषः परिदृश्यत इति तेषामपि कर्त्तृस्थभावकत्वप्रसङ्ग इति कर्मवद्भावाभावेन यगात्मनेपदाद्यभावात् 'पचति ओदनः स्वयमेव' इति प्रयोगापत्तिः, 'पच्यते ओदनः स्वयमेव' इति प्रयोगानुपपत्तिश्च स्यात् । ततो

शब्दप्रमाणकानां हि शब्द एव यथा यथार्थमभिधत्ते, तथैव तस्याभिधानमुपपन्नम्, न तु वस्तुमुखप्रेक्षितया। शब्दश्च 'पश्यति घटम्' इत्यादौ दृशिक्रियाविषयमविशिष्टमेव प्रत्याययति। 'काष्ठं भिनत्ति' इत्यादौ तु भिदिक्रियाविषयं सविशेषमभिधत्त इति तद्वशेनैव कर्त्तृस्थभावकत्वं कर्मस्थभावकत्वं चाभिधानीयम्।

एवं च दृश्यते स्वयमेवेति न भवत्येवेति मन्तव्यम्।

यत्त्वपरिस्पन्दसाधनसाध्यो भाव इत्यादि लक्षणमभिधाय "कर्मस्थः पचतेर्भावः" इत्यादिकमभिदधति तदप्यव्यवस्थितमिव लक्ष्यते।

तथा च "पीलुपाके घटं पचति" इति घटस्यानलसम्पर्कादवयवक्रियाद्वारेणावयवसंयोगविनाशपूर्वकं पूर्वपूर्वकार्यविनाशे उत्तरोत्तरकार्यद्रव्यविनाशात्। सपरिस्पन्दपरमाणुविषया पाकक्रियापि। ततश्चाव्यवस्थितमेवैतत् ॥९६॥

---

नैतत्=विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थितेति व्यवस्थापकम्। तस्माच्छब्दैरेव तु यत्र कर्त्तरि कर्मणि वा विशेषः प्रकाश्यते=प्रतिपाद्यते, तत्रैव क्रिया स्थितेति वक्तुं युक्तम्।

शब्दप्रमाणकानां हि वैयाकरणानां शब्द एव यथा यथार्थमभिधत्ते, तत्रैव तस्याभिधानमुपपन्नम्=उपपत्तिमत्, न तु वस्तुमुखप्रेक्षितयाऽभिधानमुपपत्तिमत्। अत एव पच्यादीनां कर्मस्थभावकानां कर्त्तरि उपलभ्यमानोऽपि श्रमादिर्नाभिधानगोचर इति न तेषां कर्त्तृस्थभावकत्वम्। शब्दश्च 'पश्यति घटम्' इत्यादौ दृशिक्रियाविषयमविशिष्टमेव=विशेषरहितमेव प्रतिपादयति, दृष्टेऽदृष्टे च घटे विशेषानुपलम्भात्। 'काष्ठं भिनत्ति' इत्यादौ तु भिदिक्रियाविषयं काष्ठं सविशेषमेव=द्वैधीभावरूपविशेषवदेवाभिधत्त इति तद्वशेनैव=अभिधीयमानानभिधीयमानविशेषवशेनैव, न तु दृश्यमानादृश्यमानविशेषवशेन, कर्त्तृस्थभावकत्वं कर्मस्थभावकत्वञ्चाभिधानीयम्=वक्तव्यम्।

एवञ्च 'दृश्यते घटः स्वयमेव' इति कर्मकर्त्तरि प्रयोगो न भवत्येवेति मन्तव्यम्, दर्शनकर्मणि विशेषस्य दृशिनानभिधानात्। अत्र चानुभव एव शरणम्, लोकव्यवहारश्च।

यत्तु अपरिस्पन्दनसाधनसाध्यो धात्वर्थो भावः, सपरिस्पन्दनसाधनसाध्यस्तु सा क्रियेति भावक्रिययोर्लक्षणमभिधाय "कर्मस्थः पचतेर्भावः" इत्यादिकमभिदधति, तदप्यव्यवस्थितमिव लक्ष्यते।

तथा हि—पीलुपाकवादिनां वैशेषिकाणां मते 'घटं पचतीति' अत्र घटस्यानलसम्पर्कादवयवक्रियाद्वारेणावयवसंयोगविनाशपूर्वकं पूर्वपूर्वकार्यविनाशे उत्तरोत्तरकार्यद्रव्यविनाशात् सपरिस्पन्दपरमाणुविषया पाकक्रियाऽपि। ततश्च कर्मस्थः पचते-

एवं तावत् प्रथमसूत्रलक्षितं निर्वर्त्यविकार्यप्राप्यभेदेन त्रिधा भिन्नं कर्म व्याख्याय तत्प्रसङ्गेन च निर्वर्त्यविकार्यविषयं मतभेदेन निवृत्तप्रेषणण्यन्ताण्यन्त-धातुविषयमध्यारोपितप्रेषणं च कर्मकर्त्तारं प्रदर्श्य प्राप्यविषयस्य प्रदर्शनपूर्वकं प्रत्याख्यानमुक्त्वा तत्प्रसङ्गेनैव कर्मस्थभावकत्वकर्त्तृस्थभावकत्वे मतभेदेनैव व्यवस्थाप्येदानीं सूत्रान्तरनिर्दिष्टान्यपि कर्माणि व्याख्यातुमुपक्रमते। तत्राकथित-सूत्रे "कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणां देशश्च" (वा० १।४।५१) इत्युक्तं तावदनारम्भणीयमिति प्रतिपादयितुमाह—

**कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः।**
**सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते ॥ ६७ ॥**

---

भाव इत्यादिः कारिका विरुध्यते। ततश्चाव्यवस्थितमेवैतद् भावक्रिययोर्लक्षणमिति प्रागुक्तरीत्या तयोरभेद एव न्याय्य इति ॥ ६६ ॥

एवं तावत् प्रथमसूत्रलक्षितम् "कर्त्तुरीप्सिततमं कर्म" ( पा० १।४।४९ ) इति सूत्रलक्षितं निर्वर्त्यविकार्यप्राप्यभेदेन त्रिधा भिन्नं कर्म="कटं करोति" इत्याद्यम्, "कुण्डलं करोति" इति द्वितीयम्, 'ग्रामं गच्छति' इति तृतीयं व्याख्यायैतत् त्रिविध-कर्मनिरूपणप्रसङ्गेन च निर्वर्त्यविकार्यविषयं कर्मकर्त्तारं मतभेदेन निवृत्तप्रेषणण्यन्त-धातुविषयम्—'कारयते कटः स्वयमेव, कारयते कुण्डलं स्वयमेव', निवृत्तप्रेषणा-ण्यन्तधातुविषयम्—'क्रियते कटः स्वयमेव, क्रियते कुण्डलं स्वयमेव' इत्येतद्रूपम्, अध्यारोपितप्रेषणं च–'करोति कटः, करोति कुण्डलरूपोऽलङ्कारः' इत्येतद्रूपं प्रदर्श्य प्राप्यविषयस्य कर्मकर्त्तुः—"सदृशादिषु यत् कर्म कर्त्तृत्वं प्रतिपद्यते" ( वा० प० ३, साधन० ६४ ) इति कारिकया प्रदर्शनपूर्वकं "कुतश्चिदाहृत्य पदमेवञ्च परि-कल्पने" ( वा० प० ३, साधन० ६५ ) इति कारिकया प्रत्याख्यानमुक्त्वा तत्प्रसङ्गे-नैव कर्मस्थभावकत्वकर्त्तृस्थभावकत्वे मतभेदेनैव 'विशेषदर्शनं यत्र" ( वा० प० ३, साधन० ६६ ) इति कारिकया पूर्वार्धोत्तरार्धाभ्यां व्यवस्थाप्येदानीं सूत्रान्तर-निर्दिष्टान्यपि कर्माणि व्याख्यातुमुपक्रमते। तत्र "अकथितं च" ( पा० १।४।५१ ) इति सूत्रे भाष्ये--"कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणां देशश्च" इत्युक्तम्।

अस्यार्थः—'हि'शब्दो लोकप्रसिद्धिमवद्योतयति। अकर्मकाणां धातूनां कालो भावो गन्तव्योऽध्वादेशश्च कर्मसंज्ञाः प्रसिद्धलोकव्यवहारे इति।

अस्योदाहरणम्–'मासमास्ते, गोदोहमास्ते, क्रोशमास्ते, कुरून् स्वपिति' इति।

एतच्च वार्त्तिकं तावदनारम्भणीयमिति प्रतिपादयितुमाह—कालभावाध्व-देशानामिति।

अकर्मकाणां कथं कर्मणा योगः स्यादिति कालादीनां तत्सम्प्रयोगे कर्मत्वं वक्तव्यमुपजायते ।

अत्रोच्यते—नात्र कर्मसंज्ञा वक्तव्या, यस्मात् कालादीनामकर्मकैर्धातुभिर्योगे कर्मत्वमुपजायत एव। कथमिति विशेषयितुमाह—"अन्तर्भूतक्रियान्तरैः" इति। अन्तर्भूतं प्रधानक्रियापेक्षया क्रियान्तरं येषामिति ते तथा। तैर्योगे सम्बन्धे सति।

अतश्च क्रियान्तरापेक्षया तेषां कर्मत्वं सिद्धमेवेति किमुपसंख्यानेन ? तथा च 'मासमास्ते, गोदोहमास्ते, क्रोशं स्वपिति, कुरून् स्वपिति' इत्यादौ मासादीन् व्याप्यास्त इति व्याप्त्यङ्गायामासनादिक्रियायां धातुर्वृत्तः। व्याप्त्यादिक्रिययाप्तुमिष्यमाणत्वात् कालादीनां स्फुटमेव कर्मत्वमिति यत्नान्तरेण नार्थः।

---

अस्यार्थः—अन्तर्भूतक्रियान्तरैः=स्वार्थेऽन्तर्भूतानि क्रियान्तराणि येषां तैस्तथाभूतैः सर्वैरकर्मकैर्धातुभिर्योगे कालभावाध्वदेशानां कर्मत्वमुपजायते।

तथा च प्रथमसूत्रेणैवैषां कर्मसंज्ञासिद्धेति इदं वार्तिकं नारम्भणीयम्। तद्यथा 'मासमास्ते' इत्यस्य मासमासनेन=स्थित्या व्याप्नोति इति। एवं 'गोदोहमास्ते, क्रोशमास्ते' इत्यनयोरप्यर्थोऽवसेयः। 'कुरून् स्वपिति' इत्यस्यापि कुरून् स्वापेन व्याप्नोतीत्यर्थं इति।

अयं भावः—ननु अकर्मकाणां धातूनां कर्मणा योगो न स्यात्, व्यापारव्यधिकरणफलानाश्रयत्वादिति। दृश्यते च तेषां व्यवहारे कालादिकर्मयोग इति कालभावादीनामकर्मकधातुयोगे कर्मत्वं पाणिनेर्वक्तव्यमुपजायत इति न्यूनत्वमिति चेत्, अत्रोच्यते—

नात्र कालादीनां कर्मसंज्ञा वक्तव्या, यस्मात् कालादीनामकर्मकधातुयोगे प्रथमसूत्रेणैव कर्मत्वमुपजायते, कथमित्याशङ्क्य अकर्मकधातून् कालादीनां कर्मत्वाय विशेषयितुम्=कर्मत्वोपयोगिविशेषणयुक्तान् कर्तुमाह—अन्तर्भूतक्रियान्तरैरिति। अन्तर्भूतं 'मासं व्याप्यास्ते' इत्यादिरूपेण विशेषणतयाऽवस्थितं क्रियान्तरम्=प्रधानक्रियापेक्षयाऽन्या क्रिया येषां ते तथाभूताः, तैर्योगे।

यत्तु शेखरे नागेशेन कारकप्रकरणे प्रकृतवार्तिकव्याख्यानावसरे—'मासमास्ते' इत्यस्य मासमासनेन व्याप्नोतीत्यर्थः कृतः, तत्तु फलितार्थकथनमात्रम्। तथा चानया रीत्या क्रियान्तरापेक्षया तेषाम्=कालादीनां कर्मत्वं सिद्धमेवेति। किमुपसंख्यानेन ? तथा हि—'मासमास्ते, गोदोहमास्ते, क्रोशं स्वपिति, कुरून् स्वपिति' इत्यादौ 'मासादीन् व्याप्यास्ते' इत्यर्थे व्याप्तिपूर्विकायामासनादिक्रियायां लक्षणया धातुर्वृत्तः।

एवञ्च व्याप्त्यादिक्रिययाप्तुमिष्यमाणत्वात् कालादीनां स्फुटमेव प्रथमसूत्रेण कर्मत्वमिति नार्थः प्रकृतवार्त्तिकरूपेण यत्नान्तरेण।

यद्येवमिदानीमासिप्रभृतयः कालभावाध्वकर्मभिः सकर्मकाः सम्पन्नाः, ततश्च तेभ्यः कालादिष्वेव कर्मसु लकृत्यक्तखलर्थाः प्राप्नुवन्ति, न भावे। तत्र 'मासमास्यते देवदत्तेन' इति भावे लकारो न स्यात्। 'मासमासितव्यम्, मासमासितम्, स्वासं मासम्' इति च कृत्यक्तखलर्था भावे न स्युः। 'भावे चाकर्मकेभ्यः' ( पा० ४।४।६९ ) इति वचनात् तत्रापीष्यते। तस्मात् कालादिकर्मसद्भावादकर्मकत्वं कथम्, सकर्मकत्वे भावे लकारः कथमिति, उच्यते।

द्विविधं कर्म—अन्तरङ्गं बहिरङ्गं च। तत्र द्रव्यकर्मान्तरङ्गम्, तेनैव च पूर्वं सम्बन्धः। बहिरङ्गं कालादिलक्षणं कर्म, यद् वक्ष्यते—शक्तिप्रमाण .... इत्यादिश्लोकेन। तत्र सकर्मकत्वाकर्मकत्वव्यपदेशोऽन्तरङ्गेणैव न्याय्यः।

तथा चोक्तमकर्मकाणामित्युच्यत इत्यादिना भाष्येण।

---

ननु यद्येवं तर्हीदानीमासिप्रभृतयो धातवः कालभावाध्वकर्मभिः सकर्मकाः सञ्जाताः, ततश्च तेभ्यः कालादिष्वेव कर्मसु लकृत्यक्तखलर्थाः प्राप्नुवन्ति, न भावे। तथा च तत्र 'मास्यते देवदत्तेन' इति भावे लकारो न स्यात्। मासमासितव्यम्' इति भावे तव्यत् 'मासमासितं मथुरायाम्' इति भावे क्तः, 'साम्प्रतं देवदत्तेन मासं स्वासम्' इति भावे खलु न स्यात्, कालेन सकर्मकत्वात्। इष्यते तु तत्रापि "भावे चाकर्मकेभ्यः" ( पा० ३।४।६९ ) इति पाणिनिवचनात्। तस्मात् कालादिकर्मसद्भावादास्यादीनामकर्मकत्वं कथम् सकर्मकत्वे भावे लकारः कथमिति विरोधो दुर्निवार इति चेत्, अत्रोच्यते—

बहिरङ्गस्य कालादिलक्षणकर्मणः सत्त्वेऽप्यन्तरङ्गस्य द्रव्यलक्षणकर्मणः स्वभावाभावाभ्यां धातूनामकर्मकत्वसकर्मकत्वव्यवहारनियामकस्याभावेन प्रागुक्तस्थलेषु भावे लकारादिसम्भवात्।

तथा हि—द्विविधं कर्म—अन्तरङ्गं बहिरङ्गञ्च। तत्र द्रव्यकर्मान्तरङ्गम्, तेनैव च साकं धात्वर्थस्य पूर्वं सम्बन्धः। बहिरङ्गं कालादिलक्षणं कर्म। यद् वक्ष्यते—

शक्तिप्रमाणसंख्यादेर्द्रव्यधर्माद् विशिष्यते।
क्रियासु कालयोगोऽतः प्राग्योगो द्रव्यकर्मणा॥

इति श्लोकेन। तेन च साधं पश्चाद् धात्वर्थस्य सम्बन्धः। तत्र धातूनां सकर्मकत्वाकर्मकत्वव्यपदेशोऽन्तरङ्गेणैव कर्मणा न्याय्यः।

तथा चोक्तं भाष्ये—अकर्मकाणामित्युच्यते, न च "केचित् कालभावाध्वभिरकर्मकाः" इत्यादिना ग्रन्थेन।

एवं च लादिभिरप्यन्तरङ्गे भाव्यमित्यन्तरङ्गबहिरङ्गतामेवाह–आधारत्वम् इति। गोदोहं स्वपिति। यावता कालेन गवां दोहः समाप्यत इति। क्रोशादिः पुनः स्वकालपरिमाणेन क्रियान्तरं परिच्छिनत्ति। देशोऽपि कुतश्चिदवधेः प्राप्यमाणतया परिच्छिन्नकालस्वापादिविशेषहेतुरिति भिन्नाः कालादयः। एतेषां कालादीनां सर्वैरेवाकर्मकैः सकर्मकैश्चापि धातुभिर्योगे प्राकृतमेव कर्मत्वमुपजायत इति नैषां कर्मसंज्ञोपसंख्येयेत्यर्थः।

तथा हि—न द्वितीयाविधानार्थमेव कर्मसंज्ञात्र; अपि तु लाद्यर्था अपि। तथा च "कालाध्वनोरत्यन्तसंयोगे" ( पा० २।३।५ ) इत्यत्र वार्त्तिकम् "अत्यन्तसंयोगे कर्मवल्लाद्यर्थम्" ( वा० २।३।५ ) इति।

लकृत्यखलर्था अपि संज्ञाफलमिष्यन्त इत्यर्थः।

---

एवं च लादिभिरप्यन्तरङ्गे कर्मणि भाव्यमिति अन्तरङ्गबहिरङ्गत्व एवाह— "आधारत्वमिव प्राप्ता" (वा० ३, साधन० ६७) इति कारिकया। गोदोहं स्वपिति। अत्र यावता कालेन गवां दोहः समाप्यते, तावत्कालं व्याप्य स्वपिति इत्यर्थः। 'क्रोशमास्ते' इत्यादौ क्रोशादिरध्वा पुनः स्वकालपरिमाणेन=स्वपरिच्छिन्नगमनक्रियापरिच्छिन्नकालपरिमाणेन क्रियान्तरं व्यप्तिरूपं परिच्छिनत्ति। 'स्रुघ्नादागत्य परिश्रान्तः कुरून् स्वपिति' इत्यादौ देशोऽपि कुर्वादिः कुतश्चिदवधेः प्राप्यमाणतया स्वावधिपरिच्छिन्नागमनक्रियापरिच्छिन्नकालस्य स्वापादिविशेषणस्य हेतुरिति देशस्य कालादीनाञ्च साक्षात् प्रधानक्रियासम्बन्धाभावेन साक्षात् प्रधानक्रियान्वयिनोऽन्तरङ्गाद् द्रव्यकर्मणो बहिरङ्गत्वेन भिन्नाः कालादयः। एतेषां कालादीनां सर्वैरेवाकर्मकैः सकर्मकैश्चापि धातुभिर्योगे प्राकृतमेव=स्वाभाविकमेव, प्रकृतमेव, प्राकृतमिति वा 'कर्मत्वमुपजायते' इति नैतेषां कर्मसंज्ञा वक्तव्येति कारिकार्थः।

तथा हि—अत्र कालादिषु द्वितीयाविधानार्थमेव न कर्मसंज्ञा; किन्तु अप्रधानकर्मत्वमाश्रित्य एषु लाद्यर्थापि=लादिनिवृत्त्यर्थापि। तदुक्तं भाष्ये="प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्"। इति।

तथा च "कालाध्वनोरत्यन्तसंयोगे" ( पा० २।३।५ ) इति सूत्रे वार्त्तिकम्— "अत्यन्तसंयोगे कर्मवल्लाद्यर्थम्" इति। अत्यन्तसंयोगे कालाध्वानौ कर्मवद् भवत इति वक्तव्यम्, न तु कर्मैवेति। किं प्रयोजनम्? लाद्यर्थम्=लादिनिवृत्त्यर्थम्। औपदेशिके हि कर्मणि लादयः, न त्वातिदेशिक इति तदर्थः।

यत्तु लाद्यर्थमित्यस्य व्याख्यानं कृतं हेलाराजेन—"लकृत्यखलर्था अपि संज्ञाफलमिष्यन्त इत्यर्थः" इति, तत्तु न युक्तम्; यतो न कालादीनां कर्मसंज्ञाफलं लकृत्यखलर्था इष्यन्ते, कालादिषु अप्रधानकर्मसु तेषामभावस्यैवेष्टत्वादिति।

अत्र क्रियान्तरस्य व्याप्तिलक्षणस्याप्यास्यादिधातुभिरङ्गीकृतत्वाद् व्याप्ति-क्रियाविषयभावोपगमनेन मासादि प्राप्यं कर्मेप्सिततममेवेति प्राकृतमेवैतत् कर्म, यथा 'घटं करोति, शकटं करोति' इति भाष्य उक्तम्।

तथा हि —'मासमास्ते, गोदोहमास्ते, क्रोशं स्वपिति, कुरून् स्वपिति' इति व्यापनाङ्गमासनादिधातुभिरभिधत्ते मासं व्याप्यास्ते' मासमासनया व्याप्नोति इत्यर्थः।

एवमन्यत्र यथायोगं योज्यम्।

तद्यथा 'बलाहकाद् विद्योतते विद्युत्' इति निःसरणाङ्गे विद्योतने धातुर्वर्तते, तथात्र व्याप्त्यङ्गेऽर्थे धातोर्वृत्तिः। क्रियान्तरमेवेदमन्तर्भूतव्याप्तिकं कालादि-विषयम्। 'देवदत्तः किं करोति, आस्ते' इत्यत्र तु व्याप्तिरहिते धातुरासनमात्रे वर्तते। तदेतद् यथाह—

एकदेशे समूहे वा व्यापाराणां पचादयः।
स्वभावतः प्रवर्तन्ते तुल्यरूपसमन्विताः॥

'पचति पच्यते स्वयमेव' इति तथात्र बोध्यम्। (वा०प० ३, साधन० ५८)

---

अत्रासनादिरूपप्रधानक्रियापेक्षया क्रियान्तरस्य व्याप्तिरूपस्यापि आस्यादि-धातुभिः स्वार्थे विशेषणतया क्रोडीकृतत्वाद् व्याप्तिक्रियाविषयभावोपगमनेन मासादिरूपं प्राप्यं कर्म ईप्सिततममेवेति प्राकृतमेव = स्वाभाविके प्रथमसूत्रप्राप्तमेव एतत्कर्मकालादिकम्, यथा 'घटं करोति, शकटं करोति' इति भाष्ये उक्तम्।

तथा हि 'मासमास्ते, गोदोहमास्ते, क्रोशं स्वपिति, कुरून् स्वपिति' इति व्यापनाङ्गकमासनादिकमास्यादिधातुभिरभिधत्ते प्रयोक्ता। तथा च 'मासं व्याप्यास्ते, मासमासनया व्याप्नोतीत्यर्थः।

एवमन्यत्र = देशादिष्वपि अन्यप्रयोगेष्वपि यथायोगं योज्यम्।

तद्यथा—'बलाहकाद् विद्योतते विद्युत्' इति निःसरणाङ्गके विद्योतने द्युति-र्विपूर्वो धातुर्वर्तते। तथाऽत्र व्याप्त्यङ्गके आसनाद्येऽर्थे आस्यादिधातोर्वृत्तिः। केवला-सनक्रियाऽपेक्षया क्रियान्तरमेवेदमन्तर्भूतव्याप्तिकं कालादिविषयकम्। 'देवदत्तः किं करोति, आस्ते' इत्यत्र तु व्याप्तिरहिते आसनमात्रे आस्धातुर्वर्तते। तदेतद् यथाऽऽह—

एकदेशे समूहे व्यापाराणां पचादयः।
स्वभावतः प्रवर्तन्ते तुल्यरूपसमन्विताः॥
(वा० प० ३, साधन० ५८)

'पचति, पच्यते स्वयमेव' इति, तथाऽत्र आस्धातौ बोध्यम्।

एवं चोपसंख्यानस्य प्रत्याख्यानादकर्मकग्रहणमनर्थकम् । सकर्मकाणामपि 'मासमोदनं पचति' इत्यादौ मासादेर्व्याप्तिविषयत्वेन कर्मतासिद्धिः । मासमोदनपाकेन व्याप्नोतीत्यत्रार्थः ।

एतदर्थं चात्र सर्वग्रहणं व्याख्यातम् । कालादिकर्मणा पचत्यादीनां द्विकर्मकत्वेऽपि प्रधाने द्रव्यकर्मणि लादिविधिरुक्तः "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इति ।

सत्यपि वा( चा )स्यादीनां व्याप्तिक्रियान्तर्भावे 'कट आस्ते' इत्यादौ कटादेरासनया व्याप्तिर्नास्ति; अपि तु मासादिरेवासनादिक्रियापरिच्छेदायोपादीयमानो व्याप्यत इति तस्यैव कर्मता, न तु कटादेरुपश्लिष्टमात्रस्याधिकरणस्येति सर्वं सुस्थम् ।। ६७ ।।

कथं पुनः कालादिकर्माप्रधानं द्रव्यकर्म तु प्रधानमित्याह —

**आधारत्वमिव प्राप्तास्ते पुनर्द्रव्यकर्मसु ।**
**कालादयो भिन्नकक्ष्यं यान्ति कर्मत्वमुत्तरम् ।। ६८ ।।**

---

एवञ्चोपसंख्यानस्य कालादीनां कर्मसंज्ञाविषयकस्य प्रागुक्तरीत्या प्रत्याख्यानात् प्रकृतकारिकायामकर्मकग्रहणमनर्थकम् । सकर्मकाणामपि धातूनां 'मासमोदनं पचति' इत्यादौ मासादेर्व्याप्तिक्रियाविषयत्वेन कर्मतासिद्धिः । मासमोदनपाकेन व्याप्नोतीत्येतदर्थः ।

एतदर्थमेवात्र कारिकाय सर्वग्रहणं विशेषरूपेणाख्यातम् । कालादिकर्मणा पचत्यादीनां द्विकर्मकत्वेऽपि प्रधाने द्रव्यरूपे कर्मणि लादिविधिरुक्तो भाष्ये—"प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इति ।

सत्यपि चास्यादीनां व्याप्तिक्रियान्तर्भावे 'कट आस्ते' इत्यादौ कटादेरासनया व्याप्तिर्नास्ति. कटैकदेशे एव देवदत्तादेः कर्तुरवस्थानात्; अपि तु मासादिरेवासनादिक्रियापरिच्छेदायोपादीयमान आसनादिक्रियया व्याप्यत इति तस्यैव कर्मता, न तु कटादेरेकदेशे उपश्लिष्टमात्रस्याधिकरणस्येति अकर्मकधातूनां कालादिकर्मभिः सकर्मकत्वेऽपि न काचित् क्षतिरिति सर्वं सुस्थमिति ।। ६७ ।।

कुतः पुनः कालादिकर्माप्रधानम्, द्रव्यकर्म तु प्रधानमित्याशङ्क्याह—आधारत्वमिवेति ।

अस्यार्थः —ये पूर्वमप्रधानकर्मत्वेनोक्ताः, ते पुनः कालादयो द्रव्यकर्मसु= द्रव्यरूपप्रधानकर्म निरूपितम्, आधारत्वं साम्प्रतं व्याप्तिक्रियाकर्मत्वविवक्षायामपि प्राप्ता इव । अत्र प्राप्तपदे गत्यर्थकत्वेन वर्तमाने कर्मणि क्तः, न तु भूते तदानीं मुख्यस्यैव द्रव्यकर्माधारत्वस्य सत्त्वेन अत्रेवशब्दप्रयोगानुपपत्तेः ।

कर्तृकर्मव्यवधानेनाधारः क्रियां धारयति यथा, एवं मासादिरपीत्याधारच्छायां भजते। तथा हि 'उदिते जुहोति, रात्रौ भुङ्क्ते' इति प्रयोगः। 'क्रोशं शेते, कुरून् स्वपिति' इति च स्फुटमेवाधिकरणत्वमध्वदेशयोः कर्तृधारणात्। 'मासमोदनं पचति' इत्यादौ द्रव्यकर्मविषये च द्रव्यकर्मधारणं स्फुटमेव। व्याप्तिविवक्षायां तु कर्मत्वमाधारभावस्यापगमनादिति इवशब्दः।

यद्वा, कर्तृकर्मव्यवधानेन यथाधारः क्रियायोगं भजते, तथा द्रव्यकर्मव्यवधानेन कालादीत्युपमार्थः।

द्रव्यकर्मणा च पूर्वं क्रियायोगः। तद्द्वारेण तु कालादिकर्मणेति भिन्ना कक्ष्या अवस्थास्य कर्मत्वस्य। तथा हि—

---

उत्तरम् = द्रव्यकर्मणः क्रियासम्बन्धादुत्तरस्मिन् काले, भिन्नकक्ष्यम् = भिन्ना कक्ष्या कोटिः अप्रधानत्वाख्या यस्य तद् भिन्नकक्ष्यं कर्मत्वं यान्ति = प्राप्नुवन्ति।

अत्र कक्ष्याशब्दः कोटिपरः, न त्ववस्थापरः। तथा हि अवस्थाशब्देन उत्तरकालरूपावस्थाविवक्षायाम् = उत्तरस्मिन् काले भिन्नकक्ष्यम् उत्तरकालावस्थं कर्मत्वमुपयान्ति इति पुनरुक्तिः। अप्राधान्यरूपा तु अवस्थाऽत्र न सम्भवति, एकस्यैव भिन्नावस्थासम्भवात्।

अत्र तु कालादीनामप्राधान्यम्, द्रव्यकर्मणां तु प्राधान्यमित्याश्रयभेदात्। कोटिस्तु आश्रयभेद एव सम्भवति।

किञ्चात्रावस्थाशब्देनोत्तरकालरूपावस्थापरिग्रहे एतत्कारिकावतारणसमये अनुपपत्त्या आशङ्कितस्य कालादीनामप्रधानकर्मत्वस्य समर्थनं न स्यादिति ध्येयमिति।

अयं भावः—यथाऽऽधारः कर्तृकर्मद्वारा क्रियां धारयति, एवं मासादिरपि तद्द्वारैव तां धारयति इत्याधारच्छायां भजते। तथा हि—'उदिते जुहोति, रात्रौ जुहोति' इत्यत्र कालस्य 'क्रोशं शेते, कुरून् स्वपिति' इत्यत्र चाध्वदेशयोः स्फुटमेवाधिकरणत्वम्, कर्तृद्वारा क्रियाधारणात्। 'मासमोदनं पचति' इत्यादौ च द्रव्यकर्मद्वारा कालस्य क्रियाधारणं स्फुटमेव। व्याप्तिविवक्षातः प्राग् आधारस्यापि कालस्य व्याप्तिविवक्षायां तु ईप्सिततमत्वेन कर्मत्वमाधारभावस्यापगमनादिति इवशब्दः।

यद्वा, कर्तृकर्मव्यवधानेन यथाऽऽधारः क्रियायोगं भजते, तथा द्रव्यकर्मव्यवधानेन कालादि इत्युपमार्थः। द्रव्यकर्मणा साकञ्च पूर्वं क्रियाया योगः, तद्द्वारा तु कालादिकर्मणेति यान्ति कर्मत्वमुत्तरमित्युक्तम्। भिन्ना कक्ष्याऽवस्थाऽस्य कर्मत्वस्येति भिन्नकक्ष्यमित्यस्य हेलाराजकृतं व्याख्यानं तु न युक्तमित्युक्तं प्राक्।

द्रव्यकर्मणा क्रियायाः प्राग् योगः, कालादिकर्मणा सह तु पश्चाद् इत्यत्रोपपत्तिरुक्ता—

शक्तिप्रमाणसंख्यादेर्द्रव्यधर्माद् विशिष्यते ।
क्रियासु कालयोगोऽतः प्राग् योगो द्रव्यकर्मणा ॥

इत्युक्तम् ।

कठिनस्य हि पाक्यद्रव्यस्य चिरेण निष्पत्तिः, महापरिमाणस्य बहुसंख्याकस्य च विपरीतस्य त्वचिरेणेति द्रव्यकर्मापेक्षः कालादिविशेषः ।

एवं 'गोदोहं स्वपिति, इषुपातं पचति' इत्यत्रापि वाच्यम् । 'क्रोशमधीते स्वाध्यायम् कुरून् पञ्चालानधीते' इत्यत्राध्ययनप्रचयापचयायत्तावध्वदेशयोर्वृद्धिह्रासाविति विप्रकृष्यते कालादिकर्म क्रियासम्बन्धं प्रति द्रव्यकर्मापेक्षया । अत एवोत्तरकालभवमेतेषां कर्मत्वम् । समस्तसाधनसम्बन्धे हि वृत्ते क्रियायाः परिच्छेदहेतवः कालादयोऽपेक्ष्यन्त इति भिन्नकक्ष्यास्ते 'अकथितं च' (पा० १।४।५१) इत्युत्तरेण योगेन कर्मसंज्ञां लभन्ते, नेप्सिततमत्वेन, ईप्साप्रकर्षाभावात् ।

दुह्यादिपरिगणने चाकथितसूत्रे "कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणां

---

शक्तिप्रमाणसंख्यादेर्द्रव्यधर्माद् विशिष्यते ।
क्रियासु कालयोगोऽतः प्राग् योगो द्रव्यकर्मणा ॥ इति ।

अस्यार्थः—द्रव्यधर्मात् शक्तिप्रमाणसंख्यादेः क्रियासु चिराचिरकालयोगो विशिष्यते = विलक्षणो भवति । अतः = द्रव्यधर्मस्य शक्त्यादेः क्रियासु विलक्षणकालयोगहेतुत्वाद् द्रव्यकर्मणा सह क्रियायाः प्राग् योग इति योजना ।

कठिनस्य हि पाक्यद्रव्यस्य द्रव्यशक्तिकृता चिरेण पाकनिष्पत्तिः, महापरिमाणस्य बहुसंख्याकस्यापि च तस्य यथायथं प्रमाणकृता संख्याकृता च चिरेण पाकनिष्पत्तिः, विपरीतस्य त्वचिरेणेति द्रव्यकर्मापेक्षः कालादिविशेषः ।

एवं 'गोदोह स्वपिति, इषुपातं पचति' इत्यत्रापि समस्तसाधनसम्बन्धे वृत्ते भावस्य पश्चात् क्रियासम्बन्ध इति बहिरङ्गत्वेनाप्राधान्य भावरूपस्य कर्मणः । 'क्रोशमधीते स्वाध्यायम्, कुरूनधीते स्वाध्यायम्, पञ्चालानधीते स्वाध्यायम्' इत्यत्राध्ययनप्रचयापचयायत्तौ अध्वदेशयोर्वृद्धिह्रासाविति कालादिकर्मक्रियासम्बन्धं प्रति द्रव्यकर्मापेक्षया विप्रकृष्यते । अत एवोत्तरकालभवं कालादीनां कर्मत्वम् । समस्तसाधनसम्बन्धे जाते हि क्रियायाः परिच्छेदहेतवः कालादयोऽपेक्ष्यन्त इति ते बहिरङ्गत्वेन भिन्नकक्ष्या इति "अकथितञ्च" (पा० १।४।५१) इत्युत्तरेण सूत्रेण कर्मसंज्ञां लभन्ते, नेप्सिततमत्वेन, बहिरङ्गतया ईप्साप्रकर्षाभावात् ।

अस्मिन् पक्षे न व्याप्तिक्रियापेक्षं कालादीनां कर्मत्वम्; किन्तु प्रधानक्रियापेक्षमेवेति ।

इदञ्च दुह्यादिपरिगणनावसरे अकथितसूत्रे "कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणां देशश्च" (वा० १।४।५१) इत्यत्रैवोक्तम् । 'प्रधानाप्रधानयोः प्रधाने

देशश्च" (वा० १।४।५१) इत्यत्रैवोक्तम्। गुणप्रधानसन्निधौ च प्रधानमेव कार्येण युज्यत इति द्रव्यकर्मणि लादिविधिः। 'मासमोदनः पच्यते, पक्वः, पक्तव्यः, सुपचः, क्रोशमधीतोऽनुवाकः' इत्याद्युदाहार्यम्।

द्वितीया तु भिन्नशब्दोपादाना कालादिकर्मण्यपि भवति। एको हि लादिर्गुणप्रधानभूतं कर्मद्वयमशक्तोऽभिधातुमिति प्रधाने कार्यसम्प्रत्ययः। भिन्नरूपप्रातिपदिकद्वयात् तु विभक्तिरुत्पद्यमाना कर्मद्वयमपि प्रत्याययति ॥ ६८ ॥

यतश्च कालादीनां सर्वधातुविषयं भिन्नकक्ष्यं च कर्मत्वम्,

**अतस्तैः कर्मभिर्धातुर्युक्तोऽद्रव्यैरकर्मकः।**
**लस्य कर्मणि भावे च निमित्तत्वाय कल्पते ॥ ६९ ॥**

यत्रास्ति द्रव्यकर्म, तत्र तदपेक्षया कालादिकर्मणोऽप्राधान्याल्लादिस्तत्र न भवति। यत्र तु द्रव्यकर्म नास्ति, तत्र कालादावेव कर्मणि लादिः। लग्रहणस्योपलक्षणार्थत्वाच्च लकृत्यक्तखलर्थाः आस्यते मासः, आसितव्यः, आसितः, स्वास इत्यादि। अकर्मकव्यपदेशश्च धातूनां द्रव्यकर्माभावनिमित्तः, कालादिकर्मणः सर्वत्र

---

कार्यसम्प्रत्ययः' इति न्यायमाश्रित्य गुणप्रधानसन्निधौ च प्रधानमेव कार्येण युज्यत इति द्रव्यकर्मणि प्रधाने लादिविधिः। 'मासमोदनः पच्यते, पक्वः, पक्तव्यः, सुपचः, क्रोशमधीतोऽनुवाक' इत्यादिकः प्रधाने कर्मणि लादिविधिरुदाहार्यः।

द्वितीया तु भिन्नशब्दोपादाना=भिन्नप्रातिपदिकप्रकृतिका कालादिकर्मण्यप्रधानेऽपि भवति। एको हि लादिर्गुणप्रधानभूतं कर्मद्वयमशक्तोऽभिधातुमिति प्रधान एव कार्यसम्प्रत्ययः। भिन्नरूपप्रातिपदिकद्वयात् तु विभक्तिद्वयमुत्पद्यमानं कर्मद्वयमपि प्रत्याययतीति ॥ ६८ ॥

यतश्च कालादीनां सकर्मकाकर्मकभेदभिन्नसर्वधातुविषयमप्रधानत्वेन भिन्नकक्ष्यञ्च कर्मत्वम्--अतस्तैरिति।

अतस्तैः कालादिभिः अद्रव्यैः कर्मभिर्युक्तो धातुरकर्मकः सन् लस्य कर्मणि भावे च उत्पत्तिनिमित्तत्वाय कल्पते प्रभवन्तीति योजना।

अयं भावः—यत्रास्ति सकर्मकेषु द्रव्यकर्म तत्र तदपेक्षया=द्रव्यकर्मापेक्षया कालादिकर्मणोऽप्राधान्याल्लादिस्तत्र न भवति। प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इत्युक्तेः। "प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः" इति लोकन्यायसिद्धाया प्रागुक्तत्वात्। यत्र तु द्रव्यकर्म नास्ति, तत्र कालादावेव कर्मणि लादयः। कारिकायां लग्रहणस्योपलक्षणत्वाच्च लकृत्यक्तखलर्थाः 'आस्यते मासः, आसितव्यो मासः, आसितो मासः, स्वासो मासः' इत्यादयः कर्मणि प्रयोगाः। सर्वेषां धातूनां कालादिकर्मभिः सकर्मकत्वेऽपि केषाञ्चिद् धातूनामकर्मकत्वव्यपदेशश्च द्रव्यकर्मा-

सम्भवात्, सम्भवव्यभिचाराभ्यां विशेषणयोगात्, इति कालादिकर्मसम्भवेऽप्य-कर्मकव्यपदेशस्य द्रव्यकर्माभावनिमित्तस्याव्यावृत्तेर्भावे लकारः सिद्ध्यति, 'मासमास्यते भवता' इत्यादि। 'मासमासितो देवदत्तः' इति चाकर्मकत्वात् कर्तरि क्तः। गत्यादिसूत्रे चाकर्मकत्वाश्रया प्रयोज्यस्य कर्मसंज्ञा सिद्ध्यति 'मासमासयति देवदत्तम्' इत्यादौ।

अत एव तत्र "अकर्मकग्रहणे कालकर्मणामुपसंख्यानम्" ( वा० १।४।५२ ), "सिद्धं तु कालकर्मणामकर्मकवद् वचनात्" ( वा० १।४।५२ ) इति वार्त्तिकार्थो न्यायसिद्धः।

तथा च भाष्यम्—

"न च केचित् कालभावाध्वभिरकर्मकाः। त एवं विज्ञास्यामः, क्वचिद् ये अकर्मका इति।

अथवा येन कर्मणा सकर्मकाश्चाकर्मकाश्च भवन्ति, तेनाकर्मकाणाम्। न चैतेन कर्मणा कश्चिदप्यकर्मकः।

अथवा यत्कर्म भवति न च भवति तेनाकर्मकाणाम्। न चैतत् कर्म क्वचिदपि न भवति।" ( म० भा० १।४।५२ )

---

भावनिमित्तकः, कालादिकर्मणः सर्वत्र सम्भवात्, सम्भवव्यभिचाराभ्यां विशेषण-योगात्, इति कालादिकर्मसम्भवेऽपि अकर्मकत्वव्यपदेशस्य द्रव्यकर्माभावनिमित्तक-स्यास्यादिष्वव्यावृत्तेर्भावे लकारः सिध्यति "मासमास्यते भवता" इत्यादि। मास-मासितो देवदत्तः' इति चाकर्मकत्वात् कर्तरि क्तः। "गतिबुद्धिः" (पा० १।४।५२) इत्यादिसूत्रे चाकर्मकत्वप्रयुक्ता प्रयोज्यस्य कर्मसंज्ञा सिध्यति 'मासमासयति देवदत्तम्' इत्यादौ।

अत एव = कालादिकर्मसम्भवेऽपि अकर्मत्वव्यवहारस्य द्रव्यकर्माभावनिमित्त-कत्वादेव तत्र = अकर्मकग्रहणेषु "अकर्मकग्रहणे कालकर्मणामुपसंख्यानम्" ( वा० १।४।५२ ) "सिद्धं तु कालकर्मणामकर्मकवद् वचनात्" ( वा० १।४।५२ ) इति वार्त्तिकार्थो न्यायसिद्धः।

तथा च भाष्यम् = कारिकोक्तेनैवाकर्मकत्वसमर्थनप्रकारेण भाष्यमपि प्राक् प्रवृत्तम्। "न च केचित् कालभावाध्वभिरकर्मकाः, त एवं विज्ञास्यामः। क्वचिद् येऽकर्मकाः" इति।

अत्र क्वचिदित्यस्य द्रव्यकर्मविषये इत्यर्थः। इति प्रथमः परिहारः।

"अथवा येन कर्मणा सकर्मकाश्चाकर्मकाश्च भवन्ति, तेनाकर्मकाणाम्। न चैतेन कर्मणा कश्चिदप्यकर्मकः" इति द्वितीयः परिहारः। अत्र येन तेन इत्युभयत्रापि

इति परिहारत्रये को विशेषः ? उच्यते—शब्दकर्माकर्मकाणामित्यत्र अविवक्षितकर्मका अकर्मका आश्रीयन्ते। एवं ह्यास्ते, शेते इति क्रियामात्र-विवक्षायां कालादिभिरप्यकर्मकत्वं सम्भवति। तथैव पचादीनामप्यविवक्षया कर्मसम्बन्धेऽपाकृते अणिकर्तुर्णौ कर्मसंज्ञाप्रसङ्गः। तस्माद् यस्यात्यन्तसम्बन्धः कर्मणा सोऽकर्मकः।

स च यदि धात्वर्थ आश्रीयते तदा तस्य क्रियात्मनो विवक्षावशेन कर्म-सम्बन्धासम्बन्धयोर्भेदे कालादिभिरप्यकर्मकत्वे वचनस्य चरितार्थत्वं भवेत्।

तस्मादविद्यमानं कर्मास्येति धातुरन्यपदार्थत्वेनाश्रीयते, गत्याद्यर्थत्वेनाणौ णाविति च तस्यैव विशेषणत्वेन प्रक्रमात्।

अर्थद्वारके च धातोः कर्मयोगेऽयोगे च रूपस्याविशेषाद् अकर्मकत्वं नोपपद्यते, कालादिकर्मभिः सर्वेषां धातूनामवियोगात्। एवं च विशेषणसामर्थ्याद् विशिष्टा एव धातवो द्रव्यकर्मसमन्वयरहिताः समाश्रीयन्ते। द्रव्यकर्मविषयेऽकर्मका इति पूर्वपरिहारार्थः।

---

द्रव्यरूपेण कर्मणा इत्यर्थः। एतेन इत्यस्य च कालादिकर्मणा इत्यर्थः।

"अथवा यत्कर्म भवति न च भवति तेनाकर्मकाणाम्। न चैतत् कर्म क्वचि-दपि न भवति" इति तृतीयः परिहारः। अत्रापि यत्तदोर्द्रव्यकर्मैवार्थः। एतत् कर्म इत्यस्य च कालादिकर्म इत्यर्थः।

ननु अस्मिन् परिहारत्रये को विशेष इति प्राप्ते उच्यते, यदि "गतिबुद्धि-प्रत्यवसानार्थशब्दकर्माकर्मकाणाम्' (पा० १।४।५२) इत्यत्र अविवक्षितकर्मका अकर्मका आश्रीयन्ते। एवं हि 'आस्ते, शेते' इति क्रियामात्रविवक्षायां कालादिभि-रप्यकर्मकत्वं सम्भवति इतीष्टसिद्धावपि तथैव द्रव्यकर्मणोऽविवक्षया पचादीनामपि कर्मसम्बन्धे निराकृते अणि कर्त्तुर्णौ कर्मसंज्ञाप्रसङ्ग इत्यनिष्टमापतति। तस्माद् यस्य कर्मणाऽत्यन्तमसम्बन्धः सोऽकर्मकः।

स च यदि धात्वर्थ आश्रीयते, तदा तस्य क्रियास्वरूपस्य विवक्षावशेन कर्म-सम्बन्धेऽसम्बन्धे च सति भेदे सति द्रव्यकर्मभिरिव पच्याद्यर्थानामास्यादीनां कालादिभिरप्यकर्मकत्वे तत्र तत्राकर्मकवचनस्य चरितार्थत्वं भवेत्, सर्वस्यापि धात्वर्थस्यैवं सति अकर्मकत्वात्।

न च पच्याद्यर्थस्याकर्मकत्वमिष्टं कदाचित्। तस्मादविद्यमानं कर्मास्येति धातुरन्यपदार्थत्वेनाश्रीयते। गत्याद्यर्थकत्वरूपस्याणौ णावित्यस्य च धातोरेव विशेषणत्वेन प्रक्रमात्=उपक्रमे सत्त्वात्।

अर्थद्वारके त्र धातोः कर्मसम्बन्धे तदसम्बन्धे च धातुरूपस्याविशेषादकर्म-कत्वं नोपपद्यते, कालादिकर्मभिः सर्वेषां धातूनां सदाऽवियोगात्। एवञ्चाकर्मकत्व-

द्वितीये तु परिहारे वर्तिपदार्थस्य कर्मणः साक्षात् क्रियोपकारकत्वेनान्तरङ्गत्वं विशेषः समाश्रितः ।

तृतीये तु परिहारे भवति न भवतीत्यभिधानान्निषिध्यमानस्य सम्बन्धस्य विशेष आश्रीयते । येन कर्मणा कदाचित् सम्बन्धो भवति, तेनैव द्रव्यकर्मणा अकर्मकाणाम्, न नित्यसम्बद्धेन कालादिकर्मणेत्यर्थः । द्रव्यकर्मापेक्षत्वाच्च सकर्मकाकर्मकव्यपदेशस्य "उदश्चरः सकर्मकात्" ( पा० १।३।५३ ) इत्यनेन मासमुच्चरति धूमः' इत्यात्मनेपदं न भवतीत्याहुः ॥ ६९ ॥

न च कालादिकर्मैव भिन्नकक्ष्यम्; अपि तु—

सर्वं वाऽकथितं कर्म भिन्नकक्ष्यं प्रतीयते ।
धात्वर्थोद्देशभेदेन तन्नेप्सिततमं किल ॥ ७० ॥

---

विशेषणसामर्थ्याद् विशिष्टा एव = विजातीया एव धातवो द्रव्यकर्मसम्बन्धरहिताः समाश्रीयन्ते । तथा च द्रव्यकर्मविषयेऽकर्मका इति प्रथमपरिहारार्थः ।

द्वितीये तु परिहारे अकर्मकपदार्थघटकपदार्थस्य कर्मणा साक्षात् क्रियोपकारकत्वेनान्तरङ्गत्वरूपः पश्चात् क्रियान्वयितया बहिरङ्गकालादिकर्मापेक्षया द्रव्यकर्मणो विशेषः समाश्रितः ।

तृतीये तु परिहारे भवति न भवति इत्यभिधानान्निषिध्यमानस्य क्रियायां द्रव्यकर्मसम्बन्धस्य कादाचित्कत्वरूपो विशेष आश्रीयते । येन कर्मणा कदाचित् सम्बन्धो भवति, तेन द्रव्यकर्मणा अकर्मकाणाम्, न नित्यसम्बद्धेन कालादिकर्मणेति प्रकृतभाष्यघटकाकर्मकपदस्यार्थः । सकर्मकाकर्मकत्वव्यपदेशस्य द्रव्यकर्मापेक्षत्वाच्च "उदश्चरः सकर्मकात्" ( पा० १।३।५३ ) इत्यनेन 'मासमुच्चरति धूमः' इत्यत्र कालकर्मके सकर्मकत्वप्रयुक्तमात्मनेपदं न भवतीत्याहुरिति ॥ ६९ ॥

न च केवलं कालादिकर्मैव ईप्सिततमकर्मापेक्षयाऽप्रधानत्वेन भिन्नकक्ष्यम्; अपि तु सर्वमेवाकथितं कर्म तादृशमित्याहुः—सर्वं वाऽकथितमिति ।

अस्यार्थः—वा = अथवा सर्वमकथितं कर्म = गवादिद्रव्यरूपमपि ईप्सिततमकर्माऽपेक्षयाऽप्रधानत्वेन भिन्नकक्ष्यम् = भिन्नकोटिकम् 'गां दोग्धि पयः' इत्यादौ "अकथितञ्च" ( पा० १।४।५१ ) इति सूत्रविषये प्रतीयते । तत्र हेतुमाहोत्तरार्धेन । तत् = अकथितं कर्म गवादिरूपं धात्वर्थो देशभेदेन = धात्वर्थस्य दोहादेरुद्देशविशेषणहेतुना, यद्वा—धात्वर्थेन दोहादिना उद्देशो विषयीकरणं तस्य पूर्वापरकालजत्वरूपेण भेदेन, अथवा धात्वर्थकर्मको यो गवादीनामुद्देशः, तस्माद् यो गवादीनां भेदः = भेदेनोपायत्वेन प्रवृत्तिः, तेन हेतुना नेप्सिततमम् = ईप्साप्रकर्षरहितं किल ।

'गां दोग्धि पयः, पौरवं गां याचते, गामवरुणद्धि व्रजम्, माणवकं पन्थानं पृच्छति, वृक्षमवचिनोति फलानि' इत्यादि सर्वमेवापादानादिविशेषकथाभिरकथितं द्रव्यकर्मापि गवादिपयःप्रभृतिप्रधानकर्मापेक्षयोपायभूतं नान्तरीयकत्वाद् भिन्नकक्ष्यम् ।

धात्वर्थस्य हि दोहादेः उद्देश एव भेदो विशेषः, तेन हेतुना गवादीप्साप्रकर्षरहितम् । पयःप्रभृति किलोद्दिश्य धात्वर्थः प्रवृत्तः । तत्र तूपायभूता गवादयो नान्तरीयकाः । धात्वर्थेन वोद्देशो विषयीकरणं तस्य भेदः पूर्वापरकालजम् । पूर्वं हि धात्वर्थेन प्रधानं पयःप्रभृति विषयीकृतम्, पश्चान्निमित्तभूतं गवादि ।

---

इति परप्रसिद्ध्यर्थकमव्ययम् । अत एव = किलपदोपादानादेव अत्राकथितकर्मणो भिन्नकक्ष्यत्वे स्वस्यारुचिः सूचिता ।

तथा चाभिन्नकक्ष्यमेव कर्मेति सिद्धान्तयिष्यति ।

तत्र प्रथमव्याख्याने पय-आदिकमुद्दिश्य धात्वर्थस्य दोहादेः प्रवृत्तिः, न तु गवादिकमुद्दिश्येति गवादिकं वेप्सिततमम् ।

द्वितीयव्याख्याने तु—धात्वर्थो दोहादिः पूर्वं पय-आदिकं विषयीकरोति, पश्चात्तु पय-आदेर्निमित्तभूतं गवादिकमिति पूर्वापरकालभेदेन धात्वर्थेन गवादेर्विषयीकरणाद् गवादिकं नेप्सिततमम् ।

तृतीयव्याख्याने तु धात्वर्थमुद्दिश्य गवादय उपायत्वेन प्रवर्त्तन्ते, न तूपेयत्वेनेति गवादयोऽनीप्सिततमत्वेन भिन्नकक्ष्या इति ।

अयं भावः—'गा दोग्धि पयः' इत्यत्र गोरपादानत्वस्य सम्बन्धित्वस्य वाऽविवक्षा, 'पौरवं गां याचते' इत्यत्र पौरवस्यापादानत्वाविवक्षा, 'गामवरुणद्धि व्रजम्' इत्यत्र व्रजस्याधिकरणत्वाविवक्षा, 'माणवकं पन्थानं पृच्छति' इत्यत्र माणवकस्यापादानत्वाविवक्षा, 'वृक्षमवचिनोति फलानि' इत्यत्र वृक्षस्यापादानत्वाविवक्षा । एवमादिस्थलेषु सर्वमेवापादानादिविशेषकथाभिरकथितं द्रव्यकर्मापि गवादिपयःप्रभृतिप्रधानीभूतद्रव्यकर्मापेक्षया उपायभूतं नान्तरीयकत्वात् = अविनाभूतत्वाद् भिन्नकक्ष्यम्, ईप्सिततमात्, किमुत अद्रव्यं कालादिकर्मभिन्नकक्ष्यमिति ।

तथा हि—धात्वर्थस्य हि दोहादेः उद्देश एव = उद्देश्यत्वाख्याविषयतैव, भेदो विशेषः = पयःप्रभृतिप्रधानकर्मनिष्ठाद् विधेयत्वाख्यविषयत्वाद् वैजात्यम् । तेन हेतुना गवादि ईप्साप्रकर्षरहितं कर्म । पयःप्रभृति उद्दिश्य किल दोहादिर्धात्वर्थः प्रवृत्तः । तत्र तूपायभूता गवादयो नान्तरीयकाः = अविनाभूताः । धात्वर्थेन वा दोहादिना उद्देशो विषयीकरणम्, तस्य भेदः पूर्वापरकालजत्वाभ्याम्, तेन हेतुनेत्यर्थो वा । पूर्वं हि धात्वर्थेन दोहादिना पयःप्रभृतिप्रधानत्वाद् विषयीकृतम्, पश्चात तु तन्निमित्तभूतं गवादि विषयीक्रियते ।

धात्वर्थं वा दोहादिकमुद्दिश्य यस्माद् गवादयो भेदेनोपायत्वेन प्रवर्तन्ते, अतस्ते भिन्नकक्ष्याः । 'किल' इत्यस्मिन् पक्षेऽरुचिं सूचयति । तथा चाभिन्नमेव कर्मेति सिद्धान्तयिष्यति ।

ननु कालादीनां द्रव्यकर्मायत्तत्वाद् भवतु भिन्नकक्ष्यत्वम्, गवादौ तु विपर्ययात् कथमेतत् ? तथा हि गवाद्यायत्तानि पयःप्रभृतीनि कर्माणि । तथा चोक्तम्—

गुणकर्मणि लादिविधिः पूर्वं गुणकर्मणा भवति योगः ।
मुख्यं कर्म प्रेप्सुर्यस्माद् गव्येव यतते प्राक् ॥
तस्माच्छुद्धस्य दुहेर्भवति गवा पूर्वमेव सम्बन्धः ।
गोर्दुहिना पयसस्तु प्राक् तस्माल्लादयस्तस्मिन् ॥ इति ।
( म० भा० १।४।५१ )

---

यद्वा, धात्वर्थं दोहादिकमुद्दिश्य यस्माद् गवादयो भेदेन=उपायभेदरूपतया उपायविशेषत्वेनेति यावत्, प्रवर्तन्ते, तेन हेतुना ते गवादयोऽप्रधानत्वाद् भिन्नकक्ष्याः । अत्रार्थे=धात्वर्थेन उद्देशो विषयीकरणं कर्तृतृतीयामादाय तत्पुरुषः । किलेति परपक्षप्रसिद्ध्यर्थकमव्ययम् । तेनास्मिन् पक्षे स्वस्यारुचिं सूचयति । अत एवाभिन्नमेव पूर्वं कथिताकथितभेदेनोक्तं कर्म द्वयमपीति सिद्धान्तयिष्यति ।

ननु कालादिकर्मणां द्रव्यरूपकर्मायत्तत्वाद् भवतु भिन्नकक्ष्यत्वम्, गवादौ तु वैपरीत्यात् कथमेतत् ? तथा हि—अत्र गवादिरूपाप्रधानकर्मायत्तानि पयःप्रभृतीनि प्रधानानि कर्माणि । तदुक्तम्—

गुणकर्मणि लादिविधिः पूर्वं गुणकर्मणा भवति योगः ।
मुख्यं कर्म प्रेप्सुर्यस्माद् गव्येव यतते प्राक् ॥
तस्माच्छुद्धस्य दुहेर्भवति गवा पूर्वमेव सम्बन्धः ।
गोर्दुहिना पयसस्तु प्राक् तस्माल्लादयस्तस्मिन् ॥
( म० भा० १।४।५१ )

अस्य पद्यद्वयस्यार्थः—गुणकर्मणि गवादौ लादीनां लकृत्यक्तखलर्थानां विधिर्विधानम् । गौर्दुह्यते पयः, गौर्दोग्धव्या पयः । गौर्दुग्धा पयः । गौः सुदोहा पय इति । यतो धात्वर्थस्य पूर्वं गुणकर्मणा योगो भवति, अतः पूर्वप्राप्तिकत्वरूपान्तरङ्गत्वमादाय तत्रैव लादयः । द्वितीयपदार्थे हेतुरुत्तरार्धम् । मुख्यं कर्म पयः प्रेप्सुर्यस्माद् गव्येव प्राग् यतते इति योजना । तस्मात् शुद्धस्य=पयोरूपमुख्यकर्मरहितस्य, दुहेर्गवैव पूर्वं सम्बन्धो भवति न तु पयसा उपेयत्वेन प्रधानेन, पयसस्तु प्राग् गोर्दुहिना सम्बन्ध इत्यर्थादायातम् । तस्माद् शुद्धेन दुहिना गोः प्राग् योगात् तस्मिन् गुणकर्मणि लादयो लकृत्यक्तखलर्था इति ।

सत्यमेतत् । प्रधानाप्रधानकृतस्त्वत्र कक्ष्याभेदः ॥ ७० ॥

तथा हि –

प्रधानकर्म कथितं यत् क्रियायाः प्रयोजकम् ।
तत्सिद्धये क्रियायुक्तमन्यत् त्वकथितं स्मृतम् ॥ ७१ ॥

यदुद्दिश्य फलभूतं क्रियाप्रवर्तने साधनानि सज्जीभवन्ति, यदवाप्तावुदासते तदीप्साप्रकर्षगृहीतं प्रधानं 'कर्तुरीप्सिततमम्' इति कर्मसंज्ञया प्रथममेव कथितम् । तच्च पयःप्रभृति, तदर्थं तु यदनीप्सितमपि नान्तरीयकं क्रियया समन्वेति तदनवाप्तविशेषमकथितकर्माप्रधानत्वाद् भिन्नकक्ष्यमित्यर्थः । तद्यथा गवादि ।

एवमप्राधान्येऽपि चोपायत्वात् प्रथमं क्रियायोगे लादिविधौ निमित्तत्वाय कल्पते । अनपेक्षिते तु पयसि गौरेव प्रधानम्, क्षीरविच्छेदस्तु तस्या मा भूदित्येव·

---

अत्रोच्यते -- कालादिकर्मसु द्रव्यकर्मायत्तत्वप्रयुक्तस्य भिन्नकक्ष्यत्वस्य सत्त्वेऽपि अत्राकथितकर्मणि प्रधानत्वाप्रधानत्वकृतः कक्ष्याभेद इत्यवधेयमिति ॥ ७० ॥

एतदेव दर्शयति – प्रधानकर्मेति ।

अस्यार्थः—यत्फलत्वेन क्रियायाः प्रयोजकम्, तत् क्रियया आप्तुमिष्यमाणतमत्वेन प्रधानकर्म पूर्वं कथितम् । यथा 'गां दोग्धि पयः' इत्यत्र दोहनक्रियायाः फलत्वेन प्रयोजकं पयःप्रधानं कर्म । तत्सिद्धये—तस्य पयसः प्रधानकर्मणः सिद्धये उपायत्वेन क्रियायुक्तम्=दोहनादिक्रियया सम्बद्धम्, अन्यत्तु गवादिकम्—अकथितम्=अपादानादिसंज्ञाविशेषैरविवक्षितम्, अप्रधानं कर्म भिन्नकक्ष्यं स्मृतिमिति योजना ।

अयं भावः—यत्कर्म क्रियायाः फलभूतमुद्दिश्य इतरसाधनानि क्रियायाः प्रवर्तने सज्जीभवन्ति, यस्य फलस्य क्रियया प्राप्तौ सत्यामुदासते=निर्व्यापाराणि व्युपरतानि भवन्ति, तदीप्साप्रकर्षगोचरीभूतं प्रधानम् 'कर्त्तुरीप्सिततमम्" इति कर्मसंज्ञयाऽष्टाध्याय्यामत्र च प्रथममेव कथितम् । तच्च पय आदिकम् ।

यत्तु अनीप्सितमपि नान्तरीयकम्—अविनाभूतं सत् तदर्थम्=प्रधानफलार्थम्, क्रियया सम्बध्यते तद् अनवाप्तविशेषम्=अप्राप्तापादानादिसंज्ञाविशेषम् अकथितकर्म अप्रधानत्वात् प्रधानकर्मणो भिन्नकक्ष्यमित्यर्थः । तद्यथा गवादि ।

एवं गवादेरप्राधान्येऽपि च उपेयस्य पयस उपायत्वादन्तरङ्गत्वेन प्रथमं गवादेः क्रियायोगे लादिविधौ गवादिरेव निमित्तत्वाय कल्पते, न तु पय आदिकं प्रधानकर्म, तदुक्तम्—गौणे कर्मणि दुह्यादेरिति । दोग्धुरनपेक्षिते तु पयसि तत्स्थाने गौरेव प्रधानं कर्म, सम्प्रति=पयसोऽनपेक्षायामपि क्षीरविच्छेदस्तु गौर्मा भूदित्यभिप्रेत्य क्षीरेण अनर्थ्यंपि दोग्धा दोहे गोः संस्कारार्थं प्रवर्त्तत इति । एवं रीत्या—

मनर्थ्यपि क्षीरेण सम्प्रति गोसंस्कारार्थं दोहे प्रवर्तत इति। "अपादानमुत्तराणि" (वा० १।४।१), 'गां दोग्धि' (म०भा० १।४।१) इत्युदाहरणमुपपद्यते विप्रतिषेधेन। अन्यथाऽकथितकर्मत्वेऽपादानादिसंज्ञाप्राप्त्यभावात् कथं विप्रतिषेधोदाहरणमेतद्भवेत् ? अपादानादिविशेषकथाभिरसंस्पृष्टं ह्यकथितं कर्म।

तदेवं निमित्तनिमित्तिभावेनावस्थितत्वाद् भिन्नकक्ष्यत्वे कथिताकथितयोः कर्मणोर्भेदादप्राप्ता गवादीनां कर्मसंज्ञा 'अकथितं च" ( पा० १।४।५२ ) इत्यनेनारभ्यत इति स्थितम् ।। ७१ ।।

इदानीम्—

"नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ।।" (म० भा० १।४।५१)

इति भाष्योक्तं व्याचष्टे—

दुह्यादिवन्नयत्यादौ कर्मत्वमकथाश्रयम्।
आख्यातानुपयोगे तु नियमाच्छेष इष्यते ।। ७२ ।।

---

"अपादानमुत्तराणि कारकाणि बाधन्ते" ( वा० १।४।१ )। "गां दोग्धि पयः" इति भाष्योक्तमुदाहरणमुपपद्यते विप्रतिषेधेन बाधोपपत्त्या। अन्यथा गोरकथितकर्मत्वेऽपादानादिसंज्ञाप्राप्त्यभावात् कथं विप्रतिषेधोदाहरणमेतद् भवेत् ? अपादानादिविशेषकथाभिरसंस्पृष्टं ह्यकथितं कर्म. तत्र को विप्रतिषेधस्य तुल्यबलयोर्विरोधरूपस्यावसरः ?

तदेवमुपायोपेयभावेनावस्थितत्वात कथिताकथितयोः कर्मणोर्भिन्नकक्ष्यत्वेन भेदाद् गवादीनामपादानसंज्ञया कर्मसंज्ञाया बाधादप्राप्ता तेषां कर्मसंज्ञा "अकथितञ्च" इति सूत्रेण विधीयत इति स्थितमिति ।। ७१ ।।

"प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इति भाष्ये उक्तम्। तत्र कथिताकथितभेदेन कर्मद्वयं प्रागुक्तम्। इदानीं के ते द्विकर्मका इति जिज्ञासायाम्—

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ।।

इति भाष्ये उक्तम्, तद् व्याचष्टे—दुह्यादिवदिति।

अस्यार्थः—दुह्यादिवत् =दुह्, याच्, पच् , दण्ड, रुध् , प्रच्छ् चि, ब्रू , शास्, जि, मथ् , मुष् इति धातुद्वादशक इव नयत्यादौ—नी, ह्री, कृष, वह इति धातुचतुष्टयेऽपि, अकथाश्रयम् =अपादानादिविशेषकथानाश्रयं कर्मत्वम्, अकथितकर्मत्व-

अजां नयति ग्रामम्, एधान् वहति नगरम्, हरति भारं संवाहम्। गत्यर्थ-ग्रहणेन गतिबुद्धीत्यादिना येषां द्विकर्मकत्वं ते लक्ष्यन्ते। 'तथैव च' इत्यनेनानुक्त-समुच्चयार्थेन जयत्यादयो गृह्यन्ते, जयति शतं शतानीकम्, गर्गान् दण्डयति शतमिति। अत्रेप्साप्रकर्षयुक्तमजादिकर्म कथितं प्रधानं पयोवत्। ग्रामादि त्ववधि-स्थानीयत्वाद् गुणकर्म गवादिवदेव नान्तरीयकत्वादकथितकर्मैव द्रष्टव्यम्।

परिगणनलक्षणेन तु नियमेनाख्यातानुपयोगे कर्मसंज्ञ(ज्ञा)या व्यावर्त्यते। नटस्य शृणोतीत्यादौ नटादिः,उपयोगे ह्याख्यातापादानमित्यनुपयोगे विशेषकथाना-क्रान्तत्वाद् भवेदकथितकर्मेति परिगणनलक्षणानियमाच्छेषोऽयं षष्ठीविषयः॥७२॥

---

मित्यर्थः। अनुपयोगे तु=नियमपूर्वकविद्यास्वीकाराभावे तु, आख्याता=प्रवक्ता नटादिः, नियमात्=

दुह्याच्पच्दण्डरुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।
कर्मयुक्स्यादकथितं तथा स्यान्नीह्रीकृष्वहाम्॥

इत्यकथितकर्मणः परिगणननियमात्। 'नटस्य श्रृणोति' इत्यादौ नटादिराख्याता श्रुधातोः परिगणनाद् बहिर्भूतत्वेन षष्ठीविषयः शेष इष्यते, न त्वकथितं कर्मेति, न नटादेरकथितञ्चेति कर्मसंज्ञा, न वा तत्र द्वितीयेति। अयं भावः—

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः॥

इत्यत्र गत्यर्थग्रहणेन गतिबुद्धीत्यादिना येषां द्विकर्मकत्वं ते लक्ष्यन्ते। 'तथैव च' इत्यनेन अनुक्तसमुच्चयार्थेन जयत्यादयो गृह्यन्ते। ततश्च—'अजां नयति ग्रामम्, एधान् वहति नगरम्, हरति भारं संवाहम्=भारवाहम्, जयति शतं शतानीकम्, गर्गान् दण्डयति शतम्' इत्यादीनि अकथितकर्मोदाहरणानि। अत्रेप्साप्रकर्षयुक्तमजा-दिकं कर्म कथितं प्रधानं पयोवत्।

अन्यत्तु कर्म ग्रामादि अवधिस्थानीयत्वात्=ईप्साप्रकर्षराहित्येनावधितुल्य-त्वाद् गुणकर्म, गवादिवदेव नान्तरीयकत्वादकथितकर्मैव द्रष्टव्यम्।

अनुपयोगे=नियमपूर्वकविद्यास्वीकाराभावे 'नटस्य श्रृणोति' इत्यादौ नटादि-राख्याता तु 'दुह्याच्पच्' इत्यादिरूपेण अकथितकर्म परिगणननियमेन प्रागुक्तेन कर्मसंज्ञया व्यावर्त्यते। उपयोगे हि=ब्रह्मचर्यादिनियमपूर्वकविद्यास्वीकारे हि आख्याता उपाध्यायादिरपादानम् 'उपाध्यायादधीते' इति। अनुपयोगे नटादिर-पादानादिविशेषकथानाक्रान्तत्वाद् भवेदकथितकर्मेति परिगणनलक्षणानियमात्=प्रागुक्तपरिगणनरूपनियमाभावात्=परिगणनबहिर्भूतत्वात्, अयम्=नटादिः शेष इति षष्ठीविषयः—'नटस्य श्रृणोति' इति॥ ७२॥

तदेवं प्रधानेतरभावेन कर्मभाव उक्तः। केचित्तु प्रधानमेकमेवेदं कर्मेत्याहुः। तथा हि—

अन्तर्भूतणिजर्थानां दुह्यादीनां णिजन्तवत्।
सिद्धं पूर्वेण कर्मत्वं णिजन्ते नियमस्तथा ॥ ७३ ॥

अन्तर्भूतो वाच्यतया णिचोऽर्थः प्रयोजकव्यापारः प्रैषलक्षणो येषां दुहियाचिप्रभृतीनाम्, तेषां प्रयोगे 'गां दोग्धि पयः' इत्यादौ "कर्तुरीप्सिततमम्"(पा० १।४।४९) इत्यनेनैव गवादीनामपि सिद्धा कर्मसंज्ञा। यथा 'गमयति ग्रामं देवदत्तं यज्ञदत्तः' इत्यत्र णिजन्तविषये प्रयोज्यस्य प्रयोजकव्यापारेणाप्यमानत्वादिति। "गतिबुद्धि०" इति च नियमार्थं सूत्रं गम्यादीनामेव ण्यन्तानां प्रयोज्यः कर्म, नान्येषां याच्यादीनामित्यण्यन्तविषयेऽत्र न प्रवर्तते।

---

तदेवं प्रधानत्वाप्रधानत्वाभ्यां द्विधा कर्मत्वमुक्तम्। केचित् तु प्रधानमेकमेवेदं कर्म, नास्त्यकथितमप्रधानं कर्मेत्याहुः। तथा हि—अन्तर्भूतणिजर्थानामिति।

अस्यार्थः—दुह्यादयो धातवोऽन्तर्भूतणिजर्थाः। तथा हि—क्षरणानुकूलः प्रैषो दुहेरर्थः। दानानुकूलः प्रैषो दापनं नाम याचेरर्थः। प्रवेशनं स्थापनं वा रुधेरर्थः। आख्यापनम्, आचिख्यापयिषा वा पृच्छेरर्थः। एवं दिदापयिषाऽपि याचेरर्थः। एवं भिक्षिरपि याचेः समानार्थः। भुक्त्यनुकूलः प्रैषोऽवचिनोतेरर्थः। प्रतिपत्त्यनुकूलः प्रैषो ब्रूञोऽर्थः। शिक्षानुकूलः प्रैषोऽनुशासेरर्थः। एवमन्तर्भूतणिजर्थानां दुह्यादीनां णिजन्तवत्=णिजन्तेष्विव 'ग्रामं गमयति देवदत्तम्' इत्यादिष्विव, कर्मत्वं पूर्वेण सूत्रेण "कर्त्तुरीप्सिततमम्" ( पा० १।४।४९ ) इत्यनेनैव सिद्धम्। तथा णिजन्ते 'पाचयति देवदत्तेन यज्ञदत्तः' इत्यादौ "गतिबुद्धिप्रत्यवसानार्थ०" ( पा० १।४।५२ ) इत्यादिसूत्रेण नियमः, तथा प्रयोज्यकर्त्तुस्तेन कर्मत्वनिषेधोऽपि सिद्धः। नियमस्य सजातीयविषयकत्वेन च ण्यन्ते पाच्यादावेव प्रवृत्तिः, न तु अण्यन्ते दुहादौ। तेनाभिधया प्रधाने गोरूपे कर्मण्येव लादयः। अप्रधाने दुहादीनामित्युक्तिस्तु गोरार्थिकं प्राधान्यमाश्रित्येति विवेकः।

अयं भावः—णिचोऽर्थः प्रयोजकव्यापारः प्रैषरूपः, सोऽर्थेष्वन्तर्भूतो वाच्यतया येषां दुहियाचिप्रभृतीनां तेषां प्रयोगे 'गां दोग्धि पयः' इत्यादौ 'कर्त्तरीप्सिततमम्" ( पा० १।४।४९ ) इत्यनेनैव अकथितकर्मत्वेनाभिमतानां गवादीनामपि कर्मसंज्ञा सिद्धा। यथा 'गमयति ग्रामं देवदत्तं यज्ञदत्तः' इत्यत्र णिजन्तविषये प्रयोज्यकर्त्तुः प्रयोजकव्यापारेणाप्यमानत्वात् पूर्वेणैव कर्मत्वमिति। "गतिबुद्धिः०" (पा०१।४।५२) इति सूत्रं तु नियमार्थम्। गम्यादीनामेव ण्यन्तानां प्रयोज्यः कर्त्ता कर्म, नान्येषां पाच्यादीनाम् इत्यण्यन्तविषयेऽत्र न प्रवर्तत इति प्रयोज्यकर्त्तुर्गवादेरपि कर्मत्वं पूर्वसूत्रेणैव सिद्ध्यति।

तथा हि—'गौः पयः क्षरति, देवदत्तः तां क्षरन्तीं क्षारयति' इति दुहेरर्थः। तत्र क्षरणेनाप्यमानत्वात् पयः कर्म, क्षारणेनाप्यमानत्वाद् गौः। यद्यपि चार्थेन रूपेण पयः प्रधानभूतम्, उपायभूता तु गौः, तथाप्याभिधेयकेन क्षरणोपसर्जनस्य क्षारणस्य शब्दार्थत्वाद् गौरेव प्रधानं कर्मेति तत्रैव लादयः, 'दुह्यते गौः पयः, दोग्धव्या, दुग्धा, सुदोहा' इति। "अप्रधाने दुहादीनाम्" इत्यार्थेन रूपेणाप्राधान्यमुच्यते। यद्यप्यपायविवक्षां विना क्षारणं नोपपद्यते, तथापि "अपादानमुत्तराणि०" ( वा० १।४।१ ) इति कर्मसंज्ञैवात्र भवति परत्वात्।

यदि ह्यकथितसूत्रेण कर्मसंज्ञात्रोच्येत, तदापादानत्वात् कथितत्वेनासौ न स्यात्। पूर्वसूत्रेणैव तु कर्मसंज्ञायामुभयसम्भवे परत्वाद् "अपादानमुत्तराणि०" 'गां दोग्धि' इत्युक्तम्। तथा चात्रापादानाविवक्षावर्णनमसमीचीनम्।

एवं पौरवं गां याचते, दापयतीत्यर्थः। पौरवो गां ददाति, तं प्रयुङ्क्ते याचकः श्रद्धोत्पादनेन इति याचेर्ण्यर्थः प्रैषो वाच्यत्वेनान्तर्भूतः। याचनस्य गौः

---

तथा हि—'गौः पयः क्षरति, क्षरन्तीं तां देवदत्तो दोग्धा क्षारयति' इति क्षारणं दुहेरर्थः। तत्र क्षरणेन गोव्यापारेणाप्यमानत्वात् पयः कर्म, देवदत्तादिव्यापारेण क्षरणेनाप्यमानत्वाद् गौः कर्म। यद्यपि उपेयत्वादार्थेन रूपेण पयः प्रधानभूतम्, गौस्तु पयस उपायभूता इति अर्थतोऽप्रधानम्, तथापि क्षरणोपसर्जनकस्य क्षारणस्य शब्दार्थत्वाद् आभिधेयकेन=अभिधालभ्येन रूपेण गौरेव प्रधानव्यापारेणाप्यमानत्वात् प्रधानं कर्म इति तत्रैव लादयः. 'दुह्यते गौः पयः, दोग्धव्या, दुग्धा, सुदोहा' इति। अप्रधाने दुहादीनामिति तु गवादीनामप्राधान्यमुच्यते। शब्दतस्तु तेषां प्राधान्यं प्रागुक्तमेव। यद्यपि गोरवधित्वेनापायविवक्षाम्=पयसो गवावधिकविभागविवक्षां विना क्षारणं नोपपद्यत इत्यपादानत्वप्राप्तिरत्र गोः, तथापि "अपादानमुत्तराणि कारकाणि बाधन्ते" ( म०भा०१।४।१ ) इति भाष्योक्तेरत्र पूर्वसूत्रेण कर्मसंज्ञैव भवति परत्वात्।

यदि ह्यकथितसूत्रेण कर्मसंज्ञाऽत्रोच्येत, तदा गोरपादानत्वात् कथितत्वेन कर्मसंज्ञा न स्यात्। पूर्वसूत्रेणैव तु गोः कर्मसंज्ञायामुभयसम्भवे=कर्मत्वापादानत्वोभयसम्भवे परत्वाद् "अपादानमुत्तराणि कारकाणि बाधन्ते" (भा० वा० १।४।१) 'गां दोग्धि' इत्युक्तं भाष्ये। तथा चात्राकथितसूत्रप्राप्त्यर्थमपादानाविवक्षावर्णनमसमीचीनम्।

एवं 'पौरवं गां याचते' इत्यत्र दापनं याचेरर्थः। दापयतीत्यर्थः। 'पौरवो गां ददाति, तं प्रयुङ्क्ते याचको दानधर्मकीर्तनया श्रद्धोत्पादनेन' इति ण्यर्थः प्रैषो वाच्यतया याचेरन्तर्भूतः। याचनस्य दानरूपस्य गौः कर्म, दापनरूपस्य प्रैषस्य तु पौरवः

कर्म, प्रैषस्य तु पौरवः। 'गामवरुणद्धि व्रजम्' इति प्रविशन्तीं प्रवेशयतीत्यर्थः। प्रवेशस्य व्रजः कर्म, प्रैषस्य तु गौः।

यदा तु स्थापयतीत्यर्थः, तदा व्रजस्याधिकरणता, उभयसंज्ञाप्रसंगे तु परत्वात् कर्मसंज्ञोक्ता. अधिकरणं कर्म। गेहं प्रविशतीति प्रवेशोपसर्जनमत्र स्थानमर्थः। गेहं प्रवेशनेन व्याप्य तिष्ठतीति निमित्तनिमित्तिभावेन प्रवेशस्थाने प्रतीयेते। तत्र प्रवेशापेक्षया कर्म, स्थानापेक्षयाधिकरणमित्युभयप्राप्तौ परत्वात् कर्मोदाहृतम्।

माणवकं पन्थानं पृच्छति, इति आचष्टे पन्थानं माणवकः, तं प्रयुङ्क्ते आचिख्यापयिषतीत्यर्थः। एवं पौरवो गां दित्सति, तं प्रयुङ्क्ते याचक इत्यप्यर्थोऽवगम्यते। एवं भिक्षेरप्यर्थो वेदितव्यः।

वृक्षमवचिनोति फलानि, मुञ्चति वृक्षः फलानि, तं मोचयतीत्यर्थः।

अपायविवक्षायामपि "अपादानमुत्तराणि" इति कर्मसंज्ञैवात्र। माणवकं धर्मं ब्रूते, प्रतिपादयतीत्यर्थः। तत्र प्रतिपत्तेर्धर्मः कर्म, प्रैषस्य तु माणवकः।

---

कर्म। 'गामवरुणद्धि व्रजम्' इत्यत्र व्रजं प्रविशन्तीं प्रवेशयतीत्यर्थः। प्रवेशस्य व्रजः कर्म, प्रैषस्य तु गौः कर्म।

यदा तु 'अवरुणद्धि' इत्यस्य स्थापयतीत्यर्थः, तदा व्रजस्याधिकरणता, अधिकरणत्वकर्मत्वोभयसंज्ञाप्रसङ्गे तु परत्वात् कर्मसंज्ञोक्ता भाष्ये। अत्र व्रजरूपमधिकरणं कर्म। 'गेहं प्रविशति' इत्यत्र प्रवेशोपसर्जनम्=प्रवेशोत्तरकालिकव्यापनोपसर्जनकं स्थानम्=स्थितिः अत्र प्रविशेरर्थः। गेहं प्रवेशेन व्याप्य तिष्ठतीति। अत्र प्रवेशस्थिती प्रविश्धात्वर्थौ निमित्तनिमित्तिभावेन प्रतीयेते। तत्र गृहं प्रवेशापेक्षया कर्म, स्थानापेक्षयाधिकरणमित्युभयप्राप्तौ परत्वात् कर्मत्युदाहृतम्। 'माणवकं पन्थानं पृच्छति' इत्यत्र माणवकः पन्थानमाचष्टे तं प्रयुङ्क्ते आख्यापयति इत्यर्थः।

अथवा माणवकः पन्थानमाचिख्यासति तं प्रयुङ्क्ते=प्रेरयति। आचिख्यापयिषतीत्यर्थः। एवं "पौरवं गां याचते' इत्यत्रापि पूर्वोक्ताद अन्योऽर्थः। पौरवो गां दित्सति तं श्रद्धोत्पादनद्वारा प्रयुङ्क्ते याचक इत्यप्यर्थोऽवगम्यते। एवं याचेः समानार्थकस्य भिक्षेरप्यर्थो वेदितव्यः।

'वृक्षमवचिनोति फलानि' इत्यत्र वृक्षः फलानि मुञ्चति तं प्रयुङ्क्ते मोचयतीत्यर्थः। वृक्षस्यावधित्वेन अपायविवक्षायामपि "अपादानमुत्तराणि कारकाणि बाधन्ते" (भा०वा० १।४।१) इति वृक्षस्य कर्मसंज्ञैवात्र, न त्वपादानसंज्ञा। 'माणवकं धर्मं ब्रूते' इत्यत्र प्रतिपादयतीत्यर्थः। तत्र 'माणवको धर्मं प्रतिपद्यते' इत्यर्थे प्रतिपत्तेर्धर्मः कर्म प्रतिपादनरूपस्य प्रैषस्य तु माणवकः कर्म। 'माणवकमनुशास्ति धर्मम्' इत्यत्र माणवको धर्मं शिक्षते, तं शिक्षयतीत्यर्थः। अत्र शिक्षतेर्धर्मः कर्म,

'माणवकमनुशास्ति धर्मम्' इति। शिक्षते धर्मं माणवकः, तं शिक्षयतीत्यर्थः। कर्मणाभिप्रेयमाणस्य तु माणवकस्यात्र सम्प्रदानसंज्ञा न भवति, ददातिकर्मत्वाभावात्। सामान्येन तु भाष्यकारमतेन सम्प्रदानसंज्ञायां प्रधानव्यापारविषयया कर्मसंज्ञयात्र सम्प्रदानसंज्ञा बाध्यत इति वक्तव्यम्।

यद्वा कर्तुर्यदीप्सिततमं कर्म तेनाभिप्रेयमाणस्य सम्प्रदानस्य सम्प्रदानत्वम्। यथोपाध्यायाय गां ददातीति। गौर्हि दातुर्वल्लभा। तत एव गुणवते दीयते। धर्मस्तु कर्तुर्नाभिमतः, पूर्वमेव सिद्धेः। तेन तु माणवकोऽनुग्रहीतुमभिप्रेत इति प्रयोज्यस्यात्रेप्सिततमं कर्म, न प्रयोजकस्येति न सम्प्रदानसंज्ञाया विषयोऽयमित्यन्ये।

---

शिक्षयतेस्तु माणवकः कर्म इति। अत्र कर्मणा ब्रूतेः कर्मणा धर्मेण अभिप्रेयमाणस्य तु माणवकस्यात्र सम्प्रदानसंज्ञा न भवति, धर्मस्य ददाति कर्मत्वाभावात्। दानकर्मणैव हि अभिप्रेयमाणस्य सम्प्रदानसंज्ञा भवति, सम्प्रदानेति महासंज्ञाकरणेन तस्या अन्वर्थत्वविज्ञानात्। सम्यक् प्रदीयतेऽस्मै इति हि सम्प्रदानपदव्युत्पत्तिरिति सौत्रं मतम्।

भाष्यकृतस्तु सम्प्रदानमिति महासंज्ञाकरणं पूर्वाचार्यानुरोधात्। अतः कस्याश्चिदपि क्रियायाः कर्मणाऽभिप्रेयमाणस्य सम्प्रदानसंज्ञा भवति इति भाष्यकृन्मते तु क्रियासामान्यमाश्रित्य तत्कर्मणाऽभिप्रेयमाणस्य सम्प्रदानसंज्ञायां स्वीक्रियमाणायां प्रधानव्यापारविषयया कर्मसंज्ञयाऽत्र = माणवके सम्प्रदानसंज्ञा प्राप्ता परत्वाद् बाध्यत इति वक्तव्यम्।

अथवा कर्त्तुर्यदीप्सिततमं कर्म तेनाभिप्रेयमाणस्य = सम्बद्धुमिष्यमाणस्य सम्प्रदानत्वेनाभिमतस्य सम्प्रदानसंज्ञा भवति। सम्प्रदानसंज्ञासूत्रे हि = कर्मपदस्य हि कर्मसामान्यवाचकस्य कर्त्तुरीप्सिततमे कर्मणि विशेषलक्षणा, लक्ष्यानुरोधात्, तन्मूलकतादृशतात्पर्यानुपपत्तेश्च। यथा—'उपाध्यायाय गां ददाति' इति। गौर्हि दातुर्वल्लभा, अत एव तेन गुणवते दीयते तस्या दुःखाभावार्थम्। धर्मस्तु कर्त्तुर्नाभिमतः, अनुशासनात् पूर्वमेव तस्य सिद्धेः। तेन तु = अनुशासनकर्त्रा तु माणवकः स्वव्यापारेणानुशासनेन अनुग्रहीतुमभिप्रेत इति प्रयोज्यस्य माणवकस्यात्रेप्सिततमं धर्मरूपं कर्म न तु प्रयोजकस्याचार्यस्येति न सम्प्रदानसंज्ञाया विषयो माणवक इति न सम्प्रदानसंज्ञाया बाधस्य आवश्यकता इत्यन्ये।

इदं तु मतं न युक्तमिति अन्ये इति वदता सूचितम्। तथा हि—यदीदं मतं समीचीनं स्यात्, तदा 'खण्डिकोपाध्यायः शिष्याय चपेटां ददाति' इत्यत्र शिष्यस्य सम्प्रदानत्वं न स्यात्, चपेटारूपस्य कर्मणः कर्त्तुरीप्सिततमत्वाभावात्, शिष्यस्यैव तदीप्सिततमत्वात्।

एवं नयत्यादावपि पूर्वसूत्रेणैव कर्मत्वम्। अजां नयति ग्रामम्, प्रापयतीत्यर्थः। प्रापणेन प्रधानेन सम्बद्धाजा प्रधानं कर्मेति "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" ( वा० पा० १।४।५१ ) इति न्यायसिद्धम्, अजा नीयते ग्रामम्, नेतव्या नीता, सुनयेति। एवमन्यत्रापि यथायोगमुदाहार्यम्।

सत्यपि चात्र ण्यर्थान्तर्भावे गत्यादिनियमेन प्रयोज्यस्य कर्मसंज्ञा न व्यावर्त्यते सजातीयापेक्षत्वान्नियमस्य, अन्यत्र ण्यन्त एव, तेन निवारणात्। अत्र च प्रैषो ण्यर्थो धातुनैव स्वीकृत इति णिज् न भवति ॥ ७३ ॥

ननु च वास्तवेन रूपेण पय-आदेः प्राधान्यात् तस्यैवेप्सिततमत्वं न्याय्यम्, न तु गवादेः, प्रतीयमानोपसर्जनभूतक्रियापेक्षमीप्सिततमत्वं युज्यते, प्रधानसन्निधाने गुणस्येप्साप्रकर्षविषयत्वाभावात्।

न च कारकप्रकरणे "साधकतमं करणम्" ( पा० १।४।४२ ) इति तमब्ग्रहणात् प्रकर्षो न विवक्ष्यत इति शक्यते तत्र वक्तुम् 'ईप्सिततमम्' इति साक्षात् प्रकर्षविवक्षार्थं तमप्श्रुतेरुपादानात्। लिङ्गस्य त्वन्यत्र कृतार्थत्वम्, 'गङ्गायां घोषः' इत्यादावधिकरणसंज्ञा यथा स्यादिति।

---

एवं नयत्यादावपि नीहृकृष्वहेष्वपि पूर्वसूत्रेणैव कर्मत्वम्, न त्वकथितसूत्रेण। 'अजां नयति ग्रामम्' प्रापयतीत्यर्थः। अत्र प्राप्तेः कर्म ग्रामः, प्रापणस्य तु अजा कर्म। अत्र प्रापणरूपेण प्रधानेन व्यापारेणाप्यतया सम्बद्धाऽजा प्रधानं कर्मेति 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति न्यायसिद्धम्। तदुदाहरणम्—'अजा नीयते ग्रामम्, नेतव्या, नीता, सुनया' इति। एवमन्यत्रापि हृकृष्वहेष्वपि यथायोगमुदाहार्यम्।

सत्यपि चात्र=पूर्वोक्तेषु धातुषु दुह्यादिषु नयत्यादिषु च ण्यर्थान्तिर्भावे प्रयोज्यस्य गवादेः कर्मसंज्ञा गत्यादिनियमेन न व्यावर्तते, नियमस्य सजातीयापेक्षत्वेन ण्यन्तधातुसम्बद्धप्रयोज्यकर्मविषयकत्वात्। अन्यत्र ण्यन्त एव पाच्यादौ तेन नियमेन निवारणात्। अत्र च=दुह्यादिषु णिजर्थः प्रैषो धातुनैव स्वीकृत इति णिज् न भवतीत्येवं गत्यादिनियमागोचरा इमे दुह्यादय इति ॥ ७३ ॥

ननु च पय आदेः प्रवृत्त्युद्देश्यत्वेन वास्तवेन रूपेण प्राधान्यात् तस्यैवेप्सिततमत्वं युक्तम्, न तु गवादेः। प्रतीयमानोपसर्जनभूतक्रियापेक्षम्=प्रतीमानायाः क्षारणरूपप्रधानक्रियायामुपसर्जनीभूता क्षरणक्रिया तदपेक्षम् ईप्सिततमत्वं युज्यते, प्रधानसन्निधौ गुणस्य ईप्साप्रकर्षविषयत्वाभावात्।

न च 'साधकतमं करणम्" ( १।४।४२ ) इति तमब्ग्रहणात् कारकप्रकरणे सामर्थ्यगम्यः प्रकर्षो नाश्रीयत इति शक्यते वक्तुम्। तथा हि—'साधकं करणम्'

श्रुत्या हि लिङ्गबाधा। 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वं पूर्वं बलीयोऽर्थविप्रकर्षात्' ( मी० मा० सू० ) इति न्यायविद्भिरुक्तत्वात् कथं गवादेः पूर्वेण कर्मसंज्ञेत्याशङ्क्याह—

**करणस्य स्वकक्ष्यायां न प्रकर्षाश्रयो यथा।**
**कर्मणोऽपि स्वकक्ष्यायां न स्यादतिशयस्तथा ।। ७४ ।।**

यथा कारकान्तरापेक्षया लब्धातिशयस्य करणसंज्ञायां सजातीयकरणान्तरापेक्षया प्रकर्षो नाश्रीयते, येन सर्वस्यैव करणकार्यं प्रवर्तते, 'अश्वेन पथा दीपिकया

---

इत्येव सूत्रमस्तु, कारकाधिकारादेव साधकलाभे सिद्धे साधकग्रहणमेव साधकतमार्थं भविष्यति, तमब्ग्रहणं व्यर्थं सज् ज्ञापयति 'कारकाधिकारे सामर्थ्यगम्यो प्रकर्षो नाश्रीयते' इति।

एतच्च न वक्तुं शक्यते, 'ईप्सिततमम्' इति तमब्ग्रहणस्य साक्षात् प्रकर्षस्य विवक्षार्थमुपादानेनात्र तमब्ग्रहणस्य साक्षात् परम्परासाधारण्येन प्रकर्षविवक्षार्थं सार्थक्यसम्भवेनानर्थक्याभावेन ज्ञापकत्वासम्भवात्। आनर्थक्यसम्भवेऽपि तमब्ग्रहणसामर्थ्यरूपस्य लिङ्गस्यान्यत्र कारकेऽधिकरणे चरितार्थत्वात्। 'गङ्गायां घोषः' इत्यादौ घोषरूपस्याधेयस्य सर्वावयवव्याप्त्यभावेन गौणे आधारेऽधिकरणसंज्ञा यथा स्यादिति। अन्यथा 'तिलेषु तैलम् दध्नि सर्पिः' इत्यादावाधेयस्य सर्वावयवव्याप्त्या मुख्याधार एव अधिकरणसंज्ञा स्यात्।

किञ्च, ईप्सिततममित्यत्र तमब्ग्रहणस्य श्रुतित्वसम्भवे कारकाधिकारे प्रकर्षविवक्षाभावे तस्य लिङ्गत्वं सम्भवति, श्रुत्या लिङ्गबाधात्। "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" (मीमांसासूत्रम्) इति न्यायविद्भिर्जैमिनिमुनिभिरुक्तत्वात्।

तथा च कथं पूर्वसूत्रेण गवादेरप्रधानस्य कर्मसंज्ञा इत्याशङ्क्याह—करणस्य स्वकक्ष्यायामिति।

अस्यार्थः—करणस्य स्वकक्ष्यायाम् = करणत्वेन स्वस्वजातीये करणान्तरे यथा न प्रकर्षस्यात्रधित्वमादायाश्रयणम्, अन्यथा 'अश्वेन पथा दीपिकया याति' इत्यादौ अश्वादेरेव प्रकृष्टतमस्य करणसंज्ञा स्यात्, न तु मार्गदीपिकादीनाम्। एवं कर्मणोऽपि स्वकक्ष्यायां कर्मत्वेन स्वजातीये कर्मान्तरे नावधित्वमाश्रित्य प्रकर्षस्य आश्रयः = आश्रयणमिति। यथा करणे इतरकारकापेक्षया प्रकर्षाश्रयणेन साधकतमत्वेऽपि नेतरकरणापेक्षया साधकतमत्वमाश्रित्य करणसंज्ञा, तथैव कर्मण्यपि न कर्मान्तरापेक्षया प्रकर्ष आश्रीयत इति फलितम्।

अयं भावः—यथा कारकान्तरापेक्षया लब्धप्रकर्षस्य करणसंज्ञायां कर्त्तव्यायां

याति, पदाभ्यां पथा व्रजति, बलेन पादेनादत्ते' इति। अन्यथा अश्वादेरेव प्रकृष्टतमस्य भवेदिति। तथा कर्मणोऽपि।

(अधि)करणादीनामपि क्रियायामुपयोगादीप्सिततमत्वमिति कारकान्तरापेक्षयासादितेप्साप्रकर्षविषयभावस्य कर्मान्तरापेक्षया तदतिशयो नाश्रीयत इति सिद्धा निमित्तनिमित्तिभावावस्थितस्यापि सर्वस्य कर्मणः पूर्वेणैव योगेन कर्मसंज्ञेति नास्त्यकथितकर्मेत्येकीयमतेनोपन्यासः ॥ ७४ ॥

एतत्तु न युक्तमित्याह —

कर्मणस्त्वाप्तुमिष्टत्व आश्रितेऽतिशयो यतः।

आश्रीयते ततोऽत्यन्तं भेदः पूर्वेण कर्मणा ॥ ७५ ॥

---

करणान्तरापेक्षया प्रकर्षो नाश्रीयते, तेन सर्वस्यैव कारकान्तरापेक्षया लब्धप्रकर्षस्य करणसंज्ञासंयुक्तं कार्यञ्च प्रवर्त्तते। 'अश्वेन पथा दीपिकया याति' इत्यत्र इतरकारकापेक्षया साधकतमस्याश्वस्येव पथि दीपिकयोरपि करणत्वम्। 'पादाभ्यां पथा व्रजति' इत्यत्र पादयोरिव पथोऽपि करणत्वम्, 'बलेन पादेनादत्ते' इत्यत्र पादस्येव बलस्यापि करणत्वम्। अन्यथाऽश्वादेरेव प्रकृष्टतमस्य करणसंज्ञा स्यादिति तथा कर्मणोऽपि न कर्मान्तरापेक्षया प्रकर्ष आश्रीयते।

'व्रजमवरुणद्धि गाम्' इत्यादौ अधिकरणादीनामपि अकथितकर्मत्वेनाभिमतानां व्रजादीनां व्रजनादिक्रियायामुपयोगादीप्सितत्वमिति कारकान्तरापेक्षया ईप्सिततमत्वेऽपि कर्मान्तरापेक्षया तदतिशयो नाश्रीयत इति सिद्धा निमित्तनिमित्तिभावप्रयुक्तगुणप्रधानभावेनावस्थितस्यापि सर्वस्य कर्मणः प्रधानस्याप्रधानस्य च पूर्वसूत्रेणैव कर्मसंज्ञेति रीत्या नास्त्यकथितं कर्मेत्येकीयमतमाश्रित्योपन्यासोऽस्य सन्दर्भस्येति ॥ ७४ ॥

एतत्तु न युक्तमित्याह—कर्मण इति।

अस्यार्थः—यतः=यस्मात् कारणाद् अप्रधानस्य समाने तु=समानेऽपि कर्मण आप्तुमिष्टत्वे समाने तु समानेऽपि कर्मान्तरादतिशयः प्रकर्ष आश्रीयते, ततः =तस्मात् कारणात पूर्वेण कर्मणा सह अकथितकर्मणोऽन्यन्तं भेद इति।

अयं तु निष्कर्षः—सर्वेषां कारकाणां साधकत्वे समानेऽपि इतरकारकापेक्षया साधकतमत्वं प्रकर्षरूपं करणे सर्वस्मिन् परिगृह्यत इति न करणान्तरापेक्षया कस्यचित् करणस्य प्रकर्ष आश्रीयते। ईप्सितत्वं तु क्रिययाप्तुमिष्टत्वरूपं कर्मण्येव, न त्वितरकारकेष्विति कर्मान्तरापेक्षयैव कर्मणि प्रकर्षः सम्भवति आश्रीयते चेति।

इह साधनभावस्य सर्वकारकविषयत्वाद् युक्तं यत्कारकान्तरापेक्षया लब्धातिशयसाधनभावं करणं स्वकक्ष्यागतं प्रकर्षं नाद्रियेत। कर्म त्वीप्साप्रकर्षभावं कारकान्तरापेक्षया प्रतिपत्तुमसमर्थम्। न हि कारकान्तराणीप्सितानि, कर्त्रा क्रियया यदाप्तव्यं तदीप्सितम्। कारकान्तराणि तु क्रियार्थं करणादीन्याप्तव्यानि, न तु क्रियया। तस्मात् तुल्यजातीयापेक्षत्वादतिशयस्य कर्मण आप्तुमिष्टतमत्व ईप्सितमित्येवमाप्तुमभिप्रेतत्वे आश्रीयते। तमप उपादानादतिशयो यस्मादङ्गीक्रियते तस्मादीप्सितार्थान्तरापेक्ष एवासौ प्रकर्षोऽभ्युपगन्तव्य इति स्वकक्ष्यागत एव सः।

तथा च पयःप्रभृतिगवादीप्सितापेक्षया प्रकृष्टमीप्सितं पूर्वयोगस्य विषयः, गवादेस्तु पूर्वेणासिद्धायां कर्मसंज्ञायामकथितमित्यनेन सिद्धिरित्येष एव पक्षो न्याय्यः।

ततश्च भिन्नकक्ष्यं कर्मद्वयमेव तत्। स्वकक्ष्यापेक्षेऽनाश्रिते तु कर्मणः प्रकर्षे तमप्श्रुतिरनर्थिका स्यात्। तथा चेप्सितमात्रस्य कर्मसंज्ञायाम् "वारणार्था-

---

अयं भावः—इह साधनत्वस्य सर्वकारकधर्मत्वाद् युक्तं यत् कारकान्तरापेक्षया साधनभावप्रकर्षं लब्ध्वा स्थितं करणं करणान्तरापेक्षया प्रकर्षं स्वस्य करणसंज्ञायां नाद्रियेत। कर्म तु कारकान्तरापेक्षया ईप्सितत्वप्रकर्षरूपं भावं प्राप्तुमसमर्थम्। यतो न कारकान्तरेषु ईप्सितत्वमस्ति यदपेक्षया प्रकर्षः कर्मणि आश्रीयेत। कर्त्रा क्रियया यदाऽऽप्यं तद्धीप्सितम्। तच्च कर्मैव, क्रियाजन्यफलाश्रयत्वात्। करणादीनि कारकान्तराणि तु कर्त्रा क्रियासिद्ध्यर्थमाप्तव्यानि, न तु तेन तानि क्रिययाऽऽप्तव्यानि, अनुभवोपपत्तिविरोधात्। तस्मात् प्रकर्षस्य तुल्यजातीयावधिसापेक्षत्वात् कर्मण आप्तुमिष्टतमत्वे आश्रीयमाणे ईप्सितमित्येवंपदाद् आप्तुमभिप्रेतत्वे विवक्षिते सति तदाश्रयत्वेन प्रकर्षावधित्वेन च कर्मैव आश्रीयते। यस्मात् कर्तुरीप्सिततममित्यत्र तमप उपादानात् प्रकर्षः संज्ञिनि अङ्गीक्रियते। तस्मादीप्सितावध्यपेक्ष एवासौ प्रकर्षोऽभ्युपगन्तव्य इति स्वकक्ष्यागत एव सः=ईप्साप्रकर्षावधितुल्यजातीयगत एव प्रकर्षः।

तथा च पयःप्रभृतिगवादिरूपेप्सितापेक्षया प्रकृष्टमीप्सितमिति पूर्वसूत्रेण विधीयमानायाः कर्मसंज्ञाया विषयः, गवादेस्तु पयःसाधनत्वेन ईप्सायां सत्यामपि तत्प्रकर्षाभावात्। पूर्वसूत्रेणासिद्धायां कर्मसंज्ञायां अकथितमित्यनेन कर्मसंज्ञासिद्धिरित्ययमेव पक्षो न्याय्यः।

ततश्च भिन्नकक्ष्यम्=भिन्नकोटिकप्रधानाप्रधानभेदेन, ईप्सितत्वेप्सिततमत्वभेदेन वा कर्मद्वयमेव तत्। कर्मणः प्रकर्षे स्वकक्ष्यापेक्षे=तुल्यजातीयावध्यपेक्षे, अनाश्रिते तु ईप्सिततममित्यत्र तमप्श्रुतिरनर्थिका स्यात्, प्रकर्षस्य तुल्यजातीया-

नामीप्सितः" ( पा० १।४।२७ ) इत्यत्र 'यवेभ्यो गां वारयति, कूपादन्धं वारयति, अग्नेर्माणवकं वारयति' इत्युदाहरणं न स्यात्, यवादेरपि कर्मसंज्ञाप्रसङ्गात्। ततश्चैतत् सूत्रं निर्विषय भवेदिति विषयविभागार्थं कर्मापादानयोः स्वकक्ष्यागतः कर्मणोऽतिशयः सिद्धान्तितः। तथा च वार्त्तिकम्—"वारणार्थानां कर्मानर्थक्यं कर्त्तुरीप्सिततमं कर्मेति वचनात्" ( वा० १।४।२७ ) भाष्यमपि।

यत्तु कथितं पुरस्ताद् ईप्सितयुक्तं च तस्य सिद्ध्यर्थमीप्सिततमग्रहणमिति। वारणार्थानामित्यनेन कथितमिति "अकथितं च" ( पा० १।४।५१ ) इत्यनेनान्धादेरीप्सितेन कूपादिना युक्तस्य कर्मसंज्ञा न सिद्ध्यतीति 'ईप्सिततमम्, इत्यनेन सिद्ध्यतीत्यर्थः। यत्पुनरनीप्सितमात्रमपादानादिसंज्ञाभिरकथितं तस्याकथितसूत्रेण गवादेः कर्मसंज्ञेति भाष्येऽभिहितम्—

"ईप्सितमेव तु यत् स्यात् तस्य भविष्यत्यकथितेन" इति ॥ ७५ ॥

---

वध्यक्षतत्वात्। तथा च ईप्सितसामान्यस्य कर्मसंज्ञायां चिकीर्षितायाम् "वारणार्थानामीप्सितः" ( पा० १।४।२७ ) इत्यत्र 'यवेभ्यो गां वारयति, कूपादन्धं वारयति, अग्नेर्माणवकं वारयति' इत्युदाहरणं न स्यात्, यवादेरपि कर्मसंज्ञाप्रसङ्गात्। प्रवृत्तिविघातरूपायां वारणक्रियायामन्तर्भूतया प्रवृत्तिरूपया क्रियया यवादेरपि आप्तुमिष्यमाणत्वात्। ततश्च यवादेरपि कर्मसंज्ञाप्रसक्तौ "वारणार्थानामीप्सितः" ( पा० १।४।२७ ) इति सूत्रं निर्विषयं स्यादिति कर्मापादानयोर्विषयविभागार्थं कर्मणः स्वकक्ष्यागतः = ईप्सितत्वेन स्वसजातीयगतः प्रकर्षः कर्मसंज्ञायामपेक्षणीयत्वेन सिद्धान्तितः। तथा च वार्त्तिकम्—"वारणार्थानां कर्मानर्थक्यम्, कर्त्तुरीप्सिततमं कर्मेति वचनात्" ( भा० वा० १।४।२३ ) इति।

अस्यार्थः—वारणार्थानां धातूनां कर्मणो गवान्धादेरपादानसंज्ञावारणार्थं कर्मसंज्ञावचनस्यानर्थक्यम्, कर्त्तुरीप्सिततमं कर्मेति वचनात्। ईप्सितस्य हि अपादानसंज्ञा, ईप्सिततमस्य तु कर्मसंज्ञेति विषयविभागेन उभयोः सूत्रयोः सार्थक्यादिति। एतद् वार्त्तिकार्थभूतं भाष्यमपि—"यत्तु कथितं पुरस्तादीप्सितयुक्तञ्च तस्य सिद्ध्यर्थमीप्सिततमग्रहणम्" इति। वारणार्थानामीप्सित इत्यनेनापादानसंज्ञायाः संज्ञित्वेन कथितमन्धादिकमिति "अकथितञ्च" ( पा० १।४।५१ ) इत्यनेन तस्य ईप्सितेन कूपादिना युक्तस्य कर्मसंज्ञा न सिद्ध्यतीति वारणार्थानामित्यस्य विषयविभागेन वारणार्थेन 'ईप्सिततमम्' इत्यनेन तस्य कर्मसंज्ञा सिद्ध्यतीत्यर्थः। कूपादिकमन्धादेरीप्सितमिति तस्य वारणार्थानामिति अपादानसंज्ञा। यत्पुनर्गवादिकमनीप्सितमात्रम् =अनीप्सितसामान्यम्, कर्त्तुः कर्मणो वा कस्यापि नेप्सितं तत्त्वादेवापादानादिसंज्ञाभिरकथितं तस्य गवादेरकथितसूत्रेण कर्मसंज्ञेति भाष्येऽभिहितम्—

"ईप्सितमेव तु यत् स्यात् तस्य भविष्यत्यकथितेन" इति।

यत् पुनरेतदुक्तं दुह्यादीनां णिजन्तवत् सिद्धं पूर्वेण कर्मत्वमिति तत्राप्याह—

णिजन्ते च यथा कर्ता सक्रियः सन् प्रयुज्यते ।
नयत्यादौ तथा कर्ता निष्क्रियोऽपि प्रयुज्यते ।। ७६ ।।

'गमयति ग्रामं देवदत्तम्' इत्यादौ णिजन्ते प्रकृतिप्रत्ययवाच्ये द्वे क्रिये भिन्ने प्रतीयेते इति तदपेक्षं द्वयोः कर्मत्वं युज्यते । 'गां दोग्धि पयः' इत्यादौ तु प्रकृतिवाच्यैकैव क्रियेति कथं कर्मद्वययोगः ? न चाप्यन्तर्भूतणिजर्थत्वेन तदुपपत्तिः,

---

अस्यार्थः—यत्तु कूपादिकमन्धादेरीप्सितमेव स्यान्न त्वनीप्सितं तस्यापादानसंज्ञा भविष्यति, यत्तु गवादिकं न कस्यापि ईप्सितं तत्त्वादेवापादानादिसंज्ञाभिरकथितम्, तत्राकथितेन=अकथितसूत्रेण कर्मसंज्ञा भविष्यतीति विषयविभाग इति ।

अयञ्च प्रकृतविषयकस्य अकथितकर्मापादानसंज्ञयोर्विषयविभाजकस्य भाष्यपद्यस्य आकार ऊह्यः ।

यत्तु कथितं पुरस्ताद् ईप्सितयुक्तञ्च तस्य सिद्धयर्थम् ।
ईप्सितमेव तु यत् स्यात् तस्य भविष्यत्यकथितेन ।। इति ।। ७५ ।।

यत् पुनरेतदुक्तम्—'दुह्यादीनां णिजन्तवत् सिद्धं पूर्वेण कर्मत्वम्' इति, तत्रापि स्वमते वैषम्यमाह—णिजन्ते चेति ।

अस्यार्थः—यथा च=यथैव, णिजन्ते गमयतीत्यादौ, प्रयोज्यकर्ता सक्रियः सन् सक्रिय एव प्रयोजककर्त्रा प्रयुज्यते प्रेर्यते । तथा नयत्यादौ निष्क्रियोऽपि प्रयोज्यकर्ता प्रयोजककर्त्रा प्रयुज्यते । अत्र णिजन्तनयत्यादिकर्त्रोः प्रयुज्यमानत्वमात्रेण साम्यम्, न तु सक्रियत्वेनापीत्यवधेयम् । सक्रियत्वनिष्क्रियत्वाभ्यां तु तयोर्वैषम्यमेव ।

अयं तु निष्कर्षः—णिजन्ते प्रकृतिवाच्या एका क्रिया, णिजन्तवाच्या तु अपरा क्रिया, धातुद्वयेन क्रियाद्वयस्य वाच्यत्वात् । एवं णिजन्ते सक्रिय एव प्रयोज्यकर्ता प्रयुज्यते । दुह्यादौ तु एक एव धातुरिति तद्वाच्या क्रिया एकैव इति तयाऽऽप्यमानत्वं यद्यपि गोपयसोर्द्वयोरपि, तथापि ईप्सिततमत्वं तु पयस एवेति तस्य पूर्वसूत्रेण कर्मसंज्ञा सिद्धयति । गवादेस्तु नाप्यमानत्वातिशययोग इति पूर्वसूत्रेणाप्राप्ता तस्य कर्मसंज्ञा अकथितञ्चेत्यनेन विधीयत इति ।

अयं भावः—'गमयति ग्रामं देवदत्तम्' इत्यादौ णिजन्ते णिचः प्रकृत्या णिचा च प्रत्ययेन वाच्ये द्वे क्रिये भिन्ने प्रतीयेत इति क्रियाद्वयापेक्षं ग्रामदेवदत्तयोर्द्वयोः कर्मत्वं सम्भवति पूर्वसूत्रेणैवेति । 'गां दोग्धि पयः' इत्यादौ तु तिङ्प्रकृतिवाच्या एकैव क्रियेति न तामादाय धातोः कर्मद्वययोगः सम्भवति । न चान्तर्भूतणिजर्थत्वेन कर्मद्वययोगोपपत्तिः । तथा हि–दोग्धि इत्यस्य क्षरन्तीं गां दोग्धा क्षारयति इत्यर्थः, णिजर्थ-

णिजर्थस्यात्राप्रयोगात्। प्रैषो हि णिजर्थः। स च प्रवृत्तक्रियस्य सव्यापारस्य कर्त्तुरुपपद्यते। तथा हि तस्य स्वतन्त्रस्य प्रयोजको यो हेतुः, तद्व्यापारे णिजुक्तः। अत एवाप्रवृत्तक्रियाणां करणादीनां प्रयोजकस्य स्वतन्त्रस्य कर्त्तुर्हेतुसंज्ञा न भवति।

तदेवं गवादेर्निष्क्रियत्वान्न तद्व्यापारेणाप्यमानत्वात् पय-आदेः कर्मता; अपि तु दोहेन देवदत्तव्यापारेणैव गोपयसोर्द्वयोरपि आप्यमानत्वमित्यतिशययोगात् पय-आदेरेव पूर्वेण कर्मत्वम्, गवादेस्त्वकथितमित्यनेनारभ्यते ॥ ७६ ॥

ननु यथा गच्छन्तं संप्रयुङ्क्ते गमयतीति प्रयोगः, तथा 'क्षरन्ती क्षारयति दोग्धा' इत्यर्थ इत्याशङ्क्याह—

भेदवाक्यं तु यत् ण्यन्ते नीदुहिप्रकृतौ च यत्।
शब्दान्तरत्वान्नैवास्ति संस्पर्शस्तस्य धातुना ॥ ७७ ॥

'गच्छन्तं प्रयुङ्क्ते' इत्यादिना गमयतीत्यादौ ण्यन्ते प्रकृतिप्रत्ययार्थयोर्विभाग-प्रदर्शनाय यद् वाक्यम्, ग्रामं प्राप्नुवतीमजां प्रयुङ्क्ते, क्षरन्ती गां प्रयुङ्क्ते

---

स्यात्र सम्भवाभावात्। तथा हि —प्रैषो हि=प्रेरणा हि णिजर्थः। स च प्रवृत्तक्रियस्य सव्यापारस्य प्रयोज्यकर्तुः प्रेरणारूप उपपद्यते। तथा हि–तस्य स्वव्यापारे स्वतन्त्रस्य प्रयोजको यो हेतुस्तद्व्यापारेऽभिधेये णिजुक्तः। अत एव कर्तृप्रैषात् प्राग् अप्रवृत्त-क्रियाणां करणादीनां प्रयोजकस्य स्वतन्त्रस्य कर्त्तुर्हेतुसंज्ञा न भवति। तदेवं दोग्धृ-व्यापारात्प्राग् गवादेर्निष्क्रियत्वाद् न तद्व्यापारेणाप्यमानत्वमादाय पय-आदेः कर्म-संज्ञा सिध्यति; अपि तु दोहनक्रियारूपेण देवदत्तव्यापारेणैव गोपयसोर्द्वयोरपि 'आप्यमानत्वम्' इति तदतिशययोगात् पय-आदेरेव "कर्त्तुरीप्सिततमम्" इति सूत्रेण कर्मत्वम्, गवादेरीप्सितमात्रस्य स्वप्रधानकर्मणः अकथितमित्यनेन कर्मसंज्ञाऽऽरभ्यत इति ॥७६॥

ननु यथा 'गच्छन्तं प्रेरयति गमयति' इति प्रयोगः, तथा 'दोग्धि' इत्यस्य 'क्षरन्तीं गां क्षारयति दोग्धा' इत्यर्थ इति गोः पूर्वसूत्रेणैव कर्मणि सिद्धिरित्या-शङ्क्याह —भेदवाक्यमिति।

अस्यार्थः—यत्तु ण्यन्ते ण्यर्थप्रकृत्यर्थयोर्भेदवाक्यभेदाय=प्रकृत्यर्थप्रत्ययार्थयोर्वि-भागप्रदर्शनाय यच्च नीदुहिप्रकृतौ व्याख्येयायां भेदवाक्यम्=प्रकृत्यर्थयोरेव द्वयोः क्रिययोर्भेदप्रदर्शकं वाक्यम्, तस्य सर्वस्य नीदुह्यादिधात्वपेक्षया ण्यन्तापेक्षया च शब्दान्तरत्वात्=भिन्नशब्दत्वात्, धातुना संस्पर्शो नास्ति=धातुना सह एकार्थवाच-कत्वरूपः सम्बन्धो नास्ति। प्रत्यर्थं शब्दाभिनिवेश इति न्यायेन पर्यायत्वाभावे शब्द-भेदेऽर्थभेदस्यावश्यकत्वादिति।

अयं भावः—'गमयति' इत्यादौ ण्यन्ते प्रकृत्यर्थप्रत्ययार्थयोर्विभागप्रदर्शनाय 'गच्छन्तं प्रेरयति' इत्यादिकं यद् वाक्यम्, 'ग्रामं प्राप्नुवतीमजां प्रेरयति, क्षरन्ती गां

इत्यादि च नयति दोग्धि इत्यादौ प्रकृतिविषये प्रकृत्यर्थप्रदर्शकं वाक्यं तत् सर्वं गमयतीत्यादेर्ण्यन्तात्, नयति दोग्धि इत्यादेश्च प्रयोगाच्छब्दान्तरं भिन्नार्थमेव। न ह्येषोऽत्र धात्वर्थः परमार्थतः, अदूरविप्रकर्षेणार्थमात्रकथनमेतत्। यथा राजपुरुषादौ राज्ञः पुरुष इत्यादि। तथा हि गच्छन्तं प्रयुङ्क्त इत्यादौ वाक्ये प्रयोज्यकर्त्तृनिदर्शनं गमयतीत्यादौ ण्यन्ते प्रयोज्यक्रियामात्रं प्रतीयते। प्रयोज्यस्तु स्वशब्दोपादानो देवदत्तमिति। यत्र चैतद् भेदवाक्यं विदूरं ण्यन्ते, तत्र नयत्यादीनां सुतरां विदूरता। न ह्यत्र वाक्यार्थो धातूपादानः कश्चित्। अतस्तस्य वाक्यार्थस्य वा दुहादिधातुना नास्ति सम्बन्धः। तस्मान्नात्र ण्यर्थान्तर्भाव इति क्रियाद्वयाश्रयेणापि कर्मविशेषसमर्थनमसमीचीनम्। तदेवमेकैवेयं विलक्षणा कर्मद्वयविषया क्रियेति—

सर्वं चाकथितं कर्म भिन्नकक्ष्यं प्रतीयते।
धात्वर्थोद्देशभेदेन तन्नेप्सिततमं किल॥

इत्येष पक्षोऽवस्थापितः।

---

प्रेरयति' इत्यादिकं च नयति दोग्धि इत्यादौ प्रकृतिविषये प्रकृत्यर्थप्रदर्शकं यद्वाक्यम्, तत्सर्वं गमयतीत्यादेर्ण्यन्ताद् 'नयति, दोग्धि' इत्यादेश्चाण्यन्तधातुप्रयोगाच्छब्दान्तरत्वाद् भिन्नार्थमेव। न हि 'ग्रामं प्राप्नुवतीमजां प्रयुङ्क्ते', क्षरन्तीं गां प्रयुङ्क्ते' इत्यादिको वाक्यार्थः परमार्थतो न दुह्यादिधात्वर्थः; किन्तु अदूरविप्रकर्षेण सामीप्येन नीदुह्यादिधात्वर्थकथनमात्रमेतत्। यथा राजपुरुषादौ 'राज्ञः पुरुषः' इत्यादि भिन्नार्थत्वेऽपि अदूरविप्रकर्षेण तदर्थबोधकम्, समासव्यासयोर्विशिष्टाविशिष्टशक्तिकत्वेन भिन्नार्थकत्वात्। तथा हि–'गच्छन्तं प्रयुङ्क्ते' इत्यादौ वाक्ये गच्छन्तमिति प्रयोज्यकर्त्तृनिदर्शनम्। निलीयदर्शनम् 'गमयति' इत्यादौ ण्यन्ते तु प्रयोज्यस्य क्रियामात्रं प्रतीयते, न तु प्रयोज्यः कर्ता। प्रयोज्यकर्ता तु स्वशब्देनोपादीयते—देवदत्तमिति। यत्र च तद् भेदवाक्यं विदूरं ण्यन्तात्, तत्र नयत्यादीनां भेदवाक्यात् सुतरां विदूरता। न ह्यत्र कश्चिद् वाक्यार्थो नीदुह्यादिधातुभिरुपादीयमानो दृश्यते, अतस्तस्य वाक्यार्थस्य वा दुहादिधातुना नास्ति सम्बन्धः। तस्मान्न नयत्यादिषु ण्यर्थान्तर्भाव इति प्राप्तिप्रापणादिरूपक्रियाद्वयाश्रयेणापि पूर्वसूत्रेणैव अकथितकर्मसमर्थनमसमीचीनमेव। तस्मादेकैवेयं विलक्षणा कथिताकथितकर्मद्वयविषयानयनदोहनादिरूपा क्रियेति। तदेवम्—

सर्वं चाकथितं कर्म भिन्नकक्ष्यं प्रतीयते।
धात्वर्थो देशभेदेन तन्नेप्सिततमं किल॥

इति प्रागुक्त एष पक्षोऽवस्थापितः।

अप्राधान्येऽपि चाकथितकर्मणोऽन्तरङ्गत्वात् प्रथमं क्रियायोगाल्लादिविधिरुक्तः। नयत्यादौ तु प्राधान्यमजादेरिति तत्रैव लादयः, ण्यन्ते तु ण्यर्थस्य प्राधान्यात् तेनाप्यमानत्वात् कर्तैव प्रधानम्, न कर्मेति तत्रैव लादयः। ततश्च—

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्।
अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्मणः॥

इति न्यायसिद्धमिदमुदाहृतम् ॥७७॥

इदानीं सिद्धान्तमुद्घाटयति —

**यथैवैकमपादानं शास्त्रे भेदेन दर्शितम्।**
**तथैकमेव कर्मापि भेदेन प्रतिपादितम्॥ ७८॥**

"ध्रुवमपाये०" (पा० १।४।२४) इत्यनेनैव सर्वत्रापादानसंज्ञा भाष्येऽपि प्रतिपादिता, भीत्रार्थादिविषयेऽपि बौद्धापायस्य भावात्। अबुधबोधनार्थं हि 'भीत्रार्थानाम्०' (पा० १।४।२५) इत्यादिना भेदेन कथनम्। तथा च वक्ष्यति—

---

यद्यपि उद्देश्यत्वलक्षणमार्थं प्राधान्यं पयस एव, गवादेस्तु अकथितकर्मणस्तत्साधनत्वेन प्रवृत्त्युद्देश्यत्वमिति अप्राधान्यम्, तथापि पयःसाधनत्वेन पूर्वमुपस्थितत्वाद् अन्तरङ्गत्वमकथितकर्मण इति प्रथमं क्रियायोगाल्लादिविधिस्तत्रैवोक्तो दुह्यादौ। नयत्यादौ तु उद्देश्यत्वलक्षणमार्थं शाब्दश्च शाब्दबोधीयमुख्यविशेष्यतावत् क्रिययाऽऽप्तुमिष्यमाणत्वलक्षणं प्राधान्यमजादेरेवेति तत्रैव लादयः, ण्यन्ते तु ण्यर्थस्य प्रैषस्य शाब्दीयः प्राधान्यात् तेनाप्यमानत्वात् प्रयोज्यकर्तैव प्रधानम्, न कर्मेति तत्रैव लादयः। ततश्च—

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्।
अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्मणः॥

इति पद्यं न्यायसिद्धमेवोदाहृतं भाष्यकृता, न त्वपूर्वमित्यवधेयमिति ॥७७॥

तदेवं सर्वं कर्म ईप्सिततममित्येकः पक्षः, अकथितं कर्म भिन्नकक्ष्यमित्यपरः पक्षः। अत्र पक्षद्वये इदानीं सिद्धान्तमुद्घाटयति—यथैवैकमिति।

अस्यार्थः यथैकमेवापादानम् "ध्रुवमपायेऽपादानम्" (पा० १।४।२४) इति, भीत्रार्थादिविषयेऽपि बौद्धापायस्य सत्त्वात्; किन्त्वबुधबोधनार्थं भेदेन नानासूत्रैर्दर्शितम्। तथा कर्माप्येकमेवेप्सिततमम्, अबुधानां प्रतिपत्तिसौकर्यार्थं कथिताकथितादिभेदेन प्रतिपादितमिति।

अयं भावः—"ध्रुवमपायेऽपादानम्" (पा० १।४।२४) इत्यनेनैव भीत्रार्थादिविषयेऽपि अपादानसंज्ञा भाष्येऽपि प्रतिपादिता। तत्राऽपि बुद्ध्या परिकल्पितस्य यत् किञ्चिद् ध्रुवावधिकस्य विश्लेषस्य भावात्। "भीत्रार्थानां भयहेतुः" (पा०१।४।२५)

निर्धारणेऽविभक्ते यो भीत्रार्थानां च यो विधिः ।
उपात्तापेक्षितापायः सोऽबुधप्रतिपत्तये ।। इति ।
( वा० ३, सा० १४७ )

एवं कर्मापीप्सिततममेकमेव, कर्तुः क्रिययाप्यमानत्वस्य सर्वत्र भावात् । मन्दबुद्धयनुग्रहाय तूत्तरसूत्रप्रपञ्च इति कारिकार्थः ।

यद्यपि च पयःप्रभृत्यर्थं गवादेरुपादानम्, तथाप्यस्त्येव धात्वर्थेन तस्याप्यमानत्वम् । तद्यथा तण्डुलानोदनं पचतीति । अत्र तण्डुलानां विक्लित्तिविशिष्टा हि विक्लेदना पचेरर्थः । तत्र विक्लित्त्याख्यगुणद्वारेण तण्डुला अपि कर्म विक्लेदनस्य, साक्षात् त्वोदनम् । तण्डुलान् विक्लेदयन्नोदनं निर्वर्तयतीत्यर्थः ।

---

इत्यादिकस्तु "ध्रुवमपायेऽपादानम्" ( पा० १।४।२४ ) इत्यस्यैवाबुधबोधनार्थं प्रपञ्चः । तथा च वक्ष्यति—

निर्धारणेऽविभक्ते यो भीत्रार्थानां च यो विधिः ।
उपात्तापेक्षितापायः सोऽबुधप्रतिपत्तये ।। इति ।

अस्यार्थः—"यतश्च निर्धारणे" ( पा० २।३।४१ ) इत्यनेन निर्धारणेऽविभक्ते विभागाभाववति योऽपादानसंज्ञाविधिः, यश्च भीत्रार्थानां विषयेऽपादानसंज्ञाविधिः, स उपात्तापेक्षितापायः=उपात्तो बुद्ध्या गृहीतः परिकल्पितः अपादानसंज्ञार्थमपेक्षितोऽपायो यत्र स तथाभूतः । एवं निर्धारणादिविषयेऽपि "ध्रुवमपायेऽपादानम्" इत्यनेनैवापादानसंज्ञासिद्धावपि यः "यतश्च निर्धारणम्", "भीत्रार्थानां भयहेतुः" इत्यादिनाऽपादानसंज्ञाविधिः, सोऽबुधानां प्रतिपत्तये तस्यैव प्रपञ्चरूप इति ।

एवं कर्मापि ईप्सितमेकमेव, कर्त्तुः क्रिययाऽऽप्यमानत्वस्य सर्वत्र कथितेऽकथिते च सत्त्वात्, तमब्ग्रहणस्य च भाष्ये प्रत्याख्यानात् । मन्दबुद्ध्यनुग्रहाय तु अकथितञ्चेत्यादिक उत्तरयोगप्रपञ्च इति कारिकार्थः ।

यद्यपि च पयःप्रभृत्यर्थं दुहधात्वर्थरूपायां क्षरणक्रियायां कर्तृतया गवादेरुपादानमिति पय आदेरेव दुहधात्वर्थक्रिययाऽऽप्यमानत्वम्, न तु गवादेः, तथाऽपि अस्त्येव क्षारणरूपेण दुहधात्वर्थेन गवादेरपि आप्यमानत्वम्, दुहधातोर्क्षरणक्षारणोभयार्थकत्वात् । तद्यथा 'तण्डुलानोदनं पचति' इत्यत्र पचधातोद्वर्यर्थकत्वम् । अत्र तण्डुलानां प्रयोजकत्वसम्बन्धेन विक्लित्तिविशिष्टा हि विक्लेदना पचेरर्थः । ओदनस्य तु तेनैव सम्बन्धेन निर्वृत्तिविशिष्टा निर्वर्तनाऽपि तद्धात्वर्थः । तत्र विक्लेदनक्रियायां गुणभूतविक्लित्याख्यफलद्वारेण तण्डुला अपि कर्म विक्लेदनस्य, साक्षात् त्वोदनं निर्वर्तनस्य । तदेवं तण्डुलान् विक्लेदयन् ओदनं निर्वर्तयतीत्यर्थः ।

इत्थं च गुणप्रधानभूतैकधातुवाच्यक्रियाभेदाश्रयेणात्र यथा कर्मभेदः, तथा क्षरणोपसजनक्षारणार्थतायां दुहेर्गोपयसी सममेव कर्मभावमनुभवतः। तथा च ण्यर्थान्तर्भावोऽपि युक्तः। ण्यन्तेऽपि प्रकृत्यर्थविशिष्टस्य प्रत्ययार्थस्य प्राधान्यान्निष्क्रियत्वं स्वतन्त्रस्य। न ह्यत्र णिच् क्रियते. येन –

"सक्रियस्य ( अक्रियस्य ) प्रयोगस्तु यदा स विषयो णिचः" इति न्यायोऽनुवर्ण्येत। धातुवाच्यस्तु ण्यर्थः। तद्यथा साधयतीति ण्यर्थः पचतिवाच्यः. भेदवाक्यं तु भवत्यदूरविप्रकृष्टं भिन्नार्थमत्यन्तविशेषापेक्षया। सामान्यापेक्षया त्वेकार्थमेव, राजपुरुषवृत्तिवाक्यवत्। तथा च प्रतीयत एवैतद्वाक्यार्थोऽत्र प्रयोगे।

न चापि गवादीनां निष्क्रियत्वं न्याय्यम्, क्रियासमवायाभावे कारकत्वाभावात्। आरभ्यमाणेऽप्यकथितयोगे कर्मसंज्ञा न स्यात्। प्राक् प्रयोगान्नि-

---

इत्थञ्चैकधातुवाच्यगुणप्रधानभूतक्रियाद्वयाश्रयेणात्र यथा कर्मभेदः, तथा दुहेः क्षरणोपसर्जनकक्षारणार्थतायां गोपयसी उभे अपि सममेव=तुल्यमेव युगपदेव च कर्मभावमनुभवत.। तथा च=तेन प्रकारेण च दुहधातौ अण्यन्ते ण्यर्थान्तर्भावोऽपि युक्त। ण्यन्तेऽपि तस्मिन् प्रकृत्यर्थविशिष्टस्य णिचप्रत्ययार्थस्य प्राधान्येन ण्यन्तधातुवाच्यत्वाद् निष्क्रियत्वम्=क्रियारूपवाच्यार्थशून्यत्वम्। स्वतन्त्रस्य=णिच्प्रकृतिभूतस्य दुहधातोः। अत्र=अण्यन्ते केवले दुहधातौ तु नहि णिच् क्रियते।

येन—"अक्रियस्य प्रयोगस्तु यदा सविषयो णिचः" इति न्यायोऽनुवर्ण्येत। ण्यन्त एव हि णिच्प्रकृतिभूतस्य दुहेः क्रियारूपवाच्यार्थशून्यस्य प्रयोगः। अण्यन्ते तु धातुवाच्य एव ण्यर्थः। तद्यथा साधयतीति ण्यर्थः पचतिवाच्यः। भेदवाक्यं तु=पचतीत्यस्य साधयतीति विवरणवाक्यं तु अत्यन्तविशेषापेक्षायाम्, अधिश्रयणाद्यधःश्रयणान्तपच्धात्वर्थक्रियाकलापवृत्तितत्तद्धर्मविशेषापेक्षायाम् अदूरविप्रकृष्टम्=सामीप्येन स्थितम् भिन्नार्थमेव भवति, न त्वेकार्थम्। पाकत्वरूपसामान्यधर्मापेक्षायां तु एकार्थमेव, साधिधात्वर्थेऽपि पाकत्वरूपसामान्यधर्मस्य सत्त्वात्। यथा राजपुरुष इति वृत्तेर्भेदवाक्यं राज्ञः पुरुष इति राजसम्बन्धविशिष्टपुरुषरूपवृत्त्यर्थवृत्तिधर्मविशेषापेक्षायामदूरविप्रकृष्टं भिन्नार्थमेव भवति। विग्रहवाक्यस्य स्वस्वामिभावसम्बन्धेन राजविशिष्टपुरुषरूपार्थबोधकत्वात्। अराजकीयपुरुषभिन्नत्वरूपसामान्यधर्मापेक्षायां तु एकार्थमेव भवति तद्वत्। तथा च पचतीति प्रयोगे सति साधयतीत्येतद्वाक्यार्थः प्रतीयत एव।

न चापि गां दोग्धि पय इत्यादिप्रयोगे गवादेर्निष्क्रियत्वं न्याय्यम्, क्रियासम्बन्धाभावे कारकत्वासम्भवेन आरभ्यमाणोऽपि 'अकथितञ्च'(पा० १।४।५१)इति सूत्रे गवादेः कर्मसंज्ञा न स्यात्। प्राक्प्रयोगात्=गां दोग्धि पय इति प्रयोगात् पूर्वं गवादेर्निष्क्रियत्वमिति चेत्, तथा सति 'गां क्षारयति' इति ण्यन्तेऽपि प्राक् प्रयोगान्निष्क्रिय-

ष्क्रियत्वमिति चेत्, ण्यन्तेऽपि समानमेतत्। यथा च तत्र सम्भावितक्रियस्य कर्तुः प्रयोजक इति तद्व्यापारोपपत्तिः, तथात्रेति न किञ्चिदवद्यम्। तमब्ग्रहणस्य च प्रत्याख्यानादीप्साप्रकर्षानाश्रयणम्।

यत्तु तमब्ग्रहणस्योदाहरणं 'दध्ना भुञ्जीय' इति तत्र समकक्ष्यतया दध्योदनयोरीप्सितत्वे तमब्ग्रहणमकिञ्चित्करम्। संस्कारकत्वे हि दध्नस्तत्संस्कृतस्यौदनस्यैवेप्सिततमत्वमिति नास्त्येतदुदाहरणम्।

तथा च भाष्यम्—"तस्याप्योदन एवेप्सितः, न तु गुणेष्वस्यादरः" (म० भा० पा० १।४।४९)।

यदपि कर्मापादानयोर्विषयविभागप्रदर्शनार्थं तमब्ग्रहणमित्युक्तम्, तत्रापि वारणार्थानां वारयितव्यानां वारणमर्थयन्त इति वारणयोग्यानां यदीप्सितं तदपादानमित्येवं व्याख्यानाददोषः।

तथा हि वारयितव्याः प्रतिषेद्धव्या गवादयः, तेषामीप्सिता यवादय एवापादानम्। तदेवमीप्सितमेव सर्वं कर्म।

---

त्वस्य तुल्यत्वेन अत्रापि गवादेः कर्मसंज्ञाया अप्राप्तिप्रसङ्गात्। यथा च तत्र=ण्यन्ते सम्भावितक्रियस्य कर्त्तुर्गवादेः प्रयोज्यस्य प्रयोजको दोग्ध्रादिरिति तद्व्यापारोपपत्तिः=प्रयोज्यस्य गवादेर्व्यापारस्योपपत्तिः, तथाऽत्र=अण्यन्ते इति न कश्चिद्दोषः। "कर्त्तुरीप्सिततमं कर्म" (पा० १।४।४९) इत्यत्र तमब्ग्रहणस्य भाष्यकृता प्रत्याख्यानाद् ईप्साप्रकर्षानाश्रयणेन कथिताकथितयोरुभयोरपि अनेनैव कर्मसंज्ञासम्भव इति "अकथितञ्च" (पा० १।४।५१) इति सूत्रं नारम्भणीयम्।

यत्तु तमब्ग्रहणस्योदाहरणम्—'दध्ना ओदनं भुञ्जीय' इति तत्र दध्योदनयोरुभयोरपि समकक्ष्यतया ईप्सितत्वे तमब्ग्रहणमकिञ्चित्करमिति ओदनस्यैवेप्सितत्वं दध्नश्च तदानीमनीप्सितत्वं वाच्यमिति तमब्ग्रहणं तदर्थं न कर्त्तव्यम्, अन्यथासिद्धत्वात्। दध्नो हि तदानीं संस्कारकत्वेन तत्संस्कृतस्यौदनस्यैवेप्सिततमत्वमिति नास्त्येतदुदाहरणं तमब्ग्रहणस्य। तथा च भाष्यम्—"तस्याप्योदन एवेप्सितः, न तु गुणेष्वस्यादरः" इति।

अस्यार्थः—यस्तु दधिदानेन ओदनभोजने प्रवर्त्तते तस्यापि ओदन एवेप्सितः, न तु गुणेषु दध्यादिषु अस्य ओदनभोक्तुरादरः, गुणत्वादिति। यदपि कर्मापादानयोर्विषयविभागप्रदर्शनार्थं तमब्ग्रहणमित्युक्तम्, ईप्सिततमं हि कर्मसंज्ञाया विषयः, ईप्सितमात्रं तु अपादानसंज्ञाया इति, तत्रापि स्वस्य कूपादितो वारणमर्थयन्त इति व्युत्पत्त्या वारणार्थानाम्=वारयितव्यानां वारणयोग्यानामीप्सितोऽपादानमित्यर्थकरणेन न दोषः। तथा हि 'यवेभ्यो गां वारयति' इत्यत्र वारयितव्याः=प्रतिषेद्धव्याः गवादयस्तेषामीप्सिता यवादय एवापादानमिति। तदेवमीप्सितमेव सर्वं कर्म, ईप्साप्रकर्षस्य तु न तत्र प्रयोजकत्वमिति।

इत्थं च दुह्याद्युदाहरणार्थं न परिगणनमेतत्। 'नटस्य शृणोति' इत्यादौ नटादि शृणोति क्रियाया निमित्तमात्रम्, न तु तयेप्सितत्वेन विवक्ष्यत इति कर्मसंज्ञाभावः। शृणोतिक्रियायां च सव्यापारो नटः कारकमुपयोगग्रहणादपादानसंज्ञाया व्युदस्यते। न चान्या संज्ञास्य विहितेति शेषोऽयं षष्ठीविषयः। हेतुतृतीयायास्त्वयमविषयः—

अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते।
द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्॥
( वा० प० ३ सा० २४ )

इति वचनात्॥ ७८॥

ननु निर्वर्त्यादिभेदः कर्मणोऽभिहित इति कथमेकमेव कर्मेत्याशङ्क्याह—

**निर्वर्त्यो वा विकार्यो वा प्राप्यो वा साधनाश्रयः।**
**क्रियाणामेव साध्यत्वात् सिद्धरूपोऽभिधीयते॥ ७९॥**

इह साधनाश्रयः शक्त्याधारो निष्पन्नरूपो नामपदैरुच्यते। आख्यातपदैस्तु साध्यस्वभावः क्रियात्मार्थोऽभिधीयत इति क्रियाद्रव्ययोः सिद्धसाध्यस्वभावरूपं लक्षणं शब्दप्रतिपाद्येन तद्रूपेण कथ्यते। यद् भाष्यम्—

---

इत्थश्च "अकथितश्च" (पा०१।४।५१) इति सूत्रे दुह्यादिपरिगणनं न कर्त्तव्यम्, अकथितसूत्रस्य प्रागुक्तरीत्या प्रत्याख्यानात्, तदुदाहरणानां पूर्वसूत्रेणैव कर्मसंज्ञासिद्धेश्च। नटस्य शृणोति इत्यादौ नटादिकं शृणोतिक्रियाया निमित्तमात्रम्, न तु श्रवणक्रिययेप्सितत्वेन विवक्ष्यत इति तस्य कर्मसंज्ञाया अभावः। शृणोतिक्रियायाश्च सव्यापारो नटोऽवधिभूतः कारकमपि "आख्यातोपयोगे" (पा० १।४।२९) इति सूत्रे उपयोगग्रहणादपादानसंज्ञातो निरस्यते। न चैतदतिरिक्ता संज्ञाऽस्य विहितेति अयं शेषषष्ठीविषयः। हेतुतृतीयायास्तु नात्र प्राप्तिः।

अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते।
द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्॥

इति वचनात्। तथा च निर्व्यापारं निमित्तं हेतुः, सव्यापारं तु तत्कारकमिति नटस्य हेतुत्वाभावः सिद्ध इति॥ ७८॥

ननु निर्वर्त्यादिभेदैर्बहुधा भिन्नं कर्म तत्कथमेकमेव कर्मोच्यत इत्याशङ्क्याह—निर्वर्त्यो वा इति।

अस्यार्थः—यत आख्यातप्रतिपाद्यानां क्रियाणामेव साध्यत्वं वस्तुस्वाभाव्यात्, न तु नामाख्यातानाम्। अतो निर्वर्त्यो वा विकार्यो वा प्राप्यो वा ईप्सिततमः कर्मरूपो भावः, अन्यो वाऽनीप्सितः सः, साधनाश्रयः = कर्मत्वशक्त्याश्रयः सिद्धरूपो नियमेन निष्पन्नरूपः क्रियासाकाङ्क्ष्यो नामपदैरविलक्षण एवाधीयत इति नास्ति कर्मणः स्वरूपभेद इति।

"क्रिया चैव हि भाव्यते, स्वभावसिद्धं द्रव्यम्"(म०भा०पा० १।३।१) इति।

तथा च 'कटं करोति, तण्डुलानोदनं पचति, सूर्यं पश्यति' इति नामपदैः कर्म शक्त्याधारमविलक्षणं सिद्धतया प्रत्याय्यत इति नास्ति तस्य स्वरूपभेदः स्वगतः।

क्रियार्थत्वाच्च वस्तुतः साधनानां क्रियाधर्मेण व्यपदेशः। निर्वृत्तिविपरिणतिप्राप्तिलक्षणा हि क्रियाः स्वसामर्थ्यायत्तमुपकारं कर्मणि दर्शयन्त्यो विभिन्नव्यपदेशनिमित्ततामासादयन्ति।

एवं च कृत्वा शाब्देन रूपेण सिद्धत्वात् कर्मणः साधनभावोऽप्युपपद्यते। क्रियाविशेषावेशितव्यपदेशभेदानाश्रये तु क्रियाविषयकारकनिमित्ततयेप्सितमित्येव सामान्याख्यया सर्वं कर्म कथ्यत इति सिद्धम् ॥ ७९ ॥

गतमदः। इह कथमीप्सितत्वम्, 'विषं भक्षयति', 'चोरान् पश्यति' इत्याशङ्क्याह—

---

अयं भावः—इह शाब्दे व्यवहारे साधनाश्रयः=तत्तत्कारकशक्त्याधारः सिद्धरूपो निष्पन्नरूपो भावः कर्मादिनामपदैरुच्यते। अत एव शक्तिरूपेण उत्पत्तितः पूर्वमपि घटादीनां विद्यमानत्वात् करोत्यादिक्रियासु साधनत्वमुपपद्यते। आख्यातपदैस्तु साध्यस्वभावः क्रियारूपोऽर्थोऽभिधीयत इति क्रियाद्रव्ययोर्यथायथं सिद्धसाध्यस्वभावरूपं लक्षणम्=असाधारणो धर्मो नामाख्याताभ्यां प्रतिपाद्येन तत्तद्रूपेण कथ्यते। तथा च भाष्यम्—'क्रिया चैव हि भाव्यते, स्वभावसिद्धं द्रव्यम्" इति। अत्र भाव्यत इत्यस्य साध्यत इत्यर्थः। तथा च 'कटं करोति, तण्डुलानोदनं पचति, सूर्यं पश्यति' इत्यत्र नामपदैः कर्मत्वाख्यशक्त्याधारमविलक्षणं कर्म सिद्धतया प्रत्याय्यत इति नास्ति तस्य=कर्मणः स्वरूपभेदः स्वगतः।

वस्तुतस्तु कर्मरूपाणां साधनानां क्रियार्थत्वात् क्रियारूपेण धर्मेण निर्वर्त्यत्वादिना तेषां भेदेन व्यपदेशः। निर्वृत्तिविपरिणतिप्राप्तिरूपा हि क्रियाः स्वसामर्थ्यानुसारमुपकारं कर्मसाध्यार्थक्रियासामर्थ्यरूपं कर्मणि दर्शयन्त्यो निर्वर्त्यविकार्यप्राप्यरूपविभिन्नव्यपदेशत्रयनिमित्ततामासादयन्ति।

एवञ्च कृत्वा शाब्देन=द्वितीयादिविभक्तिप्रतिपाद्येन कर्मत्वशक्तिरूपेण घटादिकर्मणः क्रियायाः पूर्वमपि सिद्धत्वात् साध्यरूपायाः क्रियायाः साधनभावोऽप्युपपद्यते। क्रियाविशेषावेशितव्यपदेशभेदानाश्रये तु=निर्वृत्त्यादिक्रियाविशेषप्रयुक्तनिर्वर्त्यादिव्यपदेशविशेषानाश्रये तु क्रियाविषयकारकनिमित्ततयेप्सितम्=स्वकर्मकक्रियाया विषयीभूतानामितरकारकाणां फलत्वेन निमित्ततया ईप्सितम्। इत्येवं सामान्याख्यया=सामान्यशब्देन सर्वं कर्म कथिताकथितभेदभिन्नं कथ्यत इति सिद्धम् ॥ ७९ ॥

**अहितेषु यथा लौल्यात् कर्तुरिच्छोपजायते ।**
**विषादिषु भयादिभ्यस्तथैवासौ प्रवर्तते ॥ ८० ॥**

वाय्वादिधातुवैषम्यनिमित्तेषु यथाऽऽतुरस्य हितमिति भोजननियमासहिष्णोरभिलाषो भवति, तथा स्वाम्यग्रादिभयपरिपीडितस्य क्षेत्रियव्याधिदुःखार्तस्य वा परं विषभक्षणमेव ज्याय इति मन्यमानस्य भवति विष भक्षणेनेप्सितमिति "तथायुक्तं चानीप्सितम्" (पा० १।४।५०) इत्येतदपि कर्म पूर्वेणैव सिद्धम् । तदाह भाष्यकारः—'य एष मनुष्यो दुःखार्तो भवति सोऽन्यानि दुःखान्यनुनिशम्य विषभक्षणमेव ज्यायो मन्यते ।" ( म० भा० पा० १।४।५० ) इति ।

'लौल्यात्' इति । न प्रेक्षापूर्वकारिताघटिता सर्वत्रेप्सा; अपि तु प्रकारान्तरेणापि सम्भवतीत्यर्थः । भक्षणक्रियाविषयभावापत्तिरेवात्रेप्सितत्वं तथायुक्तग्रहणादेवावसीयते । सूत्रारम्भेऽपि परोपहृतं चाविज्ञातविषभावं भक्ष्यमाणमीप्सितमेव । प्रवृत्त्यनुमेया ह्रीप्सा सर्वत्र समानैव । भयादपि च पराशयानुवर्तनार्थं भक्ष्यमाण-

---

सर्वमीप्सितमेव कर्मेत्येतत्पूर्वत्र गतम् । अथाधुनेदं विचार्यते । इह कथमीप्सितत्वम्, विषं भक्षयति, चोरान् पश्यति इति, इत्याशङ्क्याह—अहितेषु यथेति ।

अस्यार्थः—यथाऽऽतुरस्य कर्तुर्भिषग्बोधितभोजननियमासहिष्णोः अहितेषु वाय्वादिधातुवैषम्यहेतुषु आमाम्रतैलगुडादिषु हितबुद्ध्या भक्षयितुमिच्छोपजायते, तथैवासौ कर्त्ता भयादिभ्यः स्वामिभयक्षेत्रियव्याधिजासह्याप्रतिकार्यदुःखादिभ्यो विषादिषु भक्षयितुमीप्सया प्रवर्तत इति विषादिकमपि तस्येप्सितं भवतीति ।

अयं भावः—यथाऽऽतुरस्य भिषक्कृतभोजननियमासहिष्णोर्वाय्वादिरूपशरीरधातुवैषम्यहेतुत्वादहितेषु आमाम्रतैलगुडादिभक्षणेषु अभिलाषो भवति, तथा स्वामिशत्रुराजादिभयपरिपीडितस्य अचिकित्स्यव्याधिदुःखार्त्तस्य वा परम्=केवलं विषभक्षणमेव जीवनाद् ज्याय इति मन्यमानस्य विषमपि भक्षणेनेप्सितं भवत्येवेति "तथायुक्तं चानीप्सितम्' ( पा० १।४।५० ) इति शास्त्रविहितमपि कर्म कर्त्तुरीप्सितमिति पूर्वसूत्रेणैव सिद्धं भवति । तदाह भाष्यकारः—"य एष मनुष्यो दुःखार्त्तो भवति सोऽन्यानि दुःखानि अनुनिशम्य विषभक्षणमेव ज्यायो मन्यते" इति । दुःखार्त्तः= अचिकित्स्यव्याधिजदुःखार्त्तः । अन्यानि दुःखानि=व्याधिपरिपीडितजीवने भावीनि दुःखानि । अनुनिशम्य=मनसाऽऽलोच्य । ज्यायः=जीवनाद् ज्याय इत्यर्थः ।

लौल्यादित्यनेन न प्रेक्षापूर्वकारिता घटिता=न प्रेक्षापूर्वकारित्वसमानाधिकरणा तत्समानकालिक्येव च सर्वत्रेप्सा; अपि तु प्रकारान्तरेणापि=भयादिनाऽपि सम्भवतीत्यर्थः सूच्यते । भक्षणक्रियाविषयभावापत्तिरेवात्र=अहिते विषादौ ईप्सितत्वम्—तथायुक्तग्रहणादेवावगम्यते । तथा हि—यथा ईप्सितं क्रियया युक्तं क्रियाविषयभावापन्नम्, तथाऽहितमपि क्रियायुक्तं चेत्, तदा तस्य कर्मसंज्ञा इति तथा-

मीप्सितमेव विषम्। एवं दृशिक्रियया चोरादीप्सितमेव। यदीप्सितादन्यं नैवेप्सितम्, नानीप्सितं वृक्षमूलादि, तदपि पूर्वमनभिसंहितमपि तदानीमुपसर्पणवेलाया-मीप्सितमेव, अन्यथोपसर्पणक्रियाविषयभावमेव नोपेयात्। तमब्ग्रहणं च प्रत्याख्यातमिति श्रमापनोदनार्थं ग्रामगमनेऽप्यन्तरावृक्षमूलोपसर्पणमपि संहितमिति सिद्धयतीप्सितमात्रस्य कर्मसंज्ञा पूर्वेणैव। संज्ञान्तरपूर्वकमपि कर्मेप्सितमित्येव सामान्यलक्षणेन सिद्धम्। 'ग्राममधिशेते नगरमुपतिष्ठति' इत्यादावुपसर्गसम्बन्धे सकर्मकत्वाद्धातूनां परत्वात् कर्मसंज्ञायामधिकरणं कर्म गेहं प्रविशतीत्युक्तम्।

---

युक्तमित्यस्यार्थः। सूत्रारम्भेऽपि परोपहृतम्=परोपनीतं च, अतोऽविज्ञातविषभावं भक्ष्यमाणं विषमीप्सितमेवेति पूर्वेणैव कर्मसंज्ञा सिद्धा।

यत्तु विज्ञातविषभावं भयात् परचित्तानुवर्तनार्थं भक्ष्यमाणं तदपि विषमी-प्सितमेव। सर्वत्र हि=हितेऽहिते च प्रवृत्त्याऽनुमीयमाना ईप्सा समानैव। एवं दृशि-क्रियया चोरादि ईप्सितमेव। यतस्तद्दर्शने द्रष्टा प्रवर्त्तते। ईप्सिताद् यदन्यन्नैवेप्सितं नानीप्सितं वृक्षमूलादि उदासीनं तदपि प्रागुपसर्पणादनभिसंहितमपि=अनीप्सित-मपि तदानीमुपसर्पणवेलायामीप्सितमेव। अन्यथोपसर्पणक्रियाविषयभावमेव नोपे-यात्। तमब्ग्रहणश्च "कर्त्तुरीप्सिततमम्" (पा० १।४।४९) इति सूत्रे प्रत्याख्यात-मिति ग्रामगमने ईप्सितेऽपि श्रमापनोदनार्थमन्तरा वृक्षमूलोपसर्पणमपि संहितम्= ईप्सितम् इति रीत्या सिध्यति ईप्सितमात्रस्य कर्मसंज्ञा पूर्वसूत्रेणैव। संज्ञान्तरपूर्वक-मपि कर्म ईप्सितमित्येवं रूपेण कर्मसामान्यलक्षणेनैव सिद्धम्। तथा हि—'ग्राममधि-शेते, नगरमुपतिष्ठति' इत्यादौ अधिकरणसंज्ञापूर्विका कर्मसंज्ञा। अत्र हि उपसर्ग-सम्बन्धे सत्येव धातूनां सकर्मकत्वात् परत्वात् कर्मसंज्ञायामधिकरणं कर्म गेहं प्रवि-शति इत्युक्तम्। अनुपसर्गत्वेऽधिकरणसंज्ञा भवति। 'गेहं विशति' इति, नगरे तिष्ठति इत्युक्तम्।

इदन्तु हेलाराजोक्तं न युक्तं प्रतिभाति। तथा हि धात्वर्थाधीनं विवक्षाधीनञ्च कारकम्, न तु व्यवस्थितम्, तदुक्तम्—

वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः॥ इति॥

नाप्युपसर्गसम्बन्धासम्बन्धाधीनं विशतेः कर्मकारकम्। (वा० प० ३, सा० ९२)

निविशते यदि शूकशिखा पदे सृजति सा कियतीमिव न व्यथाम्।
मृदुतनोर्वितनोतु कथं न तामवनिभृत्तु निविश्य हृदि स्थितः॥
(नै० च०)

इत्यत्रोपसर्गसम्बन्धेऽप्यकर्मकत्वेनाधिकरणसंज्ञादर्शनात्। उपसर्गसम्बन्धाभावेऽपि—

'विशति विशति वेदीमुर्वशी सेयमुर्व्याः' इत्यत्र धात्वर्थबलेन कर्मसंज्ञादर्शनात्। अतः कर्मत्वाधिकरणत्वयोर्विवक्षाधीनत्वमभ्युपेत्य 'शालायां प्रविशति, शालां

अनुपसर्गत्वेऽधिकरणसंज्ञा भवति। 'अक्षान् दीव्यति' इति विजिगीषोपसर्जनपातनवचने दीव्यतावीप्सितत्वमक्षाणाम्, क्रीडार्थत्वे तु 'अक्षैर्दीव्यति' इति करणताक्षाणामित्युभयसिद्धौ समावेशार्थं सूत्रम्—"दिवः कर्म च"(पा० १।४।४३) इति। तदुक्तं वार्तिके 'गतिदिविहेतुमत्सु च ग्रहणम्' इति।

असति समावेशार्थे सूत्रे कर्मसंज्ञाया अवकाशो 'मनसा दीव्यति' इति, 'मनसा देवः' इति कर्मण्यण्प्रत्ययः। करणसंज्ञायास्तु देवनोऽक्ष इति करणे ल्युडिति परत्वाद् द्वितीयां बाधित्वा तृतीयैव स्तात्। "मनसस्तृतीयायाः" ( पा० ६।३।४ ) इत्यलुकि करणसंज्ञाया अप्यवकाशो ( शे ) मनसा देव इत्येतदेवोदाहरणम्। सूत्रारम्भे तु चकारसहिते संज्ञाद्वयसमावेशान्यथानुपपत्त्या द्वितीयापि सिद्ध्यति। एवं क्रुधद्रुहोरप्यनुपसर्गयोः सम्प्रदानता, उपसृष्टयोस्तु परत्वात् कर्मतेत्येवं ( मेक ) जातीयमेव कर्म प्रागेव प्रतिपादितमस्माभिः पुनरपि स्मारितम् ॥ ८० ॥

---

प्रविशति' इति प्रयोगयुगं युक्तमित्यवधेयम्। कारकाणां धात्वर्थाधीनत्वादेव 'अक्षान् दीव्यति' इति विजिगीषोपसर्जननिपातनवचने=विजिगीषापूर्वकपातनार्थके दीव्यतौ अक्षाणामीप्सितत्वम्। क्रीडार्थत्वे तु अक्षैर्दीव्यति इति करणत्वमक्षाणामिति रीत्या कर्मत्वाधिकरणत्वसिद्धौ सत्यां संज्ञाद्वयसमावेशार्थं सूत्रम्—"दिवः कर्म च" (पा० १।४।४१) इति। अत्र चकारेणाधिकरणसंग्रहः। तदुक्तं वार्त्तिके —'गतिदिविहेतुमत्सु च ग्रहणम्' इति।

अस्यार्थः—'दिव कर्म च' इत्यस्य न्यूनत्वेन तत्स्थाने संज्ञाद्वयसमावेशार्थम्—गतिदिविहेतुमत्सु चेत्येवं न्यासः कर्त्तव्य इत्यर्थः। तत्र गतौ यथा—गमयति देवदत्तो यज्ञदत्तमिति यज्ञदत्तस्य कर्त्तृत्वकर्मत्वहेतुत्वरूपसंज्ञात्रयस्य सिद्धिः। दिवि तु अक्षैर्दीव्यति, अक्षान् दीव्यति इति करणत्वकर्मत्वोभयसंज्ञासिद्धिः। हेतुमत्सु यथा—पाचयति देवदत्तो यज्ञदत्तेनेत्यत्र यज्ञदत्तस्य कर्त्तृत्वहेतुत्वरूपसंज्ञाद्वयसिद्धिरिति। असति संज्ञाद्वयसमावेशार्थे प्रागुक्तसूत्रे कर्मसंज्ञाया अवकाशो मनसा दीव्यति इति मनसा देव इति कर्मण्यण्प्रत्ययः। कर्मकरणसंज्ञयोरत्र विषयभेदेन फलभेदेन च परस्परं विरोधाभावात्। तथा ह्यत्र करणसंज्ञाया विषयो मनःशब्दः केवलः, तृतीया च फलम् इति। कर्मसंज्ञायास्तु विषयो दिवधातुसमभिव्याहृतो मनःशब्दः। फलञ्चाण्प्रत्यय इति।

इदञ्च 'विशिष्टं शुद्धादतिरिच्यते' इति मतमाश्रित्य। करणसंज्ञायास्तु अवकाशो देवनोऽक्ष इति करणे ल्युडिति 'अक्षान् दीव्यति' इत्यत्र परत्वाद् द्वितीयां बाधित्वा तृतीयैव स्यात्। मनसस्तृतीयाया इत्यलुकि करणसंज्ञाया अप्यवकाशे मनसा देव इत्येतदेवोदाहरणम्। चकारसहिते "दिवः कर्म च" ( पा० १।४।४३ ) इति सूत्रारम्भे तु एतत्सूत्राभिप्रेतकर्मकरणरूपसंज्ञाद्वयसमावेशान्यथाऽनुपपत्त्या 'अक्षान् दीव्यति' इति द्वितीयाऽपि सिद्ध्यति। एवं क्रुधद्रुहोरपि उपसर्गरहितयोः

गतमेतत् । इदमिदानीं चिन्त्यते । इह कर्मद्वययोगे प्राधान्यमार्थमाश्रित्य प्रधाने लादिरुक्तः । द्वितीया तु प्रातिपदिकद्वयादप्युत्पद्यत इति तत्र गुणप्रधानभूतक्रियाद्वयविषयायामपि कर्मशक्तावेकस्या लादिनोक्तत्वेऽपरशक्त्यभिधानाय द्वितीया कस्मान्नोत्पद्यत इत्याशङ्क्याह—

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥ ८१ ॥

इहार्थानामेकवाक्योपात्तानां समन्वयो भवति । तत्र द्वयोः प्रधानयोः समत्वान् मिथोऽङ्गाङ्गिभावो नोपपद्यते, नापि द्वयोर्गुणयोः "गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात्" (मी० सू० ३।१।१२।२२) इति । गुणप्रधानभावेन तु समन्वयोपपत्तावेकवाक्यता भवतीत्याह—"प्रधानेतरयोर्यत्र" इति ॥ ८१ ॥

---

कर्मणः सम्प्रदानता क्रुधद्रुहोरनुपसृष्टयोः कर्मेति सूत्रेण, उपसृष्टयोस्तु कारकस्य परत्वात् सम्प्रदानत्वं बाधित्वा कर्मता इत्येवमेकजातीयमेव कर्म प्रागेव सिद्धान्तितमस्माभिरत्र पुनरपि स्मारितमिति ॥ ८० ॥

सर्वं कर्मैकजातीयमेवेत्येतत्पूर्वत्र सिद्धान्तितम् । अथेदानीमिदं चिन्त्यते 'इह पक्त्वा ओदनो भुज्यते, ओदनो भोक्तुं पच्यते' इत्यादौ एकस्य द्रव्यस्य क्रियाद्वयनिरूपितकर्मत्वशक्तिद्वययोगे यथायथं शाब्दमार्थंञ्च क्रियागतं प्राधान्यमाश्रित्य प्रधाने कर्मणि लादिरुक्तः । द्वितीया तु ओदनं पक्त्वा 'ओदनं भुङ्क्ते' इत्यादौ प्रातिपदिकद्वयादप्युत्पद्यत इति तत्र गुणप्रधानभूतक्रियाद्वयविषयेऽपि एकद्रव्यगते कर्मत्वशक्तिद्वये प्रधानीभूतैकक्रियानिरूपिताया एकस्याः शक्तेर्लादिनोक्तत्वेऽपि गुणीभूतापरपरक्रियानिरूपितापरशक्तेरभिधानाय द्वितीया कस्मान्नोत्पद्यत इत्याशङ्क्याह—प्रधानेतरयोरिति ।

अस्यार्थः—यत्र यस्मिन् वाक्ये प्रधानेतरयोः प्रधानाप्रधानयोः क्रिययोः सम्बन्धिनी द्रव्यस्य पृथक् शक्तिरस्ति, तत्र गुणाश्रया शक्तिः=अप्रधानक्रियानिरूपिता कर्मत्वादिशक्तिः प्रधानम्=प्रधानशक्तिमनुरुध्यते । तेन प्रधानक्रियानिरूपितशक्तेरभिधानानभिधानाभ्यां गुणशक्तेरभिधानानभिधान इति निष्कर्षः ।

अयं भावः—इह धात्वर्थनामार्थानामेकवाक्योपात्तानां परस्परं समन्वयो भवति । तत्र द्वयोः प्रधानयोः समत्वाद् मिथोऽङ्गाङ्गिभावरूपः सम्बन्धो न सम्भवति । नापि द्वयोर्गुणयोरर्थयोः समन्वयः परस्परं सम्भवति । 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्' इति न्यायात् । गुणप्रधानभावेन तु—तयोः परस्परं समन्वयोपपत्त्या एकवाक्यता भवति इत्याह —प्रधानेतरयोर्यत्रेति ॥८१॥

तत्र प्रधानानुयायित्वाद् गुणानां प्रधानक्रियाविषयकर्मशक्त्यभिधाने द्रव्यस्य गुणक्रियाविषयोऽप्यभिहितवत् प्रकाशत इति प्रधानानुरोधं सामान्येनोक्तं व्याख्यातुमाह—

**प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।**
**यदा गुणे तदा तद्वदनुक्तापि प्रकाशते ।। ८२ ।।**

प्रधानक्रियावाचिनो धातोरुत्पन्नेन प्रत्ययेन लादिना यदा प्रधानक्रियाविषया कर्मशक्तिः प्रत्याय्यते, तदा गुणक्रियाविषयापि साक्षाद् अनुक्तापि तद्वत् प्रकाशत इतीयमनुवृत्तिर्व्याख्याता ।। ८२ ।।

अत्रोदाहरणमाह—

**पचावनुक्तं यत्कर्म क्त्वान्ते भावाभिधायिनि ।**
**भुजौ शक्त्यन्तरेऽप्युक्ते तद्वद्धर्मः प्रकाशते ।। ८३ ।।**

'पक्त्वौदनो भुज्यते' इत्युदाहरणम् । अत्र क्त्वाप्रत्ययस्य तुमर्थग्रहणानुवृत्त्या भाष्यकारमतेन भावे विधानम् । वार्त्तिककारो हि—

---

इह हि लोकेऽप्रधानाः प्रधानानुयायिनो दृश्यन्ते तत्तद्वर्गेषु । तत्र गुणानां प्रधानानुयायित्वे व्यवस्थिते प्रधानक्रियाविषयीभूतकर्मशक्तेरभिधाने गुणक्रियाविषयीभूताऽपि कर्मशक्तिरभिहितवत् प्रकाशत इति पूर्वत्र 'प्रधानेतरयोरि'त्यत्र सामान्येनोक्तं गुणानां प्रधानानुरोधं विशेषेणाख्यातुमाह - **प्रधानविषया इति ।**

अस्यार्थः— यदा प्रधानविषया =प्रधानक्रियानिरूपिता शक्तिर्लादिना प्रत्ययेनाभिधीयते, तदा गुणे गुणक्रियानिरूपिता कर्मत्वशक्तिरनुक्ताऽपि तद्वद् =अभिहितवत् प्रकाशत इति ।

अयं भावः—प्रधानक्रियावाचिनो धातोरुत्पन्नेन लादिना प्रत्ययेन यदा प्रधानक्रियानिरूपिता कर्मशक्तिरभिधीयते तदा गुणक्रियानिरूपिताऽपि साक्षादनभिहिताऽपि कर्मशक्तिरभिहितवत् प्रकाशत इतीयमेवं गुणानां प्रधानानुवृत्तिर्व्याख्याता ।।८२।।

अत्र 'पक्त्वौदनो भुज्यते' इत्युदाहरणमाह- **—पचावनुक्तमिति ।**

अस्यार्थः—भावाभिधायिनि= धात्वर्थमात्रवाचके न तु कृत्वात्कर्तृवाचके क्त्वान्ते पचौ तद्वाच्यपाकक्रियानिरूपितं यत्कर्म प्रत्ययेन भावाभिधायित्वादेवानुक्तभुजौ भुजिक्रियानिरूपिते ओदननिष्ठे कर्मत्वरूपे शक्त्यन्तरे लादिना प्रत्ययेनोक्तेऽपि सगुणक्रियानिरूपितकर्मत्वशक्तिरूपो धर्मः प्रत्ययेनानुक्तोऽपि तद्वत्= अभिहितवत् प्रकाशते ओदनः पक्त्वा स कर्मरूपो धर्मो भुज्यत इति ।

अयं भावः—अस्याः कारिकायाः 'पक्त्वौदनो भुज्यते' इत्युदाहरणम् । अत्र क्त्वाप्रत्ययस्य 'तुमर्थे सेसेनसेऽसेन्' ( पा० ३।४।९ ) इति सूत्रात् तुमर्थग्रह-

'आ च तुमुनः समानाधिकरणे' ( वा० पा० ३।४।२६ ) इति पपाठ। यथावकाशं 'शकधृषज्ञाग्लाघटरभलभ ……'( पा० ३।४।६५ ) इत्यादिसूत्र विधीयमाना आ तुमुन्प्रत्ययादनुप्रयोगधातुना समानाभिधेया णमुलादयः प्रत्यया वक्तव्या इति वार्तिकार्थः। तेन 'स्वादुंकारं भुज्यते यवागूर्देवदत्तेन' इति णमुला कर्माभिधानाद् यवागूशब्दाद् द्वितीया न भवति। देवदत्तशब्दाच्च तृतीया भवति। अन्यथा कृत्त्वात् कर्तरि णमुलुत्पत्तौ देवदत्तशब्दात् तृतीया न स्यात्। अनेनैव न्यायेन 'पक्त्वौदनो भुज्यते' इत्यत्रापि क्त्वाप्रत्ययो 'भुज्यते' इत्यनुप्रयोगधातुना समानाभिधेये कर्मण्येवोत्पद्यत इति नास्ति कस्याश्चिदपि शक्तेरनभिधानमिति वार्त्तिककारमते नेदमुच्यते।

भाष्यकारस्तु 'पक्त्वौदनं गम्यते ग्रामः' इत्यत्रानेन न्यायेन द्वितीया न स्यादिति वार्त्तिकं प्रत्याचष्टे। तुमर्थग्रहणानुवृत्त्या णमुलादीनां भावे विधानं मन्यते। तुमर्थो हि भावः। कृत्त्वात् कर्तरि सिद्धे सेक्त्वाप्रभृतीनां तुमर्थ इति वचनात् कर्तुरनपकर्षः। न चान्यस्तुमुनोऽर्थो निर्दिष्ट इत्यनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे

---

णानुवृत्त्या भाष्यकारमतेन भावे विधानमिति संचिन्त्य प्रकृतकारिकायां 'भावाभिधायिनि' इत्युक्तम्। तुमर्थो हि भावो 'भावे' ( पा० ३।३।१८ ) इत्यधिकृत्य तद्विधानात्। वार्तिककारो हि तुमर्थग्रहणानुवृत्तिमजानानः—'आ च तुमुनः समानाधिकरणे' इति वार्तिकं पपाठ। यथावकाशं 'शकधृष०' ( पा० ३।४।६५ ) इत्यादिसूत्रैर्विधीयमाना आ तुमुन्प्रत्ययात् णमुलादयः प्रत्यया अनुप्रयोगधातुना समानाभिधेया वक्तव्या इत्येतद्वार्त्तिकवाक्यार्थः। तेन 'स्वादुंकारं भुज्यते यवागूर्देवदत्तेन' इत्यत्रानुप्रयोगेण कर्माभिधाने णमुलाऽपि कर्माभिधानाद् यवागूशब्दाद् द्वितीया न भवति।

कर्त्तुरनभिधानेन च देवदत्तशब्दात् तृतीया भवति। अन्यथा = एतद्वार्त्तिकाभावे कृत्त्वात् कर्त्तरि णमुलुत्पत्तौ कर्त्तुरभिधानेन देवदत्तशब्दात् तृतीया न स्यात्। अनेनैव न्यायेन 'पक्त्वौदनो भुज्यते' इत्यत्रापि क्त्वाप्रत्ययो 'भुज्यते, इत्यनुप्रयोगधातुना समानाभिधेये कर्मण्येवोत्पद्यत इति नास्ति कस्याश्चिदपि कर्मत्वशक्तेरनभिधानमिति रीत्या वार्त्तिकमते सकलेष्टसिद्धौ तन्मते 'भावाभिधायिनि' इति पदं प्रकृतकारिकास्थं नोच्यते।

भाष्यकारस्तु—अनेन न्यायेन 'पक्त्वौदनो भुज्यते' इतिवत् 'पक्त्वौदनं गम्यते ग्रामः' इत्यत्रापि द्वितीया न स्यादित्यभिप्रेत्य प्रकृतवार्त्तिकं प्रत्याचष्टे। तुमर्थग्रहणानुवृत्त्या णमुलादीनां भावे विधानं भाष्यकारो मन्यते। तुमर्थो हि भावः। सेक्त्वाप्रभृतीनां कृत्त्वात्कर्त्तरि सिद्धे 'तुमर्थे' इति वचनात् कर्त्तुरनपकर्षः = कर्त्तरि कृदित्यस्य सेक्त्वाप्रभृतिषु अपकर्षाभावः सम्बन्धाभावः। तुमर्थश्च भाव एव, न कर्त्ता, अनिर्दिष्टार्थत्वेन स्वार्थे तद्विधानात्। न ह्यन्यत्तुमुनोऽर्थो निर्दिष्ट इत्यनिर्दिष्टार्थाः

भवन्तीति स्वस्याः प्रकृतेरर्थो भावः सिद्धः। एवं क्त्वान्ते 'पक्त्वा' इत्यस्मिन् भाववाचिनि पचिक्रियाविषयौदनस्य कर्मशक्तिरनुक्ता।

भुजिक्रियाविषयायां कर्मशक्तौ लेनाभिहितायां तथैव तद्धर्मः, तस्य प्रधानस्यैव धर्मः प्रत्यायितत्वलक्षणो यस्य (स) तद्धर्मः प्रकाशत इति द्वितीया न भवत्योदनात्।

'पक्त्वौदनं भुङ्क्ते' इत्यत्र पचिक्रियापेक्षादेव देवदत्तात् कर्तुस्तृतीयाप्यस्मान्न्यायान्न भवति। 'पक्त्वौदनं गम्यते ग्रामः' इत्यत्र तु गमिप्रत्ययेनौदनगता कर्मशक्तिर्नाभिहितेति भवति द्वितीया।

यद्यपि च साधनैकार्थसमवेतायां संख्यायां 'भुज्यत' इति विभक्तिरुत्पद्यते, तथापि पचिविषयकर्मोपाधिसंख्यानभिधानाद् भवेद् द्वितीयेति न्यायोऽयमुद्घोष्यते। एकत्वादिष्वपि हि विभक्त्यर्थेष्ववश्यं कर्मादयोऽङ्गत्वेनापेक्षणीयाः ॥ ८३ ॥

---

प्रत्ययाः स्वार्थे भवन्तीति स्वस्याः=प्रत्ययस्य स्वकीयायाः प्रकृतेरर्थो भावः सिद्धः। एवं क्त्वान्ते 'पक्त्वा' इत्यस्मिन् क्त्वाविधायकसूत्रे तुमर्थग्रहणानुवृत्त्या भाववाचिनि पचिक्रियाविषयौदनस्य कर्मशक्तिरनुक्ता। एतदग्रे श्रीहेलाराजेन यदुक्तम्—भुजिक्रियाविषयायां कर्मशक्तौ लेनाभिहितायां तथैव तद्धर्मः, तस्य=प्रधानस्यैव धर्मः प्रत्यायितत्वलक्षणो यस्य स तद्धर्मः प्रकाशत इति द्वितीया न भवत्योदनादिति।

एतत्तु न युक्तम्। 'तद्वदनुक्ताऽपि प्रकाशते' इति पूर्वकारिकोक्तरीत्या 'तद्वद् धर्मः प्रकाशते' इति पाठस्यैव युक्तत्वात्, मया च तथैव व्याख्यातत्वात्।

किञ्चास्मिन् बहुव्रीहिपाठे 'धर्मादनिच् केवलात्' (पा० ५।४।१२४) इति सूत्रप्रवृत्त्या तद्धर्मा इति स्यात्, न तु तद्धर्मं इति। 'पक्त्वौदनं भुङ्क्ते' इत्यत्र पचिक्रियापेक्षकर्तृत्वादेव देवदत्तात् कर्त्तुस्तृतीयाऽप्यस्मान्न्यायान्न भवति। प्रधानीभूतक्रियावाच्यनुप्रयोगधातुना कर्त्तुरभिधाने पचिक्रियानिरूपितकर्तृत्वस्यापि अभिहितवत् प्रतीतेः।

तदुक्तं प्राक्—'तद्वदनुक्ताऽपि प्रतीयते' इति। 'पक्त्वौदनं गम्यते ग्रामः' इत्यत्र तु गमिप्रत्ययेन=गम्धातूत्तरकर्मप्रत्ययेन ओदनगता कर्मशक्तिर्नाभिहितेति भवति द्वितीया।

यद्यपि चात्र कर्मत्वशक्तिरूपसाधनेन सहैकार्थसमवेतायां संख्यायां 'भुज्यत' इति तिङ्विभक्तिरुत्पद्यते। संख्या चैकत्वरूपा उभयगताऽपि कर्मत्वशक्तिवद् एकैवेति एकस्या अभिधाने इतराऽपि अभिहितैव, तथाऽपि आधारभेदात् कर्मत्वशक्तेः संख्यायाश्च भेदेन भुजिक्रियाविषयकर्मगतसंख्याऽभिधानेऽपि पचिक्रियाविषयकर्मोपाधि (कर्मविशेषण) संख्यानविधानात् सम्भवति ओदनपदाद् द्वितीया इति विचिन्त्य न्यायोऽयमुद्घोष्यते—'तद्वदनुक्ताऽपि प्रतीयते' इति, 'तद्वद् धर्मः प्रकाशते' इति च।

उदाहरणान्तरमाह—

**इषेश्च गमिसंस्पर्शाद् ग्रामे यो लो विधीयते ।**
**तत्रेषिणैव निर्भोगः क्रियते गतिकर्मणः ॥ ८४ ॥**

'इष्यते ग्रामो गन्तुम्' इत्युदाहरणम् । अत्रेषेरुभे कर्मणी, गमेर्ग्राम एवेति ग्रामस्येषिविषयायां कर्मशक्तावभिहितायां गमिविषयाऽपि तद्वत् प्रकाशते । तत्र गमनार्थमेषणम् । तथा च क्रियायां क्रियार्थायामुपपदे तुमुन्निति फलभूतात्र

---

एकत्वादिष्वपि हि विभक्त्यर्थेषु अवश्यं कर्मादयो विभक्त्युत्पत्तौ अङ्गत्वेन= निमित्तत्वेन अपेक्षणीया इति कर्मादीनामभिधानानभिधाने अपि विभक्त्युत्पत्तौ अवश्यं निमित्ततयाऽपेक्षणीय इति ॥ ८३ ॥

'इष्यते ग्रामो गन्तुम्' इत्यत्र फलभूता गमनक्रिया प्रधानम्, तथा चात्र प्रधानक्रियाकर्मग्राम इषिप्रत्ययेन लकारेणाभिधीयते । एवञ्च—

प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते ॥

(वा० प० ३, साधन० ६२)

इति न्यायस्यात्र व्यभिचार इत्याशङ्क्य परिहर्त्तुमिममेवोदाहरणान्तरमाह— इषेश्च गमिसंस्पर्शादिति ।

अस्यार्थः—अत्र चशब्दस्त्वर्थे । इषेस्तु=इष्धातोस्तु स गमिसंस्पर्शाद्= सकर्मकगम्धातुना सह कर्मत्वरूपात् सम्बन्धात्, ग्रामकर्मके गमनरूपे कर्मणि इष्धातोर्विधीयमानो यो लकारः स विशेषणतया ग्रामेऽपि विधीयते । तत्र गमिकर्मणः=गमनक्रियाकर्मणो ग्रामस्य निर्भोगः=अभिधानरूपं चर्वणम्, इषिणैव= इष्धातुविहितलकाररूपेण प्रत्ययेनैत्र क्रियते, इषधातुकर्मगमनक्रियाविशेषणत्वेन ग्रामस्यापि इषिकर्मत्वादिति । तथा च यद्यपि गमनक्रियाफलत्वेन प्रधानम् इत्यार्थप्राधान्यं तस्याः, तथापि आख्यातवाच्याया इषिक्रियायाः साध्यत्वविधेयत्वाभ्यां शाब्दं प्राधान्यम् । तथा च यास्कवचनम्—"भावप्रधानमाख्यातम्, सत्त्वप्रधानानि नामानि" इति । एवञ्च नात्रोदाहरणे प्रकृतन्यायस्य व्यभिचार इति ध्येयम् ।

अयं भावः—अस्याः कारिकायाः "इष्यते ग्रामो गन्तुम्" इत्युदाहरणम् । अत्रेषेरुभे कर्मणी ग्रामो गमनञ्च, सकर्मकस्यैव गमनस्य इषिकर्मत्वात् । गमेस्तु ग्राम एव कर्म इति ग्रामस्य इषिविषयायाम्=इषिनिरूपितायाम्, कर्मशक्तावभिहितायां गमनविषयाऽपि तस्य कर्मत्वशक्तिरभिहितवत् प्रकाशते । तत्रैषणं गमनार्थम् ।

तथा च गमनक्रियार्थायामिषिक्रियायामुपपदे गम्धातोरत्र तुमुन्निति फलभूताऽत्र गमनक्रियाप्रधानं नेषिरिति प्राक् प्रकृतन्यायव्यभिचारशङ्कायां

गमिक्रियाप्रधानं नेषिरिति शङ्कायामुदाहरणान्तरमिदम् । आख्यातपदवाच्ये ह्यर्थे निर्वर्त्यत्वात् प्रधानता वर्तते । 'पक्त्वा भुज्यत' इत्यत्र त्वार्थमपि प्राधान्यमस्ति । पाकस्य भोजनार्थत्वात् । 'गमिसंस्पर्शाद्' इति इषेर्द्रव्यान्तरसम्बन्धः क्रियान्तरमुखेनैव सर्वदा भवति । तदिह (न) दर्शनादिमुखेन ग्रामे इच्छा, अपि त्वेकवाक्योपात्तगमिद्वारेणेत्यर्थः । निर्भोगः चर्वणम्, आख्यानम्, इति यावत् । 'इषिणैव' इति । इषिप्रत्ययेन लकारेण कर्मणि विहितेन । तन्त्रेण हि शक्तिद्वयमप्यभिदधाति प्रत्यय इति वाक्यपदीये निर्णीतम् ॥ ८४ ॥

मतान्तरेणाप्यत्रोपपत्तिमाह—

**पक्त्वा भुज्यत इत्यत्र केषाञ्चिन्न व्यपेक्षते ।**

**ओदनं पचतिः सोऽसावनुमानात् प्रतीयते ॥ ८५ ॥**

---

सत्यामिदमुदाहरणान्तरं व्यभिचारपरिहाराय प्रकृतकारिकया विविच्यते । समाधानन्तु - आख्यातपदवाच्ये ह्यर्थे निर्वर्त्यत्वात् = साध्यत्वेन विधेयत्वाद् इषेः शाब्दी प्रधानता वर्त्तत इति । 'पक्त्वा भुज्यते' इत्यत्र भुजिक्रियायास्तु आख्यातवाच्यत्वेन शाब्दम्, फलत्वेन चार्थमिति उभयविधं प्राधान्यमस्ति । गमिसंस्पर्शाद् इति इषेर्द्रव्यान्तरसम्बन्धः क्रियान्तरमुखेनैव सर्वदा भवति । तदिह न प्रकृतवाक्यानुपात्तदर्शनादिक्रियामुखेन ग्रामे इच्छा अपि त्वेकवाक्योपात्तगमिक्रियाद्वारेणैवेत्यर्थः । निर्भोगोऽत्र चर्वणम्, आख्यानम्, अभिधानमिति यावत् । इषिणैव इति । इष्धातुविहितप्रत्ययेन लकारेण कर्मणि विहितेनेत्यर्थः । अत्र हि अर्थतन्त्रेण कर्मत्वशक्तिद्वयमपि अभिदधाति लप्रत्ययो ग्रामगतं गमनक्रियागतञ्चेति वृत्तिव्याख्यासहिते वाक्यपदीयेऽत्रैव प्रकरणे निर्णीतमिति ॥ ८४ ॥

'पक्त्वा ओदनो भुज्यते' इत्यत्र मतान्तरेणाऽपि 'प्रधानक्रियानिरूपितशक्त्यभिधाने गुणक्रियानिरूपितशक्तिरभिहितवत् प्रकाशते' इति मताऽपेक्षयाऽन्यमतेनाऽपि उपपत्तिमाह—पक्त्वा भुज्यत इत्येत्रेति ।

अस्यार्थः—केषाञ्चिन्मते पक्त्वा भुज्यते' इत्यत्र पचतिः पाकक्रिया स्वकर्मतया ओदनं न व्यपेक्षते = नाकाङ्क्षति । तत्र ओदनस्य कर्मतया सम्बन्धो न भवति इति यावत् । कथं तर्हि अत्र ओदनकर्मकस्य पाकस्य प्रतीतिरित्याशङ्क्याह—सोऽसाविति । स इति बुद्धया परामृष्टस्य ओदनस्य बुद्धया साक्षात्कृत्य असाविति प्रतिनिर्देशः अनुमानात् = अकर्मकपाकक्रियाऽनुपपत्तिरूपार्थापत्तिरूपं केवलव्यतिरेक्यनुमानात् । प्रतीयते = अनुमानरूपः पाकस्योदनसम्बन्धो न तु शाब्द इति न ओदनस्य पाकक्रियानिरूपितकर्मत्वशक्तेरभिधानानभिधानचिन्तेति ।

केषाञ्चिन्मतेऽत्र वाक्ये पचिक्रियौदनं नापेक्षते। प्रथमान्तरस्यौदनस्य पक्त्वेति सम्बन्धाभावात्। 'भुज्यते' इत्यनेनैव सम्बन्धो भवत्योदनस्येत्येकैव कर्मशक्तिः, सा चाभिहितेति क्वेदमुपतिष्ठते 'प्रधानशक्त्यभिधाने गुणक्रियाशक्तिरभिहितवत् प्रकाशते' इति।

यदि तर्हि पचिनौदनस्यासम्बन्धः पक्त्वान्यत् किञ्चिदोदनो भुज्यत इत्यर्थः स्यात्। तथा च विवक्षितमोदनपाकस्य भुज्यङ्गत्वं न प्रतीयेतेत्याशङ्क्याह— 'सोऽसावनुमानात् प्रतीयते' इति। स इति परामृष्टस्यौदनस्य बुद्ध्या साक्षात्कृतस्यासाविति प्रत्यक्षानुकारेण प्रतिनिर्देशः। साक्षात्पचिसमन्वयायोग्योऽप्योदनः सामर्थ्यात् पचेरपेक्षणीयत्वेन प्रतीयते। किं सामर्थ्यमिति चेत्, एकवाक्यत्वमिति ब्रूमः। श्रुतसम्बन्धो ह्यश्रुतसम्बन्धपरिकल्पनाल्लघुः।

एतच्च सत्येव गुणप्रधानभावे नान्यथेति पूर्वोक्त एव न्यायोऽत्राश्रयणीयः, इति पूर्वोक्तमेव दर्शनं न्याय्यम्।

अत एवारुच्यान्यमतत्वेनोपन्यासः किल। भुजिः पाकमपेक्षत इति सन्निहितेनैवाकाङ्क्षा पूरयितव्या। पाकस्य भुज्यपेक्षया पूर्वकालस्येति गुणप्रधान-

---

अयं भावः—केषाञ्चिन्मते 'पक्त्वा भुज्यते ओदनः' इति वाक्ये पचिक्रिया ओदनं नापेक्षते। प्रथमान्तपदबोध्यस्यौदनस्य पक्त्वेत्यनेन सह सम्बन्धानर्हत्वेन तत्सम्बन्धाभावात्। अतो 'भुज्यते' इत्यनेनैव सम्बन्धो भवत्योदनस्येत्येकैव कर्मशक्तिरत्र वाक्ये, सा च भुज्यत इति कर्मणि विहितेन लकारेणाभिहित इति नात्रोपतिष्ठते 'प्रधानशक्त्यभिधाने गुणक्रियानिरूपितशक्तिरभिहितवत्प्रकाशते' इति।

ननु यदि पचिना ओदनस्य नात्र सम्बन्धस्तर्हि अन्यत् किञ्चित् पक्त्वा ओदनो भुज्यत इत्यर्थः स्यात्। तथा च विवक्षितमोदनपाकस्य भुजिक्रियाऽङ्गत्वं न प्रतीयेतेत्याशङ्क्याह—सोऽसाविति। स इति तच्छब्देन परामृष्टस्यौदनस्य बुद्ध्या साक्षात्कृतस्यासाविति प्रत्यक्षानुकारेण=प्रत्यक्षमनुकृत्य प्रतिनिर्देशः=प्रतिबोधनम्, प्रथमान्तपदबोध्यत्वेन साक्षात् पचिक्रियासमन्वयायोग्योऽप्योदन एकवाक्योपात्तत्वलक्षणात् सामर्थ्यात् पचेरङ्गतयाऽपेक्षणीयत्वेन प्रतीयते। अश्रुतेन सह सम्बन्धपरिकल्पनापेक्षया श्रुतसम्बन्धस्य प्रतिपत्तिलाघवेनाभ्यर्हितत्वात्।

एतच्च=पचिना सह ओदनस्य एकवाक्यत्वरूपसामर्थ्यलभ्यः सम्बन्धश्च सत्येव पचिभुज्योर्गुणप्रधानभावे, नान्यथेति पूर्वोक्तन्यायः 'प्रधानक्रियानिरूपितशक्त्यभिधाने गुणागुणक्रियानिरूपितशक्तिरभिहितवत् प्रकाशते' इति न्यायः अत्राश्रयणीय इति पूर्वोक्तमेव दर्शनं न्याय्यम्।

अत एवारुच्या केषाञ्चिदिति अन्यमतत्वेनोपन्यासः किल। अत्र वाक्ये

भावोपपत्तावेकवाक्यतोपपत्तिः ॥ ८५ ॥

न केवलं कर्माख्यकारकविषयोऽयं न्यायः, यावत् कारकान्तरेऽपीति व्याप्त्यर्थमुदाहरणान्तरमाह—

तत्राभिनिविशौ कर्म यत्तिङन्तेऽभिधीयते ।
क्त्वान्तेऽधिकरणत्वेऽपि न तत्रेच्छन्ति सप्तमीम् ॥ ८६ ॥

'भुक्त्वा नगरोऽभिनिविश्यते' इत्यत्राभिनिविशश्चेति नगरस्याभिनिविशेराधारस्य कर्मसंज्ञायां तिङन्तेऽभिनिविश्यत इत्यत्र प्रधानभूते विषयेऽभिहिता कर्मशक्तिः। भुक्त्वेति क्त्वान्तविषयेऽधिकरणशक्तिरपि गुणत्वात् स्वकार्यं सप्तमीविभक्तिलक्षणं न प्रयुङ्क्ते । सप्तम्या ह्यत्र प्रधानक्रियाविषया कर्मशक्तिर्न प्रतीयेतेति प्रधानोपरोधो गुणेन कृतः स्यात् । न चैष न्यायः, प्रधानानुयायित्वाद् गुणानां प्रधानविरोधिनि स्वकार्ये उदासत एव । प्राधान्यं च सर्वत्र तिङन्तार्थस्य

---

भुजिरङ्गतया पाकमपेक्षत इति पाकस्य भुज्यपेक्षया पूर्वकालस्य कर्माकाङ्क्षा एकवाक्योपात्तत्वात् सन्निहितेन ओदनेनैव पूरयितव्येति रीत्या सकर्मकयोः पाकभुजिक्रिययोर्गुणप्रधानभावोपपत्तौ एकवाक्यतोपपत्तिरिति ॥ ८५ ॥

न केवलं कर्मकारकविषयक एवायं न्यायः; किन्तु कारकान्तरेऽपीति सर्वकारकव्याप्तिप्रदर्शनायोदाहरणान्तरमाह—तत्राभिनिविशाविति ।

अस्यार्थः—तत्र 'भुक्त्वा नगरोऽभिनिविश्यते' इत्यत्र, यत् अभिनिविशौ= अभिनिवेशक्रियायाम्, कर्म अभिनिविश्यत इति तिङन्ते तेनाभिधीयते तस्य भुक्त्वेति क्त्वान्तेऽधिकरणत्वेऽपि तत्र अधिकरणत्वप्रयुक्तां सप्तमीं नेच्छन्ति, प्रधानक्रियानिरूपितकर्मत्वशक्तेरभिधाने गुणक्रियानिरूपिताधिकरणत्वशक्तेरपि अभिहितवत् प्रकाशमानत्वात् । अत एव कर्मणि अधिकरणे च तत्र प्रथमैवेति ।

अयं भावः—'भुक्त्वा नगरोऽभिनिविश्यते' इत्यत्र 'अभिनिविशश्च' (पा०१।४।४७)इति सूत्रेण नगरस्याभिनिविशेराधारस्य अभिनिवेशक्रियाया आधारस्य कर्मसंज्ञायां तिङन्तेऽभिनिविश्यत इत्यत्र अभिनिवेशक्रियारूपे प्रधानभूते विषयेऽभिहिता कर्मशक्तिरिति भुक्त्वेति गुणभूते क्त्वान्तविषयेऽधिकरणशक्तिरपि तत्र गुणत्वात् स्वकार्यं सप्तमीविभक्तिलक्षणं न प्रयुयुङ्क्ते प्रधानक्रियानिरूपितकर्मत्वशक्तेरभिधाने गुणक्रियानिरूपिताधिकरणत्वशक्तेरपि अभिहितवत्प्रकाशमानत्वात् । अत्र गुणक्रियानिरूपिताधिकरणत्वशक्तेरनभिधानेन सप्तमी स्वीकारे हि जातया सप्तम्या प्रधानक्रियाविषया कर्मशक्तिर्न प्रतीयेतेति प्रधानोपरोधः=प्रधानविरोधः गुणेन कृतः स्यात् । न चैष न्यायः । गुणानां प्रधानानुयायित्वात् । प्रधानविरोधिनि स्वकार्ये उदासत एव उदासीना एव ते । प्राधान्यञ्च सर्वत्र वाक्यार्थभूतस्य

शाब्दव्यवहारविश्रान्तिस्थानस्य वाक्यार्थभूतस्य। अनेनैव न्यायेन 'नगरेऽभिनिविश्य भुङ्क्ते' इत्यत्र भुज्याश्रयेणाधिकरणत्वेन नगरस्याभिनिविशिकर्मत्वमपोद्यते ॥ ८६ ॥

गतमेतत्। इह कथं कर्मत्वं 'गुडं भक्षयति' इति। गुडो हि निर्वृत्तो भक्षणक्रियागतं न कञ्चन विशेषमाकाङ्क्षति इति न तथेप्सितम्; अपि तु भक्षणक्रियाया आश्रयविशेषप्रदर्शनार्थमुपादीयत इति क्रियार्थमेतद् द्रव्यम्, न तु द्रव्यसंस्कारार्था क्रिया, दन्तावचूर्णनादि न भक्षणक्रियाफलम्; अपि त्वन्नादनादिरूपाभ्यवहारलक्षणस्य भक्षणस्य प्रीतिस्तृप्तिलक्षणा फलमिति नास्ति क्रियाकृतोऽत्र कश्चनोत्पत्त्यादिविशेषः। तदुक्तं वार्तिके--

"ईप्सितस्य कर्मसंज्ञाया निर्वृत्तस्य कारकत्वे कर्मसंज्ञाऽप्रसङ्गः, क्रियेप्सितत्वात्" ( वा० पा० १।४।४९ ) इति।

---

तिङन्तार्थस्य, शाब्दव्यवहारविश्रान्तिस्थानत्वात्। अनेनैव न्यायेन = गुणानां प्रधानानुरोधित्वमेवेति न्यायेन 'नगरेऽभिनिविश्य भुङ्क्ते' इत्यत्र भुजिक्रियानिमित्तकेनाधिकरणत्वेन नगरस्याभिनिविशिकर्मत्वमपोद्यते बाध्यत इति ॥ ८६ ॥

'प्रधानक्रियानिरूपितशक्तेरभिधाने गुणक्रियानिरूपितशक्तिरभिहितवत् प्रकाशते' इति, 'प्रधानानुरोधित्वमेव गुणानाम्' इति च द्वयमपि गतम्।

अथेदानीमिदं विचार्यते। 'गुड भक्षयति' इत्यत्र गुडस्य कथं कर्मत्वमिति गुडो हि निर्वृत्तो निष्पन्न इति न भक्षणक्रियाकृतं कञ्चन विशेषमाकांक्षतीति न। तया ईप्सितम् इति न तस्य कर्मत्वप्राप्तिः, स तु भक्षणक्रियाया फलरूपाया आश्रयविशेषप्रदर्शनार्थमुपादीयत इति भक्षणक्रियार्थं गुडरूपं द्रव्यं कर्म, विना क्रियास्वरूपस्य निष्पत्त्यभावात्, न तु द्रव्यसंस्कारार्था भक्षणक्रिया इति क्रियाजन्यफलाश्रयत्वाभावाद् न गुडस्य कर्मत्वप्राप्तिः। दन्तावचूर्णनादि तु न भक्षणक्रियाफलम्, येन तद्रूपफलाश्रयत्वाद् गुडस्य कर्मत्वं प्राप्येत। दन्तावचूर्णनादिकं हि न भक्षणक्रियाजन्यम्; किन्तु संदंशनादिरूपं तद्भक्षणक्रियायां कारणम् इति न तस्याः फलम्; अपि त्वन्नादनादिरूपाभ्यवहारलक्षणस्य भक्षणस्य तृप्तिलक्षणा प्रीतिः फलमिति नास्ति भक्षणक्रियाकृतोऽपि गुडो कश्चनोत्पत्त्यादिरूपः फलविशेष ईप्सितः। तदुक्तं वार्त्तिके—"ईप्सितस्य कर्मसंज्ञाया निर्वृत्तस्य कारकत्वे कर्मसंज्ञाऽप्रसङ्गः, क्रियेप्सितत्वात्" इति।

अस्यार्थः--ईप्सितस्य क्रियया आप्तुमिष्यमाणस्य कर्मसंज्ञायां क्रियमाणायां 'गुडं भक्षयति' इत्यत्र गुडस्य निर्वृत्तस्य सिद्धस्वरूपस्य, अत एव क्रियासम्बन्धनिराकाङ्क्षस्य क्रियां प्रति कारकत्वे सति कर्मसंज्ञाया अप्रसङ्गः, क्रियाया एवात्रेप्सितत्वात्। तथा च क्रियैवात्र कर्म स्यान्न तु द्रव्यं गुड इति। अत्र वार्त्तिके निर्वृत्तस्य

निर्वृत्तस्य इति निर्वर्त्यकर्मतां प्रतिक्षिपति। उपलक्षणं चैतत्। विकाराद्यभावात् कर्मान्तरतापि नास्ति। निराकाङ्क्षस्य वेत्यर्थः। 'कारकत्वे' इति क्रियासिद्धौ निमित्तभावमाह। भक्षणक्रियानिष्पत्त्यर्थं गुडस्योपादानात्। अत एव भक्षणाय गुड इति क्रियैव सन्दर्शनादिभि—(संदंशनादिभि)राप्यमानत्वादीप्सिता कर्म, न तु द्रव्यम्। भक्षणमात्रं हि गुडस्येप्सितं न तु भक्षणप्रत्याख्यानेनान्यस्तत्कृतो विशेषः। अत्र वार्तिके परिहार उक्तः—'न वोभयेप्सितत्वात्' ( वा० पा० १।४।४९ ) इति। तत्र कथं गुडादेरीप्सितत्वमित्येतद् व्याख्यातुमाह—

यन्निर्वृत्ताश्रयं कर्म प्राप्तेरप्रचितं पुनः।
भक्ष्यादिविषयापत्त्या भिद्यमानं तदीप्सितम् ॥ ८७ ॥

---

इत्युक्त्या गुडस्य निर्वर्त्यकर्मतां प्रतिषेधति। उपलक्षणञ्चैतत् = निर्वर्त्यकर्मत्वप्रतिषेधनं गुडे भक्षणक्रियाकृतस्य विकारादिरूपस्य फलस्य कर्मत्वोपयोगिनोऽभावात् कर्मान्तरताऽपि विकार्यादिकर्मतापि नास्ति।

अथवा निर्वृत्तस्य इत्यस्य निराकाङ्क्षस्येत्यर्थः। प्रकृतवार्त्तिके कारकत्वे इत्यनेन क्रियासिद्धौ निमित्तत्वमाह — भक्षणक्रियासिद्ध्यर्थं गुडस्योपादानात्, कारकं विना क्रियाया अनिष्पत्तेः। अत एव 'भक्षणाय गुडः' इति भक्षणक्रियैवात्र संदंशनादिभिराप्यमानत्वादीप्सिता कर्म, न तु गुडरूपं द्रव्यम्। तथा चात्र 'गुडं संदंश्य तेन भक्षणं भावयति' इत्यर्थः। अत्र हि गुडस्य भक्षणमात्रमीप्सितम्, न तु भक्षणस्य ईप्सितत्वप्रत्याख्यानेनान्यो भक्षणकृतो गुडे विशेष ईप्सित इति। एवं गुडस्यात्र कर्मत्वाभावमाशङ्क्य वार्त्तिके परिहार उक्तः, 'न वोभयेप्सितत्वात्, इति।

अस्यार्थः न वा = नैवात्र गुडस्य कर्मसंज्ञाया अप्रसङ्गः, उभयस्य = गुडतद्भक्षणक्रिययोः, ईप्सितत्वादिति। तत्र कथं गुडादेरीप्सितत्वमित्येतद्विशेषेणाख्यातुमाह— **यन्निर्वृत्ताश्रयमिति।**

अस्यार्थः—अत्र हि कारिकायाः पूर्वार्द्धं पूर्वपक्षवार्त्तिकव्याख्यानभूतम्, उत्तरार्द्धन्तु उत्तरवार्तिकव्याख्यानम्। तथा हि—यत्कर्म = या कर्मत्वशक्तिः, निर्वृत्ताश्रयम्, निर्वृत्तो निष्पन्नोऽत एव निराकाङ्क्ष आश्रयो गुडादिद्रव्यं यस्य कर्मणः = कर्मत्वशक्तेः तत्तथा। अनेन वाक्येन गुडस्य भक्षणक्रियानिरूपिताया निर्वर्त्यकर्मताया निरासः। गुडे भक्षणक्रियाकृतस्य विकारस्य अनाकाङ्क्षणाच्च गुडस्य तदाश्रयत्वप्रयुक्ता विकार्यताऽपि = विकार्यकर्मताऽपि निरस्ता। गुडो भक्षणक्रियाकृतविकाररूपफलाश्रयो भवतु इतीच्छाया अभावात्। प्राप्तेरप्रचितमिति। प्राप्तिर्भक्षणक्रियाया गुडे सम्बन्धस्तस्माद्यः प्रचयो गुडे वृद्धिरूपो विशेषस्तद्रहितम्, प्रचयस्यापचयोपलक्षणत्वात् प्राप्तिप्रयुक्ताप्रचयरहितमित्यप्यर्थः। अत्र कारिकायाः पूर्वार्द्धस्यादौ यद्यपि इत्यध्याहारः। उत्तरार्द्धस्यादौ तु तथापीत्यध्याहृत्य व्याख्येयम्। कारिकायां

निर्वृत्तो निष्पन्नोऽत एव निराकाङ्क्ष आश्रयो गुडादि द्रव्यं यस्य कर्मणः कर्मशक्तेरिति निर्वर्त्यकर्मताव्युदासः। विकारानाकाङ्क्षणाच्च विकार्यतापि व्युदस्ता। 'प्राप्तेरप्रचितम्' इति। प्राप्तेर्भक्षणक्रियासम्बन्धाद् योऽपि प्रचयापचययोर्विशेषस्तेनाप्रयुक्तमप्रचितमिति प्राप्यकर्मतापि व्युदस्ता पूर्वपक्षे। आद्येन हि कारिकार्धेन पूर्वपक्षवार्तिकार्थः संगृहीतः। द्वितीयेनार्धेनोत्तरवार्त्तिकव्याख्यानम्। भक्षिभुज्यादिक्रियाविषयभावापत्त्या भिद्यमानं विशिष्यमाणं गुडादीप्सितं प्राप्यमेतत् कर्मेत्यर्थः।

तथा हि, न भक्षणादिक्रियैवात्रेप्सिता। एवं हि लोष्टमपि भक्षयित्वा कृती भवेत्। नापि गुडः क्रियान्तराश्रयत्वेनेप्सितः; अपि तु भक्षणाश्रयत्वेनेत्युभयमाश्रयाश्रयिभावेन समुदितमीप्सितम्। यस्य हि गुडभक्षणमीप्सितं तस्य

---

पुनःशब्दश्चार्थे। यत्कर्मनिर्वृत्ताश्रयं प्राप्तेरप्रचितश्च अतोऽनीप्सितं यद्यपि, तथाऽपि भक्ष्यादिविषयापत्त्या = विशेषणतया भक्षिभुज्यादिधात्वर्थक्रियाविषयत्वापत्त्या भिद्यमानम् = अनीप्सितात् केवलगुडाद् व्यावर्त्यमानं भक्षणादिक्रियाविशेषणीभूतं तद्गुडादिकं द्रव्यमीप्सितं भवति। विशिष्टस्य गुडकर्मकभक्षणस्येप्सितत्वे विशेषणस्य गुडस्यापीप्सितत्वादिति।

अयं भावः—यत्कर्म = या कर्मत्वशक्तिः, निर्वृत्ताश्रयम् = निर्वृत्तो निष्पन्नः सिद्धस्वरूपः, अत एव स्वस्मिन् क्रियाकृतविशेषस्य सिद्धत्वेन तत्साधनाय क्रियानिराकाङ्क्षः, आश्रयो गुडादि द्रव्यं यस्य कर्मणः कर्मत्वशक्तेस्तत्तथेति गुडस्य निर्वर्त्यकर्मतानिरासः। 'भक्षणक्रियाकृतविकारवान् गुडो भवतु' इति गुडे विकाराकाङ्क्षाया अभावाच्च तस्य विकार्यकर्मतायाः प्रतिक्षेपः। प्राप्तेरप्रचितमिति। प्राप्तेः गुडे भक्षणक्रियासम्बन्धाद् यो गुडे प्रचयापचयान्यतररूपो विशेषस्तद्रहितम्।

यत्तु हेलाराजेनोक्तम् 'प्राप्तेर्भक्षणक्रियासम्बन्धाद् योऽपि प्रचयापचययोर्विशेषस्तेनाप्रयुक्तम्' इति। तदेतदपेशलम्। अप्रचितमित्यतः प्रचयरहितमित्यर्थस्यैव प्रतीतेः। प्राप्तेरप्रचितमित्यनेन गुडस्य प्राप्यकर्मता निरस्ता पूर्वपक्षे। उत्तरपक्षे तु सा सिद्धान्तयिष्यते। आद्येन हि कारिकार्धेन पूर्वपक्षवार्त्तिकार्थः संगृहीतः। द्वितीयार्द्धेन तु समाधानवार्त्तिकार्थः संगृहीतः। केवलं गुडादिनिर्वृत्तत्वेनानीप्सितमपि भक्षिभुज्यादिक्रियाविशेषणत्वापत्त्या निर्वर्त्यक्रियाविशेषणत्वेन निर्वर्त्यतामापन्नमिव केवलगुडाद् भिद्यमानं = विशिष्यमाणम्, व्यावर्त्यमानम् ईप्सितं सत् प्राप्यमेतत्कर्म इत्यर्थः।

तथा हि—न केवलं भक्षणादिक्रियैवात्रेप्सिता; किन्तु तद्विशेषणतापन्नं गुडादिकमपि तथा। केवलस्य भक्षणादेरीप्सितत्वे हि लोष्टमपि भक्षयित्वा कृतार्थो भवेत्। गुडोऽपि न भक्षणक्रियाव्यतिरिक्तक्रियाश्रयत्वेनात्रेप्सितः; अपि तु भक्षणा-

गुडोऽपीप्सितः। भक्षणक्रियासम्बन्ध एव चात्र क्रियाकृतो विशेषः, प्राप्यकर्मतायां विशेषान्तरस्यानाकाङ्क्षणात्। अन्यथा निर्वर्त्यविकार्याभ्यां को विशेषः स्यात्। भक्षणस्य प्रीत्यतिशयोऽत्र फलम्। स च गुडस्य तत्सम्बन्धे सति घटत इत्ययमेव विशेषः क्रियाकृतः। स्वानुरूपफलप्रसवयोग्यता हि संस्कारः।

ननु च तृप्तिलक्षणायां प्रीतौ गुडोऽङ्गमिति कथं प्रधानकारकत्वरूपं कर्मत्वमस्य। उच्यते, तृप्त्यङ्गतायां गुडस्यायमितिकर्तव्यताविशेषो यद्भक्षिक्रियाविषयीकरणे तां प्रति प्राधान्यम्, नान्यथा तृप्तिः सम्पादयितुं शक्या। तदस्य तृप्त्यङ्गभावेऽयं प्राथमकल्पिको व्यापारः। तद्यथा गुरुः सेव्यमानो धर्मोत्पत्ताव‌ङ्गतामेति, तच्चास्य परिचरणक्रियाविषयभावगमनमन्तरेण न घटनामेतीति गुरुं शुश्रूषत इति प्राधान्योपपत्तिः।

तदेवमत्र पूर्वपक्षे द्रव्येप्सापह्नवेन क्रियामात्रस्येप्सा दर्शिता। अतस्तदानुगुण्येन परिहारे द्रव्यस्यापीप्सा प्रदर्शिता।

---

श्रयत्वेन इति गुडक्रिये उभयमपि आश्रयाश्रयिभावेनोपलक्षितं समुदितमीप्सितम्। यस्य हि गुणभक्षणमीप्सितं तस्य क्रियाविशेषणतया गुडोऽपीप्सितः, गुडे भक्षणक्रियासम्बन्ध एव च क्रियाकृतो विशेषः। प्राप्यकर्मतायां क्रियासम्बन्धातिरिक्तस्य क्रियाकृतविशेषस्यानाकाङ्क्षणात्। अन्यथा प्राप्यकर्मणो निर्वर्त्यविकार्यकर्मभ्यां को विशेषः स्यात्।

किञ्चात्र भक्षणस्य प्रीत्यतिशयः फलम्। स च गुडस्य भक्षणक्रियासम्बन्धे सत्येवोपपद्यते, नान्यथा इत्ययमेव=क्रियासम्बन्ध एव क्रियाकृतो विशेषः। स्वानुरूपफलप्रसवयोग्यता हि संस्कारः=क्रियानुरूपं यत्फलं तज्जननयोग्यता हि कर्मणि क्रियाकृतः संस्कारः, तदाश्रयत्वाच्च कर्मसंज्ञा।

ननु च तृप्तिलक्षणायां प्रीतौ गुडोऽङ्गमिति कथमुद्देश्यत्वेन प्रधानकारकत्वरूपं कर्मत्वमस्य=गुडस्य, उच्यते, गुडस्य तृप्त्यङ्गतायामयमितिकर्त्तव्यताविशेषः=प्रकारविशेषो यद् गुडस्य भक्षिक्रियया विषयीकरणे सति भक्षिक्रियां प्रति उद्देश्यत्वलक्षणमार्थंप्राधान्यम्, नान्यथा तृप्तिः सम्पादयितुं शक्या। तद् अस्य=गुडस्य तृप्त्यङ्गभावेऽयम्=भक्षिक्रियायामुद्देश्यत्वेन विषयीभावलक्षणः प्राथमकल्पिको व्यापारः। तद्यथा गुरुः सेव्यमानो धर्मोत्पत्तावङ्गतामेति, तच्चास्य=धर्मोत्पत्तौ गुरोरङ्गत्वञ्चोद्देश्यत्वेन परिचरणक्रियाविषयत्वप्राप्तिं विना नोपपद्यत इति 'गुरुं शुश्रूषते' इत्यत्र गुरौ कर्मणि परिचरणक्रियायामुद्देश्यत्वलक्षणस्यार्थंप्राधान्यस्योपपत्तिः।

तदेवमत्र='गुडं भक्षयति' इत्यत्र पूर्वपक्षे गुडेप्सापलापेन क्रियामात्रस्येप्सा दर्शिता। अतः पूर्वपक्षानुगुण्येन परिहारावसरे द्रव्यस्य गुडस्यापि ईप्सा प्रदर्शिता।

यदि तर्हि क्रियाविषयभावमात्रगमनेन कर्मतासिद्धिः, तथा सति सर्वत्र क्रियामात्रेऽपि सकर्मकता स्यात्। ततश्चाकर्मकव्यपदेशाः शास्त्रे विरुध्येरन्। न च विरुध्यन्ते। न ह्यवश्यं क्रियामात्रे बाह्यविषयसम्भवः। काचिद्धि क्रिया कर्तर्येव विश्राम्यति। न तु बाह्यभावमपेक्षते। तद्यथा आस्ते. शेते इत्यादि। 'द्व्यर्थः पचिः' इति वचनात् सार्वधातुकविषयेऽपि भावनालक्षणो व्यापारो धात्वर्थ एव। एवञ्च धात्वर्थ एवात्र भावनापर्यवसानात् स एव भाव्यः। 'आसनं करोति, शयनं करोति' इति।

अत एवात्र बाह्यभावविषयः प्रश्नो नास्ति किमिति। यत्र बाह्यभावनिष्ठा भावना तत्र तेन बाह्येन भाव्येन कर्मणा सकर्मकत्वम्। तत्र च किमित्यनुयुज्यते, 'पचति किमोदनम्' इत्यादि। धात्वर्थस्य हि सर्वत्राव्यभिचाराद् भाव्यत्वेऽपि न तेन सकर्मकाकर्मकविभागः शक्यक्रियः कालादिकर्मणेव, बाह्यं तु कर्म व्यभिचरतीति तदपेक्षोऽयं विभागः।

अतश्च शुद्धाया भावनाया धात्वर्थः कर्म, धात्वर्थविशिष्टायां तु बाह्यं

---

यदि तर्हि द्रव्यस्य क्रियाविषयभावमात्रगमनेन कर्मतासिद्धिः, तथा सति सर्वत्र क्रियामात्रेऽपि=अकर्मकधात्वर्थक्रियास्थलेऽपि धातोः सकर्मकता स्यात्। ततश्च केषाञ्चिद् धातूनामकर्मकव्यपदेशाः शास्त्रे विरुध्येरन्, न च विरुध्यन्ते। न ह्यवश्यः क्रियामात्रे=अकर्मकक्रियास्वपि बाह्यस्य धात्वर्थभिन्नस्य क्रियाविषयस्य सम्भवः। यतः काचित् क्रिया कर्त्तर्येव कारके विश्राम्यति, न तु बाह्यभावरूपं कर्म स्वसिद्धयेऽपेक्षते। तद्यथा 'आस्ते, शेते' इत्यादि। 'तण्डुलानोदनं पचति' इत्यत्र तण्डुलान् ओदनं निर्वर्त्तयति=भावयति इत्यर्थाभिप्रायेण विक्लित्तिर्भावना चेत्येवं 'द्व्यर्थः पचिः' इति भाष्यवचनात् सकर्मकाकर्मकलक्षणसार्वधातुकविषयेऽपि भावना-लक्षणो व्यापारो धात्वर्थ एव, न तु मीमांसकरीत्या प्रत्ययार्थः। एवञ्चात्राकर्मक-धातुस्थले बाह्यविषयाभावेन धात्वर्थ एव भावनापर्यवसानाद् धात्वर्थ एव भाव्यः। 'आसनं करोति, शयनं करोति' इति।

अत एवाकर्मकधातुस्थले धात्वर्थातिरिक्तकर्मविषयकः=बाह्यभावविषयकः किमिति प्रश्नो नास्ति। यत्र भाव्यतया बाह्यभावनिष्ठा भावना तत्र तेन बाह्येन भाव्येन कर्मणा सकर्मकत्वम्, तत्र च धात्वर्थमात्रबोधानन्तरं बाह्यभावानिर्देशस्थले किमिति पृच्छ्यते—पचति किमिति। ओदनमित्युत्तरमित्यादि। धात्वर्थस्य हि भाव्यत्वेऽपि न धात्वर्थेन कर्मणा कालादिकर्मणैव धातूनां सकर्मकत्वाकर्मकत्व-विभागः शक्यः कर्त्तुम्। धात्वर्थस्य कर्मणः सर्वत्र सकर्मकेऽकर्मके च धातौ अव्यभि-चारेण वृत्तेः। बाह्यं तु कर्म धात्वर्थरूपमान्तरं धात्वन्तर्गतं कर्म व्यभिचरति।

सकर्मकधातुस्थले धात्वर्थस्य करणत्वेन भावनायामन्वयादिति बाह्यभाव-रूपकर्मापेक्षोऽयं धातूनां सकर्मकत्वाकर्मकत्वविभागः। अतश्च शुद्धाया भावनाया

कर्म। अत एव बाह्यनिष्ठायां भावनायां धात्वर्थः करणमिति न्यायविदः। तेनौदनं पचति, पाकेनौदनं भावयतीति वाक्यार्थः।

यद्यपीह दर्शने भावना धात्वर्थ एव, तथापि फलपर्यन्तासौ कर्तृव्यापाररूपा दीर्घतरावयवक्रियामात्रात् पृथग्व्यवहारसहा। एवं सर्वत्र योज्यम् ॥८७॥

क्वचित् पुनर्वस्तुतो बाह्यकर्मसद्भावेऽप्यकर्मकव्यपदेशो भवतीत्याह—

**धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्।**
**प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ ८८ ॥**

प्रसिद्धादर्थादन्यत्रार्थे यदा धातुर्वर्तते तदा तत्रास्य कर्मसमन्वयरहित-

---

धात्वर्थो भाव्यत्वेन कर्म अकर्मकधातुस्थले। सकर्मकधातुस्थले तु धात्वर्थविशिष्टायां भावनायां बाह्यभावरूपं कर्म। अत एव भाव्यत्वेन बाह्यभावनिष्ठायां भावनायां धात्वर्थः करणमिति न्यायविदो मीमांसकाः। तेनौदनं पचतीत्यस्य पाकेनोदनं निर्वर्त्तयति भावयति इति वाक्यार्थः।

ननु पचतीत्यस्य पाकेनौदनं भावयति इति वाक्यार्थस्वीकारे पच्धात्वर्थपाकादतिरिक्ता भावनेति धात्वर्थो न स्यात्; किन्तु प्रत्ययार्थ इति ते भट्टमतप्रवेशापत्तिरिति चेत्, न, यद्यपीह वैयाकरणदर्शने भावना धात्वर्थ एव, न तु प्रत्ययार्थः, तथापि फलपर्यन्ताऽसौ कर्त्तृव्यापाररूपा दीर्घतरावयवकक्रियासामान्यात् पृथग् व्यवहारसहेति धात्वर्थसामान्यस्य तत्र करणत्वोपपत्तिः। एवमकर्मकस्थलेऽपि धात्वर्थसामान्यस्य भावनारूपे धात्वर्थविशेषे कर्मत्वं योज्यमिति ॥ ८७ ॥

क्वचित् पुनर्वस्तुतो बाह्यकर्मसद्भावेऽपि तत्तन्निमित्तभेदादकर्मकव्यपदेशो भवतीत्याह—धातोरर्थान्तर इति।

अस्यार्थः—प्रसिद्धादर्थादन्यस्मिन्नर्थे धातोर्वृत्तेरकर्मिका क्रिया भवति। तद् यथा वह प्रापणे इत्यस्य प्रापणरूपोऽर्थः प्रसिद्धस्ततोऽर्थान्तरे स्यन्दनरूपेऽर्थे यदा वहतिर्वर्त्तते, तदा तस्याकर्मकत्वम्—'नदी वहति' इति स्यन्दनं करोतीत्यर्थः। धात्वर्थेन कर्मण उपसंग्रहात् स्वस्मिन् अन्तर्भावनादपि अकर्मिका क्रिया भवति। तद्यथा जीवति=प्राणान् धारयति इति। अत्र प्राणरूपस्य कर्मणो धात्वर्थान्तर्गतत्वादकर्मकत्वं जीवतेः। कर्मणः प्रसिद्धेरपि अकर्मिका क्रिया भवति। यथा वर्षति इति। अत्र वर्षणस्य कर्म जलं प्रसिद्धम्। कर्मणोऽविवक्षातोऽपि अकर्मिका क्रिया भवति। पचति, भुङ्क्ते इति। अनयोः कर्माविवक्षयाऽकर्मकत्वेन भावे लकारः—देवदत्तेन पच्यते, भुज्यत इति।

अयं भावः—यदा यत्र यो धातुः प्रसिद्धात् स्वार्थादन्यस्मिन्नर्थे वर्त्तते तदा तत्र तस्य धातोः कर्मसम्बन्धरहिता क्रिया वाच्यत्वेन प्रतीयते। तद्यथा देशान्तर-

क्रिया वाच्या प्रतीयते। तद्यथा वहतिर्देशान्तरप्रापणवचनः सकर्मकः प्रसिद्धः 'भारं वहति' इति।

स यदा नदी वहतीत्यत्र स्यन्दनक्रियाभिधायी तदा स्यन्दनस्य जलस्रुति-रूपस्य नद्यात्मभूतत्वात् किमित्यनुयोगाभावादकर्मक इति धात्वर्थमात्रापेक्षयेयं भावना वहति स्यन्दनं करोतीति।

यदापि धात्वर्थक्रियायां कर्मान्तर्भवति तदाप्यकर्मकत्वम्। तद्यथा 'जीवति' इति। 'प्राणान् धारयति' इति ह्यत्र धात्वर्थ इति प्राणलक्षणस्य कर्मणोऽन्तर्भावः, एवं 'म्रियते', 'प्राणान् जहाति' इति। तथा 'अस्ति', 'आत्मानं बिभर्ति' इति। यत्राव्यभिचारेण प्रतिनियतस्य कर्मणः प्रतीतिस्तत्राप्यकर्मिका क्रियेति व्यवहारः। तद्यथा 'वर्षति' इति। अत्र हि यथा वर्षणक्रियायामव्यभिचाराद्देवः कर्ता प्रतीयते, तथा कर्मापि जललक्षणमिति प्रसिद्धेरकर्मकत्वाश्रयः कर्तरि क्त उदाहृतः 'वृष्टो देवः' इति।

यस्त्वप्रसिद्धं कर्म तेन सकर्मकत्वमेवास्याः क्रियायाः. 'रुधिरं वर्षति' 'शरान् वर्षति' इति। 'पांसवो वृष्टाः' इति कर्मणि क्तः। विद्यमानोऽपि वा यत्र

---

प्रापणरूपेऽर्थे वहधातुः सकर्मकः प्रसिद्धः 'भारं वहति' इति।

स यदा 'नदी वहति' इत्यत्र स्यन्दनक्रियामभिधत्ते, तदा जलश्रुतिरूपस्य स्यन्द-नस्य कर्त्तृभूतनद्यसाधारणधर्मत्वात् प्रसिद्धत्वेन किमित्यनुयोगाभावात् = किमिति प्रश्नाभावाद् अकर्मक इति कर्मत्वेन धात्वर्थमात्रापेक्षा इयं भावना — वहति-स्यन्दनं करोति इति।

यदाऽपि कर्मविशिष्टा क्रिया यद्धातुवाच्या भवति, तदापि तस्य धातोरकर्म-कत्वम्। तद्यथा जीवति इति। प्राणान् धारयति इत्यर्थः। अत्र हि प्राणधारणं धात्वर्थं इति प्राणरूपस्य कर्मणो धात्वर्थेऽन्तर्भावः। एवं 'म्रियते' इत्यत्र प्राणत्यागरूपे धात्वर्थे प्राणरूपस्य कर्मणोऽन्तर्भावः। म्रियते इत्यस्य प्राणांस्त्यजति इत्यर्थः, तथा 'अस्ति' इत्यस्य आत्मानं धारयति इत्यर्थः, अत्र आत्मधारणरूपे धात्वर्थे आत्मरूपस्य कर्मणोऽ-न्तर्भावः। यत्र प्रतिनियतस्य कर्मणो नियमेन प्रतीतिस्तत्रापि अकर्मिका क्रियेति कार्यार्थं व्यवहारो भवति कर्मसत्त्वेऽपि। तद् यथा वर्षति इति। अत्र हि वर्षणक्रियायां नियमेन यथा इन्द्रो देवः कर्त्ताऽप्रयुज्यमानोऽपि क्रिया स्वभावप्रयुक्ताव्यभिचारात् प्रतीयते, तथैव जलरूपं कर्मापि तत एव प्रतीयत इति कर्मणः प्रसिद्धेरकर्मकत्वाश्रयः कर्त्तरि क्त उदाहृतोऽन्यत्र वृष्टो देव इति।

यस्त्वप्रसिद्धं कर्म तेन सकर्मकत्वमेव वर्षणक्रियायाः, 'रुधिरं वर्षति, शरान् वर्षति' इति। अत एव—पांसवो वृष्टा इति कर्मणि क्तः।

कर्मसम्बन्धः क्रियामात्रप्रतिपादनतात्पर्यान्न विवक्ष्यते, तत्राप्यकर्मकत्वं सम्भवति तद्यथा नेह पच्यते, नेह भुज्यत इति। क्रियाप्रतिषेधतात्पर्याद्भावे लकारः। दीक्षितो न ददाति, न पचति, न जुहोति इति कर्मणोऽविवक्षा। अत्र किमिति नापेक्ष्यते, क्रियाप्रतिषेधतात्पर्यात् ॥ ८८ ॥

तदेवं चतुर्भिः प्रकारैरकर्मकव्यपदेशाः शास्त्रे भवन्ति। एवमन्येऽपि प्रकाराः सम्भवन्तीत्याह—

**भेदा य एते चत्वारः सामान्येन प्रदर्शिताः।**
**ते निमित्तादिभेदेन भिद्यन्ते बहुधा पुनः ॥ ८९ ॥**

---

यत्तूक्तं हेलाराजेन—"यत्र च विद्यमानोऽपि क्रियायाः कर्मसम्बन्धः क्रियामात्रप्रतिपादनतात्पर्यान्न विवक्ष्यते तत्राप्यकर्मकत्वं सम्भवति। तद् यथा—नेह पच्यते, नेह भुज्यत इति। क्रियामात्रप्रतिषेधे तात्पर्याद् भावे लकारः। दीक्षितो न ददाति, न पचति, न जुहोति इति कर्मणोऽविवक्षा। अत्र किमिति नापेक्ष्यते, क्रियाप्रतिषेधतात्पर्याद् इति"। इदं सर्वं कर्मणोऽविवक्षातोऽकर्मिका क्रिया इत्यस्योदाहरणम्. न तु निमित्तचतुष्टयात् कारिकायां निर्दिष्टाद् बहिर्भूतमित्यवधेयमिति ॥ ८८ ॥

तदेवं सामान्येन चतुर्भिः प्रकारैः समनन्तरोदीरितैर्धातूनामकर्मकव्यपदेशाः शास्त्रे भवन्ति। एवं चतुर्षु प्रकारेषु प्रत्येकं निमित्तदेशकालात्मनेपदप्रयोगादिरूपैर्विशेषैस्ते चत्वारोऽपि भेदा बहुधा भिद्यन्ते यैर्धातूनामकर्मकत्वव्यपदेशो भवतीत्याह—**भेदा य एते इत्यादि।**

अस्यार्थः—य एते प्रागुक्ताः सकर्मकाणामपि धातूनामकर्मकत्वव्यपदेशहेतवश्चत्वारो भेदाः सामान्यरूपेण प्रदर्शिताः प्राक्। ते निमित्तदेशकालात्मनेपदप्रयोगवाक्यसामर्थ्यकर्तृविशेषसामर्थ्यादिरूपावान्तरभेदेन पुनर्बहुधा विशेषतो भिद्यन्ते। तत्र सकर्मकस्यापि धातोरकर्मकत्वव्यपदेशनिबन्धभूता धातोरर्थान्तरे वृत्तिर्निमित्तादिभेदेन भिद्यमाना यथा—वाष्प उच्चरति, धूम उच्चरति। अत्रोच्छब्दरूपनिमित्तवशाद् चरधातुरयमूर्ध्वप्रवृत्तिरूपेऽर्थान्तरे वर्त्तमानोऽकर्मकः। केवलस्य चरधातोस्तु देशान्तरगमनमर्थः। अत्र निमित्तपदेन सहाय उपसर्गादिर्ग्राह्यः।

क्वचिदर्थान्तरे वर्त्तमानस्य धातोरकर्मकत्वे आत्मनेपदप्रयोगो निबन्धनम्। तद्यथा—'उत्तपते, वितपते' इति। भासत इत्यर्थः।

क्वचित्तु अर्थान्तरे वर्तमानस्यैव धातोर्वाक्यसामर्थ्यादकर्मकत्वाभिव्यक्तिः। तद् यथा—नदी वहति इति। अत्र वहधातोः स्यन्दनार्थकत्वे नदीरूपकर्तृविशेषसामर्थ्याद् अकर्मकत्वम्। तथा कर्मकर्तृविषये कर्मणः कर्तृत्वप्रतीतिवशात् फलरूपक्रियैकदेशवचनतायां धातोरकर्मकत्वम्—'पच्यते ओदनः स्वयमेव' इति। एवं धातोरकर्मकत्वे निबन्धनभूतार्थान्तरे वृत्तिर्निमित्तादिभेदेन भिद्यते।

**य एते सकर्मकाणामपि धातूनामकर्मकत्वनिबन्धनभूता भेदाश्चत्वारोऽभिहितास्ते निमित्तादिभेदेनानेकप्रकारा जायन्ते। निमित्तं सहाय उपसर्गादिः। आदिशब्दाद्देशकालादयः।**

---

धात्वर्थेनोपसंग्रहेऽपि निमित्तादिभेदेन भेदो यथा—क्वचित् क्रियास्वरूपसामर्थ्यरूपान्निमित्तात् तिरोहितभेदत्वरूपे कर्मणो धात्वर्थान्तर्भावे धातोरकर्मकत्वव्यपदेशो जीवति, अस्ति इत्यादौ प्राणान् धारयति आत्मानं धारयति इति यथाक्रममर्थः।

क्वचित्कर्मणो धात्वर्थे तिरोहितभेदत्वाभावेऽपि साधुत्वान्वाख्यानव्यवस्थयाऽवधार्य्यमाणस्वरूपभेदस्यापि अन्तर्भावे धातोरकर्मकत्वव्यपदेशहेतुः स्वीक्रियते। तद् यथा इच्छाक्यजन्ते सुब्धातौ पुत्रीयतौ पुत्रकरूपस्य कर्मणोऽन्तर्भावः क्यजन्तधातोरकर्मकत्वव्यपदेशहेतुः। पुत्रीयति छात्रमित्यत्र आचारक्यचि तु यद्यपि पुत्ररूपमुपमानकर्मधात्वर्थेऽन्तर्भूतम्, तथापि छात्ररूपेणोपमेयकर्मणा धात्वर्थात् पृथग्भूतेन धातोः सकर्मकत्वम्। मुण्डयति माणवकम् इत्यत्र तु मुण्डिरूपे ण्यन्ते धातौ मुण्डरूपं सामान्यं कर्मान्तिर्भूतम्, माणवकरूपेण विशेषकर्मणा तु धात्वर्थाद् पृथग्भूतेन धातोः सकर्मकत्वम्। वाष्पायते इत्यादौ विशेषकर्मण एव स्फुटमवधार्यमाणरूपस्य धात्वर्थेऽन्तर्भावः। नमःशब्दार्थस्य कर्मणो धात्वर्थेऽन्तर्भावाच्च नमःशब्दयोगे देवशब्दाच्चतुर्थी न भवति।

कर्मणः प्रसिद्धेरपि यत्र धातोरकर्मकत्वं तत्राप्यवान्तरो भेदो देशकालवशाज्जायते। तद् यथा दक्षिणापथे पूर्वाह्णे "पच्यताम्" इत्युक्ते यवागूकर्मकः पाकः प्रतीयते। अपराह्णे तु ओदनकर्मकः। मांसभूयिष्ठे तु देशे मांसकर्मकः पाकः प्रसिद्धः, क्रियास्वरूपसामर्थ्यात्। क्वचित् प्रसिद्धं नियतं कर्म—वर्षति इत्यत्र जलं प्रतीयते। क्वचित् कर्तृसामर्थ्यादपि कर्म प्रसिद्धम्। यथा दुर्जनः करोति इत्युक्ते उपघातलक्षणम्=प्रतिबन्धरूपं कर्म भासते। सुजनः करोति इत्युक्ते तु—उपकारः कर्मतयाऽवगम्यते।

क्वचिद् वाक्यरूपस्य कर्मणोऽविवक्षाऽपि धातोः सादृश्यमात्रप्रतिपादनपरतया दृश्यते। तद् यथा—'अनुवदते कठः कलापस्य'। अनुवादोऽत्र सदृशोच्चारणम् इति वाक्यरूपः कर्म न विवक्षितम्। क्रियाविशेषमात्रप्रतिपादनतात्पर्येऽपि न विवक्ष्यते कर्म। तद् यथा—देवदत्तः किं करोति इति प्रश्ने पचति. ब्रवीति इति क्रियाप्रवाहाविच्छेदप्रतिपादनेऽपि न विवक्ष्यते कर्म—पचत्येव, ददात्येव इति।

अयं भावः—य एते सकर्मकाणामपि धातूनामकर्मकत्वव्यपदेशहेतवो धातोरर्थान्तरे वृत्तेरित्यादयः सामान्येन चत्वारो भेदाः प्रागभिहितास्ते निमित्तदेशकालादिरूपावान्तरभेदेनानेकप्रकारा विशेषतो जायन्ते। कारिकायां निमित्तपदेन सहाय उपसर्गादिर्गृह्यते, 'निमित्तादि' इत्यत्रादिपदेन देशकालादयो गृह्यन्ते।

तद्यथा चरतिः देशान्तरगमनवचन सकर्मकोऽप्यूर्ध्वंप्रवृत्तिलक्षणेऽर्थान्तरे प्रयुक्तोऽकर्मको निमित्तस्य शब्दान्तरप्रयोगस्य सामर्थ्याद् भवति। 'वाष्प उच्चरति', 'धूम उच्चरति' इति। उच्छब्दवशाद्धातुरयमूर्ध्वप्रवृत्तावकर्मकः।

आदिग्रहणात् क्वचिदात्मनेपदप्रयोगादकर्मकत्वाभिव्यक्तिः 'उत्तपते', 'वितपत' इति। 'भासते' इत्यर्थः। 'यावद्भक्तमुपतिष्ठते', भोजनकालं यावदुदीक्षत इत्यर्थः। "अकर्मकाच्च" ( पा० १।३।२६ ) इत्यात्मनेपदम्।

'सर्पिषो जानीते', 'मधुनो जानीते', इति। तेनोपायेन प्रवर्तत इति ज्ञानपूर्विकायां प्रवृत्तावत्र धातुर्वर्तते। "अपह्नवे ज्ञः" ( पा० १।३।४४ ) इत्यनुवृत्तौ "अकर्मकाच्च" ( पा० १।३।२६ ) इत्यात्मनेपदम्।

वाक्यसामर्थ्यात् क्वचिदकर्मकत्वाभिव्यक्तिः। तद्यथा 'नदी वहति' इति। नदीलक्षणकर्तृविशेषसामर्थ्यात् स्यन्दनवचनतायामकर्मकत्वम्। एवं 'वायुर्वहति' इति।

---

तत्रार्थान्तरे वृत्तेर्धातोरुपसर्गरूपनिमित्तभेदेनाकर्मकत्वं यथा—वाष्प उच्चरति, धूम उच्चरति इति।

अत्र चर्धातुर्देशान्तरगमनरूपार्थवाची ग्रामं चरति इत्यादौ सकर्मकोऽपि ऊर्ध्वप्रवृत्तिलक्षणे=ऊर्ध्वगमनरूपे अर्थान्तरे प्रयुक्तो निमित्तस्य उपसर्गरूपशब्दान्तरप्रयोगस्य सामर्थ्यादकर्मको भवति। अत्र चरधातुरुदुपसर्गवशादूर्ध्वगमनरूपेऽकर्मकः। अत्रोर्ध्वदेशरूपस्य कर्मणो धात्वर्थेऽन्तर्भावान्नेदम्—धातोरर्थान्तरे वृत्तेरित्यस्यासंकीर्णमुदाहरणम्; किन्तु धात्वर्थेनोपसंग्रहादित्यनेनापि संकीर्णं बोध्यम्।

निमित्तपदार्थे उपसर्गादौ आग्रहणात् क्वचिदात्मनेपदप्रयोगादकर्मकत्वाभिव्यक्तिः। उत्तपते, वितपत इति। भासत इत्यर्थः। अत्रापि धातोरकर्मकत्वाभिव्यक्तौ उपसर्गात्मनेपदप्रयोगरूपयोर्निमित्तयोः संकरः। यावद्भक्तमुपतिष्ठते भोजनकालं यावदतिथीन् प्रतीक्षत इत्यर्थः। अकर्मकाच्चेत्यनेनात्रात्मनेपदम्; किन्तु उपसर्गोऽपि अत्राकर्मकत्वाभिव्यक्तौ निमित्तम्। सर्पिषो जानीते, मधुनो जानीते इति तु आत्मनेपदप्रयोगस्याकर्मकत्वाभिव्यञ्जकत्वे निमित्तान्तरासंकीर्णमुदाहरणं बोध्यम्। तेन तेनोपायेन प्रवर्त्तत इत्यर्थः। सर्पिषो मधुनो वा राजादिसमीपोपसर्पणरूपप्रवृत्त्युपायत्वेन ज्ञानपूर्विकायां राजादिसमीपोपसर्पणरूपायां प्रवृत्तावत्र ज्ञाधातुर्वर्त्तते "अपह्नवे ज्ञः" ( पा० १।३।४४ ) इत्यतो 'ज्ञ' इत्यस्यानुवृत्तौ 'अकर्मकाच्च" ( पा० १।३।२६ ) इत्यनेनात्मनेपदम्।

अर्थान्तरे वृत्तेर्धातोर्वाक्यसामर्थ्यात् क्वचिदकर्मकत्वाभिव्यक्तिः। तद्यथा 'नदी वहति' इति। अत्र क्रियाकारकपदयोः समभिव्याहारो वाक्यम्। नदीरूपकर्तृविशेषसामर्थ्ये सति वहधातोः स्यन्दनवचनतायामकर्मकत्वम्। एवं 'वायुर्वहति'। वाति इत्यर्थः।

तथा कर्मकर्तृविषये कर्मणः कर्तृत्वप्रतीतिवशादेकदेशवचनतायां धातोरकर्मकत्वं 'पच्यते ओदनः स्वयमेव' इति। एवं च कृत्वाऽकर्मकव्यपदेशनिमित्तं शास्त्रमत्र विषये प्रवर्तते "मुचोऽकर्मकस्य गुणो वा" (पा० ७।४।५७) इति। 'मोक्ष्यते वत्सः स्वयमेव' इति।

एवमर्थान्तरे वृत्तिर्धातोरकर्मकत्वनिबन्धनं निमित्तादिभेदेन भिद्यते। धात्वर्थेनोपसंग्रहेऽपि निमित्तादिभेदेन भेदः। यद्यथा-क्वचित् क्रियास्वरूपसामर्थ्यलक्षणान्निमित्तात् तिरोहितभेदत्वे कर्मणोऽन्तर्भावेऽकर्मकव्यपदेशो जीवत्यादौ।

क्वचिदन्वाख्यानव्यवस्थया निर्धार्यमाणरूपभेदस्याप्यन्तर्भावः। तद्यथा पुत्रीयतौ पुत्रकर्मणः। परमार्थतोऽत्र पुत्रलक्षणं कर्म क्रियाशरीरानुप्रविष्टं भेदेनासत्येन प्रक्रियायामन्वाख्याननिमित्तमाश्रीयते। तथा च वक्ष्यति—

पुत्रीयतौ न पुत्रोऽस्ति विशेषेच्छा तु तादृशी।
विनैव पुत्रानुगमाद्या पुत्रे व्यवतिष्ठते॥ इति।

(वा० प० ३, वृत्ति० ६९)

---

यत्तु हेलाराजेनोक्तम् – 'तथा कर्मकर्तृविषये कर्मणः कर्तृत्वप्रतीतिवशात् क्रियैकदेशफलमात्रवचनतायां धातोरकर्मकत्वम्। 'पच्यते ओदनः स्वयमेवे'ति, तन्न।" अत्र हि पच्धातोर्विक्लित्तिमात्रमर्थः, व्यापारस्तु अविवक्षित इति धातोरत्राकर्मकत्वं स्वाभाविकम्, न तु नैमित्तिकम्, नापि धातोरर्थान्तरे वृत्तित्वनिबन्धनम्, फलस्यापि धात्वर्थत्वात्।

यद्वा, फलावच्छिन्नो व्यापारो धात्वर्थः। केवलफलञ्च ततोऽर्थान्तरमित्यभिप्रेत्य हेलाराजोक्तं वेदितव्यम्।

एवञ्च कृत्वा धातूनामकर्मकत्वव्यपदेशनिमित्तकं शास्त्रं कर्मकर्तृविषये प्रवर्तते। "मुचोऽकर्मकस्य गुणो वा" (पा० ७।४।५७) इति। 'मोक्ष्यते वत्सः स्वयमेवे'ति। एवं धातोरकर्मकत्वव्यपदेशे निमित्तभूता धातोरर्थान्तरे वृत्तिर्निमित्तादिभेदेन भिद्यमाना उदाहृता।

धात्वर्थेनोपसंग्रहेऽपि निमित्तादिभेदेन भेदः। तद्यथा - क्वचित् क्रियास्वरूपसामर्थ्यरूपान्निमित्तात् कर्मणो धात्वर्थात् तिरोहितभेदत्वे सति कर्मणो धात्वर्थेऽन्तर्भावे च धातोरकर्मकत्वव्यपदेशो 'जीवति अस्ति' इत्यादौ।

क्वचित् साधुत्वान्वाख्यानव्यवस्थया धात्वर्थात् पृथङ्निर्धार्यमाणरूपभेदस्यापि कर्मणो धात्वर्थेऽन्तर्भावः। तद्यथा - पुत्रीयतौ पुत्ररूपस्य कर्मणः। परमार्थतोऽत्र पुत्ररूपं कर्म क्रियाशरीरान्तःप्रविष्टं साधुत्वप्रक्रियायां कल्पितेन भेदेन पुत्रीयतावन्वाख्याननिमित्तमाश्रीयते। तथा च वक्ष्यति—

आचारक्यचि त्वत्रोपमानकर्मान्तर्भूतम्, उपमेयकर्मणा तु सकर्मकत्वम्। 'पुत्रीयति छात्रम्' इति। 'मुण्डयति माणवकम्' इति तु सामान्यकर्मान्तर्भूतम्, विशेषकर्मणा तु सकर्मकत्वम्। एवं 'मिश्रयति तिलान्' इत्यादौ। 'वाष्पायते, ऊष्मायते, 'रोमन्थायते', इत्यादौ विशेषकर्मण एव नि·ीरितरूपस्यान्तर्भावः। पचेः पार्थिवं भिदेश्च सावयवं कर्म प्रसिद्धम्, न त्वन्तर्भूतम्। तस्य स्वशब्देनापि वचनात्. पचति पाक्यम्, 'भिनत्ति भेद्यम्' इति। अन्तर्भावे तु स्वशब्देन निर्देशो न स्यात्। न हि भवति 'जीवति प्राणान्' इति। 'जलं वर्षति' इति तु भवति।

अन्तर्भावाच्च कर्मणो 'नमस्यति देवान्' इत्यत्र नमःशब्दयोगे चतुर्थी न भवति। तथा च वार्तिके 'नमसः क्यचि द्वितीयानुपपत्तिः' ( वा० पा० ३।१।१९ ) इति चोदयित्वा 'प्रकृत्यन्तरत्वात् सिद्धम्' ( वा० पा० ३।१।१९ ) इति परिहृतम्।

---

पुत्रीयतौ न पुत्रोऽस्ति विशेषेच्छा तु तादृशी।
विनैव पुत्रानुगमाद् या पुत्रे व्यवतिष्ठते॥ इति।

( वा० प० ३, वृत्ति० ६९ )

अस्यार्थः—'पुत्रीयति' इत्यत्र पुत्रशब्दो नास्ति। या तु इच्छा पुत्रे व्यवतिष्ठते=पुत्रविषयकत्वेन व्यवस्थिता भवति, तादृशी एव विशेषेच्छाऽखण्डा धात्वर्थे पुत्रशब्दार्थानुगमाद् विनैव धात्वर्थत्वेन प्रतीयत इति। पुत्रमिवाचरति पुत्रीयति छात्रमित्यत्राचारक्यचि तु उपमानकर्म पुत्ररूपं धात्वर्थेऽन्तर्भूतं यद्यपि तथापि तु उपमेयकर्मणा छात्रेण धात्वर्थाद् बहिर्भूतेन धातोः सकर्मकत्वम्। 'मुण्डयति माणवकम्' इत्यत्र तु यद्यपि मुण्डरूपं सामान्यकर्म धात्वर्थेऽन्तर्भूतं तथाप्यत्र धात्वर्थाद् बहिर्भूतेन विशेषकर्मणा माणवकेन धातोः सकर्मकत्वम्।

एवं 'मिश्रान् करोति मिश्रयति तिलान्' इत्यादौ सामान्यकर्मणो धात्वर्थेऽन्तर्भावेऽपि विशेषकर्मणा धातोः सकर्मकत्वं बोध्यम्। 'वाष्पमुद्वमति वाष्पायते, ऊष्माणमुद्वमति ऊष्मायते, रोमन्थं वर्तयति रोमन्थायते' इत्यादौ विशेषकर्मण एव वाष्पादेर्धात्वर्थे स्फुटप्रतीयमानस्वरूपभेदस्य धात्वर्थेऽन्तर्भावः। पचेः फलमात्रवाचित्वे धातोरकर्मकत्वेन कर्मकर्तरि प्रत्यय उदाहृतः। पचेर्भिदेश्चैवमादीनामन्येषामपि धातूनां कर्मणः प्रसिद्ध्याऽपि अकर्मकत्वेन फलव्यापारोभयार्थकत्वेऽपि भावे प्रत्ययः सम्भवति। 'पच्यते देवदत्तेन, भिद्यते देवदत्तेन' इति। पचेर्हि पार्थिवं भिदेश्च सावयवं वस्तु कर्म प्रसिद्धम्, न तु धात्वर्थेऽन्तर्भूतम्। तस्य स्वशब्देनापि धात्वर्थाद् पृथग् वचनात्। पचति पाक्यम्, भिनत्ति भेद्यम् इति कर्मणो धात्वर्थान्तर्भावे तु स्वशब्देन निर्देशो न स्यात्। नहि भवति 'जीवति प्राणान्' इति। 'जलं वर्षति' इति तु भवति। तेन वृषुधातोर्वर्षणमात्रमर्थः, न तु जलवर्षणमिति प्रतीयते। अत एव 'शरान् वर्षति, रुधिरं वर्षति, पांशून् वर्षति' इत्यादयः प्रयोगाः।

अनेनैवाशयेन धात्वन्तरमेव नमस्यतिशब्दः ( नमस्यशब्दः ) पूजार्थः, न सम्भवत्येवात्र नमःशब्दोऽवयवकल्पनाद्वारेण त्वेवं व्युत्पाद्यत इत्यर्थः। भाष्यकारस्त्वन्वाख्यानवेलायां नमसः प्रकृतित्वेन परिग्रहात् सम्भवं मन्यमानः पुनश्चोदयति। 'ननु नमस्यतिशब्दे नमःशब्दोऽस्ति, तेन योगे चतुर्थी प्राप्नोति' ( म० भा० वा० ३।१।१९ ) इति।

परिहरति च 'अर्थवतो नमःशब्दस्य ग्रहणम्, न च नमस्यतिशब्दे नमःशब्दोऽर्थवान् ( म० भा० वा० ३।१।१९ ) इति।

सुब्धातुवृत्तिरियम्। अत्र चोपसर्जनार्थः प्रत्ययार्थे गुणीभूत इति 'नमो देवेभ्यः' इत्यत्र प्रधानभूतनमःशब्दयोगे सावकाशत्वादत्र चतुर्थी न भवतीति भाष्यार्थः।

---

एवं च वृषधातोर्जलरूपं कर्म प्रसिद्धम्, शरादिकन्तु अप्रसिद्धं कर्मेति विवेकः। एवञ्च जलरूपेण प्रसिद्धेन कर्मणा अप्रयुक्तेन वृषधातोरकर्मकत्वमपि सम्भवति। अत एव क्वचित् कवीनां वृषेरकर्मकः प्रयोगः कर्मणः प्रसिद्ध्या।

गर्जति शरदि न वर्षति वर्षति वर्षासु निःस्वनो मेघः।
नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥ इति।

एवञ्च कर्मणः प्रसिद्ध्या वृषेरकर्मकत्वमाश्रित्य 'महता पुण्येन शरदि वृष्टं देवेन' इति भावे प्रत्यय उपपद्यते। 'नमस्यति देवान्' इत्यत्र नमःपदार्थस्य कर्मणो धात्वर्थेऽन्तर्भावाच्च नमःशब्दयोगे चतुर्थी न भवति। 'सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो नेति' वचनात्। तथा च वार्त्तिके 'नमसः क्यचि द्वितीयानुपपत्तिः' ( भा० वा० ३।१।१९ ) इति।

अस्यार्थः—'नमस्यति देवान्' इत्यत्र नमसः क्यचि द्वितीया नोपपद्यते, नमःशब्दयोगे चतुर्थ्याः प्राप्तेरिति पूर्वपक्षयित्वा प्रकृत्यन्तरत्वात् सिद्धम् इति परिहृतम् (भा० वा० ३।१।१९)।

अस्यार्थः - नमस्यशब्दस्य प्रकृत्यन्तरत्वाद्=धात्वन्तरत्वात् सिद्धमिति। धात्वन्तरमेव नमस्यशब्दः पूजार्थकः, न सम्भवत्येवात्र नमःशब्दः, अवयवकल्पनाद्वारेण तु एवं व्युत्पाद्यत इत्यर्थः।

भाष्यकारस्तु—अन्वाख्यानवेलायाम्=प्रक्रियावेलायाम्, नमसः क्यच्प्रकृतित्वेन सूत्रे परिग्रहाद् नमस्यशब्दघटकस्य नमःशब्दस्य सम्भवं मन्यमानः पुनः पृच्छति—'ननु नमस्यति शब्दे नमःशब्दोऽस्ति, तेन योगे चतुर्थी प्राप्नोति' इति। परिहरति च—अर्थवतो नमःशब्दस्य ग्रहणम्, न च नमस्यति शब्दे नमःशब्दोऽर्थवान्' इति। अत्र च भाष्यकारेण—'अर्थवद्ग्रहणेनानर्थकस्य ग्रहणम् ( परिभाषा १४ ) इति परिभाषासमाधानावसरे समादृता।

प्रसिद्धेरपि यत्राकर्मकत्वं तत्राप्यवान्तरो भेदो देशकालवशाज्जायते। तद्यथा दक्षिणापथे पूर्वाह्णे 'पच्यताम्' इत्युक्ते यवागूकर्मकः पाकोऽवगम्यते। अपराह्णे पुनरोदनसाधनः। मांसभूयिष्ठे तु देशे मांससाधनः पाकः प्रसिद्धः।

क्रियास्वरूपसामर्थ्यात् क्वचित् प्रसिद्धं नियतं कर्म, 'वर्षति' इति जलं प्रतीयते।

कर्तृसामर्थ्यादपि कर्म प्रसिद्धम्। यथा 'दुर्जनः करोति' इत्युक्ते उपघातलक्षणं कर्म गम्यते। 'सुजनः करोति' इति तूपकारोऽवगम्यते। गोष्ठीभेदेन देशभेदेन चापरिमिता प्रसिद्धिरनुगन्तव्या, कियदुदाह्रियते।

अविवक्षापि क्वचित् सादृश्यमात्रप्रतिपादनपरतया वाक्यस्य कर्मणो दृश्यते। तद्यथा 'अनुवदते कठः कलापस्य' इत्यत्र कठकलापयोर्भाषणसादृश्यं प्रतिपाद्यमिति कर्म न विवक्षितम्। तथा कर्मशक्तिविशेषप्रतिपादने ( कर्मशक्त्यविशेषप्रतिपादने,

---

किञ्च नमस्यति इत्यत्र 'नमस्य' इतीयं सुब्धातुरूपा वृत्तिः। अत्र चोपसर्जनार्थः =क्यजर्थे उपसर्जनीभूतनमःशब्दार्थः प्रत्ययार्थे=क्यजर्थे गुणीभूत इति 'नमस्यति देवान्' इत्यत्र चतुर्थी न भवति, 'नमो देवेभ्यः' इत्यत्र प्रधानभूतनमःशब्दयोगे चतुर्थ्याः सावकाशत्वात् 'प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः' इति न्यायादिति प्रकृतपरिहारभाष्यार्थः।

कर्मणः प्रसिद्धेरपि यत्र धातोरकर्मकत्वं तत्राप्यवान्तरो भेदो देशकालवशाज्जायते। तद्यथा—दक्षिणापथे पूर्वाह्णे—'पच्यताम्' इत्युक्ते यवागूकर्मकः पाकोऽवगम्यते। अपराह्णे तु ओदनकर्मकः पाकः। मांसपाकबहुले तु देशे 'पच्यताम्' इत्युक्ते मांसकर्मकः पाकः प्रायेण प्रतीतो भवति।

क्वचित् क्रियास्वरूपसामर्थ्यात् प्रसिद्धं नियतं च कर्म प्रतीयते। तद् यथा—'वर्षति' इत्युक्ते तथाविधं कर्म जलं प्रतीयते।

क्वचित् कर्तृसामर्थ्यादपि कर्म प्रसिद्धं भवति। तद्यथा--'दुर्जनः करोति' इत्युक्ते उपघातलक्षणम् =अपकाररूपं कर्मावगम्यते। 'सुजनः करोति' इत्युक्ते उपकाररूपं कर्म कर्तृसामर्थ्याद् गम्यते। गोष्ठीभेदेन देशभेदेन चापरिमिताप्रसिद्धिरवगन्तव्या ऊहापोहकौशलेन स्वयं कियदुदाह्रियते।

तत्र देशभेदेन कर्मप्रसिद्धिरनुपदमेवोदाहृता। गोष्ठीभेदेन कर्मप्रसिद्धिर्यथा वैयाकरणगोष्ठ्याम् 'अन्वाख्याहि' इत्युक्ते शब्दरूपं कर्म प्रतीयते। एवं न्यायगोष्ठ्याम्—सप्तपदार्थानिति। सांख्यगोष्ठ्यान्तु—पञ्चविंशतितत्त्वानि इति। एवमन्यत्र बोध्यम्।

क्वचिद् धातोः सादृश्यमात्रप्रतिपादनपरत्वे वाक्यरूपस्य कर्मणोऽविवक्षाऽपि दृश्यते। तद्यथा—'अनुवदते कठः कलापस्य' इति। कठः कलापस्य वाक्यमनुकरोति

क्रियाविशेषप्रतिपादने इति वा ) 'देवदत्तः किं करोति' इति प्रश्ने 'पचति', 'ब्रवीति' इति कर्मसम्बन्धो न विवक्ष्यते ।

क्रियाप्रबन्धाव्युपरमप्रतिपादनेऽपि न विवक्ष्यते कर्म 'पचत्येव ददात्येव' इति यथायोगमनुसरणीयं प्रयोगजातमिष्टम् ॥ ८९ ॥

॥ इति भूतिराजतनयहेलाराजकृतौ, प्रकीर्णप्रकाशे कर्माधिकार ॥

---

इत्यर्थः । अत्र कठकलापयोर्भाषणसादृश्यं प्रतिपाद्यमिति वाक्यरूपं कर्म न विवक्षितम् ।

तथा - कर्मशक्त्यविशेषप्रतिपादने क्रियाविशेषप्रतिपादने वा इष्टे 'देवदत्तः किं करोति' इति प्रश्ने—'पचति','ब्रवीति' इत्यत्र कर्मसम्बन्धो न विवक्ष्यते । क्रियाप्रबन्धाव्युपरमप्रतिपादनेऽपि = क्रियासन्तत्यविच्छेदप्रतिपादनेऽपि इष्टे कर्म न विवक्ष्यते । पचत्येव, ददात्येव इति यथासम्भवमिष्टं प्रयोगजातमनुसरणीयम् इति ॥ ८९ ॥

॥ इति श्रीकाशीनाथतनयरघुनाथशर्मोपज्ञाताया-
मम्बाकर्त्रीव्याख्यायां साधनसमुद्देशे
कर्माधिकारः

# अथ कर्त्रधिकारः

इह स्वादिविधिवाक्ये यथाऽऽनुपूर्व्या विभक्तिप्रत्ययाः सन्निविष्टास्तदनुसारेण तदर्थानां कारकाणां विचारः। तत्र द्वितीयार्थे कर्मणि विचारिते तृतीयार्थः करणं पूर्वं विचार्यते। कर्ता तु षष्ठ्या अप्यर्थ इति साधारणत्वान्न्यूनत्वेन पश्चाद्विचारयिष्यते। तत्र क्रियासंसिद्धौ सामग्र्याः साधनत्वात् कोऽतिशयः करणस्य येन तत् साधकतमं स्यादित्याशङ्क्य लक्षणमाह—

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम् ॥ ९० ॥

सन्निपत्योपकारिषु सर्वेष्वपि साधनेषु यद्व्यापारानन्तरभाविनी क्रिया लक्ष्यते ( विवक्ष्यते ) तदवाप्तातिशयं साधकतमं करणम्। तद्यथा छेदने दात्रमनुप्रविश्य छेद्यमवयवविभागं साधयत् प्रकृष्टोपकारतामासादयत्यधिकरणादिकारकान्तरेभ्यः। एवं दर्शने चक्षुः प्रणिधीयमानम् इत्याद्युदाहर्तव्यम्। साधनव्यवहारस्य

---

स्यादिविधिवाक्ये यथाऽऽनुपूर्व्या विभक्तिसंज्ञकाः प्रत्ययाः सन्निविष्टास्तं सन्निवेशमनुसृत्य तदर्थभूतानां कारकाणामिह विचारतः परं क्रियते। तत्रोद्देशक्रमेण द्वितीयार्थे कर्मणि विचारिते तृतीयार्थः करणं विचार्यते। यद्यपि कर्त्ताऽपि तृतीयार्थं इति तस्यापि पूर्वं विचार्यत्वप्राप्तौ करणस्य पूर्वं विचार्यत्वे विनिगमनाविरहस्तथापि =कर्त्तुस्तृतीयार्थत्वेऽपि कर्त्ता तु षष्ठ्या अप्यर्थ इति कर्त्तुः षष्ठीतृतीययोः साधारणार्थत्वाद् असाधारणतृतीयार्थकरणापेक्षया तस्य न्यूनत्वेन स पश्चाद् विचारयिष्यते।

तत्र क्रियायाः सम्यक् सिद्धौ कर्त्तृकरणादिघटितसामग्र्याः साधनत्वाद् इतरकारकापेक्षया कोऽतिशयः करणस्य येन तत्साधकतमं स्यादित्याशङ्क्य समाधातुं तस्य लक्षणमाह क्रियायाः परिनिष्पत्तिरिति।

अस्यार्थः—यस्य कारकस्य व्यापारादनन्तरमव्यवधानेन क्रियायाः परिनिष्पत्तिः संसिद्धिर्यदा यत्र विवक्ष्यते तदा तत्र तस्य करणत्वं स्मृतमिति योजनार्थः। तथा चाव्यवधानेन क्रियासंसाधकत्वप्रकारकेच्छीयमुख्यविशेषतावत्वं करणस्य लक्षणं तदेव च तस्यातिशय इति प्रकृतशङ्कासमाधानं बोध्यम्।

अयं भावः-- खले कपोतन्यायेन युगपत् सन्निपत्य क्रियायाः संसिद्धौ उपकुर्वत्सु सर्वेष्वपि साधनेषु यद् विवक्षयाऽवाप्तातिशयं साधकतमं करणम्। तद् यथा—दात्ररूपं करणं छेद्यं भावमनुप्रविश्यावयवविभागं साधयत् छेदनक्रियायामधिकरणादि-

च बुद्ध्यवस्थासमाश्रयत्वाद् 'विवक्ष्यते' इत्याह। विवक्षोपारूढ एव ह्यर्थो व्याकरणेऽङ्गम्, न बाह्यवस्तुसत्तयेत्यर्थः। तथा च 'बलेन लुनाति', 'आलोकेन पश्यति' इत्यादावनादृत्य दात्रादिकं बलादि साधकतमत्वेन विवक्षितं करणम्। तत्र साधनान्तराणां वास्तवेऽप्याधारादिभावे बुद्ध्याऽन्यथात्वम्, यथा 'स्थाल्या पच्यते' इत्यादौ। करणस्य तु रूपमेव विवक्षाधीनमिति 'साधनव्यवहारश्च बुद्ध्यवस्थानिबन्धनः' इत्युक्तेऽपि 'विवक्ष्यते' इति पुनरुक्तम्॥ ९०॥

एतदेवाह—

वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः॥ ९१॥

इदमेव नियतजातीयं वस्तु करणमित्येवं निरूपयितुं न शक्यते। यस्मान्न

---

कारकान्तरेभ्यः प्रकृष्टोपकारकतामासादयति। एवं चक्षुः प्रणिधीयमानम् = अवधानपूर्वकं दृश्ये संयोज्यमानम् इतरकारकापेक्षया प्रकृष्टोपकारकत्वमासादयति इत्यादिकं करणमुदाहर्त्तव्यम्। साधनव्यवहारस्य च बुद्ध्यवस्थाविशेषरूपविवक्षाधीनत्वाद् विवक्ष्यते इत्याह—विवक्षाविषयत्वमापन्न एव ह्यर्थो व्याकरणे तत्तत्कारकरूपतया प्रयोगाङ्गम्, न बाह्यवस्तुसत्तयेत्यभिप्रायः। तथा च 'बलेन लुनाति', 'आलोकेन पश्यति' इत्यादौ दात्रादिकं साधकतमत्वाद्विवक्षयाऽनादृत्य साधकतमत्वेन विवक्षितं बलादिकरणम्। तत्र कारकान्तराणां वास्तवेऽप्याधारादिभावे बुद्ध्याऽन्यथात्वम् = बुद्धिवृत्तिरूपया विवक्षया कर्त्तृत्वकरणत्वादिकम्। यथा—'स्थाल्या पच्यते', 'स्थाली पचति' इत्यादौ। इतरकारकेषु करणे च तत्तत्साधनत्वव्यवहारो विवक्षाधीनः, करणस्य तु स्वरूपमेव विवक्षाधीनमिति विशेषख्यापनाय 'साधनव्यवहारश्च बुद्ध्यवस्थानिबन्धनः' ( वा० प० ३, साधन० ३ ) इत्युक्तेऽपि 'विवक्ष्यते' इति पुनरुक्तम् = पुनः कथितम् इति॥ ९०॥

करणस्य स्वरूपं विवक्षाधीनमेव, न तु नियतमित्येतदेवाह—वस्तुत इति।

अस्यार्थः—तत्करणम्, वस्तुतः यत् किञ्चिद् वस्तु आश्रित्य, अनिर्देश्यम् = 'इदमेव करणम्, इदं करणमेव' इति निरूपयितुं न शक्यते। आद्ये असिदात्रादिकमेव करणम्, न तु स्थाल्यादिकमिति वक्तुं न शक्यते। 'स्थाल्या पच्यते' इति स्थाल्यादेरपि करणत्वस्य विवक्षाधीनस्य दृष्टत्वात्। द्वितीये असिदात्रादिकं करणमेव इत्यपि निर्देष्टुं न शक्यते। 'असिश्छिनत्ति' इत्यादौ तत्र कर्तृत्वस्यापि दर्शनात्। हि = यतः, करणरूपं वस्तु व्यवस्थितम् = 'इदमेव करणम्, इदं करणमेव' इत्येवं नियतं न। यतः = यस्मात् कारणात्, 'स्थाल्या पच्यते' इत्येषाऽधिकरणस्यापि करणत्वविवक्षा दृश्यत इति।

अयं भावः—इदमेव नियतजातीयं वस्तु असिदात्रादिकं करणं नान्यदित्येवं

वस्तु व्यवस्थितं करणतया नियतमस्ति । प्रज्ञाताधिकरणभावा अपि हि स्थाली तनुतरकपालत्वाच्छीघ्रतरपाककार्यसाधनतयाऽनुभवत्येव वैवक्षिकं करणभावम् । तथा हि प्रयोगः करणतृतीयान्तः 'स्थाल्या पच्यते' इति लोके प्रसिद्धः । आर्द्रेन्धनापेक्षया हि सुसन्निवेशा स्थाली क्रियासिद्धौ प्रत्यासीदति ।। ९१ ।।

यतश्च क्रियासिद्धौ प्रकृष्टोपकारकं करणमतस्तत्र कर्तृ संरम्भ इत्याह—

करणेषु तु संस्कारमारभन्ते पुनः पुनः ।
विनियोगविशेषांश्च प्रधानस्य प्रसिद्धये ।। ९२ ।।

प्रधानस्य क्रियालक्षणस्यार्थस्य प्रसिद्धये प्रकृष्टोपकारकस्य करणस्यैव फलार्थिनः संस्कारमुत्तेजनादिकमसकृद्व्यापारणं चारभन्ते । उपायद्वारेणोपेये प्रवृत्तेः । तत्र काष्ठानामुपधानं संस्कारः । पुनः पुनश्चोपस्थापनं विनियोगः । दात्रस्य तीक्ष्णताधानं संस्कारः । उद्यमननिपातने विनियोगः । चक्षुषोऽञ्जनादिः संस्कारः, प्रणिधानं विनियोग इत्याद्यन्यत्रापि यथायोगं वक्तव्यम् ।। ९२ ।।

---

निरूपयितुं न शक्यते । यस्मान्न किमपि वस्तु व्यवस्थितं करणतया नियतमस्ति । अधिकरणत्वेन प्रमिताऽपि हि स्थाली सूक्ष्मतरकपालत्वात् शीघ्रतरं पाककार्ये समर्थतया अनुभवत्येव विवक्षाकृतं करणत्वम् । तथा हि लोके 'स्थाल्या पच्यते' इति करणतृतीयान्तः प्रयोगः प्रसिद्धः । क्रियासिद्ध्यनुकूलावयवसन्निवेशा हि स्थाली आर्द्रेन्धनरूपकरणापेक्षया पाकक्रियासिद्धौ प्रत्यासीदति । अतः करणापेक्षयाऽत्राधिकरणस्य साधकतमत्वेन करणत्वविवक्षया 'स्थाल्या पच्यते' इति प्रयोग इति ।।९१।।

यतश्च यत्क्रियासिद्धौ प्रकृष्टोपकारकं तदेव करणमतस्तत्रैव संस्कारजनने विनियोगविशेषजनने च कर्तृणां संरभ इत्याह—करणेषु त्विति ।

अस्यार्थः—ये फलार्थिनः पुरुषास्ते उद्देश्यत्वेन प्रधानस्य क्रियाफलस्य सिद्धये करणेषु तु=एव पुनः पुनः संस्कारं विनियोगविशेषांश्च आरभन्ते, इतरकारकेषु तु कर्तॄणां न तादृशः संस्कारविनियोगविशेषजननविषयकः संरम्भ इति ।

अयं भावः—प्रधानस्य क्रियत इति कर्मव्युत्पत्त्या क्रियारूपस्य अर्थस्य=फलस्य प्रसिद्धये प्रकृष्टोपकारकस्य करणस्यैव संस्कारमुत्तेजनादिकम् असकृत्तेषां व्यापारणञ्चारभन्ते । करणरूपोपायद्वारेण क्रियाफलरूपे उपेये प्रवृत्तेः । तत्र काष्ठरूपाणां पाककरणानामुपधानम् अग्नौ स्थापनं संस्कारः । पुनः पुनश्चोपस्थापनं=ज्वलनार्थमग्नौ स्थापनं विनियोगः । दात्ररूपस्य करणस्य तीक्ष्णताऽऽधानं संस्कारः । उद्यमननिपातने द्वे अपि विनियोग । चक्षुषोऽञ्जनादिः संस्कारः प्रणिधानम्=लक्ष्यं प्रति एकाग्रताऽऽपादनम् विनियोग इत्यादिकमन्यत्रापि यथासम्भवं वक्तव्यमिति ।। ९२ ।।

इह कथमुपकारप्रकर्षः 'अश्वेन पथा दीपिकया याति' इति बहूनामेककालं विवक्ष्यत इत्याह—

स्वकक्ष्यासु प्रकर्षश्च करणानां न विद्यते ।
आश्रितातिशयत्वं तु परतस्तत्र लक्षणम् ॥ ९३ ॥

स्वस्यां कक्ष्यायां करणभावावस्थायां सजातीयापेक्षः प्रकर्षोऽत्र तमप्प्रत्ययवाच्यो नाश्रीयते ; अपि तु साधनसामान्यस्यानुगतस्य कारकान्तरापेक्ष एव प्रकर्षस्तमप्प्रत्ययवाच्यः करणत्वमावेदयते । साधकशब्दाद्धि कारकसामान्यवाचिनस्तमबुत्पन्नः, तत एव प्रकर्षं गमयति, परत इति साधनान्तरात् ।

एवं करणजात्यपेक्षस्यातिशयस्यानाश्रयणादश्वादीनां सर्वेषामपि साधनान्तरापेक्षया प्रतिलब्धप्रकर्षाणां करणत्वमविरुद्धम् ।

तथा ह्यश्वो देशान्तरप्राप्तौ कर्त्राद्यपेक्षया प्रकृष्टोपकारकः । पन्था अपि साधुश्चोराद्युपद्रवरहितः । दीपिका अपि तमःसंहतिमालोकेन निर्भर्त्संयन्ती प्रतिपद्यते साधनान्तरेभ्योऽतिशयम् ॥ ९३ ॥

---

ननु देवदत्तो अश्वेन यथा दीपिकया याति' इत्यत्र कथं त्रयाणां युगपत् क्रियासिद्धौ उपकारप्रकर्षो विवक्ष्यते, अश्वादित्रिक एकत्रैवान्योऽन्यापेक्षया प्रकर्षसम्भवादित्याशङ्क्याह— स्वकक्ष्यास्विति ।

अस्यार्थः—स्यकक्ष्यासु = यत्र बहूनां करणत्वं तत्र स्वासु स्वासु करणभावावस्थासु करणत्वेन सजातीयापेक्षया साधकतममित्यत्र तमप्प्रत्ययवाच्यः करणानां प्रकर्षश्च ( तु ) न विद्यते, सर्वेषां करणानां तत्र समानत्वात् । तत्र तु = यत्र बहूनां करणत्वं तत्रापि 'अश्वेन पथा दीपिकया याति' इत्यादौ परतः साधनान्तरेभ्यः कर्त्रादिभ्यः, आश्रितातिशयत्वम् = आश्रितोऽतिशयो यत्र स तथा तत्त्वं करणलक्षणम्, तथा च क्रियासिद्धौ इतरकारकापेक्षया प्रकृष्टोपकारकत्वं करणलक्षणमिति यत्र बहूनां करणत्वम्, तत्र सर्वेषां करणत्वोपपत्तिरिति ।

अयं भावः—स्वस्यां स्वस्यां कक्ष्यायां करणभावावस्थायां करणत्वेन सजातीयापेक्षः क्रियासिद्धौ प्रकर्षोऽत्र = साधकतममित्यत्र तमप्प्रत्ययवाच्यो नाश्रीयते; अपि तु इतरकारकवत् करणेऽपि अनुगतस्य साधनसामान्यस्य = साधनत्वरूपस्य धर्मस्य इतरकारकापेक्ष एव प्रकर्षः साधकतममित्यत्र तमप्प्रत्ययवाच्यस्तत्र = बहुकरणकस्थले सर्वेषां करणत्वमावेदयते । साधकतममित्यत्र हि कारकसामान्यवाचकात् साधकशब्दात् तमबुत्पन्नस्तत एव = साधकादेव प्रकर्षं गमयति, न तु साधकतमात् । कारिकायां परत इत्यस्य करणव्यतिरिक्तेभ्य कर्त्रादिभ्य इत्यर्थः ।

एवं करणत्वजातीयापेक्षस्य प्रकर्षस्यानाश्रयणादश्वादीनां सर्वेषामपि इतरकारकापेक्षया प्राप्तप्रकर्षाणां करणत्वमविरुद्धम् ।

ननु कर्तृविनियोगोत्तरकालं साधनानां प्रवृत्तेस्तदपेक्षया कर्तुरेव साधकतमत्वं न्याय्यमित्याशङ्क्याह—

स्वातन्त्र्येऽपि प्रयोक्तार आरादेवोपकुर्वते ।
करणेन हि सर्वेषां व्यापारो व्यवधीयते ॥ ९४ ॥

यद्व्यापारानन्तरं क्रियानिष्पत्तिस्तत्करणमित्युक्ते कर्तुः करणत्वाप्रसङ्गः। न हि कर्तृव्यापारानन्तरमेव क्रियासिद्धिः। साधनविनियोगे (गो) हि कर्तृव्यापारः। विनियुक्तेषु तु साधनेषु व्यापाराविष्टेषु सत्सु क्रिया निष्पद्यते। तत्र चाधिकरणादीनामिव कर्तुरपि व्यापारो विप्रकृष्यते, क्रियासिद्धौ कर्त्रन्तरप्रयोगाभावात्। पारतन्त्र्ययोगेऽपि साधनान्तराणां प्रयोक्तारः कर्तारो विनियुक्तसाधनान्तरव्यापारव्यवधानेन क्रियां दूरादेव साधयन्ति। करणव्यापारसमनन्तरमेव तु क्रियासिद्धिः ॥ ९४ ॥

---

तथा हि—अश्वो देशान्तरप्राप्तिरूपे गमनक्रियाफले कर्त्राद्यपेक्षया प्रकृष्टोपकारकः, स्वव्यापारद्वाराऽव्यवधानेन फलजनकत्वात्। पन्था अपि साधुश्चोराद्युपद्रवरहितः प्रतिबन्धकविरोधि राजपुरुषादिभावधारणेन प्रतिबन्धकाभावसम्पादनद्वारा इतरकारकापेक्षया प्रकृष्टोपकारकः। 'दीपिका अपि तमःसंहतिमालोकेनापसारयन्ती प्राप्नोति प्रागुक्तरीत्या प्रतिबन्धकाभावसम्पादनेन साधनान्तरापेक्षया प्रकर्षमिति ॥ ९३ ॥

ननु कर्तृकृतो यः स्वेतरकारकाणां विनियोगः=प्रेरणं तदुत्तरकालं साधनानां प्रवृत्तेस्तदपेक्षया=साधनान्तरापेक्षया कर्तुरेव साधकतमत्वं न्याय्यम्, इतरसाधनव्यापारापेक्षया कर्तृव्यापारस्य विनियोगरूपस्य प्राग्भावित्वादित्याशङ्क्याह—**स्वातन्त्र्येऽपीति।**

अस्यार्थः—कर्तॄणां स्वातन्त्र्येऽपि प्रयोक्तारः=कर्तारः, आरादेव=दूरादेव सर्वसाधनव्यापारव्यवधानेनैव क्रियासिद्धौ उपकुर्वन्ते। हि=यतः, सर्वेषां कारकाणां व्यापारः करणेन=करणव्यापारेण व्यवधीयते=व्यवहितः क्रियते। करणव्यापारसमनन्तरमेव क्रियासिद्धेः। अत इतरकारकाणां व्यापारव्यवधानेन क्रियासाधकत्वम्, करणस्य तु अव्यवधानेनेति करणस्यैव साधकतमत्वम्। अव्यवधानेन क्रियासाधकत्वमेव च करणत्वमिति कर्त्तुः करणत्वाप्रसङ्ग इति।

अयं भावः—यद्व्यापारानन्तरं क्रियायाः परिनिष्पत्तिर्विवक्ष्यते तत्करणमित्युक्तेः कर्त्तुः करणत्वाप्रसङ्गः। कर्त्तृव्यापारानन्तरं क्रियासिद्ध्यभावात्। साधनानां सर्वेषां विनियोगः=प्रेरणं हि कर्त्तृव्यापारः। कर्त्रा विनियुक्तेषु तु सर्वेषु साधनेषु व्यापाराविष्टेषु सत्सु क्रिया निष्पद्यते। तत्र चाधिकरणादीनामिव कर्त्तुरपि व्यापारः क्रियासिद्धौ व्यवधीयते कारकान्तरव्यापारैः। अपरश्च कर्त्ता न प्रयुज्यते, यद्व्यापारानन्तरं क्रियासिद्धिः सम्भाव्येत। साधनान्तराणां कर्त्तृपारतन्त्र्ययोगेऽपि

अथवा कर्त्रा सहातिशयचिन्ता नैव सम्भवतीत्याह—

**क्रियासिद्धौ प्रकर्षो वा न्यग्भावस्त्वेव कर्तरि ।**
**सिद्धौ सत्यां हि सामान्यं साधकत्वं प्रकृष्यते ॥ ९५ ॥**

इह क्रियासिद्धिविषये साधनान्तरेभ्योऽतिशयः करणस्य विवक्षितः। यदा च प्रवृत्तानि गृहीतव्यापाराणि कारकाणि, तदा क्रियासिद्धिर्विषयीभवति। कर्तृविनियोगे त्वपेक्षिते कर्तरि न्यग्भवन्ति। साधनान्यनाविष्टस्वव्यापाराणि-स्वातन्त्र्यनिबन्धनं सामान्यभूतं साधनव्यपदेशमेव नासादयन्तीति कुतस्तदपेक्षया कर्तुरतिशयः स्यात्। तदाह—

'सिद्धौ सत्यां हि सामान्यं साधकत्वं प्रकृष्यते।' इति।
(वा० प० ३, साधन० ९५)

---

प्रयोक्तारः=कर्त्तारः स्वविनियुक्तसाधनान्तरव्यापारव्यवधानेन दूरादेव क्रियां साधयन्ति। क्रियासिद्धिस्तु करणव्यापारसमनन्तरमेवेति ॥९४॥

अथवा स्वतन्त्रेण कर्त्रा सह परतन्त्रस्य करणस्य अतिशयचिन्ता नैव सम्भवति, कर्त्तृकरणयोर्भिन्नरूपत्वात्, प्रकर्षस्य च सजातीयापेक्षत्वादित्याह— **क्रियासिद्धाविति।**

अस्यार्थः—वा=अथवा, करणस्य क्रियासिद्धौ=क्रियासिद्धिविषये प्रकर्षो विवक्षितः, कर्त्तरि तु=कर्तृनिरूपितस्तु करणस्य न्यग्भाव एव=अपकर्ष एव, सर्वेषां कारकाणां क्रियासिद्धयनुकूलस्वरूपनिष्पत्तये कर्त्तुरपेक्षणात्। तदाह—सिद्धौ सत्यां हि इति। हि यतः कर्त्तृविनियोगोत्तरकालं कारकाणां क्रियासिद्धयनुकूल-स्वरूपसिद्धौ=तादृशस्वरूपनिष्पत्तौ सत्यां हि सामान्यरूपम्=सर्वेषां कारकाणां साधारणस्वरूपं साधकत्वं करणे प्रकृष्यते। सजातीयापेक्षश्च प्रकर्ष इत्यधिकरणादि-साधनापेक्ष एव क्रियासिद्धौ करणस्य प्रकर्षः, न तु कर्त्रपेक्षः, कर्त्तुः क्रियासिद्धौ स्वतन्त्रत्वात्। इतरकारकाणाञ्च कर्त्तृपरतन्त्रत्वेन विजातीयत्वात्। कर्ता हि इतर-कारकाणि क्रियासिद्धौ प्रवर्त्तयन् सर्वतः प्राक् प्रवर्तत इति स्वतन्त्रः स्वामिस्थानीयः। इतरकारकाणि तु कर्त्तृविनियोगोत्तरं व्यापाराविष्टानि तत्र प्रवर्त्तन्त इति कर्तृपर-तन्त्राणि भृत्यस्थानीयानि इति स्वतन्त्रपरतन्त्रयोः कर्त्तृकरणयोः स्वामिभृत्ययोरिव न परस्परं स्पर्धा, नापि च प्रकर्षापकर्षचिन्तेति।

अयं भावः—इह प्रकरणे क्रियासिद्धविषये साधनान्तरापेक्षः करणस्यातिशयो विवक्षितः, न तु कर्त्रपेक्षः। कर्तृकरणयोः स्वातन्त्र्यपारतन्त्र्याभ्यां विजातीय-त्वात्। अतिशयश्च सजातीयापेक्षः प्रतियोगिवैजात्येन सम्भवति। यदा च कर्त्रा प्रयुक्तानि प्रवृत्तानि गृहीतव्यापाराणि कारकाणि, तदा क्रियासिद्धिस्तेषां विषयी भवति। अपेक्षिते तु कर्तृविनियोगे कर्त्तरि तानि न्यग्भवन्ति=परतन्त्राणि भवन्ति इति कुतः कर्त्रपेक्षः करणस्यातिशयः। नापि च करणापेक्षया कर्त्तुरतिशयः। यदा

यत्सामान्यं साधनत्वं तत्सिद्धौ निष्पत्तौ सत्यां प्रकर्षमासादयति। निष्पत्तिश्च तस्य कर्तृविनियोगादुत्तरकालं स्वव्यापारावेशे सति। तथा च यस्यां दशायामतिशयश्चिन्त्यमानोऽधिकरणादेस्तुल्यकक्ष्यात् करणस्यैवावतिष्ठते, न तु कर्त्तुः। स हि स्वामी प्राक्प्रवृत्तिः स्वतन्त्रः, न भृत्यैः सह स्पर्धते। सजातीयापेक्षो हि प्रकर्षः, कर्ता तु विजातीय एव, कारकान्तराणां स्वतन्त्रपरतन्त्ररूपत्वात्। एवं च कृत्वा कर्तरि पराधीनस्याधि(पि)करणस्य साधकत्वातिशयः कारकान्तरापेक्षो युज्यते, (न तु कर्त्रपेक्षः) भिन्नविषयत्वादिति कथमस्वाधीनं प्रकर्षवत् साधनं स्यादिति न चोदनीयम्॥ ९५॥

यदि तर्हि कर्तुः करणस्य च रूपविप्रकर्षः, कथमिदानीं करणस्यापि कर्तृत्वमसिश्छिनत्तीत्याशङ्क्याह—

अस्यादीनां तु कर्तृत्वे तैक्ष्ण्यादि करणं विदुः।
तैक्ष्ण्यादीनां स्वतन्त्रत्वे द्वैधात्मा व्यवतिष्ठते॥ ९६॥

---

तु न कर्तृविनियोगापेक्षा, तदा साधनानि अनाविष्टस्वव्यापाराणि=अव्यापृतानि, स्वव्यापाररहितानि स्वातन्त्र्यनिबन्धनम्=स्वातन्त्र्यप्रयुक्तं सामान्यभूतम्=करणत्वादिविशेषानालिङ्गितम्, साधनव्यपदेशमेव न प्राप्नुवन्ति इति कुत असाधनीभूततदपेक्षया तदानीं साधनस्य क्रियासिद्ध्यनुकूले स्वव्यापारे स्वतन्त्रस्य कर्त्तुरतिशयः स्यात्। तदाह—सिद्धौ सत्यां सामान्यं साधकत्वं प्रकृष्यत इति। यत्सामान्यम्=सर्वकारकसाधारणं साधनत्वं तत् सिद्धौ=स्वस्वरूपनिष्पत्तौ सत्यां प्रकर्षरूपमतिशयमासादयति। साधनत्वस्य निष्पत्तिश्च कर्तृविनियोगादुत्तरकालं स्वाश्रये कर्तृव्यापारप्रयुक्तव्यापारावेशे सति। तथा च तस्यां दशायामतिशयश्चिन्त्यमानः साधनत्वेन तुल्यकक्ष्यादधिकरणादेः करणस्यैवावतिष्ठते, न तु कर्त्तुः। स हि स्वामी सर्वतः प्राक् प्रवृत्तिकः स्वतन्त्रः, न भृत्यैः सह स्पर्धते। सजातीयापेक्षो हि प्रकर्षः। कर्त्ता तु विजातीय एव, कर्त्तुः स्वतन्त्रत्वात् कारकान्तराणां तु स्वतन्त्रपरतन्त्ररूपत्वात्=स्वतन्त्राधीनस्वभावत्वात्। एवं च कृत्वा कर्त्तरि पराधीनस्यापि कारकान्तरापेक्षः साधकत्वातिशयो युज्यते, न तु कर्त्रपेक्षः, भिन्नविषयत्वात्=भिन्नजातीयप्रतियोगिकत्वादिति अस्वाधीनम्=कर्तृपरतन्त्रं साधनम्=करणं कथं प्रकर्षवत् स्यादिति न चोदनीयम्=नाशङ्का कर्त्तव्या। कर्तृपरतन्त्रतया तदपेक्षया करणस्य प्रकर्षाभावेऽपि सजातीयेभ्यः साधनान्तरेभ्यः प्रकर्षस्यात्र विवक्षितत्वात् सत्त्वाच्चेति॥ ९५॥

यदि तर्हि कर्तृकरणयोः परस्परं रूपविप्रकर्षः=स्वरूपवैजात्यम्, तदा कथमिदानीं 'असिश्छिनत्ति' इत्यादौ छिदिक्रियायां स्वभावतः करणस्याप्यसेः कर्तृत्वमित्याशङ्क्याह—अस्यादीनां त्विति।

इह यदा छिदिं प्रति सुतीक्ष्णधारत्वात् कर्तृविनियोगतिरस्कारेणासिः स्वातन्त्र्येण विवक्ष्यते, तदासौ करणमेव न भवति; अपि तु यदनन्तरभाविनी क्रिया तस्यैव करणत्वं तैक्ष्ण्यगौरवकाठिन्यसंस्थानादेः। तस्यापि कर्तृत्वविवक्षायां विवक्षाप्रापितरूपभेदायत्तः करणभावः। तथा हि तैक्ष्ण्यं छिनत्ति स्वसामर्थ्येनेति शब्दभेदोपहितरूपभेदादेकमपि तैक्ष्ण्यं भेदेनैव कर्तृकरणते प्रतिपद्यते। स्वाधीनत्वेनाश्रित आत्मा कर्ता, साधकतमत्वेनाश्रितः करणमिति द्वेधा व्यवस्थानम्। क्रियायाः करणाविनाभावात् करणान्तरव्यावृत्तिपरेयं चोदना। तैक्ष्ण्यमेव छिदौ साधकतमम्, नान्यदिति तस्यातिशयपरिपोषे तात्पर्यम्, तदेवं कर्तृकरणे भिन्न एव ॥ ९६ ॥

यद्येवमेकत्राप्राप्तौ संज्ञयोः 'करणं पराणि ......' ( वा० पा० १।४।१ ) इति विप्रतिषेधः कथमुपन्यस्त इत्याह—

अस्यार्थः—अस्यादीनां छिदिक्रियाकरणानां सुतीक्ष्णधारत्वात् तस्यामेव क्रियायां कर्त्तृविनियोगाविवक्षया कर्त्तृत्वे स्वातन्त्र्ये विवक्षिते तु तदा असिस्तत्र कर्त्तैव भवति, न तु करणमिति तत्र तैक्ष्ण्यगौरवकाठिन्यसंस्थानादिकं करणं विदुः, क्रियायाः करणाविनाभावात्। तैक्ष्ण्यादीनामपि स्वतन्त्रत्वे तत्र कर्त्तृत्वे विवक्षिते द्वैधात्मा कर्त्तृत्वकरणत्वाभ्यां द्विधाभूतस्तैक्ष्ण्यादीनामात्मा स्वरूपं व्यवतिष्ठते=स्वातन्त्र्येणाश्रित आत्मा कर्त्ता, साधकतमत्वेनाश्रितः करणमिति रीत्या द्विधा व्यवस्थितो भवतीति।

अयं भावः—इह यदा छिदिक्रियां प्रति सुतीक्ष्णधारत्वात् कर्त्तृविनियोगस्य सतोऽप्यविवक्षयाऽसिः स्वातन्त्र्येण कर्त्तृत्वेन विवक्ष्यते, तदाऽसौ करणमेव न भवति। विरुद्धयोः स्वतन्त्रत्वपरतन्त्रत्वधर्मयोरेकत्र यौगपद्यासम्भवात्; अपि तु यदनन्तरभाविनी क्रिया तस्यैव तैक्ष्ण्यगौरवकाठिन्यसंस्थानादेस्तत्र करणत्वम्। तस्यापि सौकर्यविवक्षाप्रयुक्तकर्त्तृत्वविवक्षायां विवक्षाप्रयुक्तस्वरूपभेदप्रयोज्यं करणत्वमपि तस्य। तथा हि—'तैक्ष्ण्यं छिनत्ति स्वसामर्थ्येन' इति तैक्ष्ण्यसामर्थ्यरूपशब्दभेदोपहितस्वरूपभेदादेकमपि तैक्ष्ण्यं भेदेनैव कर्त्तृकरणते विरुद्धे अपि युगपत् प्रतिपद्येते। स्वातन्त्र्येणाश्रित आत्मा=स्वरूपं कर्त्ता। साधकतमत्वेनाश्रितः करणमिति रीत्या द्वेधा व्यवस्थानम्।

वस्तुतस्तु करणरहितायाः क्रियाया असम्भवात् तैक्ष्ण्याद्यतिरिक्तकरणप्रतिषेधपरेयं तैक्ष्ण्यादौ करणत्वचोदना। तैक्ष्ण्यादिकमेव छिदिक्रियायां साधकतमम्, नान्यदिति तैक्ष्ण्यादेः प्रकर्षपरिपोषेऽस्य वाक्यस्य तात्पर्यम्। तदेवं कर्त्तृकरणे स्वातन्त्र्यपारतन्त्र्यरूपविरुद्धधर्माश्रयीभूते भिन्न एवेति ॥ ९६ ॥

ननु यदि कर्त्तृकरणे स्वातन्त्र्यपारतन्त्र्यरूपविरुद्धधर्माश्रयत्वाद् भिन्न एव, तदा एकत्रोभयोः संज्ञयोरप्राप्तौ "करणं पराणि कारकाणि बाधन्ते" इति पर-

आत्मभेदेऽपि सत्येवमेकोऽर्थः स तथा स्थितः ।
तदाश्रयत्वाद् भेदेऽपि कर्तृत्वं बाधकं ततः ।। ९७ ।।

विवक्षाप्रापिते सत्यपि कर्तृकरणतया रूपभेदे स एकोऽर्थः शक्त्याधारः स्थितो न प्रच्यवते रूपादित्यर्थः । अत्रोपपत्तिः—'तदाश्रयत्वात्' इति । कल्पनाश्रयत्वात् । काल्पनिको हि भेदो न वास्तविकमेकत्वं विहन्तीत्यर्थः । यद्वा, तदाश्रयत्वादिति तदेकार्थाधारत्वात् कर्तृकरणसंज्ञयोरिति केचिद् व्याचक्षते । शक्तिभेदेऽपि तदाधारद्रव्यैकत्वादेकः संज्ञयोर्विप्रतिषेधविषय उपपद्यते । संज्ञा हि शक्तिविशिष्टस्य द्रव्यस्यैव । तदेवं वस्तुनि विद्यमानमेकत्वं यदा विवक्षयोपादत्ते तदैकविषयत्वे विप्रतिषेधे परत्वात् कर्तृसंज्ञा करणसंज्ञां बाधत इत्युदाहृतम् 'असिश्छिनत्ति' इति ।

अत्र हि साधकतमत्वाविवक्षाऽविनाभाविनी स्वातन्त्र्यविवक्षाऽसेरित्येक-

---

विप्रतिषेधः कथमुपन्यस्तो भाष्य इत्याशङ्क्याह—आत्मभेदेऽपीति ।

अस्यार्थः—एवम्=पूर्वकारिकोक्तरीत्या, विवक्षाप्रयुक्ते कर्त्तृकरणरूपतया आत्मभेदे कल्पिते स्वरूपभेदे सत्यपि स एकोऽर्थः=शक्तिद्वयाधार एकोऽर्थः, तथास्थितः=एकत्वेनैव स्थितः, न तु एकत्वरूपात् प्रच्युतोऽनेकत्वं भजते । ततश्च तदाश्रयत्वात्=शक्तिद्वयाधारत्वात्, कल्पनाधारत्वाद् वा भेदेऽपि=शक्त्याधारस्य कल्पितभेदसत्त्वेऽपि कर्त्तृत्वं करणत्वस्य बाधकम् 'असिश्छिनत्ति' इत्यादाविति । तदेवं कर्त्तृत्वकरणत्वयोर्विरुद्धयोरेकत्र प्राप्त्या विप्रतिषेधोपपत्तिरिति ।

अयं भावः=स एकोऽर्थो विवक्षाप्रयुक्ते कर्त्तृत्वकरणत्वाभ्यां रूपभेदे सत्यपि शक्त्याधार एक एव स्थितो न प्रच्यवते, एकत्ववतः स्वकीयाद् रूपात् । अत्रोपपत्तिः—'तदाश्रयत्वात्' इति ।

अत्र तत्पदस्य बुद्धिस्थपरामर्शकत्वेन कल्पनाश्रयत्वादित्यर्थः । काल्पनिको हि भेदो न वास्तविकमेकत्वं विहन्तुं क्षमः । यद्वा, कर्त्तृकरणसंज्ञयोस्तदेकार्थाधारकत्वादित्यर्थ इति केचिद् व्याचक्षते । अत्र पक्षे तत्पदेन 'स एकोऽर्थः' इति पूर्वोक्तः परामृश्यते । कर्त्तृत्वकरणत्वरूपयोः शक्त्योर्भेदेऽपि तयोराधारद्रव्यस्यैकत्वात् कर्त्तृकरणसंज्ञयोरेक आधारो विप्रतिषेधविषय उपपद्यते । संज्ञा हि शक्तिविशिष्टस्य शब्दस्यैव, न तु शक्तेरिति धर्मभेदेऽपि धर्म्मभेदान्नैकत्र विप्रतिषेधानुपपत्तिः ।

तदेवं वस्तुनि विद्यमानमेकत्वं यदा वक्ता विवक्षयोपादत्ते तदैकविषयकत्वे सति=तदा संज्ञाद्वयस्यैकाधारकत्वे सति विप्रतिषेधप्रसक्तौ परत्वात् कर्त्तृसंज्ञा करणसंज्ञां बाधत इत्युक्तम्—'असिश्छिनत्ति' इति ।

अत्र हि साधकतमत्वविवक्षाऽविनाभाविनी=नियमेन साधकतमत्वविवक्षासहभाविनी असेः स्वातन्त्र्यविवक्षा इति कर्त्तृकरणरूपसंज्ञाद्वयस्य एकविषयत्वे=

विषयत्वे उभयसंज्ञाप्रसङ्गे परत्वात् कर्तृसंज्ञा। साधकतमत्वे हि सति स्वातन्त्र्य-मारोप्यते। यथा 'धनुषा विध्यति' इत्यपायभावे सत्येव साधकतमत्वं धनुषः। तदेवं क्रियां प्रति प्रकृष्टोपकारकं करणमिति स्थितम् ॥ ९७ ॥

उपकारश्च भवताऽर्थेन क्रियते, न त्वविद्यमानेनेत्येतामाशङ्कामप्यपाकरोति—

यथा च सन्निधानेन करणत्वं प्रतीयते।
तथैवासन्निधानेऽपि क्रियासिद्धेः प्रतीयते ॥ ९८ ॥

दात्रादयः सन्निहिताः क्रियोपकारातिशयमासादयन्तः करणतया यथा प्रज्ञायन्ते, तथैव धनाभावेन मुक्त इत्यादावसन्निहितमपि धनं मुक्तिं साधयत् करणमेव प्रसिद्धम् ॥ ९८ ॥

अत्रैव सूत्रकारमतं संवादकमाह—

स्तोकस्य वाभिनिर्वृत्तेरनिर्वृत्तेश्च तस्य वा।
प्रसिद्धिं करणत्वस्य स्तोकादीनां प्रचक्षते ॥ ९९ ॥

---

एकाधारकत्वे सति उक्तोभयसंज्ञाप्रसङ्गे परत्वात् कर्तृसंज्ञा। यतो हि असौ साधकतमत्वे सति स्वातन्त्र्यमारोप्य 'असिश्छिनत्ति' इत्युच्यते। यथा 'धनुषा विध्यति' इत्यत्र अपायभावे = विभागरूपे भावे अपादानत्वप्रयोजके सत्येव साधकतमत्वं धनुष इति विप्रतिषेधे अपादानसंज्ञां बाधित्वा परत्वात् करणसंज्ञा। तदेवं क्रियां प्रति प्रकृष्टोपकारकम् = प्रकृष्टोपकारकत्वेन विवक्षितं करणमिति स्थितम् ॥ ९७ ॥

ननु क्वचिदप्युपकारो भवता = विद्यमानेन अर्थेन क्रियते, अविद्यमानस्योपकर्तुमसामर्थ्यात्। तथा च एकेन न विंशतिरित्यत्र कथमविद्यमानस्यैकस्य विंशतिनिषेधे करणत्वमित्याशङ्कामपि करणत्वविमर्शे प्रसङ्गागतामपाकरोति— **यथा च सन्निधानेनेति।**

अस्यार्थः—यथा च = यथैव, सन्निधानेन दात्रादीनां लवनादिक्रियां प्रति प्रकृष्टोपकारकत्वेन विवक्षितानां करणत्वं प्रतीयत इति।

अयं भावः—यदा दात्रादयः सन्निहिता लवनादिक्रियासूपकारकत्वातिशयमासादयन्तः करणतया प्रज्ञायन्ते, तथैव एकेन न विंशतिरित्यादावसन्निहितमपि एकत्वं संख्यारूपं विंशतिसंख्यानिषेधं साधयत् करणमेव प्रसिद्धमिति।

यत्तु हेलाराजेनोक्तम्—"धनाभावेन मुक्त इत्यादावसन्निहितमपि धनं मुक्तिं साधयत् करणमेव प्रसिद्धम्" इति। तच्चिन्त्यम्—धनाभावस्यैवात्र शब्दतः करणत्वात्। असन्निहितस्य तु आर्थिकं करणत्वं न विभक्त्युत्पत्तावुपयोगीति ॥९८॥

सन्निहितस्य असन्निहितस्य वा क्रियां प्रति साधकतमस्य करणत्वमित्यत्रैव सूत्रकारमतं संवादकमाह—**स्तोकस्य वाऽभिनिर्वृत्तेरिति।**

'करणे च स्तोकाल्प·····' (पा० २।३।३३) इत्यत्रोदाहरणम्— 'स्तोकान्मुक्तः, स्तोकेन मुक्तः' इति। अत्र सत्त्ववचनानामपि स्तोकादीनां धर्ममात्राभिधानतात्पर्येण प्रयोगादसत्त्ववचनता। तच्च धर्ममात्रं स्तोकत्वलक्षणं सदसद्वा मुक्तिक्रियायामतिशयेनोपकारकं करणमित्युक्तम्। यस्मात् स्तोकं देववस्तुनो निष्पन्नम्, न चान्यत् सम्भवति निष्किञ्चनत्वात्, अतो मुक्तः। यदि वा स्तोकं देयवस्तुनोऽवशिष्टमवसितं ततो मुक्तः। यदि तु बहु देयं

---

अस्यार्थः—'स्तोकेन मुक्तः' इत्यादौ बन्धनहेतोर्द्रव्यस्य सम्बन्धिनः स्तोकस्य =स्तोकभागस्य अभिनिर्वृत्तेर्वा - निष्पत्तेर्वा। अत्र 'वा'शब्दश्चार्थे। निष्पन्नश्च कारणाद् मुक्त्यादौ स्तोकादीनां करणत्वस्य प्रसिद्धिः प्रचक्षते। तथा हि— यत्र बन्धनहेतुभूतं बहुदेयं द्रव्यमस्ति, तत्र देयवस्तूनां स्तोकं भागभूतं द्रव्यमधमर्णस्य निष्पन्नं निष्किञ्चनत्वश्चान्यन्न सम्भवत्युत्तरत्र। अतः स्तोकेनैव निष्पन्नेन दत्तेन धनेन मुच्यते। वा=अथवा, तस्य=स्तोकस्य, अनिर्वृत्तेश्च =अनिष्पत्तेश्च, मुक्त्यादौ स्तोकादीनां करणत्वस्य प्रसिद्धिः प्रचक्षते। तथा हि अत्रास्ति प्रकारद्वयम्—यदा बन्धनहेतोर्द्रव्यस्य विपुलस्य देयस्य बहुभागो दत्तोऽधमर्णेन, स्तोकं तु अवशिष्टम्, तदपि यदा दत्तम्, तदा भवति स्तोकेन देयस्यावशिष्टेन दत्तेन मुक्त इति एकः प्रकारः।

अन्यस्तु प्रकारः—यदि देयद्रव्यस्य विपुलो भागो दत्तोऽधमर्णेन, स्तोकं तु दातुमवशिष्यते, तदपि कालविलम्बेन शनैः शनैः दातुं शक्यत इत्यस्ति सम्भावना, तदाऽप्युच्यते स्तोकेन अवशिष्टेन तदनीं 'भवता मुक्तः' इत्ययं विकल्पो न पूर्वकल्पेन गतार्थो भवति, स्तोकस्य निष्पत्तिसम्भावनाभ्यां भेदादिति।

अयं भावः—'करणे च स्तोकाल्प' (पा० २।३।३३) इत्यादिसूत्रे उदाहरणं दत्तं भाष्ये—'स्तोकेन मुक्तः' इति। बन्धनहेतोर्देयद्रव्यस्य यो दत्तावशिष्टो भागस्तस्य स्तोकत्वेन मुक्त इत्यर्थः।

अत्र सूत्रे यद्यपि स्तोकादिशब्दाः सत्त्ववचनाः=द्रव्यवचनाः, तथापि तेषां लोके स्तोकत्वादिधर्ममात्राभिधानतात्पर्येण प्रयोगादसत्त्ववचनता=अद्रव्यवचनता। तच्च धर्ममात्रं स्तोकत्वलक्षणं सदसद्वा=विद्यमानमविद्यमानं वा मुक्तिक्रियायामतिशयेनोपकारकं करणमित्युक्तम्। यस्माद् बन्धनहेतुभूतस्य देयवस्तुनः सम्बन्धि स्तोकं द्रव्यमधमर्णस्य निष्पन्नम्, निष्किञ्चनत्वात्तु निष्पन्नद्रव्यादन्यदुत्तरत्र काले निष्पत्तुं शक्यं न सम्भवति। अतः स्तोकेनैव निष्पन्नेन मुक्त इत्युच्यते।

यद्वा, बन्धनहेतोर्देयवस्तुनः स्तोकमवशिष्टं बहु तु प्राग् दत्तम्, अवशिष्टमपि दानेनावसितम्=अवसानं गतम्, सर्वं दत्तमिति यावत्। ततो भवति—स्तोकेनापि दत्तेन मुक्त इति एकः कल्पः। यदि तु देयस्य बहुभागो दत्तः स्तोकं तु दातुमवशिष्टम्,

स्यात्, न मुच्येतेति स्तोकेन भवता मुक्तः। एवमेकेन न विंशतिरेकान्न विंशतिरिति एकाभावो विंशतिनिषेधस्य करणम् ॥ ९९ ॥

तदेवं विवक्षाधीनत्वात् साधनव्यवहारस्य यद् यत् साधकतमत्वेन विवक्ष्यते तत्तत्करणम्। तथा च—

धर्माणां तद्वत्ता भेदाऽभेदाच्च विशिष्यते।
क्रियाऽवधेरवच्छेदविशेषाद् भिद्यते यथा ॥ १०० ॥

आश्रितमात्रं धर्मशब्देनाह। तद्वत्ता' इत्याश्रयेण। तथा हि 'देवदत्तः काष्ठैः पचति' इतीन्धनगतस्य तेजसस्तदभेदविवक्षया प्रयोगः। तथा च देवदत्तकर्तृकेन्धनकरणिका चेयं पचिक्रिया। यदा तु तेजो भेदेनेन्धनात् विवक्ष्यते, तदा 'एधाः पक्ष्यन्ति तेजसा' इति तेजःकरणिकेन्धनकर्तृका च पचिक्रिया। यदाप्यौष्ण्यं

---

तदपि शनैः शनैः दातुं शक्यते दीर्घकालेनेत्यस्ति सम्भावना। तदानीन्तु स्तोकं नास्ति निष्पन्नम्, तदा प्रयोगः—'तदानीं भवता स्तोकेन मुक्तः' इति। यदि तु बहुदेयं तदानीमवशिष्टं स्यात्, ततो न मुच्यते, उत्तरत्र देयद्रव्यस्य निष्पत्तिसम्भावनायामिति। एवमेकेन न विंशतिरेकान्न विंशतिरिति एकाभावो विंशतिनिषेधस्य करणमुदाहार्यमिति ॥ ९९ ॥

तदेवं साधनपदार्थस्येदन्तया ईदृक्तया चाव्यवस्थितत्वेन साधनव्यवहारस्य विवक्षाधीनत्वाद् यद् यत् साधकतमत्वेन विवक्षितं भवति तत्तत्करणम्, तदाह— धर्माणां तद्वत्ता इति।

अस्यार्थः—धर्माणाम् = आश्रितानां भावानाम्, तद्वत्ता सह = स्वाश्रयेण सह, भेदाद् = भेदविवक्षातः, अभेदाच्च = अभेदविवक्षातश्च करणं भिद्यते। यथाऽवधेरवच्छेदविशेषाद् = भेदविशेषात् क्रिया भिद्यते। तत्र धर्मस्य धर्मिणा सहाभेदविवक्षातः करणप्रयोगः, यथा—काष्ठैः पचति। अत्र काष्ठतेजसोर्धर्मधर्मिणोरभेदविवक्षातः काष्ठैरिति करणप्रयोगः। धर्मधर्मिणोर्भेदविवक्षया करणप्रयोगस्तु—'एधाः पचन्ति तेजसा,' 'तेजः पचत्यौष्ण्येन' इति। अवधेर्भेदविशेषात् क्रियाभेदो यथा—'ग्रामादागच्छति, ग्रामसमीपादागच्छति' इति।

अयं भावः कारिकायाम् 'धर्माणाम्, इति धर्मशब्देन आश्रितमात्रं धर्मधर्मिसाधारणमुच्यते। तद्वत्ता इत्यस्याश्रयेण इत्यर्थः। काष्ठैः पचति इति काष्ठगतस्य व्यक्तस्य तेजसः काष्ठाभेदविवक्षया करणत्वेन प्रयोगः। तथा च देवदत्तकर्तृका काष्ठकरणिका चेयं पाकक्रियेति बोधः। यदा तु तेजः काष्ठाद् भेदेन विवक्ष्यते, तदा काष्ठं कर्तृ तेजस्तु करणमिति 'काष्ठानि पचन्ति तेजसा' इति तेजसः करणत्वेन प्रयोगः। तेजःकरणिका काष्ठकर्तृका च पचिक्रियेति बोधः।

तेजसो भेदेन क्रियासिद्धावुपयोगवद् विवक्ष्यते, तदा 'तेजः पचत्यौष्ण्येन' इति भिद्यते साधनविशेषात् क्रिया। तद्यथाऽवधेर्ग्रामादेरवच्छेदविशेषाद् भेदविशेषात् क्रिया भिद्यते, विशिष्यते 'ग्रामादागच्छति', 'ग्रामस्य समीपादागच्छति' इत्यादौ, तद्वदत्रापि बोद्धव्यमित्यर्थः। सारण्यके ससीमके सस्थण्डिलके हि ग्रामशब्दाभिधेयेऽभेदेन 'ग्रामदागच्छति' इति प्रयोगः। वाटपरिक्षिप्ते तु ग्रामशब्दाभिधेये सीमादीनां भेदविवक्षेति 'ग्रामस्य समीपादागच्छति' इति भिद्यतेऽवधिः। तद्भेदाच्च क्रिया विशिष्यते। एवं वैवक्षिककरणभेदादपि। यथाविवक्षं च तदेव प्रधानकरणं तृतीयावद्धातुप्रत्ययेन ल्युटा घञा वाभिधीयते, 'पचनमेधः, पचनं तेजः, पचनी स्थाली, पचनमौष्ण्यम्' इत्यादि यथाविवक्षमुदाहार्यं प्रयोगजातमिष्टम् ॥ १०० ॥

॥ इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे साधनसमुद्देशे करणाधिकारः ॥



---

यदापि औष्ण्यं तेजसो भेदेन क्रियासिद्धौ उपयोगितया विवक्ष्यते, तदा 'तेजः पचत्यौष्ण्येन' इत्येवं साधनभेदात् पाकक्रिया भिद्यते। तद् यथा- 'अवधेर्ग्रामादेरवच्छेदविशेषाद् भेदविशेषादागमनक्रिया भिद्यते विशिष्यते 'ग्रामादागच्छति', 'ग्रामसमीपादागच्छति' इत्यादौ तद्वदत्रापि=उक्तेषु करणोदाहरणेष्वपि, धर्मधर्मिणोर्विवक्षातोऽभेदविवक्षातश्च करणभेदो बोद्धव्यः। सारण्यके ससीमके सस्थण्डिलके हि ग्रामशब्दाभिधेयेऽरण्यसीमस्थण्डिलानां ग्रामाभेदेन 'ग्रामादागच्छति' इति प्रयोगः। वाटपरिक्षिप्ते=परितो मार्गवेष्टिते तु ग्रामशब्दाभिधेये सीमारण्यस्थण्डिलानां ग्रामाद् भेदविवक्षेति 'ग्रामस्य समीपादागच्छति' इति अवधिर्भिद्यते। तद्भेदाच्च क्रियाऽपि भिद्यते। एवं पूर्वोदाहृतेषु वैवक्षिककरणभेदादपि क्रिया भिद्यते। विवक्षामनुसृत्य च तदेव प्रधानं करणं धातुविहितप्रत्ययेन ल्युटा घञा वा तृतीयावदभिधीयते। 'पचनं काष्ठम्, पचनं तेजः, पचनमौष्ण्यम्, पचनी स्थाली' इत्यादि इष्टं प्रयोगजातं यथाविवक्षमुदाहार्यमिति ॥१००॥

॥ इति श्रीकाशीनाथतनयरघुनाथोपज्ञातायामम्बाकर्त्र्यां साधनसमुद्देशे करणाधिकारः ॥



# अथ कर्त्तृविचारः

तृतीयार्थे करणे विचारिते सम्प्रति तदर्थः कर्ता विचार्यते। तस्य लक्षणम्–"स्वतन्त्रः कर्ता" (पा० १।४।५४) इति।

स्व आत्मा तन्त्रं प्रधानमस्य। करणादीनां हि परः कर्तैव तन्त्रं प्रधानम्, क्रियासिद्धौ तेन प्रयोज्यत्वात्। कर्ता त्वनन्यप्रयोज्यः स्वतन्त्र इत्युच्यते। तत्र करणादीनामपि स्वव्यापारे स्वातन्त्र्यात् कोऽतिशयः कर्तुरित्याशङ्क्योपपादयति–

प्रागन्यतः शक्तिलाभान्न्यग्भावापादनादपि।
तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्तनात्॥ १०१॥
अदृष्टत्वात् प्रतिनिधेः प्रविवेके च दर्शनात्।
आरादप्युपकारित्वे स्वातन्त्र्यं कर्तुरुच्यते॥ १०२॥

---

तृतीयार्थे करणे विचारिते सम्प्रति प्राप्तावसरस्तदर्थः कर्त्ता विचार्यते। तस्य लक्षणं सूत्रकृतोक्तम्–"स्वतन्त्रः कर्त्ता" (पा० १।४।५४) इति। अत्र तन्त्र-शब्द आयत्तापरपर्यायाधीनवचनः। अत एव काव्यप्रकाशग्रन्थस्य मङ्गलपद्यस्यावसरे 'अनन्यपरतन्त्राम्' इति पदे तन्त्रपदस्यायत्तवचनत्वमेवोक्तं प्रदीपे।

यत्तु अत्र श्रीहेलाराजेनोक्तम्–"स्व आत्मा तन्त्रं प्रधानमस्य। करणादीनां हि परः कर्त्तैव तन्त्रं प्रधानम्, क्रियासिद्धौ तेन प्रयोज्यत्वात्। कर्ता तु अनन्य-प्रयोज्यः स्वतन्त्र इत्युच्यते" इति, तच्चिन्त्यम्, तन्त्रशब्दस्य प्रधानवाचित्वे प्रमाणा-भावात्। किञ्च, तन्त्रशब्दस्य आयत्तवचनत्वमुररीकृत्य परस्य तन्त्र इति षष्ठी-तत्पुरुषाभ्युपगमे वर्त्तिपदार्थप्राधान्यम्। बहुव्रीहौ तु अन्यपदार्थप्राधान्यमिति हेयः स पन्था इति। तत्र करणादीनामपि स्वव्यापारे स्वातन्त्र्यात् कोऽतिशयः–कीदृशा-तिशयप्रयुक्तो भेदः कर्त्तुरित्याशङ्क्योपपादयति– प्रागन्यत इति, अदृष्टत्वात् प्रति-निधेरिति च।

अस्य युग्मस्यार्थः–करणादिप्रवृत्तेः प्राग् एव अन्यतः–अर्थित्वसामर्थ्या-पर्युदस्त्वादिकर्त्तुः शक्तिलाभादित्येकः कर्त्तुः स्वातन्त्र्ये हेतुः। नहि सहकारिभ्य एव कर्त्ता स्वव्यापारानुकूलां शक्तिमासादयति, करणादिप्रवृत्तेः प्रागेव तादृशशक्तिम-त्त्वात्। करणादीनां तु कर्त्तृगतप्रैषादेव स्वव्यापारे स्वातन्त्र्यम्, नान्यत इति कर्त्तुः करणादीनाञ्च विशेषः। अत एव कर्त्रा करणादीनां न्यग्भावापादनादपि, स्वायत्त-व्यापारकत्वेन आत्माधीनत्वापादनादपि कर्त्तुः स्वातन्त्र्यमिति अपरो विशेषस्तेभ्य-स्तस्य। तदधीनप्रवृत्तित्वात्–करणादीनां कर्त्रधीनप्रवृत्तिकत्वादिति तृतीयो विशेषः

करणादिप्रवृत्तेः प्राग् एवार्थितादेरपरस्मान्निमित्तात्, न तु सहकारिभ्य एव सामर्थ्यमासादयति। फलकामो हि कर्ता करणादीन्युपार्जयते। तथा च पूर्वमेव शक्तिमान् स्वतन्त्रः। करणादीनां तु कर्तृविनियोगादेव स्वव्यापारे स्वातन्त्र्यम्, न त्वन्यतः। अत एव कर्त्रा न्यग्भावमात्माधीनतामापाद्यन्ते, तदायत्तव्यापाराश्च। कर्ता तु फलार्थमीहमानः स्वयं व्यापारवान्। अतिप्रवृत्तानि च करणादीनां निवर्त्यन्ते कर्त्रा। स तु फलप्राप्तौ स्वयमेव निवर्तते। चोदितासम्भवे करणादीनां

---

करणादिभ्यः कर्त्तुः। कर्त्ता तु फलार्थं प्रयतमानः स्वयं व्यापारवान्, न तु करणादिरूपसहकार्यधीनप्रवृत्तिक इति, प्रवृत्तानां निवर्त्तनादिति चतुर्थो विशेषः। फलप्राप्त्युत्तरमपि प्रवृत्तानां करणादीनां कर्त्रा निवर्त्तनादित्यर्थः। कर्त्ता तु फलप्राप्त्युत्तरं स्वयं निवर्त्तत इति। अदृष्टत्वात् प्रतिनिधेरिति पञ्चमो विशेषः। चोदितासम्भवे करणानां दर्भादीनां शरादिरूपप्रतिनिधिदर्शनेऽपि कर्त्तुः क्वापि प्रतिनिधेरदर्शनात्। प्रतिनिधीयमानस्यापि क्रियायामधिकारेण कर्तृत्वस्य मुख्यस्यैव सत्त्वात्। प्रविवेके च दर्शनादिति कर्त्तुः षष्ठो विशेषः। प्रविवेके च कारकान्तराणामभावेऽपि 'अस्ति, भवति, विद्यते' इत्यादौ कर्त्तुर्दर्शनात्, कर्त्तुरभावे च करणादीनामदर्शनादित्यर्थः। तथा च कर्त्तुः कारकान्तरव्यापारव्यवधानेन क्रियासिद्धौ आराद्=दूरादुपकारकत्वेऽपि एतैः षड्भिर्विशेषैः प्राधान्यप्रयुक्तं प्रधानक्रियायां स्वातन्त्र्यमुच्यते। करणादीनां तु स्वव्यापारे स्वातन्त्र्येऽपि न प्रधानक्रियायां स्वातन्त्र्यमिति बोध्यमिति।

अयं भावः—करणादीनां प्रवृत्तेः प्रागेव करणादिभ्योऽन्यो निमित्तादर्थित्वसामर्थ्यापर्युदस्तत्वादिनः कर्त्तुः करणादिप्रवृत्त्यनुकूलशक्तिलाभात्. न तु सहकारिभ्य एव करणादिभ्यः कर्त्ता शक्तिमासादयति; किन्तु तस्य सा शक्तिः करणादिप्रवृत्तिप्राग्भागित्वादन्यनिमित्तसम्भवैव। फलकामो हि कर्त्ता करणादीन्युपार्जयते= स्वसहकारितया करणादीनि सङ्गृह्णाति। तथा च करणादिप्रवृत्तेः पूर्वमेव शक्तिमान्, यतोऽतः स्वतन्त्रः। करणादीनान्तु कर्त्तृविनियोगादेव=कर्त्तृप्रेषादेव स्वव्यापारे स्वातन्त्र्यम्, न तु अन्यतो निमित्तादिति कर्त्तृपरतन्त्रास्ते। अत एव कर्त्रा। न्यग्भावमात्माधीनतामापाद्यन्त इति कर्त्तुः स्वातन्त्र्यम्।

किञ्च, कर्त्रधीनव्यापारवन्तश्च करणादय इति कर्त्तुः स्वातन्त्र्यम्। कर्त्ता तु फलार्थं यतमानः स्वयं व्यापारवान्, न तु करणादिप्रयोज्यः कर्त्तुर्व्यापारः। फलसिद्ध्युत्तरमतिप्रवृत्तानि करणादीनि कारकाणि कर्ता निवर्त्तयति। स तु फलप्राप्तौ सत्यां स्वयमेव निवर्त्तते, न तु तस्य कश्चिदन्यो निवर्त्तकः। श्रुतिचोदितानां दर्भसोमादीनां कर्मकरणादीनामसम्भवे = अलाभे शरपूतीकतृणादयः प्रतिनिधिनोक्ताःते कर्त्तुस्तु क्वापि प्रतिनिधिर्नोक्तः। कर्त्रन्तरन्तु तस्य प्रतिनिधिर्नोच्यते। तस्याप्यर्थिनः समर्थस्यापर्युदस्तस्य=अप्रतिषिद्धस्य क्रियानिवर्त्तकत्वेन स्वयमेवाधिकारात्। प्रविवेके च कारकान्तराणामभावेऽपि कर्त्ता दृश्यते। तद् यथा—'अस्ति, भवति,

प्रतिनिधिरुक्तः। कर्तुः स नास्ति। कर्त्रन्तरं हि क्रियां निर्वर्तयत् प्रतिनिहितं नोच्यते, तस्यार्थिनः समर्थस्यापर्युदस्तस्याधिकारात्। प्रविवेके च कारकान्तराणामभावे दृश्यते कर्ता, तद्यथा 'अस्ति, भवति, विद्यते' इत्यादौ। यद्यप्यत्राधिकरणादयः सम्भवन्ति, तथापि नान्तरीयकास्ते शब्दव्यापारादप्रतीयमानाः ततश्चाकर्तृकायाः क्रियाया अभावात् सम्भूयकारिभ्योऽपि विशिष्यते कर्ता। एतेन हेतुकलापेन कर्तुः करणापेक्षया क्रियासिद्धौ विप्रकृष्टोपकारकत्वेऽपि स्वातन्त्र्यं प्राधान्यनिबन्धनमुच्यत इति तस्यैव कर्तृसंज्ञा, न तु करणादेः स्वव्यापारे स्वतन्त्रस्यापीत्यर्थः। एतेन चेदं भाष्यं व्याख्यातम्—"यत् सर्वेषु सन्निहितेषु साधनेषु कर्ता प्रवर्तयिता भवति" ( म० भा० १।४।२३ ) इति।

एतच्च भाष्यं गर्भीकृतनान्तरीयकार्थं संक्षिप्योक्तमिति गर्भीकृतार्थव्यक्तीकारेणात्र व्याख्यातम्। तथा हि 'तदधीनप्रवृत्तित्वात्' इत्यनेन साक्षात् प्रवर्तकत्वं व्याख्यातम्। सामर्थ्याक्षिप्तं च न्यग्भावनादि निर्दिष्टम्।

---

विद्यते' इत्यादौ। यद्यप्यत्राधिकरणादयः सम्भवन्ति इति कथं तेषां प्रविवेक उच्यत इति वक्तुं शक्यते, तथापि नान्तरीयकास्ते=क्रियाऽविनाभाविनस्ते शब्दव्यापारादप्रतीयमाना इति तेषां प्रविवेक उच्यते। ततश्च अकर्तृकायाः क्रियाया असम्भवात् सर्वत्र शब्दोपात्त एव कर्त्तेति सभूयकारिभ्योऽपि करणादिभ्यः कर्त्ता विशिष्यते=शब्दात्प्रतीयमानत्वरूपेण धर्मेण भिद्यते। तदेवं कर्त्तुः करणापेक्षया क्रियासिद्धौ विप्रकर्षेणोपकारकत्वेऽपि एतेन हेतुकलापेन=प्रागन्यतः शक्तिलाभादित्यादिना हेतुषट्केन प्राधान्यनिबन्धनं स्वातन्त्र्यमुच्यत इति तस्यैव=प्रधानक्रियायां स्वतन्त्रस्यैव कर्त्तृसंज्ञा, न तु करणादेः स्वव्यापारे स्वतन्त्रस्यापि प्रधानक्रियायां कर्त्तृपरतन्त्रत्वात्, कर्त्तृविनियोगादेव हि तत्र तस्य प्रवृत्तिरिति।

एतेन पद्यद्वयेन चेदं भाष्यं व्याख्यातम्—"यत्सर्वेषु साधनेषु सन्निहितेषु कर्त्ता प्रवर्त्तयिता भवति।" अतस्तत्र तस्यैव स्वातन्त्र्यमिति। एतच्च भाष्यम् "प्रागन्यतः शक्तिलाभात्" इत्यादिकं स्वार्थस्य नान्तरीयकमर्थपञ्चकं स्वार्थे गर्भीकृत्य संक्षिप्योक्तमिति तद् गर्भीकृतार्थव्यक्तीकारेणात्र पद्यद्वयेन व्याख्यातम्।

तथा हि—कारिकायां 'तदधीनप्रवृत्तित्वाद्' इत्यनेन भाष्योक्तं कर्तुः प्रवर्त्तकत्वं साक्षाद् व्याख्यातम्। भाष्ये गर्भीकृतं प्रवर्त्तकत्वेन सामर्थ्याक्षिप्तश्च न्यग्भावनादिपञ्चकमत्र कण्ठतो निर्दिष्टम्। तथा हि करणादीनां प्रवृत्तेः प्रयोक्त्रधीनत्वात्=कर्त्रधीनत्वात् कर्तृकृतः करणादीनां न्यग्भावस्तत्र=भाष्ये अर्थादुक्तः। सा च कर्तृकृता करणादीनां प्रवर्त्तना प्रैषरूपा फलार्थमिति फलप्राप्तौ सत्यां करणादीनामतिप्रवृत्तौ=फलप्राप्तिमतिक्रम्य प्रवृत्तौ प्राप्तायां कर्तृकृता तेषां निवर्त्तनापि अर्थादाक्षिप्तात्र स्पष्टमुक्ता। प्रवर्त्तयिता चावश्यं प्रवर्त्यादन्यतः शक्तिं प्रवर्त्यानां

तथा हि प्रयोक्त्रधीनत्वात् प्रवृत्तेर्न्यग्भावः करणादीनां तत्रार्थोक्तः। सा प्रवर्तना च फलार्थमिति तत्प्राप्तावतिप्रवृत्तौ निवर्तनाप्याक्षिप्ता। प्रवर्तयिता चावश्यं प्रवर्त्यादन्यतः शक्तिं प्राग् लभत इति तदपि व्याख्यातम्। असम्भवे च प्रवर्तयितुरेवाभाव इति प्रतिनिध्यभावः सामर्थ्योक्तो विवृतः। साक्षात्समर्थस्य क्वचिदन्यानपेक्षणात् प्रविवेके च दर्शनं सामर्थ्यलभ्यं व्याख्यातमिति समस्याभिहितं भाष्यं व्यस्य व्याख्यातम्॥ १०१।१०२॥

अचेतनेषु तर्ह्येवंविधधर्मकलापाभावात् कर्तृता न प्राप्नोतीत्याशङ्क्याह—

धर्मैरभ्युदितैः शब्दे नियमो न तु वस्तुनि।
कर्तुर्धर्मविवक्षायां शब्दात् कर्ता प्रतीयते॥ १०३॥

अभ्युदितैः उक्तैरेतैः प्रागन्यतः शक्तिलाभादिभिः प्रवर्तयितृत्वादि(द्वि)-लक्षणैः धर्मैः स्वभावैरुपलक्षितः 'स्वतन्त्रः कर्ता' इत्येवंलक्षणो नियमोऽवश्यंभावः शब्दविषये समाश्रयणीयः। शब्देन यस्यैते धर्माः प्रत्याय्यन्ते स कर्ता बोद्धव्यः, न तु वस्तुविषयतया धर्माणामेषां सम्भवोऽन्वेषणीयः, येनाचेतनविषये 'अग्निर्दहति',

प्रवृत्तेः प्राग् लभत इति वस्तु भाष्ये तिरोहितमत्र स्पष्टमुक्तम्। कर्त्तुरसम्भवे च प्रवर्त्तयितुरेवाभाव इति कर्त्तुः प्रतिनिध्यभावे भाष्ये सामर्थ्योक्तोऽत्र विवृतः। साक्षात्समर्थस्य क्वचिदन्यानपेक्षणात् प्रविवेके च दर्शनं भाष्ये सामर्थ्यलभ्यमत्र शब्दतो व्याख्यातमिति समस्य=संक्षिप्य अभिहितं भाष्यमत्र व्यस्य=विस्तीर्य व्याख्यातमिति॥ १०१-१०२॥

अचेतनेषु तर्हि एवंविधधर्मकलापाभावात्=कर्त्तृलक्षणत्वेनाभ्युपगतप्रवर्त्तकत्वादिरूपधर्मषट्काभावात् कर्तृता न प्राप्नोति 'अग्निर्दहति, काष्ठानि पचन्ति' इत्यादौ इत्याशङ्क्याह--धर्मैरभ्युदितैरिति।

अस्यार्थः -- अभ्युदितैः=पूर्वकारिकयोरुक्तैः, प्रागन्यतः शक्तिलाभादिभिर्धर्मैर्यो नियमः कर्तृलक्षणनियमः क्रियते स शब्दे उक्तधर्मषट्कप्रत्यायकशब्दे सति प्रतीयमानः समाश्रयणीयः। शब्देन यस्यैते धर्माः प्रत्याय्यन्ते स कर्त्ता बोद्धव्य इत्यर्थः। न तु वस्तुनि एषां धर्माणां सम्भवोऽन्वेषणीयः। ततश्च अचेतनेऽपि कर्त्तुर्धर्मषट्कस्य प्रागुक्तस्य असतोऽपि आरोप्य विवक्षायां वह्निर्दहतीत्यादौ अचेतनवाचकशब्दादपि कर्त्ता वस्तुतोऽप्रतिष्ठितोक्तलक्षणोऽपि सुप्रतिष्ठितलक्षणः प्रतीयत इति।

अयं भावः - अभ्युदितैः=उक्तैः एतैः प्रागन्यतः शक्तिलाभादिभिः=भाष्योक्तात् प्रवर्त्तयितृत्वाद् विलक्षणैः धर्मैः, स्वभावैः=असाधारणधर्मैः उपलक्षितः 'स्वतन्त्रः कर्त्ता' इत्येवं लक्षणो नियमोऽवश्यंभावः शब्दविषये समाश्रयणीयः=प्रागुक्तानां सम्भवोऽन्वेषणीयः, येनाचेतनविषये 'अग्निर्दहति, एधाः पचन्ति, स्थाली

'एधाः पचन्ति,' 'स्थाली पचति' इत्यादौ 'कूलं पतति', 'नदी वहति' इत्यादौ च कर्तृत्वं न स्यात्। एते हि धर्मा यदा कर्तृलक्षणाय विवक्ष्यन्ते, शब्देन च यथाविवक्षं प्रत्याय्यन्ते, तदा शब्दात् कर्ता सुप्रतिष्ठितलक्षणः प्रतीयत इति करणमिव कर्तापि वैवक्षिकः प्रतिपादितः। एवं च कृत्वाचेतनेषूपचरितमपि न भवति कर्तृत्वम्, सर्वत्रास्खलद्वृत्तित्वात् प्रयोगस्य मुख्यतासम्भवात्। व्याकरणे हि शब्दार्थोऽर्थः, न वस्त्वर्थः। ततश्च व्याकरणान्तरे 'अर्थी कर्ता', 'तथायुक्तश्च' इति लक्षणद्वयं चेतनाचेतनविषयतया यत् प्रणीतं तन्न कौशलमित्युक्तं भवति ॥ १०३ ॥

यदा च विवक्षाधीनं स्वातन्त्र्यं तदेदमपि सिद्धं भवतीत्याह—

**एकस्य बुद्ध्यवस्थाभिर्भेदे च परिकल्पिते।**
**कर्मत्वं करणत्वं च कर्तृत्वं चोपजायते ॥ १०४ ॥**

---

पचति' इत्यादौ वैवक्षिके कर्त्तरि 'कूलं पतति, नदी वहति' इत्यादौ च स्वाभाविके कर्त्तरि कर्त्तृत्वम्=कर्त्तृसंज्ञा न स्यात्। एते हि धर्माः=प्रागन्यतः शक्तिलाभादयः षट् यदा कर्त्तृलक्षणाय=अचेतने कर्त्तृत्वबोधनाय अध्यारोप्य विवक्ष्यन्ते, यथाविवक्षं शब्देन प्रत्याय्यन्ते च, तदा शब्दात् कर्त्ता अचेतने वस्तुतोऽप्रतिष्ठितलक्षणोऽपि सुप्रतिष्ठितलक्षणः प्रतीयत इति करणमिव कर्त्तापि वैवक्षिकः=विवक्षया कृतः प्रतिपादितः। एवञ्च कृत्वा अचेतनेष्वपि काष्ठवह्न्यादिषु कर्त्तृत्वं नोपचरितम्=नारोपितं भवति। 'धातोः कर्मणः' (पा ३।१।७) इति सूत्रभाष्योक्तरीत्या सर्वस्यापि चेतनत्वेन कर्त्तृत्वप्रयोजकस्य धर्मषट्कस्य प्रागुक्तस्य काष्ठादिष्वपि सत्त्वात्, 'काष्ठानि पचन्ति' इत्यादिप्रयोगस्य अबाधेन सर्वत्रास्खलद्गतित्वाद् काष्ठादिष्वपि कर्त्तृत्वस्य मुख्यतासम्भवाच्च। व्याकरणे हि शब्दार्थः=शब्दात् प्रतीयमानः अर्थः, न तु वस्तुभूत एवार्थः। ततश्च व्याकरणान्तरे—'अर्थी कर्त्ता', 'युक्तश्च कर्ता' इति कर्त्तुर्लक्षणद्वयं यथायथं चेतनाचेतनविषयकतया यत्प्रणीतं तन्न प्रणेतुः कौशलम्=सूत्रनिर्माणनैपुण्यम् "स्वतन्त्रः कर्त्ता" (पा० १।४।५४) इत्येकेनैव सूत्रेण प्रागुक्तरीत्या कर्तृलक्षणसम्भवे सूत्रद्वयप्रणयने गौरवादित्युक्तं भवति। तत्र यः फलार्थी स कर्ता इति चेतनविषयकस्य प्रथमसूत्रस्यार्थः। यथा फलार्थी कर्ता प्रागुक्तेन धर्मषट्केन युक्तः, तथाऽचेतनः फलार्थित्वाभावेऽपि यदि धर्मषट्केन आरोपितेन अनारोपितेन वा युक्तस्तदा सोऽपि कर्ता इति अचेतनविषयकस्य द्वितीयसूत्रस्यार्थ इति बोध्यम् ॥ १०३ ॥

यदा च विवक्षाऽधीनं स्वातन्त्र्यं तदेदमपि आत्मानमात्मना हन्तीत्यादौ एकस्य कर्तृत्वं कर्मत्वं करणत्वञ्चापि सिद्धं भवति इत्याह—एकस्य बुद्ध्यवस्थाभिरिति।

'हन्त्यात्मानमात्मना' इत्येकस्यैवात्मनो विवक्षाप्रापितरूपभेदाधीनः कारकत्रययोगो दृश्यते। स वास्तवे कारकव्यवहारे न घटनामेति। न ह्येकस्य वस्तुनो युगपद् भिन्नानेकरूपता शक्याऽवसातुम्। न चामूर्तस्यात्मनः शस्त्रादिव्यापारजन्यवधसम्भवः। विवक्षा तु शब्दनिबन्धना न विहन्यतेऽत्र। तथा हि बुद्धेरवस्था प्रतिभासनानात्वम्, तदनुसारेण विवक्षया भेदपरिकल्पः। शस्त्राद्युद्यमननिपातनव्यापारवान् हन्तीति कर्ता। आत्मैवात्र विषयभावापतितस्तथैव कर्म। सौकर्यातिशयविवक्षायां शस्त्रादिव्यापारस्य निरासे करणत्वमात्मनः। कर्मकरणे ह्यन्यत्र भेदेन दृष्टे इति तन्निरासाय कर्तैवात्र तथोच्यते भेदेन। अत एव वार्त्तिके कर्मवद्भावोऽनेन न्यायेन प्रत्याख्यातः।

---

अस्यार्थः—'आत्मानमात्मना हन्ति, सृजत्यात्मानमात्मना' इत्यादौ एकस्यैवात्मवस्तुन बुद्ध्यवस्थाभिः=बुद्धिपरिणामविशेषैर्विवक्षारूपैः, भेदे परिकल्पिते च=तु, वस्तुत एकस्यैवात्मनः कर्मत्वं करणत्वंच कर्तृत्वञ्च युगपदुपजायते। तथा हि—शस्त्राद्युद्यमननिपातनव्यापारवान् आत्मा 'हन्ति' इत्यत्र कर्ता। स एवात्र हननक्रियाविषयत्वं गतः कर्म। सौकर्यातिशयविवक्षया हननक्रियायां शस्त्रादिव्यापारस्य निरासे आत्मनः करणत्वमिति।

अयं भावः—हन्त्यात्मानमात्मनेत्यादावेकस्यैवात्मवस्तुनस्तत्तत्कारकप्रयोजकोपाधिविवक्षाप्रापिततत्तद्रूपभेदाधीनः कर्मत्वकरणत्वकर्त्तृत्वरूपकारकत्रययोगो दृश्यते। स वास्तवे कारकव्यवहारे आश्रीयमाणे न घटते। न ह्येकस्य वस्तुनो युगपद् विरुद्धानेकरूपताऽवसातुम्=निश्चेतुं शक्या। न चात्मनः शस्त्रादिव्यापारजन्यवधसम्भवः, अमूर्त्तत्वात्। अत्र आत्मनि, हननक्रियानिरूपितविरुद्धानेककारकविवक्षा तु फलत्वेन तत्तत्कारकशब्दनिबन्धना न विहन्यते। असत्या अपि कारकशक्तेरध्यारोपेण विवक्षाया सम्भवात्।

तथा हि—बुद्धेरवस्थाप्रतिभासनानात्वम्=नानात्वेन प्रतिभासः, तदनुसारेण तत्तत्कारकशक्तिविवक्षया भेदपरिकल्पः=एकस्यैवात्मनो भेदकल्पना, तद् यथा—शस्त्रोद्यमननिपातनव्यापारवान् हन्तीत्यत्र कर्त्ता।

आत्मैवात्र हननक्रियाविषयत्वमापतितः, तथैव=विवक्षाप्रयुक्तभेदकल्पनयैव कर्म। आत्मन एव सौकर्यातिशयविवक्षायाम्=साधकतमत्वविवक्षायां शास्त्रादिव्यापारस्य निरासे=अविवक्षायां करणत्वमात्मनः। कर्मकरणे हि अन्यत्र—'दण्डेन घट करोति' इत्यादौ। भेदे सत्येव दृष्टे इति 'हन्त्यामानमात्मना' इत्यत्र कर्त्तैव प्रागुक्तरीत्या भेदकल्पनया तथोच्यते=कर्मत्वेन करणत्वेन च उच्यते। अत एव वार्त्तिके उक्तः 'हन्त्यात्मानमात्मना' इत्यत्र कर्त्तुः कर्मवद्भावः, अनेन न्यायेन=अनया प्रागुक्तया युक्त्या प्रत्याख्यातो भाष्ये। सिद्धन्तु प्राकृतकर्मत्वात्, आत्मसंयोगेऽकर्मकर्त्तुः कर्मत्वदर्शनादिति।

"सिद्धं तु प्राकृतकर्मत्वात्" ( वा० ३।१।८७ )

"आत्मसंयोगेऽकर्मकर्तुः कर्मत्वदर्शनात्" ( वा० ३।१।८७ ) इति ।

"हन्त्यात्मानम्, आत्मना हन्यते" इति ( म० भा० ३।१।८७ ) ।। १०४ ।।

अन्यदपि शाब्दे कर्तृत्वे सिद्धयतीत्याह—

**उत्पत्तेः प्रागसद्भावो बुद्धयवस्थानिबन्धनः ।**
**अविशिष्टः सताऽन्येन कर्ता भवति जन्मनः ।। १०५ ।।**

'अङ्कुरो जायते' इति जनिकर्तृत्वं सतोऽसतो वा । तत्र
'यदि सज्जायते कस्मादथासज्जायते कथम्'

---

तत्र प्रथमवाक्यस्यार्थः—'आत्मानमात्मना हन्ति' इत्यादौ वार्त्तिकोक्तं कर्त्तुः कर्मवद्भावं विनाऽपि एकस्यैव आत्मनः प्रागुक्तया भेदकल्पनया कर्मत्वं तु सिद्धम्— सिद्धौ हेतुः प्राकृतकर्मत्वादिति । प्रकृत्या स्वभावेन कृतं प्राकृतं-स्वाभाविकम् । एवञ्च प्राकृतकर्मत्वादित्यस्य स्वाभाविककर्मत्वादित्यर्थः । एतच्चोपपादितं प्राक् ।

द्वितीयवाक्यस्यार्थः—आत्मसंयोगे=वाक्यार्थे कर्त्तृतया आत्मनः सम्बन्धे,-अकर्मकर्तुः=कर्मकर्तृभिन्नस्य, कर्मत्वदर्शनात् कर्तुः कर्मवद्भावोक्तिर्वार्त्तिककृतो न युक्तेति । 'हन्त्यात्मानम्' इति । अत्रात्मा कर्ताऽन्यः, कर्म त्वन्यत् ।

नन्वत्र कर्तुः कर्मवद्भावो दृश्यते । 'आत्मना हन्यते' इत्यत्र कर्माख्यातेऽपि आत्मना इति कर्ता भिन्नः । आत्मा इति कर्म तु भिन्नम् । न त्वत्र कर्तुः कर्मवद्भाव इति वक्तुं शक्यत इति ।। १०४ ।।

वस्तुवृत्तानपेक्षिणि विवक्षाप्रापिते शब्दमात्रगम्ये कर्त्तृत्वेऽभ्युपगम्यमानेऽन्य-दपि=उत्पत्तेः प्राग् बहिरसतोऽपि अङ्कुरादेः कर्त्तृत्वमपि सिद्धयतीत्याह—उत्पत्तेः प्रागसद्भाव इति ।

अस्यार्थः—अस्याः कारिकाया आदौ एवञ्चेति शेषो बोध्यः । एवञ्च=शाब्दे कर्त्तृत्वे सिद्धे च, उत्पत्तेः प्रागसद्भावः=अविद्यमानः, बहिः सद्भावो यस्य स तथेति इदं कर्त्तृविशेषणम् । बुद्धयवस्थानिबन्धनः=बुद्धयवस्थाशब्दाद् यः प्रति-भासस्तदनुसारिणी विवक्षा तन्निबन्धनः=तत्प्रयुक्तः, जन्मनः=उत्पत्तेः कर्त्ताऽङ्कु-रादिः, उत्पत्तेः प्राग् वस्तुसताऽन्येन कर्त्रा=गमनादिक्रियाकर्त्रा देवदत्तादिना समम्, अविशिष्टः=तुल्यो भवतीति ।

अयं भावः—अत्रैव पूर्वं वास्तवरूपाश्रयेण=कर्त्तुर्वस्तुभूतसत्त्वसमाश्रयेण सदसत्पक्षभेदेनापि कर्त्तृत्वमयुक्तमित्युक्तम् ।

तथा हि—'अंकुरो जायते' इति जनिकर्त्तृत्वं सतोऽसतो वा । तत्र यदि सज्जायते कस्मात्, अथासज्जायते कथम् ? असत उत्पत्त्यभ्युपगमे बन्ध्यापुत्रादेर

इत्यादिना पूर्वं वास्तवरूपाश्रयेण सदसत्पक्षभेदेनापि जनिकर्तृत्वमयुक्तम्। उपचारसत्ताश्रयेण तूत्पत्तिः सिद्धान्तिता—"उपचर्यं तु कर्तारम् ........" इत्यादिना।

तत्र वैवक्षिके कर्तृत्वे उपचारार्थोऽपि न कश्चिदित्युच्यते। तथा हि विवक्षारूपाया बुद्धेः शब्दनिमित्ताया येऽवस्थाविशेषाः प्रतिनियतशब्दनिबन्धाः, तदाश्रयेणात्र क्रियान्तरकर्तृत्वतुल्यं जनिकर्तृत्वं सिद्धम्। विवक्षाप्रापित-सन्निधाने ह्यर्थेऽङ्कुर इति शब्दः प्रयुज्यते। स च सदेव वस्तु दर्शयति। ततो जायते' इति पदसमवधानावधारितजन्मनोऽस्य कुतः सत्त्वमिति बुद्ध्या निश्चितसत्त्वस्य क्रियासिद्धावुपगृहीतसामर्थ्यस्य बाह्येन रूपेण जन्मेति वाक्यार्थोऽवतिष्ठते। ततश्च येन रूपेण सत्त्वं न, तेन कर्तृत्वम्, येन च कर्तृत्वम्, न तेन सत्त्वमिति नेयं वास्तवी व्यवस्था; अपि तु शाब्दयेवेत्यर्थः। शब्दार्थ एव चार्थ इत्यस्खलद्वृत्तित्वात् प्रयोगस्य मुख्यतैव सर्वत्र, नोपचारार्थः कश्चित्॥ १०५॥

लीकस्याप्युत्पत्तिप्रसङ्गात्। तदुक्तं श्रुत्यापि छान्दोग्ये—'कथं नु खलु सोम्यासतः सज्जायते' इति। एवं पूर्वपक्षे उपचारसत्ताश्रयेण=जनिकर्त्तरि अङ्कुरादौ उपादानीभूतबीजादिसत्तोपचारेण तूत्पत्तिः सिद्धान्तिता—'उपचर्यं तु कर्त्तारम्' (वा० प० ३, सं० ४५) इत्यादिना।

तत्र वैवक्षिके कर्त्तृत्वे उत्पत्तेः प्राग् बहिरसतोऽप्यङ्कुरादेर्वासनारूपेण बुद्धौ सत्त्वाद् उपचारार्थोऽपि न कश्चिदित्युच्यतेऽत्र।

तथा हि विवक्षारूपायाः=विवक्षाकारेण परिणताया बुद्धेः शब्दे निमित्त-भूताया येऽवस्थाविशेषा विवक्षाविशेषरूपाः प्रतिनियतशब्दनिमित्तभूताः प्रतिशब्दं नियताः, तदाश्रयेण=तत्सत्ताश्रयेण 'अङ्कुरो जायते' इत्यत्र गमनादिक्रियाकर्त्तृत्व-तुल्यं जनिकर्त्तृत्वं सिद्धम्। बहिरसत्यपि विवक्षाप्रापितसन्निधाने ह्यर्थेऽङ्कुर इति शब्दः प्रयुज्यते। स च उत्पत्तेः प्राग् बुद्धिः सदेव वस्तु दर्शयति। ततः 'जायते' इति पदसमवधानावधारितजन्मनोऽङ्कुरस्य कुतः सत्त्वमिति शङ्कायां बुद्ध्या निश्चितसत्त्वस्य बुद्धिसतो जनिक्रियासिद्धावुपगृहीतसामर्थ्यस्य बाह्येन रूपेण जन्मेति कृत्वाङ्कुरो जायत इत्यस्य वाक्यार्थोऽवतिष्ठते। ततश्च येन रूपेण उत्पत्तेः प्राग् अङ्कुरादेः सत्त्वम्=वासनारूपेण बुद्धौ सत्त्वम्, न तेन कर्तृत्वम्; किन्तु अङ्कुरत्वादिना बाह्येन रूपेण कर्त्तृत्वम्, येन च बाह्येन रूपेण तस्य कर्त्तृत्वं न रूपेण तेन उत्पत्तेः प्राग् अङ्कुरादेः सत्त्वमित्येवं नेयमङ्कुरादेर्वास्तवी=वस्तुकृता कर्तृत्वव्यवस्था; अपि तु शाब्दयेव=शब्दकृतैव इति। शब्दार्थ एव चार्थो वाक्यार्थेऽन्वितो वाग्व्यवहारगोचर इति 'अङ्कुरो जायते' इति प्रयोगस्य निर्बाधं जायमानस्य अस्खलद्वृत्तित्वाद् मुख्यतैव सर्वत्र='अङ्कुरो जायते, अङ्कुरो वर्धते' इत्यादौ नोपचारार्थः कश्चित्, उत्पत्तेः प्राग् अङ्कुरादेर्वासनारूपेण बुद्धौ सत्त्वादिति॥१०५॥

वस्तुवृत्तचर्यायामपि चाङ्कुरो जायत इति प्रयोग उपपन्न इत्याह—

कारणं कार्यभावेन यथा वा व्यवतिष्ठते ।
कार्यशब्दं तथा लब्ध्वा कार्यत्वेनाथ जायते ॥ १०६ ॥

कार्यमुखेन कर्तृता जन्म च सदसत्पक्षभेदेन नोपपद्यत इति बुद्ध्यवस्था-समाश्रयेण पूर्वमुपपादितम् । इदानीं कारणमुखेन प्रतिपाद्यते । अत एव पक्षान्तर-सूचको वाशब्दः । तत्र कारणात् पृथगेव कार्यमाजायत इति पूर्वपक्ष उक्तः । परि-णामदर्शने त्वभेदपक्ष इदं कथ्यते । कार्यकारणयोः प्रकृतिविकाररूपतया 'क्षीरं दधि सम्पद्यते, बीजमङ्कुरो जायते' इत्यभेदेन व्यवहारादेकस्यावस्थातुरवस्थाविशेष-स्वीकरणमात्रं (जन्म) सतत्त्वमिति कार्योन्मुखतया विशिष्टविकाराभिनिर्वृत्ति-

---

वस्तुवृत्तचर्यायामपि च = वस्तु सतः कर्त्तुर्देवदत्तादेः प्रवृश्यादि कर्त्तुर्यद् वृत्तम् = क्रियायाः प्रागवस्थितिरूपम्, तेन रूपेण वाङ्कुरस्य जनिः क्रियायाः प्राग-सतोऽपि चर्या कर्त्तृत्वव्यवहारस्तस्यामङ्कुरस्य कर्त्तृत्वोपपत्तयेऽभ्युपगम्यमानायामपि च 'अंकुरो जायते' इति प्रयोग उपपन्न इत्याह—कारणं कार्यभावेनेति ।

अस्यार्थः—वा = अथवा, कारणं क्षीरादिकं यथाकार्यभावेन दध्यादिरूपतया व्यवतिष्ठते = व्यवस्थितं भवति, तथा कारणम् = कार्यशब्दं दध्यादिरूपं शब्दं लब्ध्वा अथ = अनन्तरं स्वयं जनिक्रियायाः प्राक् स तया स्वरूपेण जायमानोऽपि कार्यरूपेण जायते । अत एव प्रयोगः- 'क्षीरं दधि सम्पद्यते, बीजमङ्कुरो जायते' इति ।

अयं भावः—कस्यापि वस्तुनः कार्यरूपेण कर्त्तृत्वं जन्म च सदसत्पक्षभेदेन = कार्यस्य जन्मनः प्राक् सत्त्वमिति, तस्य ततः प्रागसत्त्वमिति पक्षभेदेन नोपपद्यत इति कृत्वा बुद्ध्यवस्थासमाश्रयेण = बुद्धौ वासनारूपेण अङ्कुरादेः सत्त्वसमाश्रयेण पूर्वमङ्कुरादेः कर्त्तृत्वमुपपादितम् । इदानीमङ्कुरादेर्बीजादिरूपकारणरूपेण जनि-क्रियातः प्राक् सत्त्वमादाय कर्त्तृत्वं प्रतिपाद्यते । अत एव पक्षान्तरसूचकः = पक्षा-न्तरमादाय समाधानान्तरसूचकः कारिकायां 'वा'-शब्दः । तत्र कारणात् पृथगेव कार्यमाजायते । 'तत्र कारणाद् भिन्नमेव कार्यमाजायते' इति न्यायादिमतमाश्रित्य पूर्वपक्षः = पूर्वकल्प उक्तः ।

इदं तु परिणामवादिसांख्यादिदर्शनेषु कार्यकारणयोरभेदपक्षे कथ्यते । अस्मिन् पक्षे कार्यकारणयोः प्रकृतिविकाररूपतया 'क्षीरं दधि सम्पद्यते, बीजमङ्कुरो जायते' इत्यभेदेन व्यवहाराद् एकस्यावस्थातुरवस्थाविशेषस्वीकरणमात्रं जन्म सत्त्वमिति = जन्म स्वरूपमिति विशिष्टविकाराभिनिर्वृत्तिप्रक्रमे = विशिष्टस्य विकारस्य = अङ्कुरादिरूपस्य विकारविशेषस्य, अभिनिष्पत्तेः प्रारम्भे कार्योन्मुख-ताया विशिष्टोत्तरावस्था = उत्तरावस्था विशेषः जन्म । अङ्कुरादिरसावस्था-

प्रक्रमे विशिष्टोत्तरावस्था ( जन्म, अवस्थातर्यवस्था ) विशेषगतवाचकाध्यासात् कारणमेव सद्रूपं कर्तृभवदुत्तरावस्थासाधनलक्षणं जन्म प्रतिपद्यत इति युज्यते 'जायतेऽङ्कुरः' इति प्रयोग इत्यर्थः ।। १०६ ।।

युक्तं चैतद्यदुत कारणमेव कार्यभावेनावतिष्ठत इति स्वसिद्धान्तेनैतदुपपादयितुमाह—

**यथाहेः कुण्डलीभावो व्यग्राणां च समग्रता ।**
**तथैव जन्मरूपत्वं सतामेके प्रचक्षते ।। १०७ ।।**

पूर्वं सदसत्पक्षभेदेन कार्यकारणभावासम्भवं प्रतिपाद्य "अत्यद्भुता त्वियं वृत्तिः" ( वा० ३, सं० ८१ इत्यादिना विवर्तनयेन सिद्धान्तितम्। तत्र चेयानेव जन्मार्थो विचार्यमाणोऽवतिष्ठते यदुत तथा तथा सन्निवेशमात्रम् । तद्यथा सर्पस्य कौटिल्यमनर्थान्तरम्, पृथग्भूतानां चाङ्गुल्यादीनां संघातो मुष्टयादिरित्यवस्थाविशेषमात्रसारः कार्यकारणभाव इत्यवस्थातुरभेदादवस्थास्वनुगमात् सत्त्वे जनिकर्तृतासिद्धिः ।। १०७ ।।

---

विशेषगतस्य, अङ्कुरादिपदरूपस्य वाचकस्य बीजादिरूपेऽवस्थातरि अध्यासात् = अध्यारोपाद् बीजादिरूपं कारणमेव सद्रूपं कर्त्तृभवद् उत्तरावस्थासाधनरूपं जन्म प्रतिपद्यत इति युज्यते 'जायतेऽङ्कुरः' इति प्रयोग इति ।। १०६ ।।

परिणामवादिदर्शनेषु कार्यकारणयोरभेदमाश्रित्याङ्कुरादेर्जनिकर्तृत्वं पूर्वकारिकया समर्थितम् । इदानीमद्वैतिसम्मतं स्वस्यापि सिद्धान्तभूतं विवर्त्तवादमाश्रित्य तस्य तत्त्वमुपपादयितुमाह—यथाऽहेरिति ।

अस्यार्थः -- यथाऽहेः कुण्डलीभावः = मण्डलरूपतया सन्निवेशोऽहेर्नातिरिच्यते, यथा वा व्यग्राणाम् = व्यस्तानामङ्गुल्यादीनाम्, समग्रता = मुष्टयादिरूपेण संघातरूपता व्यग्रेभ्यो नातिरिच्यते, तथैव जन्मनः प्राक् सतां बीजादीनामङ्कुरादिरूपेण जन्मरूपत्वम् = जन्मना निरूप्यमाणत्वम्, एके विवर्त्तवादिनोऽद्वैतिनस्तदनुयायिनो वैयाकरणाश्च प्रचक्षत इति ।

अयं भावः -- पूर्वं सदसत्पक्षभेदेन = जन्मनः प्राक् कार्यस्य सत्त्वम्, ततः प्राक् तस्यासत्त्वमिति पक्षभेदेन कार्यकारणभावासम्भवं पूर्वोक्तरीत्या प्रतिपाद्य—'अत्यद्भुता त्वियं वृत्तिः' (वा०प० ३, सं० ८१) इत्यादिना पद्येन विवर्त्तनयेन = विवर्त्तमतेन सिद्धान्तितम् । तत्र च जन्मपदार्थो विचार्यमाण इयानेवावतिष्ठते । यदुत अवस्थातुरवस्थाविशेषरूपेण तथा तथा सन्निवेशमात्रम् = स्थितमात्रम्, तद् यथा सर्पस्य कुण्डलित्वं कौटिल्यं वा सर्पादर्थान्तरं न भवति । पृथग्भूतानाम् = व्यस्तानां चाङ्गुल्यादीनां संघातो मुष्टयादिरित्यवस्थाविशेषमात्रसारः कार्यकारणभाव इत्यवस्थातुर-

इदानीं कार्यकारणयोर्भेदवादेऽपि वास्तवेन रूपेण जनिकर्तृत्वं प्रतिपादयितुमाह—

विभक्तयोनि यत्कार्यं कारणेभ्यः प्रवर्तते ।
स्वा जातिर्व्यक्तिरूपेण तस्यापि व्यवतिष्ठते ।। १०८ ।।

विभक्ता व्यतिरिक्ता योनिः कारणमस्य तस्यासतो विकार्यस्य जायमानस्य कारणेभ्यः सकाशाद् व्यतिरिक्तस्योत्पत्तेः पूर्वं व्यक्तिरूपेणासत्त्वेऽपि जात्यात्मना सत्त्वात् तज्जातीयतया निरूप्य साधनविनियोगाज्जातिरेव कारणानां स्वाभिव्यञ्जकसम्पत्त्यर्थं प्रयोजिकेति सैव व्यक्त्यात्मना जायत इति व्यवहाराज्जातिरूपेण कर्तृत्वम्, व्यक्तिरूपेण जन्यत्वमिति अत्यन्तं व्यतिरेकाभावाज्जातिव्यक्त्योः सामानाधिकरण्यादुपपद्यत इत्यर्थः ।। १०८ ।।

इदानीं शब्दार्थोऽर्थं इति स्वसिद्धान्तं निगमयितुमाह—

भावेष्वेव पदन्यासः प्रज्ञाया वाच एव वा ।
नास्तीत्यप्यपदे नास्ति न चासद्भिद्यते ततः ।। १०९ ।।

---

वस्थास्वनुगमेनाभेदाद् जन्मनः प्राक् सत्त्वेन अवस्थाविशेषस्याङ्कुरादेर्जनिक्रियाकर्तृत्वसिद्धिरिति ।। १०७ ।।

परिणामवादिनामभेदवाद इव इदानीमसत्कार्यवादिनां कार्यकारणयोर्भेदवादेऽपि वास्तवेन रूपेण जात्यात्मना जनिकर्तृत्वं प्रतिपादयितुमाह—**विभक्तयोनि इति ।**

अस्यार्थः—विभक्ता=स्वस्माद् भिन्ना योनिः=कारणं यस्य तद् विभक्तयोनि । अत एवोत्पत्तेः प्रागसद् यत्कार्यं कारणेभ्यः प्रवर्त्तते=जायते, तस्यापि कार्यस्य स्वा=स्वकीया जातिर्व्यक्तिरूपेण जायमाना व्यवतिष्ठते=कार्यतया व्यवस्थितं भवतीति ।

अयं भावः—विभक्ता=स्वस्माद् व्यतिरिक्ता योनिः कारणमस्य तस्यात एवासतो विकार्यस्य जायमानस्य कारणेभ्यः सकाशाद् भिन्नस्य उत्पत्तेः पूर्वं व्यक्तिरूपेणासत्त्वेऽपि जात्यात्मना सत्त्वात् तज्जातीयतया बुद्धौ निरूप्य प्रयोक्त्रा साधनविनियोगात् कर्त्तृत्वेनाङ्कुरादेर्विनियोगाद् जातिरेव स्वाभिव्यञ्जकव्यक्तिसम्पत्त्यर्थं कारणानां प्रयोजिकेति सैव व्यक्त्यात्मना जायत इति व्यवहाराज्जातिरूपेण कर्त्तृत्वं व्यक्तिरूपेण जन्यत्वमिति जातिव्यक्त्योः सामानाधिकरण्याद्=भेदाभेदरूपात् तयोरत्यन्तं व्यतिरेकाभावात् कार्यकारणयोर्भेदवादेऽपि उत्पत्तेः प्राग् सतोऽप्यङ्कुरादेर्जातिरूपेण कर्त्तृत्वं स्वरूपेण च जन्यत्वमुपपद्यत इति ।। १०८ ।।

आकारावग्रहेण ज्ञानशब्दयोः प्रवृत्तेर्निरालम्बनताऽयोगात् प्रतीयमान एवाकारो भावशब्दवाच्यः सदैव विषयः पदविन्यासस्थानं तयोः।

तथा हि नास्तीत्यभावालम्बनौ कञ्चन परपरिकल्पितं स्वयमुत्प्रेक्षितं वाकारमवलम्ब्य जायते, येन सदाकारावलम्बनाभ्यां ज्ञानशब्दाभ्यामनयोर्विशेषाभावः, स्वाकारावग्रहसाम्यादिति व्यवहारे सर्वमेव भावाभावजातं समानम्। बहिर्वस्तुचर्चा तु नाङ्गम्, इयतैव व्यवहारपरिसमाप्तेरिति सदाकारावग्रहप्रवृत्तौ 'जायतेऽङ्कुरः' इति प्रयोगः सूपपाद इत्यर्थः ॥ १०९ ॥

बुद्धिशब्दविषयभावातिरेकेण व्यवहारे वस्तूनां बाह्या सत्ता न काचन विद्यत इत्याह—

---

इदानीं 'शब्दार्थोऽर्थः' इति ( शब्दार्थः=शब्दात् प्रतीयमानोऽर्थः, कर्त्रादिकारकरूपोऽर्थ इति ) स्वसिद्धान्ते निगमयितुम्=उपसंहर्त्तुमाह—भावेष्वेव पदन्यास इति।

अस्यार्थः—प्रज्ञायाः=ज्ञानस्य, वाच एव वा=वचोऽपि शब्दार्थस्यापि च, भावेष्वेव सदाकारेषु वस्तुष्वेव, पदन्यासः=विषयीकरणरूप', न त्वसत्सु, नास्तीत्यपि=नास्ति इति शब्दः प्रत्ययो वाऽपि, अपदे=अविषये, असति अवस्तुनि नास्ति। अभावस्यापि सदाऽऽकारेणैव ग्रहात्, असच्च=असदपि, ततः=असदभाववन्ध्यापुत्रशशशृङ्गादिशब्देभ्यः प्रतीयमानेभ्य आकारेभ्यः सद्भ्यो न भिद्यत इति।

अयं भावः—शब्दप्रत्ययौ आकारावग्रहेण=शब्दात् प्रतीयमानमाकारं गृहीत्वा प्रवर्त्तेत इति तयोर्निरालम्बनत्वायोगात्=निराकारत्वायोगात् ताभ्यां प्रतीयमान एवाकारो भावशब्दवाच्यः सदैव तयोः पदविन्यासस्थानं विषयः।

तथा हि—नास्ति इति अभावालम्बनावपि शब्दप्रत्ययौ कञ्चन परपरिकल्पितं केवलाधारादिरूपं स्वयमुत्प्रेक्षितं वाऽऽकारमवलम्ब्य जायते, येन सदाकारावलम्बनाभ्यां ज्ञानशब्दाभ्यामनयोः=अभावालम्बनयोः शब्दप्रत्यययोः विशेषाभावः, स्वाकारावग्रहसाम्यात्=स्वस्य शब्दस्य प्रत्ययस्य वा य आकारो भावरूपोऽभावरूपो वा परपरिकल्पितः स्वयमुत्प्रेक्षितो वा तदवग्रहसाम्यात्=तद्ग्रहणसाम्यादिति शाब्दे व्यवहारे सर्वमेव भावाभावजातं समानम्. शब्दाकाररूपेण ज्ञानाकाररूपेण वा उभयोरपि सत्त्वात्=भावरूपत्वात्। बहिर्वस्तुचर्चा तु न शाब्दे व्यवहारेऽङ्गम्। इयतैव=आकारावग्रहेणैव शाब्दव्यवहारपरिसमाप्तेरिति सदाकारावग्रहेणैव सर्वस्यापि शाब्दव्यवहारस्य प्रवृत्तौ अभ्युपगतायां जायतेऽङ्कुर इति प्रयोगः सूपपादः, शब्दाकारेण बोधाकारेण वाऽङ्कुरस्य तदानीमपि सत्त्वादिति ॥ १०९ ॥

बुद्धिशब्दौ प्रवर्तेते यथा भूतेषु वस्तुषु ।
तेषामन्येन तत्त्वेन व्यवहारो न विद्यते ।। ११० ।।

अभिधानप्रत्ययावेव व्यवहार इति यथाप्रत्ययं यथाभिधानं च पदार्थतत्त्वमेषणीयम्, नान्यत् पदार्थस्वरूपमप्रतीयमानमनभिधीयमानं चाश्रित्य प्रत्यवस्थेयमित्यर्थः । तथा चार्थोल्लेखरहिताया बुद्धेरयोगात् तत्सिद्धेन तत्त्वेन जायमानः कर्ता निरूप्यते, निरूपितश्चाभिधीयते । यथा नास्तीति प्रत्यये बहिरसन्नपि पदार्थो नियतदेशकालयोर्निषिध्यमानो देशकालान्तरोपलब्धेनाकारेणावभासमानः कर्तृप्रत्ययेनाभिधीयते, तथा कार्योन्मुखतायामनागतमपि वस्तु तज्जातीयानुभववासनया बुद्धावभिमुखीभवन् समर्थहेतुवशाज्जायत इति जन्मनः कर्तृत्वेनाभिधीयत इति प्रकरणार्थः ।। ११० ।।

---

बुद्धिविषयत्वशब्दविषयत्वान्यतरव्यतिरेकेण शाब्दे व्यवहारे वस्तूनां बाह्या सत्ता न काचन विद्यत इत्याह—बुद्धिशब्दाविति ।

अस्यार्थः—बुद्धिशब्दौ यथा भूतेषु=भूतवस्तुनि अनतिक्रान्तेषु=भूतजातीयेषु वस्तुषु प्रवर्त्तेते । भाविनं भावं बुद्धया भूतजातीयतया निरूप्य तद्विषयकः शब्दः 'अंकुरो जायते' इत्यादिरूपः प्रवर्त्तत इति यावत् । तेषाम्=शब्दबुद्धिविषयत्वमुपगतानां भावानाम्, अन्येन तत्त्वेन, रूपेण, सत्त्वेन वा बाह्येन व्यवहारो न विद्यते । शाब्दाकारेण बुद्धयाकारेणैव वा वस्तुना शाब्दो व्यवहारः, न तु बाह्येन वस्तुसतेति ।

अयं भावः- अभिधानं प्रत्ययो वा व्यवहारपदार्थ इति प्रत्ययाविरोधेन अभिधानाविरोधेन वा पदार्थतत्त्वमेषणीयम् । अप्रतीयमानमनभिधीयमानञ्च अन्यत् पदार्थस्वरूपमाश्रित्य न प्रत्यवस्थेयम्=प्रतिकूलं मतमाश्रयणीयम् । तथा च अर्थोल्लेखरहितायाः=पदार्थविभासरहिताया निरालम्बनाया बुद्धेरयोगाद् जायमानः कर्त्ता बुद्धिसिद्धेन तत्त्वेन निरूप्यते, निरूपितश्चाभिधीयते । यथा नास्ति इति प्रत्यये बहिरसन्नपि पदार्थो नियतदेशनियतकालयोर्निषिध्यमानो देशान्तरकालान्तरोपलब्धेन आकारेणावभासमानः कर्त्तृप्रत्ययेन तिङाऽभिधीयते, तथा उपादानस्य कार्योन्मुखतायामनागतमपि वस्तु तज्जातीयानुभववासनया=अनागतजातीयस्य अतीतस्य वस्तुनो योऽनुभवः प्राक्कालिकस्तज्जनितवासनया बुद्धौ अभिमुखीभवत्=न्यायमतानुसरणे ज्ञानलक्षणप्रत्यासत्त्या प्रत्यक्षीक्रियमाणम् । ज्ञानलक्षणाया अनङ्गीकारे अतीतवस्तुस्मृतिद्वारा तज्जातीयतयाऽनुमीयमानं जायत इति शब्देन समर्थहेतुवशात्=सहकारिकारणसंवलितोपादानकारणरूपसमर्थहेतुवशाद् जन्मनः कर्त्तृत्वेनाभिधीयत इति उत्पत्तेः प्रागसतः कर्तृत्वोपपत्तये प्रयुक्तस्य प्रकरणग्रन्थस्य पिण्डितार्थं इति ।। ११० ।।

इदानीं सम्बन्धसमुद्देशोक्तं न्याय चेतसि सन्निवेश्याद्वैतनयेन जन्मनाशासम्भवं प्रतिपादयति—

आकाशस्य यथा भेदश्छायायाश्चलनं यथा ।
जन्मनाशावभेदेऽपि तथा कैश्चित् प्रकल्पितौ ।। १११ ।।

निष्प्रदेशस्याप्याकाशस्य नित्यस्य संयोगिपदार्थप्रविभागेन(ण)देशाध्यारोपाद् भेदपरिकल्पनेत्युक्तम् । भासामभावरूपायाः छायायाश्च निष्क्रियत्वेऽपि वारकद्रव्यक्रियानुगामितया सक्रियत्वाध्यारोपः । एवमभावस्य पूर्वं निराकृतत्वाद् जन्मनि कारणव्यापारस्य च निषेधाद् विनाशेऽपि तदनुपपत्तेरावेदितत्वाद् निर्हेतुकविनाशप्रतिषेधाच्चाभिन्नस्याद्वयस्य तत्त्वस्य जन्मनाशायोगादविद्यावशात्

---

उत्पत्तेः प्राक् कार्यस्य सद्रूपत्वेऽसद्रूपत्वे वा जन्म न सम्भवति, आद्ये कारणव्यापारवैयर्थ्यात् , अन्त्येऽङ्कुरादेरिव बन्ध्यापुत्रादेरपि जन्मप्रसङ्गात् । एवं सतो नाशोऽपि न सम्भवति, स्वभावविरोधात् । तदुक्तं गीतासु—

नासतो विद्यते भावो नाभावो विद्यते सतः ।। इति ।

एवं जन्मनाशयोरसम्भवेऽपि तद्व्यवहारदर्शनेन प्रतिभासमात्रशरीरौ जन्मनाशौ कल्प्येते, तद्वशेन च परिकल्पितभावाभावरूपतया व्यवहार इति सम्बन्धसमुद्देश उक्तं न्यायमिदानीं चेतसि सन्निवेश्याद्वैतनयेन जन्मनाशासम्भवं प्रतिपादयति = आकाशस्य यथेति ।

अस्यार्थः–यथाऽऽकाशस्य वस्तुन एकस्यापि संयोगिपदार्थभेदेन भेदः कल्पितः। यथा वा भासामभावरूपायाश्छायाया निष्क्रियत्वेऽपि भावारकवस्त्रादिद्रव्यक्रियाऽनुगामितया तत्र चलनक्रिया कल्पिता । तथाऽभेदेऽपि = आत्मन एकत्वे मतिविभुत्वेन नित्यत्वेऽपि तस्य जन्मनाशौ कैश्चित् प्रकल्पितौ = अनित्यदेहादिसम्बन्धेन प्रकल्पितौ, सत्कार्यवादे परिणामवादरूपे, अद्वैतिसम्मते विवर्तवादे वा देहादेरपि जन्मनाशौ कल्पितावेवेति । एवञ्च सर्वस्यापि जायमानस्य नश्यतो वा जन्मनाशयोः प्राक् सत्त्वेन कर्तृत्वमुपपन्नमिति ।

अयं भावः—व्यापकत्वेन निष्प्रदेशस्याप्याकाशस्य तेनैव हेतुना नित्यस्य संयोगिपदार्थप्रविभागप्रयुक्तप्रविभागेण देशाध्यारोपाद् भेदपरिकल्पनेत्युक्तम् । भासामभावरूपायाश्छायायाश्च स्वभावतः क्रियाशून्यत्वेऽपि भावारकवस्त्रादिद्रव्यगतचलनादिक्रियानुगामितया तत्र तद्गतचलनक्रियाध्यारोपः । एवमभावस्य पूर्वं निराकृतत्वाद् जन्मनि सत्कार्यवादे कारणव्यापारस्य च वैयर्थ्येन असत्कार्यवादे वन्ध्यापुत्रादिजन्मप्रसङ्गरूपानिष्टापत्त्या च निषेधाद् विनाशेऽपि तदनुपपत्तेः = सतोऽसत्ताकरणासम्भवेन कारणव्यापारानुपपत्तेः, आवेदितत्वात्, निर्हेतुकविनाश-

प्रतिभासमात्रनिष्ठजन्मनाशवशेन परिकल्पितभावाभावरूपतया व्यवहार इति सम्बन्धसमुद्देश एव विस्तरतो निर्णीतम् ।

एवं च भावाभावव्यवहारवज्जायत इत्यर्थोऽविचारितरमणीयः सिद्ध इत्यर्थः ।। १११ ।।

नाशस्य कल्पितत्वमुपपादयितुमाह—

यथैवाकाशनास्तित्वमसन्मूर्तिनिरूपितम् ।
तथैव मूर्तिनास्तित्वमसदाकाशनिश्रयम् ।। ११२ ।।

व्यापकस्याकाशस्य सर्वत्र भवतो वस्तुतो न क्वचिदभावः । ततश्चासदप्याकाशनास्तित्वं परिमितदेशघटादिमूर्त्यवष्टम्भवशेन कल्प्यते । यत्र हि घटादयस्तत्रासदाकाशमिति व्यवहारः । एवं मूर्तीनामपि घटादीनां क्वचिद् नास्तित्वं भावतोऽविद्यमानमपि सत्स्वभावस्य स्वरूपविनाशायोगादसत्स्वभावत्वे कदाचिदप्यभावादिति न्यायादाकाशस्यान्तराले दर्शनादध्यवसीयते । अन्तराले हि मूर्तीनां सत्तायास्तिरोधाने गगनमेव तद्रहितमवधारयन्तोऽर्वाग्दर्शना नास्तीत्यध्यवस्यन्ति ।

---

प्रतिषेधाच्च अभिन्नस्याद्वयस्य तत्त्वस्य नित्यस्य जन्मनाशयोरसम्भवात्, अविद्यावशात् प्रतिभासमात्रनिष्ठजन्मनाशवशेन = विज्ञानमात्रस्वरूपनिष्ठजन्मवशेन परिकल्पितभावाभावरूपतया = परिकल्पितसद्भावासद्भावरूपतया व्यवहार इति सम्बन्ध समुद्देश एव विस्तरतो निर्णीतम् ।

एवञ्च भावाभावव्यवहारवद् जायत इत्यस्य जनिरूपोऽर्थोऽपि अविचारितरमणीयः सिद्ध इति तत्कर्त्तृत्वमपि 'यज्ञानुरूपो बलि.' इति न्यायेनाविचारितरमणीयमेव सिद्धमिति ।। १११ ।।

नाशस्य कल्पितत्वमुपपादयितुमाह—यथैवेति ।

अस्यार्थः—यथैव व्यापकस्याकाशस्य सर्वत्र सत्त्वेन मूर्तिनिरूपितम् = मूर्त्या घटादिरूपया निरूपितम् = कल्पितं नास्तित्वम् असत् = घटकपालान्तराकाशं नास्ति इति निरूप्यमाणम् । तथैव मूर्त्तिनास्तित्वम् = मूर्तीनां घटादीनां नास्तित्वम् आकाशनिश्रयम् = आकाशं निश्रयः = आश्रयोऽधिष्ठानं यस्य तत्तथा । अत्र घटो नास्ति इति प्रत्ययगम्यम् आकाशे कल्पितत्वेनाकाशाधिष्ठानकम् = असत्, आकाशस्यैव घटनास्तित्वरूपेण उल्लेखात्, रज्जौ भुजङ्गवदिति ।

अयं भावः—यथैव व्यापकस्याकाशस्य तत्त्वेनैव सर्वत्र सतो न वस्तुतः क्वचिदप्यभावः, ततश्चाकाशनास्तित्वमसदपि हस्तादिपरिमितदेशवृत्तिघटादिरूपमूर्त्तद्रव्यसम्बन्धवशेन तादृशमूर्त्तद्रव्येषु कल्प्यते । अधिष्ठानरूपस्य तादृशघटादिरूपमूर्त्तद्रव्यस्यैवाकाशनास्तित्वरूपेण भानात् । यत्र हि घटादयस्तत्राकाशमसद् =

आविर्भावं च सत्तायाः स्वदेशे व्यवस्यन्तो जन्म प्रतिपद्यन्त इत्येतत् प्रकरणादवगन्तव्यम्। तथा च द्वयोरपि जन्मनाशयोः कल्पितत्वमुपपादितं भवति। यथाध्यवसायं च व्यवहारादजन्मनिरोधा एव पदार्थाः सिद्धाः। न ह्याकाशमभावः, वस्तुतः पदार्थानां भावाभावे च सदैवावस्थानाज्जन्मार्थोऽपि न कश्चित्॥ ११०॥

इदानीं वास्तवेऽपि जन्मनि प्रकारान्तरेण जायत इति प्रयोगं समर्थयितुमाह—

यथा तदर्थैर्व्यापारैः क्रियात्मा व्यपदिश्यते।
अभेदग्रहणादेष कार्यकारणयोः क्रमः॥ ११३॥

'कारणं कार्यभावेन'(वा०प० ३, साधन० १०६) इत्यादिना कार्यकारणयोर्वास्तवमभेदमाश्रित्य समर्थितम्, अधुना तूपचरिताभेदाश्रयेणोच्यते। यथा हि

---

नास्ति इति व्यवहारात्। तथैव=एवं मूर्तीनां घटादीनामपि नास्तित्वं भावतः=स्वभावतः क्वचिदविद्यमानमपि मूर्तिद्वयान्तराले आकाशस्य दर्शनात् तत्राध्यवसीयते। मूर्तीनां सत्स्वभावत्वे स्वरूपविनाशायोगात्। तासामसत्स्वभावत्वे कदाचिदप्यभावात्=कदाचिदपि सत्त्वायोगाद् इति न्यायात्, आकाशमेव तत्र स्वस्मिन् कल्पितमूर्तिर्नास्तित्वरूपतया भासते। मूर्तीनां=मूर्त्तानां पदार्थानाम् अन्तराले हि मूर्त्तवस्तुसत्तायास्तिरोधाने गगनमेव नास्ति इति=नास्तितया अध्यवस्यन्ति=अध्यारोप्य जानन्ति। मूर्त्तिसत्तायाः स्वदेशे उत्पत्तेः प्रागपि वर्त्तमानायाः कारणव्यापारेण आविर्भावश्च व्यवस्यन्तः=पश्यन्तस्त एव मूर्त्तीनां जन्म प्रतिपद्यन्ते इत्येतदस्मात् प्रकरणादवगन्तव्यम्। एवञ्च द्वयोरपि जन्मनाशयोः कल्पितत्वमुपपादितं भवति। यथाध्यवसायश्च=अध्यारोपानुसारेण च व्यवहाराद् जन्मविनाशरहिता एव सर्वेऽपि पदार्थाः सिद्धाः। न ह्याकाशमभावः पदार्थानां वस्तुतोऽभावाभावे च सदैव सत्त्वान्न तेषां जन्मपदार्थोऽपि कश्चिदिति॥ ११२॥

इदानीं जन्मनः कल्पितत्वाभावेऽपि प्रकारान्तरेण=कार्यकारणयोरभेदाध्यारोपेण 'अङ्कुरो जायते' इति प्रयोगेऽङ्कुरस्य जनिकर्त्तृत्वं समर्थयितुमाह—यथा तदर्थैरिति।

अस्यार्थः—यथा तदर्थैः=प्रधानक्रियार्थैस्तदङ्गभूतैर्व्यापारैः सहाभेदेन क्रियात्मा=प्रधानक्रियास्वरूपम्, व्यपदिश्यते=व्यवह्रियते, अभेदग्रहणात्=प्रधानाङ्गक्रिययोरभेदाध्यारोपादिति व्यपदेशक्रियान्वयी हेतुः। एषः=अभेदाध्यारोपमूलकोऽभेदव्यपदेशरूपः, कार्यकारणयोः क्रमः=परिपाटी। तथा च 'अङ्कुरो जायते' इत्यादिर्व्यपदेशः, कार्यकारणयोर्बीजाङ्कुरयोरभेदाध्यारोपात्। एवं चात्राङ्कुरपदाभिधेयस्य बीजस्य जनिक्रियातः प्राक् सत्त्वेन जनिक्रियाकर्तृत्वोपपत्तिरिति।

पचेर्विक्लित्तिः प्रधानार्थं इति तदर्थैः गुणव्यापारैरधिश्रयणोदकासेचनादिभिः कर्त्रादिगतैस्तादर्थ्यादभेदमध्यारोप्य प्रधानक्रियारूपमुच्यते, अधिश्रयणोदकासेचन-तण्डुलावपनैधोपकर्षणक्रियाः प्रधानस्य कर्तुः पाकः, काष्ठानि पचन्ति आविक्लित्ते ज्वंलन्तीति करणस्य पाक इत्यादिना तथा कार्यार्थत्वात् कारणस्यैवैषानुपूर्वी क्रमोऽभेदेन व्यवहारे। तथा च कारणमेवाङ्कुरशब्दाभिधेयं सत्कर्तृ कार्यात्मना जायत इति युज्यते व्यपदेष्टुमित्यर्थः ॥ ११३ ॥

ननु च कार्यकारणयोरभेदाध्यारोपेऽपि जन्मनः कर्तृत्वं कार्यस्यैव युज्यते, न तु कारणस्य सिद्धत्वादित्याशङ्क्य प्रकृतिविकारविषये पर्यायेण कर्तृत्वं कार्यकारणयोः प्रयोगभेदेनावस्थापयितुमुपक्रमते—

विकारो जन्मनः कर्ता प्रकृतिर्वेति संशये।
भिद्यते प्रतिपत्तॄणां दर्शनं लिङ्गदर्शनैः ॥ ११४ ॥

---

अयं भावः—यद्यपि 'कारणं कार्यभात्रेन' इत्यादिना कार्यकारणयोरभेदमाश्रित्याङ्कुरादेर्जनिकर्त्तृत्वं प्राक् समर्थितमिति पुनरुक्तिरत्र प्राप्ता, तथापि पूर्वं कार्यकारणयोर्वास्तवमभेदमाश्रित्य जनिकर्त्तृत्वं समर्थितम्। अधुना तु तयोर्वास्तवभेदसत्त्वेऽपि उपचरिताभेदाश्रयेण = अध्यारोपिताभेदाश्रयेण तदुच्यत इति विशेषान्नास्ति पुनरुक्तिः। यथा हि पचेर्विक्लित्तिः फलत्वेन प्रधानमर्थं इति तदर्थतया गुणभूतैर्व्यापारैरधिश्रयणोदकासेचनतण्डुलावपनादिभिः कर्त्रादिगतैः सह तादर्थ्यादभेदमध्यारोप्य विक्लित्तिरूपप्रधानक्रियास्वरूपमेवमुच्यते, अधिश्रयणोदकासेचनतण्डुलावपनैधोऽपकर्षणक्रियाः प्रधानस्य कारकस्य कर्त्तुः पाकः, काष्ठानि पचन्ति, आविक्लित्तेर्ज्वलन्तीति करणस्य पाक इत्यादिना, तथा कारणस्य कार्यार्थत्वात् तयोरभेदेन व्यवहारे 'अङ्कुरो जायते' इत्यादौ एष एव क्रम आनुपूर्वी। तथा च कारणमेवाङ्कुरशब्दाभिधेयं सदत्र कर्त्तृ तदेव च कार्यरूपेण जायत इति युज्यते 'अङ्कुरो जायते' इति व्यपदेष्टुमिति ॥ ११३ ॥

ननु 'बीजमङ्कुरो जायते', 'क्षीरं दधि सम्पद्यते' इत्यादौ कार्यकारणयोरभेदाध्यारोपेऽपि जन्मनः कर्तृत्वं कार्यस्यैव युज्यते, साध्यत्वात्, न तु कारणस्य सिद्धत्वादित्याशङ्क्य प्रकृतिविकारविषये 'यवागूर्मूत्रं जायते' इत्यादौ विकारस्य कर्तृत्वं साक्षात्, तदभेदेन तद्द्वारा प्रकृतेः। "सङ्घीभवन्ति ब्राह्मणाः" इत्यादौ प्रकृतेर्ब्राह्मणरूपायाः कर्तृत्वं साक्षात्, अविकृतेस्तु तदभेदेन तद्द्वारा इत्येवं प्रयोगभेदेन कार्यकारणयोः पर्यायेण कर्तृत्वमवस्थापयितुमुपक्रमते— विकारो जन्म इति।

अस्यार्थः—'बीजमङ्कुरो जायते', 'क्षीरं दधि सम्पद्यते' इत्यादौ वचनरूपलिङ्गदर्शनरूपविनिगमनाया अभावाद् जन्मनः कर्ता विकारः प्रकृतिर्वा इति संशये प्रतिपत्तॄणां कर्तृत्वविषयकं दर्शनं वचनादिरूपलिङ्गदर्शनैर्भिद्यते। तथा हि—'यवागू-

इह प्रकृतिविकारविषये सामानाधिकरण्यं दृश्यते 'क्षीरं दधि सम्पद्यते' इत्यादौ। अत्र च सन्देहः। तथा हि गुणप्रधानभावस्य समन्वयान्यथानुपपत्त्याऽवश्यंभावात् किमत्र प्रकृतिः प्रधानम्, विकारोऽङ्गम्, उत विपर्ययः? तत्र प्रधानस्य कर्तृत्वं जनिं प्रति, अङ्गस्य तु प्रधानद्वारको जनिसंस्पर्श इति सामानाधिकरण्यम्। यदा तु भेदेन निर्देशो बीजादङ्कुरो जायत इति तदाऽसंशयमेव विकारस्य कर्तृत्वम्। अपादानतया प्रकृतेर्निर्देशात्, 'जनिकर्तुः प्रकृतिः' (पा० १।४।३०) इति।

तत्र विकारकर्तृकाणामाशयः - आत्मलाभस्य जन्माख्या, असता चात्मा लब्धव्यः। तथा च विकार इति स एवात्र कर्ता युक्तः।

---

मूत्रं जायते' इत्यत्र मूत्ररूपस्य यवागूविकारस्य साक्षात् कर्तृत्वम्, यवागूरूपायास्तत्प्रकृतेस्तु तद्द्वारा। अत्र प्रयोगे प्रकृतेर्विकाराभेदाध्यारोपेण कर्तृत्वस्याविशेषेण प्राप्तावपि 'यवाग्वा मूत्रं जायते' इत्यादौ प्रकृतेरपादानत्वस्य दृष्टस्यात्र स्मृत्याविशेषकत्वेन विकारद्वारेणैव प्रकृतेः क्रियान्वयात्। तथा चात्र विकारस्य कर्तृत्वेऽन्यत्र विकारस्य कर्तृत्वदर्शनं प्रकृतेश्चापादानत्वदर्शनमित्येतदुभयं समुदितं स्मृतं सल्लिङ्गम्। एतदेव 'बीजमङ्कुरो जायते' इत्यत्रापि बोध्यम्। 'संघीभवन्ति ब्राह्मणाः' इत्यत्र वृत्तौ तु प्रकृतेर्बहुवचनदर्शनेन तस्यैव कर्तृत्वमिति। एवञ्च— 'बीजमङ्कुरो जायते', 'क्षीरं दधि सम्पद्यते' इत्यादौ लिङ्गदर्शनरूपविनिगमनाया अभावे कर्तृत्वविषयकं दर्शनं भिद्यते। तथा हि—केचिद् विकारस्य कर्तृत्वं वदन्ति, तस्यैव साध्यत्वेनात्मलाभरूपोत्पत्तिक्रियायोग्यत्वादिति।

केचित्तु प्रकृतेः कर्तृत्वं वदन्ति प्रकृतिरूपेणात्मनो लब्धत्वेऽपि उत्तरावस्थालक्षणात्मलाभोन्मुख्यरूपां जनिं प्रति प्रकृतेः कर्तृत्वसम्भवादिति।

अयं भावः—इह 'क्षीरं दधि सम्पद्यते' इत्यादौ प्रकृतिविकारविषये सामानाधिकरण्यम्=समानार्थकत्वं समानविभक्तिकत्वञ्च दृश्यते। अत्र च सन्देहः।

तथा हि—पदार्थानां परस्परं सम्बन्धान्यथाऽनुपपत्त्या तेषां गुणप्रधानभावस्य अवश्यंभावात् 'क्षीरं दधि सम्पद्यते', 'बीजमङ्कुरो जायते' इत्यादौ किं प्रकृतिः प्रधानम्, विकारोऽङ्गम्, उतैतद्वैपरीत्यमिति। तत्र प्रकृतेर्विकारार्थत्वात् तदङ्गत्वम्, विकारस्य तु प्राधान्यमिति प्रधानस्य विकारस्य दध्यादेः कर्तृत्वं जनिं प्रति, अङ्गस्य तु प्रकृतिरूपस्य प्रधानद्वारकोऽभेदेन जनिसम्बन्ध इति तयोः सामानाधिकरण्यम्= समानविभक्तिकपदबोध्यत्वे सति समानार्थकत्वरूपम्। यदा तु 'बीजादङ्कुरो जायते' इत्येवं प्रकृतिविकृत्योर्विभक्तिभेदेन निर्देशः, तदा विकारस्य कर्तृत्वे सन्देह एव नास्ति। "जनिकर्तुः प्रकृतिः" (पा० १।४।३०) इति शास्त्रबलेन बीजरूपायाः प्रकृतेरत्रापादानतया निर्देशादिति।

प्रकृतिकर्तृकास्तु मन्यन्ते—असतो हि विकारस्यात्मलाभं प्रत्याभिमुख्यायोगात् तल्लक्षणे जन्मनि कर्तृतानुपपत्तिः। आत्मलाभोन्मुखता हि जन्म सिद्धान्तयिष्यते। प्रकृतिरूपेण चात्मनो लब्धत्वादुत्तरावस्थालक्षणात्मलाभौन्मुख्यमवतिष्ठत इति तत्र प्रकृतेरेव कर्तृत्वमुचितमिति ॥ ११४ ॥

तदेतद्दर्शनद्वयं लिङ्गदर्शनैः प्रयोगभेदस्वभावैर्विषयविभागेनावस्थापयितुमाह—

**क्लृपि सम्पद्यमाने या चतुर्थी सा विकारतः।**
**सुवर्णपिण्डे प्रकृतौ वचनं कुण्डलाश्रयम् ॥ ११५ ॥**

---

तत्र विकारः कर्तेति वादिनामयमाशयः। आत्मलाभः खलु जनिधात्वर्थः। असता अलब्धात्मना चात्मा लब्धव्यः, तादृशश्च विकार एव, न तु प्रकृतिरिति विकार एवात्र कर्ता युक्त इति।

प्रकृतेः कर्तृत्ववादिनस्तु मन्यन्ते—आत्मलाभं प्रति आभिमुख्यं जन्म, न त्वात्मलाभः, प्रकृतेस्तस्य प्रागेव सिद्धत्वात्, विकारस्य तु ततः प्रागसत्त्वेन तं प्रति कर्तृत्वायोगात्। न चैतत्, ततः प्रागसतो विकारस्य सम्भवति, आत्मलाभोन्मुखता हि जन्मेति सिद्धान्तयिष्यते। प्रकृतिरूपेण चात्मनो लब्धत्वात्। उत्तरावस्थालक्षणात्मलाभौन्मुख्यम्=उत्तरावस्थालक्षणोऽत्र आत्मलाभस्तदुन्मुखत्वमेव जनिधात्वर्थत्वेन अवतिष्ठत इति तत्र=जनिधात्वर्थे प्रागुक्तरूपे जन्मनि प्रकृतेरेव कर्तृत्वमुचितमिति ॥ ११४ ॥

तदेतद् दर्शनद्वयम्=जन्मनि विकारः कर्ता, जन्मनि प्रकृतिः कर्त्री इति दर्शनद्वयम्, प्रयोगभेदस्वभावैः=प्रयोगभेदस्वरूपैः लिङ्गदर्शनैः=दृश्यमानैर्लिङ्गैः विषयविभागेनावस्थापयितुमाह—**क्लृपि सम्पद्यमान** इति।

अस्यार्थः--'यवागूर्मूत्रं जायते' इत्यत्र सन्देहः। अत्र यवागूरूपायाः प्रकृतेः कर्तृत्वम्, मूत्ररूपस्य तद्विकारस्य वेति।

तत्रैष निर्णयः--मूत्राय सम्पद्यते यवागूरित्यत्र विकारवचनाच्चतुर्थी श्रूयमाणा तस्यैव कर्तृत्वमावेदयत इति। तथा हि "क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या" (वा० १४३) इति वार्त्तिकम्।

तस्यार्थः--क्लृपि=क्लृप्यर्थभूतायां सम्पादनक्रियायां सत्यां सम्पद्यमाने=सम्पादनक्रियाकर्तरि चतुर्थी वक्तव्या इति। तथा च क्लृपि धात्वर्थभूतायां सम्पादनक्रियायां सत्यां सम्पद्यमाने=सम्पादनक्रियाकर्तरि या चतुर्थी सा विकारतो दृश्यत इति 'यवागूर्मूत्रं जायते' इत्यत्रापि विकारस्यैव कर्तृत्वम्, प्रकृतेस्तु तद्द्वारेणैव क्रियान्वय इति चतुर्थीदर्शनरूपं लिङ्गमत्र विकारस्य कर्तृत्वनिर्णायकमिति। 'पुनरावृत्तः सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवतः' (म० भा०, पस्पशा०) इत्यत्र तु

'क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या' इति वार्त्तिकस्यायमर्थः—सम्पा(म्प)-दनक्रियाकर्तरि चतुर्थी विधेयेति। प्रयोगमूलत्वाच्च स्मृतेर्विकारवचनाच्चतुर्थी श्रूयमाणा विकारस्यैव सम्पत्तिक्रियाकर्तृत्वमावेदयते। 'मूत्राय सम्पद्यते यवागू' इति यवागूर्मूत्रं जायत इत्यत्र।

प्रकृतेरत्र विकारद्वारेण क्रियासमन्वयो न साक्षात्। भेदविवक्षायां तु 'जनिकर्तुः प्रकृतिः' (पा० १।४।३०) इति 'अपादाने पञ्चमी' (पा० २।३।२८), वात्र कारकविभक्तिः। 'यवाग्वा मूत्रं जायते' इति। अभेदविवक्षा तु चतुर्थ्या अवकाशः। अत एव तत्र सन्देहे सत्ययं निर्णयो व्यधायि। तथा 'पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाऽऽकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः' इत्यत्र भाष्यप्रयोगे सुवर्णपिण्डस्य प्रकृतित्वेऽपि न तद्गतमेकत्वं दृश्यते; अपि तु विकार-रूपकुण्डलद्वित्वाश्रयं भवत इति द्विवचनं कर्तृप्रत्ययरूपं दृश्यत इत्यस्मादपि लिङ्गाद् विकारस्य कर्तृत्वावसायः॥ ११५॥

लिङ्गान्तरं विषयभेदेन प्रकृतिविकारयोः कर्तृत्वानुमापकमाह—

**वाक्ये सम्पद्यतेः कर्ता संघच्व्यन्तस्य(संघोऽच्व्यन्तः स) कथ्यते।**
**वृत्तौ संघीभवन्तीति ब्राह्मणानां स्वतन्त्रता॥११६॥**

---

सुवर्णपिण्डे प्रकृतौ=सुवर्णपिण्डरूपायां प्रकृतौ सत्यां कुण्डलाश्रयम्=कुण्डलगत-द्वित्वनिमित्तकम्, वचनम्=द्विवचनम्, विकारस्य कर्तृत्वे लिङ्गमिति।

अयं भावः---"क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या" (वा० १४३) इति वार्त्ति-कस्यायमर्थः=क्लृप्यर्थभूतसम्पादनक्रियाकर्तरि चतुर्थी विधेयेति। व्याकरणस्मृतेः प्रयोगमूलकत्वाच्च 'यवागूर्मूत्राय सम्पद्यते' इत्यत्र विकारवचनाच्चतुर्थी श्रूयमाणा विकारस्यैव सम्पत्तिक्रियाकर्तृत्वमावेदयते। ततश्च समानार्थके 'यवागूर्मूत्राय जायते' इत्यत्रापि तस्यैव कर्तृत्वम्।

प्रकृतेरत्र विकारद्वारेण क्रियासमन्वयो न साक्षादिति न तस्य कर्तृत्वम्। प्रकृतिविकृत्योर्भेदविवक्षायां तु "जनिकर्तुः प्रकृतिः" (पा० १।४।३०) इति प्रकृतेर-पादानसंज्ञायामपादानपञ्चम्येवात्र कारकविभक्तिः, 'यवाग्वा मूत्रं जायते' इति। तयोरभेदविवक्षायां तु सम्पद्यमाने कर्तरि चतुर्थ्या अवकाशः। अत एव तत्र सन्देहे— 'यवागूर्मूत्रं जायते' इत्यत्रप्रकृतिविकृत्योः कर्तृत्वसन्देहे सति सम्पत्तिक्रियाकर्तरि विकारे चतुर्थीरूपलिङ्गदर्शनेन विकारस्यैवात्र कर्तृत्वमिति निर्णयो व्यधायि। तथा— 'पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाऽऽकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः' (म०भा०, पस्पशा०)इति भाष्यप्रयोगे सुवर्णपिण्डस्य प्रकृतित्वेऽपि न तद्गतमेकत्वमनु-प्रयोगे दृश्यते; अपि तु विकाररूपकुण्डलगतद्वित्वनिमित्तकं भवत इति तिङ्द्विवचनं कर्तृप्रत्ययरूपं दृश्यत इत्यतोऽपि लिङ्गाद् विकारस्य कर्तृत्वनिर्णय इति॥ ११५॥

अभूततद्भावे कृभ्वस्तिविवक्षायां सम्पद्यकर्तरि च्विर्विधीयते। तस्यार्थप्रदर्शनाय यद् वाक्यं क्रियते, तत्र विकारस्य सम्पद्यकर्तृत्वं दृश्यते। तद्यथा असङ्घो ब्राह्मणः सङ्घो भवतीति सङ्घगतैकत्वाश्रयस्य वचनस्य च दर्शनात् सङ्घ एव कर्ता। वृत्तौ तूच्यते 'संघीभवन्ति ब्राह्मणाः' इति। अत्र प्रकृतिभूतब्राह्मणगतबहुवचनदर्शनात् प्रकृतेः कर्तृत्वावसायः। तदेवं प्रयोगभेदेन प्ररूढं प्रकृतिविकारयोः कर्तृत्वमुन्नेयम् ॥ ११६ ॥

इदानीं प्रकृतेः कर्तृत्वे भाष्यकारोक्तं लिङ्गमाह—

**अत्वं सम्पद्यते यस्त्वं न तस्मिन् युष्मदाश्रया।**
**प्रकृतिः पुरुषस्यास्ति प्राकृतः स विधीयते ॥ ११७ ॥**

---

प्रकृतिविकारयोः कर्तृत्वानुमापकं लिङ्गान्तं विषयभेदेन=प्रयोगभूमिभेदेन आह—वाक्ये इति।

अस्यार्थः—अत्र पद्ये द्वितीयपादे 'संघच्व्यन्तस्य' इत्यस्य स्थाने 'संघोऽच्व्यन्तः सः' इति पाठः साधु प्रतीयते, अर्थानुगतत्वादिति समन्वयानर्हत्वात्, अनुमितार्थबोधकत्वाच्च।

तथा चायमर्थः—'ब्राह्मणाः संघः सम्पद्यते' इति वाक्ये योऽच्व्यन्तः संघः स सम्पद्यते=सम्पत्तिक्रियायाः कर्ता कथ्यते। असंघः संघो भवति 'संघीभवन्ति ब्राह्मणाः' इति च्विप्रत्ययरूपतद्धितवृत्तौ तु प्रकृतिरूपाणां ब्राह्मणानामेव स्वतन्त्रता= कर्तृता, न तु तद्विकारस्य संघस्येति।

अयं भावः—अभूततद्भावे=यत्र पुरा अभूतस्य तद्भावमप्राप्तस्य=तद्भावस्तत्र कृभ्वस्तिविवक्षायाम्=कृभ्वस्तिधातुयोगविवक्षायाम्, सम्पद्यकर्तरि= सम्पद्यमाने कर्तरि च्विर्विधीयते।

तत्रायं विशेषो बोध्यः—कृधातोः कर्म सम्पद्यतेः कर्ता। अशुक्लं वस्त्रं शुक्लं सम्पद्यते तत्करोति शुक्लीकरोति वस्त्रमित्यत्र। भ्वस्त्योस्तु अकर्मकत्वात् तत्कर्तैव सम्पद्यतेः कर्तेति। तत्र वृत्तेरर्थप्रदर्शनाय यल् लौकिकं विग्रहवाक्यं क्रियते, तत्र विकारस्य सम्पद्यमानकर्तृत्वं दृश्यते। तद् यथा— असंघो ब्राह्मणः संघो भवति' इति श्रूयमाणसंघगतैकत्वनिमित्तकस्य भवतीति तिङेकवचनस्य लिङ्गस्य दर्शनाच्च संघ एव कर्ता। वृत्तौ तु कृतायाम्—'लोके संघीभवन्ति ब्राह्मणाः' इति प्रयुज्यते। अत्र संघरूपविकारप्रकृतिभूतब्राह्मणगतबहुत्वनिमित्तकतिङ्बहुवचनदर्शनात् प्रकृतिभूतानां ब्राह्मणानां कर्तृत्वनिश्चयः। तदेवं प्रयोगभेदेन लोके प्रसिद्धं प्रकृतेः कर्तृत्वं 'वृक्षः पञ्च नौका भवति' इत्यत्र,'पञ्च श्लोकाः कुलकं भवति' इत्यत्र विकारस्य कुलकस्य कर्तृत्वमुन्नेयम्। तथा च लक्षणस्य लक्ष्यानुसारित्वात् प्रयोगस्य च विवक्षाधीनत्वादव्यवस्थितं प्रकृतिविकारयोः कर्तृत्वं प्रयोगे तु तत्र तत्र नियतमेवेति ॥११६॥

"अत्वं त्वं सम्पद्यते त्वद्भवति" ( म० भा० १।४।१०८ ) इति भाष्य उदाहृतम् । अत्र युष्मदर्थो विकारः । न च तदाश्रयो मध्यमः पुरुषो दृश्यते; अपि तु 'भवति' इत्ययुष्मदर्थरूपप्रकृतिगतप्रथमपुरुषदर्शनात् प्रकृतेरेव कर्त्रीत्वावसायः ।। ११७ ।।

तदेतद्विषयभेदेन प्रयोगप्रामाण्यादवस्थितं कथं युज्यत इत्यत्रोपपत्तिमाह—

पूर्वामवस्थामजहत्संस्पृशन् धर्ममुत्तरम् ।
सम्मूर्च्छित इवार्थात्मा जायमानोऽभिधीयते । ११८ ।।

---

इदानीम् 'अत्वं त्वं सम्पद्यते त्वद्भवति' इत्यत्र अयुष्मदर्थरूपायाः प्रकृतेः कर्तृत्वे वाचकत्वेन अयुष्मदर्थरूपयुष्मदर्थविकारप्रकृतिगतप्रथमपुरुषदर्शनरूपं भाष्यकारोक्तं लिङ्गमाह—अत्वं सम्पद्यत इति ।

अस्यार्थः—'अत्वं त्वं सम्पद्यते त्वद्भवति' इति यो भाष्यप्रयोगस्तस्मिन् पुरुषस्य=मध्यमपुरुषस्य, युष्मदाश्रया=युष्मदर्थरूपविकारनिमित्तिका, प्रकृतिः=स्वभावः=स्वरूपं नास्ति, अतः प्राकृतः=अयुष्मदर्थरूपप्रकृतिहेतुकः प्रथमपुरुषोऽत्र विधीयत इति ।

अयं भावः—'अत्वं त्वं सम्पद्यते त्वद्भवति' इति प्रकृतेः कर्तृत्वे उदाहृतं भाष्ये। अत्र युष्मदर्थो विकारः। अयुष्मदर्थमुद्दिश्य युष्मदर्थस्य विधेयत्वात् । प्राथम्यं हि अयुष्मदर्थस्य उद्देश्यत्वे निमित्तम् ।

न चात्र युष्मदर्थनिमित्तको मध्यमः पुरुषो दृश्यते; अपि तु 'त्वद्भवति' इत्यत्र वाचकत्वेन अयुष्मदर्थरूपप्रकृतिगतप्रथमपुरुषदर्शनात् प्रकृतेरेव कर्तृत्वमिति निर्णय इति ।। ११७ ।।

तदेतत् प्रकृतिविकारयोः पृथक् पृथक् कर्तृत्वं प्रयोगभूमिरूपविषयभेदेन प्रयोगप्रामाण्यादवस्थितं शास्त्रेण च तदेवानुसृतमपि कथं युक्त्या उपपद्यत उभयोः कर्तृत्वमित्यत्रोपपत्तिमाह—पूर्वामवस्थामजहदिति ।

अस्यार्थः—पूर्वामवस्थाम्=उत्पत्तेः प्राक्तनीं निजावस्थाम् अजहत्=अत्यजन्नित्युत्पत्तेः प्राङ् निष्पन्नत्वेन प्रकृतेः कर्तृत्वसम्भावना । उत्तरम्=कारणावस्थात उत्तरञ्च धर्मम्=अवस्थाविशेषं विक्रियात्मकम्, संस्पृशन्=प्राप्नुवन् इति विकारस्य कर्तृत्वसम्भावना । एवं पूर्वापरावस्थारूपोपाधिद्वयावच्छिन्न एक एवार्थात्मा संमूर्च्छित इव उत्पादकसामग्र्या प्रतीयमानतामापाद्यमान इव भूत्वा जायमान इत्यभिधीयते । एवञ्चैकस्यैवार्थस्य प्रकृतिविकृत्युभयात्मकत्वाद् मतभेदेन प्रागुक्तमुभयोरपि कर्तृत्वमुपपद्यत इति ।

इह न सर्वथैवानिष्पन्नं जायत इत्यभिधीयते; अपि तु पूर्वां कारणावस्थामविजहदत्यजदिति प्रकृतेरपि कर्तृत्वसम्भावनात्र। नापि सर्वात्मनोदासीनम्; अपि तूत्तरावस्थाविशेषं संस्पृशद् आसादयदिति विकारस्यापि कर्तृत्वसम्भावना। एवं च पूर्वापरावस्थोपाध्यवच्छिन्नमेकं वस्तु पूर्वावस्थानुगुण्येनोत्तरावस्थासादनोन्मुखं प्रतीयमानरूपमिवाध्यवसीयमानं जायत इति धात्वर्थप्रत्ययार्थयोरानुगुण्यमासादयति। तथा च प्रकृतिविकारयोः सामानाधिकरण्यमुभयोरपि च कर्तृत्वमुपपद्यते ॥ ११८ ॥

यद्येवं सर्वत्रैवोभयोः कर्तृत्वं स्यादित्याशङ्क्याह—

सव्यापारतरः कश्चित् क्वचिद्धर्मः प्रतीयते।
संसृज्यन्ते च भावानां भेदवत्योऽपि शक्तयः ॥ ११९ ॥

---

अयं भावः—इह नैयायिकादिरीत्याऽसत्कार्यवादमाश्रित्य सर्वथैवानिष्पन्नमुत्पत्तेः प्रागसद् जायत इति नाभिधीयते; अपि तु पूर्वां कारणावस्थामविजहदत्यजदिति रीत्या प्रकृतेरपि निष्पन्नत्वेन उत्पत्तेः प्राक् सत्त्वेन कर्तृत्वसम्भावनात्र। नापि उत्पत्तेः प्राङ् निष्पन्नमपि उत्पत्तिक्रियायां सर्वात्मना उदासीनं जायत इत्यभिधीयते; अपि तु विक्रियारूपमुत्तरावस्थाविशेषं संस्पृशदुत्पादकसामग्रीबलादासादयदिति रीत्या साध्यत्वेन विकारस्यापि जनिकर्तृत्वसम्भावना। एवञ्च पूर्वापरावस्थारूपोपाधिद्वयावच्छिन्नमेकं वस्तु पूर्वावस्थाया अविरोधेन कारणसामग्रीबलप्राप्यमाणविक्रियारूपोत्तरावस्थाप्राप्त्युन्मुखं विस्तीर्यमाणस्वरूपमिव निश्चीयमानं सद् जायत इत्यत्र जनिधात्वर्थकर्तृरूपतिङ्प्रत्ययार्थयोरानुकूल्यमात्मन्यासादयति। तथा च 'बीजमङ्कुरो जायते', 'क्षीरं दधि सम्पद्यते', 'वृक्षः पञ्च नौका भवति' इत्यादौ प्रकृतिविकारयोः सामानाधिकरण्यम्=समानविभक्तिकत्वम्, उभयोरपि कर्तृत्वञ्चोपपद्यत इति ॥ ११८ ॥

ननु यद्येवम्=अनुपदोक्तरीत्या 'क्षीरं दधि सम्पद्यते, बीजमङ्कुरो जायते' इत्यादौ प्रकृतिविकृत्योरुभयोः कर्तृत्वं समुपपद्यते, तर्हि सर्वत्रैवोभयोः कर्तृत्वं स्यात्, तथा च 'यवाग्वा मूत्रं जायते, बीजादङ्कुरो जायते' इत्यादयः कथं प्रयोगाः? किञ्च, 'जनिकर्तुः प्रकृतिः" (पा० १।४।३०) इति प्रकृतेरपादानत्वेन कथं तत्र परस्परं विरुद्धे भिन्ने च अपादानत्वकर्तृत्वशक्ती स्याताम्?

किञ्च, शक्तिद्वयस्यान्यत्र भिन्नत्वेन वैयधिकरण्येन च दृष्टस्य क्वचित् सांकर्यसम्भवेऽपि तत्र कर्तृत्वप्रयुक्ता प्रथमैव, न त्वपादानत्वप्रयुक्ता पञ्चमी इत्यत्र किं विनिगमकमित्येतत् सर्वमाशङ्क्याह—सव्यापारतरः कश्चिदिति।

अस्यार्थः- क्वचित् कश्चिद् धर्मः विकाररूपः, वचनादिरूपलिङ्गदर्शनेन सव्यापारतरः प्रतीयते=अनुमीयते, क्वचित्तु तेनैव प्रकृतिरिति।

द्वयोरपि प्रकृतिविकृत्योरुक्तेन न्यायेनाभेदापत्त्या जनिसमन्वयसहत्वेऽपि कर्तृप्रत्ययोत्पत्तौ क्वचिद् विकारः सव्यापारः ( सव्यापारतरः ), क्वचित् प्रकृतिरित्युक्तम् । एवमपि च विषयविभागेन 'जायते' इत्यत्र यथोक्तेन प्रकारेण द्वयोरपि कर्तृत्वमुपपादितम् । यतो भावानामन्यत्र भिन्ना अपि शक्तयः क्वचित् संसर्गमपि प्राप्नुवन्तीत्यर्थः ।

---

इदन्तु बोध्यम्—'क्षीरं दधि सम्पद्यते' इत्यत्र विकारः सव्यापारतरः, विधेयत्वेन प्राधान्यात् । प्रकृतेस्तु तत्र उद्देश्यत्वेन अनूद्यमानत्वम्, तेन च गुणत्वम्, तेन चापकृष्टव्यापारत्वमिति । 'वृक्षः पञ्च नौका भवति' इत्यत्र तु तिङेकवचनरूपलिङ्गदर्शनेन प्रकृतेरेव सव्यापारतरत्वमनुमीयते । ततश्च तस्या एव साक्षात् क्रियान्वयेन कर्तृत्वम्, विकारस्य तु तदभेदेन कर्तृत्वमिति उभयोः कर्तृत्वेऽपि सव्यापारतरत्वेन प्रकृत्यानुगुण्येनैव कर्तृप्रत्यय इत्येवं तिङेकवचनोपपत्तिरिति ।

ननु प्रकृतिविकृत्योरुभयोः कथं कर्तृत्वम्, प्रकृतौ अपादानत्वशक्त्या सह कर्तृत्वस्य विरोधादित्याशङ्क्याह—संसृज्यन्ते इति । भावनाशक्त्योऽन्यत्र भेदवत्योऽपि भिन्ना अपि क्वचित् संसृज्यन्ते च=प्रयोगप्रामाण्यात् संसृज्यन्ते अपि, 'क्षीरं दधि सम्पद्यते' इत्यादाविति । ततश्च विवक्षया प्रयोगप्रामाण्येन च क्वचित् कर्तृशक्तिप्रयुक्ता प्रथमा, क्वचिच्च ताभ्यामेव हेतुभ्यामपादानत्वप्रयुक्ता प्रकृतौ पञ्चमी इति । किञ्च, भावानां प्रकृतिविकृतिरूपाणामन्यत्र प्रकृतिविकृत्योरेकैकोपादाने भिन्ना अपि कर्तृत्वशक्तय उभयोर्युगपदुपादाने संसृज्यन्तेऽपि । तेन उभयोपादानस्थले उभयोरपि साक्षादेव क्रियान्वयेन साक्षादेव कर्तृत्वम् । साक्षात् क्रियान्वयश्च खले कपोतन्यायेन युगपत् । 'क्षीरं सम्पद्यमानं दधि सम्पद्यते' इति । यथा—'कटं भीष्मं कुरु' इत्यादौ कटभीष्मयोरुभयोरपि विशेष्यविशेषणयोः 'कटं कुरु, भीष्मं कुरु' इति साक्षादन्वयेन उभयोः कर्मत्वं भाष्ये दर्शितमिति ।

अयं भावः—द्वयोरपि प्रकृतिविकृत्योः पूर्वामवस्थामजहदित्यादिकारिकायामुक्तया युक्त्या अभेदापत्त्या साक्षात्परम्परया वा जनिक्रियाऽन्वयसहत्वेन उभयोः कर्तृत्वेऽपि कर्तृप्रत्ययोत्पत्तौ क्वचिद् विकारः साक्षात् क्रियान्वयं निमित्तीकृत्य सव्यापारतरः, क्वचित् प्रकृतिरित्युक्तप्रायं प्राक् । अपि चैवं विषयविभागेन=वाक्यभेदरूपप्रयोगभूमिभेदेन जायते, इत्यत्र प्रागुक्तेन प्रकारेण प्रकृतिविकृत्योरुभयोरपि कर्तृत्वमुपपादितम् । यतो भावानां प्रकृतिविकृतिरूपाणामन्यत्र='बीजादङ्कुरो जायते, बीजमङ्कुररूपेण जायते' इत्यादौ, स्वरूपभेदेनाश्रयभेदेन वा भिन्ना अपि कर्तृत्वापादानत्वादिशक्तयः कर्तृत्वशक्तयो वा क्वचित्='बीजमङ्कुरो जायते' इत्यादौ संसर्गमपि प्राप्नुवन्तीत्यर्थः ।

यद्वा, सर्वत्रैव द्वयोरपि कर्तृत्वम्, कस्य तु साक्षादिति प्रकर्षः सव्यापारतर इत्युक्तम्।

प्रकृतिविकृत्योर्हि सामानाधिकरण्यान्यथानुपपत्त्या एकस्य जनिकर्तृत्वे नान्तरीयकमपरस्यापि तद्वेदितव्यम्। यो हि विधेयः स प्रधानभूतः प्रकर्षेण जनिव्यापारवान्, अन्यस्त्वनूद्यमानो गुणोऽप्रकृष्टव्यापारः ॥ ११९ ॥

तथा च संसर्गः कर्तृशक्त्योर्यदि, तर्हि त्वद्भवतीत्यत्र विकारावस्थाश्रयः पुरुषः कस्मान्न भवतीत्याशङ्क्याह—

विपरीतार्थवृत्तित्वं पुरुषस्य विपर्यये।
गम्येत साधनं ह्यत्र सव्यापारं प्रतीयते ॥ १२० ॥

---

अत्र यदुक्तं हेलाराजेन —"कर्तृप्रत्ययोत्पत्तौ क्वचिद् विकारः सव्यापारतरः, क्वचित् प्रकृतिः" इति, तच्चिन्त्यम्, कर्तृप्रत्ययोत्पत्तौ प्रयोक्तुरेव सव्यापारत्वात्। अत एवारुचेः "यद्वा, सर्वत्रैव द्वयोरपि कर्तृत्वमि"त्यादिनाऽस्य व्याख्यानान्तरमारब्धं तेनेति।

तस्यायं भावः—यद्वा सर्वत्रैव=यत्र विकारस्य साक्षात् क्रियान्वयः, प्रकृतेस्तु तदभेदेन तत्र, एतद्वैपरीत्येन। यत्र प्रकृतेः साक्षात् क्रियान्वयः, विकारस्य तु तदभेदेन तत्र च, द्वयोरपि प्रकृतिविकृत्योः कर्तृत्वम्, एकस्य तु साक्षादिति तस्य प्रकर्ष इति सव्यापारतर इत्युक्तम्।

'यद्वा' इत्यादिको हेलाराजीयो ग्रन्थः पक्षान्तरपरतया नेयः, न त्वरुचिपरतया. 'साधनं ह्यत्र सव्यापारं प्रतीयते' (१२०) इत्यग्रिमकारिकागतवाक्यानुरोधादिति कल्पनापि न चार्वी, तस्य ग्रन्थस्य विकारोत्पत्तौ साधनस्य सव्यापारत्वप्रदर्शनपरत्वादिति।

'क्षीरं दधि सम्पद्यते, बीजमङ्कुरो जायते' इत्यादौ हि प्रकृतिविकृत्योः समानार्थकसमानविभक्तिकपदबोध्यत्वरूपसामानाधिकरण्यान्यथानुपपत्त्या एकस्य जनिकर्तृत्वेऽपरस्यापि नान्तरीयकं तद्वेदितव्यम्। प्रकृतिविकृत्योर्हि यो विधेयः स तत एव प्रधानभूतः प्रकर्षेण जनिक्रियायां व्यापारवान् इति तदानुगुण्येन कर्तृप्रत्ययः। अन्यस्तु अनूद्यमानत्वेन गुणोऽप्रधान इति अपकृष्टव्यापार इति न तदानुगुण्येन स इत्यवधेयमिति ॥ ११९ ॥

ननु यदि तथा च=तेन प्रकारेण च=प्रागुक्तप्रकारेण च प्रकृतिविकृतिगतयोः कर्तृशक्त्योरेकत्र संसर्गः तर्हि 'अत्वं त्वं सम्पद्यते, त्वद्भवति' इत्यत्र युष्मदर्थरूपविकारावस्थानिमित्तको मध्यमपुरुषः कस्मान्न भवति इत्याशङ्क्याह—विपरीतार्थवृत्तित्वमिति।

'अत्वं त्वं सम्पद्यसे, त्वद्भवसि' इत्येवं युष्मदर्थाश्रयेऽत्र मध्यमे पुरुषे विवक्षितोऽर्थो न प्रतीयते—अयुष्मदर्थः प्रकृतिः, युष्मदर्थो विकृतिरिति; अपि तु युष्मदर्थः प्रकृतिः सव्यापारा प्रत्ययोत्पत्ताविति तस्या अन्या विकृतिः प्रतीयेत। 'सम्पद्यसे' इति हि साधनं युष्मदर्थः सव्यापारं प्रतीयत इति तस्य फलवत्तया विकारान्तरमनुषज्येत। तथा च युष्मदर्थस्तद्विपरीतमयुष्मदर्थभावमापद्यत इति विज्ञायेत। तस्मादयुष्मदर्थस्य प्रकृतेः सम्पद्यमानत्वसम्प्रत्ययार्थं प्रथम एवात्र पुरुषो न्याय्यः ॥ १२० ॥

विपरीतार्थवृत्तित्वमेव व्याचष्टे—

त्वमन्यो भवसीत्येषा तत्र स्यात् परिकल्पना।
राज्ञि भृत्यत्वमापन्ने यथा तद्वद्गतिर्भवेत् ॥ १२१ ॥

---

अस्यार्थः—'अत्वं त्वं सम्पद्यते, त्वद्भवति' इत्यत्र श्रुतस्य प्रथमपुरुषस्य विपर्यये युष्मदर्थाश्रये मध्यमपुरुषे कृते सति 'अत्वं त्वं सम्पद्यसे त्वद्भवसि' इति वाक्यस्य विपरीतार्थवृत्तित्वम्—अयुष्मदर्थः प्रकृतिः, युष्मदर्थो विकृतिरिति विवक्षितादर्थाद् विपरीतार्थवृत्तित्वम्, युष्मदर्थः प्रकृतिः, अयुष्मदर्थो विकृतिरिति विपरीतार्थनिष्ठत्वं गम्येत=प्रतीयेत। हि=यतः, सम्पद्यसे इति मध्यमपुरुषेण युष्मदर्थरूपं साधनं विकाररूपफलोत्पत्तौ सव्यापारं प्रतीयत इति युष्मदर्थस्य प्रकृतित्वेऽयुष्मदर्थस्य विकारत्वस्यात्राविवक्षितस्य प्रतीतिप्रसङ्ग इति।

अयं भावः—'अत्वं त्वं सम्पद्यते त्वद्भवति' इत्यत्र अयुष्मदर्थः प्रकृतिः, युष्मदर्थो विकृतिरिति विवक्षितोऽर्थः', स च 'अत्वं त्वं सम्पद्यसे त्वद्भवसि' इत्येवं युष्मदर्थाश्रये=युष्मदर्थरूपकर्तृनिमित्तके, अत्र मध्यमे पुरुषे कृते सति न प्रतीयते; अपि तु युष्मदर्थः प्रकृतिः, तस्या अन्या विकृतिः कर्तृप्रत्ययोत्पत्तौ सव्यापारा= निमित्तभूता प्रतीयेत। सम्पद्यसे इति हि युष्मदर्थरूपं साधनमयुष्मदर्थरूपविकारोत्पत्तौ सव्यापारं प्रतीयत इति युष्मदर्थरूपस्य साधनस्य फलवत्त्वावश्यंभावेनायुष्मदर्थरूपं विकारान्तरमनुषज्येत। तथा च युष्मदर्थरूपा प्रकृतिस्तद्विपरीतम्= स्वस्माद् भिन्नम् अयुष्मदर्थभावमापद्यत इति विज्ञायेत। तस्मादयुष्मदर्थरूपायाः प्रकृतेः सम्पद्यमानत्वसम्प्रत्ययार्थम्=सम्पत्तिक्रियाकर्तृत्वज्ञानार्थम्, प्रथमपुरुष एवात्र न्याय्यः, 'अत्वं त्वं सम्पद्यते त्वदभवति' इति ॥ १२० ॥

'विपरीतार्थवृत्तित्वं पुरुषस्य विपर्यये' (का० १२०) इत्युक्तं विपरीतार्थवृत्तित्वमेव व्याचष्टे—त्वमन्यो भवसीति।

अस्यार्थः—तत्र='अत्वं त्वं संपद्यसे त्वद्भवसि' इत्यत्र 'त्वमन्यो भवसि' इत्येषा युष्मदर्थरूपा प्रकृतिरयुष्मदर्थरूपविकृतिमापद्यत इत्येषा परिकल्पना स्यात्। न चायमर्थो विवक्षितः, अयुष्मदर्थरूपा प्रकृतिर्युष्मदर्थरूपविकृतिभावमापद्यत

यथा 'राजन् अराजा सम्पद्यसे' इत्युक्ते राजार्थस्य प्रकृतेर्युष्मदर्थस्याख्यातपदेन प्रत्यायनात् सव्यापारस्य स्वार्थविपरीतभृत्यभावेन सम्पत्तिक्रियाकर्तृत्वं प्रतीयते, तथात्र 'त्वद्भवसि' इत्युक्तेऽव्यवस्थासादने ( अयुष्मदर्थासादने ) युष्मदर्थस्य कर्तृत्वावसायाद् विवक्षितोऽर्थो युष्मदर्थतापत्तिलक्षणो न प्रतीयेतेति तत्सम्प्रत्ययार्थं प्रथमपुरुषो ज्यायान् ।

न ह्यन्यदभिधित्सितमन्यदभिधानीयम् । 'सुवर्णपिण्डः कुण्डले भवतः' इत्यत्र तु विकारस्यापि कर्तृत्वे कुण्डले सुवर्णपिण्डात्मतया परिणमेत इति विपरीतार्थवृत्तित्वं न भवति, भवतौ कर्तुरवश्यं विकारापेक्षाभावात् । च्विविषय एव हि कर्तुरवश्यं विकारान्तरावेशः कथ्यते ।

यस्मात् प्रकृतिविवक्षायां च्विर्विधीयते, स्वेनात्मना च सिद्धा प्रकृतिरिति विकाररूपमापद्यमाना सव्यापारा विशिष्टविकारनिर्वृत्ति( निवृत्ति )प्रतिपत्तये विकारशब्दाभिधेया कर्त्री न्याय्या, (अ) च्व्यन्तस्य वृत्तौ हि च्यन्तस्य क्रियायोगे

---

इत्यर्थस्यैवात्र विवक्षितत्वादित्येवं विवक्षितार्थविपरीतार्थविषया एषा कल्पना स्यात् । यथा राज्ञि भृत्यत्वमापन्ने 'राजन् अधुना अराजा सम्पद्यसे' इत्यत्र राज्ञो युष्मदर्थस्य प्रकृतित्वम्, अयुष्मदर्थस्य च भृत्यभावस्य विकृतित्वमिति ज्ञानं भवति, तद्वत् 'अत्वं त्वं सम्पद्यसे त्वद्भवसि' इत्यत्र गतिर्ज्ञानं भवेदिति विवक्षितार्थविपरीतार्थवृत्तित्वं वाक्यस्य प्रतीयेत इति ।

अयं भावः—यथा 'हे राजन् ! अधुना भाग्यविपर्ययादराजा सम्पद्यसे' इत्युक्ते राजपदार्थस्य युष्मदर्थस्य प्रकृतिरूपस्याख्यानेन प्रत्यायनात् कर्तृप्रत्ययोत्पत्तौ सव्यापारस्य=निमित्तस्य स्वार्थविपरीतभृत्यभावेन सम्पत्तिक्रियाकर्तृत्वं प्रतीयते तथात्र 'अत्वं त्वं संपद्यसे त्वद् भवसि' इत्युक्तेऽयुष्मदर्थभूतभृत्यभावरूपविकारासादने युष्मदर्थस्य कर्तृत्वावसायाद् विवक्षितोऽयुष्मदर्थस्य युष्मदर्थतापत्तिलक्षणोऽर्थो न प्रतीयेतेति तत् सम्प्रत्ययार्थं प्रथमपुरुषो ज्यायान् ।

न ह्यन्यदभिधित्सितमन्यदभिधानीयम् । एवमत्र=त्वद् भवतीत्यत्र अयुष्मदर्थरूपायाः प्रकृतेः कर्तृत्वेन प्रथमपुरुषोपपत्तिः । 'पुनरावृत्तः सुवर्णपिण्डः कुण्डले भवतः' ( म० भा०, पस्पशा० ) इत्यत्र विकारस्यापि कर्तृत्वे कुण्डले सुवर्णपिण्डात्मतया परिणमेत इत्येवंरूपेण विपरीतार्थवृत्तित्वं तु न भवति, च्विविषयत्वाभावे भवतौ कर्तुरवश्यं विकारापेक्षाया अभावात् । च्विविषय एव हि कर्तुरवश्यं विकारान्तरसम्बन्धः कथ्यते ।

यस्मात् प्रकृतिविवक्षायां च्विर्विधीयते, स्वेन रूपेण च सिद्धा प्रकृतिरिति विकाररूपमापद्यमाना विकारोत्पत्तौ सव्यापाराविशिष्टस्य विकारस्य=विकारविशेषस्य निष्पत्तिप्रतिपत्तये विकारशब्दाभिधेया सती कर्त्री न्याय्या, प्राग्

गतिसंज्ञाविधानात्। गतेः क्रियाविशेषणत्वाद् असत्त्ववचनत्वे कर्तृत्वायोगात् प्रकृतेरेव कर्तृत्वमुचितम्, विकाररूपगतिसंज्ञकच्व्यन्ताख्यविशेषणविशिष्टायां क्रियायां 'त्वद्भवति' (इत्यत्र) 'सङ्घीभवन्ति ब्राह्मणाः' इति वाक्येन तु च्व्यन्तस्य प्रकृतिविकृत्योः स्वशब्देनोपादानाद् यथाविवक्षं गुणप्रधानभावादुभयोः कर्तृत्वे नियमः।

तथा हि प्रकृतेर्निजमेव तत्त्वं सम्पदौ व्यापृतं प्राधान्येन विवक्षितं भवति। कदाचित् समारोपितं विकाररूपम्। तद्यथा 'महद्भूतश्चन्द्रमा' इत्यत्रामहदर्थ-प्रकृतिरूपस्य कर्तृत्वात् स एव महच्छब्देन विकारवाचिनाभिधीयत इति गौणत्वान्महदर्थस्यात्वं न भवतीत्युक्तम्। 'महद्भूता ब्राह्मणी' इत्यत्र तु विकार-स्यैव महदर्थस्य भवितृत्वेन कर्तृतया विवक्षितत्वात् समानाधिकरणलक्षणो भवत्येव पुंवद्भाव इत्युक्तम्॥ १२१॥

गतमानुषङ्गिकम्। इदमिदानीं वक्तव्यम् 'प्रागन्यतः शक्तिलाभाद्' (वा०प० ३, सा० १०१) इत्यादिना स्वातन्त्र्यं व्याख्यातम्। तच्च प्रयोज्यकर्तुर्नो-पपद्यते। स हि करणादिवत् प्रयोजकव्यापारे न्यग्भवन्न स्वतन्त्रः सत्यपि स्वव्यापारे

---

अच्व्यन्तस्य वृत्तौ हि च्व्यन्तस्य क्रियायोगे गतिसंज्ञाविधानात्। गतेरभेदेन क्रिया-विशेषणत्वात्, असत्त्ववचनत्वेन कर्तृत्वायोगात् प्रकृतेरेव कर्तृत्वमुचितम्, विकार-रूपगतिसंज्ञकच्व्यन्ताख्यविशेषणविशिष्टायां क्रियायां 'त्वद् भवति' इत्यत्र 'ब्राह्मणाः संघो भवति', 'संघीभवन्ति ब्राह्मणाः' इति वाक्यद्वये तु च्व्यन्तस्य प्रकृतिविकृत्योः स्वशब्देनोपादानाद् यथाविवक्षं गुणप्रधानभावादुभयोः कर्तृत्वे व्यवस्था।

तथा हि—प्रकृतेर्निजमेव स्वरूपं सम्पदौ=सम्पत्तिनियमो व्यापृतं प्राधान्येन विवक्षितं भवति। कदाचित् तु प्रकृतौ समारोपितं विकारस्वरूपं तत्त्वेन विवक्षितं भवति। तद्यथा—'महद्भूतश्चन्द्रमा' इत्यत्र प्रकृतिरूपस्यामहदर्थस्य कर्तृत्वात् स एव विकारवाचिना महच्छब्देनाभिधीयत इति महदर्थस्यात्र गौणत्वाद् गौणमुख्यन्याय-मनुसृत्यात्रात्वं न भवति इत्युक्तं भाष्यादौ। 'महद्भूता ब्राह्मणी' इत्यत्र तु महदर्थस्य विकारस्यैव भवनक्रियाकर्तृतया विवक्षितत्वात् "पुंवत्कर्मधारयजातीयदेशीयेषु" (पा० ६।३।४२) इति पूर्वोत्तरपदयोः सामानाधिकरण्यनिमित्तकः पुंवद्भावो भवत्येव इत्युक्तं तत्रैव। गौणमुख्यन्यायस्तु नात्र, तस्य साक्षादुपात्तनामविषय-कत्वादिति॥ १२१॥

प्रसङ्गागतः प्रकृतिविकृत्योः कर्तृत्वविचारः समाप्तः। इदमिदानीं वक्तव्यम्—'प्रागन्यतः शक्तिलाभात्' (वा० प० ३, साधन० १०१) इत्यादिना पद्यजातेन स्वा-तन्त्र्यं कर्तृसंज्ञाप्रयोजकं व्याख्यातम्। तच्च ण्यन्ते प्रयोज्यकर्तुर्नोपपद्यते। स हि करणादिवत् स्वव्यापारे स्वातन्त्र्ये सत्यपि प्रयोजकव्यापारे न्यग्भवन्=पारतन्त्र्य-मनुभवन् न स्वतन्त्रः। ततश्च स्वातन्त्र्यप्रयुक्ता कर्तृसंज्ञा प्रयोज्यकर्तुर्न स्यादित

स्वातन्त्र्ये। ततश्च स्वातन्त्र्यनिबन्धना कर्तृसंज्ञा न स्यादस्येति 'पाचयत्योदनं देवदत्तेन यज्ञदत्तः' इत्यत्र देवदत्तात् प्रयोज्यकर्तुः कर्तृतृतीया न स्यात्। तथा च वार्त्तिकम्—

"स्वतन्त्रस्य कर्तृसंज्ञायां हेतुमत्युपसंख्यानम्, अस्वतन्त्रत्वात्" इति।
( वा० १।४।५४ )

हेतुः प्रयोजकः, तद्वति प्रयोज्य इत्यर्थः। हेतुसंज्ञायास्त्वध्येषणं स्याद् विषयो यत्र नियुज्यमानस्यापि तत्प्रयोजकत्वं न विरुध्यत इति 'हेतुमति' इत्युपलक्षणं युक्तम्। अत्र परिहारवार्त्तिकम् 'न वा स्वातन्त्र्यात्' ( वा० १।४।५४ ) इति। स्वव्यापारेऽस्त्येव प्रयोज्यस्य स्वातन्त्र्यमिति सिद्धा कर्तृसंज्ञा।

नन्वेवं करणादीनामपि स्यात्, नैतदस्ति, तेषां यथास्वं करणादिसंज्ञाविधानात्। प्रयोज्यस्य तु न कदाचिदन्या संज्ञोक्तेति कर्तृसंज्ञैव। एवं स्थिते प्रयोजकायत्तत्वात् प्रयोज्यप्रवृत्तेः कथं स्वातन्त्र्यमित्याशङ्क्योपपादयति—

---

'पाचयत्योदनं देवदत्तेन यज्ञदत्तः' इत्यत्र प्रयोज्यकर्तुर्देवदत्तात् कर्तृतृतीया न स्यात्।' तथा च वार्त्तिकम्—"स्वतन्त्रस्य कर्तृसंज्ञायां हेतुमत्युपसंख्यानम्, अस्वतन्त्रत्वात्' इति।

अस्यार्थः—स्वतन्त्रस्य कर्तृसंज्ञायां कर्तव्यायाम्, हेतुमति हेतुः प्रयोजकः, तद्वति प्रयोज्ये कर्तृसंज्ञाया उपसंख्यानं कर्तव्यम्।

हेतुसंज्ञायास्तु—'शिष्यः सन्ध्यामुपासयति गुरुणा' इत्यादौ अध्येषणं विषयः स्यात्, यत्र नियुज्यमानस्य गुरोरपि स्वप्रयोजकशिष्यप्रयोजकत्वं न विरुध्यत इति हेतुमति इत्युपलक्षणम्=लक्षणया अध्येष्यातिरिक्तस्य बोधकं युक्तम्। दृष्टञ्च सामान्यशक्तस्यापि पदस्य लक्षणया विशेषपरत्वम्—

'कदली कदली, करभः करभः, करिराजकरः करिराजकरः।
भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः।। इत्यादौ।

अत्र परिहारवार्त्तिकम्—"न वा स्वातन्त्र्यात्" इति।

अस्यार्थः—अथवा नोपसंख्यानं कर्तव्यम्, प्रयोज्यस्यापि स्वव्यापारे स्वातन्त्र्यादिति। प्रयोज्यस्यापि स्वव्यापारेऽस्त्येव स्वातन्त्र्यमिति सिद्धा तस्यापि कर्तृसंज्ञा।

नन्वेवं कारणादीनामपि स्वव्यापारे स्वातन्त्र्यात् कर्तृसंज्ञा स्यादिति चेन्नैवम्, तेषां यथायथं करणादिसंज्ञाविधानात्। प्रयोज्यस्य तु न काचिदन्या सञ्ज्ञोक्तेति औत्सर्गिकी कर्तृसंज्ञैव। एवं प्रयोज्यस्य स्वव्यापारे स्वातन्त्र्ये स्थितेऽपि प्रयोज्य-

सम्भावनात् क्रियासिद्धौ कर्तृत्वेन समाश्रितः ।
क्रियायामात्मसाध्यायां साधनानां प्रयोजकः ।। १२२ ।।
प्रयोगमात्रे न्यग्भावं स्वातन्त्र्यादेव निश्रितः ।
अविशिष्टो भवत्यन्यैः स्वतन्त्रैर्मुक्तसंशयैः ।। १२३ ।।

यस्तावदप्रवृत्तक्रियः प्रयोज्यः सोऽनुमितक्रियासामर्थ्य एव प्रयुज्यते । अन्यथा प्रयोग एव न स्यात् । न ह्यशक्तः कस्याञ्चित् क्रियायां केनचिद् विनियुज्यते सचेतसा । ततश्चावधृतशक्तिः सम्भावितक्रियः कर्तैव स्वतन्त्रो विनियुज्यते । योऽपि आत्मसाध्यायां क्रियायां प्रवृत्तः सव्यापारः करणादिकारककलापं प्रयोजयन्नेव प्रवृत्तक्रियः सन् प्रयुज्यते विरामाशङ्कायां मा विरंसीदिति बुद्धया सोऽपि स्वतन्त्रः कर्तैव प्रयोज्यः स्वव्यापारे स्वातन्त्र्यादेव च प्रयोगमात्रे प्रयोजकप्रैषे न्यग्भावम् आयत्ततां निश्रितः प्राप्तः । क्रियासिद्धये हि प्रैषः ।

---

व्यापारस्य प्रयोजकाधीनत्वात् कथं प्रयोज्यस्य स्वातन्त्र्यमित्याशङ्कयोपपादयति— सम्भावनात् क्रियासिद्धाविति ।

अत्र कारिकाद्वयेऽग्रधं पद्यं द्वितीयपद्यस्य द्वितीयेऽर्धे हेतुः ।

कारिकाद्वयस्यायमर्थः—प्रयोज्यो यतः क्रियासिद्धौ समर्थत्वेन सम्भावनादेव कर्तृत्वेन समाश्रितो भवति । यतश्च आत्मसाध्यायां क्रियायां सिसाधयिषितायां साधनानां प्रयोजको भवति । यतश्च प्रयोगमात्रे प्रयोजकप्रैषे एव, न तु स्वव्यापारे, न्यग्भावम्=अधीनताम् स्वव्यापारे स्वातन्त्र्यादेव निश्रितः=प्राप्तो भवति, अतोऽन्यैर्मुक्तसंशयैः स्वतन्त्रैः सह प्रयोज्योऽविशिष्टः समानो भवति अतः प्रयोज्यस्यापि स्वातन्त्र्यं तत्प्रयुक्तं कर्तृत्वञ्च सिद्धं भवतीति ।

अयं भावः—यस्तावदप्रवृत्तक्रियः प्रयोज्यः सोऽनुमितक्रियाजननसामर्थ्य एव प्रयोजकेण कर्त्रा प्रयुज्यते । अन्यथा प्रयोग एव ( प्रैष एव ) तस्य न स्यात् । न हि कस्याञ्चित् क्रियायामसमर्थ एव केनचित् प्रयोक्त्रा सचेतसा तत्र प्रयुज्यते । ततश्च तस्यां क्रियायां निश्चितशक्तिकः सम्भाविततत्क्रियासिद्धिकश्च कर्तैव स्वतन्त्रस्तत्र प्रयुज्यते । योऽपि आत्मसाध्यायां क्रियायां प्रवृत्तः सव्यापार एव, न तूपरतव्यापारः करणादिकलापं प्रयोजयन्नेव प्रवृत्तक्रियः सन्नपि प्रयुज्यते विरामाशङ्कायां मा विरंसीदिति बुद्धया सोऽपि स्वतन्त्रः कर्तैव प्रयोज्यः, स्वव्यापारे स्वातन्त्र्यादेव च प्रयोगमात्रे=प्रयोजकप्रैषे एव न्यग्भावम्=पराधीनतां निश्रितः=प्राप्तः । क्रियासिद्धये हि प्रैषः । एवं हि क्रिया सिद्धयति, यदि साधनान्तरप्रैषरूपं स्वातन्त्र्यं प्रयोज्यः प्राप्नोति, नान्यथेति, न प्रैषेण स्वातन्त्र्यं विरुध्यते । प्रयोजकप्रयोगे पारतन्त्र्यम्, स्वव्यापारे स्वातन्त्र्यमिति विषयभेदादपि नैकस्मिन् स्वातन्त्र्यपारतन्त्र्ययोर्विरोधः । उपाय एव च स्वव्यापारे स्वातन्त्र्यम्, प्रयोगे पारतन्त्र्यस्येत्यतोऽपि न

एवं च क्रिया सिध्यति, यदि साधनान्तरविनियोगलक्षणं स्वातन्त्र्यं प्रयोज्यः प्रतिपद्यते, नान्यथेति न प्रयोगेण स्वातन्त्र्यं विरुध्यते। विषयभेदाच्च प्रयोगे पारतन्त्र्यं स्वव्यापारे स्वातन्त्र्यमिति। उपाय एव च स्वव्यापारे स्वातन्त्र्यं प्रयोगे पारतन्त्र्यस्य। एवमनन्यप्रयोज्यतया स्वाधीनतया निश्चितैरपरैः समानः स्वतन्त्रः प्रयोज्यः सिद्धः।

तदुक्तं वार्तिके-'इतरथा ह्यकुर्वत्यपि कारयतीति स्यात्'। (वा० १।४।५४) "नाऽकुर्वतीति चेत् स्वतन्त्रः"। (वा० १।४।५४) इति।

उदासीनस्यालसस्याशक्तस्य प्रयोगानुपपत्तेः सम्भावितस्वातन्त्र्य एव प्रयोज्य इत्यर्थः।

यद्येवं स्वतन्त्रस्य प्रयोजको हेतुरित्येव स्वव्यापारे स्वतन्त्राणां करणादीनामपि प्रयोजकस्य प्रयोज्यस्य कर्तुर्हेतुसंज्ञाप्रसङ्गः। भवतु को दोष इति चेत् 'हेतुमति' इति तद्व्यापारे णिच्प्रसंगः। धातुनोक्तत्वात् तस्यायमदोष इति चेन्न, कर्मविषय एव प्रैषो धात्वर्थेऽन्तर्भवेत्, फलार्थत्वात् कर्तृभावनाया धात्वर्थस्य,

---

निमित्तनिमित्तिनोर्विरोधः। एवमनन्यप्रयोज्यतया=प्रयोजकान्यप्रयोज्यत्वाभावेन मुक्तसंशयैः=स्वाधीनतया निश्चितैरन्यैः समानः स्वतन्त्रः प्रयोज्यः सिद्धः।

तदुक्तं वार्त्तिके--"इतरथा हि अकुर्वत्यपि कारयतीति स्यात्।" "नाकुर्वतीति चेत् स्वतन्त्रः" इति।

तत्र प्रथमवाक्यस्यार्थः—हि=यतः, इतरथा=क्रियासिद्धौ शक्तत्वेनासम्भावितस्यापि प्रयोज्यत्वे, अकुर्वत्यपि=उदासीनेऽलसेऽशक्तेऽपि प्रयोज्यत्वाभिमानविषये, कारयतीति प्रयोगः स्यादिति।

द्वितीयवाक्यस्य त्वयमर्थः—अकुर्वति=उदासीनेऽलसेऽशक्ते प्रयोज्यत्वाभिमानविषये 'कारयति' इति प्रयोगो न भवति इति चेत्, यदि, तदा क्रियासिद्धौ अवधृतशक्तिस्तत्र शक्तत्वेन सम्भावितः स्वतन्त्रः प्रयोज्य इति।

उदासीनस्यालसस्याशक्तस्य प्रैषानुपपत्तेः क्रियायां संभावितस्वातन्त्र्य एव प्रयोज्य इत्यर्थः।

यद्येवं स्वतन्त्रस्य प्रयोजको हेतुरित्येव 'तत्प्रयोजको हेतुश्च' (पा० १।४।५४) इति सूत्रस्यार्थः स्यात्, एवञ्च स्वव्यापारे स्वतन्त्राणां कारणादीनां प्रयोजकस्य प्रयोज्यकर्तुरपि हेतुसंज्ञाप्रसङ्गः। को दोष इति चेत्, 'हेतुमति च' (पा० ३।१।२६) इति सूत्रेण प्रयोज्यव्यापारे णिच्प्रसङ्ग एव दोषः। प्रयोज्यव्यापारस्य धातुनोक्तत्वान्न तत्र णिजुत्पद्यते इत्यदोष इति चेन्न, कर्मविषयक एव हि प्रैषो धात्वर्थेऽन्तर्भवेत्, धात्वर्थरूपायाः कर्तृनिष्ठभावनायाः फलार्थत्वात्. कर्मणश्च णिजर्थभावनया सह सम्बन्धाभावाद् न कर्मप्रैषाय णिच्प्रयोगोऽभीष्टः। अकर्मकधातुविषये च

कर्मणश्च तयाऽसंस्पर्शात्। अकर्मकधातुविषये तु करणादिविनियोगो वस्तुतः सन्नप्यनवधारित इति तत्प्रत्यायनाय णिजुत्पद्येत। शब्दाद्( दवि )विशिष्टसाधन-क्रियाभावनामात्रं गम्यते, न तु करणादीनां कर्त्रा प्रेषणम्।

किञ्च, प्रयोज्यस्यापि हेतुसंज्ञायां तत्प्रयोजक इति स्वतन्त्रस्य प्रत्यवमर्शोऽनर्थकः। करणादिप्रयोजकव्यावृत्तये हि सः। तस्यापि तु करणादेः स्वव्यापार-स्वातन्त्र्याश्रयेण प्रयोजकस्य हेतुसंज्ञायामनर्थकः प्रत्यवमर्शः।

किं च हेतुसंज्ञैवानर्थिका कर्तृमात्रस्य। 'कर्तृमति णिच्' इत्येवास्तु। तथा च 'भीस्म्योर्हेतुभये' ( पा० १।३।६८ ), 'भियो हेतुभये षुक्' ( पा० ७।३।४० ), 'विभेतेर्हेतुभये' ( पा० ६।१।५६ ) इत्यत्र 'कर्तृभये' इति वचनेऽनिष्टं स्यात्। तस्मात् स्वतन्त्रस्य प्रयोजक इति करणादिप्रयोजकस्य हेतुसंज्ञाव्युदासे प्रयतनीयम्।

अत्रोच्यते—तस्य प्रयोजक इति सर्वनाम्नानुभव(गोचर)कर्तृसंज्ञस्य स्वतन्त्रस्य ( परामर्शात् ) परामर्शादिप्रतिलब्धकर्तृसंज्ञानां करणादीनां प्रयोजकस्य हेतुसंज्ञा न भवति।

तथा हि स्वव्यापारे स्वतन्त्रत्वेऽपि करणादेः प्रधानव्यापारे पारतन्त्र्यात्

---

करणादिप्रैषे वस्तुतः सन्नपि शब्दादनवधारित इति तस्य प्रत्यायनाय णिच् स्यात्। तत्र धातुरूपात् शब्दाद् हि अवशिष्टसाधनक्रियाभावनामात्रम्=साधनसामान्यक्रिया-नुकूलभावनासामान्यं गम्यते, न तु विशिष्टानां करणादीनां कर्त्रा प्रेषणम्।

किञ्च, प्रयोज्यस्यापि हेतुसंज्ञायां 'तत्प्रयोजकः' इति स्वतन्त्रस्य तत्पदेन प्रत्यवमर्शोऽनर्थकः। करणादीनां प्रयोजकस्य व्यावृत्तये हि सः। करणादीनां स्व-व्यापारे स्वतन्त्राणां प्रयोजकस्य तस्यापि तु=प्रयोज्यस्यापि तु हेतुसंज्ञायामनर्थक-स्तत्पदेन प्रत्यवमर्शः।

किञ्च, कर्तृमात्रस्य=कर्तृसामान्यस्य तस्य=प्रयोजकस्य हेतुसंज्ञैवानर्थिका, व्यावर्त्याभावात्। "कर्तृमति णिच्" इत्येव सूत्रमस्तु। तथा च "भीस्म्योर्हेतुभये" ( पा० १।३।६८ ), "भियो हेतुभये षुक्" (पा० ७।३।४०)', "बिभेतेर्हेतुभये" इत्यत्र कर्तृभये इति वचनेऽनिष्टं स्यात्। तथा च यथा 'मुण्डो भीषयते' इति भवति, तथा "चैत्रो मैत्रं भीषयते' इत्यनिष्टं स्यात्। इष्टन्तु 'चैत्रो मैत्रं भाययति' इति। तस्मात् तत्प्रयोजक इत्यनेन स्वतन्त्रस्य प्रयोजक इत्यर्थकेन करणादिप्रयोजकस्य प्राप्ताया हेतुसंज्ञाया निरासे प्रयतनीयमिति।

अत्रोच्यते—तस्य प्रयोजक इति सर्वनाम्ना अनुभवगोचरकर्तृसंज्ञस्य स्वतन्त्रस्य परामर्शात् परामर्शादिप्रतिलब्धकर्तृसंज्ञानाम्=परामृश्यमानानुमीयमानादिरूपकर्तृ-संज्ञावतां करणादीनां प्रयोजकस्य हेतुसंज्ञा न भवति।

तथा हि—करणादेः स्वव्यापारे स्वातन्त्र्येऽपि प्रधानव्यापारे पारतन्त्र्यात्

कर्तृसंज्ञा न भवति। स्वतन्त्रश्रुतिसामर्थ्याद्धि प्रकृष्टं सामर्थ्यं विवक्षितम्। करणादीनां त्वनुकुर्वाणानां कारकत्वायोगात् तदन्यथानुपपत्त्यानुमीयमानं स्वव्यापारे स्वातन्त्र्यं यदि परं कारकसंज्ञायामुपयुज्येत, न तु कर्तृसंज्ञायाम्, प्रधानविनियोगेनाभिभूतत्वात्, प्रकृष्टस्य स्वातन्त्र्यस्याभावात्। ततश्च न ते कर्तरि (कर्तारः) सन्तः प्रेष्यन्ते। प्रयोज्यस्तु प्रयुक्तोऽपि साधानान्तरविनियोक्तृत्वलक्षणं प्रकृष्टं स्वाधीनत्वं नैव त्यजतीति सर्वथाऽसौ कर्तैव युज्यते।

अत एवोक्तम्—"कर्तृत्वेन समाश्रितः" इति। भूतेन भाविना वा सम्भाव्यमानेन बुद्ध्याभिसंहितेन कर्तृत्वेनेति सिद्धमिष्टम्॥ १२२-१२३॥

उक्तमिदं "प्रयोगमात्रे न्यग्भावं स्वातन्त्र्यादेव निश्रितः" (का० १२३) इति, तदपि वा नास्तीत्याह—

निमित्तेभ्यः प्रवर्तन्ते सर्व एव स्वभूतये।
अभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धये॥ १२४॥

स्वार्थलिप्सया सर्वः प्रवर्तमानः पराधीनतां प्रवृत्तौ नासादयतीति केवलं कस्यचित् प्रवृत्तिः कस्यचिदर्थसिद्धयेऽप्यङ्गमित्येतावता भृत्यादेः स्वाम्याद्याशयानु-

---

कर्तृसंज्ञा न भवति। तत्प्रयोजक इत्यत्र स्वतन्त्रपरामर्शकतत्पदरूपसर्वनामश्रुतिसामर्थ्याद्धि प्रकृष्टं सामर्थ्यम्=स्वातन्त्र्यं विवक्षितम्। अन्यथा स्वव्यापारे स्वतन्त्राणां करणादीनां प्रयोजकस्य प्रयोज्यस्याव्यावृत्त्या तत्प्रयोजक इति व्यर्थं स्यात्। करणादीनां तु कर्तारं कुर्वन्तमनु तदीयप्रैषेण कुर्वाणानां विना स्वव्यापारे स्वातन्त्र्यं कारकत्वायोगात् तदन्यथानुपपत्त्याऽनुमीयमानं स्वव्यापारे स्वातन्त्र्यं यद्यस्ति तत् केवलं कारकसंज्ञायामेवोपयुज्येत न तु कर्तृसंज्ञायाम्, स्वप्रधानविनियोगेन=अप्रधानकृतप्रैषेण तेषां पराभूतत्वात् प्रकृष्टस्य स्वातन्त्र्यस्याभावात्। ततश्च न ते=करणादयः, कर्तारः सन्तः कर्त्रा प्रैष्यन्ते प्रयोज्यवत्, प्रयोज्यस्तु करणादिवैलक्षण्येन कर्तृभूतः सन् प्रयुक्तोऽपि साधनान्तरविनियोक्तृत्वलक्षणस्वाधीत्वं नैव त्यजतीति सर्वथाऽसौ कर्तैव युज्यते।

अत एवोक्तं कारिकायाम्—'कर्तृत्वेन समाश्रितः' इति। भूतेन भाविना वा सम्भाव्यमानेन अविद्यमानत्वाद् बुद्ध्या परामृष्टेन कर्तृत्वेन समाश्रित इत्यर्थं इति सिद्धमिष्टमिति॥ १२२-१२३॥

उक्तमिदम्—"प्रयोगमात्रे न्यग्भावं स्वातन्त्र्यादेव निश्रितः" इति। तदपि=प्रयोजकप्रैषे पारतन्त्र्यमपि वा नास्तीत्याह - निमित्तेभ्यः प्रवर्तन्त इति।

अस्यार्थः—सर्व एव=प्रयोजकाः प्रयोज्या वा स्वभूतये=स्वाभ्युदयाय, प्रवर्तमानाः, निमित्तेभ्यः=स्वार्थसिद्धौ तानि-तानि निमित्तान्यादाय प्रवर्तन्ते, न तु

वर्तनेन प्रयोज्यता कथ्यते। निर्वेशनिमित्ता हि भृत्यानां प्रवृत्तिः स्वार्थसाधानायां वीतरागाणामपि कारुण्यात् प्रवृत्तौ परार्थसम्पादनमेव स्वार्थः फलम्, इष्टलक्षणत्वात् तस्य।

तदेतद् भाष्येऽभिहितम्—"सर्व इमे स्वभूत्यर्थं यतन्ते। नेह कश्चित् परोऽनुग्रहीतव्यः।" ( म० भा० ३।१।२६ ) इति।

स्वभूत्यर्थं प्रवर्तमानेषु कः प्रयोज्यार्थं इति चोद्ये समाधानमप्युक्तम्—"यदभिप्रायेषु सज्जन्ते" ( म० भा० ३।१।२६ ) इति।

प्रयोजकाभिप्रायः क्रियासम्पादनम्। तच्च स्वार्थफलाभिसन्धानेन प्रवर्तमानोऽपि प्रयोज्यः साधयत्येव। एवं च कृत्वा "हेतुमति च" ( पा० ३।१।२६ )

---

कस्यचित् प्रैषेण प्रवर्तन्त इति प्रयोजकप्रयोज्ययोरुभयोरपि प्रवृत्तेर्निमित्ताधीनत्वेन न कस्यचित् प्रयोज्यता। भृत्यादेः स्वाम्यभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धये, न तु परार्थस्य। तेन परार्थोऽपि सिध्यति इत्यन्यदेतत्। अतो न स्वाम्यभिप्रायानुरोधेऽपि भृत्यस्य प्रयोज्यता इति।

अयं भावः -- सर्वः=प्रयोजकः प्रयोज्यो वा स्वार्थलिप्सया प्रवर्तमानः स्वप्रवृत्तौ स्वतन्त्र इति कस्यचित् पराधीनतां नासादयति इति केवलं क्वचित् कस्यचित्=प्रयोज्यत्वेनाभिमतस्य प्रवृत्तिः कस्यचित्=प्रयोजकस्य, अर्थसिद्धयेऽप्यङ्गमित्येतावता भृत्यादेः स्वाम्याद्याशयानुवर्तनेन प्रयोज्यता कथ्यते। निर्वेशनिमित्ता हि=भृतकरूपेण निर्धारितद्रव्यहेतुका हि भृत्यानां स्वार्थसाधने प्रवृत्तिः, वीतस्पृहाणामपि कारुण्यात् परदुःखप्रहाणेच्छया प्रवृत्तौ परार्थसम्पादनमेव स्वार्थः फलम्, फलस्येष्टलक्षणत्वादिति स्वार्थसाधने प्रवृत्ता भृत्या वीतरागा वा न कस्यचित् प्रयोज्याः।

तदेतद् भाष्येऽभिहितम्—"सर्वे इमे स्वभूत्यर्थं यतन्ते। नेह कश्चित् परोऽनुग्रहीतव्य इति" इति।

अस्यार्थः—सर्व इमे=प्रयोज्यत्वेनाभिमताः स्वार्थलिप्सया प्रवर्तमानाः स्वभूत्यर्थम्=स्वार्थसिद्ध्यर्थमेव, यतन्ते=प्रवर्तन्ते। इह कश्चित् परोऽनुग्रहीतव्य इति भावनया परार्थं न प्रवर्तत इति।

एवं तर्हि सर्वेषु स्वभूत्यर्थं प्रवर्तमानेषु सत्सु प्रयोज्यपदस्य कोऽर्थं इति प्रश्ने समाधानमप्युक्तम्—'यदभिप्रायेषु सज्जन्ते' इति।

अस्यार्थः—यत्=यस्मात् प्रयोजकाभिप्रायेषु सज्जन्ते=सक्ता भवन्ति, स्वार्थं साधयन्तः प्रयोजकाभिप्रेतमपि साधयन्ति तस्मात् प्रयोज्या इत्युच्यन्ते।

प्रयोजकाभिप्रायः प्रयोजकस्य क्रियाफलसम्पादनम्। तच्च स्वार्थफलाभिप्रायेण प्रवर्तमानोऽपि प्रयोज्यः साधयत्येव। एवञ्च कृत्वा "हेतुमति च"

इत्यत्रोपसंख्यानानि प्रत्याख्यातानि। 'न वा सामान्यकृतत्वाद्धेतुतो ह्यविशिष्टम्" ( वा० ३।१।२६ ) इति।

स्वरसप्रवृत्तित्वात् सूर्यस्य माहिष्मत्यामुद्‌गमनं पथिकस्याभिप्रेतं काकतालीयात् सम्पन्नमित्यभिप्रायानुवर्तनात् सूर्यः प्रयोज्यो भवतीत्यादि योज्यम्। तदाह वार्त्तिककारः—"प्रवृत्तिर्ह्युभयत्रानपेक्ष्य" ( वा० ३।१।२६ ) इति।

मुक्तसंशयेऽपि प्रयोज्ये या प्रवृत्तिः, सापि न प्रयोज्यस्य ( प्रयोजकस्य ) स्वार्थमपेक्ष्य; अपि त्वात्मन एवेत्यर्थः।

'कंसवधमाचष्टे' इत्यादौ तु 'प्रत्यक्षमिव कंसादीन्' (वा० प० ३, सा० ५) इत्यादिना पूर्वमेव समर्थितम्।

अचेतनविषयेऽपि तर्हि 'भिक्षा वासयति' ,इत्यादौ वासाद्यानुकूल्यादभिप्रायाध्यारोपात् प्रयोजकत्वं समर्थनीयम्।

---

(पा० ३।१।२६) इत्यत्र प्रयोज्यस्य कर्तृसंज्ञार्थमुपसंख्यातानि वचनानि सर्वाणि प्रत्याख्यातानि।

तदुक्तम्—"न वा सामान्यकृतत्वाद् हेतुतो ह्यविशिष्टम्" इति।

अस्यार्थः—वा = अथवा, प्रयोज्यस्य कर्तृसंज्ञार्थं नैवोपसंख्यानानि कर्तव्यानि। प्रयोज्यस्य कर्तृसंज्ञायाः सामान्यकृतत्वात् "स्वतन्त्रः कर्ता" ( पा० १।४।५४ ) इति सामान्यसूत्रेणैव कृतत्वात्, हि = यतः, प्रयोज्यमात्रं हेतुतः = प्रयोजकात्, अविशिष्टम् = स्वातन्त्र्येण धर्मेण तुल्यमिति।

न चैवमपि ब्राह्ममुहूर्ते स्वगेहात् प्रस्थितः कश्चित् पथिको माहिष्मत्यां सूर्यमुद्‌गमयति इत्यत्र कथं सूर्यस्य प्रयोज्यत्वम्, तस्य पथिकाभिप्रायानुवर्तनाभावात्, स्वभावत एव माहिष्मत्यामुद्‌गमनादिति वाच्यम्। सूर्यस्य प्रवृत्तेः स्वारसिकत्वेन परप्रयोज्यत्वाभावेऽपि सूर्यस्य माहिष्मत्यामुद्‌गमनं पथिकस्याभिप्रेतम्, तच्च काकतालीयात् सम्पन्नमित्येवं पथिकाभिप्रायानुवर्तनात् सूर्यः प्रयोज्यो भवतीत्यादियोजनया तल्लाभात्। तदाह वार्त्तिककारः --प्रवृत्तिर्ह्युभयत्रानपेक्ष्य" इति।

अस्यार्थः—हि = यतः, उभयत्र = प्रयोजके प्रयोज्ये च, प्रवृत्तिः अनपेक्ष्य = परप्रैषमनपेक्ष्य इति।

मुक्तसंशयेऽपि प्रयोज्ये भृत्यादौ या प्रवृत्तिः, सापि न प्रयोजकस्य स्वामिगुर्वादेः स्वार्थमपेक्ष्य; अपि तु आत्मन एवेत्यर्थं इति हेलाराजः। 'कंसवधमाचष्टे = व्यासः 'कृष्णेन कंसं घातयति' इत्यादौ तु कृष्णादेर्व्यासप्रयोज्यत्वम्—'प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते' इत्यादिना पूर्वमेव समर्थितम्। तदानीं व्यासवचसा कृष्णस्य कंसवधविषयकप्रवृत्तेरतीताया अपि श्रोतृबुद्धौ प्रत्यक्षमिव सन्निधानात्। एवं

एवं च योग्यतामात्रेण निमित्तमात्रं हेतुः प्रयोजक इत्युक्तं निमित्तेभ्य इति। वार्त्तिकेऽप्युक्तम्—"हेतुनिर्देशश्च निमित्तमात्रं भिक्षादिषु दर्शनात्" वा० ३।१।२६ ) इत्यवसितविचारः कर्ता ।। १२४ ।।

।। इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे कर्त्रधिकारः ।।



---

तर्हि 'भिक्षा वासयति' इत्यादौ भिक्षाद्यचेतनरूपप्रयोजकविषयेऽपि तत्र वासाद्यानुकूल्यादभिप्रायाध्यारोपात् = वक्तृगताभिप्रायाध्यारोपात् प्रयोजकत्वं समर्थनीयम् ।

एवञ्च प्रयोज्यसमवेतां क्रियां प्रति योग्यतामात्रेण, न तु फलोपधानेन, भूतभविष्यतोः प्रयोजकत्वोपपत्त्यसम्भवात् । निमित्तमात्रं चेतनाचेतनसाधारणं योजको हेतुरित्युक्तम्—"निमित्तेभ्यः" इति ।

वार्त्तिकेऽप्युक्तम्—"हेतुनिर्देशश्च निमित्तमात्रम्, भिक्षादिषु दर्शनात्" इति । अस्यार्थः—संज्ञोत्पत्तिदेशे विधिदेशे वा हेतुनिर्देशश्च प्रयोज्यक्रियां प्रति निमित्तमात्रं चेतनाचेतनसाधारणं बोधयति, अचेतनेषु भिक्षादिष्वपि प्रयोजकत्वस्य दर्शनादिति । कर्तृकारकस्य विचारोऽवसितः = अवसानं प्राप्त इति ।। १२४ ।।

।। इति श्रीकाशीनाथतनयरघुनाथशर्मकृतायामम्बाकर्त्र्यां कर्त्रधिकारः ।।

# अथ हेत्वधिकारः

कर्तैव प्रयोजकः सन् हेतुरिति कर्तृविचारानन्तरं हेतुं विचारयति—

प्रेषणाध्येषणे कुर्वंस्तत्समर्थानि चाचरन् ।
कर्तैव विहितां शास्त्रे हेतुसंज्ञां प्रपद्यते ॥ १२५ ॥

आज्ञापुरःसरा व्यापारणा प्रेषणम्, निकृष्टविषयो नियोग इत्यर्थः । यत्पुनरभ्यर्हितं व्यापारयति तद् अध्येषणम् । अभ्यर्हितविषयं प्रबोधनमित्यर्थः । तत्समर्थानि प्रयोज्यक्रियासम्पत्त्यनुकूलानि चेष्टितानि ।

---

प्रयोजकत्वमात्राधिक्ये कर्तैव हेतुरिति कर्तृविचारानन्तरं हेतुं विचारयति— प्रेषणाध्येषण इति ।

अस्यार्थः-निकृष्टस्य प्रेषणम्, उत्कृष्टस्य च अध्येषणम् = सत्कारपूर्वकं प्रवर्तनं कुर्वन्, तत्समर्थानि = प्रयोज्यप्रवृत्तिसंवादकानि चेष्टितानि च आचरन् । अत्र तच्छब्दस्य बुद्धिस्थपरामर्शकत्वेन बुद्धिसन्निहितायाः प्रयोज्यप्रवृत्तेः परामर्शेनैतदर्थलाभः । इदञ्च व्यापकत्वादचेतनेषु अपि भिक्षादिषु प्रयोजकेषु वर्तते । प्रेषणाध्येषणरूपेण चास्यैव प्रविभागः । तथा च ब्राह्मणवसिष्ठन्यायेन, गोबलीवर्दन्यायेन वा प्रेषणाध्येषणयोरितः पृथगुक्तिः । कर्तैव सन् "तत्प्रयोजको हेतुश्च" ( पा० १।४।५४ ) इति विहितां हेतुसंज्ञां शास्त्रे प्रपद्यते । अत्रैवकारेण—"तत्प्रयोजको हेतुश्च" ( पा० १।४।५४ ) इति सूत्रस्थचकारस्य व्याख्यानं कृतम् । शास्त्रे हेतुसंज्ञां प्रपद्यत इत्युक्त्या प्रदेशेषु अस्यैव हेतोः क्रियाविषयत्वेन कारकरूपस्य ग्रहणं भवति, न तु लौकिकस्य द्रव्यादिविषयस्य । हेतुव्यापारश्च प्रेषणादित्रिकरूपोऽत्र कारिकायां निर्दिष्टः । यद्यप्यत्र शास्त्रे हेतुसंज्ञाया विधानात् 'कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणम्' प्राप्तम्, तथापि 'उभयगतिरिह भवति' ( प० ९ ) इति न्यायेन इष्टानुरोधादाश्रितेन उभयग्रहणमत्र शास्त्रे भवति । तद्यथा— 'हेतुमति च' ( पा० ३।१।२६ ) इत्यत्र कृत्रिमस्य "हेतौ" ( पा० २।३।२३ ) इति सूत्रे च अकृत्रिमस्य हेतोर्ग्रहणम् । एवमन्यत्रापि दृष्टानुरोधेन तत्तद् ग्रहणं वेदितव्यमिति ।

अयं भावः—आज्ञापुरस्सरा निकृष्टस्य व्यापारणा प्रेषणम् । निकृष्टविषयको नियोगः = प्रेरणम् इत्यर्थः । आज्ञा च निकृष्टविषयकप्रवर्तनार्थकलोडन्तपदघटितवाक्यप्रयोगरूपा । आ = अतिशयेन जानाति कर्तव्यं प्रेष्यो यया सेति

अयमेव च मुख्यः प्रयोजकव्यापारो यत् प्रयोज्यक्रियासम्पत्तिसमर्थाचरणम्। व्यापकत्वाद् भिक्षादिष्वपि भावात्। अस्यैव निकृष्टोत्कृष्टविषयतया प्रेषणाध्येषणरूपेण प्रविभागः। तथा च गोबलीवर्दन्यायेन तद्विलक्षणं तत्समर्थाचरणं भिक्षाविषयमत्राभिप्रेतम्। व्यवहारभेदाद् भेदेनैषामुपादानम्। यथाभिप्रायानुविधानं प्रयोज्यत्वमुक्तम्। तथा स्वाभिप्रायप्रकाशनमपि प्रयोजकत्वमिति तत्समर्थाचरणमेव सर्वत्र प्रयोजकव्यापारः 'कर्तैव' इति। 'तत्प्रयोजको हेतुश्च" (पा० १।४।५४) इति। संज्ञासमावेशार्थं चकारं व्याचष्टे। असति चकारेऽत्रैकसंज्ञाधिकारात् कर्तृसंज्ञा न स्यादिति समावेशार्थोऽसौ। तदुक्तं वार्त्तिके—'गतिदिविहेतुमत्सु च ग्रहणम्" इति।

'विहितां शास्त्रे' इति। प्रदेशेऽस्यैव ग्रहणं यथा स्यादित्यर्थः। फलसाधन-

---

व्युत्पत्तेः। बाहुलकात् सम्पदादित्वात् करणे क्विप्। यत्पुनरभ्यर्हितं गुर्वादिकं प्रमाद्यन्तं व्यापारयति सन्ध्यावन्दनादिकेषु नित्यकर्मसु शिष्यादिस्तदध्येषणम्। अभ्यर्हितविषयकं प्रबोधनमित्यर्थः। तत्समर्थानि—अत्र तच्छब्दो बुद्धिस्थपरामर्शकः। प्रयोज्यक्रियासिद्ध्यनुकूलानि चेष्टितानि इत्यर्थः।

अयमेव च मुख्यः प्रयोजकव्यापारो यत् प्रयोज्यक्रियासमर्थाचरणम्, तच्च चेतनेषु प्रेषणाध्येषणरूपम्। अचेतनेषु तु 'भिक्षा वासयति', 'प्रचलन्ती शाखा चैत्रं पातयति व्यापादयति वा' इत्यादिषु आद्ये प्रयोज्यक्रियासिद्ध्यनुकूलस्थितिरूपम्, चरमे तु तत् सिद्ध्यनुकूलक्रियारूपम्।

अयञ्च तृतीयः प्रयोजकव्यापारो व्यापकः। अचेतनेषु भिक्षादिष्वपि भावात्। अस्यैव च निकृष्टोत्कृष्टप्रयोज्यविषयकतया प्रेषणाध्येषणरूपेण चेतनेषु वर्तमानस्य प्रविभागः। तथा च प्रेषणाध्येषणविलक्षणं प्रयोज्यक्रियासिद्ध्यनुकूलाचरणं तदानुकूलस्थितिरूपं भिक्षानिष्ठमत्र गोबलीवर्दन्यायेन प्रयोजकव्यापारत्रयोपादानादभिप्रेतम्, अन्यथा तु व्यापकेन एकेनैव गतार्थत्वमितरयोः। चेतनाचेतनविषयकतत्तद्ण्यन्तपदवाक्यप्रयोगरूपव्यवहारभेदाद् भेदेनैषां त्रयाणां प्रयोजकव्यापाराणामत्रोपन्यासः। यथाभिप्रायानुविधानं प्रयोज्यत्वमुक्तं शास्त्रे तथा स्वाभिप्रायप्रकाशनमपि प्रेषणाध्येषणवत् चेतनप्रयोजकनिष्ठं प्रयोजकत्वमिति तत्समर्थाचरणमेव सर्वत्र प्रयोजकव्यापारः। तथा चायं प्रेषणाध्येषणातिरिक्तस्तृतीयश्चेतनेषु प्रयोजकव्यापारः। कारिकायां कर्तैव इत्यनेन 'तत्प्रयोजको हेतुश्च"(पा० १।४।५५)इत्यत्र कर्तृसंज्ञासमावेशार्थमुपात्तं चकारमेवकारेण व्याचष्टे। असति चकारेऽत्रैकसंज्ञाधिकारात् कर्तृसंज्ञा न स्यादिति तत्समावेशार्थोऽसौ।

तदुक्तं वार्त्तिके—'गतिदिविहेतुमत्सु च ग्रहणम्" इति।

अस्यार्थः—"गतिश्च" (पा० १।४।६०) इत्यत्र चग्रहणमुपसर्गसंज्ञासमावेशार्थम्, "दिवः कर्म च" (पा० १।४।४३) इत्यत्र चग्रहणं करणसंज्ञासमावेशार्थम्,

योग्यः पदार्थो हि लौकिको हेतुर्द्रव्यादिविषयः। तस्य त्वयं विशेषः। क्रियाविषयत्वेन कारकं हेतुः प्रयोज्यप्रयोजकः। अत एव कारकत्वनिबन्धनः प्रेषणादिः स्वव्यापारोऽत्र निर्दिष्टः। तत्र "हेतुमति च" ( पा० ३।१। ६ ), "भियो हेतुभये" ( पा० ७।३।४० ) इत्यत्र कृत्रिमस्य हेतोर्ग्रहणम्। तृतीयाविधौ तु "हेतौ" (पा० २।३।२३) इत्यत्र प्रयोजके कर्तृत्वादेव तृतीयासिद्धेर्लौकिकस्य हेतोर्ग्रहणम्। पञ्चमीविधावपि "अकर्तरि ·· " (पा० २।३।२४) इति पारिभाषिकः पर्युदस्यते। 'लक्षणहेत्वोः क्रियायाः" ( पा० ३।२।१२६ ) इत्यत्रापि प्रयोज्यस्य ( प्रयोजकस्य ) कारकत्वात् क्रियायोगाव्यभिचाराद् विशेषणसामर्थ्याद् द्रव्यगुणक्रियाविषयत्वेन सम्भवव्यभिचाराल्लौकिक एव हेतुर्गृह्यते। तथा धात्वधिकाराच्च। नहि

---

"हेतुमति च" ( पा० ३।१।२६ ) इत्यत्र चग्रहणं कर्तृसंज्ञासमावेशार्थमित्यर्थः। अन्यथैकसंज्ञाधिकारादितरसंज्ञासमावेशो न स्यादिति। विहितां शास्त्रे इत्यनेन प्रदेशे=विधिदेशे कृत्रिमस्यैव हेतोर्ग्रहणं यथा स्यादित्यर्थः सूच्यते। फलसाधनयोग्यः पदार्थो हि लौकिको हेतुर्द्रव्यगुणक्रियात्रितयसाधारणः।

प्रयोजकहेतोस्तु अयं विशेषः—क्रियामात्रविषयकत्वेन कारकं हेतुः प्रयोज्यप्रयोजक इति। अत एव स्वस्मिन् कारकत्वनिबन्धनः=कारकत्वप्रयुक्तः प्रेषणादिः स्वव्यापारः=प्रयोजकव्यापारः, अत्र निर्दिष्टः। तत्र "हेतुमति च" ( पा० ३।१।२६ ), "भियो हेतुभये षुक्" ( पा० ७।३।४० ) इत्यत्र कृत्रिमस्यैव हेतोर्ग्रहणम्। 'कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणम्' इति न्यायात्। 'हेतौ' ( पा० २।३।२३ ) इत्यत्र तृतीयाविधौ तु अकृत्रिमस्य लौकिकस्यैव हेतोर्ग्रहणम्। प्रयोजकरूपे कृत्रिमहेतौ कर्तृत्वादेव तृतीयासिद्धेरेतत्सूत्रवैयर्थ्यात्। "अकर्तर्यृणे पञ्चमी" ( पा० २।३।२४ ) इति पञ्चमीविधावपि 'अकर्तरि' इत्यनेन पारिभाषिकः=प्रयोजककर्तृरूपो हेतुः पर्युदस्यते=पर्युदासेन निराक्रियते। 'लक्षणहेत्वोः क्रियायाः' ( पा० ३।२।१२६ ) इत्यत्रापि प्रयोजकरूपस्य हेतोः कारकत्वात्=क्रियायोगाव्यभिचारात्, 'सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्' इत्यभियुक्तोक्तिमनुसृत्य स नात्र हेतुपदेन गृह्यते; किन्तु क्रियाया इत्यस्य लक्षणहेत्वोरित्युभयत्र विशेषणत्वेन तत्सामर्थ्याद् लौकिकस्य हेतोर्द्रव्यगुणक्रियाविषयकत्वेन तत्र क्रियायाः सम्भवव्यभिचारयोरुभयोः सत्त्वात् लौकिक एव हेतुर्गृह्यते।

किञ्च, 'लक्षणहेत्वोः ·· ' ( पा० ३।२।१२६ ) इत्यत्र धात्वधिकाराद् धातोश्च साधनरूपे हेतौ वर्तमानत्वाभावात् क्रियारूपो लौकिक एव हेतुरत्र गृह्यते। एवम् "हेतुहेतुमतोर्लिङ्" ( पा० ३।३।१५६ ) इत्यत्रापि हेतोरभेदेन धात्वर्थविशेषणत्वाद् साधनस्य च धात्वर्थत्वाभावात् क्रियारूपो लौकिक एव हेतुर्गृह्यते। "कृञो हेतुताच्छील्यानुलोम्येषु" इत्यत्र कर्तरि टृन्विधायकेऽपि न प्रयोजको हेतुरभिप्रेतः। तत्र=प्रयोजकरूपहेतुव्यापारे णिज्विधानात् कृञ इति च णिज्रहितस्य सूत्रे

धातुः साधनरूपे हेतौ वर्तते । एवं "हेतुहेतुमतोर्लिङ्" (पा० ३।३।१५६) इत्यत्रापि हेतोर्धात्वर्थविशेषणत्वात् साधनस्य च धात्वर्थत्वाभावाद् लौकिक एव हेतुः । "कृञो हेतुताच्छील्यानुलोम्येषु" (पा० ३।२।२०) इत्यत्रापि न प्रयोजको हेतुः । तत्र णिज्विधानात् कृञ इति च णिज्रहितस्य निर्देशात् । तेनात्र कृत्त्वात् प्राप्तस्य कर्तुः लौकिको हेतुर्विशेषणम् । तेन च विरोधाभावान्न निवर्त्यते कर्ता । योग्यतारूपेणैव च कृद्भिः कर्तुरभिधानान्निमित्तमात्रं हेतुरुपादीयमानो विशेषणं पुनः श्रुतेरवधारणं प्रकल्पयति 'हेतुरेव' इति । तेनाव्यभिचारि कारणं विद्यादि-यशःप्रभृतिषु प्रतिपादितं भवति ।

एते चात्र हेत्वादयः कर्तृविशेषप्रतीतिसामर्थ्याद् गम्यमानाः परम्परया पदार्था एव । अन्यथा वाक्यावस्थायां प्रतीयमानाः पदावधिकस्यान्वाख्यानस्य निमित्तभावं नोपेयुः । इह "प्रैषातिसर्ग " (पा० ३।३।१६३) इत्यादिसूत्रे चकारेण समुच्चितो लोट् इति प्रैषे णिज्लोटोर्विधानाद्विकल्पप्रसङ्ग इति भाष्ये चोदितम् । "पृच्छतु मा भवान्, अनुयुङ्क्तां मा भवान्' इत्यत्र णिच् कस्मान्न भवति" (म० भा० ३।१।२६) इति ।

---

निर्देशात् । तेनात्र तृनः कृत्त्वात् 'कर्तरि कृत्' (पा० ३।४।६७) इति प्राप्तस्य कर्त्तुर्लौकिको हेतुरभेदेन विशेषणम् । तेन च हेतुना सह कर्तुर्विरोधाभावान्न हेतुना निवर्त्यते कर्ता । स्वरूपयोग्यतारूपेणैव च, न तु फलोपहितकारणतारूपेण कृद्भिः कर्तुरभिधानात् निमित्तमात्रं फलोपहितानुपहितसाधारणं हेतुरुपादीयमानः कर्तुरभेदेन विशेषणं सत् कृत्त्वादाक्षिप्तेन कर्तैव तल्लाभे पुनः श्रुतेः=सूत्रे पुनर्हेतुपदोपादानाद् उपात्तं हेतुपदमेवावधारणं प्रकल्पयति । 'हेतुरेव' न तु घटादिकं प्रति दण्डादिवत् कदाचिदहेतुरिति । तेन यशःप्रभृतिषु अव्यभिचारिकारणं विद्यादिकं हेतुपदेन प्रतिपादितं भवति । अस्योदाहरणञ्च यशःकर्त्री विद्या इति ।

एते च—"कृञो हेतुताच्छील्यानुलोम्येषु" (पा० ३।१।२०) इति सूत्रे उपात्ता हेत्वादयस्तृनः कृत्त्वात् "कर्तरि कृत्" (पा० ३।४।६७) इति कर्तृपदोक्तकर्तृविशेषप्रतीतिसामर्थ्यरूपयाऽर्थापत्त्या गम्यमानाः पदार्थप्रत्यायितत्वात् परम्परया पदार्था एव । अन्यथा वाक्यावस्थायां वाक्यवृत्त्या वाऽऽकाङ्क्षावशाद्वा प्रतीयमानः पदावधिकस्यान्वाख्यानस्य निमित्तमात्रं न प्राप्नुयुः । इह "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" (पा० ३।३।१६३) इति सूत्रे चकारेण लोट्समुच्चित इति रीत्या प्रैषे णिज्लोटोर्विधानात्तयोर्विकल्पप्रसङ्ग इति भाष्ये चोदितम् । 'पृच्छतु मा भवान्', 'अनुयुङ्क्तां मा भवान्' इत्यत्र णिच् कस्मान्न भवतीति ।

अत्रास्मच्छब्दार्थः प्रयोजकस्तत्र प्रैषः समाश्रितः । भवच्छब्दार्थस्तु प्रयोज्यः । 'मा भवान्' इत्यत्रास्मच्छब्दात्मनो निर्देशेन प्रयोजकनिष्ठं प्रैषं प्रदर्शयन् प्रकृते

'मा भवान्' इत्यात्मनिर्देशेन प्रयोजकाश्रितं प्रैषं प्रदर्शयन् णिचः प्राप्ति परिपुष्णाति।

अत्र परिहारो भाष्येऽभिहितः—"अकर्तृत्वात्" (म० भा० ३।१।२६) इति।

'स्वतन्त्रस्य कर्तुः प्रयोजको हि हेतुः इति तद्व्यापारे' णिज् विधीयमानोऽत्र पृच्छिक्रियायामप्रवृत्तस्य तस्य कर्तृत्वाभावात् तत्प्रयोजकस्य हेतुसंज्ञाऽभावात् तद्व्यापारे प्रैषे णिज् न भवतीत्यर्थः।

चोदकस्तु कालादेः प्रश्नाद्यशक्तस्याप्रयोज्यत्वात्, प्रवृत्तस्य च नियोगानर्थक्यात् सम्भावितक्रियत्वेन कर्तुः प्रेषणमिदमित्याह—"किं च भोः वर्तमानाया एव क्रियायाः कर्त्रा भवितव्यम्, न भूतभविष्यत्कालायाः" (म० भा० ३।१।२६) इति।

अत्रोत्तरम्—'अभिसम्बन्धस्तत्र क्रियते'। ( म०भा० ३।१।२६ ) इति।

सामर्थ्यसम्भावितो भूतभविष्यत्क्रियाविषये क्रियाकारकभावः। तत्र च लोड्विषये प्रयोज्यक्रियैवैका सम्भाव्यत इति 'क्रियायां कर्ता भव' इति, न त्वपरः प्रयोज्यव्यापारविषयः प्रयोजकव्यापारोऽस्ति।

---

उपात्तधातुभ्यां णिचः प्राप्ति परिपुष्णाति, 'अहमात्मानं भवता पृच्छामि, अहमात्मानं भवताऽनुयोजयामि' इति लोकभावे प्रयोगप्रसङ्ग इति। अत्र परिहारो भाष्येऽभिहितः—'अकर्तृत्वात्' इति।

अस्यार्थः—पृच्छिक्रियायामप्रवृत्तस्य=भवच्छब्दार्थस्य कर्तृत्वाभावात् तत्प्रयोजकस्य अस्मच्छब्दार्थस्य हेतुसंज्ञाया अभावान्नात्र प्रैषे णिज् भवतीति। तदुक्तमेतद् वार्त्तिकं व्याचक्षाणेन हेलाराजेन—"स्वतन्त्रस्य कर्तुः प्रयोजको हि हेतुः"इति, तद्व्यापारे णिज् विधीयमानोऽत्र पृच्छिक्रियायामप्रवृत्तस्य तस्य कर्तृत्वाभावात् तत्प्रयोजकस्य हेतुसंज्ञाया अभावात् तद्व्यापारे प्रैषे णिज् न भवतीत्यर्थ इति।

चोदकस्तु—कालादेर्हेतोः=क्रियाया भूतभविष्यत्कालिकत्वेन हेतुना प्रश्नादिक्रियायामशक्तस्याप्रयोज्यत्वात्, क्रियायां प्रवृत्तस्य च नियोगानर्थक्यात्=प्रैषवैयर्थ्यात् सम्भावितां भूतभविष्यत्कालिकीं क्रियामादाय कर्तुः प्रेषणमिदं 'पृच्छतु मा भवान्' इत्यादिकमित्याह—"किञ्च भो वर्तमानाया एव क्रियायाः कर्ता भवितव्यम्, न भूतभविष्यत्कालायाः" इति।

अत्रोत्तरमुक्तं तत्रैव—'अभिसम्बन्धस्तत्र क्रियते' इति।

अस्यार्थः—तत्र=पृच्छतु मा भवान् इत्यत्र, अभिसम्बन्धः=अस्यां भाविन्यां क्रियायां त्वं कर्ता भव इत्येवंरूपेण अभिसन्धानेन सम्बन्धः क्रियाकारकभावरूपः, क्रियते=ज्ञायते, कृभ्वस्तयः क्रियासामान्यवचना इत्यभियुक्तोक्तेः।

न तु प्रयोज्यव्यापारविषयकः प्रयोजकव्यापारो वर्तमानस्तत्रास्ति। भूतभविष्यत्क्रियाविषये हि तत्क्रियानिरूपितकारकत्वयोग्यतारूपसामर्थ्यकल्पितः क्रिया-

अनन्तरं भाष्यम्—'यच्च कर्ता कथं कर्तृप्रत्ययेनोच्यते' (म० भा० ३।१।२६) इति।

अत्रोत्तरम् – कथमस्मिन्नपृच्छत्ययं पृच्छिर्वर्तते' (म० भा० ३।१।२६) इति।

तत उक्तम्—'अभिसम्बन्धस्तत्र क्रियते, इमां क्रियां कुर्विति' ( म० भा० ३।१।२६ ) इति।

अनन्तरमुक्तम् -'कर्त्रापि तर्ह्यभिसम्बन्धः क्रियते। अस्यां क्रियायां कर्ता भवेति' ( म० भा० ३।१।२६ ) इति।

तथा च यथात्र सम्प्रत्यपृच्छत्यपि पृच्छिक्रियाभिसन्धानेन पृच्छिर्धातुर्वर्तते, तथा तत्कर्त्र्याप्यभिसम्बन्धात् कर्तृप्रत्ययो लोट् क्रियत इति कर्त्रापि तर्ह्यभिसम्बन्धः क्रियत इत्युक्तम।

---

कारकभावः। स च लोट एव विषयः, न तु णिचः, णिचस्तु वर्तमानकालिक एव स विषयः। एवञ्च तत्र प्रयोज्यक्रियैवैका सम्भाव्यते, प्रयोजकक्रिया तु तत्र तादृशवाक्यप्रयोगरूपावर्तमानैव इति कृत्वा तत्र अस्यां क्रियायां कर्ता भव इत्येवं-रूपेण अभिसम्बन्ध एव, न त्वपरः प्रयोज्यव्यापारविषयकः प्रयोजकव्यापार-स्तत्रास्ति।

तदनन्तरमेवं भाष्यम्—"यच्च कर्ता कथं कर्तृप्रत्ययेनोच्यते" इति।

अस्यार्थः –भाविक्रियानिरूपितकर्तृत्वासम्भवेन कर्ता कथ कर्तृप्रत्ययेनोच्यत इति, यच्च पृच्छ्यत इति।

अत्र प्रतिबन्दीरूपमुत्तरं वक्तुं प्रतिबन्द्यैव प्रश्नः—"कथमस्मिन्नपृच्छत्ययं पृच्छिर्वर्तते" इति।

अस्यार्थः—अस्मिन्=कर्तरि अपृच्छति सति क्रियायाः सम्प्रति अनिष्पत्त्या कथमयं प्रच्छधातुस्तां क्रियां वक्तुं प्रवर्तत इति।

तत उत्तरमुक्तम्—"अभिसम्बन्धस्तत्र क्रियते, इमां क्रियां कुरु" इति।

अस्यार्थः—तत्र भाविन्या अपि क्रियाया बुद्ध्याऽभिसन्धानेन सम्बन्धः क्रियया कारकभावरूपः क्रियते=ज्ञायत इति। अभिसम्बन्ध एवाभिलप्यते—'इमां क्रियां कुरु' इति। तथा च बुद्धिस्थां क्रियामभिलक्ष्यात्रैतत् क्रियावाचकधातुप्रयोग इति।

तदनन्तरं प्रतिबन्द्यैवोत्तरमुक्तम् –"कर्त्राऽपि तर्ह्यभिसम्बन्धः क्रियते, अस्यां क्रियायां कर्ता भवेति" इति।

अस्यार्थः– तर्हि=तदा, बुद्धिस्थक्रिययेव बुद्धिस्थकर्त्राऽपि अभिसम्बन्धः क्रियते, अस्यां बुद्धिस्थायां क्रियायां त्वं तादृश एव कर्ता भवेति। तथा च यथाऽत्र सम्प्रत्यपृच्छत्यपि बुद्धिस्थायाः पृच्छिक्रियाया अभिसन्धानेन पृच्छिर्धातुर्वर्तते, 'मा

एवं च वदता भाष्यकारेण सम्प्रत्यकतृत्वादत्र णिज् न भवतीत्युक्तं भवति।

तथा हि - नवमेवास्याधीयमानं कर्तृत्वम्, न तु विद्यमानम्। क्रियायां कर्ता भवेति हि प्रेष्यते, न तु कर्तैव सन्। तेन कर्तुः सतः प्रैषः प्रयोजकसमवायी णिज्विषयः, लोट्प्रत्ययस्तु कर्त्रादिषु विधीयते। धात्वर्थोपाधिस्तु तस्य प्रैषो द्योत्यः। स च न धातुप्रत्ययवाच्यः; अपि तु सामर्थ्याद् वक्तैव प्रयोजकोऽवतिष्ठत इति तद्धर्मः प्रैषोऽवतिष्ठमानो न धातुप्रत्ययेन नियतकालतयात्रावच्छिद्यते।

तथा च सम्प्रत्यपृच्छत्यपि पृच्छत्विति प्रयोगः। णिचस्तु प्रैषो वाच्य इति शब्दोपादानत्वादभिधेयधर्मो भवन् नियतकालाभिधायिना प्रत्ययेन लडादिना कालनियमेनावच्छिद्यते। शब्देन हि ण्यन्तादुत्पन्नेन कर्तृवाचिना लकारेण तृजादिना चोपात्तो यः कर्ता प्रयोजकस्तस्य सम्बन्धी प्रतीयतेऽसावित्यभिधेयधर्मः।

द्विविधो ह्यर्थः शास्त्रेऽन्वाख्यानाङ्गभावेनोपादीयते। कश्चित् प्रयोक्तृधर्मः, यथा वीप्साऽऽबाधाऽसूयाकुत्सनादिः। अन्यः प्रतिपाद्यधर्मः। तत्रायं लोड्विषयः प्रैष आबाधादिवत् प्रयोक्तृधर्म इत्यभिधेयत्वाद् व्यावृत्तः॥ १२५॥

---

भवान् पृच्छतु' इति। तथा बुद्धिस्थकर्त्राऽपि अभिसम्बन्धात् कर्तृप्रत्ययो लोड् क्रियत इति मनसि निधाय "कर्त्रापि तद्ध्यभिसम्बन्धः क्रियते" इत्युक्तम्।

एवञ्च वदता भाष्यकारेण सम्प्रत्यकर्तृत्वादत्र णिज् न भवतीत्युक्तं भवति।

तथा हि–नवमेव=उत्पत्तेः प्रागेव अस्य=प्रयोज्यस्य कर्तृत्वम्, न तु विद्यमानम्। क्रियायां कर्ता भवेति हि प्रेष्यते, न तु कर्तैव सन् प्रेष्यते। तेन कर्तुः सतः प्रैषः प्रयोजकनिष्ठो णिज्विषयः। लोट्प्रत्ययस्तु कर्त्रादिष्वर्थेषु विधीयते। धात्वर्थोपाधिः=धात्वर्थलोडर्थयोः सन्निधानेऽवाच्योऽपि प्रतीयमानः, प्रैषस्तु लोटो द्योत्यः। स च न धातुप्रत्ययवाच्यः; अपि तु पृच्छतु मामिति प्रयोगसामर्थ्याद् वक्तैव प्रयोजकोऽवतिष्ठत इति तद्धर्मः प्रैषोऽवतिष्ठमानो न धातुप्रत्ययाभ्यां नियतकालिकतया=वर्तमानकालिकतया परिच्छिद्यते।

तथा च=प्रैषस्य नियतकालिकतयाऽनवच्छेदे च, सम्प्रत्यपृच्छत्यपि 'पृच्छतु' इति प्रयोगः। णिचस्तु प्रैषो वाच्य इति शब्दोपात्तत्वादभिधेयस्य प्रयोजककर्तुर्धर्मो भवन् नियतकालाभिधायिना=वर्तमानकालवाचिना प्रत्ययेन लडादिना कालनियमेन=नियतेन वर्तमानकालेन अवच्छिद्यते। शब्देन हि ण्यन्तादुत्पन्नेन कर्तृवाचिना लकारेण तृजादिना चोपात्तो यः कर्ता प्रयोजकस्तस्य सम्बन्धी प्रतीयतेऽसौ=प्रैष इत्यभिधेयस्य प्रयोजककर्तुर्धर्मः।

द्विविधो ह्यर्थः शास्त्रे शब्दसाधुत्वान्वाख्यानस्याङ्गतयोपादीयते। कश्चित् प्रयोक्तृधर्मः, यथा वीप्साऽऽबाधाऽसूयाकुत्सनादिः। अन्यः प्रतिपाद्यधर्मः=शब्दाभिधेयस्य धर्मः। तत्रायं लोड्विषयः प्रैष आबाधादिवत् प्रयोक्तृधर्मः=शब्दानभिधेयस्य प्रयोक्तुर्धर्म इति स्वाश्रयवदभिधेयत्वाद् व्यावृत्त इति॥ १२५॥

तदेतत् तात्पर्येण प्रतिपादयति –

द्रव्यमात्रस्य तु प्रैषे पृच्छ्यादेर्लोड् विधीयते ।
सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः ॥ १२६ ॥

अप्रवृत्तक्रियस्य द्रव्यमात्रस्य अप्रतिलब्धकर्तृभावस्य कर्तृत्वार्थं एव प्रैषे द्योत्ये लोडुपदिश्यते । पृच्छ्यनुयुज्यादेर्धातोः परः प्रत्ययः कर्त्रादिकारके वाच्ये । प्रवृत्तक्रियस्य तु विरामाशङ्कायां मा विरंसीदित्यभिसन्धाय कर्तुरेव स्वतन्त्रस्य प्रयोजकहेतुव्यापारे णिज्वाचक उपदिश्यते । प्रत्ययार्थविशेषणपक्षो हि "हेतुमति च" इत्यत्र सिद्धान्तितः । तथा च वार्त्तिकम्—"हेतुमतीति कारकोपादानं प्रत्ययपरिग्रहार्थम् ।" ( वा० ३।१।२६ ) इति ।

तदेवं णिज्लोटोर्विभक्त एव विषयः, लौकिकाच्छब्दप्रयोगात् प्रैषभेदस्यात्रावधारणात् ।

---

णिज्लोटोर्विषयं विभजन् तदेतत् पूर्वकारिकोक्तमर्थजातं तात्पर्यवृत्त्या प्रतिपादयति--द्रव्यमात्रस्य त्विति ।

अस्यार्थः---अप्रवृत्तक्रियस्य, अत एवाप्रतिलब्धकर्तृभावस्य, अत एव द्रव्यभावस्य प्रैषे तु पृच्छ्यादेर्धातोर्लोड् विधीयते 'पृच्छतु मा भवान्' इति । यदा तु सक्रियस्य=प्रवृत्तक्रियस्य प्रयोज्यकर्तुः क्रियाविरामाशङ्कया प्रयोगः प्रैषः, तदा न प्रैषो णिज्विषयो वाच्य इति—'यज्ञदत्तो देवदत्तं गमयति' इति ।

अयं भावः—अप्रवृत्तक्रियस्य अत एवाप्रतिलब्धकर्तृभावस्य व्यापाराश्रयस्यैव कर्तृत्वात् । अत एव द्रव्यमात्रस्य कारकशक्तिशून्यस्य कर्तृत्वसम्पत्तिफलक एव प्रैषे द्योत्ये कर्तरि लोडुपदिश्यते । पृच्छ्यनुयुज्यादेर्धातोः परो लोडादिप्रत्ययः कर्त्रादिकारके वाच्ये इति प्रत्ययविधिसूत्रार्थः प्रवृत्तक्रियस्य तु कर्तुरेव स्वतन्त्रस्य प्रयोज्यस्य क्रियाविरामाशङ्कायां सत्यां मा विरंसीदित्यभिसन्धाय प्रैषे प्रवृत्तस्य प्रयोजकहेतोर्व्यापारे प्रैषरूपे तद्वाचको णिजुपदिश्यते हेतुमत्यर्थे प्रैषरूपे णिजिति । प्रत्ययार्थविशेषणपक्ष एव हि "हेतुमति च" ( ३।१।२६ ) इत्यत्र सिद्धान्तितः । न तु हेतुमत्यर्थे वर्तमानाद् धातोरिति धात्वर्थविशेषणपक्षः । तथा च वार्त्तिकम्—"हेतुमतीति कारिकोपादानं प्रत्ययपरिग्रहार्थम्" इति ।

अस्यार्थः—हेतुमति इति कारकस्य प्रैषरूपायाः प्रयोजकक्रियाया उपादानम्, प्रत्ययस्य णिज्रूपस्यैतद्विशेष्यताया परिग्रहार्थम् । हेतुमति अर्थे प्रयोजकक्रियारूपे प्रैषे णिजिति । अत्र करोति इति कारकमिति व्युत्पत्त्या कारकं क्रिया हि 'द्रव्यमभिनिर्वर्तयति' इति वाचोयुक्तेः । भाष्ये 'कारके' इत्यस्य क्रियायामित्यर्थदर्शनाच्च ।

णिज्विषयस्य प्रैषस्याभिधेयधर्मत्वेन णिज्वाच्यतया च तद्धर्मभेदाल्लोड्विषयस्य तु द्योत्यत्वेन प्रयोक्तृधर्मत्वेन च भेदात्। अत एव तु शब्दद्वयेन परस्परव्यतिरेकोऽयं द्योत्यते। द्वियीयस्तु शब्दः पूर्वस्माद(पूर्वस्थानाद)पकृष्य सक्रियस्येत्यनेन सम्बन्धनीयः। 'पृच्छतु मा भवान्' इत्यादौ न प्रैषकर्तुर्वाचकः कश्चिद् विद्यते। केवलमुच्चारयितैव कर्ता सामर्थ्यात् प्रतीयत इत्यभिधेयधर्मोऽत्र प्रैषो न भवति। नापि स्वरूपेणाभिधेयः, लोटा तदनभिधानात्। लोडन्तशब्दोच्चारणाद्धि प्रयोक्तृधर्मत्वेनाबाधादिवत् प्रतीयते प्रैषः, न त्वस्य वाचकः कश्चिदस्ति।

यदि तर्हि एवमनयोः प्रैषयोः स्फुटो भेदः, कथं भाष्ये चोदितम्—"इह कस्मान्न णिज् भवति पृच्छतु मा भवान्" ( म० भा० ३।१।२६ ) इति ?

लोकव्यवहाराधिगम्योऽयं विभागः, शास्त्रेऽन्वाख्यानविभागो न कृत इति प्रैषमात्रं समानं मत्वा पूर्वपक्षः ॥ १२६ ॥

गतमेतत्। इह प्रयोज्यस्य प्रेषणाध्येषणादिना सर्वस्य प्रयोजकव्यापारेणाप्यमानत्वात् कर्मसंज्ञाप्रसङ्ग इत्याशङ्क्याह—

---

तदेवं प्रैषवाचकत्वप्रैषद्योतकत्वाभ्यां णिज्लोटोर्विभक्त एव विषयः। लौकिकात् शब्दप्रयोगात् प्रैषभेदस्यात्रावधारणात्।

तथा हि—णिज्विषयस्य प्रैषस्याकर्तृकर्मान्यतरप्रत्ययसमभिव्याहारे प्रथमान्ततृतीयान्तान्यतरपदाभिधेयप्रयोजकधर्मत्वेन णिज्वाच्यतया च तद्धर्मभेदात्=प्रैषधर्मभेदात्, लोड्विषयस्य तु प्रैषस्य द्योत्यत्वेन प्रयोक्तृधर्मत्वेन च भेदात्। अत एव कारिकायां तुशब्दद्वयेन परस्परमनयोः प्रैषयोरयं भेदो द्योत्यते।

द्वितीयस्तुशब्दः स्वस्थानादपकृष्य यदा इत्यनेन सक्रियस्येत्यनेन वा योजनीयः, यत्तदोर्नित्यसम्बन्धाच्चाग्रे तदाशब्दो यथास्थानमध्याहृत्य योजनीयः। 'पृच्छतु मा भवान्' इत्यादौ न प्रैषकर्तुर्वाचकः कश्चित् शब्दो विद्यते। केवलमुच्चारयितैव प्रैषकर्तासामर्थ्यात्=वाक्यार्थसामर्थ्यात् प्रतीयत इति प्रैषोऽत्राभिधेयधर्मो न भवति। नापि स्वरूपेणाभिधेयः, लोटा कर्तुरभिधानेन तदनभिधानात्। लोडन्तशब्दोच्चारणाद्धि आबाधादिवत् प्रयोक्तृधर्मत्वेन प्रैषः प्रतीयते, न त्वस्य वाचकः कश्चित् शब्दोऽत्रास्ति।

ननु यदि अनयोः प्रैषयोरेवं स्फुटो भेदः, तर्हि कथं भाष्ये एवं चोदितम्—"इह कस्मान्न णिज् भवति, 'पृच्छतु मा भवान्' इति चेत्, सत्यम्, अयं प्रागुक्तो णिज्लोटोर्विषयविभागो लोकव्यवहारविमर्शाधिगम्यः, शास्त्रे तु अन्वाख्यानावसरेऽनयोर्विषयविभागो न कृत इति प्रैषद्वयमपि समानं मत्वाऽयं भाष्ये पूर्वपक्षः कृत इत्यवेहीति" ॥ १२६ ॥

गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः ।
नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते ॥ १२७ ॥

स्वतन्त्रतामपरित्यजन्नेव प्रयोज्यः प्रयोजकव्यापारे पाराधीन्यं प्रतिपद्यते । न ह्यस्य प्रयोजकेन स्वातन्त्र्यखण्डना क्रियत इत्युक्तम् । इतरथा ह्यकुर्वत्यपि कारयतीति स्यादिति ।

तथा च प्रैषेऽपि स्वव्यापारे स्वातन्त्र्यात् कर्तृसंज्ञा भवत्येव । कर्मसंज्ञा तु प्रैषेणाप्यमानत्वेन प्राप्ता "गतिबुद्धि०" ( पा० १।४।५२ ) इत्यादिना नियमिता ।

गत्यादिधातुविषय एव प्रयोज्यः कर्मसंज्ञो नान्यत्रेति 'पाचयत्योदनं देवदत्तेन' इत्यादौ स्वधर्मेण कर्तृत्वेन प्रयोज्योऽभिधीयत इत्यर्थः ।

ननु प्रैषेऽपि स्वातन्त्र्यस्यानिवृत्तौ कर्तृसंज्ञैव परत्वात् स्यादिति कथं गतिबुद्धीत्यादिनियमः कथ्यते ? कर्तृसंज्ञाप्रसङ्गे हि कर्मसंज्ञा आरभ्यत इति विध्यर्थता स्यात् ।

---

प्रसङ्गागतो णिज्लोटोर्विषयविभागविमर्शः परिसमाप्तः । इहेदानीं सर्वस्यापि प्रयोज्यस्य प्रेषणाध्येषणादिना प्रयोजकव्यापारेणाप्तुमिष्टतमत्वात् कर्मसंज्ञाप्रसङ्ग इत्याशङ्कयाह—गुणक्रियायामिति ।

अस्यार्थः सर्वोऽपि प्रयोज्यो गुणक्रियायां प्रेषणे प्रयोजकव्यापारे गुणभूतायां स्वक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतोऽपि प्रेषणेन प्रयोजकव्यापारेणाप्यमानत्वात् कर्मतां प्राप्तोऽपि कर्मसंज्ञया "गतिबुद्धि०" ( १।४।५२ ) इत्यादिना गत्यादिविषयकतया नियमनात् स्वधर्मेण कर्तृत्वेन 'पाचयत्योदनं देवदत्तेन यज्ञदत्तः' इत्यादौ अभिधीयत इति ।

अयं भावः—स्वव्यापारे स्वतन्त्रतामपरित्यजन्नेव प्रयोज्यः प्रयोजकव्यापारे पारतन्त्र्यं प्रतिपद्यते । न ह्यस्य स्वव्यापारे स्वातन्त्र्यस्य खण्डनाप्रयोजकेन क्रियते विषयभेदादित्युक्तं प्राक् । अन्यथा हि—अकुर्वत्यपि प्रयोज्ये कारयतीति स्यादिति ।

तथा च प्रयोज्यस्य प्रैषे पारतन्त्र्ये सत्यपि स्वव्यापारे स्वातन्त्र्यात् कर्तृसंज्ञा भवत्येव । प्रयोज्यस्य कर्मसंज्ञा तु तस्य प्रैषेणाप्यमानत्वेन प्राप्ता "गतिबुद्धि०", ( १।४।५२ ) इत्यादिना नियमिता ।

गत्यादिधातुविषय एव प्रयोज्यः कर्मसंज्ञो भवति, नान्यत्रेति नियमाकारः, तेन 'पाचयत्योदनम्' इत्यादौ प्रयोज्यः स्वधर्मेण कर्तृत्वेन अभिधीयत इत्यर्थः ।

ननु प्रैषे सत्यपि प्रयोज्ये स्वव्यापारे स्वातन्त्र्यनिवृत्तौ तस्य कर्तृसंज्ञैव कर्मसंज्ञापेक्षया परत्वात् स्यादिति कथं गतिबुद्धीत्यादिनियमः कथ्यते ? प्रयोज्यस्य कर्म-

अत्रोच्यते—इह गुणप्रधानभूतक्रियाद्वयविषयशक्तिद्वयविषये प्रधानशक्तिरेव स्वकार्यं प्रयुङ्क्ते, न गुणशक्तिरिति प्रागेव प्रतिपादितम् । तत्र धातुवाच्यः प्रयोज्यव्यापारो ण्यर्थविशेषणत्वादप्रधानम्, प्रयोजकव्यापारस्तु णिज्वाच्यः प्रधानम् । प्रकृत्यर्थावच्छिन्नत्वाद्धि प्रत्ययार्थः सर्वत्रैव प्रधानम्, "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः" इति ।

अतश्चात्र प्रयोजकव्यापारस्य प्राधान्यात् तदपेक्षया( क्षा )कर्मशक्तिरेव स्वकार्यं प्रापयति, न तु प्रयोजव्यापारविषया कर्तृशक्तिः ।

तद्यथा ओदनस्य विक्लित्तौ स्वातन्त्र्येऽपि न कर्तृसंज्ञा; अपि तु विक्लेदनेन देवदत्तव्यापारेणेप्सिततमत्वात् कर्मसंज्ञैव पाचयत्योदनमिति ( पचत्योदनमिति )। तदेवमत्रोभयप्रसङ्गाभावे विप्रतिषेधाभावात् कर्तृसंज्ञाया अप्राप्त्या सिद्धैव गत्याद्विविषयेऽपि कर्मसंज्ञेति नियमार्थं आरम्भः । पचत्यादिविषये नियमेन

---

संज्ञाया अप्राप्त्या तत्र तद्विषयकनियमासम्भवात् । किञ्चात्र प्रयोज्यस्य कर्तृसंज्ञाप्रसङ्गे हि कर्मसंज्ञा गतिबुद्धीत्यादिना आरभ्यत इति रीत्या "गतिबुद्धि०" इत्यादिसूत्रस्य विध्यर्थतैव स्यादिति ।

अत्रोच्यते—इह=णिच्प्रत्ययसमभिव्याहारे गुणप्रधानभूतधात्वर्थप्रत्ययार्थरूपक्रियाद्वयनिरूपितकर्मत्वकर्तृत्वरूपशक्तिद्वयविषये प्रधानीभूता कर्तृत्वशक्तिरेव स्वकार्यं प्रति प्रयोजिका, न गुणभूता कर्मत्वशक्तिरिति प्रागेव प्रतिपादितम् । तत्र धातुवाच्यः प्रयोज्यव्यापारो ण्यर्थप्रैषे विशेषणत्वादप्रधानम्, प्रयोजकव्यापारस्तु प्रैषरूपो णिज्वाच्यः प्रधानम् । णिच्प्रकृत्यर्थावच्छिन्नत्वाद्धि=धात्वर्थविशिष्टत्वाद्धि, धात्वर्थविशेष्यत्वादिति यावत्, प्रत्ययार्थः सर्वत्रैव प्रधानम्, "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्" इत्यभियुक्तोक्तेः ।

अत्र सहार्थमित्यस्य अन्वितार्थमित्यर्थः । अतश्चात्र ण्यर्थस्य प्रैषस्य प्रयोजकव्यापारस्य प्राधान्यात् तदपेक्षा=तदनुरोधिनी प्रयोज्यगता कर्मशक्तिरेव स्वकार्यं द्वितीयादिकं तत्र प्रापयति, न तु प्रयोज्यव्यापारनिरूपिता कर्तृशक्तिस्तत्र स्वकार्यं तृतीयादिकम् ।

तद्यथा—'चैत्र ओदनं पचति' इत्यत्र ओदनस्य विक्लित्तिरूपे धात्वर्थत्वात् क्रियारूपे फले स्वतन्त्र्येऽपि न कर्तृसंज्ञा; अपि तु विक्लेदनेन प्रधानीभूतेन देवदत्तव्यापारेणेप्सिततमत्वात् कर्मसंज्ञैव 'पचत्योदनम्' इति । तदेवमत्र=प्रयोज्ये कर्तृकर्मोभयसंज्ञाप्रसङ्गाऽभावे विप्रतिषेधाभावात् कर्तृसंज्ञाया अप्राप्त्या सिद्धैव गत्यादिविषयेऽपि कर्मसंज्ञेति नियमार्थो गत्यादिसूत्रारम्भः । तदेवं 'पाचयत्योदनं देवदत्तेन यज्ञदत्तः' इत्यादौ ण्यन्ते पचत्यादिधातुविषये गत्यादिनियमेन प्रधानीभूतप्रयोजकव्यापारप्रयुक्ते प्रयोज्यस्य कर्मसंज्ञारूपे कार्येऽपसारिते गुणक्रियानिरूपितं स्वातन्त्र्यम्=

प्रधानकार्येऽपसारिते निष्प्रतिपक्षं गुणक्रियास्वातन्त्र्यं स्वकार्यं कर्तृसंज्ञां प्रवर्तयत्येवेति सिद्धम् ।। १२७ ।।

प्रयोजको हेतुरित्युक्तम् । कर्मणश्चापि फलभूतस्य क्रियां प्रत्यस्त्येव प्रयोजकत्वमिति तस्यापि हेतुत्वप्रसङ्ग इत्याशङ्क्य हेतुकर्मणोर्भेदं दर्शयति—

**क्रियायाः प्रेरकं कर्म हेतुः कर्तुः प्रयोजकः ।**
**कर्मार्थो च क्रियोत्पत्तिसंस्कारप्रतिपत्तिभिः ।। १२८ ।।**

निर्वृत्तिविकारप्रतिपत्तिभिर्यथाक्रमं निर्वर्त्यादित्रिविधकर्मसम्पादकत्वात् क्रियाफलं कर्मात्मसम्पत्त्यर्थं क्रियां प्रयुङ्क्ते । हेतुः पुनः क्रियार्थी साधनविनियोगे कर्तारं प्रयुङ्क्ते, न तु साक्षात् क्रियाम् । तत्परिपोषाय हि कर्तुः प्रवृत्तिः, तस्य कर्तुः प्रयोजक इति वचनात्, इति भिन्नविषयत्वाद्धेतुकर्मणोः प्रयोजकत्वस्य स्वरूपभेदः स्फुट इत्यर्थः । 'च'शब्दो हेतौ । यस्मादुत्पत्त्यादिभिरुपकारात् क्रिया कर्मार्था,

---

प्रयोज्यस्य कर्तृसंज्ञा स्वातन्त्र्यम्, स्वकार्यं प्रयोज्यस्य कर्तृसंज्ञां प्रवर्तयत्येवेति सिद्धमिति ।। १२७ ।।

प्रयोजको हेतुरित्युक्तम् । कर्मणश्चापि क्रियाफलभूतस्य फलत्वादेव क्रियां प्रति प्रयोजकत्वमस्त्येवेति कर्मणोऽपि हेतुत्वप्रसङ्गः=हेतुसंज्ञाप्राप्तिरित्याशङ्क्य "तत्प्रयोजको हेतुश्च" ( १।४।५४ ) इति सूत्रार्थमाश्रित्य हेतुकर्मणोर्भेदं दर्शयति— क्रियायाः प्रेरकमिति ।

अस्यार्थः— कर्मक्रियाफलत्वाद् आत्मसम्पत्त्यर्थं क्रियायाः प्रेरकं प्रयोजकम्, हेतुस्तु कर्तुः प्रयोजकः, "तत्प्रयोजको हेतुश्च" (१।४।५४) इत्यत्र तत्पदेन "स्वतन्त्रः कर्ता" ( १।५।५४ ) इति पूर्वसूत्रोक्तस्य कर्तुः परामर्शात् । कारिकायामुत्तरार्धे चशब्दो हेतौ । यतः क्रिया उत्पत्तिसंस्कारप्रतिपत्तिभिः = उत्पत्तिविकृतिप्राप्तिभिरुपकृत्य =उत्पाद्य विकार्यप्राप्यरूपत्रिविधकर्मफला ततः क्रियाफलत्वात् कर्मक्रियायाः प्रयोजकमित्येवं क्रियाप्रयोजकत्वकर्तृप्रयोजकत्वाभ्यां हेतुकर्मणोर्भेद इति ।

अयं भावः—उत्पत्तिविकृतिप्राप्तिभिर्यथाक्रममुत्पाद्यविकार्यप्राप्येति त्रिविधकर्मसम्पादकत्वात् क्रियायास्तस्याः फलं कर्म, तच्चात्मसम्पत्त्यर्थं क्रियां प्रयुङ्क्ते, हेतुस्तु प्रयोज्यक्रियार्थी प्रयोज्यकर्तारं कर्मकरणादिसाधनविनियोगे=कर्मादिकारकाणां प्रैषे प्रयुङ्क्ते, न तु साक्षात् क्रियाम् । तत्परिपोषाय हि=प्रयोज्यक्रियायाः परिपोषाय हि कर्तुः प्रयोज्यस्य प्रवृत्तिः, न तु तस्याः प्रैषाय । तस्य =कर्तुः प्रयोजक इत्यर्थकात्, तत्प्रयोजको हेतुश्चेति वचनात्, इत्येवं हेतुकर्मणोः प्रयोजकत्वस्य भिन्नविषयकत्वात् =क्रियाप्रयोज्यकर्तृरूपविषयभेदाद् हेतुकर्मणो प्रयोजकत्वस्य स्वरूपभेदः स्फुट इत्यर्थः ।

ततः कर्म क्रियायाः प्रयोजकम् । यद्धि यदर्थं तत्तस्य प्रयोजकमिति व्यपदिश्यते, तदुद्देशेन तत्प्रवृत्तेः । कारकान्तराणि तु क्रियार्थानि, न तु तदर्था क्रियेति न तानि तस्याः प्रयोजकानि । न हि करणाद्यर्थं क्रियाप्रवृत्तिः, उपायमात्रं हि तत् । तदयमवसितविचारो हेतुः ॥ १२८ ॥

॥ इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
साधनसमुद्देशे हेत्वाधिकारः ॥

---

कारिकायामुत्तरार्धे तृतीयपादे चशब्दो हेतौ । यस्मादुत्पत्तिविकारप्राप्तिभिरुपकारं कर्मणः सम्पादयन्ती क्रिया कर्मार्थी ततः = क्रियाफलत्वात् कर्म क्रियायाः प्रयोजकम् । यद्धि यदर्थं तत् तस्य प्रयोजकमिति व्यपदिश्यते, तदुद्दिश्य तत्प्रवृत्तेः। कारकान्तराणि तु = कर्मणः, इतराणि कारकाणि तु क्रियार्थानि, न तु कारकान्तरार्था क्रियेति न तानि तस्याः प्रयोजकानि । न हि यथा कर्मार्थम्, तथा करणाद्यर्थं क्रियाप्रवृतिः, क्रियाया उपायमात्रम् = साधनमात्रं हि तत् = करणादिकारकम् । इत्येवं हेतुविचारः परिसमाप्तः, नात्र किञ्चिद् विचार्यं परिशिष्यत आवश्यकमिति ॥ १२८ ॥

॥ इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथशर्म-
कृतायामम्बाकर्त्र्यां साधनसमुद्देशे
हेत्वधिकारः ॥

# अथ सम्प्रदानाधिकारः

विभक्तिविधानक्रमेण साधनानां विचारे तृतीयार्थे कर्तरि निर्णीते चतुर्थ्यर्थं सम्प्रदानं विचारयितुमाह—

अनिराकरणात् कर्त्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां वा लभते सम्प्रदानताम् ।। १२९ ।।

अन्वर्थत्वात् सम्प्रदानशब्दस्य 'त्यागाङ्गम्' इति लक्षणलाभः । त्यागो दीयमानस्य स्वत्वनिवृत्त्या परस्वत्वापादनम् । तत्र चाङ्गं निमित्तं पाण्याद्यपि भवती-

---

"स्वौजसमौट्०" (४।१।२) इति विभक्तिविधानक्रमेण साधनानां विचारेऽत्र प्रवृत्ते तृतीयार्थे कर्तरि निर्णीते सति अवसरप्राप्तं चतुर्थ्यर्थं सम्प्रदानं विचारयितुमाह— अनिराकरणादिति ।

अस्यार्थः —'सम्यक् प्रदीयतेऽस्मै' इति सम्प्रदानमिति व्युत्पत्त्या सम्प्रदानशब्दस्यान्वर्थत्वात् त्यागाङ्गमिति सम्प्रदानलक्षणलाभः । त्यागस्याङ्गं निमित्तमिति तदर्थः । दीयमानस्य स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनं त्यागः ।

यद्यपि त्यागेऽङ्गं निमित्तं दातुः पाणिरपि भवति, तं विना दानासम्भवात् । जलमपि तत्राङ्गं भवति, तद्विना दानसङ्कल्पासिद्धेरिति तत्र तत्र त्यागाङ्गरूपस्य सम्प्रदानलक्षणस्यातिव्याप्तिरित्याशङ्क्य तल्लक्षणं विशेषयति—कर्मणेप्सितमिति । त्यज्यमानेन कर्मणा करणभूतेन त्यागारम्भ एव कर्त्राऽऽप्तुमिष्टमित्यर्थः । तथा च— "कर्मणा यमभिप्रैति स सम्प्रदानम्" ( १।४।३२ ) इति लक्षणस्यानेन संग्रहः । तदेवंविधम्=कर्मणेप्सितम्, त्यागनिमित्तं कथं कारकविशेषरूपां सम्प्रदानतां लभत इत्याशङ्क्याह—अनिराकरणात् कर्तुरिति ।

त्यागकर्तुरनिराकरणात्=दानविषयकस्य निषेधस्याकरणादित्यर्थः । अस्य च 'लभते सम्प्रदानताम्' इत्यनेनान्वयः। अस्योदाहरणम्- 'सूर्यायार्घं ददाति' इति । अत्र हि सूर्यो दीयमानमर्घं न निराकरोति, न वा तद्दातारं निराकरोति । प्रेरणम्= अभ्यर्थनया दाने प्रवर्तनम्, अपि सम्प्रदानव्यापारस्तत्त्वप्राप्तौ निमित्तम् । अनुमतिरपि सम्प्रदानत्वप्राप्तौ निमित्तम् ।

अस्योदाहरणम्—'उपाध्यायाय गां ददाति' इति । अत्र हि उपाध्यायो न शिष्यं गोदाने प्रवर्तयति, न वा निवर्तयति न वा गोदानं निषेधति; किन्तु 'तुभ्यं मया गौर्दीयते गृहाण' इत्युक्तः 'देहि' इत्यनुमन्यत इति ।

त्याह—'कर्मणेप्सितम्' इति। यत् त्यज्यमानं कर्म तेन करणभूतेन प्रारम्भ एव कर्त्राप्तुमिष्टमित्यर्थः।

तथा च "कर्मणा यमभिप्रैति" ( १।४।३२ ) इति लक्षणपरिग्रहः।

तदेवंविधं त्यागाङ्गं कथं कारकविशेषरूपां सम्प्रदानतां लभत इत्याशङ्क्य कारकत्वनिबन्धनं व्यापारं क्रियासिद्धौ निर्दिशति—अनिराकरणाद् इत्यादिना।

'उपाध्यायाय गां ददाति' इत्यादौ त्यज्यमानं कर्म गवाद्युपाध्यायादिना सम्बध्यते, तदभिप्रायेणैव त्यागात्। स चोपाध्यायस्तदभिसम्बध्यमानं न निराकरोति, नापि तत्त्यक्तुः 'मा त्याक्षीः' इति निराकरणं विधत्ते। यदि हि निराकुर्यात्, त्याग एव न सम्पद्येत, परस्वत्वापत्तिपर्यन्तत्वात् तस्य। अनुमन्यते च

---

अयं भावः—'सम्यक् प्रदीयतेऽस्मै' इति व्युत्पत्त्या सम्प्रदानशब्दस्यान्वर्थत्वात् त्यागाङ्गमित्यस्य कारिकोक्तस्य सम्प्रदानलक्षणस्य लाभः। त्यागो नाम दीयमानस्य स्वस्वत्वनिवृत्त्या परस्वत्वापादनम्। तत्र चाङ्गं नाम निमित्तं पाणिः सङ्कल्पजलादिकमपि भवति इति तत्रातिव्याप्तिवारणायाह—कर्मणेप्सितमिति। यत् त्यज्यमानं दानकर्म गवादिकं तेन कर्मणा आप्तिक्रियायां करणभूतेन क्रियाप्रारम्भ एव कर्त्रा यदाप्तुमिष्टं तत्सम्प्रदानमित्यर्थः।

तथा च "कर्मणा यमभिप्रैति स सम्प्रदानम्" ( १।४।३२ ) इति सौत्रसम्प्रदानलक्षणार्थपरिग्रहः—कर्मणेप्सितमित्यनेन।

तदेवंविधम्=कर्मणेप्सितम्, त्यागाङ्गं कथं कारकविशेषरूपां सम्प्रदानतां लभत इत्याशङ्क्य कारकत्वनिबन्धनम्=सम्प्रदानत्वस्य निमित्तं दानक्रियासिद्धौ अनुकूलम्=अनिराकरणप्रेरणानुमतित्रितयरूपं व्यापारं निर्दिशति—अनिराकरणादित्यादिना।

तत्रानिराकरणनिमित्तकसम्प्रदानत्वस्योदाहरणम्—'उपाध्यायाय गां ददाति' इत्यादि।

अत्र हि दीयमानं कर्म गवादिकं शिष्यनिरूपितं स्वत्वरूपं स्वनिष्ठं सम्बन्धं विहाय उपाध्यायादिना सम्बध्यते। तदभिप्रायेणैव=गवादिकस्य दानकर्मण उपाध्यायसम्बन्धेच्छयैव गवादिकस्य त्यागात्। स चोपाध्यायो दीयमानं गवादि स्वेनाभिसम्बध्यमानं न निराकरोति, नापि तत्त्यक्तुः=गवादिदातुः, मा त्याक्षीः=न देहि इति निराकरणं विधत्ते।

यदि हि निराकुर्यात्, त्याग एव न सम्पद्येत, त्यागस्य परस्वत्वापत्तिपर्यन्तत्वात्, निराकरणे च परस्वत्वापत्तेरसिद्धेः। अनुमन्यते चोपाध्यायो गवादिदानम्। तथा दीयमानं बल्यादि न निराकरोति देवतादि इति देवतादिकमपि दानक्रियाङ्गतया सम्प्रदानम्—'सूर्यायार्घं ददाति' इति। याच्ञापूर्वके च दानेऽभ्यर्थनया दातुः

दीयमानम् । तथा दीयमानं न निराकरोति बल्यादि देवतादीति तदपि क्रियाङ्गम् । याञ्चापूर्वके च दाने प्रेरणम्, अभ्यर्थनया दाने प्रवर्तनमपि सम्प्रदानव्यापारः । तथा च त्यागोपकारित्वात् त्यागाङ्गं भवत्येव कारकं सम्प्रदानम् ।

ननु च दानस्य तदर्थत्वात् तादर्थ्ये चतुर्थीप्रयोगात् किमर्थं सम्प्रदानसंज्ञा ? नैतन्न्याय्यम्, दानक्रियार्थं हि सम्प्रदानम्, न तु दानक्रिया तदर्था, कारकाणां क्रियार्थत्वात्, सम्प्रदानार्थं तु दीयमानं कर्मेति वाक्यार्थभूताया दानक्रियाया अतादर्थ्यात् । तादर्थ्ये चतुर्थ्या अप्राप्तौ तदर्था सम्प्रदानसंज्ञा न्याय्या ।

'रजकस्य वस्त्रं ददाति', 'घ्नतः पृष्ठं ददाति' इत्यादौ तु ददात्यर्थो नास्ति । त्यागो हि सः । तेन च हानात्मकेन ममताविच्छेदस्याक्षेपादेव परोपयोगाभिसन्धिना परस्वत्वापादनमपि स्वीकृतम् । अत्र च तद्भाव इति गौणोऽयं ददातेः

---

प्रवर्तनरूपं प्रेरणमपि सम्प्रदानव्यापारः । एतदुदाहरणम्—'याचितः पुरोहिताय गां ददाति' इति । तथा च त्यागोपकारित्वात् त्रिविधमपि सम्प्रदानं कारकं त्यागाङ्गं भवत्येव ।

ननु च दानस्य सम्प्रदानार्थत्वात् तादर्थ्ये चतुर्थीप्रयोगात् किमर्थं सम्प्रदानसंज्ञेति चेत्, नैतन्न्याय्यम्; यतो दानक्रियासिद्ध्यर्थं सम्प्रदानम्, न तु दानक्रिया सम्प्रदानार्था, कारकाणां क्रियार्थत्वात् । दीयमानं कर्म तु गवादिकं सम्प्रदानार्थमिति वाक्यार्थभूताया दानक्रियाया अतादर्थ्यात् = सम्प्रदानार्थत्वाभावाद् वार्त्तिकविहितायास्तादर्थ्ये चतुर्थ्या अप्राप्तौ तदर्था = चतुर्थ्यर्था सम्प्रदानसंज्ञा न्याय्या ।

'रजकस्य वस्त्रं ददाति, घ्नतः पृष्ठं ददाति' इत्यादौ तु ददात्यर्थो नास्ति, इति नात्र सम्प्रदानसंज्ञा, न वा तत्प्रयुक्ता चतुर्थी । त्यागो हि सः = ददात्यर्थः । तेन च = त्यागेन च ददात्यर्थेन स्वस्वत्वहानात्मकेन स्वकर्मणः परोपयोगाभिसन्धिना क्रियमाणेन स्वममताविच्छेदस्याक्षेपादेव परस्वत्वापादनमपि ददात्यर्थत्वेन स्वीकृतम् ।

अत्र च = 'रजकस्य वस्त्रं ददाति' इत्यादौ च तदभावः = परस्वत्वापादनाभाव इति गौणोऽयम् 'रजकस्य वस्त्रं ददाति' इत्यादौ ददातेः प्रयोगः । देवताविषये तु = देवतोद्देश्यके तु दाने दातुर्दानकर्मणि देवतास्वामिकत्वसङ्कल्पो विद्यत एवेति सङ्कल्पादेव तत्र परस्वत्वापादनस्य लाभः, न तु प्रागुक्तरीत्याऽऽक्षेपादिति तत्रापि हानपूर्वकं परस्वत्वापादनरूपो ददात्यर्थोऽस्त्येव । एवम्—'अरोचकिनेऽन्नं ददाति, इत्यादौ हानपूर्वकं परस्वत्वापादनरूपो ददात्यर्थोऽस्त्येव ।

अत्र यद्यपि सम्प्रदानस्य अरोचकित्वेन दानकर्मणः परोपयोगाभाव आक्षिप्यत इति तत्सत्तया तद्विरोधिनः परस्वत्वापादनरूपस्य ददात्यर्थस्य नात्र सम्भवः । परोपयोगाभिसन्धिना क्रियमाणेन हानेन हि परस्वत्वापादनस्याक्षेपो भवति, अत्र च परस्यारोचकित्वेन परोपयोगो नास्तीति, तथापि अत्र परोपयोगाभावो न शाब्दः;

प्रयोगः। देवताविषये तु दाने दातुस्तत्स्वामिकत्वसङ्कल्पो विद्यत एव। एवम् 'अरोचकिनेऽन्नं ददाति' इत्यादौ उपयोगाभावस्तु न शाब्दः। न 'शूद्राय मतिं दद्यात्' इत्यत्रापि मतिसन्तानस्यापक्रामतोऽस्त्येव परोपयोगः।

तथा च ( यथा च ) 'उपाध्यायादागमयति' इत्यध्ययनसन्तानस्यापक्रामतो भवत्यपादानमुपाध्यायः ( तथाऽत्र ) मतिसन्तानस्यैकदेशस्त्यज्यमान इति स्वत्वनिवृत्त्यङ्गपरस्वत्वापादनलक्षणो मुख्य एवात्र ददात्यर्थः।

अन्ये तु मतेः दातृसम्बन्धानवगमाद् गौण इत्याहुः।

'कन्यां ददाति' इति जन्यजनकभावाव्यावृत्तावपि स्वस्वामिसम्बन्धस्य निवृत्तेर्मुख्य एव ददात्यर्थः। 'खण्डिकोपाध्यायस्तस्मै चपेटां ददाति' इत्यादौ वस्तुतोऽसत्यपि चपेटादिस्वाम्ये तदुपकारितया दातुः स्वामित्वाभिसन्धिरस्त्येव। यद्यपि प्रतिकूलरूपत्वाच्चपेटायास्तदानीमुपयोगो नास्ति, तथापि फलद्वारेणास्त्येव

---

किन्तु आक्षिप्त इति शाब्दे व्यवहारे नाशाब्देन तेन विरोधः। तदुक्तमभियुक्तैः—

'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि'। इति।

बहिर्बाधितस्याप्यर्थस्य शाब्दो व्यवहारः पुरञ्जयोपाख्यानादौ भागवते दृश्यत एव। 'न शूद्राय मतिं दद्यात्' इत्यत्रापि मतिसन्तानस्य शब्दद्वारा वक्तृमुखादपक्रामतोऽस्त्येव परोपयोग इति। अस्त्येवात्र परस्वत्वापादनरूपो ददात्यर्थः।

यथा च—'उपाध्यायादागमयति' इत्यत्राध्ययनसन्तानस्य=अधीतशास्त्रसन्तानस्य मुखादपक्रामतो भवत्यपादानमुपाध्यायः, तथात्र मतिसन्तानस्यैकदेशस्त्यज्यमानः शब्दद्वारा मुखादपक्रामन् भवति हानपूर्वकेण परस्वत्वापादनेन परोपयोगाभिसन्धिना क्रियमाणेन परस्मिन् स्वसम्बन्धेन सम्प्रदात्वस्य निमित्तमिति स्वत्वनिवृत्त्यङ्गकपरस्वत्वापादनलक्षणो मुख्य एवात्र ददात्यर्थः।

अन्ये तु मतेर्दातृसम्बन्धानवगमाद् गौण इत्याहुः।

इदं तु चिन्त्यम् – वेदाधिकारसम्पन्नो द्विजातिरधीतवेदार्थविमर्शसञ्जातां स्वां सतीं मतिं वेदोक्तधर्मविषयां वेदानधिकारिणे शूद्राय उपदेशद्वारा न दद्यादित्यर्थकैतद्वचनेन मतेर्दातृसम्बन्धावगमस्य स्फुटत्वात्।

'कन्यां ददाति' इत्यत्र दातुः कन्यया सह जन्यजनकभावसम्बन्धस्य सोदरत्वादिसम्बन्धस्य वाऽनिवृत्तावपि स्वस्वामिभावसम्बन्धस्य निवृत्तेर्मुख्य एव ददात्यर्थः।

'खण्डिकोपाध्यायस्तस्मै चपेटां ददाति' इत्यादौ चपेटाया दातुरनुपकारित्वेन धनत्वाभावेन वस्तुतोऽसत्यपि दातुः चपेटादिस्वाम्ये तदुपकारितया=चपेटायाः शास्त्राभ्यासानुकूलतया शिष्यं प्रति शास्त्राभ्यासजननद्वारा उपकारितया, दातुश्चपेटां प्रति स्वामित्वाभिसन्धिरस्त्येव। यद्यपि शिष्यं प्रति चपेटायाः प्रतिकूलरूप-

परोपयोगित्वम्। चपेटासहत्वे शास्त्राभ्यासयोग्यत्वात् फलावाप्तेः। "मृजिरस्मायविशेषेणोपदिष्टः" ( म० भा० १।१।१ ) इति तादर्थ्ये चतुर्थी। अविशेषेण गणे पठितो मृजिर्मार्जकशब्दार्थोऽपि भवतीत्यर्थः ( भवत्वित्यर्थः, ॥१२९॥

तदेवं प्रथमं सम्प्रदानं व्याख्यातम्, इदानीमुत्तरं व्याख्यातुमाह—

**हेतुत्वे कर्मसंज्ञायां शेषत्वे वापि कारकम्।**
**रुच्यर्थादिषु शास्त्रेण सम्प्रदानाख्यमुच्यते ॥ १३० ॥**

---

त्वात् तदानीमुपयोगो नास्ति, तथापि शास्त्राभ्यासरूपचपेटाफलद्वारेणास्त्येव परोपयोगित्वमग्रे। शिष्यस्य चपेटासहत्वे शास्त्राभ्यासयोग्यतासम्पत्त्या शास्त्राभ्यासरूपफलावाप्तेः। मृजिरस्मायविशेषेणोपदिष्टः" इति तादर्थ्ये चतुर्थी।

अस्यार्थः—मृजिः=मृजधातुः, अस्मै=एतदर्थम्, मृजधातुर्मार्जन्या भूमिशोधकार्थकमार्जकशब्दसिद्ध्यर्थमपि भवतु इत्यर्थम्, मृजू शुद्धौ इत्येवमविशेषेण वस्त्रधावनादिरूपशुद्धिविशेषरूपमर्थमनादृत्य, अदादिगणे पठित इति ॥ १२९ ॥

तदेवं लौकिकशास्त्रीयभेदेन द्विविधे सम्प्रदाने प्रथमं सम्प्रदानशब्दस्यान्वर्थत्वाद् लौकिकं सम्प्रदानं व्याख्यातम्। इदानीमुत्तरम्=द्वितीयं शास्त्रीयं सम्प्रदानं व्याख्यातुमाह— हेतुत्वे इति।

अस्यार्थः क्वचिद् हेतुत्वे=हेतुसंज्ञायां प्राप्तायाम्, क्वचिच्च कर्मसंज्ञायां प्राप्तायाम्, शेषत्वे वापि=अथवा कारकशेषत्वे सति षष्ठ्यां प्राप्तायामपि, रुच्यर्थादिषु=रुच्यर्थादिधातुप्रयोगेषु सत्सु शास्त्रेण सम्प्रदानाख्यं कारकमुच्यत इति।

तत्राद्यस्योदाहरणम्—'देवदत्ताय रोचते मोदकः' इति। अत्राभिलाषविषयभावमापद्यमानं मोदकं देवदत्तः प्रयुङ्क्ते लौल्यात्, तदानुगुण्यमाचरतीति मोदको देवदत्ताय रोचते=अभिलाषविषयभावमापद्यत इत्यर्थे प्रयोजकस्य देवदत्तस्य हेतुसंज्ञायां प्राप्तायां तद्बाधे न सम्प्रदानसंज्ञा कथ्यते।

अन्यदप्युदाहरणम्—'यज्ञदत्तो देवदत्ताय गां प्रतिशृणोति' इति। अत्र हि याच्ञया 'गां दातुं प्रति जानानं यज्ञदत्तं देवदत्तः प्रयुङ्क्ते' इति देवदत्तस्य प्रयोजकत्वेन हेतुसंज्ञायां प्राप्तायाम्—"प्रत्याङ्भ्यां श्रुवः" इति सम्प्रदानता। देवदत्तेन याञ्चया प्रेरितो यज्ञदत्तो देवदत्ताय गां प्रतिशृणोति प्रतिजानीते इत्यर्थः। अत्र हि प्रतिश्रवात् पूर्वकालिकस्याध्याहृतधात्वर्थस्य याचनस्य देवदत्तः कर्ता भवन् प्रतिश्रवे प्रयोजको भवति।

द्वितीयस्योदाहरणम्—'होत्रेऽनुगृणाति' इति। अध्वर्युर्होतारं शंसने प्रोत्साहयति इत्यर्थः। अत्र होतुः कर्मसंज्ञाप्रसङ्गे "अनुप्रतिगृणश्च" ( १।४।४१ ) इति सम्प्रदानता।

यथा संज्ञान्तरपूर्वकं कर्म प्रागुक्तम्, तथेदमपि सम्प्रदानमन्यपूर्वकं शास्त्रेण "रुच्यर्थानां प्रीयमाणः" ( १।४।३३ ) इत्यादिना व्याख्यायते।

तथा हि 'देवदत्ताय रोचते मोदकः' इत्यत्राकर्तृकोऽभिलाषो रुच्यर्थं इत्यभिलाषविषयभावमापद्यमानं मोदकं देवदत्तः प्रयुङ्क्ते लौल्यात्, तदानुगुण्यमाचरतीति हेतुसंज्ञायां प्रयोजकस्य देवदत्तस्य प्राप्तायां सम्प्रदानसंज्ञा कथ्यते। तथा च हेतुसंज्ञाबाधे णिचोऽभावाद्धेतुसमवायिन्या द्वितीयस्याः क्रियाया अप्रतीतेर्मोदकः स्वक्रियायां धातुवाच्यायां कर्ता भवति, न कर्म रोचते अभिलाषविषयभावमापद्यत इत्यर्थः। हेतुसंज्ञासंनियुक्तायाः कर्तृसंज्ञाया अपि देवदत्तस्य बाधनात् कर्तुः क्रिययेप्सिततमत्वाभावात्। स्वातन्त्र्योपलक्षणायामपि

---

तृतीयस्योदाहरणम्—'देवदत्ताय शतं धारयति यज्ञदत्तः' इति। अत्र हि स्वरूपेऽवतिष्ठमानं शतमुत्तमर्णो देवदत्तोऽधमर्णस्याग्रेऽवस्थापयति=अवस्थाप्य ददाति, अधमर्णश्च तद्धारयति इत्यर्थः। अत्रोत्तमर्णो देवदत्तो दानक्रियाद्वारेण धारणस्य निमित्तम्। अत्र च वाक्ये ददातिक्रिया न श्रूयत इति अश्रूयमाणदानक्रियाविषयेऽत्र कारकशेषे देवदत्ते षष्ठ्यां प्राप्तायां "धारेरुत्तमर्णः" ( १।४।५३ ) इति सम्प्रदानसंज्ञा इति।

अयं भावः—यथा संज्ञान्तरपूर्वकम्=सम्प्रदानादिसंज्ञापूर्वकम्, कर्म 'क्रूरमभिक्रुध्यति' इत्यादौ प्रागुक्तम्, तथेदमपि सम्प्रदानमन्यपूर्वकम्=हेतुसंज्ञादिपूर्वकं शास्त्रेण "रुच्यर्थानां प्रीयमाणः" ( १।४।३३ ) इत्यादिना व्याख्यायते।

तथा हि—'देवदत्ताय रोचते मोदकः' इत्यत्राभिलष्यति कर्तुरन्यद् यदभिलष्यति कर्म तत्कर्तृकोऽभिलाषो रुच्धात्वर्थ इत्यभिलाषविषयभावमापद्यमानं मोदकं देवदत्तः प्रयुङ्क्ते, मोदकविषयकलौल्यात्। तदानुगुण्यम्=मोदकनिष्ठाभिलाषविषयत्वानुकूलत्वम्, आचरति इत्येवं प्रयोजकस्य देवदत्तस्य हेतुसंज्ञायां प्राप्तायां सम्प्रदानसंज्ञा कथ्यते। तथा च देवदत्तस्य हेतुसंज्ञाबाधे णिचोऽभावाद् हेतुनिष्ठाया द्वितीयस्याः क्रियायाः=मोदकनिष्ठाभिलाषविषयत्वानुगुण्याचरणरूपायाः, अप्रतीतेर्मोदकः स्वक्रियायामभिलाषविषयीभावरूपायां रुच्धातुवाच्यायां कर्ता भवति, न कर्म। रोचते=अभिलाषविषयभावमापद्यत इत्यर्थः। हेतुसंज्ञासंनियुक्तायाः=हेतुसंज्ञया सह समुच्चितस्य विहिताया देवदत्तस्य कर्तृसंज्ञाया अपि हेतुसंज्ञावद् बाधनात् कर्तुः क्रिययेप्सिततमत्वाभावाद् न मोदकस्य कर्मसंज्ञा। 'सार्थः पथिकं जहाति' अत्र सार्थस्य विभागावधेरपि नापादानसंज्ञा। 'अपादानमुत्तराणि कारकाणि बाधन्ते' इति भाष्यवचनात् परत्वेन न्याय्यत्वाच्च 'पथिकः सार्थाद् हीयते' इत्यत्र तु विभागावधित्वेन सार्थस्यापादानसंज्ञा। "अपादाने चाहीयरुहोः" ( ५।४।४५ ) इति सूत्रस्वरसात्।

कर्तृश्रुतौ सार्थाद्धीयत इति कर्मणि लकारसमर्थनार्थमत्र मोदकस्य कर्मसंज्ञा न भवति ।

यत्र हि शब्दोपात्तायां क्रियायां स्वातन्त्र्यं प्रतीयते तत्र भवेत् तदाश्रयं कर्मत्वम् । यथा हीयत इति हाने शब्दोपात्ते सार्थस्येति तदाश्रया पथिकस्य कर्मसंज्ञा । इह तु शब्दोपात्तायां मोदकक्रियायां रोचत इत्यस्मान्न देवदत्तस्य स्वातन्त्र्यं प्रतीयते, शब्दव्यापारानपेक्षायां तु वास्तवस्वातन्त्र्यस्य कारकमात्रविषयत्वात् कर्तृश्रुतिरनर्थिका स्यात् ।

यदा तु 'देवदत्ताय रोचते मोदकः' इत्ययमर्थो देवदत्तं मोदकः प्रीणयतीति, तथा च प्रीयमाण इति विशेषणम्, तदा कर्मसंज्ञायां प्राप्तायां सम्प्रदान-सञ्ज्ञारम्भः ।

धातोरर्थान्तरे हि वृत्तौ सकर्मकत्वम् । एवं 'देवदत्ताय श्लाघते' इति गुणोत्कर्षेण देवदत्तः शस्यमानो गुणवत्तया तत्समर्थाविरणादध्यारोपितप्रयोजक-भावो हेतुसंज्ञां प्राप्तो गुणाख्यानेन वा ज्ञापयितुमिष्टो ज्ञापनेनाप्यमानत्वात्

अत्र कर्मणि लकारसमर्थनार्थम्—"कर्तुरीप्सिततमं कर्म" ( १।४।४९ ) इति सूत्रे कर्तृशब्दस्य स्वतन्त्रोपलक्षणत्वेन अपादानीभूतसार्थस्य स्वक्रियायां स्वतन्त्रस्य क्रिययेप्सितस्य पथिकस्य कर्मत्वेन अत्र कर्मणि लकारसिद्धावपि 'देवदत्ताय रोचते मोदकः' इत्यत्र मोदकस्य कर्मसंज्ञा न भवति ।

यत्र हि शब्दोपात्तायां क्रियायां स्वातन्त्र्यं प्रतीयते, तत्र भवेत् तदाश्रयं कर्मत्वम् । यथा—'हीयते' इत्यत्र हाने शब्दोपात्ते सार्थस्य स्वातन्त्र्यं प्रतीयत इति तत्क्रियेप्सितत्वात् पथिकस्य कर्मसंज्ञा । इह तु अभिलाषविषयीभावरूपायां रुच्धातू-पात्तायां मोदकक्रियायां रोचते इत्यस्मान्न देवदत्तस्य स्वातन्त्र्यं प्रतीयते; अपि तु मोदकस्य, स्वातन्त्र्यस्य शब्दव्यापाराभिधानापेक्षायां तु वास्तवस्वातन्त्र्यस्य कारक-मात्रविषयत्वात् 'कर्तुरीप्सिततमम्' इत्यत्र कर्तृशब्दो निष्प्रयोजनः स्यात् । कारक-मात्रस्य स्वस्वक्रियायां स्वातन्त्र्येण कर्तृग्रहणस्य=व्यावर्त्यालाभात् ।

यदा तु—'देवदत्ताय रोचते मोदकः' इत्यस्यायमर्थः—देवदत्तं मोदकः प्रीणयति इति, तथा च=रुच्धातोः प्रीणनार्थकत्व एव च प्रीयमाण इति कारक-विशेषणं संगच्छते, तदा देवदत्तस्य कर्मसंज्ञायां प्राप्तायां सम्प्रदानसंज्ञारम्भः ।

अर्थान्तरे हि धातोर्वृत्तौ सकर्मकत्वम् । एकस्यैव धातोरर्थभेदेन सकर्मकत्वा-कर्मकत्वयोः सम्भवात् । एवं 'देवदत्ताय श्लाघते' इत्यत्र देवदत्तस्य हेतुसंज्ञा कर्मसंज्ञा वा प्राप्ता 'श्लाघह्नुङ्' इत्यादिना सम्प्रदानसंज्ञया बाध्यते । तथा हि 'यदा देवदत्ताय श्लाघते' इत्यस्य गुणोत्कर्षेण शस्यमानः=श्लाघ्यमानो देवदत्तो गुणवत्तया तत्स-मर्थमाचर्य प्रयुङ्क्ते, प्रयुक्तश्च यज्ञदत्तो देवदत्ताय श्लाघत इत्यर्थः, तदा देवदत्तस्य

कर्मसंज्ञ इति "श्लाघह्नुङ्" (१।४।३४) इत्यादिना सम्प्रदानसंज्ञः कथ्यते।

एवं ह्नौतिप्रभृतीनां यथायोगं वाच्यम्। ह्नौतिप्रभृतयो ह्यत्र स्वार्थोपसर्जनज्ञापनवचनत्वात् सकर्मकाः। तथा च ज्ञीप्स्यमान इति संज्ञिविशेषणमुपात्तम्। 'देवदत्ताय शतं धारयति' इति स्वरूपेऽवतिष्ठमानं शतमवस्थापयत्यधमर्णो धारयति। अत्रोत्तमर्णो देवदत्तो दानक्रियाद्वारेण निमित्तं धारणस्य। यतोऽसौ ददाति शतम्, न च तत्र ददातिक्रिया श्रूयते इत्यश्रूयमाणक्रियाविषयेऽत्र कारकशेषे षष्ठयां प्राप्तायाम् "धारेरुत्तमर्णः" (१।४।५) इति सम्प्रदानसंज्ञा।

यथासम्भवं हि हेत्वादित्रयं प्राप्तमुच्यते, न तु प्रत्येकम्। 'पुष्पेभ्यः स्पृहयति' इति पुष्पाणामीप्सिततमत्वात् कर्मसंज्ञाप्रसङ्ग उक्तः। द्रुह्यादौ तु कर्मसंज्ञाप्रसङ्गः। द्रोहस्यापकारत्वात् तदर्थाः सकर्मकाः। एवमीर्ष्यासूयार्था अपि। 'देवदत्ताय राध्यति, ईक्षते' इति तु दैवं पर्यालोचयन्तं गणकं देवदत्तः प्रयुङ्क्ते इति हेतुसंज्ञायां प्राप्तायाम् "राधीक्ष्योः" (१।४।३९) इति सम्प्रदानता।

---

हेतुसंज्ञा प्राप्ता, यतस्तदा देवदत्तोऽध्यारोपितप्रयोजकभाव इति। यदा तु गुणाख्यानेन=श्लाघया लोके यज्ञदत्तस्य ज्ञापयितुमिष्टो देवदत्तः, तदा ज्ञापनक्रिययाऽऽप्तुमिष्टत्वात् कर्मसंज्ञा इति।

एवं सूत्रोक्तानां ह्नौतिप्रभृतीनां तत्तदर्थं प्रकल्प्य तत्र यथायोगं प्राप्तं हेतुत्वं कर्मत्वं वा प्रबाध्य सम्प्रदानत्वं वाच्यम्। ह्नौतिप्रभृतयो ह्यत्र स्वार्थोपसर्जनज्ञापनवचनत्वात् सकर्मकाः। 'कृष्णाय ह्नुते' इत्यस्य गुरुजनेभ्यो निह्नवे न कृष्णं गोपी सखीभ्यो ज्ञापयितुमिच्छतीत्यर्थात्। तथा च=तथैव च ज्ञीप्स्यमान इति संज्ञिविशेषणमुपात्तम्।

अन्यथा श्लाघ्यमानह्नूयमानेत्यादिकमेव वदेत्। देवदत्ताय शतं धारयति' इत्यस्यायमर्थः—व्ययाभावेन स्वरूपेऽवतिष्ठमानं शतं देवदत्तो दत्त्वा अधमर्णस्याग्रेऽवस्थापयति प्रयुङ्क्ते च त्वमिदं धारयेति, स च तेन प्रयुक्तोऽधमर्णः शतं धारयति। इत्थमत्र प्रयोजकत्वेन देवदत्तस्य हेतुसंज्ञा प्राप्ता। किञ्चात्रोत्तमर्णो देवदत्तो दानक्रियाद्वारेण निमित्तं धारणस्य। यतोऽसौ ददाति शतम्, न च तत्र ददातिपदं क्रियावाचकं श्रूयते, इत्यश्रूयमाणक्रियाविषये=तत्कर्तृभूते देवदत्तेऽत्र=धारणक्रियायां दानक्रियाद्वारेण निमित्ततया कारकशेषे षष्ठयां प्राप्तायां 'धारेरुत्तमर्णः' (१।४।३५) इति सम्प्रदानसंज्ञा। हेत्वादित्रयं हि यथासम्भवं मिलितमपि प्राप्तसम्प्रदानसंज्ञाबाध्यतयाऽत्रोच्यते न तु प्रत्येकमेव प्राप्तम्।

एवमत्र हेतुत्वशेषत्वयोर्द्वयोः प्राप्तिः। 'पुष्पेभ्यः स्पृहयति' इत्यत्र पुष्पाणामीप्सिततमत्वात् कर्मसंज्ञाप्रसङ्ग उक्तः। द्रुह्यादौ तु 'कृष्णाय क्रुध्यति, द्रुह्यति' इत्यादौ कर्मसंज्ञायाः प्रसङ्गः सम्भवत्येव। यतो द्रोहस्यापकारत्वात् तदर्थकाः=

'देवदत्ताय गां प्रतिशृणोति, आशृणोति' इत्यत्र तु देवदत्तो याच्ञया गां प्रतिजानानं प्रयुङ्क्ते इति हेतुसंज्ञायां प्राप्तायाम् "प्रत्याङ्भ्यां श्रुवः" (१।४।४०) इति सम्प्रदानता।

पूर्वस्य हि धात्वर्थस्य याचनलक्षणस्य देवदत्तादेः कर्ता भवन् प्रतिश्रवेऽङ्गीकारे प्रयोजको भवति। 'होत्रेऽनुगृणाति, प्रतिगृणाति' इत्यत्रापि 'होतारं शंसनेन (शंसने) प्रोत्साहयति' इति होतुः कर्मसंज्ञाप्रसङ्गे "अनुप्रतिगृणश्च" (१।४।४१) इति सम्प्रदानता।

'शताय परिक्रीतोऽनुब्रूहि' इति साधकतमस्य परिक्रयणे नियतकालस्वीकारे सम्प्रदानता विकल्पेनोक्ता। तत्र रुच्यर्थादिष्विति आदिशब्दोपात्तस्य सुज्ञानत्वात् करणसंज्ञाप्रसङ्गो नोक्तः। विशेषविवक्षाया अभावे चात्र सर्वत्रैव क्रियानिमित्तत्वमात्राश्रयेण शेषत्वे प्राप्ते सम्प्रदानतोदाहार्या। दुह्यादिपरिगणनाद्धि अकथितकर्मतात्र नास्ति।

---

द्रोहार्थकाः सकर्मकाः। एवमीर्ष्याऽसूयार्था अपि स्वस्वविषयमादाय सकर्मकाः। 'देवदत्ताय राध्यति ईक्षते' इत्यत्र तु स्वदैवं पर्यालोचयन्तं गणकं देवदत्तः प्रयुङ्क्ते इति हेतुसंज्ञायां प्राप्तायाम् "राधीक्ष्योर्यस्य विप्रश्नः" (१।४।३९) इत्यनेन सम्प्रदानता। 'देवदत्ताय गां प्रतिशृणोति, आशृणोति'=दातुं प्रतिजानीते इत्यत्र तु 'देवदत्तो याच्ञया गां प्रतिजानानं प्रयुङ्क्ते' इत्यर्थे हेतुसंज्ञायां देवदत्तस्य प्राप्तायाम्— "प्रत्याङ्भ्यां श्रुवः" (१।३।५९) इत्यनेन सम्प्रदानता। प्रतिश्रवात् पूर्वस्य हि धात्वर्थस्य याचनलक्षणस्य देवदत्तः कर्ता भवन् अङ्गीकाररूपे प्रतिश्रवे प्रयोजको भवति। 'होत्रेऽनुगृणाति, प्रतिगृणाति' इत्यत्रापि अध्वर्युर्होतारं शंसने प्रोत्साहयति इति होतुः कर्मसंज्ञाप्रसङ्गे "अनुप्रतिगृणश्च" (१।४।४१) इति सम्प्रदानता। 'शताय परिक्रीतोऽनुब्रूहि' इत्यत्र नियतकालं भृत्यास्वीकाररूपे परिक्रयणे साधकतमस्य शतस्य सम्प्रदानता "परिक्रयणे सम्प्रदानमन्यतरस्याम्" (पा० १।४।४४) इति सूत्रेण विकल्पेनोक्ता। अत्र च यद्यपि कारिकायां साधकतमत्वेन करणत्वप्रसङ्गे सम्प्रदानमित्येतद् एतत्संग्रहाय हेतुत्वादिवन्नोक्तमिति न्यूनता, तथापि तत्र=कारिकायाम् रुच्यर्थादिष्विति आदिशब्दोपात्तस्य सुज्ञानत्वादेतत्संग्रह इति करणसंज्ञाप्रसङ्गः कारिकायां नोक्तः। हेतुत्वादिविशेषविवक्षाया अभावे तु अत्र=पूर्वोक्तादाहरणेषु सर्वत्रैव क्रियानिमित्तत्वमात्राश्रयेण शेषत्वे प्राप्ते सम्प्रदानतोदाहार्या।

न च तदापि तत्र नास्ति शेषत्वप्राप्तिः, "अकथितञ्च" (पा० १।४।५१) इत्यनेन कर्मत्वस्य तत्र प्राप्तेरिति वाच्यम्, दुह्यादिपरिगणनया अकथितकर्मत्वस्यात्राभावात्।

ननु च पूर्वमपि सम्प्रदानं शास्त्रेणैवोक्तम् "कर्मणा यमभिप्रैति" (१।४।३२) इति, तत्कथमत्र शास्त्रेणेति विशे(शि)ष्य भणितिः ? उच्यते—अन्वर्थत्वात् सम्प्रदानशब्दस्य लौकिक एव सम्प्रदानार्थः पूर्वमुक्तः, इह तु रुच्यार्थादिविषये तदर्थाभावाच्छब्दसंस्कारमात्रप्रतिपादनाय शास्त्रारम्भसामर्थ्यात् सम्प्रदानत्वमुच्यत इति शास्त्रीयलौकिकभेदेन द्विविधं सम्प्रदानं व्याख्यातम् ।। १३० ।।

इह 'श्राद्धाय निगल्हते, युद्धाय संनह्यते, पत्ये शेते' इत्यकर्मकधातुविषये कर्मणोऽभावात् तेनाभिप्रेयमाणस्य सम्प्रदानता सिद्ध्यतीति "क्रियाग्रहणमपि कर्तव्यम्" इति वार्त्तिकेऽभिहितम् । क्रिययाभिप्रेयमाणस्यात्र स्यात् सम्प्रदानसंज्ञा । एतद्भाष्ये प्रत्याख्यातम् ।

क्रियापि क्रिययाप्यमानत्वात् कृत्रिमं कर्म । 'श्राद्धाय निगल्हते' इत्यादौ च कया क्रियया क्रियाप्यमानेति सन्दर्शनादिक्रिययेत्युक्तम् ।

तत्र संदर्शनादिक्रियाया अभेदेन धातुनाभिधानात् कथं भेदाश्रयः क्रियाकारकभावो युज्यत इति समर्थयितुमाह—

---

ननु च पूर्वमपि सम्प्रदानं "कर्मणा यमभिप्रैति स सम्प्रदानम्"(पा० १।४।३२) इति शास्त्रेणैवोक्तमिति । तत् कथमत्र=कारिकायां 'शास्त्रेण' इति विशिष्य भणितिः. उच्यते–'सम्यक् प्रदीयतेऽस्मै इति' व्युत्पत्त्या अन्वर्थत्वात् सम्प्रदानशब्दस्य लौकिक एव सम्प्रदानपदार्थः पूर्वमुक्तः, इह तु रुच्यर्थादिविषये सम्प्रदानशब्दार्थाभावात् "रुच्यर्थानां प्रीयमाणः" (पा० १।४।३३) इत्यादिशास्त्रारम्भसामर्थ्यात् शब्दसंस्कारमात्रप्रतिपादनाय सम्प्रदानत्वमुच्यत इति शास्त्रीयलौकिकभेदेन द्विविधं सम्प्रदानं व्याख्यातम्, अनया पूर्वया च कारिकयेति ।। १३० ।।

'श्राद्धाय निगल्हते'=श्राद्धं संपश्यन् निगर्हते निन्दति, अर्थात् श्राद्धमित्यर्थः । श्राद्धरूपस्य गर्हाकर्मणोऽत्र सन्निहितत्वेन प्रसिद्ध्या गल्हधातोरकर्मकत्वम् । युद्धाय संनह्यते=युद्ध प्रार्थ्यमानः संनह्यत इत्यर्थः । पत्ये शेते=पतिं शय्यायामागमिष्यन्तमध्यवस्यन्ती शेते तत्र इत्यर्थः ।

अत्र स्थलत्रयेऽपि अकर्मकधातुविषये कर्मणोऽभावात् कर्मणाऽभिप्रेयमाणस्य विहिता सम्प्रदानता न सिद्ध्यतीति "क्रियाग्रहणमपि कर्तव्यम्" इति वार्त्तिकेऽभिहितम् । तथा च धात्वभिहितक्रिययाऽभिप्रेयमाणस्यात्र श्राद्धादेः सम्प्रदानसंज्ञा स्यात् । एतद् भाष्ये प्रत्याख्यातम् ।

तथा हि—धात्वर्थक्रियाऽपि निगर्हणादिरूपा संदर्शनादिक्रिययाऽऽप्यमानत्वात् कृत्रिमं कर्म । 'श्राद्धाय निगल्हते' इत्यादौ च कया क्रियया क्रियाऽऽप्यमानेति प्रश्ने संदर्शनादिक्रिययेत्युक्तं भाष्ये ।

भेदस्य च विवक्षायां पूर्वां पूर्वां क्रियां प्रति ।
परस्याङ्गस्य कर्मत्वान्न क्रियाग्रहणं कृतम् ॥ १३१ ॥

सन्दर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् क्रियापि कृत्रिमं कर्म। तत्र प्रेक्षापूर्वकारिणः प्रवृत्तावावश्यकेन सन्दर्शनादयः सन्निहिताः प्रतीयन्त इति तेषां प्रधानक्रियाया भेदविवक्षायां पूर्वपूर्वक्रियापेक्षयोत्तरोत्तरस्याङ्गस्य प्रधानक्रियार्थस्य कर्मत्वमविरुद्धं पूर्वपूर्वक्रिययाप्यमानत्वादिति क्रियाया अपि कर्मतायां तयाभिसम्बध्यमानस्य सूत्रेणैव सम्प्रदानता सिद्धेति क्रियाग्रहणं प्रत्याख्यातम्। ददातिकर्मणेत्ययं विशेषो नाङ्गीक्रियते। तदत्र धातुना प्रधानक्रियैवोच्यते। सामर्थ्यप्राप्तास्तु संदर्शनादयस्ततो भिन्ना इति क्रियाकारकभावोपपत्तिः।

तद्यथा—'सार्थाद्धीयते' इति प्रतीयमानं सार्थस्य स्वातन्त्र्यं कर्मत्वनिमित्तम्, यदि वा तादर्थ्यात् प्रधानक्रियया प्राप्ताभेदानां धातुभिरभिधानेऽपि न सर्वथैव

---

तत्र संदर्शनादिक्रियाया धात्वर्थनिगर्हणादिना सह निगर्हणत्वादिना रूपेणाभेदेन धातुनाऽभिधानात् कथं भेदाश्रयः क्रियाकारकभावो युज्यत इति समर्थयितुमाह—भेदस्य चेति।

अस्यार्थः—संदर्शनादीनां प्रधानक्रियासन्निधाने प्रतीयमानानां प्रधानक्रियातो भेदस्य च विवक्षायां सत्यां पूर्वां पूर्वां क्रियां प्रति परस्य परस्य प्रधानक्रियार्थत्वेन तदङ्गस्य कर्मत्वात् सम्प्रदानसंज्ञाविधिसूत्रे कर्मग्रहणवत् क्रियाग्रहणमपि न कृतम्, कर्मग्रहणेनैव कृतार्थत्वात्। पूर्वपूर्वक्रिययाऽऽप्यमानत्वात् परस्याः परस्याः क्रियायाः कर्मत्वादिति।

अयं भावः—संदर्शनप्रार्थनाध्यवसायैराप्यमानत्वाद् निगर्हणादिरूपा क्रियाऽपि कृत्रिमं कर्म। तत्र प्रेक्षापूर्वकारिणः प्रवृत्ताववश्यमेव संदर्शनादयः सन्निहिता धातुवाच्यास्तदवाच्या वा सन्तः प्रतीयन्त इति तेषां धातुवाच्यप्रधानक्रियातो भेदविवक्षायां पूर्वपूर्वक्रियां प्रति उत्तरोत्तरस्य प्रधानक्रियार्थत्वेन तदङ्गस्य कर्मत्वमविरुद्धं पूर्वपूर्वक्रिययाऽऽप्यमानत्वादित्येवं क्रियाया अपि कर्मत्वे तयाऽभिसम्बध्यमानस्य संज्ञाविधिसूत्रेणैव सम्प्रदानता सिद्धेति क्रियाग्रहणं वार्त्तिककृतोक्तं भाष्ये प्रत्याख्यातम्। ददातिकर्मणाऽभिसम्बध्यमानस्य सम्प्रदानसंज्ञेत्ययं विशेषः सूत्रे कृतो नाङ्गीक्रियत इति प्रत्याख्यातुराशयः। तस्मादत्र धातुना प्रधानक्रियैवोच्यते, सामर्थ्यप्राप्तास्तु=धातुवाच्यया प्रधानक्रिययाऽऽक्षिप्तास्तु संदर्शनादयस्तत =प्रधानक्रियातो भिन्ना इति क्रियाकारकभावोपपत्तिः।

तद् यथा—'सार्थाद्धीयते' इत्यत्र प्रतीयमानं सार्थस्य स्वातन्त्र्यं पथिकस्य कर्मत्वे निमित्तम्। एवं प्रागुक्तरीत्या प्रतीयमानाः संदर्शनादयः प्रधानक्रियायाः कर्मत्वे निमित्तम्। यदि वा संदर्शनादीनां तादर्थ्यात्=प्रधानक्रियार्थत्वात् प्रधानक्रियया

भेदतिरस्कार इत्यभेदाख्यकार्यानुमितभेदप्रतीत्या कर्मतोपपत्तिः ॥ १३१ ॥

यद्येवमोदनं पचतीत्यादावपि क्रियाकर्मणाभिप्रेयमाणस्य सम्प्रदानसंज्ञा स्याद् ओदनादेः, कर्मसंज्ञा तु क्रियाकर्मसु सावकाशेत्यत आह—

**क्रियाणां समुदाये तु यदैकत्वं विवक्षितम् ।**
**तदा कर्म क्रियायोगात् स्वाख्ययैवोपचर्यते ॥ १३२ ॥**

सन्दर्शनादिक्रियासमुदायः परस्परमङ्गाङ्गिभावमनापन्नः समकक्ष्यतया समुच्चीयमानरूपो यदैकफलत्वादभेदेन धातुनाङ्गीक्रियते, तदा भेदनिबन्धनस्य क्रियाकारकभावस्याप्रतीतेरप्रतिलब्धकर्मभावया क्रियया सम्बध्यमानमोदनादिकर्म स्वाख्ययैव क्रियेप्सिततमत्वनिमित्तभूतया कर्मसंज्ञयैव व्यवह्रियते, न तु सम्प्रदान-संज्ञयेत्यर्थः । समुच्चयेनाभिधानादङ्गाङ्गिभावाभावात् क्रियायाः कर्मरूपता नास्त्यत्र पक्षे ॥ १३२ ॥

---

निगर्हणादिरूपया सह निगर्हणत्वादिरूपेण प्राप्ताभेदानां धातुभिरभिधानेऽपि न सर्वथैव भेदतिरस्कारः, विशेषधर्मपुरस्कारे तेन रूपेण भेदसत्त्वादित्यभेदाख्यकार्यानु-मितभेदप्रतीत्या प्रधानक्रियायाः संदर्शनादिरूपपूर्वक्रियां प्रति कर्मत्वोपपत्तिरिति तयाऽभिप्रेयमाणानां श्राद्धादीनां सम्प्रदानत्वोपपत्तिरिति ॥ १३१ ॥

यद्येवम्—'ओदनं पचति' इत्यादौ सकर्मकधातावपि क्रियारूपेण कर्मणाऽभि-प्रेयमाणस्य ओदनादेर्विनिगमनाविरहात् सम्प्रदानसंज्ञा स्यात्, कर्मसंज्ञा तु क्रिया-रूपेषु कर्मसु सावकाशा, द्वितीयाचतुर्थ्योस्तु शास्त्रारम्भसामर्थ्याद् विकल्पोऽस्तु, इत्याशङ्क्याह—**क्रियाणां समुदाये** इति ।

अस्यार्थः—यदा तु धात्वर्थे क्रियाणां समुदाये एकत्वम्, पाकत्वादिरूपेण अधिश्रयणाद्यधःश्रयणान्तानां व्यापाराणामभेदो विवक्षितः, तदा कर्म पच्यादिक्रिया-योगात् स्वाख्ययैव=क्रियेप्सिततमत्वरूपं निमित्तं प्राप्तया कर्मसंज्ञयैव उपचर्यते= व्यवह्रियते ।

अत्र पक्षे धात्वर्थक्रियाणां युगपदभेदेनाभिधानादङ्गाङ्गिभावस्य भेदनिमित्त-कस्याभावात् क्रियायाः कर्मरूपता नास्तीति ।

अयं भावः—सन्दर्शनादिक्रियासमुदायः परस्परमङ्गाङ्गिभावमनापन्नः सम-कक्षतया=समप्राधान्येन समुच्चीयमानरूपः=साहित्यमापद्यमानरूपः, यदैकफल-वत्त्वादभेदेन=सामान्येन रूपेण धातुना=धातुवाच्यत्वेनाङ्गीक्रियते, तदा भेद-प्रयुक्तस्य क्रियाकारकभावस्याप्रतीतेरप्राप्तकर्मभावया क्रियया सम्बध्यमानमोदनादि-कर्म स्वाख्ययैव=स्वव्यपदेशेनैव क्रियेप्सिततमत्वनिमित्तभूतया=क्रिययाऽऽ-प्तुमिष्टतमत्वरूपं स्वनिमित्तं प्राप्तया, कर्मसंज्ञयैव व्यवह्रियते, न तु सम्प्रदान-

भेदविवक्षायां तर्हि सम्प्रदानतात्र स्यादित्याशङ्क्याह—

**भेदाभेदविवक्षा च स्वभावेन व्यवस्थिता।**
**तस्माद् गत्यर्थकर्मत्वे व्यभिचारो न दृश्यते ॥ १३३ ॥**

लौकिकप्रयोगः प्रसिद्ध इति तमुद्दिश्यान्वाख्याने यथाप्रयोगमुपायपरिकल्पनया नियतभेदाभेदविवक्षेत्यर्थः। एवं च गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ अपि उभयविवक्षाश्रयेण सिद्धे इति नार्थस्तदारम्भेण। अन्यत्राभेदविवक्षानियमाद् व्यभिचारोऽतिप्रसङ्गो नास्ति ॥ १३३ ॥

एतदेवागमेन द्रढयति—

**विकल्पेनैव सर्वत्र संज्ञे स्यातामुभे यदि।**
**आरम्भेण न योगस्य प्रत्याख्यानं समं भवेत् ॥ १३४ ॥**

---

संज्ञया, क्रियासमुदायस्याभेदेनाभिधानात्। भेदनिमित्तकस्याङ्गाङ्गिभावस्याभावादत्र पक्षे क्रियायाः कर्मरूपता नास्तीति ॥ १३२ ॥

एवं तर्हि 'ओदनं पचति' इत्यादौ क्रियासमुदायस्योद्भूतावयवभेदविवक्षायामोदनादेः क्रियारूपेण कर्मणा सम्बध्यमानस्य सम्प्रदानता स्यादित्याशङ्क्याह—भेदाभेदविवक्षा चेति।

अस्यार्थः · तस्मात् =प्रागुक्तरीत्या प्रागुक्तकारिकार्थस्य पचत्यादिधातुत्रिषये व्यवस्थितत्वात्, गत्यर्थकर्मत्वे=गत्यर्थकधातुकर्मविषये, भेदाभेदविवक्षा च. भेदविवक्षा, अभेदविवक्षा चेत्युभयम्, स्वभावेन=धात्वर्थस्वभावकृतनियमेन व्यवस्थिता। गत्यर्थधात्वतिरिक्तविषये तु अभेदविवक्षानियमाद् व्यभिचार =अतिप्रसङ्गो न दृश्यते। सम्प्रदानसंज्ञापत्तिरूपोऽतिप्रसङ्गो न भवतीत्यर्थ इति।

अयं भावः—प्रसिद्धं लौकिकं प्रयोगमुद्दिश्य शास्त्रेण साधुत्वमन्वाख्यायत इति, यथा प्रयोगमुपायपरिकल्पनया पचत्यादिधातुविषये क्रियासमुदायेऽभेदविवक्षा, निगल्हादिधातुविषये तु भेदविवक्षा, गत्यर्थकधातुविषये तु भेदाभेदविवक्षा नियतेत्यर्थः।

एवञ्च गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ अपि उभयविवक्षाश्रयेण सिद्धे 'ग्रामं ग्रामाय वा गच्छति' इति नार्थस्तत्सूत्रारम्भेण।

अन्यत्र =पचत्यादिसकर्मकधातुविषये, क्रियासमुदायस्याभेदविवक्षानियमाद् व्यभिचारोऽतिप्रसङ्गः कर्मणः सम्प्रदानसंज्ञापत्तिरूपो नास्तीति ॥ १३३ ॥

पूर्वकारिकापूर्वार्धोक्तार्थमेव गत्यर्थकर्मणीत्यादिसूत्रोक्तंतत्सूत्रप्रत्याख्यानभाष्यरूपागममनुसृत्य द्रढयति—विकल्पेनैवेति।

भेदाभेदविवक्षानियमानाश्रयणे सर्वत्र कर्मसम्प्रदानसंज्ञयोर्भावान्नियमार्थं गत्यर्थकर्मणीत्यादिसूत्रं भाष्यकारो न प्रत्याचक्षीत, प्रत्याख्याने ह्यतिप्रसङ्गः स्यात्। यदा तु विवक्षानियमश्चेतसि भाष्यकारस्य स्फुरति, तदारम्भप्रत्याख्यानयोरविशेषं मन्यमानो युक्तं यत् प्रत्याचक्षीत। तदेवं गत्यर्थविषये विवक्षाद्वयम्। 'श्राद्धाय निगल्हते' इत्येवमादौ तु भेदविवक्षैव। 'पचत्योदनम्' इत्यादावभेदविवक्षैव। चेष्टायामनध्वनीत्येतत्प्रत्युदाहरणयोरपि चाभेदविवक्षैव, मनसा पाटलिपुत्रं गचछत्यध्वानं गचछतीति। सूत्रारम्भे च 'स्त्रियं गचछति, अजां नयति' इत्यतिप्रसङ्गे "सिद्धं त्वसम्प्राप्तवचनात्" वा० २।३।१२ ) इत्युक्तम्।

---

अस्यार्थः—भेदाभेदविवक्षानियमानाश्रयणेन सर्वत्र = सकर्मकाकर्मकसर्वधातुविषये, विकल्पेनैव = अव्यवस्थितविभाषयैव, उभे संज्ञे = कर्मसम्प्रदानसंज्ञे यदि स्याताम्, तदा गत्यर्थकर्मणीत्यादियोगस्य प्रत्याख्यानं तद्योगारम्भेण समं तुल्यं न भवेत्। एतत्सूत्रारम्भे हि नियमेन गत्यर्थधातुविषय एव क्रियासमुदाये भेदाभेदविवक्षया कर्मसम्प्रदानसंज्ञे, एतत्सूत्रप्रत्याख्याने तु सर्वत्रैव भेदाभेदविवक्षया ते इति विशेषसम्भवात्।

एवञ्च सर्वत्रैव भेदाभेदविवक्षा च स्वभावेन व्यवस्थिता इति मन्तव्यमिति। गत्यर्थकर्मणीति सूत्रं न कर्तव्यमित्येतत्सूत्रप्रत्याख्यातृभाष्याशयः।

अयं भावः—क्रियासमुदायस्य भेदाभेदविवक्षयोर्लौकिकप्रयोगाधीनत्वप्रयुक्तनियमानाश्रयणे सकर्मकाकर्मकधातुविषये गत्यर्थकेषु च धातुषु सर्वत्र कर्मसंप्रदानसंज्ञयोरापत्त्या नियमार्थं गत्यर्थकर्मणीत्यादिसूत्रं भाष्यकारो न प्रत्याचक्षीत, यतः प्रत्याख्याने गत्यर्थकधातुतोऽन्यत्रापि कर्मसंप्रदनासंज्ञयोरापत्तिरूपोऽतिप्रसङ्गः स्यात्।

यदा तु तयोर्विवक्षानियमो भाष्यकारस्य चेतसि स्फुरति, तदाऽतिप्रसङ्गानापत्त्या सूत्रारम्भप्रत्याख्यानयोः फलाविशेषं मन्यमानो भाष्यकारो यदेतत्सूत्रं प्रत्याचक्षीत, तद् युक्तम्। तदेवं गत्यर्थकधातुविषये भेदाभेदविवक्षाद्वयम्। तेन 'ग्रामाय गच्छति, ग्रामं गच्छति' इत्यत्र कर्मसम्प्रदानरूपसंज्ञाद्वयसिद्धिः। 'श्राद्धाय निगल्हते, युद्धाय संनह्यते, पत्ये शेते' इत्येवमादावकर्मकधातुविषये तु भेदविवक्षैव। तेनैषु नियतैव सम्प्रदानसंज्ञा पचत्योदनमित्यादौ गत्यर्थातिरिक्तसकर्मकधातुविषये तु क्रियासमुदाये अभेदविवक्षैव। तेनात्र नियता कर्मसंज्ञैव। चेष्टायामनध्वनि इत्येतत्प्रत्युदाहरणयोरपि चाभेदविवक्षैव। तेन 'मनसा पाटलिपुत्रं गच्छति, अध्वानं गच्छति' इत्यत्राद्ये चेष्टाया अभावात्, द्वितीये तु अध्वन एव गतिकर्मत्वादभेदविवक्षया नियता कर्मसंज्ञैव, न सम्प्रदानसंज्ञेति। गत्यर्थसूत्रारम्भे च 'स्त्रियं गच्छति, अजां नयति' इत्यत्र सम्प्रदानसंज्ञाप्रयुक्तचतुर्थ्यापत्तिरूपातिप्रसङ्गे प्राप्ते 'सिद्धं तु असम्प्राप्तवचनात्' इत्युक्तं वार्त्तिककृता।

असम्प्राप्तं गमनेनासम्बद्धं यत्कर्म तत्र द्वितीयाचतुर्थ्यौ वक्तव्ये । अजास्त्रियौ तु सम्प्राप्ते कर्मणी इत्यतिप्रसङ्गो न भवति ।

एवं च विशेषसूत्रारम्भे 'अध्वनश्चानपवादः" ( वा० २।३।१२ ) इत्युक्तम् । अनध्वनीति प्रतिषेधो न वक्तव्यः, अध्वा हि सम्प्राप्तं कर्मेह प्रतिषेद्धुमभिप्रेतः । तस्य चासम्प्राप्तवचनादेव व्युदासः सिद्धः ।

अत एव भाष्येऽभिहितम्–"आस्थितप्रतिषेधो वक्तव्यः" (म०भा० २।३।१२ इति । आस्थितोऽध्वात्र प्रतिषेधविषयो विज्ञेयः ॥ १३४ ॥

तत्र किं रूपोऽसावित्याचष्टे—

त्यागरूपं प्रहातव्ये प्राप्ये संसर्गदर्शनम् ।
आस्थितं कर्म यत् तत्र द्वैरूप्यं भजते क्रिया ॥ १३५ ॥

"अध्वन्यर्थग्रहणम्" (वा० २।३।१२) इति वचनादध्वपर्यायेभ्योऽपि प्रतिषेधः,

---

असम्प्राप्तं गमनेनासम्बद्धं यत् कर्म, तत्र द्वितीयाचतुर्थ्यौ वक्तव्ये 'ग्रामाय गच्छति, ग्रामं गच्छति' इति । अत्र ग्रामो न गमनकाले गमनक्रियया सम्बद्ध इति । अत्र असम्प्राप्तवचनाद् द्वितीयाचतुर्थ्यौ भवतः । अजास्त्रियौ तु सम्प्राप्ते=गमनकाल एव गमनक्रियया सम्बद्धे कर्मणी इत्यतिप्रसङ्गः=चतुर्थ्यापत्तिरूपोऽतिप्रसङ्गो न भवति ।

एवञ्च कृत्वा विशेषसूत्रारम्भपक्षे=गत्यर्थकर्मणीत्यादिसूत्रारम्भपक्षे 'अध्वनश्चानपवादः' इत्युक्तं भाष्ये । गत्यर्थकर्मणीति सूत्रे असम्प्राप्तवचने कृते 'अनध्वनीति' प्रतिषेधो न वक्तव्य इत्यर्थः । अध्वा हि गमनेन सम्प्राप्तं कर्मेह अनध्वनीति प्रतिषेद्धुमभिप्रेतः । तस्य चेहासम्प्राप्तवचनादेव निषेधः सिद्धः ।

अत एव भाष्येऽभिहितम्—'आस्थितप्रतिषेधो वक्तव्यः' इति । गन्त्राऽऽस्थितः=आक्रान्तः, अध्वाऽत्र अनध्वनि इति प्रतिषेधविषयो विज्ञेयः । तेन पन्थानं गच्छति' इत्यत्र चतुर्थी न भवति । 'उत्पथेन पथे गच्छति' इत्यत्र अनास्थितमार्गे तु चतुर्थी भवत्येवेति ॥ १३४ ॥

तत्र किं रूपोऽसावास्थितोऽध्वेति प्रश्ने सति आचष्टे—त्यागरूपमिति ।

अस्यार्थः—यदध्वरूपं कर्मास्थितं तत्र गमनक्रिया द्वैरूप्यं भजते—रूपद्वयं श्रयति । तथा हि—प्रहातव्येऽध्वभागे त्यागरूपं भजते, प्राप्येऽध्वभागे च संसर्गदर्शनं दृश्यमानं संसर्गं भजते ।

तथा च त्यागसंसर्गरूपाविच्छिन्नप्रवाहया गमिक्रिययाऽऽक्रान्तोऽध्वा क्रियाविषयभावमात्रमादाय विधीयमानायाः कर्मसंज्ञाया गोचरः, न तु कर्मभूतया

पन्थानं गच्छतीत्यादौ। आस्थित आक्रान्तो गमिक्रियया अध्वा उदाहरणम्। प्रवृत्तगमनो हि मार्ग आस्थित इत्युच्यते।

अत्र येयं गमिक्रिया, सा द्विरूपा भवति, आक्रान्तस्य पथो योऽतिक्रमणीयो भागः, तत्र त्यागरूपं हीनरूपं क्रियायाः। प्राप्ये त्वासादनीये भागे संसर्गरूपं प्राप्तिरूपमिति त्यागोपादानलक्षणावयवभेदात् क्रिया द्विविधा। तथा च त्यागोपादानरूपाविच्छिन्नप्रवाहगमिक्रियाक्रान्तोऽध्वा क्रियाविषयभावमात्रविधीयमानकर्मसंज्ञागोचरः, न तु क्रियया कर्मभूतयाऽभिसम्बध्यते, क्रियाभेदाभावादिति सम्प्रदानसंज्ञाऽभावः। ग्रामादेरेव तदुपायप्राप्यस्यानध्वरूपस्य तद्योगः।

यस्त्वनास्थितोऽध्वा तत्र द्वे एव विभक्ती भवतः।

कथं चानास्थितोऽध्वा भवति? यदोत्पथेन प्राप्नोति पन्थानम्, पथे

---

क्रिययाऽभिसम्बध्यते, क्रियाभेदाभावादिति तस्य सम्प्रदानसंज्ञाया अभावः। ग्रामादेस्तु अनध्वरूपस्य क्रियासमुदाये भेदाभेदविवक्षया प्रागुक्तरीत्या कर्मत्वसम्प्रदानत्वे गत्यर्थकर्मणीत्यादिसूत्रारम्भे तत्प्रत्याख्यानपक्षे चेति।

अयं भावः—'अध्वन्यर्थग्रहम्' इति भाष्यवचनात् 'पन्थानं गच्छति' इत्यादावध्वपर्यायेभ्योऽपि प्रतिषेधः। आस्थितो गमिक्रिययाऽऽक्रान्तोऽध्वा "आस्थितप्रतिषेधो वक्तव्यः" इति वार्त्तिकस्योदाहरणम्। प्रवृत्तगमनगोचरो हि मार्ग आस्थित इत्युच्यते।

अत्र=आस्थिते मार्गे येयं गमिक्रिया सा द्विरूपा भवति। स्वेन आक्रान्तस्य पथो योऽतिक्रमणीयो भागः, तत्र त्यागरूपं हीनरूपं क्रियायाः। प्राप्ये त्वासादनीये भागे संसर्गरूपं प्राप्तिरूपमिति त्यागप्राप्तिरूपस्वावयवभेदात् क्रिया द्विविधा। तथा च त्यागग्रहणरूपाविच्छिन्नप्रवाहवत्या गमिक्रिययाऽऽक्रान्तोऽध्वा क्रियाविषयभावमात्रेण विधीयमानायाः कर्मसंज्ञाया गोचरः, न तु परया क्रियया पूर्वक्रियां प्रति कर्मभूतयाऽभिसम्बध्यते, अवयवप्रवाहाविच्छेदेन क्रियाभेदाभावादिति सम्प्रदानसंज्ञाया अभावः। ग्रामादेरेव तदुपायप्राप्यस्य=गमिक्रियारूपग्रामादिप्राप्तिसाधनप्राप्यस्य, अध्वभिन्नस्य तद्योगः=पूर्वक्रियां प्रति कर्मीभूतया परया गमिक्रियाऽवयवक्रियया योग इति ग्रामं ग्रामाय गच्छतीति तस्य कर्मसम्प्रदानसंज्ञे उभे भवतः।

एवमास्थितेऽध्वनि पन्थानं गच्छतीति द्वितीयैव। यस्त्वनास्थितोऽध्वा तत्र द्वे अपि द्वितीयाचतुर्थीरूपे विभक्ती भवतः।

कथं चानास्थितोऽध्वा भवति, यदोत्पथेन पन्थानं प्राप्नोति, तदा 'पथे गच्छति' 'पन्थानं गच्छति इति रूपद्वयमपि अध्वन्यपि अनास्थिते भवत्येव। तदेवं

गच्छति, पन्थानं गच्छतीति, तदेवं सूत्रारम्भे विशेषो वक्तव्यः, प्रत्याख्याने तु विवक्षानियमेनैवेष्टं सिद्धम् ।। १३५ ।।

।। इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
साधनसमुद्देशे सम्प्रदानाधिकारः ।।

---

गत्यर्थकर्मणीत्यादिसूत्रारम्भेऽध्वन्यनास्थिततत्वरूपो विशेषो वक्तव्यः। तत्सूत्रप्रत्याख्याने तु लोकप्रयोगमनुसृत्य क्रियासमुदाये भेदाभेदविवक्षानियमेनैवेष्टसिद्धिरिति। तत्प्रकारस्तु प्रागुक्त इति नेह स प्रतन्यत इति ।। १३५ ।।

।। इति श्रीब्रह्मीभूतकाशीनाथतनयरघुनाथशर्म-
कृतायामम्बाकर्त्र्यां साधनसमुद्देशे
सम्प्रदानाधिकारः ।।

# अथापादानाधिकारः

इदानीं विभक्तिविधानक्रमेण तदर्थविचारे चतुर्थ्यर्थे निर्णीते प्राप्तावसरं पञ्चम्यर्थमपादानं विचारयितुमाह—

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा ।
अपेक्षितक्रियं चेति त्रिधापादानमुच्यते ।। १३६ ।।

अपाये साध्ये यद् ध्रुवमेकरूपमनाविष्टापायलक्षणक्रियमन्यस्मिन्नपायेनाविष्टेऽपि तत्साधनमपादानमित्यवधिविशेषापेक्षत्वात् संरब्धोदासीनोभयकर्तृकोऽ-

विभक्तिविधानक्रमेण विभक्त्यर्थविचारे प्रवृत्ते चतुर्थ्यर्थे निर्णीते इदानीं प्राप्तावसरं पञ्चम्यर्थमपादानं विचारयितुमाह – निर्दिष्टविषयमिति ।

अस्यार्थः—अपाये साध्ये यद् ध्रुवमन्यस्मिन् अपायेनाविष्टेऽपि अपायानाविष्टमेकरूपमपास्य साधनं तत्रावधिभूतं यत् तदपादानम्, इत्यपादानलक्षणघटकस्यापायस्यावधिविशेषापेक्षत्वात् चलाचलोभयकर्तृकोऽपायोऽपादानस्य विषयः = प्रयोगभूमिः स निर्दिष्टः = स्वशब्देनोपात्तो यस्य तं निर्दिष्टविषयम् एकमपादानम् ।

उदाहरणम्—'ग्रामादागच्छति चैत्रः' । अत्रापायस्य विभागरूपस्य द्विष्ठत्वाद् ग्रामचैत्रावुभावपि अपाये कर्तारौ । तत्र ग्रामोऽचलः, चैत्रस्तु चलः । अत्रागमनं स्वरूपेण जन्यजनकयोरभेदमादाय वाऽपायः । स चात्र साक्षादेव धातुना निर्दिष्ट इत्यतोऽत्र निर्दिष्टविषयमपादानम् । तथा किञ्चिदुपात्तविषयमपादानम् । उपात्तो गुणभावेन प्रधानभावेन वा धात्वर्थेन स्वान्तर्गृहीतोऽपायलक्षणो विषयो येन तदुपात्तविषयमित्यर्थः ।

अस्योदाहरणम्—'बलाहकाद् विद्योतते' इति । अत्र बलाहकान्निःसृत्य विद्योतत इति । विद्योतमानं बलाहकान्निःसरतीति वार्थः । अत्र निःसरणाङ्गे विद्योतने, विद्योतनाङ्गे निःसरणे वा विद्युतिर्वर्तते ।

अत्र निःसरणरूपोऽपायो धात्वर्थेन विद्योतनेन गुणतया प्राधान्येन वा उपात्त इत्येवमुपात्तविषयं द्वितीयमपादानम् । अपेक्षिता क्रियाऽपायरूपा यस्य तदपेक्षितक्रियं तृतीयमपादानम् । उदाहरणं यथा—'माथुराः पाटलिपुत्रकेभ्यः आढ्यतराः' इति । अत्र हि प्रकर्षार्थकतरप्प्रत्ययसामर्थ्यादपायलक्षणाविभागहेतुरपकर्षक्रियाऽनुमीयत इत्यपेक्षिताऽसावत्र क्रिया ।

उपात्तविषये तु धात्वर्थान्तर्गत एवापायः, न त्वनुमीयमानतयाऽपेक्षित इति विशेष इति ।

पायोऽपादानस्य विषयः, स निर्दिष्टः स्वशब्देनोपात्तो यस्य तदेकमपादानम्। तद्यथा 'ग्रामादागच्छति' 'पर्वतादवरोहति' इत्यादि।

उपात्तः क्रियान्तरस्य गुणभावेन प्रधानभावेन वा यत्रापायलक्षणो विषयस्तदन्यदुपात्तविषयमपादानम्। तद्यथा 'बलाहकाद् विद्योतते', 'कुसूलात् पचति', 'ब्राह्मणाच्छंसी' इति। अत्र हि निःसरणाङ्गे विद्योतने विद्योतनाङ्गे वा निःसरणे विद्युतिर्वर्तत इति निःसरणलक्षणोऽपायो विद्योतनस्य गुणप्रधानभावेनोपात्तः। बलाहकान्निःसृत्य ज्योतिर्विद्योतते, बलाहकाद्वा विद्योतमानं निःसरतीत्यर्थः, कुसूलादादाय पचतीत्यादानाङ्गे पाके पचिः। ब्राह्मणाद् गृहीत्वा शंसतीति ग्रहणाङ्गे शंसने शंसिर्वर्तते।

'पञ्चमीप्रकरणे ब्राह्मणाच्छंसिन उपसंख्यानम्' (वा० ६।३।२) इत्यलुक्। तत्र वार्तिककारस्य द्वितीयार्थे पञ्चम्येषाभिप्रेता। यदाह 'अन्यार्थे च'(वा० ६।३।२)

---

अयं भावः—अपाये साध्ये यद् ध्रुवमेकरूपमन्यस्मिन्नपाययुक्तेऽपि यदनाश्रितापायमपायसाधनं तदपादानमित्यवधिविशेषापेक्षत्वादपायस्य संरब्धोदासीनोभयकर्तृकः=चलाचलोभयकर्तृकोऽपायोऽपादानस्य विषयः, स निर्दिष्टः स्वशब्देनोपात्तः=उच्चारितस्वशब्दलभ्यो यस्य तदेकमपादानम्।

तद् यथा—'ग्रामादागच्छति', 'पर्वतादवरोहति' इत्यादि। अत्रागमनमवरोहणञ्च स्वरूपेण जनकतया वाऽपायरूपं स्वशब्देन निर्दिष्टम्।

क्रियान्तरस्य धात्वर्थस्य गुणभावेन प्रधानभावेन वा यत्रोपात्तोऽपायलक्षणोऽपादानस्य विषयस्तदन्यदपादानम्। तद् यथा –'बलाहकाद् विद्योतते, कुसूलात् पचति, ब्राह्मणाच्छंसी' इति।

अत्र हि प्रथमे उदाहरणे निःसरणाङ्गे विद्योतने, विद्योतनाङ्गे निःसरणे वा विद्युतिः=विपूर्वको द्युत् धातुः वर्तत इति निःसरणलक्षणोऽपायो विद्योतनस्य गुणभावेन प्रधानभावेन वा धातुनोपात्तः। बलाहकान्निःसृत्य ज्योतिर्विद्योतते, विद्योतमानं वा बलाहकान्निःसरतीत्यर्थः।

द्वितीयोदाहरणे तु आदानाङ्गे पाके पचिर्वर्तते। कुसूलादादाय पचतीत्यर्थः।

तृतीयोदाहरणे तु ग्रहणाङ्गे शंसने शंसिर्वर्त्तते। ब्राह्मणग्रन्थाद् गृहीत्वा शंसतीत्यर्थः।

द्वितीयोदाहरणे आदानम्, तृतीयोदाहरणे तु ज्ञानरूपं ग्रहणमपायरूपं स्वरूपेण जनकतया वा। पञ्चमीप्रकरणे 'ब्राह्मणाच्छंसिन उपसंख्यानम्' इति वार्तिकादत्र पञ्चम्या अलुक्। अत्र वार्तिककारस्य द्वितीयार्थे पञ्चम्येषाऽभिप्रेता। यदाह वार्तिककारः—'अन्यार्थे च' इति। द्वितीयार्थेऽपि पञ्चमी वक्तव्या इत्यर्थः। तथा च

इति। ब्राह्मणानि ग्रन्थविशेषरूपाणि यः शंसति स कथ्यते ब्राह्मणाच्छंसीति वृत्तिविषयेऽत्र द्वितीयार्थे पञ्चमी वक्तव्या।

भाष्यकारस्तु ब्राह्मणाद् गृहीत्वा आहृत्य शंसतीत्याहरणाङ्गे शंसने शंसिर्वर्तत इति ब्रुवन्नुपात्तविषयमेतदुपादानं मन्यते। अपेक्षितक्रियं त्वपादानं यत्र सर्वथैव क्रियाशब्दस्यानुपलब्धेरश्रुता क्रियानुमीयमाना सम्बन्धिषु द्रव्येषु संज्ञाविशेषहेतूनां शक्तिभेदानामाविर्भावे निमित्तत्वाय कल्पते। 'तद्यथा माथुरा पाटलिपुत्रकेभ्य आढ्यतराः' इति।

अत्र प्रकर्षप्रत्ययसामर्थ्याद् विभागहेतुरनुमीयमानापकर्षणक्रियापायलक्षणे-त्यपेक्षितासावत्र क्रिया। उपात्तविषये तु धातुनैवापायः स्वीकृतः। अनेकार्थत्वेन धातूनाम्। 'बलाहको विद्योतते, चैत्रः पचति, दाशतयीः शंसति' इत्यादौ विद्योतनादिमात्रवचनत्वेऽप्यन्यत्र निःसरणाद्यङ्गे वृत्तेरविरोधात्, पञ्चमीश्रुति-सामर्थ्याद् व्यपायोऽत्र प्रतीयते। स च निःसरणाद्यङ्गत्वे धात्वर्थस्योपपद्यते नान्यथेति तदर्थतानिश्चयः॥ १३६॥

---

ब्राह्मणानि ग्रन्थविशेषरूपाणि यः शंसति स कथ्यते ब्राह्मणाच्छंसीति वृत्तिविषयेऽत्र द्वितीयार्थे पञ्चमी वक्तव्या, वृत्तेर्बहिस्तु नात्र द्वितीयार्थे पञ्चमी; किन्तु उपात्त-विषयेऽपादान एव।

भाष्यकारस्तु—ब्राह्मणाद् गृहीत्वा आहृत्य शंसतीत्याहरणाङ्गे शंसने शंसिर्वर्तत इति ब्रुवन् वृत्तिविषयेऽपि उपात्तविषयमेतदपादानं मन्यते। अपेक्षित-क्रियं त्वपादानं तत्र यत्र सर्वथैवापायरूपक्रियावाचकशब्दस्यानुपलब्धेरश्रुताऽपाय-क्रियाऽनुमीयमाना स्वसम्बन्धिषु द्रव्येषु प्रतियोग्यनुयोगिरूपेषु अपादानादिसंज्ञा-विशेषहेतूनां कारकशक्तिविशेषाणामाविर्भावे निमित्तत्वाय कल्पते।

तद् यथा—'माथुराः पाटलिपुत्रकेभ्य आढ्यतराः' इति। अत्र हि प्रकर्षार्थक-तरप्प्रत्ययसामर्थ्यादनुमीयमानाऽपायलक्षणाविभागहेतुरपकर्षणक्रिया इत्यपेक्षिताऽ-सावत्रापायक्रिया। उपात्तविषये तु अपादाने धातुनैवापायो वाच्यतया स्वीकृतः, धातूनामनेकार्थत्वात्।

यद्यपि 'बलाहको विद्योतते, चैत्रः पचति, दाशतयीर् ऋचः शंसति' इत्यादौ विद्योतनादिमात्रवचना एव विद्युत्यादयस्तथापि अन्यत्र 'बलाहकाद् विद्योतते' इत्यादौ निःसरणाद्यङ्गे स्वस्वार्थे वृत्तेरविरोधात्। पञ्चमीश्रुतिसामर्थ्याद्धि अपायोऽत्र प्रतीयते। स च धात्वर्थस्य निःसरणाद्यङ्गकत्वे एवोपपद्यते नान्यथेति, 'बलाहकाद् विद्योतते' इत्यादौ विद्युत्यादीनां निःसरणाद्यङ्गकस्वस्वार्थवाचकतानिश्चय इति॥ १३६॥

कः पुनरयमपायः, किं गतिमात्रम्, नेत्याह—

संयोगिभेदाद्भिन्नात्मा गमिरेव भ्रमिर्यथा ।
ध्रुवावधिरपायोऽपि समवेतस्तथाऽध्रुवे ॥ १३७ ॥

संयोगेन साहचर्याद्विभागेऽप्यवधिः स्वीकृतः । तेन दिग्विशेषावच्छिन्नसंयोगविभागकार्यं यथा गमनमेव भ्रमणमिति व्यपदिश्यते, यथा च गमनग्रहणाद् भ्रमणरेचनस्यन्दनादयो गृह्यन्ते न जात्यन्तराणीति काणादाः, एवं ध्रुवमचलमनाविष्टापायमवधिर्यस्याध्रुवे चले समवेतस्यासौ संरब्धोदासीनसाधनसाध्यस्त्यागस्तदुभयकारकगतविभागलक्षणफलोऽपायाख्यो गतिविशेष एव बोद्धव्यः । गन्तरि समवेतापीयं क्रियाऽवध्यपेक्षणादपायाख्यां लभत इति तत्र ध्रुवस्य क्रियासिद्धौ निमित्तत्वं कारकत्वमुपपद्यत इत्याशयः ।

स चापादानसंज्ञाया विषयभावेनावस्थितोऽपायो धातुनाभिधीयमानोऽनुमीयमानो वा यत्र, तत्र ध्रुवमपादानसंज्ञमपाये साध्य इति तत्र निमित्तत्वं ध्रुवस्य

---

कः पुनरयमपायोऽपादानसंज्ञानिमित्तभूतः, किं गतिमात्रम्, नेत्याह—संयोगिभेदादिति ।

अस्यार्थः—यथा संयोगिभेदात् = दिग्विशेषावच्छिन्नः यो गमनकर्तुः संयोगो विभागो वा तत्प्रतियोग्यनुयोगिभेदात्, यथा गमिरेव = गमनमेव, भ्रमिः = भ्रमणमिति व्यपदिश्यते, तथा ध्रुवावधिः = ध्रुवमचलमवधिर्यस्य स ध्रुवावधिकः, अध्रुवे = चले समवेतो गतिविशेषोऽपि अपाय इति शास्त्रे व्यवह्रियत इति ।

अयं भावः—गमनक्रियया यथा उत्तरदेशसंयोगो जन्यते तथा पूर्वदेशविभागोऽपि । इयांस्तु विशेषः । संयोगो गमेरर्थः, विभागस्तु संयोगानुपपत्त्याऽवाच्योऽपि आक्षिप्यत इति । तथा च गम्यर्थसंयोगेन सह साहचर्यात् = सामानाधिकरण्याद् विभागेऽपि अवधिः = निरूपकः स्वीकृतः । तेन दिग्विशेषावच्छिन्नसंयोगविभागरूपस्वकार्यवद् गमनमेव यथा भ्रमणमिति व्यपदिश्यते, यथा च गमनग्रहणाद् भ्रमणरेचनस्यन्दनादयो गृह्यन्ते, न जात्यन्तराणि सत्ताहासादीनि धात्वर्थान्तराणि इति काणादाः । एवं ध्रुवमचलमनाश्रितापायमवधिर्यस्य स तथाभूतः, अध्रुवे = चले समवेतः, चलाचलोभयसाधनसाध्यस्त्यागः प्रागुक्तोभयकारकगतविभागफलको गतिविशेष एवापायाख्यो बोद्धव्यः । गन्तरि समवेताऽपीयं गतिविशेषरूपा क्रियाऽवध्यपेक्षणादपायाख्यां लभत इति तत्र ध्रुवस्य क्रियासिद्धौ निमित्तरूपं कारकत्वमुपपद्यत इत्याशयः । स चापादानसंज्ञाया निमित्ततया विषयभावेनावस्थितोऽपायो निर्दिष्टविषये उपात्तविषये च धातुनाऽभिधीयमानोऽपेक्षितक्रिये चानुमीयमानो यत्र तत्र ध्रुवमपादानसंज्ञमपाये साध्य इति, तत्र निमित्तत्वं ध्रुवस्य कारकस्य । एवमपायो व्याख्यातः ।

कारकस्य। एवमपायो व्याख्यातः। ध्रुवं हि स्थिरमचलं लोके प्रसिद्धम्। ततश्च वार्तिके चोदितम्। 'गतियुक्तेष्वपादानसंज्ञा नोपपद्यते, अध्रुवत्वात्' (वा० १।४।२५) इति।

'धावतोऽश्वात् पतितः, सार्थाद् गच्छतो हीनः' इत्यादौ गतियुक्तेष्वपादानसंज्ञिषु ध्रुवत्वस्य स्थिरत्वस्याचलत्वस्याभावात् संज्ञा न प्राप्नोतीत्यर्थः। अत्र परिहारोऽभिहितो 'न वाऽध्रौव्यस्याविवक्षितत्वात्' (वा० १।४।२५) इति॥ १३७॥

एतद् व्याख्यातुमाह—

द्रव्यस्वभावो न ध्रौव्यमिति सूत्रे प्रतीयते।
अपायविषयं ध्रौव्यं यत्तु तावद्विवक्षितम्॥ १३८॥

ध्रुवं कूटस्थं निष्क्रियमिति द्रव्यस्वभावो ध्रौव्यं सूत्रे न प्रत्येतव्यम्; अपि त्वसन्तुष्टचलनोऽत्र (त्वसंस्पृष्टचलनवचनोऽत्र) ध्रुवशब्दः। तथा ह्यपाये साध्ये यद् ध्रुवं तेनापायेनासंस्पृष्टमित्येषोऽर्थः। एवं च कृत्वा 'धावतोऽश्वात् पतितः' इत्यत्र पातस्याश्वकर्तृकत्वाभावात्तेनानावेशे ध्रुवताश्वस्य तत्रास्त्येव। संरब्धो-

---

ध्रुवं हि स्थिरमचलं लोके प्रसिद्धम्। ततश्च वार्तिके चोदितम्—गतियुक्तेष्वपादानसंज्ञा नोपपद्यते, अध्रुवत्वाद् इति। 'धावतोऽश्वात् पतितः', 'गच्छतः सार्थाद् हीनः' इत्यादौ गतियुक्तेष्वपादानसंज्ञिषु ध्रुवत्वस्य स्थिरत्वस्याचलत्वरूपस्याभावादपादानसंज्ञा न प्राप्नोतीत्यर्थः।

अत्र परिहारोऽभिहितः—'न वाऽध्रौव्यस्याविवक्षितत्वात्' इति। न वा एष दोषः। अत्र सतोऽपि अध्रौव्यस्य अविवक्षितत्वेन अश्वसार्थयोर्ध्रुवत्वाद् इत्यर्थ इति॥ १३७॥

पूर्वकारिकाभिप्रेतमेवार्थं व्याख्यातुमाह—द्रव्यस्वभाव इति।

अस्यार्थः—कूटस्थं निष्क्रियमिति द्रव्यस्वभावभूतं यद् ध्रौव्यं तद् "ध्रुवमपायेऽपादानम्" (पा० १।४।२४) इति सूत्रे न प्रतीयते।

यत्तु तावदपायविषयम्=अपायावधिभूतनिष्ठमपायसाधनक्रियानाश्रयीभूतनिष्ठं तत्क्रियायामौदासीन्येन ध्रौव्यं तदेव सूत्रे विवक्षितम् इति।

अयं भावः—ध्रुवं कूटस्थम्=निर्विकारम्, निष्क्रियञ्चेति द्रव्यस्वभावभूतं यद् ध्रौव्यं तद् ध्रुवमपायेऽपादानमिति सूत्रे न प्रत्येतव्यम्=न बोद्धव्यम्; अपि तु असंस्पृष्टचलनः=चलनासंसर्गी अत्र ध्रुवशब्दः। तथा हि—अपाये साध्ये यद् ध्रुवम्=स्वसाध्येन तेनापायेनासंस्पृष्टं तदपादानमित्येष सूत्रार्थः। एवञ्च कृत्वा 'धावतोऽश्वात् पतितः' इत्यत्राश्वस्य धावनाश्रयत्वेऽपि पातस्याश्वकर्तृकत्वाभावादश्वस्य तेनानावेशे तस्य तत्र ध्रुवताऽस्त्येव। संरब्धोदासीनरूपसाधनद्वयसाध्यो हि

दासीनसाधनसाध्यो ह्यपायः। तत्राश्व उदासीनः, अपेता तु संरब्धः। ग्रामादागच्छति पथा पर्वतमिति तु पथः करणस्य पर्वतस्य कर्मणोऽपायेनानावेशाद् ध्रुवतायां सत्यामपि परत्वात् करणादिसंज्ञाभिर्बाधनादपादानसंज्ञा न भवति। तथा च वार्त्तिकम्, अपादानमुत्तराणि०। धनुषा विध्यति, कंसपात्र्यां भुङ्क्ते, गां दोग्धि, धनुर्विध्यति (वा० १।४।१) इति।

तदेवमपायविषयस्याश्रयणादश्वस्यापायेनानावेशाद् वस्तुतस्तद्विषयध्रौव्यमभवदिवाविवक्षितमिति वार्तिकार्थः ॥ १३८ ॥

तथा हि—

**सरणे देवदत्तस्य ध्रौव्यं पाते तु वाजिनः।**
**आविष्टं यदपायेन तस्याध्रौव्यं प्रचक्षते ॥ १३९ ॥**

सरणेऽश्वसमवायिन्यां वेगितायां गतौ यथा देवदत्तस्य ध्रौव्यं तेन सरणेनानावेशात् तथा देवदत्तसमवेते पाते पतनक्रियायां वाजिनोऽश्वस्य तयानावेशाद्

---

सर्वत्रापायः। तत्र=पाते, अश्व उदासीनः। अपेता=अपायाश्रयस्तु संरब्धः=अपायानुकूलक्रियायां वेगवत्तरः। 'ग्रामादागच्छति पथा पर्वतम्' इत्यत्र तु करणरूपस्य पथः, कर्मरूपस्य च पर्वतस्य अपायानावेशाद्=अपायानाश्रयत्वात्, ध्रुवत्रसत्त्वेऽपि परत्वात् करणकर्मसंज्ञाभ्यां बाधात् तयोरपादानसंज्ञा न भवति। तथा च वार्तिकम्—'अपादानमुत्तराणि' इति। कारकाणि बाधन्त इति शेषः।

तथा हि—'धनुषा विध्यति' इत्यत्र ध्रुवस्य धनुषोऽपादानत्वं करणसंज्ञा बाधते। 'कंसपात्र्यां भुङ्क्ते' इत्यत्र कंसपात्र्या अधिकरणत्वं तस्या अपादानत्वम्, 'गां दोग्धि' इत्यत्र गोः कर्मत्वं तस्या अपादानत्वम्, धनुर्विध्यति इत्यत्र धनुषः कर्तृत्वं तस्यापादानत्वं बाधत इति। तदेवमपायविषयस्य=अपायावधिनिष्ठस्य ध्रुवत्वस्याश्रयणादश्वस्यापायेनानावेशात्=अपायानाश्रयत्वात्, वस्तुतो विद्यमानमपि तत्र अपायविषयमध्रौव्यमभवदिवाविवक्षितमिति वार्तिकार्थः ॥ १३८ ॥

पूर्वकारिकोक्तेऽर्थे दृष्टान्तदार्ष्टान्तिकभावान्तर्भाविनोदाहरणमभिधत्ते—**सरणे देवदत्तस्येति।**

अस्यार्थः— सरणे=अश्वसमवेतायां वेगवत्यां गतौ यथाऽश्वस्याध्रौव्यमपायाश्रयत्वात्, देवदत्तस्य तु ध्रौव्यम्, तदनाश्रयत्वात्, तथा पाते=पतनक्रियायाम्, देवदत्तस्याध्रौव्यम्, पतनक्रियाजन्यापायाश्रयत्वात्, पतनक्रियाश्रयत्वाच्च। वाजिनस्तु पाते ध्रौव्यम्, अपायतज्जनकपतनक्रिययोरनाश्रयत्वात्। यतोऽपायेनाविष्टं यत् तस्याध्रौव्यं प्रचक्षते, अतोऽश्वसमवेतायां सरणक्रियायां देवदत्तस्य ध्रौव्यम्, पाते तु=पतनक्रियायां तु देवदत्तसमवेतायां वाजिनो ध्रौव्यम्, तत्तत्क्रियया तज्जन्यापायेन वा तयोरनावेशादिति।

ध्रौव्यमिति दृष्टान्तदार्ष्टान्तिकभावान्तर्भाविनेदमुदाहरणम् । हेतुत्वेनापायानावेशो व्यतिरेकमुखेनोभयत्रापि ध्रौव्य उपात्तः । यद्यपि चाश्वसरणे देवदत्तस्य ध्रौव्यं तथाप्यपादानसंज्ञा न भवति ।

'गतिर्विना त्ववधिना नापाय इति गम्यते' (वा० प० ३, सा० १४३) इति वक्ष्यमाणत्वादवधिभावेन देवदत्तस्यानुपादानात् । तथोपादाने तु भवत्येव सरतो देवदत्ताद्धावत्यश्व इति ॥ १३९ ॥

यत्र तर्हि द्वावपि सपरिस्पन्दौ तत्र कथं ध्रुवाध्रुवविभागो निश्चेय इत्याशङ्क्याह—

उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मजे ।
विभागे प्रविभक्ते तु क्रिये तत्र विवक्षिते ॥ १४० ॥

स्थाणोः श्येनोऽपसर्पतीत्यन्यतरकर्मजे विभागे स्फुटमेवापायेनानावेशात् स्थाणौ ध्रुवता निश्चीयते । अपसर्पतो मेषान्मेषोऽपसर्पतीत्यत्राप्युभयकर्मजे विभागे

---

अयं भावः—अश्वसमवेतायां सरणरूपायां वेगवत्यां गतौ यथा देवदत्तस्य ध्रौव्यम्, स्वीयसरणावेशेऽपि तेन सरणेनाश्वगतेन अनावेशात्, तथा देवदत्तसमवेतायां पतनक्रियायां वाजिनो ध्रौव्यम्, स्वीयसरणक्रियाश्रयत्वेऽपि देवदत्तकर्तृकपातक्रियानाश्रयत्वादिति ।

अत्र यद्यपि यथा-तथा-शब्दौ कारिकायां न श्रूयेते, तथापि तावध्याहृत्य दृष्टान्तदार्ष्टान्तिकभावान्तर्भाविनेदमुदाहरणरूपेण योजनीयम् । अत्रोत्तरार्धेऽपायावेशोऽध्रौव्ये हेतुत्वेनोपात्तः, स एव च व्यतिरेकमुखेनापायानावेशरूपः, उभयत्रापि = देवदत्ते वाजिनि च ध्रौव्ये हेतुत्वेनोपात्तः पूर्वार्धे ।

यद्यपि च धावनरूपेऽश्वसरणे देवदत्तस्य ध्रौव्यम्, तथापि तस्यापादानसंज्ञा न भवति । अवधिभावेन देवदत्तस्यानुपादानात् । "गतिर्विना त्ववधिना नापाय इति गम्यते" ( वा प० ३, सा० १४३ ) इति वक्ष्यमाणत्वात् । अवधिना विना = अवध्युपादानं विना गतिरूपा क्रिया अपायरूपतया न गम्यते, न प्रतीयत इति तदर्थः । तथोपादाने तु = अवधिरूपतया देवदत्तस्योपादाने तु भवत्येव तस्यापादानसंज्ञा, सरतो देवदत्ताद् धावत्यश्व इति ॥ १३९ ॥

यत्र तर्हि द्वावपि सपरिस्पन्दौ = अपायजनकक्रियाश्रयौ तत्र कथं ध्रुवाध्रुवविभागो निश्चेयः उभयोरपि अध्रुवत्वात्, इत्याशङ्क्याह – उभावप्यध्रुवाविति ।

अस्यार्थः - अत्रापि उभयकर्मजे = मेषद्वयक्रियाजन्ये विभागे उभावपि मेषौ कर्तृत्वेनाध्रुवौ, तथापि तत्र = उभयकर्मजविभागस्थले प्रविभक्ते तु = अत्यन्तं भिन्ने तु तयोः क्रिये विवक्षिते, तेन स्वक्रियां प्रति कर्तृत्वेऽपि इतरमेषक्रियां प्रति अवधित्वं मेषद्वयस्य निर्बाधमित्यर्थः ।

यद्यप्युभावपि मेषावपायावेशादध्रुवौ तथापीतरापायेनेतरस्यानावेशात् कर्तृभेदाद्भिन्न एवापायलक्षणे क्रिये ।। १४० ।।

ततश्च---

**मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।**

**मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक् ।। १४१ ।।**

इतरेतरक्रिययेतरेतरस्यानावेशादन्यक्रियायामन्यस्य ध्रौव्यं स्वक्रियायां तु कर्तृत्वं द्वयोरपि ।। १४१ ।।

यदा तु परस्परमवधिभावो न विवक्ष्यते; अपि त्वेकशब्दोपादाने द्विगते अपि क्रिये विवक्ष्येते ।

तदाह---

**अभेदेन क्रियैका तु द्विसाध्या चेद्विवक्षिता ।**

**मेषावपाये कर्तारौ यद्यन्यो विद्यतेऽवधिः ।। १४२ ।।**

---

अयं भावः-विभागो द्विविधः । अन्यतरकर्मजः, उभयकर्मजश्च । 'तत्र स्थाणोः श्येनोऽपसर्पति' इत्यन्यतरकर्मजे विभागेऽपायेन = विभागजनकक्रियया अनावेशात् स्फुटमेव स्थाणौ ध्रुवता निश्चीयते । 'अपसर्पतो मेषान् मेषोऽपसरति' इत्यत्र 'परस्परस्मान् मेषावपसरतः' इत्यत्र चापि उभयकर्मजे विभागे यद्यपि उभावपि मेषावपायाश्रयत्वादध्रुवौ तथापि कर्तृभेदाद् भिन्न एवापायरूपे क्रिये तत्र इति इतरापायेनेतरस्यानावेशाद् द्वयोरपि ध्रुवत्वं तत्प्रयुक्तमवधित्वञ्च सिध्यतीति ।। १४० ।।

पूर्वकारिकोक्तमेवार्थं विशदीकरोति - **मेषान्तरक्रियापेक्षमिति ।**

अस्यार्थः—स्वान्यमेषक्रियापेक्षं तदनाश्रयत्वेन मेषयोः पृथक् पृथगवधित्वम् । स्वक्रियापेक्षञ्च तदाश्रयत्वेन तयोः पृथक् पृथक् कर्तृत्वमिति ।

अयं भावः—इतरक्रिययेतरस्यानावेशाद् इतरक्रियायायामितरस्य ध्रौव्यम्, स्वक्रियायां तु कर्तृत्वं द्वयोरपि मेषयोरिति ।। १४१ ।।

यदा तु मेषयोः परस्परमवधिभावो न विवक्ष्यते; अपि त्वेकशब्दोपात्ते मेषद्वयगतेऽपि क्रिये विवक्ष्येते, तदा यद्यन्योऽवधिरस्ति पर्वतादिस्तदा तस्यैवावधित्वं न तु मेषयोः, तयोस्तु कर्तृत्वमेवेत्याह—**अभेदेन क्रिया इति ।**

अस्यार्थः—चेत् = यदि तु द्विसाध्या = मेषद्वयसाध्या, एका = एकजातीया, क्रिया अभेदेन विवक्षिता, तदा यद्यन्योऽवधिः पर्वतादिरूपो विद्यते, तदा मेषावपाये कर्तारावेव, न त्ववधी । क्रियाया वस्तुतः कर्तृभेदेन भेदेऽपि एकजातीयतया अभेदेन विवक्षितत्वात् । 'पर्वतान्मेषावपसरतः' इति ।

मेषावपसर्पत इत्याख्यातपदेन कर्तृद्वयनिर्वर्त्या क्रियैक्येन प्रत्यायितेति द्वयोरपि मेषयोः क्रियावेशेन कर्तृत्वमपायेन त्वेकस्यावधित्वमित्यपादानता न भवति। एवं च कृत्वापायकर्तृत्वं मेषयोर्भवति यदान्यः पर्वतादिरवधिः ध्रुवलक्षणोऽत्र भवति। तथा च तस्यापादानसंज्ञा पर्वतादपसर्पत इति। परस्परतो मेषावपसर्पत इत्येवं त्वभिधाने मेषान्तरक्रियापेक्षमवधित्वं द्वयोः, स्वक्रियापेक्षं च कर्तृत्वमित्युक्तम्। कर्तृभेदाद्धयत्र क्रियाभेदानुमानमाख्यातादैक्येनापि प्रतीयते ॥ १४२ ॥

यद्यन्यो विद्यतेऽवधिस्तदा मेषावपाये कर्तारौ नान्यथेत्येतद् भाष्यग्रन्थसंवादेनोपपादयितुमाह—

गतिर्विना त्ववधिना नापाय इति गम्यते।
वृक्षस्य पर्णं पततीत्येवं भाष्ये निदर्शितम् ॥ १४३ ॥

कारसूत्रे संज्ञिनिर्देशः कर्तव्यतया चोदितः, साधकं कारकमिति वक्तव्यम्, अन्यथा अक्रियानिमित्तस्यापि कारक(त्व)प्रसङ्ग इत्यनिष्टप्रसङ्गः, 'अपादानं च

---

यदा तु सैव क्रिया कर्तृभेदाद् भेदेन विवक्षिता, अन्यश्चावधिर्नास्ति तदा भवत्येव इतरेतरक्रियापेक्षं द्वयोरपि अवधित्वम्—परस्परस्मान्मेषावपसरत इति।

अयं भावः—'मेषावपसरतः' इत्यत्र कर्तृद्वयनिर्वर्त्या क्रिया वस्तुतो भिन्नाऽपि एकजातीयतया आख्यातपदेन ऐक्येन प्रत्यायितेति द्वयोरपि मेषयोरेकक्रियावेशेनापाये कर्तृत्वम्, न तु तत्रैकस्याप्यवधित्वमित्यपादानता तयोरेकस्य वा न भवति। एवञ्च कृत्वा अवधित्वासमानाधिकरणमपायकर्तृत्वं मेषयोर्भवति यदाऽन्यः पर्वतादिरवधिर्ध्रुवलक्षणोऽत्र भवति। तथा च भवति। तथा तस्यैवापादानसंज्ञा, 'पर्वतान्मेषावपसर्पतः' इति। 'परस्परस्मान्मेषावपसर्पतः' इत्येवमभिधाने तु द्वयोरपि मेषयोर्मेषान्तरक्रियापेक्षमवधित्वम्, स्वक्रियापेक्षस्तु कर्तृत्वमित्युक्तं पूर्वकारिकायाम्। कर्तृभेदाद्धयत्र क्रियाभेदानुमानं भवति। आख्यातात्तु एकजातीयतया ऐक्येनैव प्रतीयत इति ॥ १४२ ॥

यद्यन्यो विद्यतेऽवधिस्तदैव मेषावपाये केवलं कर्तारौ, अन्यथा त्ववधी च कर्तारौ चेतीयमर्थम्—'वृक्षस्य पर्णं पतति' इति भाष्यग्रन्थसंवादेनोपपादयितुमाह—गतिर्विनेति।

अस्यार्थः - अवधिना विना तु गतिरपाय इति न गम्यते। अत एव 'वृक्षस्य पर्णं पतति' इत्येवं भाष्ये निदर्शितम्=निदर्शनरूपेण पठितम्।

तथा हि—यदि अवधिना विनापि गतिरपायः स्यात्, तदा वृक्षस्य सम्बन्धित्वविवक्षायाम् 'वृक्षस्य पर्णं पतति' इति षष्ठ्यन्तप्रयोगो नोपपद्येत। सम्बन्धित्व-

वृक्षस्य पर्णं पततीति' ( वा० १।४।२३ ) इत्युदाहृतो वार्त्तिके। सवार्त्तिकं च भाष्यमिति भाष्य इत्याह। एतच्च गतेः सावधिकाया अपायत्वे न लिङ्गम्; अपि त्वस्य परिहाराय 'न वाऽपायस्याविवक्षितत्वात्' ( वा० १।४।२३ ) इति यदुक्तमित्यनेन भाष्यप्रबन्धोऽत्र निर्दिष्टः।

अयं चात्रार्थः—वृक्षसम्बन्धिनः पर्णस्य पातो वाक्यार्थो विवक्षित इति वृक्षस्यावधित्वविवक्षात्र नास्ति। तथा चापायोऽयं न भवति। अपायत्वेनावध्यपेक्षारूपेणाविवक्षितत्वादित्यत्रापादानता वृक्षस्य न भवतीति, यदि त्वपायोऽत्र विवक्ष्यते तदा वृक्षस्यावधित्वाद् वृक्षात् पर्णं पततीति भवति, ततश्च न ज्ञायेत कस्य सम्बन्धि पर्णं कङ्कस्य वा कुरस्य ( कुररस्य ) वेत्युक्तम्।

तस्मात्पर्णविशेषणत्वेन वृक्षस्य विवक्षितत्वाद् वृक्षमत्यजत्यपि पर्णे शाखास्थे

---

विवक्षायामपि वृक्षस्यापायावधित्वेन ततः पञ्चमीप्रसक्तेरिति।

अयं भावः कारकसूत्रे कारकसंज्ञायाः संज्ञिनो निर्देशो वार्त्तिककृता कर्तव्यत्वेन चोदितः। साधकं कारकमिति वक्तव्यम्, अन्यथा क्रियानिमित्तत्वाभाववतोऽपि कारकसंज्ञाप्रसङ्ग इत्यनिष्टप्रसङ्गः। "अपादानञ्च वृक्षस्य पर्णं पतति इति" इत्युदाहृतो वार्तिके।

तस्यायमाशयः—कारकसूत्रे संज्ञिनोऽनिर्देशे वृक्षस्य पर्णविशेषणत्वेऽक्रियानिमित्तस्यापि तस्यापादानत्वप्रसङ्गः कारकत्वव्यवहारातिप्रसङ्गश्चेति। सवार्तिकञ्च भाष्यमित्यभिप्रेत्य वार्तिके निदर्शितमपि भाष्ये निदर्शितमिति कारिकायामुक्तम्। एतच्च सावधिकाया गतेरपायत्वेन लिङ्गम्, अक्रियानिमित्तस्यापि कारकत्वप्रसङ्गे, 'वृक्षस्य पर्णं पतति' इत्यत्र वृक्षस्यापादानत्वप्रसङ्गे चास्य लिङ्गत्वात्। शब्दसामर्थ्यं हि लिङ्गमित्युच्यते। 'सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते' इति जरन्मीमांसकानां प्रवादात्; अपि तु अस्य=प्रागुक्तस्य दोषस्य परिहाराय—"न वाऽपायस्याविवक्षितत्वात्" इति भाष्ये यदुक्तम्—इति=स एव भाष्यप्रबन्धोऽत्र कारिकायाम्, अनेन=कारिकाकृता भाष्यप्रबन्धो निर्दिष्टः।

अयं चात्रार्थः—वृक्षसम्बन्धिनः पर्णस्य पातोऽत्र वाक्यार्थो विवक्षितः, न तु वृक्षावधिको यस्य कस्यचित् पर्णस्य पात इति वृक्षस्यावधित्वविवक्षाऽत्र नास्ति। तथा चापायोऽयं न भवति। अवध्यपेक्षया रूप्यमाणेनावधित्वेन वृक्षस्याविवक्षितत्वाद् इत्यत्रापादानता वृक्षस्य न भवतीति, यदि त्वपायोऽत्र विवक्ष्यते तदा वृक्षस्यावधित्वात् 'वृक्षात् पर्णं पतति' इति भवति। ततश्च न ज्ञायते, कस्य सम्बन्धि पर्णं कङ्कस्य वा कुररस्य वा इत्युक्तम्।

तस्मात् पर्णविशेषणत्वेन वृक्षस्य विवक्षितत्वाद् वृक्षमत्यजत्यपि शाखास्थे पर्णे भूमिं स्पृशति सति 'वृक्षस्य पर्णं पतति' इति प्रयोगो भवत्येवेति अपायाविवक्षा

भूमिं स्पृशति प्रयोगोऽयं भवत्येवेत्यापायाविवक्षोक्ता । एतस्माच्चावसीयते सावधिकगतिरपायो न शुद्धा, अन्यथावध्यविवक्षामप्यत्रापायसम्भवादपादानत्वं स्यादेवेति ज्ञापकमेतत् । एवं चापायेनैवावधेराक्षेपात्तस्यैव विशेषणं शब्दवत्-संज्ञिप्रतिपत्त्यर्थं ध्रुवग्रहणं संरब्धोदासीनोभयसाध्यतामपायस्य दर्शयितुमिति व्याख्यातम् ।। १४३ ।।

गतमदः । इदमिदानीं वक्तव्यम् 'अपादानमुत्तराणि' इति विप्रतिषेधः कात्यायनेनोक्तः । तथा चोक्तैः ( चोत्तरैः ) कारकैरपादानस्य बाधितत्वाद् 'बलाहकाद् विद्योतते, बलाहके विद्योतते, बलाहको विद्योतते' इति भाष्ये संज्ञासमावेशो दर्शितो विरुद्ध इत्याशङ्क्य भाष्यं समर्थयितुमाह —

**भेदाभेदौ पृथग्भावः स्थितिश्चेति विरोधिनः ।**
**युगपन्न विवक्ष्यन्ते सर्वे धर्मा बलाहके ।। १४४ ।।**

---

उक्ता वार्तिके । एतस्माच्च वार्तिकवाक्यादवसीयते सावधिकगतिरपायो न शुद्धा, अन्यथाऽवध्यविवक्षायामप्यत्रापायसम्भवादपादानत्वं स्यादेवेति ज्ञापकमेतदत्रार्थे । एवञ्च 'ध्रुवमपाये' इति सूत्रेऽपायेनैवावधेराक्षेपात्तस्यैव = आक्षिप्तावधेरेव विशेषणम्, अपादानसंज्ञायाः शब्दवाच्यसंज्ञिप्रतिपत्त्यर्थं ध्रुवग्रहणं चलाचलोभयावधि-साध्यतामपायस्य दर्शयितुमिति व्याख्यातं प्रागत्रैवेति ।। १४३ ।।

प्रकृतः परिसमाप्तोऽपायविषयको विमर्शः । अथ साम्प्रतमिदं वक्तव्यम् । "अपादानमुत्तराणि कारकाणि बाधन्ते" इति परविप्रतिषेधः कात्यायनेनोक्तो वार्तिककृता । तथा चोत्तरैः कारकैरपादानस्य बाधितत्वाद् बलाहकाद् विद्योतते, बलाहके विद्योतते, बलाहको विद्योतते' इति भाष्ये संज्ञानां समावेशो दर्शितो विरुद्ध इत्याशङ्क्य विवक्षाभेदाद् भाष्यं समर्थयितुमाह— भेदाभेदाविति ।

अस्यार्थः—समुदायावयवयोर्भेद इत्येकः पक्षः । आम्राणां वनमिति । समुदायावयवयोरभेद इत्यन्यः पक्षः । 'पुष्पितं वनम्' इति । पृथग्भावः = समुदायादवयवस्य पृथक्सत्ता । समुदायेऽवयवस्य स्थितिश्चेति विरोधिनः सर्वे धर्मा बलाहके युगपन्न विवक्ष्यन्ते । अतः 'बलाहकाद् विद्योतते, बलाहके विद्योतते, बलाहको विद्योतते' इति संज्ञात्रयसमावेशो भाष्ये दृष्टो न विरुद्ध इति ।

तथा हि—'मेघज्योतिः सलिलमरुतां संघाते मेघः ।' तदुक्तं कविभिः—

'मेघज्योतिः सलिलमरुतां सन्निपातः क्व मेघः" इति, तत्र बलाहकावयवस्य ज्योतिषो विद्योतनम् ।

तत्र यदा समुदायावयवयोर्भेदविवक्षा, तत्रापि पृथग्भावेनैव विवक्षा तदा बलाहकस्यापादानसंज्ञा । 'बलाहकाद् विद्योतते' इति । बलाहकात् पृथग्भूय विद्योतत इत्यर्थः ।

धूमज्योतिः सलिलमरुतां संघातो बलाहकः, तत्रावयवस्य ज्योतिषो विद्योतनम्। तच्च ज्योतिर्यदा तस्मात् समुदायात्मनो बलाहकाद् भेदेन विवक्ष्यते, तदा भेदविवक्षायां पृथग्भावेनैव वा विवक्ष्येत, तत्रावस्थानेन वा। यदा पृथग्भावेन विवक्ष्यते तदा बलाहकोऽवधिः पृथग्भावलक्षणस्यापायस्येत्युपात्तविषयमिदमपादानं व्याख्यातम् बलाहकाद् विद्योतते विद्युज्ज्योतीरूपेति बलाहकात् पृथग्भूय निःसृत्येति निःसरणाङ्गे विद्योतने धातुः।

यदा तु निराधारस्य तेजसोऽवस्थानाभावाद् बलाहकोऽवस्थितिहेतुत्वादाधारभावेन विवक्ष्यते तदाधिकरणसंज्ञोऽसौ जायते 'बलाहके विद्योतते' इति, बलाहके स्थित्वा प्रकाशत इत्यर्थ। अबिन्धनत्वाद्वैद्युतस्य जातवेदसो बलाहको जलपूर्णोऽप्याधारो युज्यते। एवमुदकसम्भेदात् पार्थिवेन धूमेन चाविलीकाराद् बलाहकाद् भेदो नास्ति तावत्तेजसः प्रकाशकर्तृत्वाभाव इति भेदविवक्षायां शक्तिद्वयाविर्भावो बलाहके दर्शितः। पृथग्भावे स्थितौ च भिन्नविषय एव।

यदा तु स्वच्छत्वाद् बलाहकद्रव्यस्य तत्रत्यमुदकादि तेजसः प्रकाशे प्रति-

---

यदा तु भेदविवक्षादक्ष एव बलाहकस्य स्वावयवतेजस अवस्थानाधारत्वेन विवक्षा तदा 'बलाहके विद्योतते' इति।

यदा तु समुदायावयवयोरभेदविवक्षा तदा 'बलाहको विद्योतते' इति।

अयं भावः—'धूमज्योतिः सलिलमरुतां सन्निपातो मेघः,' तदवयवस्य तु तेजसो विद्योतनं क्रिया। तच्च तेजो यदा उक्तलक्षणाद् बलाहकाद् भेदेन विवक्ष्यते, तदा भेदविवक्षायां सत्यामेव ततः पृथग्भावेनैव वा विवक्ष्येत, तत्रावस्थानेन वा। तत्र यदा पृथग्भावेन विवक्ष्यते तदा पृथग्भावरूपस्यापायस्य बलाहकोऽवधिरिति उपात्तविषयमिदमपादानं व्याख्यातम्—'ज्योतीरूपा विद्युद् बलाहकाद् विद्योतते' इति। बलाहकात् पृथग्भूय निःसृत्य विद्युद् विद्योतत इति निःसरणपूर्वके विद्योतने विद्युतिर्वर्तते।

यदा तु निराधारस्य तेजसोऽवस्थानाभावाद् बलाहकोऽवस्थितिहेतुत्वादाधारत्वेन विवक्ष्यते तदा 'बलाहके विद्योतते' इति अधिकरणसंज्ञोऽसौ जायते। बलाहके स्थित्वा विद्युत् प्रकाशत इत्यर्थः। जलपूर्णोऽपि बलाहको वैद्युतस्य तेजस आधारो युज्यते, विद्युत अविन्धनत्वात्। एवमुदकसंसर्गात् पार्थिवेन धूमेन कलुषीकाराच्च प्रकाशकर्तृत्वाभावे बलाहकाद् भेदो नास्ति। तावत्तेजस इति भेदविवक्षायां बलाहके स्थितिपृथग्भावरूपशक्तिद्वयाविर्भावो दर्शितोऽत्र कारिकायाम्। पृथग्भावे स्थितौ च भिन्नविषय एव शक्तिद्वयाविर्भावो नैकत्र।

यदा तु बलाहकरूपे द्रव्ये तेजोजलमरुद्रूपस्य भूयिष्टभागस्य स्वच्छत्वादनावारकत्वाच्च तत्रत्यमुदकादितेजसः प्रकाशे प्रतिबन्धकं न भवति इत्यभेदेन बलाह-

बन्धकं न भवतीत्यभेदेन बलाहकाख्यः समुदायस्तेजोऽवयववशाद्विद्योतनसमर्थो विवक्ष्यते, तदात्र कर्तृशक्तिरेवोज्जृम्भते बलाहको विद्योतत इति। अवयवनिबन्धना हि समुदायमनुपतन्ति व्यपदेशाः। तद्यथा 'किसलयितमुपवनम्' इति वृक्षसमुदायस्योपवनशब्दवाच्यत्वे तदवयवानां सञ्जातकिसलयत्वे समुदायस्तथा व्यपदेशार्हः।

तदेवं विवक्षाभेदात् पर्यायेण भिन्नशक्तिर्बलाहको भाष्य उदाहृतः, न तु युगपच्छक्तिविवक्षायामिति न विप्रतिषेधवचनेनास्य विरोधः कश्चित्॥ १४४॥

यत्तु विप्रतिषेधोदाहरणम्, तत्र युगपदेव शक्त्योर्विवक्षेत्याह —

धनुषा विध्यतीत्यत्र विनापायविवक्षया।
करणत्वं यतो नास्ति तस्मात्तदुभयं सह॥ १४५॥

धनुषा विध्यतीति परत्वात्करणसंज्ञाऽपादानसंज्ञां बाधत इत्युदाहृतम्। तत्र युगपत् प्राप्तिरावश्यकेन संज्ञयोरिति तद्द्वयं साधकतमत्वमपायश्च सहैकस्मिन्

---

काख्यः समुदायस्तेजोरूपस्वावयववशाद् विद्योतनसमर्थो विवक्ष्यते तदाऽत्र कर्तृशक्तिरेवाविर्भवति बलाहको विद्योतत इति।

अवयवनिबन्धना हि व्यपदेशाः समुदायेऽपि भवन्ति। तद्यथा —'पुष्पितमुद्यानम्' इति वृक्षसमुदायस्योद्यानशब्दवाच्यत्वे तदवयवानां पुष्पितत्वे समुदायस्तथा व्यपदिश्यते। तदेवं कारिकोक्तानां चतुर्णां धर्माणां पर्यायेण विवक्षाभेदात् पर्यायेण भिन्नकारकशक्तिर्बलाहको भाष्ये उदाहृतः। न तु युगपत् कारकशक्तित्रयविवक्षायामिति न 'अपादानमुत्तराणि कारकाणि बाधन्ते' इति विप्रतिषेधवचनेन सह बलाहके शक्तित्रयमुदाहरतो भाष्यस्य विरोधः कश्चिदिति॥ १४४॥

बलाहकस्य विद्योतनक्रियां प्रति अपादानत्वाधिकरणत्वकर्तृत्वशक्तीनां पर्यायेण विवक्षा, न तु युगपदिति न तद्विप्रतिषेधोदाहरणमित्युक्तं प्राक्।

यत्तु 'धनुषा विध्यति' इति विप्रतिषेधोदाहरणं तत्र युगपदेवापादानत्वकरणत्वशक्त्योर्विवक्षा इत्याह - धनुषेति।

अस्यार्थः—यतः 'धनुषा विध्यति' इत्यत्रापसर्पतः शरस्यावधित्वमुपगच्छदेव धनुर्व्यधननिमित्ततां प्रतिपद्यत इति अपायविवक्षया विना धनुषः करणत्वं नास्ति। तस्मात् तदुभयम्=अपादानत्वकरणत्वोभयं तस्य सहेति धनुषा विध्यतीति विप्रतिषेधोदाहरणमिति।

अयं भावः —'धनुषा विध्यति' इत्यत्र परत्वात् करणसंज्ञाऽपादानसंज्ञां बाधते इत्युदाहृतं भाष्ये। अतस्तत्र युगपत्प्राप्तिरवश्यमेव तयोर्द्वयोः संज्ञयोरिति तत्संज्ञाद्वयप्रयोजकद्वयं साधकतमत्वापायरूपं सहैकस्मिन् धनुषि द्रव्ये वर्तते। यतोऽपायविवक्षामन्तरेण व्यधने धनुषः साधकतमत्वं नास्ति, न हि यथा स्वपरोभयसंयुक्तेन

द्रव्ये वर्तते। यतोऽपायविवक्षामन्तरेण साधकतमत्वं व्यधने धनुषो नास्ति। न हि दण्डेनेव धनुषा विध्यति; अपि त्वपसर्पतः शरस्यावधिभावमुपयद्धनुर्व्यधननिमित्ततां प्रतिपद्यत इति युगपदुभयविवक्षायां भिन्नविषययोरपि शक्त्योः निमित्तनिमित्तिभावेनावस्थानादेकत्र द्रव्ये समावेशात् स्वनिमित्तसंज्ञाद्वयहेतुत्वे युगपदेकस्मात् प्रातिपदिकात् तत्कार्यविभक्तिद्वयोत्पत्त्ययोगाद् एकसंज्ञाधिकारोपजनिते विरोधे परत्वात् करणसंज्ञानिमित्ता विभक्तिर्भवति। शक्त्योर्हि नास्त्यत्र विरोधः, भिन्नविषयत्वात्। शरनिःसरणे ह्यपादानम् व्यधने तु करणं धनुः। आविष्टशक्ति च द्रव्यमेव संज्ञाविषय इति तदनपेक्षयैकत्र प्राप्तिः।

तथा हि विभक्तिविधाने 'अपादाने' 'करणे' इत्यादिसंज्ञाविशेषेण द्रव्यमेव विशिष्यते। एकस्यानेकसंज्ञाप्रवृत्तावपि च नास्ति विरोध इति संज्ञाकार्यविभक्तिमुखेन विरोधोऽत्र व्याख्येयः। एतच्चोदाहरणमुपलक्षणार्थमुपात्तम् इत्यन्यत्रापि विप्रतिषेधोदाहरणे युगपद् विवक्षा योज्या।

तथा हि 'कंसपात्र्यां भुङ्क्ते' इत्यत्रान्नादनादिरूपाया भुजेः कंसपात्री धारयन्त्यन्नमत्राधारः। स चास्या आधारभावस्तावन्नोपपद्यते यावदपादानता नास्ति। कंसपात्र्या ह्यन्नमुद्धृत्य भुज्यत इति भवत्यपादानम्। न हि पर्णपुटेन

दण्डेन विध्यति तथा धनुषा विध्यति; अपि तु स्वस्मादपसर्पतः शरस्यावधिभावमुपगच्छदेव धनुर्व्यधननिमित्तता प्रतिपद्यत इति युगपत्शक्तिद्वयविवक्षायामपादानत्वस्य शरनिःसरणक्रियानिरूपितत्वेन करणत्वस्य तु व्यधनक्रियानिरूपितत्वेन भिन्नविषययोरपि तयोः शक्त्योरपादानत्वस्य निमित्तभावेन करणत्वस्य तु निमित्तिभावेनावस्थानादेकत्र द्रव्ये धनुषि समावेशात् स्वनिमित्तसंज्ञाद्वयहेतुत्वे=प्रागुक्तशक्तिद्वयनिमित्तककरणापादानरूपसंज्ञाद्वयहेतुकत्वे पञ्चमीतृतीयाविभक्त्योः स्थिते सति, युगपदेकस्मात् प्रातिपदिकात् तत्कार्यविभक्तिद्वयोत्पत्त्ययोगात्= संज्ञाद्वयकार्यविभक्तिद्वयोत्पत्त्ययोगात्, एकसंज्ञाधिकारप्रयुक्ते संज्ञयोर्विरोधे परत्वात् करणसंज्ञानिमित्ता विभक्तिर्भवति। शक्त्योर्हि नास्त्यत्र विरोधः, प्रागुक्तरीत्या भिन्नविषयत्वात्। शरनिःसरणे हि धनुरपादानम्, व्यधने तु करणं तत्। तथा च संज्ञयोरेवात्र विरोधः। आविष्टशक्तिकं द्रव्यमेव च संज्ञाविषय इति तदनपेक्षया=विरोधानपेक्षया एकत्र द्रव्ये प्राप्तिः।

तथा हि विभक्तिविधाने=अपादाने, करणे इत्यादिसंज्ञा विशेषेण द्रव्यमेव विशिष्यते। एकस्यानेकसंज्ञाप्रवृत्तास्वपि च विरोधो नास्ति इति संज्ञाकार्यविभक्तिमुखेन संज्ञयोर्विरोधोऽत्र व्याख्येयः। एतच्चोदाहरणमुपलक्षणार्थमुपात्तम्, न तु परिगणनम्, इत्यन्यत्रापि विप्रतिषेधोदाहरणे संज्ञयोर्युगपद्विवक्षा योज्या।

तथा हि—'कंसपात्र्यां भुङ्क्ते' इत्यत्रान्नादनादिरूपाया भुजेरन्नं धारयन्ती कंसपात्री अत्राधारो भवति। एतच्चास्या आधारत्वं तावन्नोपपद्यते यावदस्या अपादानत्वं नास्ति। कंसपात्र्या ह्यन्नमुद्धृत्य भुज्यत इति भवत्यपादानं भुजौ सा।

सहान्नमभ्यवहरतो हस्त्यादेस्तत्र भुङ्क्त इति भवत्याधारसम्प्रत्ययः । यदि च कंसपात्री न भवेदन्नादानस्यावधिस्तदा भुजिर्नैव निष्पद्येतेत्यपायविवक्षया विनाधिकरणत्वाभावादुभयोर्युगपद्विवक्षायां संज्ञाद्वयप्रसङ्गे 'अपादानमुत्तराणि' इत्यधिकरणसंज्ञया परया पूर्वाऽपादानसंज्ञा बाध्यत एव ।

'गां दोग्धि' इति क्षारणवचने दुहौ नान्तरीयकोऽपायः । न हि गोरनपयति पयसि क्षारणं सम्पद्यत इति अपादानतानान्तरीयका कर्मशक्तिः गोः परत्वात् कार्यं प्रयुङ्क्ते । एवं धनुर्विध्यतीत्यपायविवक्षां विना व्यधने धनुषः स्वातन्त्र्यं नास्तीत्युभयसन्निधौ 'अपादानमुत्तराणि' इति परा कर्तृसंज्ञैव भवति ।। १४५ ।।

एवमत्र विषमे द्वे शक्ती अभ्युपगम्य नान्तरीयकत्वादेकत्र द्रव्ये समावेशे संज्ञाद्वयप्राप्तौ विभक्त्याख्यकार्यद्वारेण विरोधे सति परत्वेन व्यवस्थोक्ता । सम्प्रति शक्त्यभेदमाश्रित्य संज्ञयोरभिन्नविषयोपनिपातमाह—

एकैव सा सती शक्तिर्द्विरूपा व्यवतिष्ठते ।
निमित्तं(त्तात्) संज्ञयोस्तत्र परया बाध्यतेऽपरा ।। १४६ ।।

भिन्नक्रियाविषयापि द्रव्यस्यैकैव शक्तिः, तया हि तद् द्रव्यं क्रियाद्वयं सम्पा-

---

न हि पर्णपुटेन सहान्नं भुञ्जानस्य वृषभादेः पर्णपुटे भुङ्क्ते इति भवत्याधारप्रतीतिः ।

यदि च कंसपात्री न भवेदन्नादानस्य=अन्नग्रहणस्य अवधिस्तदा भुजिर्नैव निष्पद्येतेत्यपायविवक्षया विनाऽधिकरणत्वाभावादपादानत्वाधिकरणत्वशक्त्योर्द्वयोर्युगपद्विवक्षायां संज्ञाद्वयप्रसङ्गे--"अपादानमुत्तराणि कारकाणि बाधन्ते" इति वचनबलादधिकरणसंज्ञया परया पूर्वाऽपादानसंज्ञा बाध्यत एव । 'गां दोग्धि पयः' इत्यत्र क्षारणवाचके दुह्-धातौ नान्तरीयकः=अविनाभावी=अवश्यंभावी अपायः।

तथा हि--'न हि गोरनपगच्छति पयसि क्षारणं संपद्यते' इत्यपादानत्वशक्तिनान्तरीयका कर्मत्वशक्तिर्गोरूपात् प्रातिपदिकात् परत्र परत्वाद् विभक्तिरूपं स्वकार्यं प्रयुङ्क्ते । एवं 'धनुर्विध्यति' इत्यत्रापायविवक्षां विना व्यधने धनुषः स्वातन्त्र्यं नास्ति इत्यपादानत्वस्वातन्त्र्ययोरुभयोः सन्निधाने 'अपादानमुत्तराणि कारकाणि बाधन्ते' इति वचनबलात् परा कर्तृसंज्ञैव भवति, न तु पूर्वाऽपादानसंज्ञा, न वा तयोर्विकल्प इति ।। १४५ ।।

एवमत्र विलक्षणे द्वे शक्ती अभ्युपगम्य तयोः परस्पराविनाभावनियमादेकत्र द्रव्ये समावेशे सति तत्प्रयुक्तसंज्ञाद्वयप्राप्तौ सत्यां विभक्त्याख्यकार्यद्वारेण तयोर्विरोधे सति परत्वेन व्यवस्थोक्ता--'अपादानमुत्तराणि कारकाणि बाधन्ते' इति । इदानीं तु शक्त्यैक्यमाश्रित्य गुणप्रधानीभूतक्रियाद्वयनिरूपितयोः=संज्ञयोरभिन्नद्रव्याश्रितत्वमाह – एकैव सेति ।

दयति, इति तत्र क्रियाद्वयविषयेऽपादानकरणसंज्ञाद्वयं लभत इत्येकत्र शक्तौ संज्ञाद्वयप्राप्तौ परया संज्ञया न परा अपरा पूर्वा संज्ञा बाध्यते विरोधात्, एकसंज्ञाधिकारनिमित्तादित्यर्थः। शरनिःसरणेऽवधिभावो धनुषः साधकतमत्वशक्त्यैवान्तर्भावितः। तेन विना तदयोगादिति तावत्येकैव शक्तिर्भण्यते। परस्परनिरपेक्षस्य कार्यद्वयस्य प्रविभक्तरूपशक्तिद्वयपरिकल्पकस्याभावात्। व्यधनक्रियाया हि शरापगमनक्रियात्र गुणभूतेति पृथगात्मनि शक्त्यन्तरं नाक्षिपति। केवलमेकैव शक्तिर्गुणप्रधानभूतक्रियाद्वयविषयतया भिन्नरूपेव चकास्ति।

द्रव्यमेव तर्ह्येकं क्रियाद्वयं सम्पादयत् साधनमस्तु, किं शक्तिपरिकल्पनया। नैतदुपपद्यते। अभिन्नस्वभावत्वादस्य नानाक्रियाविषयत्वायोगात्। शक्तिस्तु सामर्थ्यमनेककार्यमपि भवति। यथोक्तम्—

"न शक्तीनां तथा भेदो यथा शक्तिमतां स्थितिः" इति।

( वा० प० ३, दिक्० २७ )

---

अस्यार्थः—सा शक्तिरेकाश्रयत्वेनैकैव सत्यपि क्रियाद्वयनिरूपितत्वेन द्विरूपा व्यवतिष्ठते। तत्र संज्ञयोः एकशक्तिप्रयुक्तक्रियाद्वयसाधनत्वप्रयुक्तसंज्ञाद्वयमध्ये परया संज्ञयाऽपरा संज्ञा एकसंज्ञाऽधिकाररूपाद् निमित्ताद् बाध्यत इति।

अयं भावः—द्रव्यस्य भिन्नक्रियाविषयाऽपि एकैव शक्तिः। यतस्तया एकयैव स्वशक्त्या तद्द्रव्यं क्रियाद्वयं सम्पादयति इति हेतोस्तद् द्रव्यं तत्र क्रियाद्वयविषयेऽपादानकरणरूपं संज्ञाद्वयं लभत इति रीत्या एकस्यां शक्तौ संज्ञाद्वयप्राप्तौ परया संज्ञया पूर्वा संज्ञा बाध्यते, एकसंज्ञाधिकाररूपनिमित्तप्रयुक्ताद् विरोधादिति। शरनिःसरणे धनुषोऽवधिभावः साधकतमत्वशक्तावेवान्तर्भवति, अवधिभावेन विना धनुषो व्यधने साधकतमत्वायोगादिति तावत्येकैव तस्य शक्तिरभिधीयते। अत्र शरनिःसरणव्यधनरूपक्रियाद्वयरूपस्य कार्यद्वयस्य परस्परं सापेक्षत्वेन परस्परनिरपेक्षस्य कार्यद्वयस्य प्रविभक्तरूपशक्तिद्वयपरिकल्पकस्याभावात्। व्यधनक्रियायां हि शरापगमनक्रियाऽत्र गुणभूतेति पृथगात्मनिष्ठम्=द्रव्यान्तरनिष्ठं शक्त्यन्तरं नाक्षिपति। केवलमेकैव शक्तिर्गुणप्रधानभूतक्रियाद्वयविषयकत्वेन भिन्नरूपेव भासते।

एवं तर्हि द्रव्यमेवैकं क्रियाद्वयं सम्पादयत् साधनमस्तु किं शक्तिपरिकल्पनयेति चेन्नैतदुपपद्यते। द्रव्यस्यैकस्वभावकत्वेन भिन्नजातीयक्रियासाधनत्वायोगात्। शक्तिस्तु द्रव्यसामर्थ्यरूपा अनेकजातीयमपि कार्यं जनयितुं प्रभवति।

यथोक्तम्—"न शक्तीनां तथा भेदो यथा शक्तिमतां स्थितिः" इति।

( वा० प० ३, दिक्० २७ )

यद्येवं 'पक्त्वौदनो भुज्यताम्' इत्यत्राप्येकैव शक्तिरस्तु । नैतदुपपद्यते । अन्तर्भूतेनोपायेन पृथगात्मानं लभमानेन स्वनिमित्तशक्तिभेदानाक्षेपा—(भेदाक्षेपा) दिति स्थितम् । पूर्वं तु गुणप्रधानभावानाश्रयेण क्रियाद्वयमात्रविषयं शक्तिद्वय-मुक्तम् ।। १४६ ।।

तदेतदपादानम् "ध्रुवमपायेऽपादानम्" (पा० १।४।२४) इत्यनेनैव लक्षितम्, सर्वमपादानं पञ्चमीविषयः । अपरस्तु ( अपरं तु ) -

**निर्धारणे विभक्ते यो भीत्रादीनां च यो विधिः ।**
**उपात्तापेक्षितापायः सोऽबुधप्रतिपत्तये ।। १४७ ।।**

"पञ्चमी विभक्ते" ( पा० २।३।४२ इति विभक्तविशिष्टे निर्धारणे

---

अस्यार्थः - यथा शक्तिमतां द्रव्याणां भिन्नतया स्थितिः पारमार्थिकी तथा शक्तीनां भेदो न पारमार्थिकः । एकाऽपि हि शक्तिरनेककार्यजननसामर्थ्यरूपा स्वकार्यभेदोपरागेण भिन्नरूपेव विभाति इति यावत् ।

यद्येवं कार्यभेदेऽपि शक्तिभेदो न पारमार्थिकः; किन्तु एकैव शक्तिस्तदा 'पक्त्वौदनो भुज्यताम्' इत्यत्रापि क्रियाद्वयनिरूपिता एकैव कर्मत्वशक्तिरस्तु, तथा च पचिक्रिया कर्मणोऽनभिधानम् भुजिक्रिया कर्मणस्तु अभिधानमिति व्यवस्था नोपपद्येतेति चेन्न, एतदुपपद्यते । एकस्मिन् द्रव्येऽन्तर्भूतेन उपायेन=कर्मत्वरूपेण साधनत्वावान्तरधर्मेण पृथक्=क्रियाद्वयनिरूपितत्वेन भिन्नतया आत्मानं लभमानेन=रूपभेदमाश्रितवता स्वनिमित्तस्य शक्तिभेदस्याक्षेपादिति स्थितम्=क्रियारूपस्व-कार्यभेदेऽपि शक्त्यैक्यमिति अत्र निश्चितम् । पूर्वन्तु क्रियाद्वयस्य गुणप्रधानभावाना-श्रयेण क्रियाद्वयमात्रविषयं शक्तिद्वयमुक्तमिति ।। १४६ ।।

तदेतदपादानम् "ध्रुवमपायेऽपादानम्" ( पा० १।४।२४ ) इत्यनेनैव लक्षितम्, अनेन लक्षितं सर्वमपादानं त्रिविधमपि पञ्चमीविषयः, एतत् सूत्रलक्षितात् त्रिविधादपादानादपरं त्वपादानमबुधप्रतिपत्तये इत्याह—निर्धारणे इति ।

अस्यार्थः—विभक्ते निर्धारणे=विभागे निर्धारणे च गम्यमाने=विभाग-विशिष्टे निर्धारणे गम्यमाने इति यावत् । अत्र विभक्तपदे भावे क्तप्रत्ययः । तत्र योऽपादानविधिः, च=किञ्च, भीत्रादीनां सम्बन्धी यो विधिः, उपात्तापेक्षितापायः=विभक्ते निर्धारणेऽपेक्षितापायः, 'माथुराः पाटलिपुत्रकेभ्य आढ्यतराः' इत्यत्र बौद्धस्यापायस्यानुमीयमानस्यापेक्षणाद् भीत्रादीनां सम्बन्धी विधिश्चोपात्तापायः=उपात्तो गुणभावेन विषयीकृतोऽपायो येन स तथाभूतः । 'चौराद् बिभेति' इत्यत्र हि भयपूर्विकायां निवृत्तौ विभेतेर्वृत्तिरिति निवृत्तिरूपोऽपायो लक्षणारूपया गौण्या वृत्त्या विषयीकृतोऽत्रेत्युपात्तापाय एषोऽपादानसंज्ञाविधिः । स द्विविधोऽपि अपादान-

गम्यमाने पञ्चमीलक्षणो यो विधिरुक्तः, सोऽपेक्षितापायः, अपायस्यानुमीयमानस्यापेक्षणादित्यपादानसंज्ञयैव सिद्धः । तस्य हि 'माथुराः पाटलिपुत्रकेभ्य आढ्यतराः' इत्येतदुदाहरणम् । अत्र निर्धारणस्य विभक्तविषयत्वादत्यन्तविभक्ततताप्रतिपत्त्यर्थं विभक्तग्रहणमिति पृथग्भूता एव प्रतिपाद्यमाना एतस्य विषयः, न तु 'गवां कृष्णा सम्पन्नक्षीरतमा' इत्यादि, गोत्वेनापृथग्भावात् । तत्रात्यन्तविभागेऽपि विवक्षिते पूर्वमाढ्यत्वेन बुद्ध्या साम्यवश्यापेक्ष्यम् ।

तथा ह्याढ्यत्वेन समानेन गुणेन बुद्ध्यैकत्वमापाद्यातिशयविशिष्टाढ्यतावशात् पृथक् क्रियेत्यस्ति बुद्धिसंश्लेषपूर्वको विश्लेषोऽपायाख्य इत्यपादान इत्येवं सिद्धात्र पञ्चमी । अपेक्षितक्रियं ह्येतदपादानम् । तदुक्तं भाष्ये––'यस्तैः साम्यं गतवान् स एवं प्रयुङ्क्ते' ( म० भा०, पा० १।४।२४ ) इति ।

---

संज्ञाविधिरबुधप्रतिपत्तये = अबुधानां मूर्खाणां सौकर्येणापादानत्वप्रतिपत्तये प्रपञ्चार्थः, "ध्रुवमपायेऽपादानम्" ( पा० १।४।२४ ) इत्यनेनैव बौद्धमपायमाश्रित्य तत्राप्यपादानत्वसिद्धेरिति ।

अयं भावः - "पञ्चमी विभक्ते" ( पा० २।३।४२ ) इति सूत्रेण विभक्तविशिष्टे = सामानाधिकरण्येन विभागविशिष्टे निर्धारणे गम्यमाने पञ्चमीलक्षणो योऽपादानसंज्ञाविधिरुक्तः, सोऽपेक्षितापायः, अपायस्यानुमीयमानस्यापेक्षणादिति "ध्रुवमपायेऽपादानम्" ( पा० १।४।२४ ) इति सूत्रविहितया अपादानसंज्ञयैव सिद्धः । तस्य हि 'माथुराः पाटलिपुत्रकेभ्य आढ्यतराः' इत्येतदुदाहरणम् । अत्र निर्धारणस्य नियमेन विभक्तविषयकत्वादेव विभक्तलाभे सिद्धे पुनर्विभक्तग्रहणमत्यन्तविभक्तताप्रतिपत्त्यर्थमिति पृथग्भूता एव प्रतिपाद्यमाना = निर्धार्यमाणा निर्धारणावधयश्च "पञ्चमी विभक्ते" ( पा० २।३।४२ ) इति सूत्रस्य विषयः, न तु 'गवां कृष्णा सम्पन्नक्षीरतमा' इत्यादि कृष्णानामपि गोत्वेन माथुरवत् पृथक्त्वेनाप्रतिपादनात् । तत्र माथुरपाटलिपुत्रकयोरत्यन्तविभागेऽपि विवक्षिते पूर्वमाढ्यत्वेन बुद्ध्या साम्यमवश्यमपेक्ष्यम् ।

तथा ह्याढ्यत्वेन तयोः समानेन गुणेन बुद्ध्या तयोरेकत्वमापाद्यातिशयविशिष्टाढ्यतावशाद् माथुराणां पाटलिपुत्रकेभ्यो बुद्ध्या पृथक् क्रिया इत्येवमस्ति बुद्ध्या संश्लेषपूर्वको बौद्धो विश्लेषोऽपायाख्य इत्येवमत्र "अपादाने पञ्चमी" ( पा० २।३।२८ ) इत्यनेनैवात्र सिद्धा पञ्चमी यत एतदपादानमपेक्षितक्रियम् = अनुमितापायमित्यस्त्यपायः ।

तदुक्तं भाष्ये—"यस्तैः साम्यं गतवान् स एवं प्रयुङ्क्ते" (म० भा० १।४।२४) इति ।

कारकाधिकारे तमब्ग्रहणादतिशयो न विवक्षित इति गौणेऽप्यत्र बौद्धेऽपायेऽपादानताऽविरुद्धा। तथा हि कारकव्यवहारो बुद्ध्यवस्थानिबन्धन एव सर्वः। तदुक्तं प्राक्—

बुद्ध्या समीहितैकत्वान् पञ्चालान् कुरुभिर्यदा।
पुनर्विभजते वक्ता तदापायः प्रतीयते॥ इति।
(वा० प० ३, सा० ४)

एवं सामान्येनैव सिद्धे सूत्रारम्भो बौद्धमपायमप्रतिपद्यमानं प्रति विवक्षानियमार्थम्, अपायविवक्षैवात्र कर्त्तव्येत्यर्थः। तथा "भीत्रार्थानां भयहेतुः" (पा० १।४।२५), "पराजेरसोढः" (पा० १।४।२६) इत्यादिश्च यो विधिरपादानसंज्ञालक्षणः, सोऽप्युपात्तो गुणभावेन विषयोऽपायलक्षणा क्रिया येन स एवंविध इति उपात्तविषयापादानभेदोदाहरणरूपः पूर्ववदबुधबोधनार्थ एव।

---

अस्यार्थः—यो वक्ता माथुराणां पाटलिपुत्रकैः सहाढ्यत्वेन साम्यं पूर्वं बुद्ध्या ज्ञातवान्, स एवं प्रयुङ्क्ते—'माथुराः पाटलिपुत्रकेभ्य आढ्यतराः' इति। 'साधकतमं करणम्" (पा० १।४।४२) इत्यत्र तमब्ग्रहणं मास्तु, कारकाधिकारादेव साधकस्य करणसंज्ञायामुद्देश्यत्वे लब्धे क्रियमाणं साधकग्रहणमेव साधकतमार्थं भविष्यतीति व्यर्थीभूतात् तमब्ग्रहणात् कारकाधिकारेऽतिशयो न विवक्षित इति ज्ञाप्यत इति गौणमुख्यन्यायाप्रवृत्त्या गौणेऽप्यत्र बौद्धेऽपायेऽपादानत्वप्रयोजकत्वमविरुद्धम्।

तथा हि सर्वोऽपि कारकव्यवहारो विवक्षाविषयत्वेन बुद्ध्यवस्थानिबन्धन एव। तदुक्तं प्राक्—

बुद्ध्या समीहितैकत्वान् पञ्चालान् कुरुभिर्यदा।
पुनर्विभजते वक्ता तदाऽपायः प्रतीयते॥ इति।
(वा० प० ३, सा० ४)

अस्यार्थः—'पञ्चालाः कुरुभ्य आढ्यतराः' इत्यत्र आढ्यत्वेन गुणेन कुरुभिः सह बुद्ध्या समीहितैकत्वान्=विवक्षिताभेदान्, पञ्चालान् वक्ता यदाऽऽढ्यत्वातिशयवशाद् बुद्ध्या पुनर्विभजते, तदाऽपायः प्रतीयत इति।

एवम्—"ध्रुवमपायेऽपादानम्' (पा० १।४।२४) इति सामान्यसूत्रेणैवापादानत्वे सिद्धे "पञ्चमी विभक्ते" (पा० २।३।४२) इति सूत्रारम्भो बौद्धमपायमजानानं प्रति विवक्षानियमार्थम्, अपायविवक्षैवात्र कर्तव्या, न तु कदाचिदपायाविवक्षा इति।

तथा हि—'वृकेभ्यो भयम्, चोराद् बिभेति' इति य एष मनुष्यः प्रेक्षापूर्वकारी भवति स बुद्धचा पश्यति यदि मां वृकाः प्राप्नुयुर्ध्रुवमनिष्टापात इति पूर्वं बुद्धचा वृकान् प्राप्य बुद्धचन्तरेण ततो विभागं प्रतिपद्यत इति भयपूर्विकायां निवृत्तौ बिभेतेर्वर्तनाद् अस्त्येवापायः।

एवं 'चौरेभ्यस्त्रायते' इत्यनर्थप्रतिघातवचने त्रायतावनर्थं चोरसंसर्गं बुद्धचा निश्चित्य ततः स्वजनमपनयति सुहृदिति सम्भवत्यपायः। 'अध्ययनात् पराजयते' इत्यध्ययनाभ्यासपरिखिन्नो गुरुपर्युपासनायासभीरुः प्राप्याध्ययनं ततो निवर्तत इत्यस्त्येवापायः। पराजयतिश्चात्र खेदपूर्वके निवर्तने वर्तते, अध्ययनात् खिन्नः सन्निवर्तत इत्यर्थः।

पूर्वमेवाप्रवृत्तौ तु खेदो बुद्धचा समीक्षितः।
कष्टेन तपसा नित्यं दृष्टोपचरतो(दृष्ट्वोपचरता) गुरून्॥ इति।

---

तथा—"भीत्रार्थानां भयहेतुः" (पा० १।४।२५), "पराजेरसोढः" (पा० १।४।२६) इत्यादिश्च यो विधिरपादानसंज्ञाविषयकः, सोऽप्युपात्तो गुणभावेन गौण्या वृत्त्या विषयीकृतेऽपायोऽपायलक्षणा क्रिया येन स एवंविध इत्युपात्तविषयाख्यापादानविशेषोदाहरणेन निरूप्यमाणः पूर्ववदबुधबोधनार्थं एव।

तथा हि 'वृकेभ्यो भयम्, चोराद् बिभेति' इत्यत्र य एष मनुष्यः प्रेक्षापूर्वकारी भवति, स बुद्धचा पश्यति=विचारयति, यदि मां वृकाः प्राप्नुयुर्ध्रुवमनिष्टापात इति पूर्वं बुद्धचा वृकान् प्राप्य बुद्धचन्तरेण तेभ्यः विभागं प्राप्नोति इति भयपूर्विकायां निवृत्तौ बिभेतेर्लक्षणया वर्तनादस्त्येवापायः।

एवम् 'चौरेभ्यस्त्रायते' इति अनर्थप्रतिघातवचने=अनिष्टप्रतिकारवाचिनि, त्रायतौ चौरसंसर्गरूपमनिष्टं बुद्धचा निश्चित्य सुहृत् तेभ्यः स्वजनमपनयतीति सम्भवत्येवापायः।

'अध्ययनात् पराजयते' इत्यत्र पराजयतिः=परोपसर्गपूर्वको जिधातुः लक्षणया खेदपूर्वके निवर्तने वर्तते। अध्ययनाद् निवृत्तिश्च द्विधा—अध्ययनात् प्राग्भाविनी, अध्ययनारम्भोत्तरकालभाविनी च। अध्ययनात् प्रागेव गुरुपर्युपासनायासरूपं खेदं बुद्धचा समीक्ष्य ततो निवर्तत इत्येकोऽर्थः। अध्ययने प्रवृत्तो गुरुपर्युपासनायासमनुभूय ततो निवर्तत इति द्वितीयोऽर्थः।

'यवेभ्यो गां वारयति' इति यवसम्प्राप्तौ गवां यवविनाशकृतं प्रत्यवायमयं ( बुद्धचा मन्यमानो ) निवर्तयति तत इति मुख्य एवापायः, 'कूपादन्धं वारयति, अग्नेर्माणवकं वारयति' इति बुद्धचा कूपाग्निसम्प्राप्तिमनिष्टहेतुं मन्यमानोऽनुकम्पया ततो निवर्तयतीति बुद्धिसंश्लेषपूर्वकोऽपायः ।

उपाध्यायादन्तर्धत्ते इत्युपाध्यायसमीपप्राप्तौ प्रेषणोपालम्भादिदुःखं बुद्धचा निश्चित्य ततोऽपैतीत्यपायः । उपाध्यायादधीते, आगमयतीति च ग्रन्थमादत्ते तत इत्यपायः । उपाध्यायमुखोदीरिता हि शब्दाः सन्तानेन वर्तमानाः शिष्यमनुप्रविशन्तीत्युपाध्यायादवधिस्थानीयात् तेषामपक्रमोऽवसीयते । तदुक्तं भाष्ये—'सन्ततत्वात्' (म० भा०, पा० १।४।२९) इति ।

अनुपयोगे तु नटस्य शृणोतीत्यपायो न विवक्ष्यते । न हि नटाद् ग्रन्थमाधत्ते; अपि तु नटसम्बन्धि शृणोतीत्येतावदत्रार्थसतत्त्वम् । शृङ्गाच्छरो जायत इति ततो निःसरतीत्येवं लोकस्य प्रतिपत्तेरस्त्येवापायः ।

---

तदेतदुक्तम्—

पूर्वमेवाप्रवृत्तौ तु खेदो बुद्धचा समीक्षितः ।
कष्टेन तपसा नित्यं दृष्ट्वोपचरता गुरून् ।। इति ।

अस्यार्थः—अध्ययनात् पूर्वमेव तत्राप्रवृत्तौ तु बुद्धचा समीक्षितः खेदो हेतुः । अध्ययनारम्भादुत्तरत्र तत्राप्रवृत्तौ तु कष्टेन तपसा गुरून् नित्यमुपचरता=सेवमानेन छात्रेण दृष्ट्वा=अनुभूय समीक्षितः खेदो हेतुरिति । 'यवेभ्यो गां वारयति' इत्यत्र गवां यवसम्प्राप्तौ यवविनाशकृतं प्रत्यवायमयं स्वात्मनि बुद्धचा मन्यमानो वारयिता यवेभ्यो गां निवर्तयति इति मुख्य एवापायः, 'कूपादन्धं वारयति', 'अग्नेर्माणवकं वारयति' इत्यत्र बुद्धचा माणवकस्य कूपाग्निसम्प्राप्तिमनिष्टहेतुं मन्यमानोऽनुकम्पया ताभ्यां निवर्तयतीति बौद्धसंश्लेषपूर्वको बौद्ध एवापायः ।

'उपाध्यायादन्तर्धत्ते' इत्यत्र उपाध्यायसमीपप्राप्तौ गुरुकर्तृकप्रेषणोपालम्भादिदुःखं भाविबुद्धचा प्रागेव निश्चित्य ततोऽपैतीति तथाविध एवापायः । 'उपाध्यायादधीते, उपाध्यायादागमयति' इत्यत्र च ततो निःसरन्तं ग्रन्थमादत्ते इत्यस्त्येवापायः । उपाध्यायमुखोदीरिता हि शब्दा वीचितरङ्गन्यायेन कदम्बमुकुलन्यायेन वा सन्तानेन वर्तमानाः शिष्यमनुप्रविशन्ति इत्युपाध्यायादवधिस्थानीयात् तेषामपायोऽवसीयते । तदुक्तं भाष्ये—'संततत्वात्' ( म० भा० १।४।२९ ) इति ।

शब्दानामिति शेषोऽत्रादौ । अनुपयोगे तु=नियमपूर्वकविद्यास्वीकाराभावे तु, 'नटस्य शृणोति' इत्यत्रापायो न विवक्ष्यते, "आख्यातोपयोगे" (पा० १।४।२९) इत्युपयोगवचनात् । उपयोगो हि नियमपूर्वकं विद्यास्वीकारः । न हि नटाद् ग्रन्थ-

शास्त्रे पदार्थः कार्यार्थं लौकिकः प्रविभज्यते ।'
( वा० प० ३, सं० ८८ )

इत्युक्तमिति तीर्थिकपरिकल्पितप्रक्रियानादरः । तीर्थिकानां हि केषाञ्चित् कार्यकारणयोः परिणामाश्रयेण भेद इति विभागभावः । हिमवतो गङ्गा प्रभवतीति स्रोतोरूपा गङ्गा ततः प्रसर्पतीति मुख्य एवापायः । गौणं चापायमाश्रित्य "जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्" ( वा० १।४।२४) इति प्रत्याख्यातम् ।

तथा हि अधर्माज्जुगुप्सते विरमतीत्यास्तिकः, परत्र दुःखानुबन्धिनमधर्ममवगम्य जुगुप्सापूर्वकं ततोऽपैतीत्यस्त्यपायः । नास्तिकः पुनरिहैव क्लेशफलं धर्ममवगत्य ततः प्रमादेन निवर्तत इति ( धर्मात् ) प्रमाद्यतीत्युच्यत इति सर्वत्र पूर्वे-

---

मादत्ते; अपि तु नटसम्बन्धि शृणोति इत्येतावदत्रार्थस्वरूपम् । 'शृङ्गाच्छरो जायते' इत्यत्र प्रकृतिरूपात् शृङ्गात् शरो विकृतिरूपो निःसरति इत्येवं लोकस्य प्रतिपत्तेरस्त्येवापायः ।

"शास्त्रे पदार्थः कार्यार्थं लौकिकः प्रविभज्यते" ( वा० प० ३, सं० ८८ ) इत्युक्तम् ।

अस्यार्थः—चस्त्वर्थे । शास्त्रे तु लौकिकः पदार्थः प्रविभज्यते = प्रकृतिप्रत्ययविभागेन व्याख्यायत इति । अतोऽत्र शास्त्रकृत्परिकल्पितप्रक्रियाया जनेः प्रादुर्भावार्थकत्वं बोधयन्त्या लौकिकार्थस्वीकारेणानादरः । केषाञ्चित् तीर्थिकानाम् = शास्त्रकाराणां हि मते परिणामवादाश्रयेण कार्यकारणयोर्भेद इति विकृतेः प्रकृतितो विभागभावः = विभक्तत्वम् । 'हिमवतो गङ्गा प्रभवति' इत्यत्र स्रोतोरूपा—प्रवाहरूपा गङ्गा हिमवतः प्रसर्पतीति मुख्य एवापायः । गौणश्च बौद्धमपायमाश्रित्य—"जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्" ( वा० १।४ २४ ) इति वार्तिकं भाष्ये प्रत्याख्यातम् ।

तथा हि—'अधर्माज्जुगुप्सते', 'अधर्माद् विरमति' इत्यत्र आस्तिकः, परत्र दुःखानुबन्धिनमधर्ममवगम्य जुगुप्सापूर्वकं बुद्ध्या ततोऽपैतीत्यस्त्यपायः । नास्तिकस्तु इहैव लोके कर्मकाले धर्मं क्लेशजनकं ज्ञात्वा ततः प्रमादेन निवर्तत इति 'धर्मात् प्रमाद्यति' इत्युच्यत इति सर्वत्र पूर्वेणैव="ध्रुवमपायेऽपादानम्" (पा० १।४।२४) इत्यनेनैव अपादानसंज्ञायां सिद्धायां सर्वोऽप्युत्तरो विधिर्नियमरूपेण प्रपञ्चार्थः ।

णैवापादानसंज्ञायामुत्तरो विधिः प्रपञ्चार्थः। लक्षणप्रपञ्चाभ्यां हि व्याकरणम्। यथोक्तम्--'तत एव विधयः' इत्यादीति सिद्धम् ।। १४७ ।।

।। इति श्रीभूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
साधनसमुद्देशेऽपादानाधिकारः ।।

अपायविवक्षैवात्र कर्तव्या इति। लक्षणप्रपञ्चौ हि पुरोधाय व्याकरणं प्रवृत्तम्। यथोक्तम्— तत एव विधयः' इत्यादि।

अस्यार्थः—व्याकरणे लक्षणप्रपञ्चाभ्यामेव विधयः प्रवृत्ता इति ।। १४७ ।।

।। इति श्रीब्रह्मीभूतकाशीनाथतनयरघुनाथशर्म-
कृतायामम्बाकर्त्र्यां साधनसमुद्देशे
अपादानाधिकारः ।।

# अथाधिकरणाधिकारः

इदानीं विभक्तिविधानक्रमायातं षष्ठ्यर्थं शेषलक्षणमतिक्रम्य कारकविशेषप्रक्रमायातमधिकरणं सप्तम्यर्थं विचारयति—

कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् ।
उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ।। १४८ ।।

लोकेऽधिकरणविशेषेण द्रव्यगुणक्रियाविषयमभिधीयते, शास्त्रे त्वस्मिन् कारकप्रकरणात् क्रियाक्षेपे क्रियायामेवोपकारविशेषेण धारणलक्षणेनाधिकरणसंज्ञावतिष्ठते। तत्र क्रिया कर्तरि कर्मणि वावतिष्ठत इति तयोः क्रियाधारणादधिकरणसंज्ञावचनात् पर्यायेण स्यात्। कर्मस्थक्रियाविषया वा कर्तृसंज्ञा, कर्तृस्थ-

---

इदानीं विभक्तिविधानक्रमेण शेषलक्षणस्य षष्ठ्यर्थस्य निरूपणमवसरप्राप्तमतिक्रम्य --

कर्ता कर्म च करणं सम्प्रदानं तथैव च ।
अपादानाधिकरणे इत्याहुः कारकाणि षट् ।।

इति कारकविशेषप्रक्रमवर्णनायातमधिकरणं सप्तम्यर्थं विचारयति—कर्तृकर्मव्यवहितामिति ।

अस्यार्थः—कर्तृकर्मव्यवहिताम् = कर्तृकर्मद्वारिकां क्रियां क्रियते ययेति करणव्युत्पत्त्या व्यापाररूपाम्, क्रियते या इति कर्मव्युत्पत्त्या फलरूपां वा असाक्षाद् धारयत् सत् फलसिद्धिरूपायां क्रियासिद्धौ उपकुर्वत् कारकं शास्त्रेऽधिकरणं स्मृतमिति। अधिकरणकारकस्य क्रियासिद्धावुपकारश्च कर्तृकर्मधारणमेवेति। कारिकायां व्यवहितामित्युक्तेऽपि असाक्षादिति वचनं लोकेऽपि अधिकरणकारकस्य क्रियाम्= धारणं व्यवधानं दृश्यत इति लोकानुभवसंवादार्थमिति ।

अयं भावः—लोकेऽधिकरणविशेषवाचकेनाधिकरणपदेन द्रव्यगुणक्रियाविषयकमधिकरणमुच्यते। शास्त्रे त्वस्मिन् कारकप्रकरणात् क्रियाऽऽक्षेपे क्रियायामेवासाक्षाद् धारणरूपेणोपकारविशेषेणाधिकरणसंज्ञा व्यवतिष्ठते। तत्र व्यापाररूपा क्रिया कर्तरि, फलरूपा च कर्मणि व्यवतिष्ठत इति तयोः क्रियाधारणादधिकरणसंज्ञावचनबलात् पर्यायेण स्यात्। भावकर्मणोरिव कर्मस्थक्रियाविषया वा कर्तृसंज्ञा 'पच्यते तण्डुलः स्वयमेव' इतिवत्, कर्तृस्थक्रियाविषया वा कर्मसंज्ञा 'दृश्यते घटः स्वयमेव, गम्यते ग्रामः स्वयमेव' इतिवत् स्यादिति तत्र यथायोगम्=यथासूत्रं कर्तृ-

क्रियाविषया वा कर्मसंज्ञा स्यादिति तत्र यथायोगं कर्तृकर्मसंज्ञाभावेऽधिकरणसंज्ञा प्रसज्यत इत्याशङ्क्योक्तम् —कर्तृकर्मव्यवहितामित्यादि ।

'कटे आस्ते, स्थाल्यां पचति' इति कर्तृकर्मधारणात् तत्समवेतायां क्रियाया-मुपकारकमधिकरणं पारम्पर्येण । असति ह्याधारे कर्तृकर्मणी क्रियोपकारं न प्रति-पद्येयातामिति तयोराधार उपकुर्वन् क्रियामपि तत्स्थामुपकरोति ।

'कारकाधिकारे च तरतमयोगो नास्ति' इत्यत्र परम्परया क्रियाधारकेऽधि-करणसंज्ञाया सावकाशत्वात् साक्षात् क्रियाधारकयोः परत्वात् कर्तृकर्मसंज्ञे एव । कारकाणां च क्रियानिमित्तत्वं यथा तथापि भवदाश्रीयत इति व्यवधानेन क्रियोप-कारकत्वमविरुद्धम् । व्यवहिताम्' इत्युक्तेऽपि 'असाक्षात्' इति वचनं लोकानु-सारेणापि पदार्थव्यवस्थायामधिकरणस्य क्रियाधारणं प्रति व्यवधानपरिपोष-णार्थम् ।

तथा हि शब्दात् प्रतीयमानोऽर्थो लौकिकः संस्कारनिमित्तमुच्यते । 'पृथिव्यां शेते, स्थाल्यां पच्यते' इत्यादौ चाख्यातशब्दात् क्रियाविशिष्टे कर्तृकर्मणी प्रतिपद्येते,

---

कर्मसंज्ञाभावे=कर्तृकर्मसंज्ञयोः सत्त्व एव अधिकरणसंज्ञावचनबलादधिकरणसंज्ञा प्रसज्यत इत्याशङ्क्योक्तम्=कर्तृकर्मव्यवहितामित्यादि ।

'कटे आस्ते, स्थाल्यां पचति' इत्यत्राधिकरणकारकं कर्तृकर्मधारणात् कर्तृकर्म-समवेतायां क्रियायां पारम्पर्येणोपकारकम् । आधाराभावे हि कर्तृकर्मणी क्रियोप-कारं न कुर्यातामित्याधारः कर्तृकर्मणोर्धारणादुपकुर्वन् तत्स्थां क्रियामप्युपकरोति ।

"साधकतमं करणम्" (पा० १।४।४२) इत्यत्र तमब्ग्रहणेन ज्ञाप्यते कारकाधिकारे तरतमयोगः=अतिशययोगो नास्तीति । तेनात्र 'स्थाल्यां पचति' इत्यादौ कर्मपरम्परया क्रियाधारके स्थाल्यादौ 'कटे शेते' इत्यादौ च कर्तृपरम्परया क्रियाधारके कटादौ अधिकरणसंज्ञायाः सावकाशत्वादनपवादत्वेन साक्षात् क्रिया-धारकयोः कर्तृकर्मणोः परत्वादधिकरणसंज्ञां बाधित्वा कर्तृकर्मसंज्ञे एव कारकाणाञ्च क्रियानिमित्तत्वं यथाकथञ्चित् साक्षात् परम्परया वा भवदाश्रीयत इति अधिकरणस्य कर्तृकर्मव्यवधानेन क्रियोपकारकत्वं कारकत्वेन सह न विरुध्यते । व्यवहिता-मित्युक्तेऽपि असाक्षादिति वचनं लोकानुसारेणाप्यधिकरणपदार्थव्यवस्थायामधि-करणस्य क्रियाधारणं प्रति कर्तृकर्मव्यवधानस्य प्रागुक्तस्य परिपोषणार्थम् ।

तथा हि—शब्दात् प्रतीयमानो लौकिकोऽर्थो व्याकरणे संस्कारनिमित्तम्=शब्दसाधुत्वनिमित्तमुच्यते । 'पृथिव्यां शेते, स्थाल्यां पच्यते' इत्यादौ चाख्यात-शब्दात्=तिङ्शब्दात् क्रियाविशिष्टे कर्तृकर्मणी प्रतिपद्येते=प्रतीयेते, न क्रिया-

न क्रियामात्रं ततो निष्कृष्टरूपमिति क्रियाश्रयधारणादेव लोकेऽधिकरणस्य क्रियोपकारः प्रतीयते, न साक्षात् ।। १४८ ।।

इदानीमौपश्लेषिकादिभेदेऽप्यधिकरणस्य सामान्यमेतल्लक्षणमनुगतमित्याह—

उपश्लेषस्य चाभेदस्तिलाकाशकटादिषु ।
उपकारास्तु भिद्यन्ते संयोगिसमवायिनाम् ।। १४९ ।।

उपश्लेष आधारस्याधेयेन सम्बन्धः । यद्वशादसावाधारः । तस्य त्रिष्वप्यधिकरणेष्वभेदः । अन्यथा तु संयोगिन्याधारे सम्बन्धः, अन्यथा तु समवायिनीति सम्बन्धि(न्ध)भेदाद्भिन्नत्वेन व्यपदेशः ।

तथा हि 'कटे आस्ते देवदत्तः' इति संयोगिनः कटस्य सकलावयवव्याप्त्या देवदत्तोपश्लेषो न दृश्यते; अपि तु कतिपयावयवव्याप्त्येत्याविशेषादौपश्लेषिक इति सामान्यसंज्ञयाधारोऽयमुच्यते ।

तिलेषु तैलमिति तु समवायिना तैलरसेन तिलानां समस्तावयवव्याप्त्या लोकप्रसिद्ध्या सम्बन्धाद् व्यापकमेतदधिकरणम् । 'खे शकुनयः' इत्यत्र त्वाकाशस्य

---

मात्रम्, ततः=क्रियाविशिष्टाभ्यां कर्तृकर्मभ्यां निष्कृष्टरूपमिति क्रियाश्रयकर्तृकर्मधारणादेव लोकेऽधिकरणस्य क्रियोपकारः प्रतीयते, न साक्षादिति ।। १४८ ।।

इदानीमौश्लेषिकाभिव्यापकवैषयिकभेदैरधिकरणस्य त्रिधा भेदेऽपि पूर्वकारिकोक्तं लक्षणं सर्वाधिकरणसामान्यं सर्वानुगतमित्याह—उपश्लेषस्य चेति ।

अस्यार्थः—तिलाकाशकटादिषु क्रमेणाभिव्यापकवैषयिकौपश्लेषिकरूपेषु अधिकरणेषु उपश्लेषस्य चाधारस्याधेयेन सह सम्बन्धसामान्यस्य त्वभेदः, संयोगिसमवायिनामाधाराणां त्रिधा भिन्नानामुपकारस्तु अविनाशादयो यथायोगं वक्ष्यमाणा भिद्यन्त इति ।

अयं भावः—यद्वशादाधारव्यपदेशो भवति असावुपश्लेषः, आधारस्याधेयेन सह सम्बन्धरूपः । तस्य त्रिष्वप्यधिकरणेषु प्रागुक्तेष्वभेदः । संयोगिनि त्वाधारेऽन्यथासम्बन्धः, समवायिनि त्वन्यथेति सम्बन्धभेदादाधाराणामौपश्लेषिकत्वादिना भेदेन व्यपदेशः ।

तथा हि—'कटे आस्ते देवदत्तः' इत्यत्र संयोगिनः कटस्य तिलद्रव्यादिवत् सकलावयवव्याप्त्या देवदत्तोपश्लेषो न दृश्यते; अपि तु कतिपयावयवव्याप्त्या इत्यविशेषात्=अभिव्यापकत्वरूपविशेषराहित्याद् औपश्लेषिक इति सामान्यसंज्ञया=उपश्लेषरूपाधिकरणत्रयसाधारणधर्मप्रयुक्तया संज्ञया अयमाधार उच्यते । 'तिलेषु तैलम्' इति तु तिलरूपाधारसमवायिना तैलरसेन तिलानां समस्तावयव-

तात्त्विकावयवाभावात् कल्पितप्रदेशतया सम्बन्धाद्वैषयिकमेतदधिकरणम् । अनन्यत्र भावश्चात्र विषयार्थः ।

एवम् 'जले मत्स्याः' इत्याधारप्रदेशापेक्षया चैतदौपश्लेषिकमधिकरणम् । 'गुरौ वसति' इति शिष्याणां गुर्वधीनायां वृत्तौ वैषयिकमधिकरणं गुरुः । उपश्लेषोऽप्यत्र बौद्धः ।

एवम् 'युद्धे सन्नह्यति' इति युद्धाभिसन्धिना सन्नहनस्य तनुत्रादिबन्धनरूपस्य प्रवृत्तेर्युद्धं विषयः । 'गङ्गायां गावः' इति गङ्गाशब्दः सामीप्यात् प्रदेशवृत्तिरित्यौपश्लेषिकमधिकरणम् । 'शत्रोरभावे सुखम्' इत्यादावभावस्य बौद्धं कारकत्वमिति प्रागेव निर्णीतम् ।। १४९ ।।

के पुनरुपकारा इत्याह—

अविनाशो गुरुत्वस्य प्रतिबन्धे स्वतन्त्रता ।
दिग्विशेषादव(प)च्छेद इत्याद्या भेदहेतवः ।। १५० ।।

---

व्याप्त्या लोके प्रसिद्धया सम्बन्धाद् व्यापकमेतदधिकरणम् । 'खे शकुनय' इत्यत्र त्वाकाशस्य वस्तुतोऽवयवाभावात् प्रदेशकल्पनया सम्बन्धकल्पनाद् वैषयिकमेतदधिकरणम् । अनन्यत्र भावश्च=अन्यत्र भावाभावश्च, अत्र=यत्रावयवो नास्ति वस्तुभूतः, तत्र विषयशब्दार्थः ।

एवम्='कटे आस्ते' इति वत्, 'जले मत्स्याः' इत्यत्र जलैकदेशरूपाधारप्रदेशापेक्षया चैतदौपश्लेषिकमधिकरणम् । 'गुरौ वसति' इति शिष्याणां गुर्वधीनायां वृत्तौ=गुरुसमीपस्थितौ वैषयिकमधिकरणं गुरुः गुर्ववयवानां व्यस्तानां समस्तानां वा स्थित्याधारतयाऽनपेक्षणात् । उपश्लेषः=गुरुशिष्ययोराधाराधेयभावरूपः सम्बन्धोऽप्यत्र बौद्धः ।

एवम् 'युद्धे सन्नह्यति' इत्यत्र युद्धाभिसन्धिना=युद्धाभिप्रायेण कवचखड्गादिबन्धनरूपस्य सन्नहनस्य प्रवृत्तेर्युद्ध विषयः । 'गङ्गायां गावः' इत्यत्र गङ्गाशब्दः स्वशक्यार्थप्रवाहसामीप्यात् तटरूपे प्रदेशे=लक्षणया गङ्गाशब्दार्थैकदेशे वृत्तिरित्यौपश्लेषिकमधिकरणम् । 'शत्रोरभावे सुखम्' इत्यादावभावस्य बौद्धमुपश्लेषमादायाधिकरणकारकत्वमिति प्रागेव निर्णीतम् । एतच्च हेलाराजानुरोधेनोक्तम् ।

वस्तुतस्तु—'गुरो वसति', 'युद्ध सन्नह्यति', 'शत्रोरभावे सुखं जायते' इत्यादौ सर्वत्रैव सत्सप्तम्यैव निर्वाहः समुचितः, बौद्धोपश्लेषसमाश्रयेण वैषयिकाधिकरणत्वकल्पनाया गुरुतराया अगतिकगतित्वात् ।

यद्वा--अन्तरङ्गत्वहेतुमूलकेन "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" (परि० १०४) इति न्यायेन तत्र तत्र हेलाराजोक्तमेव न्याय्यमिति दिक् ।। १४९ ।।

अविनाशः तैलस्य तिलकृत उपकारः। तिलविनाशे हि तैलं विकीर्णं नश्येत्। 'पर्यङ्के शेते' इति शयितुर्गुरुत्वप्रतिबन्धे स्वतन्त्रः कर्ता आधारः। अन्यथा गुरुत्वात् पतनं भवेत्। 'खे शकुन्तादयः' इत्यादौ खेन शकुन्तादीनामधरदिशा सम्बन्धस्यापावर्तनमित्ययमेव तस्याधेयोपयोगः। आदिशब्दाच्छकटादिनाधारेण देशविशेषसम्प्राप्तिः। गुरुणा च शिष्याणां संस्कारातिशयः, पर्यङ्कादिना च सौस्थित्यमित्येवमादय उपकाराः प्रतिपाद्यन्ते।

'प्राच्यामादित्य उदेति, प्रतीच्यामस्तमेति, दक्षिणस्यामगस्त्यः, उत्तरस्यां ध्रुवः' इति। दिग्विशेषसम्बन्धप्रतिपादनमात्रोपयोगमेतदधिकरणम् ॥ १५० ॥

मूर्तानां सर्वेषामन्याधीनायां स्थितौ मूर्तस्याधारस्याप्यपरमधिकरणमिति पर्यन्तवर्ति मुख्यमधिकरणं किमित्याह—

---

संयोगिसमवायिनां भिद्यमाना उपकाराः के इति जिज्ञासायामाह—अविनाश इति।

अस्यार्थः—'तिलेषु तैलम्' इत्यत्र अविनाशः तैलस्य तिलकृतो धारणमूलक उपकारः। 'पर्यङ्के शेते' इत्यत्र शयितुर्गुरुत्वस्य प्रतिबन्धे आधारस्य स्वतन्त्रता=कर्तृता लोके प्रसिद्धा, तेन पर्यङ्कादिना आधारेण शयितुराधेयस्य सौस्थित्यमुपकारः। 'खे शकुनयः' इत्यत्र दिग्विशेषात्=अधरदिग्रूपादाधेयसम्बन्धस्यापच्छेदः=अपावर्तनम् आधेयस्य आधारकृत उपकार इत्याद्या उपकारा उपश्लेषकृताभेदानामाधाराणां भेदहेतव इति।

अयं भावः—अविनाशः विनाशप्रागभावरूपो वर्तमानेन तिलेन संरक्ष्यमाणस्तैलस्य तिलकृत उपकारः। तिलविनाशे हि तैलं विकीर्णं विनश्येत्। 'खे शकुन्तादयः' इत्यादौ खेन शकुन्तादीनामधरदिशा सह सम्बन्धस्यापावर्तनमित्ययमेव तस्याधेयोपयोगः=आकाशस्य शकुन्तादिषूपकारः। 'पर्यङ्के शेते' इत्यत्र शयितुर्गुरुत्वप्रतिबन्धे स्वतन्त्रः कर्त्ता आधारः, अन्यथा गुरुत्वात् शयितुः पर्यङ्कात् पतनं भवेत्। तेन पर्यङ्कादिना शयितुर्गुरुत्वप्रतिबन्धः, सौस्थित्यश्चोपकारः। आदिशब्दात् शकटादिनाऽऽधारेण देशविशेषसम्प्राप्तिराधारेणाधेयस्योपकारः 'शकटे याति', 'गजे याति', 'विमाने चरति' इत्यादौ। गुरुणा च शिष्याणां संस्कारातिशयः, इत्येवमादय उपकारास्तत्र तत्र प्रतिपाद्यन्ते।

'प्राच्यामादित्य उदेति, प्रतीच्यामस्तमेति, दक्षिणस्यामगस्त्यः, उत्तरस्यां ध्रुवः' इत्यादिषु स्वस्वसम्बन्धप्रतिपादनानुकूल्यरूप एवोपकारोऽधिकरणेनाधेयस्य क्रियत इति ॥ १५० ॥

मूर्तानाम्=परिच्छिन्नपरिमाणवतां पदार्थानां सर्वेषामन्याधीनायां स्थितौ प्रमाणतः सिद्धायां मूर्तस्याधाररस्याप्यपरमधिकरणं दृष्टमित्याधारपरम्परायां

आकाशमेव केषाञ्चिद् देशभेदप्रकल्पनात् ।
आधारशक्तिः प्रथमा सर्वसंयोगिनां मता ।। १५१ ।।

ग्रहनक्षत्रविमानादीनां तावदाकाशमेवाधिकरणं प्रसिद्धम् । येषामपि पृथिव्येकदेशो रथादीनामधिकरणम्, तेषामपि तस्य पृथिव्येकदेशस्याकाशाधरत्वात् पारम्पर्येणाकाशमेवाधार इति सर्वग्रहणेनाह । समवायिनां तु स्वावयवा आधारः । तत्रापि पर्यन्ते परमाणवः । तेषां चाकाशमेव देशप्रविभागकारणमाधार इति मुख्याधारशक्तिराकाशाश्रया भावानाम् ।

न चैवमेकदेशतया सङ्करः, स्वावष्टब्धपरिमितदेशमुखकभागप्रकल्पने भिन्नतयाकाशं देशभावं प्रतिपद्यते यतः । तदुक्तम्—'देशभेदप्रकल्पनात्' इति ।

संयोगिनां देशतया व्यवह्रियमाणस्याकाशभेदस्य तैरेव संयोगिभिरव्यापकैः परिकल्पनादाकाशं सर्वेषामसङ्करेणाधिकरणमित्यर्थः ।

---

प्रमाणानुरोधेन स्वीक्रियमाणायां पर्यन्तवर्ति निराधारं मुख्यमधिकरणं किमित्याह -- आकाशमेवेति ।

अस्यार्थः—केषाञ्चिन्मते = आकाश ये स्वीकुर्वन्ति दार्शनिकास्तेषां मते सर्वेषां संयोगिनां पदार्थानां प्रथमा मुख्या आधारशक्तिर्मूर्तैरव्यापकैः संयोगिभिर्द्रव्यै-रुपाधिभूतैराकाशस्य देशभेदप्रकल्पनात् = अवश्यभेदप्रकल्पनाद् आकाशमेव मता इष्टा इति । आकाशमुद्दिश्य विधीयमानाया आधारशक्तेः स्त्रीत्वाद् मता इत्यत्र स्त्रीत्वमिति ।

अयं भावः—अन्तरिक्षे सञ्चरतां ग्रहनक्षत्रविमानादीनां तावदाकाशमेवाधि-करणं प्रसिद्धम् । येषामपि रथादीनां पृथिव्येकदेशोऽधिकरणम्, तेषामपि पारम्पर्येण आकाशमेवाधारः, तस्य पृथिव्येकदेशस्य रथाधारभूतस्याकाशाधारकत्वादिति सर्व संयोगिनामित्यत्र सर्वग्रहणेनाह । समवायिनां तु = स्वावयवसमवेतानामवयविनां तु स्वावयवा आधारः । तत्रापि पर्यन्ते परमाणवो द्व्यणुकानामाधारः । तेषामपि देश-प्रविभागकारणम् = अवयवभेदकल्पनाकारणमाकाशमेवाधार इति मुख्याभावानामा-धारशक्तिराकाशमाश्रिता ।

न चैवमेकदेशतया = सर्वेषां भावानामाकाशे सामानाधिकरण्येन सङ्करः, स्वावष्टब्धपरिमितदेशमुखकभागप्रकल्पने तत्तदाधेयावष्टब्ध-तत्तदाधेयपरिच्छिन्न तत्तदाधाररूपदेशद्वारा आकाशस्यावयवभेदप्रकल्पने आकाशस्य भिन्नतया तत्तदाधेयाधारदेशत्वप्रतिपत्तेः । तदुक्तम्—देशभेदकल्पनादिति ।

स्वसंयोगिनां ग्रहनक्षत्रादीनां देशतया व्यवह्रियमाणस्याकाशे विशेषस्य तैरेव संयोगिभिरव्यापकैरुपाधिभिः परिकल्पनादाकाशं सर्वेषामसङ्करेणाधिकरण-मित्यर्थः ।

'केषाञ्चित्' इति, ये ह्याकाशमभ्युपयन्ति संसर्गवादिनस्तेषां मत इत्यर्थः ॥ १५१ ॥

तत्रैतत् स्यात्, किमिदमनध्यक्ष्यमाणमाकाशं नाम ? शब्देन गुणेन गुणी सोऽनुमीयत इति चेत्, आकाशगुणत्वस्यैवासिद्धेः शब्दस्य, अनन्वय्येतत्। न स्पर्शवद्विशेषगुणः शब्दः। अयावद्द्रव्यभावित्वादाश्रयादन्यत्रोपलब्धेरित्यादि-हेतूपन्यासो(से) चायं रूपादीनामपि, सत्यप्याश्रये निमित्तान्तरात् परिवृत्तिदर्शनात्। आकाशस्य च द्रव्यत्वासिद्धौ शब्दाश्रयत्वस्य विवादास्पदत्वाद् अयावद्द्रव्यभावित्वं शब्देऽसिद्धम्, कर्णशष्कुल्यवच्छिन्नाकाशदेश एवोपलब्धेश्चाश्रयादन्यत्रोपलभ्यमानत्वमसिद्धम्, समानेन्द्रियग्राह्यक्षणिकानेकविशेषगुणायोगित्वमपि स्पर्शवतां स्वकृतान्तनियतमित्याशङ्क्याकाशसद्भावे लोके प्रसिद्धं लिङ्गमाह—

---

केषाञ्चिदिति। ये ह्याकाशमभ्युपयन्ति संसर्गवादिनः—ज्ञायमानस्य संसर्गस्य प्रवृत्तिं प्रति कारणत्ववादिनः, तेषां मत इत्यर्थः।

अयं भावः—वाक्यं हि प्रवृत्तये निवृत्तये वा प्रयुज्यते। वाक्यार्थरूपसंसर्गज्ञानञ्च प्रवृत्तिं निवृत्तिं प्रति वा कारणम्। 'इदं नक्षत्रमत्र तिष्ठति' इति वाक्याद्धि एतद्देशनक्षत्रयोः संसर्गः प्रतीयते। संसर्गज्ञानाच्च तन्नक्षत्रं प्रति संदर्शनगमनाद्यनुकूला प्रवृत्तिः। आकाशासत्त्वे च सदसतोराकाशनक्षत्रयोः संसर्गायोग इत्याकाशसिद्धिः संसर्गवादिनां मते।

ये तु प्रवृत्तिं प्रति संसर्गज्ञानस्य कारणत्वं न मन्वते; किन्तु तां प्रति असंसर्गाग्रहस्य प्रतिबन्धकाभावरूपस्य कारणत्वं वदन्ति, तेषां मते भूम्यादिकमत्र पदार्थः। तेन सतोरेव भूम्यादिनक्षत्रयोरसंसर्गाग्रहः प्रभाकरमते 'इदं रजतम्' इत्यत्रेव प्रवृत्तिं प्रति कारणमिति नास्ति निरुपाख्यस्याकाशस्य सिद्धिरिति। बौद्धा आवरणाभावरूपमाकाशं मन्वते॥ १५१ ॥

तत्राकाशस्य सर्वसंयोगिनो मुख्याधारशक्तित्वाभ्युपगमे इदमाशङ्क्यते, किमिदमप्रत्यक्षीक्रियमाणमाकाशं नाम ? शब्दो गुणः क्वचिदाश्रितः, गुणत्वाद् रूपादिवदित्येवं शब्देन गुणेन गुणी सोऽनुमीयत इति चेत्, शब्दे आकाशगुणत्वस्यैवासिद्धेर्गुणत्वरूपो हेतुरनन्वयी पक्षे इति स्वरूपासिद्धः। शब्दो न स्पर्शवद् विशेषगुणः, अयावद्द्रव्यभावित्वात्, आश्रयादन्यत्रोपलब्धेश्चेत्यादिहेतूपन्यासेन शब्दस्याकाशगुणत्वसाधने चायं हेतू रूपादीनां स्पर्शवद् विशेषगुणानामपीति व्यभिचरितः, सत्यप्याश्रये निमित्तान्तरात् तेषां परिवृत्तिदर्शनादाकाशस्य चावरणाभावरूपस्य द्रव्यत्वासिद्धौ शब्दात्मकगुणाश्रयत्वस्य विवादास्पदत्वात्। अयावद्द्रव्यभावित्वं शब्देऽसिद्धम्, कर्णशष्कुल्यवच्छिन्नाकाशदेश एवोपलब्धेश्चाश्रयादन्यत्रोपलभ्यमानत्वमसिद्धम्, स्पर्शवन्ति द्रव्याणि न शब्दाधिकरणानि समानेन्द्रियग्राह्यक्षणिकानेकविशेषगुणायोगित्वादिति परिशेषानुमाने प्रयुक्तोऽयं हेतुरपि स्पर्शवतां स्वकृतान्त-

**इदमत्रेति भावानामभावान्न प्रकल्पते ।**
**व्यपदेशस्तमाकाशनिमित्तं सम्प्रचक्षते ।। १५२ ।।**

इहाधारशक्तिरेवान्यथानुपपत्तेराकाशसद्भावं गमयति । तथा हि—शब्दप्रमाणकानां शब्दार्थोऽर्थः । अस्ति चायं शब्दः—इदं नक्षत्रमत्र तिष्ठतीति । अत्र इति यन्निर्दिष्टं तत्किञ्चन वस्तु भवत् पृथिव्यादेरन्यत्वादाकाशाख्यामवलम्बते । न चावस्त्वेतत्, सर्वसामर्थ्यविरहलक्षणादवस्तुन एवंविधव्यपदेशाभावात् । निरूप्य हि व्यपदेशः, निरूपणा च वस्तुनिबन्धना, शाब्दे व्यवहारे निरूपितस्यैव वस्तुत्वात् । अत एव 'शत्रोरभावे सुखम्' इत्यादौ निरूप्यमाणस्याभावस्याधारभाव इत्यस्ति लोकप्रसिद्धव्यवहारनिमित्तमाकाशमाधारभावापन्नम् । पदार्थानां परमार्थविचारे तु सर्वं प्रपञ्चरूपमसत्, अद्वयस्यैव सत्त्वादित्यविचारितरमणीयलौकिकपदार्थाश्रया लक्षणप्रवृत्तिरेवमविरुद्धेत्याशयः ।। १५२ ।।

---

नियतः—न्यायदर्शनमात्रप्रसिद्ध इति कथमद्वयाप्रसिद्धयाकिञ्चित्कर इत्याशङ्क्याकाशसद्भावे लोके प्रसिद्धं लिङ्गमाह—इदमत्रेति इति ।

अस्यार्थः—'इदं नक्षत्रमत्र तिष्ठति' इति यो व्यपदेशः शाब्दो व्यवहारो वाक्यप्रयोगरूपः, स नक्षत्राधारभूतानां भावानां भूतानामभावान्न प्रकल्पते, न प्रसिध्यति । अतस्तं व्यपदेशममूर्ताकाशनिमित्तकं सम्प्रचक्षते संसर्गवादिन इति ।

अयं भावः—इहाधारशक्तिरेव वक्ष्यमाणव्यवहारान्यथाऽनुपपत्त्या आकाशसद्भावं गमयति ।

तथा हि—शब्दप्रमाणकानां वैयाकरणादीनां शब्दार्थं एव बहिः सन्नसन् वाऽर्थः । अस्ति चायं शाब्दो व्यवहारः 'इदं नक्षत्रमत्र तिष्ठति' इति । अत्र 'अत्र' इति पदेन यन्निर्दिष्टं तत् किञ्चन वस्तु भवत् पृथिव्यादेरन्यत्वादाकाशाख्यामवलम्बते ।

न चावस्तु एतत्, सर्वसामर्थ्यविरहरूपादवस्तुन एवंविधव्यपदेशाभावात्, सदसतोरुपरागाभावात् । निरूप्य हि=अर्थस्वरूपमितरपदार्थसंसर्गयोग्यत्वेन विचार्य हि व्यपदेशः, निरूपणा च वस्तुनिबन्धना=वस्तुप्रयुक्ता, शाब्दे व्यवहारे निरूपितस्यैव=गोचरीकृतस्यैव वस्तुत्वात् । अत एव 'शत्रोरभावे सुखम्' इत्यादौ शाब्दे व्यवहारे शब्देन निरूप्यमाणस्याभावस्य वस्तुत्वेन सुखाधारभाव इत्यस्ति प्रागुक्तलोकव्यवहारनिमित्तभूतमाकाशं नक्षत्राधारतामापन्नम् । पदार्थानां परमार्थतो विचारे तु सर्वं प्रपञ्चरूपमसत्, अद्वयस्यैव सत्त्वात् । तथा चाद्वयस्य सत्त्ववादिन्यः प्रपञ्चस्य च मिथ्यात्ववादिन्यः श्रुतयः—"सदेव सोम्येदमग्र आसीद् एकमेवाद्वितीयम्, नेह नानास्ति किञ्चन, अतोऽन्यदातम्" इत्याद्याः । इत्येवमविचारितरमणीयलौकिकपदार्थनिमित्तिका लक्ष्येषु लक्षणप्रवृत्तिरविरुद्धा इति एतत्कारिकाशय इति ।। १५२ ।।

आकाशस्य सर्वभावाधारत्वं यदुक्तं तत् सिद्धस्वभावविषयम्, साध्यस्वभावविषयं तु कालस्याधारत्वमित्याह—

कालात् क्रिया विभज्यन्ते आकाशात् सर्वमूर्तयः ।
एतावांश्चैव भेदोऽयमभेदोपनिबन्धनः ।। १५३ ।।

'प्रतिबन्धाभ्यनुज्ञाभ्यां तेन विश्वं विभज्यते' (वा० प० ३, काल० ४) इति वक्ष्यमाणनयेन जन्मस्थितिनिरोधप्रविभागेण भावेषूपकुर्वन् कालः क्रियास्वाधारभावोपगमनेन प्रविभागमवस्थापयति । आकाशं त्वसर्वगतद्रव्यपरिमाण( परिमाणद्रव्य )पदार्थसंयोगाहितप्रविभागमसङ्करेणाधारभावमुपनयन्नियत-

---

आकाशस्य सर्वभावाधारत्वं यदुक्तं प्राक् तत् सिद्धस्वभावभूतं भावविषयकम्, साक्षात् पारम्पर्येण च तज्जनकत्वात् । साध्यस्वभावक्रियारूपभावविषयकं तु कालस्याधारत्वं तज्जनकत्वादित्याह— **कालात् क्रिया इति ।**

अस्यार्थः—ब्रह्मणो द्वे शक्ती—काल आकाशञ्चेति । तत्र कालात् सर्वाः क्रिया भावानां जन्मस्थितिनिरोधाख्याः, अन्याश्च चलनादिका विभज्यन्ते कालादन्यक्रियाभ्यश्च विभागेन जायन्ते, आकाशात् सर्वमूर्तयः सर्वे सिद्धस्वभावा भावा विभज्यन्ते साक्षात्पारम्पर्येण वा जायन्ते । तथा च श्रुतिः "तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या अन्नौषधयः" इत्यादि । एतावाँश्चैव = एतावानेव चायमभेदोपनिबन्धनः = न विद्यते भेदो यस्य तदभेदं ब्रह्म तदुपनिबन्धनं निमित्तं यस्य सोऽभेदोपनिबन्धनो भेदः कालाकाशयोरिति ।

एवञ्च 'तदभिन्नाभिन्नस्य तदभिन्नत्वनियमः' इति न्यायेन कालाकाशयोरपि अभेद एवेति सिद्धमिति । कारकाणां क्रियाधारत्वं तु कालं द्वारीकृत्यैवेति ध्येयमिति ।

अयं भावः —"प्रतिबन्धाभ्यनुज्ञाभ्यां तेन विश्वं विभज्यते ।" इति वक्ष्यते ( वा० प० ३, काल० ४ )

अस्यार्थः—विश्वस्य जन्मस्थित्योः प्रतिबन्धः, निरुद्धस्य च विश्वस्य जन्माभ्यनुज्ञा कालेन क्रियते । तथा च तेन कालेन प्रागुक्तरीत्या प्रतिबन्धाभ्यनुज्ञाभ्यां विश्वं विभज्यते प्रविभागेण अवस्थाप्यत इति । तथा च भावानां जन्मस्थितिनिरोधप्रविभागेण तेषु उपकुर्वन् कालः क्रियासु प्रागुक्तासु जन्मादिषु अन्यासु च स्वयमाधारभावोपगमनेन तेषु प्रविभागमवस्थापयति । आकाशं तु असर्वगतपरिमाणद्रव्यपदार्थसंयोगाहितप्रविभागम् = परिच्छिन्नपरिमाणकद्रव्यसंयोगेन परिच्छेदकल्पनया प्रविभक्तम्, असङ्करेण = भेदेन भावानामाधारभावमापनुवन्नियत-

**देशतया पदार्थव्यक्तीर्विभजते। मूर्तिक्रियाविवर्त्तरूपं चेदं विश्वं भेदावभासबहुलं लभ्यते व्यवहारे यथायथमाद्यायां दशायामभिन्नमपीत्येतदपेक्षया कालाकाशाख्या-भेदनिर्मितः ( भेदो निर्मितः )। कालाकाशाख्योऽभेद उपनिबन्धनं निमित्तमस्य मूर्तिक्रियाविवर्त्तस्येत्यर्थः। दिक्शक्तिनिमित्तोऽपि हि मूर्तिभेदः पूर्वापरदेशात्म-कत्वादाकाशाधारप्रविभागेण निष्ठामुपैति। कालाकाशयोरपि च भेदः शक्तित्वा-दत्यन्ताभिन्नपरब्रह्मनिमित्तः। तस्माद्धि ते शक्ती पृथक् क्रियेते इत्युपपादितं प्रथमकाण्डे ॥ १५३ ॥**

**"उपान्वध्याङ्वसः" (पा० १।४।४८) इत्युपादिपूर्वस्य वसतेराधारः कर्म-संज्ञ उक्तः। तत्र वार्तिककारः प्राह—"वसेरश्यर्थस्य प्रतिषेधः" (वा० १।४।४८) इति। ग्राम उपवसतीति। यथा तिष्ठतिर्गतिनिवृत्तिविशिष्टमवस्थानमाह। एवं भोजननिवृत्तिविशिष्टं वासमुपवसिरिति वार्त्तिककारो मन्यते। तथा चोप-वसेस्तिष्ठतिवद् ग्रामेणास्ति सम्बन्ध इति प्राप्ता कर्मसंज्ञा निवर्त्यते। विवक्षा-**

---

देशतया=नियतदेशवृत्तितया, भिन्नभिन्नदेशवृत्तित्वेन पदार्थव्यक्तीर्विभजते। मूर्तिक्रियाविवर्तरूपम्=मूर्तिमूर्तो भावः, क्रिया च साध्यस्वभावा तद्रूपौ यौ कालाकाशाख्यशक्तिसहकारेण ब्रह्मणो विवर्तौ तद्रूपं चेदं विश्वमाद्यायां दशायाम्= ब्रह्मरूपायां दशायाम्, अभिन्नमपि व्यवहारे यथायथं भेदावभासबहुलं लभ्यते= उपलभ्यत इत्येतदपेक्षया=मूर्तिक्रियाविवर्तरूपस्वकार्यपेक्षया तत्कारणीभूतकाला-काशाख्याभेदो निर्मितः। 'तदभिन्नाभिन्नस्य तदभिन्नत्वनियमः' इति न्यायेन कालाका-शाख्योऽभेद उपनिबन्धनं निमित्तमस्य मूर्तिक्रियाविवर्तरूपस्य विश्वस्य स तथाविध एतावानेव भेदः। ब्रह्मणो दिक्शक्तिनिमित्तकोऽपि हि पूर्वापरदेशात्मको मूर्तिभेदः आकाशरूपस्वाधारप्रविभागेण स्वाधारनिष्ठामुपैति। कालाकाशयोरपि च भेदः, तयोर्ब्रह्मशक्तिरूपत्वात् स्वगतसजातीयभेदे शून्यत्वेन अत्यन्ताभिन्नपरब्रह्मनिमित्तकः। ब्रह्मणो हि ते कालाकाशाख्ये शक्ती मायाशक्त्या पृथक् क्रियेते इत्युपपादितं प्रथम-काण्डे इति ॥ १५३ ॥

"उपान्वध्याङ्वसः" (पा० १।४।४८) इत्युपान्वध्याङ्पूर्वस्य वसतेराधारः कर्मसंज्ञ उक्तः। तत्र वार्तिककारः प्राह—"वसेरश्यर्थस्य प्रतिषेधः" (वा० १।४।४८) इति। अश्यर्थस्य भोजननिवृत्त्यर्थस्येत्यर्थः। 'ग्रामे उपवसति' इत्येतदुदाहरणम्। यथा—'देवदत्तस्तिष्ठति ग्रामे' इत्यत्र तिष्ठतिर्गतिनिवृत्तिविशिष्टमवस्थानमभिधत्ते, एवमुपवसिर्भोजननिवृत्तिविशिष्टं वासमिति वार्त्तिककारो मन्यते। तथा चोपवसे-स्तिष्ठतिवद् ग्रामेणास्ति सम्बन्ध इति प्राप्ता ग्रामस्य कर्मसंज्ञा वार्त्तिकेन निवर्त्यते।

इयांस्तु विशेषः—तिष्ठतौ ग्रामस्य न कर्मसंज्ञाप्राप्तिः। फलव्यापारयोरेक-निष्ठत्वेन तिष्ठतेरकर्मकत्वात्। उपवसेस्तु नाकर्मकत्वम्, फलव्यापारयोर्व्यधिकरण-

नियमश्चानेन वार्तिकेनावेद्यते । नात्र ग्रामादेरीप्सिततमत्वेन विवक्षा; अपि त्वाधारभावेनेत्यर्थः ।

भाष्ये तु प्रत्याख्यातमेतद्वार्तिकम्—"नात्रोपपूर्वस्य वसेर्ग्रामोऽधिकरणम् । कस्य तर्हि? अनुपसर्गस्य । ग्रामेऽसौ वसंस्त्रिरात्रमुपवसतीति"।(भा.वा. १।४।४८)

तत्रायमाशयो भाष्यकारस्य—इह कालविशेषावच्छिन्ना भुजिनिवृत्तिरुपवसेरर्थः । तत्र कालविशेषोऽन्तरङ्गः प्राकृतमेव कर्म । अभुञ्जानस्य त्ववस्थानं निरधिकरणस्य नोपपद्यत, इत्याधारोऽपेक्षितोऽनियतः । स चोपपूर्वस्य वसेर्न सम्बन्धीत्यप्रसक्तैव कर्मसंज्ञा ।

न हि(ननु)एवमपि यदा कालवद् देशोऽपि नियतोऽपेक्ष्यते 'तीर्थे उपवसति' इत्यादौ, तदास्त्येवोपवसेर्देशेन सम्बन्ध इति स्यात् कर्मसंज्ञेत्याशङ्क्य भाष्यं समर्थयितुमाह—

**यद्यप्युपवसिर्देशविशेषमनुरुध्यते ।**
**शब्दप्रवृत्तिधर्मात्तु कालमेवावलम्बते ।। १५४ ।।**

---

त्वात् । फलं चात्र भोजननिवृत्तिरेव । विवक्षानियमश्चानेन वार्त्तिकेनावेद्यते । नात्र ग्रामादेरीप्सिततमत्वेन = भोजननिवृत्तिरूपफलाश्रयतया इष्यमाणत्वेन विवक्षा; किन्त्वाधारभावेनेत्यर्थः ।

भाष्ये तु प्रत्याख्यातमेतद् वार्त्तिकम्—"नात्रोपपूर्वस्य वसेर्ग्रामोऽधिकरणम्, कस्य तर्हि ? अनुपसर्गस्य, ग्रामेऽसौ वसन् त्रिरात्रमुपवसति" इति ।

तत्रायमाशयो भाष्यकारस्य इह कालविशेषावच्छिन्ना = कालविशेषोपलक्षिता भोजननिवृत्तिरुपवसेरर्थः । तत्र कालविशेषोऽन्तरङ्गः = भोजननिवृत्तेर्नियमेनोपलक्षकत्वेन प्रथमोपस्थितिकतया अनियतग्रामादिदेशविशेषापेक्षयाऽन्तरङ्गः, प्राकृतमेव = स्वाभाविकमेव कर्म । अभुञ्जानस्य त्ववस्थानं निरधिकरणस्य नोपपद्यतेऽत्याधारोऽपेक्षितोऽर्थापत्त्या गोचरीकृतोऽनियतः, स चोपपूर्वस्य वसेर्न सम्बन्धी; किन्तु वसेरिति अप्राप्तैव उपवसिनिरूपिता तस्य कर्मसंज्ञा ।

नन्वेवमपि यदा कालवद् देशोऽपि 'तीर्थे उपवसति' इत्यादौ नियतोऽपेक्ष्यते, तदाऽस्त्येवोपवसेर्देशे नः सम्बन्ध इति तस्य कर्मसंज्ञा स्यादित्याशङ्क्योक्तभाष्यं समर्थयितुमाह—**यद्यप्युपवसिरिति** ।

अस्यार्थः—तीर्थादिदेशविशेषे भोजनादिनिवृत्तावभिप्रेतायां यद्यपि 'उपवसिः' = भोजननिवृत्तिरूपा क्रिया तीर्थादिरूपं देशविशेषं स्वाश्रयतयाऽनुरुध्यतेऽपेक्ष्यते, तु = किन्तु शब्दप्रवृत्तिधर्मात् = शब्दशक्तिस्वभावात् कालमेव स्वाश्रयतयाऽवलम्बते = आश्रयते । उपवासाङ्गभूतस्य वासस्य तु तीर्थादिरूपे देशविशेषे सम्बन्ध इति ।

तीर्थादिदेशविशेषमवलम्ब्य भोजनादिनिवृत्तावभिसंहितायां देशविशेषेणापि सम्बन्धो यद्यप्युपपूर्वस्य वसेरस्ति, तथापि नासौ शब्दसामर्थ्योपनिपतितो देश-सम्बन्धः। भोजननिवृत्तिमात्रं ह्युपवासार्थः। स चानियतकालो नोपपद्यत इति कालविशेषोऽन्तरङ्गो गर्भीकृतः शाब्द एव। शब्दस्य प्रवृत्तिरभिधानव्यापारः, तस्या धर्मः स्वभावः, शब्दशक्तिरिति(शब्दशक्तिस्वभाव इति) यावत्। देशस्तु देवदत्तसत्ताया निराधाराया अनुपपत्तेरभिसंहितोऽपि तीर्थादिः शब्दार्थे नान्तर्भवति, भोजननिवृत्त्या देशस्य सम्बन्धाभावात्। तत्र त्वङ्गभूतो यो वासस्तेनैव देश-स्याभिसम्बन्धः।

तथा चाङ्गभूतवसतिक्रियाद्वारेणोपवासेऽधिकरणतां देशः प्रतिपद्यते। साक्षात् कालेनैव तु तथा ( तस्या ) योगः। भोजननिवृत्तेर्नियतकालत्वात्, काल-व्यवधिना भोजनरूपत्वात् तस्याः, तदङ्गस्तु वासो नियतदेश इति तद्द्वारेणात्र देशोऽधिकरणम्।

---

अयमत्र निष्कर्षः—तीर्थादिरूपे देशविशेषे वासपूर्विका कञ्चित्कालं भोजन-निवृत्तिरुपवसेरर्थः। तत्र प्रधानक्रियायां कालस्य प्रथमोपस्थितिकत्वेनान्तरङ्गत्वात् सम्बन्धः, तदङ्गभूतायां वासक्रियायां तु बहिरङ्गस्य देशविशेषस्य सम्बन्ध इति। तथा च 'तीर्थे उपवसति' इत्यस्य शाब्दोऽनुभवः- तीर्थादिदेशे वसन् त्रिरात्र मुपवसतीति।

अयं भावः—तीर्थादिदेशविशेषमवलम्ब्य भोजनादिनिवृत्त्यभिप्रायेण तीर्थे उपवसतीति वाक्यप्रयोगे देशविशेषस्यापि तीर्थादिरूपस्य सम्बन्धो यद्यपि उपपूर्वस्य वसेरस्ति, तथापि नासौ शब्दशक्त्याऽऽयातो देशसम्बन्धः, यतो भोजननिवृत्तिमात्र-मुपवसेः शक्यार्थः। स चानियतकालोऽनुपपन्न इति त्रिरात्रादिरूपः कालविशेषो धात्वर्थगर्भीकृतोऽन्तरङ्गः शाब्द एव। शब्दप्रवृत्तिधर्मादित्यस्य = शब्दस्य प्रवृत्तिर-भिधानव्यापारः, तस्या धर्मः = स्वभाव इत्यर्थः। शब्दशक्तिस्वभाव इति यावत्। देशस्तु तीर्थादिरूपो देवदत्तसत्ताया निराधाराया अनुपपत्तेरर्थापत्त्या लब्धोऽभिप्राय-गोचरोऽपि शब्दार्थे = धात्वर्थे कालविशेषवन्नान्तर्भवति, भोजननिवृत्तिरूपेण धात्वर्थेन सह देशस्य सम्बन्धाभावात्। तत्र — 'तीर्थे उपवसति' इत्यादौ प्रागुक्तधात्वर्थाङ्गभूतेन वासेन सहैव देशस्य सम्बन्धात्।

एवञ्चेदमायाति—एकपदोपस्थापितयोर्धात्वर्थकालयोः परस्परं सम्बन्धोऽन्त-रङ्गत्वात्। भिन्नपदोपस्थापितयोस्तु वासदेशयोर्द्वयोरपि बहिरङ्गयोः परस्परं सम्बन्धः पार्ष्ठिक इति।

तथा च धात्वर्थाङ्गभूतवसतिक्रियाद्वारेणोपवासेऽधिकरणतां देशः प्रतिपद्यते। भोजननिवृत्तौ विशेषणस्य वासस्याधिकरणत्वाद् देशो वासविशिष्टाया भोजन-

अत एव भाष्ये "ग्रामे वसंस्त्रिरात्रमुपवसति" (म० भा० १।४।४८) इति। उपवासाङ्गस्य वासस्य ग्रामेण सम्बन्धो दर्शितः, न तूपवासस्यैव साक्षात्।

सा चात्र वसतिक्रियाङ्गभूतत्वादाक्षिप्तैवेति तद्द्वारेणेष्यते क्रियाकारक-सम्बन्धः। वसत्यङ्गा हि भोजननिवृत्तिर्नियतकाला उपवसेरर्थः। अतश्च ग्राम उपवसतीत्युक्तेऽङ्गभूतवसिक्रियापेक्षा देशस्याधिकरणता॥ १५४॥

प्रधानभूतभोजननिवृत्त्यपेक्षा च कालस्याप्रयुज्यमानस्यापि कर्मता प्रतीयत इत्याह—

**वसतावप्रयुक्तेऽपि देशोऽधिकरणं ततः।**
**अप्रयुक्तं त्रिरात्रादि कर्म चोपवसौ स्मृतम्॥ १५५॥**

भाष्य इति शेषः। श्रूयमाणोपवासक्रियासम्बन्धानर्हत्वाद् ग्रामादिः सामर्थ्यप्राप्तायामप्रयुज्यमानायामपि वसतिक्रियायामधिकरणम्। साधनं ह्यश्रूयमाणामपि योग्यां क्रियामाक्षिपति।

---

निवृत्तेरप्यधिकरणमिति। साक्षात् तु कालेनैव तस्या योगः। भोजननिवृत्तेर्नियत-कालत्वात्, तस्याः कालव्यवधानेन भोजनरूपत्वात्। तदङ्गस्तु—उपवसेरङ्गस्तु वासो नियतदेश इति वासद्वारेणात्र देश उपवसेरधिकरणम्।

अत एव भाष्ये—'ग्रामे वसन् त्रिरात्रमुपवसति' इति उपवासाङ्गस्य वासस्य ग्रामेण सम्बन्धो दर्शितः, न तूपवासस्यैव साक्षात्।

सा चात्र वसतिक्रिया उपवसेर्बहिर्भूतापि तदङ्गभूतत्वात् तेनाक्षिप्तैवेति वास-द्वारेणेष्यते ग्रामस्य उपवसिना सह क्रियाकारकभावरूपः सम्बन्धः। वसत्यङ्गा= वासरूपाङ्गवती हि भोजननिवृत्तिर्नियतकाला उपवसेरर्थः। अतश्च 'ग्राम उप-वसति' इत्युक्ते उपवस्यङ्गभूतवसिक्रियापेक्षा देशस्याधिकरणता, न तु उपवसि-क्रियापेक्षा साक्षात्। वसिक्रियाद्वारा तु उपवसेरपि देशोऽधिकरणमिति त्वन्यत्॥ १५४॥

उपवासाङ्गभूतवासक्रियासम्बन्धे प्रागुक्तरीत्या ग्रामस्य योग्यतया वृत्ते प्रधानभूतभोजननिवृत्तिरूपक्रियापेक्षा च=तु अप्रयुज्यमानस्यापि कालस्य कर्मता प्रतीयत इत्याह—**वसताविति**।

अस्यार्थः—'तीर्थे उपवसति' इत्यादौ वसतौ शत्रन्ते 'वस्'धातौ अप्रयुक्तेऽपि, ततः=तस्मात् तमादाय, देशः=तीर्थरूपः, योग्यतयाऽधिकरणम्। अत्राप्रयुक्तं त्रिरात्रादि च=तु, उपवसौ=उपवस्यर्थे उपवासे, कर्म स्मृतं भाष्ये इति शेष इति।

अयं भावः—'तीर्थे उपवसति' इत्यादौ तीर्थादिदेशः श्रूयमाणोपवासक्रिया-सम्बन्धायोग्यत्वात् सामर्थ्यप्राप्तायाम्=पदार्थसामर्थ्याक्षिप्तायाम् अप्रयुज्यमानाया-

तद्यथा प्रविश पिण्डीमिति भक्षिक्रियां कर्म। अत्र च (क्रिया) विशेषप्रतिपत्तिनिबन्धनाभावादव्यभिचरितसम्बन्धा सामान्यरूपेण सत्ता प्रतीयते। यस्य च ग्रामाधिकरणा सत्ता ग्रामेऽसौ वसतीति वासं प्रत्यधिकरणं ग्रामादिर्देशोऽवतिष्ठते। श्रूयमाणायां तूपवसतिक्रियायां काल एवान्तरङ्गोऽधिकरणमित्यप्रयुज्यमानमप्येतद्योग्यत्वाक्षिप्यते प्रवेशनक्रिययेव गृहम्। तत्र च साक्षादुपवसत्याधारे कृतार्था कर्मसंज्ञाऽङ्गभूतवसतिक्रियाद्वारायातमाधारं ग्रामादिदेशलक्षणं नावगाहते, प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययात्।

कारकाधिकारे च तमब्ग्रहणात् साक्षात्कारकशक्तीनां प्रकर्षो नाद्रियते, न तु क्रियासम्बन्धनिमित्तान्तरङ्गबहिरङ्गभावानादरः, अन्यथा स्वव्यापारे स्वातन्त्र्यात् कर्मणः कर्तृसंज्ञा स्यात्। कर्मसंज्ञायाः सन्दर्शनादिभिरीप्सिततमायां क्रियायां सावकाशत्वात्।

यदा च वासविशेषस्यैवोपशब्देन द्योतनाद्वास एव विशिष्ट उपवसत्यर्थः, तदा कर्मसंज्ञा देशेऽपि चरितार्था 'ग्राममुपवसति' अधितिष्ठतीत्यर्थः।

---

मपि वसतिक्रियायां योग्यतयाऽधिकरणम्। साधनं हि अश्रूयमाणामपि योग्यां क्रियामाक्षिपति।

तद् यथा—'प्रविश पिण्डीम्' इत्यत्र 'पिण्डीम्' इति कर्म स्वान्वययोग्यां भक्षिक्रियामाक्षिपति 'भक्षय' इति। अत्र च = 'ग्राम उपवसति' इत्यत्र च क्रियाविशेषप्रतिपत्तिनिबन्धनाभावात् = वासरूपक्रियाविशेषप्रत्ययनिमित्ताभावाद् अव्यभिचरितसम्बन्धा = नियतसाहचर्यरूपसम्बन्धा क्रिया सामान्यरूपेण सत्ता प्रतीयते। यस्य च ग्रामाधिकरणा सत्ता ग्रामेऽसौ वसति इति वासं प्रत्यधिकरणं ग्रामादिर्देशोऽवस्थितो भवति। श्रूयमाणायां तूपवसतिक्रियायां काल एव योग्यत्वनैयत्याभ्यां पूर्वोपस्थितिकत्वेनान्तरङ्गोऽधिकरणमित्यप्रयुज्यमानमप्येतद् योग्यत्वादाक्षिप्यते, प्रवेशनक्रियया गृहमिव। तत्र च साक्षादुपवसतिरूपप्रधानीभूतक्रियाधारे काले कृतार्था कर्मसंज्ञाऽङ्गभूतवसतिक्रियाद्वारायातमाधारं ग्रामादिरूपं नावगाहते = न स्पृशति, प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययात्।

"साधकतमं करणम्" (पा० १।४।४२) इत्यत्र तमब्ग्रहणाच्च कारकाधिकारे कारकशक्तीनां साक्षात्प्रकर्षः = कारकगतधर्मप्रयुक्तस्वाभाविकप्रकर्षो नाद्रियते, न तु क्रियासम्बन्धनिमित्तकान्तरङ्गबहिरङ्गभावप्रयुक्तप्रकर्षानादरः क्रियते, अन्यथा = सर्वविधप्रकर्षानादरे स्वव्यापारे स्वातन्त्र्यात् कर्मणः कर्तृसंज्ञा स्यात्, कर्तृसंज्ञायां कार्यायां स्वातन्त्र्यप्रकर्षानादरात्। संदर्शनादिभिरीप्सिततमायां क्रियायां कर्मसंज्ञायाः सावकाशत्वाद् न सा कर्तृसंज्ञायाः प्रकृताया बाधिका भविष्यति।

यदा च वासविशेषस्यैव = अधिष्ठानपूर्वकस्य वासस्यैव उपशब्देन द्योतनादधिष्ठानपूर्वकत्वविशिष्टो वास एवोपवसतेरर्थः, तदा कर्मसंज्ञा देशेऽपि चरितार्था,

अतश्च भोजननिवृत्त्यर्थतायामुपवसेः साक्षात्काल आधारः कर्मसंज्ञः, देशस्त्वभिसंहितोऽप्यङ्गभूतवसिद्वारेणैवाधारः, न साक्षादिति स्थितम् ।

यस्तु निवृत्तिरूपत्वादुपवसेराधारेणासम्बन्ध इति व्याचष्टे तस्य कालेनाप्याधारेणासम्बन्धोऽत्र स्यात् । अस्ति च गतिनिवृत्तिवचनस्यापि तिष्ठतेराधारेण सम्बन्धः । सर्वव्यापारोपरमलक्षणस्य ( लक्षणायाः ) 'ग्रामे तिष्ठति, ग्राम आस्ते' इति निवृत्तेः क्रियान्तरमपावर्तयन्त्याः क्रियात्वमविरुद्धमेव ।

कारकाणां हि प्रवृत्तिविशेषः फलानुमेयः क्रिया । स चात्र नियतकालभोजननिवृत्तिरूपः स्फुट एव ।

न ( स ) चापि संकल्पविशेष एव मानसो व्यापारो निवृत्तिः, सन्दर्शनादीनां प्रधानक्रियया सह भेदाभावात् । 'युद्धाय सन्नह्यते' इत्यादावेव भेदविवक्षेत्युक्तम् ।

---

ग्राममुपवसति, अधिष्ठाय वसतीत्यर्थः । अतोऽपि कर्मसंज्ञाप्राग् आपादितायाः कर्तृसंज्ञाया बाधिका न स्यात् । अतश्च = एतस्मात् सन्दर्भाच्चेदमायातम्–उपवसेर्भोजननिवृत्त्यर्थतायां काल उपवासस्य साक्षादाधार इति कर्मसंज्ञः, देशस्तु उपवासाधारत्वेनाभिप्रेतोऽपि उपवासाङ्गभूतवासद्वारेणैव तदाधारो न साक्षादिति ।

यस्तु व्याचष्टे उपवसेर्भोजननिवृत्तिरूपाभावरूपत्वाद् देशरूपेणाधारेणासम्बन्धो भावाभावयोः सदसतोरुपरागायोगादिति । तस्य मते तत एव हेतोः कालेनाप्याधारेणोपवसेरसम्बन्धोऽत्र स्यात् । अस्ति च गतिनिवृत्तिवचनस्यापि तिष्ठतेः – स्थाधातोः स्ववाच्यार्थद्वारक आधारेण ग्रामादिना सम्बन्ध इति निवृत्तिरूपत्वादिति आधारासम्बन्धसाधको हेतुरनैकान्तिकः । 'ग्रामे तिष्ठति', 'ग्राम आस्ते' इत्यत्र सर्वव्यापारोपरमरूपायाः क्रियान्तरं स्वातिरिक्तं निवर्तयन्त्याश्च निवृत्तेः क्रियात्वं न विरुद्धम् ।

तथा हि–कारकाणां प्रवृत्तिविशेषः = व्यापारविशेषः फलानुमेयः क्रिया । स चात्र नियतकालभोजननिवृत्तिरूपः स्फुट एव ।

स चापि विधारकः सङ्कल्पविशेष एव मानसो व्यापारो निवृत्तिः । संदर्शनादीनाम्—संदर्शनसङ्कल्पादीनां प्रधानक्रियावान्तरव्यापाररूपाणाम्, प्रधानक्रियया निवृत्तिरूपया सह भेदाभावात् । 'युद्धाय सन्नह्यते' इत्यादावेव हि प्रधानक्रियातोऽवान्तरव्यापाराणां भेदविवक्षा इत्युक्तं प्राक् । तत्र हि सन्नहनं कवचधारणम्, खड्गधनुस्तूणीरादिधारणानि च तदवान्तरव्यापाराः । अत्र तस्य तैः सह भेदः स्फुट इति तत्र भेदविवक्षैव ।

तथा चात्र सङ्कल्पपूर्वकः कर्तृव्यापारो नियतकालव्यवधिना भोजनादिरूपो धातोरुपवसेरर्थः क्रियात्मेत्यस्याधारसम्बन्धे सत्यपि साक्षाद् देशलक्षणेनाधारेण(न) सम्बन्धोऽङ्गभूतवसतिक्रियाद्वारेण योगादिति नान्तरीयककालाख्याधारसम्बन्ध एव कर्मसंज्ञाविधिरिति सिद्धम् ॥ १५५ ॥

॥ इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
साधनसमुद्देशेऽधिकरणाधिकारः ॥



---

तथा चात्र सङ्कल्पपूर्वकः कर्तृव्यापारो नियतकालव्यवधानेन भोजनादिरूप उपवसेर्धातोरर्थः क्रियारूप इत्यस्य निवृत्तिरूपत्वाभावादाधारसम्बन्धे सम्भवत्यपि साक्षाद् देशलक्षणेनाधारेण न सम्बन्ध एतदङ्गभूतवसतिक्रियाद्वारेण तस्यात्र योगादिति उपवासाव्यभिचारिकालाख्याधारसम्बन्धे सत्येव काले कर्मसंज्ञाविधिरिति सिद्धम् ।

॥ इति श्रीब्रह्मीभूतकाशीनाथतनयरघुनाथशर्म-
कृतायामम्बाकर्त्र्यां साधनसमुद्देशेऽ-
धिकरणाधिकारः ॥



# अथ शेषाधिकारः

इदानीं षष्ठ्यर्थः सप्तमः कारकभेदो विचार्यते । स च शेषलक्षणः सम्बन्धः । तस्य कथं कारकभेदत्वम् ? कथं च शेषत्वमित्येतदुपपादयितुमाह—

**सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः ।**
**श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते ।। १५६ ।।**

कारकेभ्योऽन्यः कर्मादिविशेषलक्षणेभ्यः षड्भ्योऽन्यो यः सम्बन्धः स शेष इत्युपयुक्तेतरवचनशेषशब्दाश्रयेण—"कारकाणामविवक्षा शेषः" (म०भा०२।३।५०) इति भाष्यं व्याख्यातम् ।

---

इदानीं कर्मादिकारकषट्कातिरिक्तः सप्तमः कारकविशेषः षष्ठ्यर्थो विचार्यते । स च शेषरूपः सम्बन्धः । तस्य कथं कारकविशेषत्वम्, कथं च शेषत्वमित्येतदुपपादयितुमाह—सम्बन्धः कारकेभ्य इति ।

अस्यार्थः - कारकेभ्यः=कर्मादिरूपकारकविशेषेभ्यः षड्भ्योऽन्यो यः सम्बन्धः क्रियाकारकभावपूर्वकः=यत् किञ्चित् क्रियानिरूपितं यत् सम्बन्धिद्वयनिष्ठं कारकत्वं तत्पूर्वकः, स श्रुतायामश्रुतायां वा क्रियायां सत्यामेव विशेषणीभूतसम्बन्धिवाचकपदादुत्तरं जायमानया षष्ठ्याऽभिधीयते । 'कारकेभ्योऽन्यः' इत्यनेन उपयुक्तेतरत्वरूपं शेषत्वं सम्बन्धस्योक्तम् । 'क्रियाकारकपूर्वकः' इत्यनेन च तस्य कारकत्वमुच्यते ।

तथा हि—'राज्ञः पुरुषः' इत्यत्र राजकर्तृकपुरुषसम्प्रदानकदानक्रियानिरूपितं राज्ञि कर्तृत्वम्, पुरुषे च सम्प्रदानत्वमिति क्रियाकारकभावपूर्वको राजपुरुषयोः स्वस्वामिभावरूपः सम्बन्ध इति पूर्वभाविकारकत्वं तयोरुत्तरावस्थायामप्यनुगतमित्येवं भवति शेषाख्यः सम्बन्धः कारकत्वम् । 'श्रुतायां क्रियायामभिधीयते', इत्यस्योदाहरणम्—'मातुः स्मरति, सर्पिषो जानीते' इत्यादि । 'अश्रुतायां क्रियायामभिधीयते' इत्यस्योदाहरणम्—'राज्ञः पुरुषः' इति । न ह्यत्र स्वस्वामिभावसम्बन्धनिमित्तभूता दानक्रिया श्रूयत इति ।

अयं भावः—कारकेभ्योऽन्यः=कर्मादिविशेषरूपेभ्यः षड्भ्योऽन्यो यः सम्बन्धः स शेष इत्युपयुक्तातिरिक्तवाचिनं शेषशब्दमाश्रित्य प्रवृत्तम्—"कारकाणामविवक्षा शेषः" इति भाष्यं व्याख्यातम् ।

'क्रियाकारकपूर्वकः' इत्यनेन कारकत्वं व्याचष्टे शेषस्य। तथा हि 'राज्ञः पुरुषः, वृक्षस्य शाखा, पशोः पादः, पितुः पुत्रः' इत्यादावश्रूयमाणक्रियाविषये स्वस्वामिभावावयवावयविभावजन्यजनकभावादौ सम्बन्धे ददातिस्थितिजन्यादि-क्रियाप्रभाविते पूर्वभाविकारकत्वमुत्तरावस्थायामप्यनुगतमिति भवत्येव शेषः कारकम्।

राजा हि पुरुषाय ददाति, यतस्ततो राज्ञः पुरुष इति स्वस्वामिभावोऽव-तिष्ठति। तत्र क्रियाकारकसम्बन्धः कारणभूतः, शेषसम्बन्धस्तु फलभूतः। क्रिया-कारकसम्बन्धो हि वृत्तः स्वाश्रये शेषसम्बन्धं फलं निवेश्योपरमते। तत्र पूर्वं कर्तृ-सम्प्रदानरूपौ राजपुरुषावभूताम्। शेषसम्बन्धकाले तु कर्त्रादिविशेषरूपतानवगम इति तच्छेषभूतं सामान्यं कारकत्वमवतिष्ठते, करणादिसाधनभेदोपाख्यानिमित्ता-भावात्।

कारकेभ्योऽन्यः कारकाणामविवक्षा शेषः। कारकपूर्वक इत्यत्र च कारकत्वैकार्थसमवायिनः करणादयः साधनभेदाः कारकशब्देनोच्यन्ते, न तु कारकसामान्यमपि।

---

'क्रियाकारकपूर्वकः' इत्यनेन कारिकांशेन सम्बन्धरूपस्य शेषस्य कारकत्वं व्याख्यातं भवति। तथा हि—'राज्ञः पुरुषः, वृक्षस्य शाखा, पशोः पादः, पितुः पुत्रः' इत्यादावश्रूयमाणनानाविधक्रियाविषये यथाक्रमं स्वस्वामिभावावय-वावयविभावजन्यजनकभावादौ सम्बन्धे यथाक्रमं ददातिस्थितिजन्यादिक्रियाप्रयुक्ते पूर्वावस्थाभाविकारकत्वमुत्तरावस्थायामप्यनुगतमिति रीत्या भवत्येव शेषाख्यः सम्बन्धः कारकम्।

'राजा हि पुरुषाय वेतनं ददाति, वृक्षोऽवयवी शाखायामवयवभूतायाम्, पशुरवयवी पादेऽवयवभूते तिष्ठति, पिता पुत्रं जनयति' इति 'राज्ञः पुरुषः' इत्यत्र स्वस्वामिभावः, 'वृक्षस्य शाखा, पशोः पादः' इत्यत्र अवयवावयविभावः, 'पितुः पुत्रः' इत्यत्र जन्यजनकभावः सम्बन्धोऽवतिष्ठति। यत्र क्रियाकारकभावरूपः सम्बन्धः कारणभूतः, शेषसम्बन्धस्तु फलभूतः। क्रियाकारकसम्बन्धो हि वृत्तः=पूर्वं निष्पन्नः सन् स्वाश्रये शेषसम्बन्धरूपं फलं निवेश्योपरमते। तत्र पूर्वं कर्तृसम्प्रदानरूपौ राज-पुरुषौ, कर्त्रधिकरणरूपे वृक्षशाखे, कर्त्रधिकरणरूपौ पशुपादौ, कर्तृकर्मरूपौ च पितापुत्रौ अभूताम्। उत्तरत्र शेषसम्बन्धकाले तु तत्र तत्र कर्त्रादिविशेषरूपतावगम इति तच्छेषभूतम्=कर्त्राविशेषभूतं सामान्यं कारकत्वमवतिष्ठते, कर्तृकरणादिकारक-विशेषोपाख्याहेत्वभावात्।

कारिकायाम्—कारकेभ्योऽन्य इति, भाष्ये कारकाणामविवक्षाशेष इति, कारिकायामेव=क्रियाकारकपूर्वक इत्यत्र च कारकत्वैकार्थसमवायिनः=कारकत्व-'

द्रव्याणां हि सिद्धस्वभावानामयःशलाकाकल्पानां परस्परं सम्बन्धाभावात् क्रियाकृत एव सः। क्रिया हि निःश्रयणीव द्रव्याण्युपश्लेषयति। तथा च भाष्यम्—"प्रातिपदिकार्थानां क्रियाकृता विशेषा उद्भवन्ति कर्म करणमित्यादि" ( म० भा० पा० २।३।५० )।

तत्र कर्मादिरूपव्यतिरेकेणान्यस्य विशेषस्यादृष्टेः शेषाख्यः सम्बन्धः कर्मादिरूपोऽवतिष्ठमानोऽनुभूतकर्मादिविशेषे स्वाधारे पदमुपनिबध्नन्नविवक्षित-कर्मादिभेदरूपमात्मानमुद्दर्शयति। ततश्च राजपुरुषयोर्वर्तमाने दातृत्वसम्प्रदानत्व एव फलावस्थायामनुद्रिक्तस्वस्वरूपे सामान्यरूपेण सम्बन्ध इति व्यपदेशमर्हतः।

तथा चानुल्लिखितविशेषरूपा सप्तमीयं कारकयोनिः परिगण्यते, शब्दार्थ-सम्प्रत्ययभेदात्। अन्यो हि सम्प्रत्ययो राजा पुरुषाय ददातीति। न ह्यस्मान्नियमेन स्वस्वामिभावनिमित्तं दानं प्रतीयते, करणादिनापि ( करुणादिनाऽपि ) निमित्तेन दानसम्भवात्।

---

समानाधिकरणाः करणादयः साधनभेदाः=कारकविशेषाः कारकशब्देनोच्यन्ते, न तु कारकसामान्यमपि।

द्रव्याणां हि सिद्धस्वभावानां पृथक पृथगवस्थितानामयःशलाकाकल्पानां परस्परं सम्बन्धाभावात् क्रियाकृत एव सः=शेषाख्यसम्बन्धः। क्रिया हि अनुपदोक्त-स्वभावानि द्रव्याणि निःश्रयणीव=अधिरोहणीव "निःश्रेणिस्त्वधिरोहणी" इत्यमरः। निःश्रेणिनिःश्रयण्यौ एकार्थके। द्रव्याणि उपश्लेषयति = सम्बध्नाति, यथा एका निःश्रयणी निःश्रेणिपरम्परां सम्बध्नातीति। तथा च भाष्यम्—"प्रातिपदि-कार्थानां क्रियाकृताविशेषा उद्भवन्ति, कर्म करणम्" इत्यादि।

तत्र कर्मादिरूपव्यतिरेकेणान्यस्य विशेषस्य=कर्मादिभिन्नस्यान्यस्य कारक-विशेषस्यादृष्टेः शेषाख्यः सम्बन्धः पूर्वं कर्मादिविशेषविवक्षाकाले कर्मादिरूपोऽ-वतिष्ठमानः पश्चात् तदविवक्षाकाले प्रागननुभूतकर्मादिविशेषे स्वाधारे पदमुपनि-बध्नन्=निदधानः अविवक्षितकर्मादिभेदं कारकसामान्यरूपं स्वात्मानं प्रदर्शयति। ततश्च राजपुरुषयोर्वर्तमाने कारणावस्थायां दानकर्तृत्वसम्प्रदानत्व एव कर्मादिभेदा-विवक्षया फलावस्थायामनुद्भूतस्वस्वरूपे कारकसामान्यरूपेणावस्थिते सम्बन्ध इति व्यपदेशमर्हतः।

तथा चानुल्लिखितकर्मादिविशेषरूपा सप्तमी इयं कारकयोनिः=कारक-जातिः शेषाख्या परिगण्यते। शेषापेक्षया कर्मादिकारकविशेषाणां शब्दार्थसम्प्रत्यय-भेदात्=शब्दभेदात्, अर्थभेदात्, सम्प्रत्ययभेदात्। अन्यो हि सम्प्रत्ययो राजा पुरुषाय ददाति इति। न ह्यस्मान्नियमेन स्वस्वामिभावनिमित्तकं दानं प्रतीयते, करुणा-दिनापि निमित्तेन दानसम्भवात्। फलमत्र निमित्तम्।

अन्यस्तु 'राज्ञः पुरुषः' इति स्वस्वामिभावावगमात्। अतश्च प्रतीतिभेदादन्यत्वे सिद्धे कर्मादिविशेषेणेव शेषाख्येनाप्यनेन प्रातिपदिकार्थो भिद्यमानोऽभिधीयते।

तदयमश्रूयमाणक्रियाविषयः सम्बन्धः, स्वस्वामिभावादिनिमित्तानां दानादिक्रियाणामश्रुतेः। सम्बन्धलक्षणकार्यान्यथानुपपत्त्यानुमीयमानाश्च दानादिक्रियाः सन्निहिता एवेति तन्मुखेन समन्वयोपपत्तिः सम्बन्धिनोः, फलस्यापि च सम्बन्धस्य क्रियानिमित्तत्वं कारकत्वनिबन्धनमस्त्येव कर्मण इवेति सर्वमुपपद्यते। ग्रामस्य समीपादागच्छति, 'वृक्षस्य पर्णं पतति' इत्यादावप्यस्त्येव समीपसमीपिभावादौ सम्बन्धे क्रियाकारकपूर्वकत्वम्। समीपस्य हि ग्राम आश्रयः। एवं पर्णस्य वृक्ष इति। अयमेव सर्वत्र न्यायः।

आगमनादिक्रियां प्रति तु ग्रामादेरकारकत्वमुच्यते, श्रूयमाणक्रियाविषयस्तु सम्बन्धः कारकभेद एव, अविवक्षितकर्मादिविशेषः सम्बन्धसामान्यस्वभावः क्रियाकारकसम्बन्ध एव स इति न तत्पूर्वकः। तद्यथा नटस्य शृणोतीत्यादि,

---

अन्यस्तु "राज्ञः पुरुषः' इति, स्वस्वामिभावावगमादिति द्वयोः सम्प्रत्ययभेदः। अतश्च प्रतीतिभेदादन्यत्वे शेषकर्मादिभेदयोः सिद्धे कर्मादिविशेषेणेव शेषाख्येनाप्यनेन प्रातिपदिकार्थः प्रतियोग्यनुयोगिरूपाभ्यां भिद्यमानः षष्ठीप्रकृत्याऽभिधीयते, षष्ठ्या तु शेषः।

तदयमश्रूयमाणक्रियाविषयः सम्बन्धः कारिकायामुक्तः, स्वस्वामिभावादिनिमित्तकानां दानादिक्रियाणामत्राश्रवणात्। सम्बन्धरूपदानादिक्रियाकार्यान्यथाऽनुपपत्त्याऽनुमीयमानाश्च दानादिक्रियाः सन्निहिता एव=अनुमित्योपस्थापिता एव इति तन्मुखेन=दानादिक्रियानिमित्तद्वारा सम्बन्धिनोः सम्बन्धरूपफलोपपत्तिः। क्रियाफलभूतस्यापि च सम्बन्धस्य कारकत्वे निबन्धनम्=निमित्तभूतम्, फलरूपेण क्रियानिमित्तत्वमस्त्येव। यथा कर्मणः कारकत्वे निबन्धनम्=क्रियानिमित्तत्वं स्वसमवेतफलद्वाराऽस्तीति सर्वमुपपद्यते। 'ग्रामस्य समीपादागच्छति', 'वृक्षस्य पर्णं पतति' इत्यादौ च समीपसमीपिभावेऽवयवावयविभावादौ च सम्बन्धे क्रियाकारकपूर्वकत्वमस्त्येव। अत्र हि स्थितिक्रियासमीपसमीपिभावरूपे अवयवावयविभावरूपे च सम्बन्धे निमित्तम्। अयमेव सर्वत्र न्यायः=एषैव रीतिः सम्बन्धलक्षणकार्यान्यथाऽनुपपत्त्या क्रियानुमानरूपा सर्वत्राश्रूयमाणक्रियाविषये बोद्धव्या।

प्रकृते श्रूयमाणामागमनपत्तनादिक्रियां प्रति तु ग्रामादेरकारकत्वमुच्यते, श्रूयमाणक्रियया सह ग्रामादेरसम्बन्धात्। तया सह तस्य सम्बन्धे तु समीपस्य निरूपकाकाङ्क्षा पर्णस्य त्ववयव्याकाङ्क्षा न शाम्येत्। 'नटस्य शृणोति' इत्यादौ श्रूयमाण-

करणादिसंज्ञानामत्र निमित्ताभावादप्रवृत्तेः। दुह्यादिपरिगणनाच्चाकथित-कर्मत्वाभावात्। कारकेभ्योऽन्योऽयं शेषः कारक एव। तथा चोपयोगग्रहणमर्थं-वदित्युक्तम्।

एवं मातुः स्मरति, न माषाणामश्नीयात्, सर्पिषो जानीत इत्यादौ कर्मादि-कारकभेद एवाविवक्षिततद्रूपः शेष इत्युक्तम्।

अत्र च शेषे षष्ठीविभक्तिरुक्तसम्बन्धस्य द्विष्ठत्वाच्च द्वाभ्यामपि सम्बन्धिभ्यां षष्ठीप्रसङ्ग इति चोदितम्—"षष्ठी शेष इति चेद्विशेष्ये प्रतिषेधः" (म० भा० पा० २।३।५०) इति।

राज्ञः पुरुष इति पुरुषशब्दादपि षष्ठीप्रसङ्गे प्रतिषेधः कार्यं इत्यर्थः। सम्बन्धस्य चोद्भूतत्वात् प्राप्नोतीति सापि विधेयेत्युक्तम्—"तत्र प्रथमाविधिः" (म०भा०पा० २।३।५०) इति। अत्रोभयत्रापि परिहाराय 'उक्तं पूर्वेण" (म०भा०) इत्यभिहितं प्रातिपदिकार्थसूत्रे। 'पदसामानाधिकरण्य उपसंख्यानमधिकत्वात्"

श्रवणादिक्रियाविषयकस्तु सम्बन्धः कारकप्रभेद एव, अविवक्षितकर्मादिविशेषः सम्बन्धसामान्यस्वभावःकियाकारकसम्बन्ध एव स इति न क्रियाकारकपूर्वकः। अत्र करणादिसंज्ञानां साधकतमत्वादिरूपतत्तन्निमित्ताभावादप्रवृत्तेः। दुह्यादिपरिगणना-च्चात्राकथितकर्मत्वाभावात्। कर्मादिकारकविशेषेभ्योऽन्योऽयं शेषः सामान्यात्मा कारक एव। तथा च=तथैव—नटश्रवणयोः क्रियाकारकभावरूपसम्बन्धस्य कारक-प्रभेदरूपत्वे सत्येव "आख्यातोपयोगे" (पा० १।४।२९) इति सूत्रे उपयोगग्रहणं नटस्यापादानत्ववारणार्थं कृतं सार्थकम्। अन्यथा कारकत्वाभावादेव नटस्यापादान-त्वाप्राप्तौ उपयोगग्रहणं व्यर्थं स्यादित्युक्तम्।

एवम् मातुः स्मरति, न माषाणामश्नीयात्, सर्पिषो जानीते' इत्यादौ यथाक्रमं प्रथमद्वितीययोः कर्मकारकभेदः, तृतीये करणरूपः कारकभेद एव अवि-वक्षितकर्मकरणादिभेदरूपः शेष इत्युक्तम्।

अत्र च शेषे वाच्ये षष्ठी विभक्तिरुक्ता। सम्बन्धस्य द्विष्ठत्वाच्च द्वाभ्यामपि सम्बन्धिभ्यां प्रतियोग्यनुयोगिभ्यां स्वस्ववाचकपदे द्वारीकृत्य षष्ठीप्रसङ्ग इत्यभिप्रेत्य चोदितं वार्तिककृता—"षष्ठी शेषे इति चेद् विशेष्ये प्रतिषेधः" इति।

अस्यार्थः—शेषे=सम्बन्धे वाच्ये तद्वाचकपदात् षष्ठी इति चेद् विशेष्ये=तद्वाचकपदे षष्ठ्याः प्रतिषेधो वक्तव्य इति 'राज्ञः पुरुषः' इत्यत्र पुरुषशब्दादपि षष्ठीप्रसङ्गे तस्याः प्रतिषेधः कार्यं इति निदर्शनम्। सम्बन्धस्य चोद्भूतत्वात्=उद्भूतत्वेन प्रातिपदिकार्थादाधिक्याद् विशेष्यात् प्रथमा न प्राप्नोति इति सापि विधेया इत्युक्तम्—'तत्र प्रथमा विधिः' इति। कार्यं इति शेषः। अत्रोभयत्रापि परिहाराय 'उक्तं पूर्वेण' इत्युक्तम्। प्रातिपदिकार्थसूत्रे "पदसामानाधिकरण्य उपसंख्यानमधिकत्वात्" इति।

(म० भा० पा० २।३।४६) इति चोदिते। "न वा वाक्यार्थत्वात् (म० भा० पा० २।३।४६) इत्युक्तम्। तदेवात्रातिदेशायानूदितम्। राज्ञ इत्येतत्पदसमन्वयवशेन पुरुषस्य सम्बन्धित्वमवगम्यत इति वाक्यार्थोऽत्र सम्बन्धोऽन्तरङ्गे पदार्थमात्राये संस्कारे निमित्तं न भवति, बहिरङ्गत्वादिति वीरः पुरुषो नीलमुत्पलमित्यादिवदत्र षष्ठ्यभावः प्रथमा च सिद्धेत्यर्थः।

यद्येवं राजशब्दादपि वीरादिशब्दादिवानेन न्यायेन षष्ठी न स्यात्। प्रथमा च स्यात्, नैतदस्ति विशेष्यगतस्यैवाधिक्यस्य वाक्यार्थत्वात्। तद्धि प्रधानं प्रथममजहत्स्वरूपमेवोपकार्यतामपेक्षिते गुणे समापद्यत इति तस्यैवाधिक्यं वाक्यार्थः कथ्यते। गुणस्य तु प्रधानोपकाराय प्रवर्तमानस्य स्वात्मप्रतिष्ठत्वोपकारकत्वासम्भवादुपक्रम एव प्रधानोपयोगक्षमं सम्बन्धिसामान्यापेक्षया रूपान्तरं विपरिवर्तते। तदुक्तं भाष्ये—"अर्थरूपमेवैतदेवंजातीयकम्" (म०भा०पा०२।३।५०) इति।

---

अस्यार्थः—पदयोः सामानाधिकरण्ये=एकार्थवृत्तित्वे, 'वीरः पुरुषः' इत्यादौ प्रथमाया उपसंख्यानं कर्तव्यम्, अधिकत्वात्=पदार्थद्वयाभेदरूपस्यार्थस्य प्रातिपदिकार्थादेरधिकत्वादिति। चोदिते 'न वा वाक्यार्थत्वात्' इत्युक्तम्।

अस्यार्थः—अथवा नोपसंख्यानं कर्तव्यम्—पदार्थद्वयाभेदस्य वाक्यार्थत्वेन तत्र प्रथमाया अप्रसक्तेरिति। तदेवात्रातिदेशायानूदितम्—'उक्तं पूर्वेण' इति। पूर्वेण वार्तिकेनैतत् समाधानमुक्तमित्यर्थः।

अयमत्र निष्कर्षः—राज्ञ इत्येतत् पदसमन्वयवशेन पुरुषस्य सम्बन्धित्वमवगम्यत इति वाक्यार्थोऽत्र स्वस्वामिभावरूपः सम्बन्धः पदार्थमात्राश्रयत्वेनान्तरङ्गे संस्कारे पदसाधुत्वरूपे विभक्त्युत्पत्त्या क्रियमाणे निमित्तं न भवति बहिर्भूतपदान्तरार्थाश्रयत्वेन बहिरङ्गत्वादिति 'वीरः पुरुषो नीलमुत्पलम्' इत्यादिवत् तत्र षष्ठ्यभावः प्रथमा च सिद्धेत्यर्थः। यद्येवं वीरादिरूपविशेषशब्दादिव राजशब्दादपि अनेन न्यायेन=विशेष्ये प्रतिपादितया अनया युक्त्या षष्ठी न स्यात्, प्रथमा च स्यात्। नैतदस्ति। विशेष्ये गतस्यैव प्रातिपदिकार्थाधिक्यस्य वाक्यार्थत्वात्। तद्धि=विशेष्यं हि प्रधानं प्रथममजहत्स्वरूपमेव=प्रथमं स्वार्थमात्रवृत्त्येव पश्चादपेक्षिते गुणे सम्बन्धित्वेनोपकार्यतां समापद्यत इति तस्यैवाधिक्यम्=विशेष्यसम्बन्ध्येव प्रातिपदिकार्थाधिक्यम्, वाक्यार्थः सम्बन्धरूपः कथ्यते। गुणस्य तु=विशेषणस्य तु प्रधानोपकाराय प्रवर्तमानस्य स्वात्मप्रतिष्ठत्वे स्वरूपमात्रविश्रान्तत्वे उपकारकत्वासम्भवादुपक्रम एव=विशेष्यसम्बन्धात् प्रागेव विशिष्यात्मकसम्बन्धिसामान्यापेक्षया=विशेष्यात्मकसम्बन्धिसामान्यापेक्षया=विशेष्यात्मकसम्बन्धिसामान्यापेक्षणेन प्रधानोपयोगक्षमम्=प्रधानोपकारक्षमम्, रूपान्तरम्=स्वामित्वादिरूपविशेष्योपकारयोग्यधर्मविशिष्टं रूपम्, विपरिवर्तते=गुणस्य सामान्यं रूपमेव विशेषरूपेण रूपान्तरतया वर्तते। तदुक्तं

तथा च गुणाच्छेषषष्ठी न्याय्या। समानाधिकरणं तु विशेषणं नीलादि-प्रधानेनोत्पलादिना सहैकात्म्यमिवापद्यमानं न व्यतिरेकं भजत इति न तत्र षष्ठी भवति ॥१५६॥

एतद्वस्तुसतत्त्वं प्रतिपादयति—

द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते ।
तत्राभिधीयमानः सन् प्रधानेऽप्युपभुज्यते ॥१५७॥

द्विष्ठ एकः सम्बन्धः। तत्र चैकैव षष्ठी न्याय्या। षष्ठीद्वये सम्बन्धद्वयं प्रतीयेत। सा चैकैव षष्ठी भवन्ती गुणादेव भवति, न प्रधानात्। यस्मादसौ सम्बन्धो द्वयोरपि सम्बन्धिनोः स्थितः, तयोर्गुणप्रधानभावेनैकवाक्यत्वात् प्रधाना-

—

भाष्ये—"अर्थरूपमेवैतदेवंजातीयकम्" इति ।

अस्यार्थः—प्रधानोपकारक्षमत्वजातीयकमेतद् रूपान्तरम्—अर्थरूपमेव प्रातिपदिकार्थरूपमेव न तु वाक्यार्थरूपमिति। तथा च गुणात्=विशेषणाद् राजपदात् षष्ठी न्याय्या, स्वस्वामिनोः सामानाधिकरण्यासम्भवेन 'वीरः पुरुषः' इत्यादौ वीरादिपदेष्विव प्रथमाया असम्भवात्। समानाधिकरणं तु विशेषणं नीलादिप्रधाने-नोत्पलादिना सह ऐकात्म्यमिव=अभेदमिव आपद्यमानं न व्यतिरेकम्=भेदं भजत इति, न तत्र विशेषणविशेष्ययोर्भेदमूलिका षष्ठी भवति ॥ १५६ ॥

प्रागुक्तशेषाख्यसम्बन्धरूपवस्तुस्वरूपं प्रतिपादयति—द्विष्ठोऽप्यसाविति ।

अस्यार्थः—असौ=शेषाख्यसम्बन्धः, द्विष्ठोऽपि=प्रतियोग्यनुयोगिरूपसम्बन्धि-द्वयनिष्ठोऽपि, गुणानां विशेषणानां प्रतियोगिरूपाणां परार्थत्वात्=अनुयोगिरूपविशे-ष्यात्मकप्रधानोपकारकत्वात्, गुणेषु=विशेषणेषु, व्यतिरिच्यते=प्रधाने वाक्यार्थी-भूयात् स्वस्मादेव विशेषणेषु प्रातिपादकार्थत्वेन व्यतिरिच्यते=व्यतिरिक्तो भवति= भिन्नो भवति। द्विष्ठत्वमेवोपपादयति=तत्राभिधीयमानः सन् इति। तत्र=गुणेषु, प्रातिपदिकेनाभिधीयमानः सन्=अभिधया बोध्यमानः सन्, प्रधानेऽपि पदान्तर-समन्वये सति उपभुज्यते=अनुभूयत इति वाक्यार्थः। इदञ्च विभक्तीनां द्योतक-त्वपक्षे। प्रातिपदिके न हि सम्बन्धस्य गुणेष्वभिधानम्, षष्ठ्या तु तद्द्योतनमिति। इदञ्च सर्वमुपपादितं पूर्वकारिकाव्याख्यावसरे ।

अयं भावः—स्वरूपत एक एव सम्बन्धो द्विष्ठः। तत्र चैकैव षष्ठी तद्वाचिका वा न्याय्या। षष्ठीद्वये हि सम्बन्धद्वयं प्रतीयेत। सा चैकैव षष्ठी भवन्ती गुणादेव भवति न प्रधानात्। यतोऽसौ सम्बन्धो द्वयोरपि सम्बन्धिनोर्गुणप्रधानरूपयोः स्थितः, तयोर्गुणप्रधानभावेनैकवाक्यत्वात् सम्बन्धस्य च वाक्यार्थत्वात्। एवं सम्बन्धस्योभयत्रा-वस्थितत्वेऽपि गुणाना प्रधानानुरोधित्वाद् गुणे त्वन्याय्यकल्पनेति न्यायेन गुणानामेव

नुरोधित्वाद् गुणानामेव रूपपरिवर्तनस्यौचित्यात् तत्रैव फलतीति गुणादेव सम्बन्धकार्या षष्ठी न्याय्या ।

तथा हि गुणेषु व्यतिरेकमाधिक्यं दर्शयति सम्बन्धः, प्रधानं तु स्वरूपादप्रच्यवमानमेव सम्बन्धमनुभवति। एवं हि तस्य प्राधान्यं भवति यदि गुणानुरोधेन रूपपरिवर्तनं नासादयति । गुणाश्रयतया च सम्बन्धस्याभिधाने षष्ठ्या प्रधानगतमपि रूपमुपभुक्तं स्पृष्टमेवाभिहितमेवेत्यर्थः ।

एतत्तदुच्यते प्रधानगतस्याधिक्यस्य वाक्यार्थत्वं गुणसम्बन्धेन प्रतीतेः । परस्परसाकाङ्क्षस्य पदसमूहस्य वाक्यत्वात् । राज्ञ इति हि स्वामित्वमवगम्यमानमन्यथानुपपत्त्या पुरुषेऽपि स्वत्वलक्षणमतिरेकमावेदयते । तथा च पुरुषादन्तरङ्गात् प्रथमैव भवतीति बहिरङ्गस्य सम्बन्धस्य पदान्तरसमन्वयान्यथानुपपत्त्यैव गमितत्वात् प्रातिपदिकार्थ एवाधिक्यस्यानुप्रवेशात् ।

यदा तु विशेषणविशेष्यभावे कामचारात् पुरुषस्य राजेत्युच्यते, तदा गुणात् पुरुषादेव षष्ठीति न व्यभिचरति लक्षणम् ।।१५७।।

---

स्वरूपपरिवर्तनस्य सम्बन्धविशिष्टस्वरूपाभिधानकल्पना रूपस्यौचित्यात् तत्रैव फलति = गुणेष्वेव सम्बन्धः फलितो भवति, न प्रधानेषु इति गुणादेव सम्बन्धरूपस्य निमित्तस्य कार्यभूता षष्ठी न्याय्या ।

तथा हि —गुणेषु व्यतिरेकमाधिक्यं दर्शयति सम्बन्धः । गुणो हि प्रागुक्तरीत्या सम्बन्धविशिष्टं स्वार्थमभिधत्ते, प्रधानं तु स्वार्थमात्रमिति प्रधानं स्वरूपादप्रच्यवमानमेव=अपरिवर्तितं स्वरूपं बिभ्रदेव वाक्यार्थभूतं सम्बन्धमनुभवति ।

एवं हि प्रधानस्य प्राधान्यं भवति, यदि गुणानुरोधेन स्वरूपपरिवर्तनं न प्राप्नोति । गुणनिष्ठतया च सम्बन्धस्याभिधाने षष्ठ्या प्रधानगतमपि सम्बन्धस्य रूपमुपयुक्तं स्पष्टमेवाभिहितमेवेत्यर्थः, उभयगतस्य सम्बन्धस्यैक्यात् । एतत्तदुच्यते—प्रधानगतस्य प्रातिपदिकार्थाधिक्यस्य सम्बन्धरूपस्य वाक्यार्थत्वम्, गुणपदसम्बन्धेन प्रधानपदात्तस्य प्रतीतेः । परस्परसाकांक्षस्य पदसमूहस्य वाक्यत्वात् । राज्ञ इति हि राजगतं स्वामित्वमवगम्यमानमन्यथानुपपत्त्या पुरुषेऽपि स्वत्वरूपमतिरेकम् = आधिक्यम् आवेदयते । तथा च स्वार्थमात्रवाचकत्वेनान्तरङ्गात् पुरुषपदात् प्रथमैव भवति, न तु षष्ठी इति, वाक्यार्थत्वेन बहिरङ्गस्य सम्बन्धस्य पदान्तरसम्बन्धान्यथाऽनुपपत्त्यैव गमितत्वात् प्रातिपदिकार्थं एवाधिक्यस्य सम्बन्धरूपस्याननुप्रवेशात् । अनुप्रवेशे हि पुरुषपदात् षष्ठी स्यात् । प्रथमा तु न स्यात्, राजपदेन सह भिन्नार्थकत्वेन सामानाधिकरण्यासम्भवात् ।

यदा तु विशेषणविशेष्यभावे कामचारात् पुरुषस्य विशेषणत्वेन पुरुषस्य राजेत्युच्यते, तदा गुणात् = विशेषणात्, पुरुषादेव षष्ठीति षष्ठी गुणप्रकृतिकत्वरूपं

उक्तमिदं क्रियाकारकपूर्वकः सम्बन्ध इति। तत्र क्रियाकारकसम्बन्धोऽस्य निमित्तम्, स च फलभूतात् सम्बन्धादनुमीयमानो न विशेषेणानुमातुं पार्येत; अपि तु सामान्येन, एवं स्वभावत्वादनुमानस्येति कुतोऽयं विशेषावसाय इत्याह—

निमित्तनियमः शब्दात् सम्बन्धस्य न गृह्यते।
कर्मप्रवचनीयैस्तु स विशेषेऽवरुध्यते ॥१५८॥

पितुः पुत्रः, पशोः पाद इत्यादौ सम्बन्धिस्वरूपविशेषावधारणादेव नियतस्थितिजननादिक्रियाप्रभावितत्वं सम्बन्धस्य प्रतीयते। राजपुरुष इत्यादौ तु याच्ञाविनिमयापहारप्रभृतिभिरपि स्वस्वामिभावस्य सम्भवाद् यद्यपि नियतनिमित्तत्वं नावधार्यते।

---

स्वलक्षणं न व्यभिचरतीति ॥ १५७ ॥

प्रागुक्तमिदं क्रियाकारकभावपूर्वकः शेषाख्यः सम्बन्ध इति। तत्र क्रियाकारकभावसम्बन्धोऽस्य शेषाख्यस्य सम्बन्धस्य निमित्तम्। स च फलभूतात् सम्बन्धादनुमीयमानो न सम्बन्धविशेषेणानुमातुं पार्येत; अपि तु सम्बन्धसामान्येन, पक्षदृष्टान्तोभयसाधारण्येनैवं स्वभावत्वादनुमानस्य=लिङ्गस्य इति कुतोऽयं वाक्यार्थभूतस्य सम्बन्धविशेषस्यावसायः=निश्चयः, इत्याशङ्क्याह—निमित्तनियम इति।

अस्यार्थः—"वृक्षस्य शाखा, पितुः पुत्रः" इत्यादौ सम्बन्धस्वरूपविशेषावधारणादेव नियतस्थितिजननादिक्रियानिमित्तकत्वं सम्बन्धस्य शेषाख्यस्य गम्यते। 'राज्ञः पुरुषः' इत्यादावपि सम्बन्धिस्वरूपावधारणादेव स्वस्वामिभावस्य निमित्तभूता दानादिक्रियाऽनुमीयत एव। स्वस्वामिभावेन सह दानादिक्रियाणामन्यतमक्रियाया अविनाभावाद् इति न प्रागुक्तेषु कश्चिदपि कर्मप्रवचनीयस्य विषयः। तथापि क्वचित् शब्दात्=शब्दसामर्थ्यात्, सम्बन्धस्य शेषाख्यस्य, निमित्तनियमः=नियतं निमित्तं निमित्तविशेषः, न गृह्यते=न ज्ञायते। तथा च स निमित्तानियमेनानियम्यमानः सम्बन्धः कर्मप्रवचनीयैस्तु निमित्तनियमनेन विशेषेऽवरुध्यतेऽवस्थाप्यते। यथा—'शाकल्यस्य संहितामनु प्रावर्षत्' इत्यत्र संहिताप्रवर्षणयोः निमित्तरूपा निशमनक्रियाऽनु नावद्योत्यत इति।

अयं भावः—'पितुः पुत्रः, पशोः पादः' इत्यादौ सम्बन्धिस्वरूपविशेषावधारणादेव नियतस्थितिजननादिक्रियाप्रभावितत्वं सम्बन्धस्य प्रतीयते। तथा हि—'पितुः पुत्रः' इत्यत्र प्रतियोगिरूपस्य सम्बन्धिनः पितुर्जनकत्वात्मकस्वरूपविशेषावधारणादेव जन्यजनकभावरूपसम्बन्धस्य जननक्रियानिमित्तकत्वं प्रतीयते। 'पशोः पादः' इत्यत्र पशुरूपस्य सम्बन्धिनः प्रतियोगिरूपस्यावयवित्वरूपस्वरूपविशेषावधारणादेव अवयवावयविभावसम्बन्धस्य स्थितिक्रियानिमित्तकत्वं प्रतीयते।

तथापि दानादीनामन्यतमाविनाभावात् क्रियानुमीयत एव सम्बन्धिस्वरूपादिति नायं कर्मप्रवचनीयविषयः।

क्वचित्तु शब्दसामर्थ्यान्निमित्तविशेषो नावधार्यते। निमित्तसामान्यावधारणं तु भवति, सोऽयमेवंविधो विषयः कर्मप्रवचनीयानाम्। तैरन्वादिभिर्निमित्तनियमेनाच्छिद्यते सम्बन्धः।

तथा हि शाकल्यस्य संहितामनु प्रावर्षदित्यत्र संहिताप्रवर्षणयोर्हेतुमद्भावो निशामयतिक्रियाजनित इत्यनुनावेद्यते। तथा क्रिययास्यान्यत्रानुनिशम्येत्यादौ साहचर्योपलब्धेः। कर्म प्रोक्तवन्त इति च कर्मप्रवचनीयेष्वतिक्रान्तक्रियावकाशनाङ्गीकारात् सम्प्रति क्रियामयं न द्योतयति। क्रियापदस्य चाश्रुतेः द्योत्याभिधायकाभावे तन्निष्ठद्योतकत्वाभावात्। स्वरूपेण तु सम्बन्धो विभक्त्यैव प्रतिपाद्यत इति नापि तद्वाचकः।

---

'राज्ञः पुरुषः' इत्यादौ तु याच्ञाविनिमयापहारप्रभृतिभिरपि = भिक्षाद्रव्यविनिमयचौर्यादिभिरपि स्वस्वामिभावस्य सम्भवाद् यद्यपि नियतनिमित्तकत्वं तस्य नावधार्यते।

तथापि दानभिक्षाविनिमयचौर्यादिक्रियाणामन्यतमक्रियायाः स्वस्वामिभावसम्बन्धेन सहाविनाभावात् सम्बन्धिस्वरूपावधारणादन्यतमा क्रिया तन्निमित्ततयाऽनुमीयत एव। कार्येण कारणानुमानस्य वह्न्यादिसाध्यकधूमादिलिङ्गकानुमानस्थले दृष्टत्वाद् इति नायं सम्बन्धः कर्मप्रवचनीयस्य विषयः।

यत्र तु शब्दसामर्थ्यात् सम्बन्धस्य क्रियाविशेषरूपो निमित्तविशेषो नावधार्यते, निमित्तसामान्यावधारणं तु भवति, सोऽयमेवंविधो विषयः कर्मप्रवचनीयानाम्। तैः कर्मप्रवचनीयैरन्वादिभिर्निमित्तनियमेन = क्रियाविशेषरूपस्य निमित्तस्यावद्योतनेन शेषाख्यः सम्बन्धोऽवच्छिद्यते विशेषरूपतया बोध्यते।

तथा हि—'शाकल्यस्य संहितामनु प्रावर्षत्' इत्यत्र संहिताप्रवर्षणयोर्हेतुमद्भावो निशामयतिक्रियाजनित इत्यनुनाऽऽवेद्यते। तया क्रियया सह हेतुहेतुमद्भावरूपस्य सम्बन्धस्यान्यत्रानुनिशम्येत्यादिप्रयोगे साहचर्योपलब्धेः = व्याप्त्युपलब्धेः। कर्म = क्रियां प्रोक्तवन्त इति व्युत्पत्त्या च कर्मप्रवचनीयेष्वतिक्रान्तस्य क्रियाप्रकाशनस्याङ्गीकारात् सम्प्रति क्रियां नायं द्योतयति, शाकल्यस्य संहितामनु प्रावर्षदित्यत्र। अत्र निशम्येति क्रियापदस्य चाश्रवणाद् द्योत्यार्थाभिधायकस्याभावे तन्निष्ठद्योतकत्वाभावात् = कर्मप्रवचनीयनिष्ठस्य द्योतकत्वस्याभावात्। स्वरूपेण तु = सम्बन्धत्वेन रूपेण तु सम्बन्धो विभक्त्यैव प्रतिपाद्यत इति नापि तद्वाचकः = सम्बन्धवाचकः। क्रियापदस्याक्षेपे तु नास्य = कर्मप्रवचनीयस्य सामर्थ्यम्। कारकविभक्त्यैव तदाक्षेपादत्र च तदभावादीति सर्वं निराकृत्य सम्बन्धविशेषावद्योतकत्वं स्थापितं कर्मप्रवच-

क्रियापदाक्षेपे तु नास्य सामर्थ्यम्, कारकविभक्त्यभावादिति सम्बन्धविशेषावद्योतकत्वं स्थापितं कर्मप्रवचनीयानाम् । तदुक्तमनन्तरकाण्डे—

"क्रियाया द्योतको नायं न सम्बन्धस्य वाचकः ।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः ॥ (वा० प० २।२०४) इति ।

एवमपि (एवम्) "अधिब्रह्मदत्ते पाञ्चालाः" इति परिपालनादिक्रियानिमित्तत्वं स्वस्वामिभावस्याधिनावेद्यते । "अभिमन्युरर्जुनतः प्रति" इति परपराजयनादिक्रियाकृतोऽनुकार्यानुकरणभावो( नुकर्तृभावो )ऽर्जुनाभिमन्य्वोः सम्बन्ध इति प्रतिना प्रकाश्यते । एवमन्यत्रापि यथायोगमनुगन्तव्यम् । तदयमश्रुतक्रियाविषये सम्बन्धे कर्मप्रवचनीयानां महिमा । श्रुतक्रियाविषये तु श्रूयमाणैव क्रिया नियतं निमित्तमवधार्यत इति ॥ १५८ ॥

तत्र त्विदं विचार्यते । शेष इत्येवं सिद्धायां षष्ठ्याम् 'अधीगर्थ' इत्यादिना पुनर्विधानं किमर्थम् । 'कर्मणि शेषे' इति च सामानाधिकरण्येन विशेषणानुपपत्तिः । कर्मत्वविवक्षायां हि न शेषः, कारकाणामविवक्षा शेष इत्युक्तेः । फलभूतशेषविवक्षायां च तिरोहितत्वात् कर्मत्वस्येत्याशङ्क्याह—

---

नीयानाम् । तदुक्तम्—'कर्मप्रवचनीयैस्तु सविशेषेऽवरुध्यते' इति । तदुक्तमनन्तरे वाक्यकाण्डे—

क्रियाया द्योतको नायं न सम्बन्धस्य वाचकः ।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः ॥ इति । ( वा० प० २।२०४ )

सम्बन्धस्य भेदकः=विशेषावद्योतक इति चतुर्थपादार्थः । एवम्=शाकल्यस्य संहितामनुप्रावर्षदित्यत्रानुना संहिता-प्रवर्षणयोर्हेतुमद्भावस्य निशमनाक्रियानिमित्तकत्वमिव 'अधिब्रह्मदत्ते पाञ्चालाः' इत्यत्र स्वस्वामिभावसम्बन्धस्य परिपालनादिक्रियानिमित्तकत्वमधिनाऽऽवेद्यते । 'अभिमन्युरर्जुनतः प्रति' इति उभयनिष्ठपरपराजयनादिक्रियाकृतोऽनुकार्यानुकर्तृभावोऽर्जुनाभिमन्य्वोः सम्बन्ध इति प्रतिना प्रकाश्यते । एवमन्यत्रापि कर्मप्रवचनीयानां सम्बन्धविशेषनिष्ठं यत् क्रियाविशेषनिमित्तकत्वं तदवद्योतकत्वमनुगन्तव्यम् । तदयमश्रुतक्रियाविषये सम्बन्धे कर्मप्रवचनीयानां महिमा दर्शितः । श्रुतक्रियाविषये तु सम्बन्धे—'शाकल्यस्य संहितामनुनिशम्य प्रावर्षत्' इत्यत्र श्रूयमाणैव निशमनक्रिया संहिताप्रवर्षणयोर्हेतुहेतुमद्भावस्य नियतं निमित्तमनुनाऽवधार्यत इति ॥ १५८ ॥

तत्र त्विदं विचार्यते । 'षष्ठी शेषे' ( पा० २।३।५० ) इति शेषत्वेनैव षष्ठ्या सिद्धायाम् 'अधीगर्थ०' ( पा० २।३।५२ ) इत्यादिना पुनः षष्ठीविधानं किमर्थम् ? कर्मणि शेषे षष्ठी इति च सामानाधिकरण्येन विशेषणानुपपत्तिः । कर्मत्वविवक्षायां

**साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः।**
**प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये ॥ १५९ ॥**

**कर्मादीनि साधनानि शेषस्य व्यपदेशार्थान्यत्रोपादीयन्ते, न तु स्वार्थम्। शेषे षष्ठी। कस्मिन् शेषे? कर्मणि करण इति वा भूतावस्थागतकर्मत्वादिरूपाश्रयेण शेषस्य विशेषणात् कर्माद्येकार्थसमवायिनि फलभूते शेष इत्यर्थोऽवतिष्ठते। तथा च विशेषणोपपत्तिः। षष्ठी तु सिद्धापि प्रतिपदमधीगर्थेत्यादिना नियतविषयतया विधीयते, पुनर्विधानेन समासो यथा निवर्त्येतेति। पुनः श्रुतिर्हि नियमार्था। तथा च षष्ठ्येव भवतीति वाक्यार्थः। नियमे चान्यनिवृत्तिः प्रधानम्, अन्यश्च प्रतियोगी व्यवच्छेद्यः।**

**स चात्र षष्ठ्यभावः, स च समासे भवतीति सामर्थ्यात् समासनिषेधोऽप्य-**

---

हि न शेषः, कारकाणामविवक्षा शेष इति भाष्योक्तेः। क्रियाकारकभावफलभूत-शेषविवक्षायाश्च कर्मत्वस्य तिरोहितत्वादित्याशङ्क्याह—साधनैरिति।

अस्यार्थः—साधनैः कर्मादिभिः सामानाधिकरण्येन व्यपदिष्टे च कर्मणि शेषे इत्यादिरूपैर्व्यवहृते तु श्रूयमाणक्रिये शेषाख्ये सम्बन्धे 'शेषे षष्ठी' इत्येव सिद्धायां षष्ठ्यां 'मातुः स्मरति' इत्यादौ 'अधीगर्थदयेशां कर्मणि' इत्यादौ अधीगर्थदयेशां कर्मणि इत्यादिभिः प्रतिपदं विधीयमाना षष्ठी 'मातुः स्मृतम्' इत्यादौ समासस्य निवृत्तये प्रोक्ता। तथा हि शेषे षष्ठी इत्येव सिद्धे पुनः प्रतिपदं षष्ठीविधानमधी-गर्थादिषु षष्ठ्येव तथा स्यान्न तु षष्ठ्यभाव इति नियमार्थम्। तेन मातुः स्मृत-मित्यादौ षष्ठ्यभावप्रयोजकः समासो न भवति। तदेतदुक्तं वार्तिककृता—"प्रतिपदविधाना षष्ठी न समस्यते" इति।

अयं भावः—कर्मादीनि साधनानि शेषस्य व्यपदेशार्थानि कर्मणि शेषे इत्यादिरूपैः कर्मादीनामुपलक्षणत्वमाश्रित्य शेषस्य व्यवहारार्थानि अत्र = अधीगर्थ-दयेशामित्यादौ उपादीयन्ते, न तु शेषविशेषणतया स्वार्थं दर्शयितुम्।

तथा हि—शेषे षष्ठी, कस्मिन् शेषे? कर्मणि, करणे इति वा भूतावस्थागत-कर्मत्वादिरूपस्य साम्प्रतनाश्रयेण शेषस्य विशेषणात् = उपलक्षणतया व्यावर्तनात् कर्माद्येकार्थसमवायिनि = कालभेदेन कर्मत्वादिसमानाधिकरणे कर्मत्वादेः फलभूते शेषे षष्ठी इत्यर्थोऽवतिष्ठते। तथा च विशेषणोपपत्तिः = कर्मादीनामुपलक्षणतया शेषस्य व्यावृत्त्युपपत्तिः। षष्ठी शेषे इति सामान्येन सिद्धापि अधीगर्थेत्यादिना नियतविषयकतया प्रतिपदं विधीयते, षष्ठ्याः पुनर्विधानेन समासो यथा निवर्त्येतेति। पुनः श्रुतिर्हि नियमार्था। तथा च षष्ठ्येव भवतीति वाक्यार्थः। नियमे चेतर-व्यावृत्तिः प्रधानम्। इतरश्च प्रतियोगी = विरोधी व्यवच्छेद्यः = व्यावर्त्यः। षष्ठी-

वतिष्ठते। तदेतदुक्तम्—प्रतिपदविधाना षष्ठी न समस्यत इति। सूत्रव्यापार एवानेन वार्तिकेन दर्शितो नापूर्वोऽर्थः। क्व पुनरयं समासप्रतिषेधः। समासस्य प्राप्तिः। क्व च प्राप्तिः। सुबन्तेषु मातुः स्मृतमिति ॥ १५९ ॥

तथा ह्यत्र—

निष्ठायां कर्मविषया षष्ठी न (च) प्रतिषिध्यते।
शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते ॥ १६० ॥

कृद्योगा च षष्ठी समस्यत इत्युक्तम्। तथा च "कर्तृकर्मणोः कृति" इति या षष्ठी तत्र भवत्येव समासः 'धर्मानुस्मरणम्, अर्थानुस्मरणम्' इत्यादौ।

न ह्येष (शेष)षष्ठ्या नियमः "कर्तृकर्मणोः कृति" इति पुनः कर्मग्रहणाच्छेषग्रहणस्य निवृत्तेरित्यपूर्वं विधानमिदम्। तेन (न) षष्ठ्येवेति षष्ठीनियमद्वारेण समासप्रतिषेधमावेदयते। 'मातुः स्मृतम्' इत्यादौ निष्ठाप्रयोगे

---

विरोधी चात्र षष्ठ्यभावः। स च समासे भवतीति सामर्थ्यादधीगर्थेत्यादिः समासनिषेधरूपतयाऽवतिष्ठते। तदेतदुक्तम्—'प्रतिपदविधाना षष्ठी न समस्यते' इति। अयश्च प्रतिपदविधानायाः षष्ठ्याः समासनिषेधरूपः सूत्रव्यापार एवानेन वार्तिकेन दर्शितोऽपूर्वोऽर्थः। क्व पुनरयं समासप्रतिषेधः, यत्र समासस्य प्राप्तिः ? क्व च प्राप्तिः ? सुबन्तेषु 'मातुः स्मृतम्' इति ॥ १५९ ॥

'मातुः स्मृतम्' इत्यत्र समासप्रतिषेधमुपपादयितुमाह—निष्ठायामिति।

अस्यार्थः—निष्ठायां 'मातुः स्मृतम्' इत्यत्र भावक्तान्ते "कर्तृकर्मणोः कृति" ( पा० २।३।६५ ) इत्यनेन प्राप्ता कर्मविषया षष्ठी च—"न लोकाव्ययनिष्ठा०" ( पा० २।३।६९ ) इति सूत्रेण प्रतिषिध्यते। ततश्च कर्मणः शेषत्वविवक्षायां "षष्ठी शेषे" ( पा० २।३।५९ ) इत्येव षष्ठीसिद्धौ पुनः "अधीगर्थदयेशाम्" ( पा० २।३।५२ ) इति षष्ठीविधानं नियमार्थम्—षष्ठ्येव यथा स्यात्, षष्ठ्यभावो मा भूदिति। तत्र 'मातुः स्मृतम्' इत्यत्र शेषलक्षणया शेषार्थिकया षष्ठ्या सह= तदन्तेन सह प्राप्तः क्तान्तस्य समासो नेष्यत इति।

अयं भावः—'प्रतिपदविधाना षष्ठी न समस्यते', 'कृद्योगा च षष्ठी समस्यते' इत्युक्तम्।

अस्यार्थः—कृद्योगा च 'कर्तृकर्मणोः कृति' ( पा० २।३।६५ ) इति विहिता तु षष्ठी समस्यत इति। तथा च कर्तृकर्मणोः कृतिविहिता या षष्ठी तत्र भवत्येव समासः 'धर्मानुस्मरणम्, अर्थानुस्मरणम्' इत्यादौ।

न ह्येष शेषषष्ठ्या नियमः, 'अधीगर्थदयेशां कर्मणि" ( पा० २।३।५२ ) इत्यतः कर्मग्रहणानुवृत्त्या सिद्धौ "कर्तृकर्मणोः कृति" ( पा० २।३।६५ ) इति पुनः कर्मग्रहणाच्छेषग्रहणस्य निवृत्तेरित्यपूर्वविधानमिदम्। तेन न षष्ठ्येवेति षष्ठी

"न लोकाव्यय…" (पा० २।३।६९) इत्यादिना "कर्तृकर्मणोः कृति" इतीयं षष्ठी निषिद्धेति "अधीगर्थदयेशां कर्मणि" इत्यनेनैव कर्मणि शेषत्वेन विवक्षिते षष्ठीति सामान्येन सिद्धायां पुनर्विधानात् समासप्रतिषेधार्था विज्ञायते।

ननु च "क्तस्य च वर्तमाने", "नपुंसके भाव उपसंख्यानम्" (वा० पा० २।३।६७) इत्यनेनात्र षष्ठी। नैतत्, "शेषविज्ञानात् सिद्धम्" (वा० पा० २।३।६७) इत्यस्य प्रत्याख्यानात् शेषषष्ठ्येवेयं पुनर्विधानेन समासाभावं ज्ञापयति। एवमपि मातुः स्मृतमिति प्रयोगानुपपत्तिः। स्मरतेः सकर्मकत्वात् कर्मणि निष्ठाप्रसङ्गान्मातृसामानाधिकरण्यान्माता स्मृतेति स्यात्। सम्बन्ध्यन्तरापेक्षायां तु मातुः स्मृताया इति प्रयोगो न्याय्यः। सत्यमेतत्। "कर्मादिष्वकर्मकवद्वचनम्" इति तूक्तम्। तथा चात्राकर्मकवद्भावे क्तप्रत्ययान्तेन कर्मणाभि(कर्मणोऽनभि)धानाच्छेषविवक्षायां तत्र षष्ठी पुनर्विधीयमाना समासप्रतिषेधाय सम्पद्यत इति स्थितमेतत्।

एवं "ज्ञोऽविदर्थस्य करणे" (पा० २।३।५१) इत्यादौ प्रतिपदविधाने सर्पिषो ज्ञानम्, मधुनो ज्ञानमित्यादिः समासप्रतिषेध उदाहार्यः।

---

नियमद्वारेण समासप्रतिषेधमावेदयते। मातुः स्मृतम्' इत्यादौ निष्ठाप्रयोगे=भावक्तान्तप्रयोगे 'न लोकाव्यय०" (पा० २।३।६९) इत्यादिना "कर्तृकर्मणोः कृति" इतीयं षष्ठी निषिद्धेति "षष्ठी शेषे" (पा० २।३।५१) इति सामान्येन सिद्धायां षष्ठ्याम् "अधीगर्थदयेशां कर्मणि" (पा० २।३।५२) इत्यनेनैव कर्मणि शेषत्वेन विवक्षिते षष्ठीति पुनर्विधानादियं समासप्रतिषेधार्था विज्ञायते।

ननु "क्तस्य च वर्तमाने" इति सूत्रे 'नपुंसके भाव उपसंख्यानम्" इति वार्त्तिकेनात्र षष्ठी विधीयत इति नेयं शेषे षष्ठी प्रतिप्रसूयमाना समासप्रतिषेधार्था इति चेत्, मैवम्, 'शेषविज्ञानात् सिद्धम्' इति वार्त्तिकेनास्य वार्त्तिकस्य प्रत्याख्यानात् शेषषष्ठ्येवेयं पुनर्विधानेन समासाभावं ज्ञापयति। एवमपि मातुः स्मृतम्' इति प्रयोगानुपपत्तिः, स्मृधातोः सकर्मकत्वात् कर्मणि निष्ठाप्राप्त्या मातृसामानाधिकरण्यान्माता स्मृतेति स्यात्। विशेष्यत्वेन सम्बन्ध्यन्तरापेक्षायां तु मातुः स्मृताया इति प्रयोगो न्याय्यः। सत्यमेतत्। 'कर्मादिष्वकर्मकवद् वचनम्' इति तूक्तम्।

अस्यार्थः—कर्मादिष्वर्थेषु प्रत्ययविधाने कर्तव्येऽकर्मकधातुष्विव प्रत्ययविधानमिति वचनं कर्तव्यमिति। तथा चात्र स्मृधातोरकर्मकवद्भावे भावे क्तप्रत्ययान्तेन कर्मणोऽनभिधानात् शेषविवक्षायां तत्र षष्ठी पुनर्विधीयमाना समासप्रतिषेधाय सम्पद्यत इति स्थितमेतत्। एवं ज्ञोऽविदर्थस्य करणे इत्यादौ प्रतिपदविधाने 'सर्पिषो ज्ञानम्, मधुनो ज्ञानम्' इत्यादिः समासप्रतिषेधे उदाहरणीयः। सर्पिषोपायेन प्रवर्तनम्, मधुनोपायेन प्रवर्तनमिति तयोर्यथायथमर्थः।

ननु चात्र समासे कृते सम्बन्धमात्रं प्रतीयते, न तु करणपूर्वकः सम्बन्ध इति विग्रहवाक्यार्थाभिधाने सामर्थ्याभावादत्र समासो न भविष्यतीति किमनेन यत्नेन। नैतदस्ति। वाक्येऽपि न शाब्दः सम्बन्धविशेषावसायः, सादृश्यात्। तथा हि—कर्मषष्ठ्यामपीदृशमेव वाक्यम्। तत्र यथार्थप्रकरणादिना जानातेर्विदर्थत्वसम्प्रत्यये कर्मषष्ठ्या भवति समासः, तत्त्वज्ञानं वर्णज्ञानमित्यादौ। तथा सर्पिषो जानामीत्यत्रापि (ज्ञानमित्यत्रापि) प्रकरणादेरविदर्थत्वसम्प्रत्यये करणषष्ठ्या अपि भवेत् समास इति शेषग्रहणानुवृत्त्याऽत्रापि पुनर्विधानमाश्रित्य स इति स्थितम्। विभक्तिविधानस्य स्वादिविधिनैकवाक्यत्वेऽप्यवयववाक्यानां स्वव्यापारस्य निवृत्तेः प्रतिपदविधानत्वे न काचिदनुपपत्तिः ॥ १६० ॥

द्विष्ठः सम्बन्धो गुणेषु व्यतिरिच्यत इत्युक्तम्। गुणप्रधानभावस्य चैकत्र विरोधाद् भाष्य उक्तम्—

"न तर्हीदानीमिदं भवति राज्ञः पुरुषस्येति" (म०भा०पा० २।३।५१) इति।

---

ननु चात्र=चो हेतौ=यतोऽत्र समासे कृते सम्बन्धमात्रं प्रतीयेत, मधुज्ञानम्, सर्पिर्ज्ञानमिति, न तु करणपूर्वकः सम्बन्ध इति समासस्य विग्रहवाक्यार्थाभिधाने सामर्थ्याभावादत्र समासो न भविष्यतीति किमनेन 'प्रतिपदविधाना षष्ठी न समस्यते' इति वार्तिकरूपेण षष्ठ्याः पुनर्विधानसामर्थ्यं प्रकल्प्य नियमार्थत्वाभ्युपगमरूपेण वा किमनेन समासप्रतिषेधफलकेन यत्नेन? नैतदस्ति, वाक्योऽपि न सम्बन्धविशेषसम्प्रत्ययः, कर्मषष्ठीशेषषष्ठ्योः रूपसादृश्यात्। तथा हि—कर्मषष्ठ्यामपि ईदृशमेव वाक्यम्। तत्र यथाऽर्थप्रकरणादिना ज्ञाधातोर्ज्ञानार्थत्वसम्प्रत्यये कर्मषष्ठ्यन्तेन भवति समासः, तत्त्वज्ञानं वर्णज्ञानमित्यादौ, तथा सर्पिषो ज्ञानमित्यत्रापि प्रकरणादेरविदर्थत्वसम्प्रत्यये=अज्ञानार्थत्वसम्प्रत्यये करणषष्ठ्या अपि भवेत् समास इति अधीगर्थदयेशामित्यत्रापि शेषग्रहणानुवृत्त्या षष्ठ्याः पुनर्विधानमाश्रित्य नियमाभ्युपगमेन परिहरणीयः समास इति स्थितम्।

ननु 'अधीगर्थदयेशाम्' (पा० २।३।५२) इत्यादिसूत्राणां न प्रतिपदविधित्वम्, स्वादिविधिना एकवाक्यतापन्नानामेव तेषां विधायकत्वात्, केवलानां तेषामविधायकत्वादिति न मातुः स्मृतमित्यादौ प्रतिपदविधित्वप्रयुक्तः समासप्रतिषेधः प्राप्नोतीति चेत्, न, विभक्तिविधानस्य स्वादिविधिना एकवाक्यत्वेऽपि अवयववाक्यानां स्वव्यापारस्य निवृत्तेरेकवाक्यतापन्नानां प्रतिपदविधानत्वेन कदाचिदनुपपत्तिरिति ॥ १६० ॥

"द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते" (साधन० १५७) इत्युक्तं प्राक्। गुणप्रधानभावस्य चैकत्र विरोधाद् भाष्ये आशङ्कितम्—"न तर्हि इदानीमिदं भवति,

तत्र प्रतिसमाधानमुक्तम्—

"भवति बाह्यमर्थमपेक्ष्य" (म० भा० पा० २।३।५१) इति।

एतद्भाष्यं व्याचष्टे—

अन्येन व्यपदिष्टस्य यस्यान्यत्रोपजायते।
व्यतिरेकः स धर्मौ द्वौ लभते विषयान्तरे ॥ १६१ ॥

राज्ञः पुरुषस्य कम्बल इत्यादौ राज्ञा विशेषणेन व्यपदिष्टस्य विशेष्यतया ज्ञापितस्य पुरुषस्य प्रधानभूतस्य अन्यत्र कम्बलादौ प्रतियोगिनि प्रधाने व्यतिरेक आधिक्यं सम्बन्धो जायत इति स भिन्नविषयौ गुणप्रधानभावलक्षणौ द्वौ धर्मौ प्रतिपद्यते। 'व्यपदिष्टस्य' इति भूतकालोपादानेन सम्बन्धिद्वययोगो भिन्नकालगुणप्रधानभावनिमित्तो न विरुध्यत इत्याह ॥ १६१ ॥

---

राज्ञः पुरुषस्येति" इति। तत्र प्रतिसमाधानमुक्तम्—"भवति बाह्यमर्थमपेक्ष्य" इति।

अस्यार्थः—'राज्ञः पुरुषस्य' इति वाक्याद् बाह्यमर्थं कम्बलादिकमपेक्ष्य प्रधानादपि पुरुषात् षष्ठी भवतीति। एतद् भाष्यं व्याचष्टे—अन्येनेति।

अस्यार्थः—'राज्ञः पुरुषस्य गौः' इत्यादौ अन्येन=राज्ञा विशेषणेन, व्यपदिष्टस्य=विशेष्यतया व्यवहृतस्य, यस्य पुरुषस्य, अन्यत्र=गवादौ विशेष्ये प्रधाने, व्यतिरेकः=आधिक्यम्, संसर्ग इति यावत्। उपजायते=गवादिपदसम्बन्धे सति उपजातं भवति। स पुरुषादिरूपं प्रधानम्, विषयान्तरे सति=विषयभेदे सति यथायथं विशेष्यविशेषणरूपनिरूपकभेदे सति, द्वौ धर्मौ प्राधान्यमप्राधान्यञ्च लभते। राजादिनिरूपितं प्राधान्यं गवादिनिरूपितञ्चाप्राधान्यं पुरुषस्येति न काचिदनुपपत्तिरिति।

अयं भावः—'राज्ञः पुरुषस्य कम्बलः' इत्यादौ राज्ञा विशेषणेन व्यपदिष्टस्य विशेष्यतया शाब्दगोचरताप्रापितस्य पुरुषस्य लोकेऽप्रधानत्वेऽपि शाब्दे व्यवहारे राजापेक्षया प्रधानभूतस्यान्यत्र कम्बलादौ प्रधाने प्रतियोगिनि=विशेष्यरूपे निरूपके व्यतिरेकः स्वस्वामिभावसम्बन्धरूपमाधिक्यं जायत इति सः=पुरुषो विषयभेदेन गुणप्रधानभावलक्षणौ द्वौ धर्मौ प्रतिपद्यते। व्यपदिष्टस्येति भूतकालार्थकनिष्ठोपादानेनैकस्य पुरुषस्य विशेष्यविशेषणरूपसम्बन्धिद्वययोगो भिन्नकालगुणप्रधानभावनिमित्तको न विरुध्यत इत्याहेति ॥१६१॥

ततश्च—

**प्राधान्यं स्वगुणे लब्ध्वा प्रधाने याति शेषताम् ।**
**सहयोगे स्वयोगेऽतः प्रधानत्वं न हीयते ॥ १६२ ॥**

**अतो विषयभेदाद्धेतोः पुरुषस्य राजानं सम्बन्धिनं प्रति प्राधान्यं न निवर्तते । स्वस्मिन् हि तत्र गुणेऽप्रधाने राजलक्षणे प्राधान्यं पूर्वमेव तेन लब्धम् । कम्बलादौ त्वपरस्मिन् प्रधाने शेषभावं गुणत्वं यातीति तत्र स्वस्य कम्बलादेर्योगे पूर्वप्रतीतं प्राधान्यं नाव( प )गच्छति, विषयभेदात्, गुणप्रधानभावस्यैकत्राविरोधादित्यर्थः ।**

**'सहयोगे' इति प्रसङ्गान्निदर्शनमभिन्नयोगक्षेममाह—"सहयुक्तेऽप्रधाने" (पा० २।३।१९) इत्यनेनाप्रधानात् तृतीया विधीयते पुत्रेण सहागत इति । तत्र पुत्रो देवदत्तस्येति यथा विशेष्यमाणस्तदपेक्षया प्रधानमप्यागमने सहार्थसामर्थ्यादागतसम्बन्धादनुमीयमानागमनसम्बन्धोऽप्रधानमिति भवति । ततोऽप्रधानलक्षणा तृतीया ।**

---

ततश्च फलितमाह—प्राधान्यमिति ।

अस्यार्थः—यथा—'स्वपुत्रेण सहागतो देवदत्तः' इत्यत्र "सहयुक्तेऽप्रधाने" (पा० २।३।१९) इत्यस्य सूत्रस्य विषये पुत्रः स्वस्य गुणे विशेषणे पितरि देवदत्ते प्राधान्यं लब्ध्वाऽपि आगमने सहार्थसामर्थ्यादागतसम्बन्धादनुमीयमानागमनसम्बन्धोऽप्रधानमिति सहयोगे = सहार्थसाहित्ये, विशेषणतया सम्बन्धे सति प्रधाने सहार्थसाहित्ये शेषतां यातीति ततोऽप्रधानलक्षणा तृतीया । एवम् = अत एव कारणात्—'राज्ञः पुरुषस्य धनम्' इत्यत्र स्वयोगेऽपि = प्रधानीभूतस्य धनस्य विशेषणत्वेऽपि पुरुषस्य राजापेक्षया प्रधानत्वं न हीयते, कालभेदाद् विषयभेदाच्चेति ।

अयं भावः—अतो हि विषयभेदाद्धेतोः पुरुषस्य राजानं विशेषणतया स्वसम्बन्धिनं प्रति प्राधान्यं विशेष्यत्वरूपं न निवर्तते । तत्र स्वस्मिन् गुणेऽप्रधाने राजरूपे प्राधान्यं पूर्वमेव तेन लब्धम् । कम्बलादौ त्वन्यस्मिन् प्रधाने शेषभावं गुणत्वं यातीति तत्र स्वस्य धनस्य कम्बलादेर्योगेऽपि पूर्वप्रतीतं राजनिरूपितं प्राधान्यं नापगच्छति । विषयभेदाद् गुणप्रधानभावस्यैकत्र वृत्तावविरोधादित्यर्थः ।

कारिकायां 'सहयोगे' इत्यनेन प्रसङ्गादभिन्नयोगक्षेमम् = समानयुक्तिकं दृष्टान्तमाह—"सहयुक्तेऽप्रधाने" इत्यनेनाप्रधानात् तृतीया विधीयते "स्वपुत्रेण सहागतो देवदत्तः" इति । तत्र यथा पुत्रो देवदत्तेन विशेष्यमाणस्तदपेक्षया स्वपुत्र इत्यत्र प्रधानमपि आगमने सहार्थसामर्थ्यादागतसम्बन्धादनुमीयमानागमनसम्बन्धोऽप्रधानमिति भवति, ततोऽप्रधानलक्षणा तृतीया । स्वपुत्रनिरूपितसाहित्यवदागमनकर्ता

**तथा पुरुषो राजापेक्षया प्रधानमपि स्वविशेष्यापेक्षयाऽप्रधानत्वाद् राज्ञः पुरुषस्य धनमिति षष्ठीं प्रतिपद्यत इति सिद्धम् ॥१६२॥**

**॥ इति श्रीभूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे साधनसमुद्देशे शेषाधिकारः ॥**



---

देवदत्त इति बोधः। ततश्च देवदत्तनिरूपितं प्राधान्यं सहार्थसाहित्यनिरूपितं चाप्राधान्यं पुत्रे इति रीत्या विषयभेदादेकत्र वृत्तावविरोधः प्राधान्याप्राधान्ययोः।

तथा पुरुषो राजापेक्षया प्रधानमपि स्वविशेष्यकम्बलादिरूपधनापेक्षयाऽप्रधानत्वाद् राज्ञः पुरुषस्य धनमिति षष्ठी प्राप्नोतीति कारिकार्थः सिद्ध इति ॥ १६२ ॥

॥ इति श्रीब्रह्मीभूतकाशीनाथतनयरघुनाथशर्मकृतायामम्बाकर्त्र्यां साधनसमुद्देशे शेषाधिकारः ॥



# अथ परिशिष्टः प्रथमार्थविचारः

एवं तावत् कारकात्मा विभक्त्यर्थो विचारितः। प्रथमा तु "अभिहिते प्रथमा" (अ० आ० २।३।४६) इत्येवं कैश्चिद् विहिता।

तिङादिभिरभिहिते कर्मादौ कारके प्रथमा। 'पच्यते ओदनः, मांसपचनो वह्निः, गोघ्नोऽतिथिः, प्रस्कन्दनः स्तम्भः, निशा नीशाणा (निशाननी शाणा), पचति देवदत्तः' इति यथाक्रमं कर्मादिकर्तृपर्यन्तकारकाभिधानं तिङादिनोदाहृतम्।

कृतः कट इति कृता कर्माभिधानम्, औपगव इति तद्धितेन सम्बन्धाभिधानम्, चित्रगुरिति समासेन। राज्ञः पुरुष इत्यत्र परस्परापेक्षयोः सम्बन्धमात्रे वाक्यपर्यवसानेऽन्यतरपदनिबद्धया षष्ठ्या द्विष्ठसम्बन्धाभिधाने परस्मादभिहितलक्षणैव प्रथमा। अत्र तु लक्षणे चोदितम्—

---

एवमेतावता ग्रन्थेन कारकरूपो विभक्त्यर्थो विचारितः। प्रथमा-विभक्तिस्तु—"अभिहिते प्रथमा" इत्येवं कैश्चिद् विहिता। तिङ्कृत्तद्धितसमासैरभिहिते कर्मादौ कारके प्रथमेति तदर्थः।

तत्र तिङा कर्मणोऽभिधानम्, यथा—'पच्यते ओदनो देवदत्तेन' इति। कृताभिधानम्—'मांसपचनो वह्निः'। मांसः पच्यते येनासौ मांसपचना इति ल्युटा करणाभिधानम्। 'गोघ्नोऽतिथिः' इत्यत्र गां हन्ति असौ इति व्युत्पत्तौ कृता कप्रत्ययेन सम्प्रदानाभिधानम्। 'प्रस्कन्दनः स्तम्भः' इत्यत्र प्रस्कन्दत्यस्मादिति व्युत्पत्तौ बाहुलकात् पञ्चम्यर्थे ल्युटा अपादानाभिधानम्। 'निशाननी शाणा' इत्यत्र निशान्यते तीक्ष्णीक्रियतेऽस्यां शस्त्रादिकमिति व्युत्पत्तौ अधिकरणे ल्युटाधिकरणाभिधानम्। शाणा इति लोके शान इति। 'पचति देवदत्तः' इत्यत्र कर्तरि तिङा कर्तुरभिधानमिति यथाक्रमं तिङादिना कर्मादिकर्तृपर्यन्तकारकाभिधानमुदाहृतम्।

'कृतः कटः' इत्यत्र कृता कर्माभिधानम्। 'औपगवः' इत्यत्र तस्येदमित्यणा तद्धितेन सम्बन्धाभिधानम्। 'चित्रगुः' इत्यत्र समासेनापि सम्बन्धाभिधानमेव। इदञ्च प्रवृत्तिनिमित्तं प्रातिपदिकार्थं इति पक्षे। द्रव्यं प्रातिपदिकार्थं इति पक्षे तूभयत्रापि सम्बन्ध्यभिधानमेव। 'राज्ञः पुरुषः' इत्यत्र परस्परापेक्षयो राजपुरुषयोः सम्बन्धमात्रे वाक्यपर्यवसानेऽन्यतरपदनिबद्धया षष्ठ्या द्विष्ठसम्बन्धाभिधानेऽपि प्रागुक्तरीत्या पूर्वस्मात् पदादप्रधानं वाचकादेव षष्ठी, परस्मात् पदात्तु प्रधानवाचकादभिहितलक्षणा प्रथमैव।

"अभिहितलक्षणायामनभिहिते प्रथमाविधिः" (वा० पा० २।३।४६) इति। 'वृक्षः, पर्वतः' इत्यादौ तिङादिभिरनभिहिते कस्मिंश्चित् कारके प्रथमा न प्राप्नोति विधेयेत्यर्थः।

अत्र परिहारः—"अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति" इत्युक्तः। क्रियानुषङ्गमन्तरेणाव्यवहार्यः पदार्थ इति सामान्यरूपाव्यभिचरितसम्बन्धा सर्वत्रास्तिक्रिया सन्निधीयत इति वृक्षोऽस्तीति वाक्यप्रयोगादभिहिते तिङा कर्तरीयं प्रथमा। तदुक्तं भाष्ये—"न सत्तां पदार्थो व्यभिचरति" इति।

अवधृतपदार्थाधिकरणत्वाच्छब्दप्रयोगस्यावधारणस्य च सत्तापेक्षत्वादुपचारसत्तासमाविष्टः सर्वः पदवाच्योऽर्थ इत्यर्थः। तथा च प्रागुक्तम्—

प्रवृत्तिहेतुं सर्वेषां शब्दानामौपचारिकीम्।
एतां सत्तां पदार्थो हि न कश्चिदतिवर्तते॥ इति।

---

"अभिहिते प्रथमा" इत्यत्र तु लक्षणे इदमाशङ्कितम्—"अभिहितलक्षणायामनभिहिते प्रथमाविधिः" इति।

अस्यार्थः—अभिहितलक्षणायां प्रथमायां विधेयत्वेन सम्मतायां सत्यां 'वृक्षः, पर्वतः' इत्यादौ क्रियारहिते पदमात्रे प्रयुक्ते तिङादिभिरनभिहिते सति कस्मिंश्चित् कारके प्रथमा न प्राप्नोति. सा विधेयेति।

अत्र परिहार उक्तस्तत्रैव—"अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति" इति।

अस्यार्थः—भवन्तीपरः = लट्परः, प्रथमपुरुषः = प्रथमपुरुषतिङन्तः अप्रयुज्यमानोऽप्यस्ति, अस्धातुः, अस्ति। क्रियापदाक्षेपं विना केवलस्य सुबन्तपदस्य वाक्यत्वानिष्पत्तेः, वाक्यस्यैव च व्यवहारक्षमतया लोके प्रयोगार्हत्वात्। क्रियासम्बन्धं विना पदार्थो न व्यवहार्यो भवतीति सामान्यरूपेणाव्यभिचरितसम्बन्धा सर्वत्र अस्तिक्रिया सन्निधीयत इति। वृक्षोऽस्ति' इति वाक्यप्रयोगात् तिङाऽभिहिते कर्तरीयं प्रथमा। तदुक्तं भाष्ये—"न सत्तां पदार्थो व्यभिचरति" इति। सत्तयाऽवधृते पदार्थे तद्वाचकशब्दप्रयोगो भवति, इति सत्तां विनाऽवधारणस्यासम्भवादुपचारसत्तासमाविष्टः = व्यावहारिकसत्तासमाविष्टः सर्वोऽपि पदवाच्योऽर्थं इति प्रकृतभाष्यवाक्यार्थः। तथा चात्रैव प्रागुक्तम् —

प्रवृत्तिहेतुं सर्वेषां शब्दानामौपचारिकीम्।
एतां सत्तां पदार्थो हि न कश्चिदतिवर्तते॥ इति।

नास्ति, वध्यते, नीयते इत्याद्यनुषङ्गोऽपि निरूपितस्य सतो भवति इत्यौत्सर्गिकी सर्वत्रेयं सत्ता। तथा च विरोधिभिरविरोधिभिश्च धर्मैरेतस्यामवस्थित एव शब्दः समन्वेतीति प्रागेवोक्तं तत्रैव च निर्णीतम्।

एवमपि "अभिहितानभिहिते प्रथमाभावः" (वा० पा० २।३।४६) इति चोदितम्। 'प्रासाद आस्ते' इत्यादावासिक्रियापेक्षयाधिकरणशक्तिर्नाभिहिता, सदिक्रियापेक्षया त्वभिहिता कृता। ततश्चाभिहितलक्षणा प्रथमा प्राप्नोति। तथा "फलिता वनस्पतयः', 'तारस्वराः परभृताः' इत्यादौ समानाधिकरणसम्बन्धे प्रातिपदिकार्थव्यतिरेकाभावान्न किञ्चित् केनचिदभिहितमित्यभिहितलक्षणा प्रथमा न स्यात्। 'उच्चैः', 'नीचैः' इति चास्तिपदाध्याहारेणाधिकरणशक्तिप्रधानस्याव्ययस्यासम्बन्धान्न केनचिदभिधानमिति कथं प्रथमा? एवं "तिङ्समानाधिकरणे प्रथमा" (वा० पा० २।३।४६) इत्येतदप्यनेनैव दृष्टान्तेन लक्षणमलक्षणम्।

---

अस्यार्थः—हि = यतः, सर्वेषां शब्दानां लोके प्रवृत्तिहेतुम् = प्रवृत्तिनिमित्तम्, औपचारिकीम् = व्यावहारिकीम्, एताम् = व्यवहारे लौकिकपदार्थेषु प्रतीयमानाम्, सत्तां कश्चिदपि पदार्थो नातिवर्तते = नातिक्रामति, सर्वेषां पदार्थानां भूतानां भौतिकानाञ्चानिर्वचनीयत्वेन परमार्थसत्तायास्तेष्वभावादिति।

यत्र 'नास्ति, वध्यते, नीयते' इत्याद्यनुषङ्गः = इत्यादेराक्षेपेण सम्बन्धोऽपि निरूपितस्यैव सतः पदार्थस्य भवति इत्यौत्सर्गिकी = स्वाभाविकी सर्वत्र इयं सत्ता = व्यावहारिकी सत्ता। तथा च विरोधिभिरविरोधिभिश्च धर्मैः सह एतस्यां सत्तायाम् = व्यावहारिक्यां सत्तायामवस्थित एव शब्दः स्वार्थद्वारा समन्वेति = सम्बन्धमनुभवति इति प्रागेवोक्तं तत्रैव च निर्णीतम्।

एवमपि 'अभिहितानभिहिते प्रथमाभावः" इति चोदितम्।

अस्यार्थः—केनचिदभिहिते केनचिच्चानभिहिते प्रथमाया भावः सत्त्वमुत्पत्तिः प्राप्नोति। "प्रासादे आस्ते" इत्यादौ। इह हि प्रासादगताऽधिकरणशक्तिः घञाभिहिता, तिङा चानभिहिता इति अभिहिते प्रथमा प्राप्नोति। किञ्चासिक्रियापेक्षाधिकरणशक्तिर्नाभिहिता, सदिक्रियापेक्षा त्वभिहिता कृता प्रत्ययेन। ततश्चाभिहितलक्षणा प्रथमा प्राप्नोति। तथा 'फलिता वनस्पतयः, तारस्वराः परभृताः' इत्यादौ समानाधिकरणसम्बन्धे = समानाधिकरणयोः अभेदसम्बन्धे प्रातिपदिकार्थव्यतिरेकाभावात् प्रातिपदिकार्थादधिकस्य प्रतीत्यभावात् = न किञ्चित् केनचिदभिहितमिति अभिहितलक्षणा प्रथमा न प्राप्नोति। 'उच्चैः, नीचैः' इत्यत्रास्तिपदाध्याहारेऽपि अधिकरणशक्तिप्रधानयोरव्यययोरेतयोस्तेन सहासम्बन्धान्न केनचित् तदर्थस्याभिधानमिति कथं प्रथमा? "तिङ्समानाधिकरणे प्रथमा" इत्येतदपि लक्षणम्, अनेनैव दृष्टान्तेन = उच्चैर्नीचैरित्यत्रोक्तयैव युक्त्या अलक्षणम्।

अपरमप्यत्र दूषणमुक्तम्—"शतृशानचोश्च निमित्तभावात्तिङोऽभावस्तयोर-पवादत्वात्" ( वा० पा० २।३।४६ ) इति।

इह विभज्यान्वाख्यानपक्षे 'देवदत्त पच् ल्' इति स्थिते यावत्तिङ उत्पत्तिर्नास्ति, तावत् तिङ्समानाधिकरणत्वाभावात् प्रथमा न प्राप्नोति। तथा च देवदत्तशब्दा-दविशेषविहिताः सर्वे स्वादयः स्थिता इति लटः स्थाने द्वितीयाद्यन्तपदसामाना-धिकरण्ये विधीयमानौ शतृशानचौ प्राप्नुतोऽपवादभूतौ, न तु तिङः। तेषां तु लिडादिरवकाशो भवेत्। स एव च प्रथमाया अपीति 'पचति देवदत्तः' इति लट्समानाधिकरणः प्रयोगः प्रथमान्तो न स्यात्।

तदेवं लक्षणान्तरे प्रत्याख्याते 'प्रातिपदिकार्थलिङ्गपरिमाण…' (पा०२।३।४६) इत्याद्याचार्यीयमेव लक्षणं न्याय्यमवस्थापितम्।

तत्र विचार्यते--ङ्याप्प्रातिपदिकस्य स्वादिप्रकृतित्वेन विज्ञातत्वात् प्रातिपदिकस्यैवार्थ इति लब्धेऽर्थे विशेषणं प्रातिपदिकग्रहणं नोपयुज्यते। तथा च तदसंयुक्तमेवार्थशब्देन अनर्थकात् प्रथमां विधातुम्। 'अध्यागच्छति, पर्यागच्छति'

---

अपरमप्यत्र दूषणमुक्तम्—"शतृशानचोश्च निमित्तभावात् तिङोऽभावस्त-योरपवादत्वात्" इति।

अस्यार्थः=वाक्यान्वाख्यानपक्षे 'देवदत्त पच् ल्' इति दशायां तिङ्समाना-धिकरणत्वाभावात् प्रथमाया अभावेऽप्रथमासामानाधिकरण्यरूपस्य शतृशानचोर्नि-मित्तस्य भावात्, सत्त्वाच्च तु तिङोऽभावः, तयोः शतृशानचोऽस्तिङपवादत्वादिति।

तथा हि—इह वाक्यविभज्यान्वाख्यानपक्षे 'देवदत्त पच् ल्' इति स्थिते यावत् तिङ उत्पत्तिर्नास्ति तावत् तिङ्समानाधिकरणत्वाभावात् प्रथमा न प्राप्नोति। तथा च देवदत्तशब्दात् स्वादिसूत्रेणाविशेषविहिताः—सामान्येन विहिताः सर्वे स्वादयः स्थिता इति द्वितीयाद्यन्तपदसामानाधिकरण्ये लटः स्थाने विधीयमानौ शतृशानचौ तिङोऽपवादभूतौ प्राप्नुतः, न तु तिङः। तिङां तु लिडादिरवकाशः। स एव च प्रथमाया अपीति 'पचति देवदत्तः' इति लट्समानाधिकरणः प्रथमान्तः प्रयोगो न स्यात्।

तदेवमेतस्मिन् लक्षणान्तरेऽपि प्रत्याख्याते "प्रातिपदिकार्थलिङ्गपरिमाण०" इत्यादिकमाचार्यीयमेव=पाणिनीयमेव लक्षणं न्याय्यमवस्थापितम्। तत्र विचार्यते—ङ्याप्प्रातिपदिकस्य स्वादिप्रकृतित्वेन विज्ञातत्वाद् अर्थे इत्येतावन्मात्रोक्तावपि प्रातिपदिकस्यैवार्थ इति लब्धे पुनरर्थे विशेषणं प्रातिपदिकग्रहणं नोपयुज्यते। तथा च प्रातिपदिकेति लुप्तपञ्चमीकमसंयुक्तमेवार्थशब्देनानर्थकात् प्रथमां विधातुम्। 'अध्यागच्छति, पर्यागच्छति' इत्यत्रानर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञा उपसंख्याता वार्त्तिककृता।

इत्यनर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञोपसंख्याता । यद्येवं संज्ञासामर्थ्यात् प्रथमा भविष्यति । न हि विभक्तिविधानादन्यप्रातिपदिककार्यस्यात्र सम्भवः ।

किं च 'अधिपरी अनर्थकौ' (पा० १।४।९३) इति गतिसंज्ञाबाधनार्थात् कर्मप्रवचनीयसंज्ञाविधेर्लिङ्गादर्थवत्कृतमेषां भवतीत्यनुमीयते । अन्यथा क्रियाविशेषद्योतकत्वाभावे गतिसंज्ञाप्राप्तिरेव न स्यात् । स्वादिविधाने च भिन्नवाक्यतापक्षेऽविशेषेणोत्पद्यमानाः स्वादयः सिद्धा एव । अत्रैकवाक्यतापक्षेऽपि प्रत्ययनियमे प्रकृतापेक्षत्वान्नियमस्य कर्मण्येव द्वितीया, न तु करण इत्यनर्थकादव्यावृत्तिरेव । अर्थनियमो वाश्रयणीयः कर्मणि द्वितीयैवेत्यादिः ।

एवं च कृत्वाव्ययेभ्यो निःसंख्येभ्यः स्वादयो विद्यन्त इत्युच्चैर्नीचैरित्यप्यत्र नोदाहृतम् । अव्ययाल्लुग्वचनमप्यत्र ज्ञापकमस्ति । क्रमव्यतिक्रमे च प्रयोजनाभावात् पाठक्रमायाता प्रथमैवात्र । तस्मादर्थविशेषणमेव प्रातिपदिकग्रहणम् । सामर्थ्यलब्धमपि व्याप्त्यर्थं प्रातिपदिकमात्रार्थे प्रथमां विधत्ते, नाव्ययादेव ।

---

यद्येवं प्रातिपदिकसंज्ञाविधानसामर्थ्यादेवानर्थकात् प्रथमा भविष्यतीति किमनेनात्रत्येन प्रातिपदिकग्रहणेन ? न हि विभक्तिविधानादन्यस्य प्रातिपदिककार्यस्यात्र सम्भवः ।

किञ्च, "अधिपरी अनर्थकौ" (पा० १।४।९३) इत्यनेन गतिसंज्ञां बाधितुं क्रियमाणात् कर्मप्रवचनीयसंज्ञाविधिरूपात् लिङ्गादेषामर्थवत्त्वप्रयुक्तकार्यमधिपर्यादीनामनर्थकानामपि भवतीत्यनुमीयते । अन्यथा क्रियाविशेषद्योतकत्वाभावे गतिसंज्ञाप्राप्तिरेवैषां न स्यात् । स्वादिविधाने च विभक्तिविधिभिः सह भिन्नवाक्यतापक्षेऽविशेषेण=सामान्येन उत्पद्यमानाः स्वादयोऽनर्थकेभ्योऽपि सिद्धा एव । अत्रैकवाक्यतापक्षेऽपि प्रत्ययनियमपक्षे प्रकृतापेक्षत्वान्नियमस्य कर्मण्येव द्वितीया, न तु करणे इति नियमाकार इत्यनर्थकादव्यावृत्तिरेव । अर्थनियमाश्रयणे तु कर्मणि द्वितीयैवेत्यादिर्नियमाकारः । यत्रैवकारस्ततोऽन्यत्र नियम इति प्राचां प्रवादात् ।

एवमत्रार्थनियमपक्षेऽपि अनर्थकाद् विभक्त्युत्पत्तेरव्यावृत्तिरेव । एवञ्च कृत्वाऽनर्थकेभ्य इव निःसंख्येभ्योऽपि अव्ययेभ्यः स्वादयो भविष्यन्तीति सार्थकाव्ययानि 'उच्चैः, नीचैः' इत्यादीन्यपि अत्र=प्रातिपदिकेति लुप्तपञ्चमीके नोदाहृतानि । अव्ययाल्लुग्वचनमप्यत्र=अव्ययेभ्यः स्वाद्युत्पत्तौ ज्ञापकमस्ति । क्रमव्यतिक्रमे च फलाभावात् पाठक्रमायाता प्रथमैव अत्र=सार्थकेऽनर्थके चाव्यये । तस्मात्=लुप्तपञ्चमीकस्य प्रातिपदिकेत्यस्य अर्थे इत्यनेनासंयुक्तस्याभ्युपगमे फलाभावात्, अर्थविशेषणमेव प्रातिपदिकग्रहणम् । एतच्चार्थे इत्युक्तौ सामर्थ्यलब्धमपि व्याप्त्यर्थम्=सकलप्रातिपदिकव्यापनार्थम्, प्रातिपदिकमात्रार्थे=सकलप्रातिपदिकार्थे प्रथमां विधत्ते, नाव्ययादेव सार्थकादनर्थकाद्वेति । तत्र प्रातिपदिकसामान्येन विशेष्यमाणोऽर्थः प्रातिपदिकार्थः सत्ता व्यावहारिकी घटादिसकलार्थनिष्ठेति केचिदाहुः ।

तत्र प्रातिपदिकसामान्येन विशेष्यमाणोऽर्थः सत्तेति केचिदाहुः। सा हि सर्वत्रार्थेष्वव्यभिचरितसम्बन्धा प्रथमं प्रतीयमाना विभक्त्यादिसम्बन्धनिरपेक्षस्य प्रातिपदिकमात्रस्यार्थ इति व्यवस्थाप्यते। कल्पितान्वयव्यतिरेकवशेन हि शास्त्रीयार्थनिर्णयः। तत्र च शुद्धस्य प्रातिपदिकस्य वृक्षं वृक्षेणेत्यादौ विभक्त्यर्थानुगमेऽपि सत्तामात्रानुगमात् तदर्थनिश्चयः। निरधिकरणा च सत्ता न सम्भवतीति द्रव्याधिकरणैव तदर्थः। तावति हि निरपेक्षः शब्दः। लिङ्गादौ प्रत्ययापेक्षणान्मात्रग्रहणाच्चेहेयानर्थो व्यवस्थाप्यते। ततश्च पञ्चकपक्षेणास्याविरोधः।

येनाप्युक्तं प्रातिपदिकार्थः सिद्धतेति तेनापि नामपदानामाख्यातपदवैलक्षण्येन सिद्धस्वभावार्थाभिधायित्वमुक्तम्, न तु साधनसम्पाद्यता सिद्धतास्याभिप्रेता। येन शब्दान्तरप्रयोगसमधिगम्यत्वात् तस्याः प्रातिपदिकमात्रार्थता न भवेदिति चोद्येत। धर्ममात्रे च शब्दस्य विश्रान्त्यभावान्निमित्तेनात्मरूपतामापादितो निमित्ती प्राति-

---

यतः सा सर्वेष्वर्थेष्वव्यभिचरितसम्बन्धा व्यक्त्यपेक्षया प्रथमं प्रतीयमाना विभक्त्यादिसम्बन्धनिरपेक्षस्य प्रातिपदिकमात्रस्य = केवलस्य प्रातिपदिकस्यार्थ इति व्यवस्थाप्यते। कल्पितान्वयव्यतिरेकवशेन हि शास्त्रीयार्थनिर्णयः। स्तश्चात्र कल्पितान्वयव्यतिरेकौ। प्रातिपदिकसत्त्वे सत्ताप्रतीतिसत्त्वम् = तदभावे तदभाव इति। तत्र च शुद्धस्य प्रातिपदिकस्य 'वृक्षं वृक्षेण' इत्यादौ विभक्त्यनुगतस्य च विभक्त्यर्थानुगमेऽपि उभयत्र सत्तामात्रानुगमात् = उभयत्र प्रातिपदिकार्थे केवलायाः सत्ताया विशेषणतयाऽनुगमात् सत्ताया एव प्रातिपदिकार्थत्वनिश्चयः। निरधिकरणा च सत्ता न सम्भवतीति द्रव्याधिकरणैव = द्रव्यनिष्ठतया - द्रव्यविशेषणतया च प्रतीयमानैव सा प्रातिपदिकार्थः। यतस्तावत्यर्थे = सत्ताविशिष्टद्रव्यरूपेऽर्थे प्रत्ययनिरपेक्षः प्रातिपदिकरूपः शब्दः। लिङ्गपरिमाणादौ प्रत्ययापेक्षणादिह मात्रग्रहणाच्च प्रातिपदिकमात्रार्थपदेनेह इयानर्थः = सत्ताविशिष्टद्रव्यरूपोऽर्थः प्रातिपदिकमात्रार्थत्वेन व्यवस्थाप्यते। ततश्च पञ्चकं प्रातिपदिकार्थ इति पक्षेण सहास्याविरोधः। द्रव्यस्य प्रातिपदिकार्थत्वाभावे तु चतुष्कमेव प्रातिपदिकार्थः स्यात्।

येनाप्युक्तं प्रातिपदिकार्थः सिद्धतेति, तस्य नायमभिप्रायः--सिद्धता = साधनसम्पाद्यता इति। तथा सति तथाविधायाः सिद्धतायाः शब्दान्तरप्रयोगसमधिगम्यत्वात् प्रातिपदिकमात्रार्थता न स्यात्।

किन्तु नामपदानामाख्यातपदेभ्यः साध्यस्वभावार्थाभिधायिभ्यो वैलक्षण्येन सिद्धस्वभावार्थाभिधायित्वमिति तस्याभिप्रायः। ततश्च तत्र सिद्धता = सिद्धस्वभावता इति। लौकिकव्यवहारे प्रवृत्तिनिमित्तरूपे धर्ममात्रे च क्रियानर्हे शब्दस्य विश्रान्त्यभावात् प्रवृत्तिनिमित्तेन धर्मेणात्मरूपताम् = तादात्म्यम् आपादितः प्रवृत्तिनिमित्ती धर्मी प्रातिपदिकार्थ इति केचित् स्फुटमेवाचक्षते। प्रवृत्तिनिमित्तं च

पदिकार्थ इति केचित् स्फुटमेवाचक्षते। निमित्तं जातिगुणक्रियाः, निमित्ती तदाश्रयः समवायवशात् तिरोहितरूप एव। अत एव निमित्तेनात्मरूपतामिवापादित इत्युच्यते। न तु भावतो रूपान्तरापत्तिरत्र विवक्षिता। तदाच्छुरणमात्रं तु तथैवाध्यवसायात्। न चात्र विरम्य व्यापारः, उपाध्युपरक्तस्यैव द्रव्यस्य शब्दात् प्रतीतेः। न तु प्रतिपाद्यप्रातिपदिकाच्छुद्धं द्रव्यं पश्चादुद्भूतं लिङ्गादिविशेषं प्रतीयते। एवं ह्येकपदोपात्तेनापि तेनापत्यादिनेव प्रातिपदिकार्थो व्यतिरिच्येत। न चैवम्, तस्माद् विशिष्टस्यैवार्थस्य प्रातिपदिकवाच्यत्वाल्लिङ्गोपरक्तस्यापि प्रातिपदिकार्थत्वाद् मात्रग्रहणादधिकव्युदासे कुमारी, वृक्षः, कुण्डमिति लिङ्गग्रहणस्योदाहरणं दत्तम्। यथा हि कर्माधिके प्रातिपदिकार्थे प्रथमा न भवति, मात्रग्रहणात् सम्बोधने प्रथमाविधेश्च लिङ्गात्। तथा लिङ्गाधिकेऽपि न स्यादिति लिङ्गग्रहणं क्रियते। परिमाणग्रहणं प्रस्थादीनां परिच्छेदकनिमित्तस्तद्वत्यभेदेन (परिच्छेदनिमित्तकस्तद्वत्यभेदेन) प्रयोगः साधुर्यथा स्यादिति, प्रस्थः परिमाणमेषां व्रीहीणां प्रस्थो व्रीहयः, खारी आढकमिति। सोऽयमित्यभेदोपचारे हि भेदावहानां मानमेयसम्बन्धो न प्रतीयते

---

जातिगुणक्रियाः, प्रवृत्तिनिमित्ती च तदाश्रयः, प्रवृत्तिनिमित्तस्य समवायवशात् तिरोहितरूप एव = तदात्मतापत्त्या तिरोहितनिजस्वरूप एव। अत एव प्रवृत्तिनिमित्तेनात्मरूपतामिवापादित इत्युच्यते। न तु स्वभावतः प्रच्युत्यरूपान्तरापत्तिरत्र विवक्षिता; किन्तु तदा च्छुरणमात्रम् = प्रवृत्तिनिमित्तरूपेण धर्मिणो मानमात्रं विवक्षितम्। लोके तथैव = प्रवत्तिनिमित्तरूपेणैव धर्मिणोऽध्यवसायात्।

न चात्र प्रवृत्तिनिमित्ते तदाश्रये च धर्मिणि शब्दस्य विरम्य व्यापारः, उपाध्युपरक्तस्यैव = प्रवृत्तिनिमित्तालिङ्गितस्यैव द्रव्यस्यैकेनैवाभिधाव्यापारेण प्रतीतेः। न तु प्रातिपदिकात् शुद्धं द्रव्यं प्रतिपाद्य पश्चादुद्भूतलिङ्गादिविशेषं द्रव्यं प्रतीयते। एवं सति ह्येकपदोपात्तेनापि तेन = द्रव्येण अपत्यादिनेव प्रातिपदिकार्थः प्रवृत्तिनिमित्तरूपो व्यतिरिच्येत = अधिकः क्रियेत। न चैवमस्ति। तस्मात् प्रवृत्तिनिमित्तविशिष्टस्यैवार्थस्य प्रातिपदिकवाच्यत्वात् तद्वल्लिङ्गोपरक्तस्यापि प्रसक्तात् प्रातिपदिकार्थत्वाद् मात्रग्रहणादधिकव्युदासे = प्रवृत्तिनिमित्ततदाश्रयाभ्यामधिकस्य लिङ्गादेर्व्युदासे 'कुमारी, वृक्षः, कुण्डम्' इति लिङ्गग्रहणस्योदाहरणं दत्तम्। यथा हि कर्माधिके प्रातिपदिकार्थे प्रथमा न भवति, मात्रग्रहणात्, सम्बोधने प्रथमाविधेश्च लिङ्गात्, तथा लिङ्गाधिकेऽपि न स्यादिति लिङ्गग्रहणं क्रियते। परिमाणग्रहणं तु परिच्छेदरूपप्रवृत्तिनिमित्तकः प्रस्थादीनां तद्वति = मानमेयसम्बन्धेन प्रस्थादिमति व्रीह्यादौ, अभेदारोपेण प्रयोगः साधुर्यथा स्यादिति, प्रस्थः परिमाणमेषां व्रीहीणामित्यर्थे 'प्रस्थो व्रीहयः, खारी व्रीहयः, आढकं व्रीहयः' इति। भेदावहानां सोऽयमित्यभेदोपचारे हि मानमेयसम्बन्धो न प्रतीयेत, आनन्तर्यादिरूपं सम्बन्धान्तर-

( न प्रतीयेत ) । आनन्तर्यादिसम्बन्धान्तरमपि वा प्रतीयेतेति परिमाणाधिके प्रातिपदिकार्थे मानमेयसम्बन्धनिमित्ताभेदोपचाराभिव्यक्त्यर्थं प्रथमा विधीयते । असति तु प्रथमाविधानेऽस्मिन् "तदस्य परिमाणम्" ( पा० ५।१।५७) इति योगविभागात् तद्धितः, पक्षे वाक्यं स्यात् । इदानीं तु वचनसामर्थ्यात् त्रयमपि भवति । तदेतद् वक्ष्यति—

मानमेयादिसम्बन्धविशेषेऽङ्गीकृते तथा ।
प्रस्थादीनामसाधुत्वं तद्धितेन विना भवेत् ।। (वा०प० ३, वृत्ति० ८६)

तद्धितो योगभेदेन वाक्यं वा स्याद् विभाषितम् ।
परिमाणाधिके तत्र प्रथमा शिष्यते पुनः ।। (वा० प०३, वृत्ति० ८७) इति ।

क्रियानिमित्तस्य चात्र परिमाणशब्दस्याश्रयणदुन्मानादेरपि ग्रहणम् । शुक्लादीनां मतुब्लोपात् तद्धितवृत्तावभेदविवक्षायामेव प्रातिपदिकग्रहणादेव

मपि वा प्रतीयेतेति परिमाणाधिके प्रातिपदिकार्थे मानमेयसम्बन्धनिमित्तकाभेदारोपाभिव्यक्त्यर्थं प्रथमा विधीयते । असति तु प्रथमाविधानेऽस्मिन् = सोऽयमित्यभेदोपचारेण प्रथमाविधाने च "तदस्य परिमाणम्" ( पा० ५।१।५७ ) इति सूत्रे परिमाणमिति योगविभागात् तद्धितः स्यात् । अस्य परिमाणमित्यर्थाभावात् पूर्वयोगात् तद्धिताप्राप्तेः । 'समर्थानां प्रथमाद्वा' इति सूत्रानुवृत्त्या च तद्धिताभावपक्षे वाक्यं स्यात् । इदानीं तु = प्रथमाविधायके परिमाणग्रहणे कृते तु, वचनसामर्थ्यात् प्रथमा तद्धितो वाक्यञ्चेति त्रयमपि भवति । तदेतद् वक्ष्यति—

मानमेयादिसम्बन्धविशेषेऽङ्गीकृते तथा ।
प्रस्थादीनामसाधुत्वं तद्धितेन विना भवेत् ।।
( वा० प० ३, वृत्ति० ८६ )

तद्धितो योगभेदेन वाक्यं वा स्याद् विभाषितम् ।
परिमाणाधिके तत्र प्रथमा शिष्यते पुनः ।। इति ।
( वा० प० ३, वृत्ति० ८७ )

अस्यार्थः—मानमेयादिसम्बन्धविशेषे तथाऽङ्गीकृते = 'प्रस्थो व्रीहिः' इत्यादावभेदारोपमूलतयाऽङ्गीकृते सति, परिमाणार्थबोधकेन तद्धितेन विना प्रस्थादीनामसाधुत्वं भवेत् । 'प्रस्थो व्रीहिः' इत्यादौ अभेदारोपमूलतया मानमेयादिसम्बन्धस्याप्रतीतेः, आनन्तर्यादिरूपस्य सम्बन्धान्तरस्य वा प्रतीतेः । अतोऽत्र 'तदस्य परिमाणम्' इत्यत्र योगभेदेन = परिमाणमिति योगविभागेन, तद्धितः स्यात्, वाऽथवा, 'समर्थानां प्रथमाद्वा' इति विभाषितम्, 'प्रस्थः परिमाणमेषां व्रीहीणाम्' इति वाक्यं स्यात् । अतोऽभेदोपचारेण प्रथमायाः सिद्धावपि अभेदोपचारमूलभूतमानमेयादि-

(प्रातिपदिकार्थग्रहणादेव) प्रथमासिद्धिः। एवं विंशत्यादीनां गुणिनि वृत्तौ। वचनशब्देन पूर्वाचार्यप्रसिद्धया सङ्ख्योच्यते। तेन संख्यायामभिहितायामपि प्रथमानेन विधीयते। तद्यथा एको द्वौ बहवः।

द्वितीयादयस्तु यथायथं कर्मादिष्वेभ्यः सिद्धाः। कर्मादिविशिष्टानामेकत्वादीनामेतैरप्रत्यायनात्। मात्रशब्दोऽवधारणार्थ इति कर्मादिविशिष्टे प्रथमा न भवति। तत्र वा द्वितीयादयो बाधकाः। सम्बोधनविशिष्टे प्रथमाविधानाद्वा लिङ्गात् कर्माद्यधिके तदभावसिद्धिः। न ह्यतिरेकवति प्रातिपदिकार्थे प्रथमाया भावे सम्बोधने विधिरुपपद्यते, अनेनैव सिद्धत्वादिति मात्रग्रहणं प्रत्याख्यातम्। मीयतेऽनयेति मात्रा संख्या। तस्याः समाहारद्वन्द्वेन निर्देशः। तत्र संख्याया-

---

सम्बन्धाभिव्यक्त्यर्थं तत्र—'प्रस्थो व्रीहिः' इत्यादौ परिमाणाधिके प्रातिपदिकार्थे पुनः प्रथमा शिष्यते विधीयत इति। परिमाणन्तु सर्वत इति कोशोक्तं परिमाणमत्र न गृह्यते; किन्तु लक्ष्यानुरोधेन परिमीयते परिच्छिद्यते वस्तु येनेति व्युत्पत्त्या क्रियानिमित्तस्यात्र परिमाणशब्दस्याश्रयणादुन्मानादेरपि ग्रहणम्। तेन 'माषः सुवर्णम्' इत्यत्र प्रथमासिद्धिः। 'शुक्लः पटः' इत्यादौ शुक्लादीनां तद्धितवृत्तौ मतुब्लोपात्तद्धितवृत्तावभेदविवक्षायामेव प्रातिपदिकार्थग्रहणादेव प्रथमासिद्धिः।

एवम्—'शुक्लः पटः' इत्यत्रेव 'विंशतिर्ब्राह्मणाः' इत्यादौ विंशत्यादीनां गुणिनि संख्येये ब्राह्मणादौ वृत्तौ प्रातिपदिकार्थग्रहणादेव प्रथमासिद्धिः। 'ब्राह्मणानां विंशति' इत्यादौ संख्यायां वृत्तौ तु 'एकः, द्वौ, बहवः' इतिवद् वचनमात्रे प्रथमा बोध्या। वचनशब्देन पूर्वाचार्यप्रसिद्धया संख्योच्यते। तेन संख्यायामभिहितायामपि प्रथमाऽनेन=वचनग्रहणेन विधीयते। तद्यथा—'एको द्वौ बहवः' इति।

द्वितीयादयस्तु यथायथं कर्मादिष्वेभ्यः=एकादिशब्देभ्यः सिद्धाः। कर्मादिविशिष्टानामेकत्वादीनामेतैः=एकादिशब्दैः अप्रत्यायनात्। प्रातिपदिकार्थमात्रे इत्यत्र मात्रशब्दोऽवधारणार्थक इति कर्मादिविशिष्टे प्रथमा न भवति। द्वितीयादयो वा तत्र=कर्मादिविशिष्टे प्रथमाया बाधकाः। अथवा सम्बोधनविशिष्टे प्रथमाविधानाल्लिङ्गात् कर्माद्यधिके प्रथमायाः सिद्धिः।

न हि स्वार्थद्रव्याभ्यामधिके प्रातिपदिकार्थे प्रथमाया भावे सम्बोधने प्रथमाविधिरुपपद्यते, अनेनैव सम्बोधनेऽपि सिद्धत्वादिति रीत्या मात्रग्रहणं प्रत्याख्यातं भाष्ये।

यदि तु मीयते परिच्छिद्यते पदार्थोऽनयेति करणव्युत्पत्त्या मात्रापदेन संख्योच्यते सूत्रे तस्याः समाहारद्वन्द्वेन निर्देश इत्युच्यते, तदा संख्यायामभिहितायामेकादिभ्यः। प्रथमा यथा स्यादिति मात्रग्रहणस्य प्रयोजनं वचनग्रहणेनैव सिद्धमिति

५३

मभिहितायामेकादिभ्यो यथा स्यादिति मात्रग्रहणस्य प्रयोजनं वचनग्रहणेनैव सिद्धमिति। "अन्यतरच्छक्यमवक्तुम्" (म० भा०, पा० २।३।४६) इत्युक्तं भाष्ये। साकल्यार्थं तु मात्रग्रहणं परिमाणशब्दस्य रूढित्वाशङ्कापनोदनेनोन्मानादि-ग्रहणार्थमिति केचित्। अवधारणार्थत्वेन स्थिते मात्रशब्दे "पदसामानाधिकरण्ये उपसंख्यानमधिकत्वात्" (वा० पा० २।३।४६) इत्युक्तम्। "न वा वाक्यार्थ-त्वात्" (वा० पा० २।३।४६) इति चात्र परिहारोऽभिहितः। अनपेक्षितेतरेतर-पदार्थसमन्वयव्यतिरिक्ते एव प्रातिपदिकार्थे प्रथमाविधिर्वीरः पुरुष इत्यादा-वित्यर्थः। तदेवं यथान्यासमेव प्रथमाविधिर्युक्तः।

---

"अन्यतरच्छक्यमवक्तुम्" इत्युक्तं भाष्ये। अत्रान्यतरदित्यस्य मात्रावचनग्रहणयो-रन्यतरदित्यर्थः।

केचित् त्वाहुः—साकल्यार्थकं मात्रग्रहणम्, न त्ववधारणार्थकमिति। तथा च सकले प्रातिपदिकार्थे परिमाणाधिके उन्मानाधिके चेति तदर्थः। कर्माद्याधिक्ये तु न प्राप्तिः, तत्र द्वितीयादीनां प्रथमापवादत्वात्। सम्बोधने प्रथमा विधानरूपाद् लिङ्गाद् वा। तदुक्तं हेलाराजीये—साकल्यार्थं तु मात्रग्रहणं परिमाणशब्दस्य रूढित्वाशङ्कापनोदनेनोन्मानादिग्रहणार्थमिति केचित्।

लिङ्गवचनग्रहणे तु सम्बोधनग्रहणवद् ज्ञापके वा, सम्बोधनग्रहणरूपेण ज्ञापकेन लिङ्गाद्याधिक्येऽप्राप्तायाः प्रथमायाः प्रापके वा इति तेषामाशयः। केचिदित्यनेन चात्रार्थेऽरुचिः सूचिता हेलाराजेन।

तथा हि—मात्रशब्दस्य साकल्यार्थकत्वे लिङ्गवचनपरिमाणग्रहणानां वैयर्थ्यं-मिति। तेषां यथाकथञ्चित् फलकल्पनाऽपेक्षया तैर्मात्रशब्दस्यावधारणार्थकत्व-कल्पनाया एवाभ्यर्हितत्वात्। अत्र पक्षे कल्पनालाघवस्य सत्त्वादिति। एवं मात्र-शब्दस्यावधारणार्थकत्वे स्थिते "पदसामानाधिकरण्ये उपसंख्यानमधिकत्वात्" इत्युक्तं भाष्ये।

अस्यार्थः—'वीरः पुरुषः' इत्यादौ विशेष्यविशेषणपदयोः सामानाधिकरण्ये = अभिन्नार्थकत्वे, अभेदरूपस्यार्थस्य प्रातिपदिकार्थादधिकत्वात् तत्रोभयत्रापि प्रथमाया उपसंख्यानं कर्तव्यमिति। "न वा वाक्यार्थत्वात्" इति चात्र परिहारोऽभिहितः। अभेदस्य वाक्यार्थत्वेन नात्र प्रातिपदिकार्थाधिक्यमिति तदाशयः। अनपेक्षितेतरे-तरपदार्थसमन्वयव्यतिरिक्त एव = प्रातिपदिकार्थेऽनपेक्षितो य इतरेतरपदार्थसमन्वय-स्तद्व्यतिरिक्त एव, प्रातिपदिकार्थे प्रत्येकं 'वीरः पुरुषः' इत्यादौ प्रथमाविधिरिति प्रकृतपरिहारग्रन्थनिष्कर्षः। तदेवं यथान्यासमेव = पाणिनीययोगानतिक्रमेणैव प्रथमाविधिर्युक्तः। आचार्यान्तरकृतानि तु प्रथमाविधौ लक्षणान्तराणि पाणिनियोग-

सम्बोधनेऽपि प्रथमोक्ता । तत्र च सम्बोधनरूपं व्याचष्टे—

**सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः ।**
**प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते ।।१६३।।**

परिसमाप्तरूपस्य पदार्थस्य क्रियायां विनियोगार्थं यदभिमुखीकरणं तावन्मात्रं सम्बोधनं प्रातिपदिकार्थाधिकं रूपम् । मात्रग्रहणेन कर्मादिसाधनरूपतां सम्बोधनस्यापावर्तयति । य एव हि गमनादौ नियुज्यते कर्ता स एवाभिमुखीकृतः सम्बोधनाधिकः । अभिमुखीकृतस्य च नियोगोत्तरकालं क्रियासाधनात् परम्परया क्रियोपकारकतामनुभवति सम्बोधनम्, न तु साक्षात्कारकम् ।।१६३।।

क्रियापेक्षेऽपि सम्बोधने विशेषणविशेष्यभाववद् वाक्यार्थता नास्ति; अपि तु कर्मादिसाधनवत् पदार्थत्वमेवेत्याह—

---

विरोधीनि नादर्तव्यानि । प्रातिपदिकमात्रार्थे इव सम्बोधनेऽपि प्रथमोक्ता । तत्र चोपयुक्तं सम्बोधनरूपं व्याचष्टे—सिद्धस्येति ।

अस्यार्थः—सिद्धस्य = परिनिष्पन्नरूपस्य = न तु निष्पद्यमानरूपस्य, पदार्थस्य तत्तत्क्रियायां प्रवर्तनार्थम् = अभिमुखीभावमात्रम्— भावयतेर्घञि भावनमित्यर्थे भावपदम् । यद्वान्तर्भावितण्यर्थाद् भवतेर्घञि तत्रैवार्थे तत् पदम् । अभिमुखीकरणमात्रमित्यर्थः । तावन्मात्रं प्रातिपदिकार्थात् प्रवृत्तिनिमित्ततदाश्रयरूपादधिकं सम्बोधनं विदुर्वैयाकरणाः । तच्च सम्बोधनं न कारकम्, यतः प्राप्ताभिमुख्यः = अभिमुखीकृतः, अर्थात्मा = प्रातिपदिकार्थः कर्तृरूपः सम्बोधनाधिकः सम्बोधनक्रियाकर्मत्वविशिष्ट एव = अभिमुखीकृत एव क्रियासु = आनयनदर्शनादिकासु विनियुज्यते = प्रवर्त्यते इति नियोगं द्वारीकृत्य परम्परया क्रियोपकारकत्वात् सम्बोधनं न कारकेषु परिगणितमिति ।

अयं भावः—परिसमाप्तरूपस्य न तु निष्पद्यमानरूपस्य पदार्थस्य कर्तृरूपस्य क्रियायां विनियोगार्थम् = प्रवर्तनार्थम्, यदभिमुखीकरणं तावन्मात्रं प्रातिपदिकार्थादधिकं रूपं सम्बोधनम्, न तु कर्मादिकमपि । अत्र मात्रपदेन सम्बोधनस्य कर्मादिसाधनरूपताऽपावर्त्यते = निरस्यते । य एव हि गमनादौ नियुज्यते कर्ता स एवाभिमुखीकृतः सम्बोधनाधिकः प्रातिपदिकार्थ इति तत्र प्रातिपदिकार्थमात्रे विधीयमाना प्रथमा न प्राप्नोतीति सम्बोधनाधिके सम्बोधने चेति प्रथमा विहिता । अभीमुखीकृतस्य च क्रियासु नियोगोत्तरकालमेव क्रियासाधनात् परम्परया क्रियोपकारकतामनुभवति सम्बोधनम्, न तु साक्षादिति न तत्कारकमिति ।। १६३ ।।

**सम्बोधनं न वाक्यार्थं इति वृद्धेभ्य आगमः ।**

निश्चायकं प्रमाणम् आगमः । इतरपदनैरपेक्ष्येण सम्बोध्यतावगतेः पदार्थ एव सम्बोधनं क्रियाकाङ्क्षित्वेऽपि । तद्यथा कर्त्रादीनां नानपेक्षितक्रियाणां साधनत्वमवकल्पत इति समाश्रयितव्या क्रिया, न चातो वाक्यार्थत्वम्, एवं सम्बोधनस्यापि । गम्यमानक्रियं चैकं पदमपि वाक्यं वृक्ष इत्यादिवदिति वाक्यार्थोऽपि बोधनं सम्भवत्येव ।

इदानीं प्रकृतं निगमयति—

**उद्देशेन विभक्त्यर्था वाक्यार्थात् समपोद्धृताः ॥१६४॥**

संक्षेपवचनमुद्देशः । तेन हेतुना विभक्तीनामर्थाः कर्मादिकारकस्वभावाः पारमार्थिकादखण्डाद् वाक्यार्थादनेककारकविशेषणविशिष्टक्रियास्वभावात् पृथग-

---

सम्बोधनस्य नियमेन क्रियापेक्षत्वेऽपि 'वीरः पुरुषः' इत्यादौ विशेषणविशेष्य-भावसम्बन्धस्येव वाक्यार्थत्वं नास्ति पदान्तरनैरपेक्ष्येण सम्बोध्यत्वावगतेः; अपि तु कर्मादिसाधनवत् पदार्थत्वमेवेत्याह—सम्बोधनं न वाक्यार्थं इति ।

अस्यार्थः —नियमेन क्रियापेक्षत्वेऽपि 'सम्बोधनं वाक्यार्थः' इति वृद्धेभ्यः, आगमः = निश्चायकप्रमाणमूलकः शब्दः श्रूयत इति ।

अयं भावः – वस्तुतत्त्वनिश्चायकमाप्तवाक्यरूपं प्रमाणमागमः । नियमेन क्रियाकाङ्क्षित्वेऽपि सम्बोधनं पदार्थं एव, न तु वाक्यार्थः, पदान्तरनिरपेक्षतया सम्बोध्यत्वावगतेः । तद्यथा कर्मादीनामनपेक्षितक्रियाणां साधनत्वं नावकल्पत इति नियमेन क्रियासमाश्रयणेऽपि न वाक्यार्थत्वम्, तेन साध्यसाधनभावस्य वाक्यार्थ-त्वेऽपि अन्वयव्यतिरेकाभ्यां तत्तद्विभक्त्यन्तपदेभ्य एव कर्मत्वादिप्रतीत्या तेषां पदार्थत्वात्, एवं सम्बोधनस्यापि पदार्थत्वमेव । गम्यमानक्रियं चैकं पदमपि वाक्यम्—'वृक्षः, पर्वतः' इत्यादिवदिति पदरूपवाक्यबोध्यत्वात् सम्बोधनं पदार्थवद् वाक्या-र्थोऽपि भवत्येवेति ।

इदानीं प्रकृतं साधनरूपविभक्त्यर्थविमर्शं निगमयति = उपसंहरति । उद्देशेनेति ।

अस्यार्थः —संक्षेपेण वस्तुसंकीर्तनमुद्देशः । तदेवमुद्देशेन संक्षेपेण विभक्त्यर्थाः कर्मादिसाधनरूपा वाक्यार्थादखण्डादपोद्धारबुद्ध्याऽऽहृत्य पदार्थापोद्धारद्वारेण वा समपोद्धृताः = सम्यग् अपोद्धृताः = वाक्यार्थात् पदार्थाच्च पृथक्कृता इति ।

अयं भावः— संक्षेपवचनम् = पदार्थानां संक्षेपेण कथनमुद्देशः । 'तेन हेतुना' इति हेलाराजीये हेतुना इति संपातायातं पदम् । तेन = संक्षेपेण विभक्तीनामर्थाः कर्मादिकारकस्वरूपाः, वाक्यार्थाद् = अखण्डात् परमार्थाद् अनेककारकरूपविशेषण-

पोद्धारबुद्धयाऽन्वयव्यतिरेकाभ्यामपोद्धृताः । यथा हि वाक्यादखण्डात् पदापोद्धारः, तथा वाक्यार्थात् पदार्थापोद्धारः । विभक्त्यर्थश्चापि पदार्थ एव । तत्रापि त्वपोद्धारे पदार्थाद् विभक्त्यर्थापोद्धारो व्याख्येयः ।

वाक्यार्थ एव तु स्थितलक्षणोऽसत्यस्तु पदार्थ इति 'वाक्यार्थात्' इत्याह । अन्ये त्वाहुः—'उद्देशेन' वाक्यार्थावयवेनोपलक्षिताद् 'वाक्यार्थात्' इति वाक्यार्थैकदेशभूतात् पदार्थादेव विभक्ता इत्ययमेव स्पष्टोऽर्थः ॥१६४॥

इदानीं विभक्त्यर्थस्य प्रातिपदिकार्थादन्यत्वे शास्त्रीयं लिङ्गमाह—

**विभक्त्यर्थेऽव्ययीभाववचनादवसीयताम् ।**

**अन्यो द्रव्याद् विभक्त्यर्थः सोऽव्ययेनाभिधीयते ॥१६५॥**

अव्ययं विभक्ति० (पा० २।१।६) इति विभक्त्यर्थे वर्तमानमव्ययं समर्थेनोत्तरपदेन समस्यत इत्युक्तम्, 'अधिस्त्रि' इति । तत्र यदि द्रव्यमेव विभक्त्यर्थो

---

विशिष्टक्रियास्वरूपादन्वयव्यतिरेकाभ्यामपोद्धारबुद्धया पदार्थं पृथक्कृत्य तस्माद् अपोद्धृताः । यथा हि वाक्यादखण्डात् पदापोद्धारस्तथा वाक्यार्थात् पदार्थापोद्धारः । विभक्त्यर्थश्चापि पदार्थ एव । विभक्त्यन्तस्यैव पदत्वात् । तत्रापि तु=पदार्थेऽपि तु अपोद्धारे विवक्षिते पदार्थाद् विभक्त्यर्थापोद्धारो व्याख्येयः ।

वाक्यार्थ एव तु स्थितलक्षणः=अबाधितस्वरूपः सत्यः । असत्यस्तु पदार्थ इति वाक्यार्थादिति वाक्यार्थमवधित्वेनाह ।

अन्ये त्वाहुः—उद्देशः प्रदेशोऽवयवस्तेनोद्देशेन वाक्यार्थावयवेन पदार्थेनोपलक्षिताद् वाक्यार्थादिति रीत्या वाक्यार्थैकदेशभूतात् पदार्थादेव विभक्ता विभक्त्यर्था इत्ययमेव स्पष्टोऽर्थः । सत्येऽखण्डे च वाक्यार्थे वस्तुतः पदार्थस्याविद्यमानत्वेनोपलक्षणत्वमेव तस्याभ्युपेतम्, न तु विशेषणत्वमिति ॥ १६४ ॥

पूर्वमन्वयव्यतिरेकाभ्यां प्रातिपदिकार्थाद् विभक्त्यर्थस्यापोद्धारं प्रकल्प्यान्यत्वमुक्तम् । इदानीं विभक्त्यर्थस्य प्रातिपदिकार्थादन्यत्वे शास्त्रीयं लिङ्गमाह—**विभक्त्यर्थ इति ।**

अस्यार्थः—"अव्ययं विभक्ति०" (पा० २।१।६) इत्यादिसूत्रेण विभक्त्यर्थे विद्यमानस्याव्ययस्य समर्थेनोत्तरपदेन सह समासवचनाद् अन्यो द्रव्याद् विभक्त्यर्थे इत्यवसीयताम्=निश्चीयताम् । स च विभक्त्यर्थोऽधिकरणशक्तिरूपः 'अधिस्त्रि' इत्यादौ समासे अव्ययेनाभिधीयते । यदि तु द्रव्यमेव विभक्त्यर्थो भवेत्, न तु ततोऽन्यत्, तदाऽत्र द्रव्यस्य स्त्रीरूपस्य स्त्रीपदेनैवोक्तत्वात् तद्वाचकस्याव्ययस्य पुनरुक्तिभियाऽप्रयोगे केन सह समासः स्यादिति ।

अयं भावः—"अव्ययं विभक्ति०" (पा० २।१।६) इति सूत्रैकदेशस्य विभक्त्यर्थे वर्तमानमव्ययं समर्थेनोत्तरपदेन समस्यत इत्यर्थः । तदुदाहरणमुक्तम्—

भवेत्, तदा स्त्रीशब्देनैव तस्योक्तत्वादव्ययस्याप्रयोगार्हमेव। तदस्याप्रयुज्यमानस्य कुतः समासः। तस्माद् विभक्त्यर्थेऽव्ययीभावशासनादवसीयते प्रातिपदिकमेव कर्मादीनि साधनानि नाभिधत्त इति। तथा ह्यधिकरणशक्तिमव्ययपदमभिदधदुत्तरपदेनानुभवति समासम्।

"दृष्टो ह्यव्यतिरेकेऽपि व्यतिरेकोऽन्वये सति"। (वा० प० ३, सा० ४३) इत्यादिना पूर्वमन्वयव्यतिरेकाभ्यामयमर्थः साधितः। सम्प्रति लिङ्गदर्शनेनोपोद्बलितः।

ननु पञ्चकप्रातिपदिकार्थपक्षे विशिष्टस्य निर्भागस्य द्रव्यस्य प्रातिपदिकेनोक्तत्वाद् विशेषद्योतनाय विभक्तय इव अव्ययमपि प्रयोगार्हं स्यात्। द्योतकानां नियमाभावादिति कथमेतल्लिङ्गं युज्यते। सत्यमेतत्; किन्तु त्रिकपक्षे लिङ्गमिदमुपन्यस्यते।

---

'अधिस्त्रि' इति। तत्र यदि द्रव्यमेव विभक्त्यर्थो भवेत्, तदा स्त्रीशब्देनैव तस्योक्तत्वादव्ययमप्रयोगार्हमेव। तदेवमप्रयुज्यमानस्याव्ययस्य कुतः समासः? तस्माद् विभक्त्यर्थेऽव्ययीभावसमासशासनाद् इदमध्यवसीयते = प्रातिपदिकं द्रव्यमेवाभिधत्ते, न तु कर्मादीनि साधनानि शक्तिरूपाणीति।

तथा हि – 'अधिस्त्रि' इत्यादौ 'अधि' इत्यव्ययपदमधिकरणशक्तिमभिदधदुत्तरपदेन = स्त्रीपदेन सह समासमनुभवति। "दृष्टो ह्यव्यतिरेकेऽपि व्यतिरेकोऽन्वये सति" ( वा० प० ३, सा० ४३ ) इत्यादिकं प्रागुक्तम्।

तस्यायमर्थः—हि = यतः, एकपदाभिधेयत्वेन विभक्त्यर्थप्रातिपदिकार्थयोरव्यतिरेकेऽपि अखण्डत्वेनाभेदेऽपि बुद्ध्या विभक्तिप्रातिपदिकयोः पदादपोद्धारप्रकल्पने विभक्तिसत्त्वे तदर्थविशेषप्रतीतिसत्त्वम्, इत्येवंरूपेऽन्वये सति विभक्त्यर्थं प्रति प्रातिपदिकार्थयोर्व्यतिरेको भेदो दृष्ट इति। एवमादिना पद्येन पूर्वमन्वयव्यतिरेकाभ्यामयमर्थः = प्रातिपदिकार्थाद् विभक्त्यर्थस्य भेदरूपोऽर्थः साधितः। सम्प्रति विभक्त्यर्थेऽव्ययीभाववचनरूपलिङ्गप्रदर्शनेन स एवात्रोपोद्बलितः।

ननु स्वार्थद्रव्यलिङ्गसंख्याकारकरूपं पञ्चकं प्रातिपदिकार्थं इति पक्षे स्वार्थादिविशिष्टस्य निर्भागस्य द्रव्यस्य प्रातिपदिकेनोक्तत्वात् संख्यादिविशेषद्योतनाय विभक्तय इवाव्ययमपि तद्द्योतनाय प्रयोगार्हं स्यात्। कारकविशेषद्योतिका विभक्तय एव नाव्ययमित्येवं द्योतकानां नियमाभावादिति कथमेतल्लिङ्गं युज्यते। सत्यमेतत्; किन्तु स्वार्थद्रव्यलिङ्गानि प्रातिपदिकार्थं इति त्रिकपक्षे लिङ्गम् = ज्ञापकम् इदमुपन्यस्यते। अस्मिन् पक्षेऽन्वयस्य कारकद्योतकत्वासम्भवात्। न च "अव्ययं विभक्ति०" (पा० २।१।६) इति सूत्रे विभक्तिपदमेव श्रूयते न तु विभक्त्यर्थपदम्, तथा च विभक्त्यर्थे वर्तमानमव्ययमुत्तरपदेन समर्थेन सह समस्यत इत्यर्थलाभः कथमिति वाच्यम्, लक्षणयेष्टसिद्धेः।

तथा हि—'अव्ययं विभक्ति०' (पा० २।१।६) इति विभक्त्यर्थ उपलक्षितः। पञ्चकपक्षे तु द्रव्यात्मभूतस्य विशेषस्य विभक्तिभिः प्रकाशनात्, पदेनैवार्थ उपलभ्येत, समुदायवाच्यत्वात् तस्य, न केवलया विभक्त्या। पञ्चकपक्षेऽपि वा नियतस्य शक्त्यात्मनो विशेषस्य प्रातिपदिकमात्रादप्रतीतेर्विभक्तीनामेवासौ विषयः। तथा च प्रातिपदिकवाच्यादनियतशक्तेर्द्रव्यादन्यो नियतशक्तिर्विभक्त्यर्थ इति युक्तमुच्यते। एवं च कृत्वान्वयव्यतिरेकावपूर्वाभिधाने द्योतने वा यथायोगं पक्षद्वये व्याप्रियेते ॥१६५॥

ननु च "समानकर्तृकयोः" (पा० ३।४।२१) पशौ कर्तरि इत्येवमादेर्लिङ्गाद् द्रव्यस्य साधनत्वावगमात् कथं द्रव्यादन्यो विभक्त्यर्थ इत्याशङ्क्य शक्तेः साधनत्वमुपपादयितुमाह—

द्रव्यं तु यद् यथाभूतं तदत्यन्तं तथा भवेत्।
क्रियाभेदेऽपि तस्यासौ द्रव्यात्मा नावहीयते ॥१६६॥

---

तथा हि—'अव्ययं विभक्ति०' ( २।१।६ ) इति सूत्रे विभक्तिपदेन विभक्त्यर्थ उपलक्षितः=लक्षणया बोधित इति। एवं त्रिकपक्षे विभक्त्यर्थेऽव्ययीभावसमासवचनरूपं विभक्त्यर्थस्य प्रातिपदिकार्थादन्यत्वे लिङ्गमुपपद्यते। पञ्चकपक्षे तु कारकसामान्यस्य प्रातिपदिकार्थत्वेऽपि द्रव्यात्मभूतस्य कारकविशेषस्य विभक्तिभिः प्रकाशनात्=अभिधया बोधनात्, द्योतनाद्वा प्रातिपदिकार्थादन्यो विभक्त्यर्थः। विभक्त्यन्तेन पदेनैव हि कारकविशेषरूपोऽर्थ उपलभ्यते, समुदायवाच्यत्वात् तस्य, न केवलया विभक्त्या।

अथवा पञ्चकपक्षेऽपि नियतस्य कारकशक्त्यात्मनो विशेषस्य प्रातिपदिकमात्रादप्रतीतेर्विभक्तीनामेवासौ=नियतः कारकशक्त्यात्मा विशेषो विषयः। तथा च प्रातिपदिकवाच्यादनियतशक्तेः=कारकशक्तिसामान्यात्मनो द्रव्यादन्यो नियतशक्तिः=कारकशक्तिविशेषात्मा विभक्त्यर्थ इति युक्तमुच्यते। एवञ्च कृत्वा कारकशक्तिविशेषात्मनोऽर्थस्य पक्षद्वये=पञ्चकपक्षे त्रिकपक्षे च यथायोगम्=यथासम्भवं विभक्तिभिरपूर्वाभिधाने द्योतने वाऽन्वयव्यतिरेकौ व्याप्रियेते इति ॥ १६५ ॥

ननु 'समानकर्तृकयोः पूर्वकाले क्त्वा', 'हरतेर्दृतिनाथयोः पशौ' इत्यत्र समानकर्तृकयोरिति, पशौ कर्तरि, इत्येवमादेः साधनस्य द्रव्यसामानाधिकरण्येन निर्देशरूपाद् लिङ्गात् शक्तिमतो द्रव्यस्य साधनत्वावगमात् कथं द्रव्यादन्यो विभक्त्यर्थ इत्याशङ्क्य शक्तेः साधनत्वमुपपादयितुमाह—द्रव्यं तु इति।

अस्यार्थः— यत्तु द्रव्यं यथाभूतम्=यथास्वभावम् अवस्थितम्, तदत्यन्तम्=सदा सर्वासु अवस्थासु च, तथा=तथास्वभावं भवेत्। स्वरूपादप्रच्युतमेकरूपमेव सदाऽवतिष्ठेदित्यर्थः। तस्य=अत्यन्तं तथाभूतस्य द्रव्यस्य, असौ द्रव्यात्मा=अदो

सर्वावस्थास्वनपायादेकस्वभावं द्रव्यं सदैवाचलमिति वृक्षं वृक्षेणेत्यादौ साधनवैचित्र्यं निर्निबन्धनं स्यात्। वृक्षं पश्य वृक्षेण फलितमित्यादिक्रियानानात्वनिमित्तो द्रव्यस्य भेद इत्यपि मिथ्या। क्रियानानात्वेऽपि ध्रुवं द्रव्यं स्वरूपान्न प्रच्यवते। सम्बन्धिभेदमात्राद् वस्तुनोऽन्यथात्वायोगात् ॥१६६॥

एवं च कृत्वा—

**तस्माद् यत् करणं द्रव्यं तत् कर्म न पुनर्भवेत्।**

**सर्वस्य चान्यथाभावस्तस्य द्रव्यात्मनो भवेत् ॥१६७॥**

करणभावेनावधृतं द्रव्यं कर्मतया न प्रख्यायेत। उपलक्षणं चैतत् कारकान्तरेषु। कर्मतया चावगतं शेषतया न विज्ञायेत। एकत्वाच्च द्रव्यस्य साधनस्य 'प्रासादे आस्ते, आसने शेते' इति ल्युडभिधानादधिकरणस्य सप्तमी न स्यात्, शक्तेस्तु साधनत्वे क्रियाभेदेन तद्भेदात् सदिक्रियापेक्षायामधिकरणशक्तावभिहितायामप्यसिक्रियापेक्षायां तु तस्याभिहितादन्यत्रानभिहित इति पर्युदासाश्रयणात् सप्तमी सिद्धचति। तथा च वार्त्तिकम्—"अनभिहिते हि विधानम्" (वा० २।३।१)।

---

द्रव्यात्मकं रूपम्, क्रियाभेदेऽपि = क्रियानानात्वेऽपि, नानाक्रियान्वयेऽपि नावहीयते = न प्रच्यवत इति।

अयं भावः—यदि शक्तिमद् द्रव्यमेव साधनं स्यात्, तदा सर्वावस्थास्वनपायादेकस्वभावं द्रव्यं सदैवाचलमिति 'वृक्षम्, वृक्षेण' इत्यादौ साधनवैचित्र्यं निर्निमित्तमेव स्यात्। वृक्षं पश्य, वृक्षेण फलितम्' इत्यादौ क्रियाभेदहेतुको द्रव्यस्य भेद इत्यप्युच्यमानं मिथ्या। ध्रुवस्य द्रव्यस्य क्रियाभेदेऽपि स्वरूपात् प्रच्यवाभावात्। ध्रुवस्य पदार्थस्य सम्बन्धिभेदमात्राद् अन्यथात्वायोगादिति ॥१६६॥

एवञ्च हृदि कृत्वाऽऽह—तस्मादिति।

अस्यार्थः—तस्मात् = द्रव्यस्य ध्रुवत्वेनैकरूपतया स्वरूपप्रच्यवाभावात्, यद् द्रव्यं करणं क्रियान्तरे तत् पुनः क्रियान्तरे कर्म न भवेत्। यदि तु क्रियान्तरे करणं द्रव्यं क्रियान्तरे पुनः कर्म भवेत्, तदा तस्य द्रव्यात्मनः सर्वस्य च = सर्वस्यैवान्यथाभावो भवेत्, न तु कस्यचिदंशस्य = येन कस्यचिदंशस्य कारणत्वम्, कस्यचित्तु कर्मत्वमित्येवमविरोधस्तयोः स्यात्। एकरूपे द्रव्येंऽशांशिभावकल्पनाया असम्भवादिति।

अयं भावः—करणत्वेन प्रतीतं द्रव्यं कर्मतया न प्रतीयेतेति पूर्वार्धार्थः। उपलक्षणं चैतत् कारकान्तरेष्वपि। तेन कर्मतया चावगतं शेषतया न विज्ञायेत इत्यपि बोध्यम्। किञ्च, 'प्रासादे आस्ते, आसने शेते' इत्यादौ अधिकरणस्य ल्युटाभिधानात् सप्तमी न स्यात्। द्रव्यरूपस्य साधनस्यैकत्वात्। शक्तेस्तु साधनत्वे क्रियाभेदेन शक्तिभेदात् सदिक्रियापेक्षायामधिकरणशक्तावभिहितायामपि असिक्रिया-

अथ क्रियान्तरयोगे करणस्य कर्मात्मतया परिणामः, तदा सकलस्यैव द्रव्यस्वभावस्य वस्त्वन्तरापत्तिः स्यात्, न करणांशस्यैव, तस्य द्रव्यादनन्यत्वात्। शक्तेस्तु साधनत्वे क्रियाभेदेन तद्भेदेऽपि तदाधारस्य द्रव्यस्यान्वयिनोऽवस्थानात् शक्त्यन्तरत्यागोपादानयोगे युक्तः करणादिरूपतया सम्भवः। असमर्थस्य द्रव्यस्य क्रियासिद्धावनङ्गत्वात् सामर्थ्यमेव तदाधारं साधनं युक्तम्। न चैतावता द्रव्यस्यापि साधनाधारत्वात् साधनभावः कल्पयितुं न्याय्यः।

न हि देवदत्तस्य पचिसाधनत्वे तदाधारस्य पीठस्यापि तत् कल्प्यत इति शक्तय एव साधनम्, न तु शक्तिमद् द्रव्यम्। "समानकर्तृकयोः" (पा० ३।४।२१) इति तु शक्त्याधारद्रव्यैकत्वाध्यारोपनिमित्तं समानत्वं कर्तृशक्त्योः। 'पशौ कर्तरि, हस्तिसूचकयोः कर्त्रोः' इति पशौ द्रव्ये यः कर्ता हस्तिसूचकयोर्द्रव्ययोर्यौ कर्तारौ इति व्याख्येयम्।

---

पेक्षायां तस्यां सप्तमी सिद्ध्यति। अभिहितादन्यत्रानभिहिते इति पर्युदासाश्रयणात्। प्रसज्यप्रतिषेधाश्रयणे तु अनभिहित इत्यस्य अभिहितत्वाभाववति कारके इत्यर्थे सप्तमी न सिध्येत्। एकस्या अभिहितत्वेऽभिहितत्वात्यन्ताभावाभावात्। पर्युदासलक्षणं तु—'पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्" इति। प्रसज्यप्रतिषेधलक्षणं तु— 'प्रसज्यप्रतिषेधोऽसौ क्रियाया सह यत्र नञ्" इति। अत्र क्रियापदस्य समभिव्याहृतपदार्थतावच्छेदके लक्षणा। प्रपञ्चितञ्चैतत् साहित्यदर्पणे तट्टीकायां च। तथा च वार्त्तिकम्—"अनभिहिते हि विधानम्" इति।

अस्यार्थः—"प्रासादे आस्ते, आसने आस्ते" इत्यादौ ह्यनभिहिते आसिक्रियानिरूपितेऽधिकरणे सप्तमीविधानमिति। अथ क्रियान्तरयोगे करणस्य क्रियान्तरयोगे कर्मरूपतया परिणाम इत्युच्यते, तदा सकलस्यैव द्रव्यस्वरूपस्य कर्मत्वेन रूपेण वस्त्वन्तरापत्तिः स्यात्, न करणांशस्य, तस्य द्रव्यादनन्यत्वात्। शक्तेः साधनत्वे तु क्रियाभेदेन शक्तिभेदेऽपि शक्त्याधारस्य द्रव्यस्य सर्वावस्थास्वन्वयिनोऽवस्थानात् शक्त्यन्तरत्यागोपादानयोगे युक्तः करणस्य कर्मरूपतया सम्भवः। असमर्थस्य द्रव्यस्य क्रियासिद्धावनङ्गत्वात् तदाधारम्=द्रव्याधारकं द्रव्यवृत्तिसामर्थ्यमेव साधनं युक्तम्।

न चैतावता द्रव्यस्य शक्तिरूपसाधनाधारत्वात् तस्यापि साधनत्वं कल्पयितुं न्याय्यम्। यतो न हि देवदत्तस्य पचिक्रियाकर्तृत्वरूपे पचिसाधनत्वे तदाधारस्य पीठस्यापि तत्=पचिसाधनत्वं कल्प्यत इति शक्तय एव साधनम्, न तु शक्तिमद् द्रव्यमिति। 'देवदत्तः पक्त्वा भुङ्क्ते' इत्यादौ समानकर्तृकयोरिति तु शक्तिद्वयाधारद्रव्यगतं यदेकत्वं तस्य योऽध्यारोपः शक्तिद्वये तन्निमित्तकं समानत्वं कर्तृशक्त्योः 'पशौ कर्तरि हस्तिसूचकयोः कर्त्रोः' इति=पशौ द्रव्ये यः कर्ता, हस्तिसूचकयोर्द्रव्ययोर्यौ कर्तारौ इति वैयधिकरण्येन व्याख्येयम्।

अथवा कर्तृशक्त्याश्रयः पशुरेव कर्ता इति सामानाधिकरण्यम् । "कर्मणि द्वितीया" (पा० २।३।२) । इत्यादावपि शक्तीनां संख्यायोगात् तदाधारं द्रव्यमेव निर्दिश्यते । तेन कर्मकार्थसमवेतायां विभक्तय इत्यर्थः । निराधारायाश्च शक्तेरनुपपत्तेर्द्रव्यमेव शक्त्याविष्टं साधनं लकारवाच्यम् । विशेषात्मकमेव क्रियाकारि नियतेनात्मनानभिहितं पदान्तरेणाभिव्यज्यत इति देवदत्तः पचतीत्यादिसामानाधिकरण्येन प्रयोगोपपत्तिरिति सर्वं सुस्थम् ।।१६७।।

।। इति भूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे साधनसमुद्देशः सप्तमः ।।



---

अथवा कर्तृशक्त्याश्रय. पशुरेव कर्ता इति सामानाधिकरण्येन निर्दिश्यते । "कर्मणि द्वितीया" (पा० २।३।२) इत्यादावपि शक्तीनामद्रव्यरूपाणां संख्यायोगाभावात् शक्त्याधारभूतं द्रव्यमेव कर्मादिपदैर्निर्दिश्यते । तेन कर्मशक्त्या सहैकस्मिन् द्रव्ये समवेतायां संख्यायां विभक्तय इत्यर्थः । निराधारायाश्च शक्तेरनुपपद्यमानत्वाद् द्रव्यमेव शक्त्याविशिष्टं साधनं तदेव च लकारवाच्यम् । तच्च साधनं विशेषात्मकमेव क्रियाकारि, न तु सामान्यम् । तच्च नियतेनात्मना कर्त्रादिरूपेण देवतादिपदैरनभिहितं पदान्तरेण समभिव्याहृतेन पचत्यादिनाऽभिव्यज्यत इति 'देवदत्तः पचति' इत्यादिरूपैः सामानाधिकरण्येन प्रयोगोपपत्तिरिति ।।१६७।।

इत्येष साधनग्रन्थः समुद्देशेन कीर्तितः ।
प्रीत्यै भूयाद् भगवतोर्भवानीविश्वनाथयोः ।। १ ।।
वस्वक्षिशून्याक्षिमिते वैक्रमे वत्सरे शुभे ।
भौमवारे दशम्यां च काश्यां पूर्तिमगादियम् ।। २।।

।। इति श्रीब्रह्मीभूतकाशीनाथतनयरघुनाथशर्मकृतायामम्बाकर्त्र्यां सप्तमः साधनसमुद्देशः समाप्तः ।।



# अथ क्रियासमुद्देशः

इह साध्यापेक्षत्वात् साधनस्य साधनानन्तरं समुद्दिष्टायाः क्रियायाः शास्त्रीयं लक्षणमाह —

यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात् तत् क्रियेत्यभिधीयते ॥१॥

इह 'क्रियावचिनो धातु'रिति पूर्वाचार्यलक्षणे 'अस्तिभवतिविद्यतीनां धातुत्वं वक्तव्यम्' इति चोदितम्। तथा हि—यथा किं करोति, पचतीति पचादीनां करोतिना सामानाधिकरण्यात् क्रियाविशेषवाचकत्वाध्यवसायः, न तथा भवत्यादीनाम्। न हि भवति किं करोति भवतीत्यादीति, न ते क्रियावाचनाः स्युः ।

प्रकृतेर्या परिस्पन्दरूपाऽऽद्या शक्तिरद्भुता ।
विवर्तमानां भावेषु भजामः कालभेदिनीम् ॥

इह लोके साधनस्य निरूपकत्वेन साध्यापेक्षत्वात् साधनानन्तरं प्राक् समुद्दिष्टायाः = नाममात्रेण संकीर्तितायाः क्रियाया अस्त्यादिक्रियासाधारणं शास्त्रीय-लक्षणमाह -- यावत् सिद्धमिति ।

अस्यार्थः - सिद्धं = परिनिष्पन्नं भूतम्, असिद्धं = अनिष्पन्नं, वर्तमानं, भविष्यच्च । वर्तमानत्वं हि प्रारब्धापरिसमाप्तत्वरूपमिति वर्तमानमपि असिद्धान्त-र्गतमेव । तदेवं सिद्धमसिद्धं वा यावत् साध्यत्वेन क्रियान्तराकाङ्क्षानुत्थापकता-वच्छेदकरूपेण असत्त्वभूतत्वेनाभिधीयते । तत्सर्वं क्रियेत्यभिधी ते ।

तत्र हेतुः--आश्रितक्रमरूपत्वादिति । सर्वाऽपि हि क्रिया लोके क्रियाणां समुदायरूपैव प्रसिद्धा । यथारो णम् अवरोहणम्, गमनम्, आगमनम्, पाक इत्यादि । सत्तावर्तमानत्वादिरूपाऽपि क्रिया क्रमेणैव निष्पद्यत इति कर्त्रा क्रमेण क्रियमाणत्वात् क्रिया । तदेतदुक्तम्—आश्रितक्रमरूपत्वादिति । आश्रितं क्रमरूपं यया सा तथा, तस्याभावस्तत्त्वं तस्मादिति ।

अयं भावः —इह 'क्रियावचनो धातुः" इति पूर्वाचार्याणां लक्षणम् । एतच्च लक्षणमस्त्यादिक्रियास्वव्याप्तमिति मत्वा "अस्तिभवतिविद्यतीनां धातुत्वं वक्तव्यम्" इति वार्तिककृता चोदितम् ।

तथा हि यथा किं करोतीति प्रश्ने पचतीत्युत्तरे पच्यादीनां करोतिना सामानाधिकरण्यात् क्रियाविशेषरूपपाकादिवाचकत्वनिश्चयः, न तथा भवत्यादीनां क्रियाविशेषनिष्ठत्वाध्यवसायः । किं करोतीति प्रश्ने अस्ति, भवति, विद्यते वा इत्युत्तरं न हि भवति इति अस्त्यादिका धातवो न क्रियावचनाः स्युरित्यव्याप्तिर्धातु-लक्षणे दोषः ।

किञ्च परिस्पन्दस्वभावा लोके क्रिया प्रसिद्धा। अस्तिभवतिविद्यतीनां च न परिस्पन्दस्वभावोऽर्थं इति सकलधातुव्यापकं क्रियालक्षणं भाष्ये प्रणीतम्—'कारकाणां प्रवृत्तिविशेषः क्रिये'ति।

तत्र विचार्यते—सर्वेषां वा कारकाणामेकः प्रवृत्तिविशेषः, प्रतिकारकं भिन्ना वा प्रवृत्तिरिति। आद्ये पक्षे फलभूता भूतिपक्त्यादिका वा प्रवृत्तिः स्यात्, अन्या वेति द्वैतम्। तत्र न तावत् सर्वेषामेकः प्रवृत्तिविशेषः, असम्भवात्। न हि यैव करणस्य प्रवृत्तिः सैव कर्तुः, यैवाधिकरणस्य सैव सम्प्रदानस्येत्यादि। अनेकाश्रयाया एकस्याः क्रियाया अदर्शनात्। तस्मात् प्रतिकारकं भिन्ना वा प्रवृत्तिः क्रिया।

इत्थं च क्रियावाची धातुरिति सकलकारकव्यापाराभिधायी धातुः प्राप्तः। किमतः। इदमतः। सर्वकारकाभिधायी लकारः स्यात्। धातूक्तव्यापारसाधनो हि लो धातोः परः प्रयुज्यमानो न्याय्यः। नैतदस्ति। कर्तृकर्मणोर्लस्यानुशासनात्, तद्व्यापार एव लान्तात् प्रतीयते।

ननु न शब्दनिमित्तेन नामार्थेन भवितव्यम्, अपि त्वर्थनिमित्तेन शब्देनेति साधनमात्रे लोऽनुशिष्यताम्। भवेदेतत्, यदि साधनमात्रव्यापारो लान्तादवगम्येत,

---

किञ्च लोके परिस्पन्दस्वभावा क्रिया प्रसिद्धा। अस्ति-भवति-विद्यतीनाञ्च धातूनां न परिस्पन्दस्वभावोऽर्थ इति तेषां धातुत्वाप्राप्तौ सकलधातुव्यापकधातुलक्षणघटकक्रियालक्षणं भाष्ये प्रणीतम्—"कारकाणां प्रवृत्तिविशेषः क्रिया" इति।

तत्रायं संशयः—सर्वेषां कारकाणामेकः प्रवृत्तिविशेषः क्रिया, अथवा प्रतिकारकं भिन्ना प्रवृत्तिरत्र क्रियेति। तत्र प्रथमे पक्षे फलभूता सत्ता पाकादिका, तदन्या व्यापाररूपा वा काचिदिति द्वैतं=संशयः। तत्र न तावत् सर्वेषां कारकाणामेकः प्रवृत्तिविशेषः, असंभवात्। न हि यैव करणप्रवृत्तिः सैव कर्तुः, यैवाधिकरणस्य सैव संप्रदानस्येत्याद्यनेकार्थवृत्तेरेकस्याः क्रियाया अदर्शनात्। तस्मात् प्रतिकारकं भिन्ना वा=भिन्नैव प्रवृत्तिः क्रिया।

इत्थञ्च क्रियाया वचनो धातुरित्यनेन सकलकारकव्यापाराभिधायी धातुरिति लब्धम्। ततश्च सर्वकारकाभिधायी लकारः स्यात्। धातूक्तव्यापारसाधने हि लकारो धातोः परः प्रयुज्यमानो न्याय्यः। न त्वेवं सत्येतदस्ति। कर्तृकर्मणोरेव लकारस्यानुशासनात् तद्व्यापार एव लान्तात् प्रतीयते, न तु सर्वकारकव्यापारः।

ननु शब्दस्य प्रवृत्तिनिमित्तमर्थ इति कृत्वाऽर्थनिमित्तकेन शब्देन भवितव्यम्, न तु शब्दनिमित्तकेनार्थेन। बुद्धौ प्राक् सिद्धस्य हि अर्थस्याबुबोधयिषया शब्दः प्रयुज्यत इति साधनमात्रे=सर्वस्मिन् कारके लोऽनुशिष्यताम्, न तु कर्तृकर्मणोरेवेति चेन्न, भवेदेतदेवम्, यदि साधनमात्रव्यापारः=सकलस्य साधनस्य स्वस्व-

कर्तृकर्मव्यापार एव तु प्रतीयत इति शब्दशक्त्यनुसारेणानुशासनं युक्तम् ।

न तर्हि साधनमात्रव्यापाराभिधायी धातुः । अन्वयव्यतिरेकाभ्यां तदनवगमात्, उपायान्तराभावाच्च प्रकृतिप्रत्ययानुसरणस्य । सत्यमेतत् । किन्तु 'देवदत्तः काष्ठैः स्थाल्यामोदनं पचति' इत्यादौ विशेषेण पचतेर्धातोः सर्वकारकव्यापारस्वीकारोपलब्धेरखिलकारकव्यापाराभिधायी धातुरित्युपगमात् । प्राधान्यात् तु कर्तृकर्मणोर्लकारोत्पत्तेस्तद्व्यापार एव लान्तात् प्रतीयत इत्येकीयमतम् ।

अन्ये मन्यन्ते—सम्प्रदानादिव्यापारे धातोर्न प्रवृत्तिः । करणादिव्यापार एव तु वृत्तिः । तथा च करणादावेव स्वातन्त्र्यविवक्षा नापादानादौ ।

---

व्यापारो लकारान्तादवगम्येत, न तु ततः सोऽवगम्यते, कर्तृकर्मव्यापार एव तु लान्तात्प्रतीयत इत्यन्वयव्यतिरेकावधृतां शब्दशक्तिमनुसृत्यैवानुशासनस्यौचित्यात् ।

नन्वेवं तर्हि साधनमात्रव्यापाराभिधायी धातुरिति न सिध्येत् । अन्वयव्यतिरेकाभ्यां धातुतः साधनमात्रव्यापारानवगमात्, प्रकृतिप्रत्ययार्थानुसरणे अन्वयव्यतिरेकातिरिक्तोपायाभावाच्चेति चेत् सत्यमेतत्; किन्तु 'देवदत्तः काष्ठैः स्थाल्यामोदनं पचति' इत्यादौ पचतेर्धातोर्विशेषरूपेण सर्वकारकव्यापारस्वीकारोपलब्धेः सकलकारकव्यापाराभिधायी धातुरिति स्वीकारात्; किन्त्वेवमपि धात्वर्थे प्रधानीभूतधात्वर्थव्यापाराश्रयत्वेन कर्तुः प्राधान्यम्, उद्देश्यत्वलक्षणमार्थं प्राधान्यं तु धात्वर्थफलस्येति तदाश्रयत्वेन कर्मणः प्राधान्यमिति प्राधान्यात् कर्तृकर्मणोरेव लकारोत्पत्तेस्तद्व्यापार एव लकारान्तात् प्रतीयत इत्येकीयमतम्=एकदेशिमतम्, न तु सिद्धान्तः ।

अस्यैकदेशिमतत्वे इयमुपपत्तिः "कर्तृकर्मव्यापार एव लकारान्तात् प्रतीयते । अन्वयव्यतिरेकाभ्यां तदवगमात्, उपायान्तराभावाच्च प्रकृतिप्रत्ययार्थानुसरणे" इति ।

यत्तु 'देवदत्तः काष्ठैः स्थाल्यामोदनं पचति' इत्यादौ सर्वकारकव्यापाराभिधायी धातुरित्युक्तम् । तदपि न समीचीनम् । तथा हि—'प्रासादात् प्रेक्षते, आसनात् प्रेक्षते' इत्यादौ प्रासादरूपकर्मणो व्यापार आरुहिवाच्यो न प्रेक्षिवाच्यः, आसनरूपाधिकरणव्यापारश्च उपविशिवाच्यः, न प्रेक्षिवाच्यः, तथा प्रकृते काष्ठस्थालीव्यापारौ, न पचिवाच्यौ इत्यस्य संभवात् । अत एवोक्तम्—

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ (वैयाकरणभूषणे) इति ।

इमामेवारुचिमुपादाय— 'अन्ये मन्यन्ते" इति मतान्तरमुपन्यस्तं हेलाराजेन । तथा हि "अन्ये मन्यन्ते" सम्प्रदानादिव्यापारे धातोर्न वृत्तिः । करणादि-

इत्थं च 'अधिश्रयणोदकासेचन०' इत्यादिना कर्त्रादीनामेव व्यापारः पचिक्रियेति वार्त्तिककारो दर्शयति। अतश्च कारकाणां प्रवृत्तिविशेषः क्रियेति क्रियायाः स्वरूपमात्रं कथितम्, न तु धातुवाच्यत्वम्।

यस्य कारकस्य या प्रवृत्तिः सा क्रिया। ततो बहुकारकविषयत्वेन बह्व्य एव पाकक्रियाः। काचिदेव धातुनाभिधीयते कर्मगता कर्तृगता वा पच्यते पचतीति। अत एव कर्तृकर्मणोरेवोत्पद्यते लकारस्तद्व्यापारस्यैव धातुनाभिधानात्।

अन्ये तु विशेषपदे भरं कृत्वा प्रवृत्तीनां विशेषः प्रवृत्तिविशेष इति सकलकारकजन्या विक्लित्यादिरूपा भूतिः फलभूता कारकप्रवृत्तेः क्रियेति व्याचक्षते।

अपरे पुनः कारकमत्र प्रधानं विवक्षितं कर्तृरूपम्, न पुनरप्रधानं करणादि।

---

व्यापार एव तु तस्य वृत्तिः। तथा च करणादावेव स्वातन्त्र्यविवक्षा नापादानादौ। काष्ठानि पचन्ति, साध्वसिः छिनत्ति, स्थाली पचति, पच्यते ओदनः स्वयमेवेति।

इत्थञ्च पचतीत्यत्र अधिश्रयणम्, स्थाली व्यापारः, उदकासेचनं कर्तृव्यापारः, विक्लित्तिः कर्मव्यापारः, प्रज्वलनं काष्ठव्यापार इति कर्त्रादीनामेव = कर्तृकर्मकरणाधिकरणानामेव व्यापारः क्रिया इति वार्त्तिककारो दर्शयति। अतश्च कारकाणां प्रवृत्तिविशेषः क्रियेति क्रियायाः स्वरूपमात्रम् = स्वरूपलक्षणमेव कथितम्, न तु तस्याधातुवाच्यत्वम्।

अतो यस्य कारकस्य या प्रवृत्तिः सा क्रियेति फलितम्। ततो बहुकारकनिष्ठत्वेन बह्व्य एव पाकक्रियाः अधिश्रयणोदकासेचनादिकाः। तासु काचिदेव धातुनाऽभिधीयते कर्मगता कर्तृगता वा पच्यते पचतीति। अत एव कर्तृकर्मणोरेव लकार उत्पद्यते, तयोर्व्यापारस्यैव धातुनाऽभिधानात्। इदमपि मतं न समीचीनम्।

तथा हि—"बहुकारकविषयत्वेन बह्व्य एव पाकक्रियाः। काचिदेव धातुनाऽभिधीयते"। इति वाक्यार्थयोः परस्परं पराहतत्वात्। पच्धातुनाभिसन्धानं विना पाकक्रियात्वस्यासंभवात्।

अन्ये तु कारकाणां प्रवृत्तिविशेषः क्रियेति क्रियालक्षणघटके विशेषपदे भरं = बुद्धिस्थैर्यं कृत्वा प्रवृत्तीनां विशेषः प्रवृत्तिविशेष इति सकलकारकजन्या सकलकारकप्रवृत्तेः फलभूता विक्लित्त्यादिरूपा भूतिः = फलरूपं क्रियापदे कर्मव्युत्पत्त्या क्रियासामान्यम् = कृभ्वस्तयः क्रियासामान्यवचना इत्यभ्युपगमात् क्रियेति व्याचक्षते।

इदमपि मतमपूर्णमेव। क्रियापदे कर्मव्युत्पत्त्या भावव्युत्पत्त्या च फलव्यापारयोरुभयोरपि क्रियात्वस्य धातुवाच्यत्वस्य चाभ्युपगन्तुमुचितत्वादभ्युपगतत्वाच्चेति।

अपरे पुनः कारकमत्र = प्रागुक्तक्रियालक्षणे प्रधानाप्रधानन्यायेन प्रधानं विवक्षितं कर्तृरूपम्, कर्तुश्च प्राधान्यं क्रियायां स्वातन्त्र्यरूपम्, न तु शाब्दम्

बहुवचनं त्वनेकक्रियाभेदेन कर्तृभेदात् । कर्तृग्रहणमेव तु न कृतम्, कर्मणि लकार-दर्शनात्, तस्य व्युदासो मा भूदिति । तेन यत्र सम्भवति कर्म तत्र तद्व्यापारोऽपि क्रिया ।

यद्येवं तदपेक्षयैव बहुवचनं व्याख्येयम् । कर्मार्थत्वाच्च प्रवृत्तेस्तदपि प्रधानम् । नैतदस्ति । कर्मणोऽसर्वविषयत्वात् ।

कर्ता पुनः सर्वत्र स्थित इति व्यापकत्वात् स एवात्र प्रधानं कारकं विवक्षितम् । अत्र च 'अन्यथा शुष्कौदने कारकाणि प्रवर्तन्ते । अन्यथा मांसौदने' इति भाष्यमेव लिङ्गमाह ।

तथा हि—मांसौदने संरम्भवत्त्वेन प्रवर्तते कर्ता । शुष्कौदने मन्दप्रस्थानेन । यथा च संरम्भेण मन्दतया च प्रवृत्तिं दर्शयति, अतोऽवसीयते कर्तैवात्र कारक-ग्रहणेनाभिधीयत इति ।

तथा हि—चेतनत्वात् स एव तथा प्रवर्तते । तदेवंप्रकारा ससंरम्भा तद्विपरीता वा प्रवृत्तिविशेषरूपा क्रियेति भाष्यकारेण स्वयमेवोदाहृता ।

अत्र केचित् चोदयन्ति—चेतनस्यैवैवं प्रवृत्तिसम्भवादचेतनः कर्ता न

---

वैयाकरणसिद्धान्तविरोधात् । करणादिकन्तु कर्तृपराधीनत्वेनाप्रधानत्वादत्र कारक-पदेन न विवक्षितम् । कारकाणां प्रवृत्तिविशेषः क्रिया इति लक्षणे कारकाणामिति बहुवचनन्तु अनेकक्रियाभेदेन कर्तृभेदात्, न तु कारकभेदात् । कर्तॄणां प्रवृत्तिविशेषः क्रिया इत्येवं प्रकृते क्रियालक्षणे कर्तृग्रहणमेव तु न कृतम्, कर्मणि लकारदर्शनात् क्रियालक्षणे तस्यापि संग्राह्यत्वात्· तस्य व्युदासो मा भूदिति तत्संग्रहाय कारक-ग्रहणमेव लक्षणे कृतम् । तेन यत्र धातौ कर्म संभवति तत्र कर्मव्यापारोऽपि फलरूपक्रिया ।

यद्येवं कर्मणो बहुविधत्वेन कर्मापेक्षयैव, न तु कर्त्रपेक्षया बहुवचनं व्याख्येयम् । प्रवृत्तेः कर्मार्थत्वाच्च कर्माऽपि प्रधानम्=उद्देश्यत्वलक्षणप्राधान्यवद् इति । नैतदस्ति । कर्मणः सर्वक्रियाविषयत्वाभावात् ।

कर्ता पुनः सर्वासु क्रियासु स्थित इति व्यापकत्वात् कर्तैवात्र प्रधानं कारकं विवक्षितम् । "अत्र च अन्यथा शुष्कौदने कारकाणि प्रवर्तन्ते । अन्यथा मांसौदने" । इति भाष्यमेव लिङ्गमाहुः ।

तथा हि –मांसौदने संरम्भवत्त्वेन=उत्कटाभिलाषजातया त्वरया प्रवर्तते कर्ता । शुष्कौदने तु स मन्दप्रस्थानेन प्रवर्तत इति । यथा चात्र यथायथं संरम्भेण मन्दतया प्रवृत्तिं दर्शयति भाष्यकारः, अतो निश्चीयते क्रियालक्षणे कर्तैव कारक-ग्रहणेनाभिधीयत इति ।

तथा हि—चेतनत्वात् कर्तैव तथा=संरम्भेण मन्दतया च प्रवर्तते । तदेवं-प्रकारा ससंरम्भा तद्विपरीता=मन्दा वा प्रवृत्तिविशेषरूपा क्रिया इति भाष्यकारेण स्वयमेवोदाहृता ससंरम्भा तद्विपरीता वा मांसौदने शुष्कौदने वा कर्तुः क्रिया ।

अत्र केचिद् वदन्ति—चेतनस्यैव ससंरम्भा मन्दा वा प्रवृत्तिः सम्भवति

गृहीतः स्यादिति तत्प्रवृत्तिः क्रियेति नोक्तं स्यात्। मांसौदनादौ च करणादीनामपि सम्भवात् तत् कथं कर्त्रैवात्र निर्दिष्ट इति।

अत्रोच्यते—ससंरम्भस्य सामान्यस्य च कर्तुरेव सम्भवः। न हि कंसपात्र्यादिकमधिकरणमन्यद् वा कारकं संरम्भवत्त्वेन मन्दतया वा प्रवर्तते। सामान्येन च कर्तृकर्मणां ग्रहणादचेतनप्रवृत्तिरपि गृहीतैव। 'अन्यथा मांसौदन...' इत्यादिना तु संरम्भेण मन्दतया च प्रवृत्तिविशेष उपलक्षितः। न पुनः पूर्वोक्ता कर्तृमात्रप्रवृत्तिर्नियम्यते। ततः कर्तुर्या विशिष्टा प्रवृत्तिः सा क्रियेत्यर्थः।

एवञ्च प्रवृत्तेरेव विशेष इति समासः। कर्मणोऽपि सूचितत्वात् कारकशब्देन तद्व्यापारोऽपि क्रियेति प्रतीयते। अन्यथा कर्तृपदमेवाकरिष्यदित्युक्तम्।

अस्मिन् मते 'अथ कः पचेः प्रधानोऽर्थः। याऽसौ तण्डुलानां विक्लित्तिरिति' भाष्यं कथम्। कर्तृव्यापारो हि क्रिया धातुवाच्या। सा च विक्लेदना, न तु विक्लित्तिः। नास्ति विरोधः। नात्र शब्दार्थो निरूप्यते; अपि तु वस्त्वर्थ इत्यार्थेन

---

इत्यचेतनः कर्ता न गृहीतः स्यादिति तत् प्रवृत्तिः क्रियेति नोक्तं स्यात् 'खट्वा कम्पते' इत्यादौ।

किञ्च 'पाणिना मांसौदनं भुङ्क्ते' इत्यादिस्थले मांसौदनादौ पाण्यादिरूपाणां करणादीनामपि संरम्भवत्त्वात् तत् कथं कर्त्रैवात्र निर्दिष्ट इति। अत्रोच्यते—ससंरम्भस्य कारकसामान्यस्य च=तु कर्तुरेव सम्भवः। न हि कंसपात्र्यादिकं भुजेर्दुहेर्वाऽधिकरणमन्यद् वा कारकं सरम्भत्वेन मन्दतया प्रवर्तते। कारकसामान्येन च कर्तृकर्मणां ग्रहणादचेतनकर्तृप्रवृत्तिरपि गृहीतैव। अन्यथा मांसौदने इत्यादिना भाष्यग्रन्थेन तु संरम्भमन्दत्वाभ्यामुपलक्षणाभ्यां चेतनाचेतनसाधारणः प्रवृत्तिविशेष उपलक्षितः, न पुनर्विशेषणीभूताभ्यां ताभ्यां पूर्वोक्ता=संरम्भवती मन्दा च कर्तृमात्रप्रवत्तिर्नियम्यते, येनाचेतनः कर्ता तत्प्रवृत्तिविशेषो वा न सङ्गृह्येत। ततश्च कर्तुर्या विशिष्टा=विलक्षणा कर्तृत्वप्रयोजिकाचेतनाचेतनसाधारणा प्रवृत्तिः सा क्रिया इत्यर्थः।

एवञ्च प्रागुक्तक्रियालक्षणघटके प्रवृत्तिविशेषपदे प्रवृत्तेरेव विशेष इति समासः, न तु प्रवृत्तीनां विशेष इति। कारकाणां प्रवृत्तिविशेष इत्यत्र कारकशब्देन कर्मणोऽपि सूचितत्वात् कर्मव्यापारोऽपि फलरूपः क्रियेति प्रतीयते। अन्यथात्र कारकपदस्थाने कर्तृपदमेवाकरिष्यदित्युक्तं प्रकृतमतवादिभिः।

ननु अस्मिन्मते "अथ कः पचेः प्रधानोऽर्थः। याऽसौ तण्डुलानां विक्लित्तिः" इति भाष्यं कथम्। कर्तृव्यापारो हि क्रियाधातुवाच्यायाः पचेः प्रधानीभूतोऽर्थः=विक्लित्यनुकूलो व्यापारः, न तु विक्लित्तिरिति चेन्नास्ति विरोधः।

नात्र पचेः प्रधानीभूतः शाब्दोऽर्थो निरूप्यते; अपि तु वस्त्वर्थः=वस्तुतः प्रधानीभूतोऽर्थः, इत्यार्थेन रूपेण विक्लित्तेरुद्देश्यत्वलक्षणप्राधान्यसत्त्वादेवमुक्तं भाष्ये।

रूपेण विक्लित्तेः प्राधान्यादेवमुक्तम्। शाब्देन तु रूपेण विक्लित्त्युपसर्जनं विक्लेदनमर्थः। कर्मणि लकारोत्पत्तौ तु विक्लित्तिरेवार्थ इति केचित्।

विक्लेदनोपसर्जना विक्लित्तिरित्यपरे। तेन कर्तृकर्मव्यापार एव सर्वत्र धात्वर्थ इतीदं दर्शनम्।

अन्ये तु 'सामान्यभूता क्रिया वर्तते' इत्येतद् भाष्यानुसारेण प्रवृत्तिमात्रगृहीतविशेषं सकलकारकानुयायि क्रियेति मन्यन्ते। तथा हि—फलजननैव साधारणात्मिका क्रिया प्रवृत्तिविशेष इत्युच्यते प्रवृत्तिश्चायं विशेषश्चेति। विशेषोऽस्याः फलजननानुरूपत्वम्, न पुनरधिश्रयणादिरूपतैव। तेन जननाख्यो विशेषः प्रवृत्तीनां क्रिया। सर्वेषां हि कारकाणामेका प्रवृत्तिः फलजननालक्षणा। सर्वाणि हि फलजननाय प्रवर्तन्ते। अतो यत् फलजननारूपम्, तत् सर्वकारकेष्ववशिष्टम्। किञ्चित् खलु कारकं केनचिदेव रूपेण जनयतीति फलजनना सर्वसाधारणरूपैव। अवान्तरभेदेन तु जनकत्वात् करणादिव्यपदेशः।

कणाददर्शने चैका क्रियानेकत्र न भवेत्। तीर्थिकान्तरदर्शनं चेह नाश्रीयते।

---

शाब्देन तु रूपेण विक्लित्त्युपसर्जनं विक्लेदनमर्थः। केचित्तु कर्मणि लकारोत्पत्तौ सत्यां विक्लित्तिरेव शाब्दबोधे पचेः प्रधानीभूतोऽर्थ इत्याहुः।

अपरे तु तत्र विक्लेदनोपसर्जना विक्लित्तिः पचेः प्रधानीभूतोऽर्थः, न तु केवला इत्याहुः। तेन कर्तृकर्मव्यापार एव सर्वत्र=कर्तरि कर्मणि वा लकारोत्पत्तौ धात्वर्थ इतीदं दर्शनं व्यवस्थितम्।

अन्ये तु "सामान्यभूता क्रिया वर्तते।" इत्येतद् भाष्यानुसारेण प्रवृत्तिमात्रं=प्रवृत्तिसामान्यं सामान्यान्तर्गततया विशेषत्वेऽपि अगृहीतविशेषं सकलं कारकानुगतं क्रियेति मन्यन्ते।

तथा हि फलजननारूपैव सकलकारकसाधारणात्मिका क्रिया प्रवृत्तिविशेष इति उच्यते। प्रवृत्तिश्चायं विशेषश्चेति कर्मधारयः। विशेषश्चास्याः फलजननारूपत्वम्, न पुनरधिश्रयणादिरूपतैव। तेन सकलकारकप्रवृत्तीनां फलजननाख्यो विशेषः क्रिया, सर्वेषां हि कारकाणां फलजननारूपा एका प्रवृत्तिः। सर्वाणि हि कारकाणि एकस्यैव फलस्य प्रधानस्य जननाय प्रवर्तन्ते। अतो यत् फलजननारूपं तत् सर्वकारकेषु अविशिष्टम्=सामान्यम्। किञ्चित् खलु कारकं केनचिदेव रूपेण करणत्वादीनामन्यतमेन फलं जनयति इति विशेषसत्त्वेऽपि फलजनना तेषां सर्वकारकसाधारणरूपैव। अवान्तरव्यापारभेदेन तु फलजनकत्वात् तेषां करणादिव्यपदेशः।

यद्यपि कणाददर्शने चैका क्रियाऽनेकत्र न भवेत्, तथापि अस्माकं दर्शने भवेत्। तीर्थिकान्तरदर्शनञ्चेह=शास्त्रकारान्तरदर्शनञ्चेह व्याकरणे विरुद्धं

अत एव परिस्पन्दलक्षण एव व्यापारो न क्रिया। प्रवृत्तिरित्येतावत्युच्यमाने हि लोकप्रसिद्ध्या परिस्पन्दलक्षण एव व्यापारः प्रतीयते। विशेषग्रहणात् तु प्रवृत्तिमात्रमवगम्यत इति केचिद् व्याचक्षते।

तथा हि—सर्वा प्रवृत्तिः प्रवृत्त्यन्तराद् भिद्यमाना विशेषरूपतामापद्यत इति सकलकारकानुयायीदं लक्षणम्। विशेषश्च सजातीयाद् विजातीयाच्च। तत्र सजातीयाद् भेदः, अन्यथा 'कारकाणि शुष्कौदने प्रवर्तन्ते अन्यथा मांसौदने' इति प्रतिपादितः। भुजिक्रिया हि कारकभेदाद् भिद्यमानात्रोक्ता। औदासीन्येन शुष्कौदने कारकाणां प्रवृत्तिः। संरम्भेण तु मांसौदन इति विशिष्यते। यदि च संरम्भरूपतैव साधनानां क्रिया स्यात्, तदा शुष्कौदने भुजिः क्रियारूपतां न प्रतिपद्येतेति प्रवृत्तिविशेष इति क्रियासामान्यलक्षणम्। विजातीयाद् भेदस्तु पचति पठतीत्यादौ स्पष्ट एव।

ननु द्रव्यादन्यत्वमेव तावत् कथं क्रियायाः प्रतिपन्नमिति वक्तव्यम्। तत्राप्युक्तम्—'इह सर्वेषु साधनेषु सन्निहितेषु कदाचित् पचतीत्येतद् भवति।

---

नाश्रीयते अविरुद्धन्तु आश्रीयते। अत एव परिस्पन्दलक्षण एव व्यापारो न क्रिया, किन्तु सत्तादिकाऽपि इति।

केचित्तु— विशेषपदमपहाय प्रवृत्तिरित्येतावति उच्यमाने हि लोकप्रसिद्ध्या परिस्पन्दलक्षण एव व्यापारः प्रतीयते। विशेषग्रहणात्तु प्रवृत्तिमात्रम्=सर्वेषां कारकाणां प्रवृत्तिः अवगम्यत इति व्याचक्षते।

तथा हि - सर्वा प्रवृत्तिः सजातीयाद् विजातीयाच्च प्रवृत्त्यन्तराद् भिद्यमाना विशेषरूपतामापद्यत इति सकलकारकानुगतमिदं क्रियालक्षणम्। तत्र सजातीयाद् भेदः 'अन्यथा कारकाणि शुष्कौदने प्रवर्तन्ते, अन्यथा मांसौदने" इति प्रतिपादितः। भुजिक्रिया हि कारकभेदाद् भिद्यमानाऽत्रोक्ता। औदासीन्येन शुष्कौदने कारकाणां प्रवृत्तिः, संरम्भेण तु मांसौदने इति प्रवृत्तिद्वयं परस्परं विशिष्यते। यदि च कारकाणां संरम्भरूपतैव क्रिया स्यात् तदा शुष्कौदने भुजिः क्रियारूपतां न प्रतिपद्येतेति प्रवृत्तिविशेष इति प्राग् व्याख्यातं क्रियासामान्यलक्षणम्= सकलकारकक्रियालक्षणम्। विजातीयाद् भेदस्तु पचति पठति इत्यादौ पाकक्रियातः पाठक्रियायाः स्पष्ट एवेति।

वस्तुतस्तु नेदं मतं युक्तम्—"सामान्यभूता क्रिया वर्तते" इति भाष्यविरोधात्। तथा हि—अस्मिन् मते 'कारकाणां प्रवृत्तिमात्रं क्रिया'। भाष्ये तु 'सामान्यभूता क्रिया' इति भेदात्।

ननु द्रव्यादन्यत्वमेव तावत् कथं क्रियायाः प्रतिपन्नं=प्राप्तमिति वक्तव्यम्। एतद् वचने तु कारकक्रिययोर्भेदो न सिध्येत्। तथा च कारकाणां प्रवृत्तिविशेषः क्रियेति भाष्योक्तं लक्षणं न निर्वहेदिति। तत्रापि समाधानमुक्तं भाष्ये। 'इह

कदाचिन्ने'त्यादि। अन्वयव्यतिरेकाभ्यां पचतीत्यादिशब्दवाच्या क्रिया द्रव्यात् कारकशक्तियुक्तादन्या।

तथा हि—औदासीन्यावस्थायां सत्स्वपि साधनेषु पचतीत्यादिप्रख्योपाख्ययोरभावादर्थान्तरविषयत्वं तयोः। तद् यथा घटसन्निधानेऽनुत्पद्यमानानां पाकजानामग्निसंयोगापेक्षित्वम्।

'अथवा यया देवदत्त इह भूत्वा पाटलिपुत्रे भवति, सा नूनं क्रिये'त्यपरमत्रोक्तम्। पूर्वेण ग्रन्थेन कादाचित्कः प्रख्याविशेषो हेतुः क्रियाया व्यतिरेकेऽभिहितः। स त्वसत्यपि विषये मरीचिकाजलावसायवत् स्यादितीदमत्र लिङ्गमुपन्यस्तम्।

तथा हि—प्राप्तिलक्षणं फलं द्रव्यमात्रादभवद् व्यापारान्तरं ततोऽन्यदावेदयते। मिथ्याप्रत्यये विषयस्याभावात् फलानुत्पत्तिप्रसङ्गात्।

---

सर्वेषु साधनेषु सन्निहितेषु कदाचित् पचति इत्येतद् भवति इत्यन्वयः, कदाचिन्नेत्यादिर्व्यतिरेकः।" आभ्यां भाष्योक्ताभ्यामन्वयव्यतिरेकाभ्यां पचत्यादिधातुवाच्या क्रिया द्रव्यात् कारकशक्तियुक्तादन्या।

तथा हि—औदासीन्यावस्थायाम्=साधनानां निर्व्यापारत्वदशायां सत्स्वपि साधनेषु पचतीत्यादिप्रख्योपाख्ययोः=ज्ञानशब्दयोः अभावात् क्रियापेक्षयाऽर्थान्तरविषयत्वमन्वयव्यतिरेकयोरिति गम्यते। तद् यथा घटसन्निधानेऽपि अग्निसंयोगाभावेऽनुत्पद्यमानानां पाकजानां रूपादीनामग्निसंयोगापेक्षितत्वम्।

'अथवा यया देवदत्त इह भूत्वा पाटलिपुत्रे भवति, सा नूनं क्रिया' इत्यपरमपि समाधानमत्रैव विषये भाष्ये उक्तम्। अयमत्र पूर्वपरसमाधानयोर्विशेषः। पूर्वेण ग्रन्थेन कादाचित्कः पचतीत्यादिरूपः प्रख्याविशेषे हेतुः=लिङ्गं क्रियायाः साधनाद् व्यतिरेकेऽभिहितः। स तु=प्रख्याविशेषस्तु असत्यपि विषये मरीचिकायां जलाध्यवसाय इव भ्रान्तिरूपः स्यादित्यभिप्रेत्येदमपरमप्यत्र देशान्तरप्राप्तिरूपफलात्मकं स्वकारणगमनक्रियानुमापकं लिङ्गमुपन्यस्तम्, कार्येण हि कारणमनुमीयत इति।

दृष्टं हि धूमरूपेण स्वकार्येण कारणीभूतो वह्निरनुमीयत इति।

तथा हि—देशान्तरप्राप्तिलक्षणं फलं निर्व्यापाराद् द्रव्यमात्राद् जायमानं ततोऽन्यद्=द्रव्यादन्यद् व्यापारान्तरं=क्रियारूपं द्रव्याद् भिन्नं वस्तु आवेदयते=अनुमापयति। मरुमरीचिकासु तोयप्रख्यारूपे मिथ्याप्रत्यये विषयस्य तोयस्याभावात् तत्रेवात्रापि कारणाभावे=व्यापाराभावे देशान्तरप्राप्तिलक्षणफलानुत्पत्तिप्रसङ्गात्।

न च साधनादेव शक्त्यात्मनः फलोपजनः, शक्तत्वेऽपि व्यापाराभावे फलादर्शनादित्यस्ति कश्चित् सोऽर्थः, यः क्रमविशेषापेक्षः कार्यमभिनिर्वर्तयति ।

सा च क्रिया न शक्त्या पिण्डीभूता निदर्शयितुमित्यनुमानगम्योक्ता ।

ननु च पचतीति प्रख्याया निरालम्बनत्वेन भ्रान्तत्वादनुमापकत्वमयुक्तं स्यात् । सालम्बनत्वे तु प्रत्यक्षैव क्रिया प्रख्याविशेषविशेषविषयत्वात् । फलानुमानेऽपि प्रतीतासौ शब्देन नाभिधीयेत । फलमुपजनय्य व्यतीतायास्तस्या वर्तमानाभिधानं विरुध्यते ।

अत्रोच्यते—इह व्याकरणे न वस्त्वर्थोऽर्थः ।

तथा चान्वयव्यतिरेकाभ्यां धातुभागस्य योऽर्थो व्यवस्थाप्यते, नासौ साक्षादुपलब्धुं शक्यते । समाश्रितक्रमो ह्यर्थात्मा आख्यातात् प्राधान्येन प्रतीय-

---

न च साधनादेव निर्व्यापारात् शक्त्यात्मनः=शक्तिमतः फलोपजनः=फलोत्पाद इति वाच्यम्, काष्ठादेः पाकशक्तत्वेऽपि तत्र व्यापाराभावे विक्लित्तिरूपफलादर्शनादित्यस्ति कश्चित् सोऽर्थः, यः क्रमविशेषापेक्षः=सक्रमः सन् कार्यमभिनिर्वर्तयति ।

सा च क्रियाऽमूर्तत्वादरूपत्वात् क्रमवत्वाच्च न शक्त्या पिण्डीभूता निदर्शयितुमित्यनुमानगम्योक्ता पूर्वोपदर्शितभाष्ये ।

ननु क्रियायाः क्रमवत्त्वे च पचतीति वर्तमानक्रियाविषयायाः प्रख्याया निरालम्बनत्वेन भ्रान्तत्वादनुमापकत्वमयुक्तम् । सालम्बनत्वे तु प्रत्यक्षैव क्रिया प्रख्याविशेषविषयत्वाद् इत्यनुमानगम्यत्वोक्तिर्विरुद्धा । फलेनानुमानेऽपि अनुमानप्रतीताऽसौ प्रतीतत्वादेवापूर्वत्वाभावाद् वाक्यरूपेण शब्देन नाभिधीयेत, वाक्यरूपस्य शब्दस्याज्ञातार्थज्ञापकत्वरूपानुभावकत्वात् ।

किञ्च, फलमुपजनय्य व्यतीतायाः क्रमेण व्यत्ययमासादयन्त्याः क्रमवत्याः क्रियायाः पचतीति वर्तमानार्थकलट्प्रत्ययेनाभिधानं विरुध्यते ।

अत्रोच्यते—इह व्याकरणे उपयोगी वस्त्वर्थः=वस्तुभूतोऽर्थः, शब्दादप्रतीतोऽर्थो नार्थः, किन्तु शब्दार्थः=शब्दात् प्रतीयमानोऽर्थो व्याकरण उपयोगी अर्थः ।

तथा चान्वयव्यतिरेकाभ्यां तिङन्ते पदे धातुभागस्य योऽर्थो व्यवस्थाप्यते, क्रियात्मनासौ साक्षादुपलब्धुम्=प्रत्यक्षगोचरीकर्तुं क्रमवत्या हि क्रियायाः क्रमेण व्यत्ययमासादयन्त्याः पिण्डीभावासंभवेन शब्दाधिगम्यमानायाः पिण्डीभूतायाः साक्षात्कर्तुमशक्यत्वात् । समाश्रितक्रमो ह्यर्थात्मा आख्यातात् प्राधान्येन प्रतीयमानः क्रियेति । शाब्देन रूपेण=तिङ्समभिव्याहृतधातुशब्दात् प्रतीयमानेन क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकेन असत्त्वभूतत्वेन रूपेण क्रिया चैव हि=क्रियात्वेन हि

माना क्रियेति, शाब्देन रूपेण क्रिया चैव हि भाव्यते। स्वभावसिद्धं तु द्रव्यमित्युक्तम्। वास्तवेन रूपेण साधनाधीनसिद्धेरनित्यस्य द्रव्यस्य कथं स्वाभाविकी सिद्धिः स्यात्? शाब्देन रूपेण वस्तु भाव्यमानात्कमपि प्रातिपदिकैः सिद्धरूपमुच्यते।

तथा हि द्रव्यशब्दाः प्रवर्तमानाः 'घटः क्रियते, पटः क्रियते' इत्यादिसाध्यमानावस्थेष्वपि सन्मात्रकारकावलम्बनं प्रत्ययं जनयन्ति। घटस्य हि भाव्यमानावस्था शिवकस्तूपकादीनामवस्थानां क्रमेण प्रादुर्भावः। न चासौ घटशब्दात् प्रतीयते, क्रियत इति क्रियाशब्दप्रयोगादेव तदवगतेः।

तथा च यः पदान्तरनिरपेक्षाच्छब्दादन्वयव्यतिरेकाभ्यामर्थोऽवगम्यते स तस्यार्थ इति, घट इत्यस्मात् केवलात् सत्ताकारकस्यैवार्थस्यावगमात् प्रातिपदिकार्थः सत्तेति निर्णीतम्। क्रियापदप्रयोगात् तु आश्रितक्रमरूपतावगमात् तिङन्तानां भाव्यमानोऽर्थोऽवस्थाप्यते। 'घटः क्रियते' इति च घट इत्येवं बुद्ध्या गृह्यमाणो यो योऽर्थः स निर्वर्त्यत इत्येवं पदसमन्वयः। घटोऽभूद् भविष्यतीत्यादावपि सदाकारप्रत्ययादभिधेयात्मना नित्यत्वमर्थानामिति "अनित्येष्वपि

---

भाव्यते = भाव्यत्वेन साध्यत्वेन प्रतीयते। शाब्देन रूपेण स्वभावसिद्धं तु द्रव्यमित्युक्तम्। वास्तवेन रूपेण साधनाधीनसिद्धित्वादनित्यस्य द्रव्यस्य कथं स्वाभाविकी सिद्धिः स्यात्? वास्तवेन रूपेण भाव्यमानात्मकमपि वस्तु शाब्देन रूपेण प्रातिपदिकैः सिद्धरूपमुच्यते।

तथा हि—साध्यमानावस्थेष्वपि घटपटादिषु 'घटः क्रियते, पटः क्रियते' इत्यादिरूपैर्द्रव्यशब्दाः प्रवर्तमानाः घटपटादिद्रव्यविषयकं सन्मात्राकारावलम्बनमेव, न तु साध्यमानाकारावलम्बनं प्रत्ययं जनयन्ति। घटस्य हि भाव्यमानावस्था शिवकस्तूपकादीनाम् = शिव इव प्रतिकृतिः शिवकः, शिवलिङ्गाकारा प्रलम्बावस्था स्तूपकः = स्तूप इव प्रतिकृतिः, अधो वर्तुलावस्था, उपरि तु कम्बुग्रीवावस्था इत्यादीनाम् अवस्थानां क्रमेण प्रादुर्भावः। न चासौ घटशब्दात् प्रतीयते, क्रियते इति क्रियाशब्दप्रयोगादेव तदवगतेः।

तथा च पदान्तरनिरपेक्षात् शब्दाद् अन्वयव्यतिरेकाभ्यां योऽर्थोऽवगम्यते, स तस्यार्थ इति घट इत्यस्मात् केवलात् सत्ताकारस्यैवार्थस्यावगमात् प्रातिपदिकार्थः सत्तेति निर्णीतम्। पचतीत्यादिक्रियापदप्रयोगात्तु धात्वर्थक्रियाया आश्रितक्रमरूपतावगमात् तिङन्तानाम् = तिङ्प्रकृतीनां धातूनां भाव्यमानोऽर्थोऽवस्थाप्यते।

ननु 'घटः क्रियते' इत्यत्रापि यदि घटपदात् सत्ताकारस्यैवार्थस्यावगमः, तदा घटस्य क्रियते इत्यनेन सामानाधिकरण्यं कथमिति चेन्न, 'घटः क्रियते' इत्यत्र घट इत्येवंबुद्ध्या गृह्यमाणो यः सन्नर्थः स निर्वर्त्यते = क्रमवत्या तत्तदवस्थया प्रादुर्भाव्यते इत्येवं पदसमन्वयस्याभ्युपगमात्। घटोऽभूत्, भविष्यतीत्यादावपि सदाकारस्यैव घटस्य प्रत्ययाद् अभिधेयात्मना नित्यत्वमर्थानामित्य-

नित्यत्वमभिधेयात्मना स्थितम्" (वा० प० ३ सं० ३४) इत्युक्तम्। तस्माच्छाब्देन रूपेण भाव्यमाना क्रियेति ध्वनतीत्यादावपि क्रियात्वमिति वक्ष्यते।

एवञ्च 'पूर्वापरीभूतस्य सक्रमस्यार्थस्यागमापायित्वाद् भागानामवर्तमानत्वात् प्रत्यक्षत्वाभावः' इत्यपि वक्ष्यते।

तदेवमन्वयव्यतिरेकाभ्यां द्रव्यादनुमिता क्रिया।

ननु एवमप्यस्त्यादीनां क्रियात्वं न स्यात्। न हि सर्वेषु साधनेषु सन्निहितेषु कश्चिदस्ति भवति विद्यते वेति भवति, सर्वदाऽभावात्।

पचतितरामित्यादाविव चास्तितरामित्यादौ प्रकर्षाभावात्, किं करोति पचतीत्यादिवच्च किं करोति अस्तीत्यादिप्रश्नप्रतिबचनाभावात्, सत्तायाश्च निर्विशेषत्वाद् भेदाभावः।

अत्र ब्रूमः—इह 'अन्यथा साधनान्यस्तौ प्रवर्तन्ते, अन्यथा म्रियतौ' इति प्रवृत्तिविशेषरूपत्वं तावदस्ति। अस्तौ ह्यात्मोपग्रहरूपेण साधनानां प्रवृत्तिः।

---

नित्येष्वपि घटादिषु नित्यमभिधेयात्मना स्थितमित्युक्तम्—'सिद्धे शब्दार्थसम्बन्धे' इत्यादिवार्तिके तद्भाष्ये च। अभूत्, भविष्यति इति च घटप्रादुर्भावस्यैव भूतता भविष्यत्ता च प्रबोध्यते, न तु घटस्येति। तस्माच्छाब्देन रूपेण भाव्यमाना क्रियेति ध्वनिरूपस्य द्रव्यस्य ध्वनिरूपात् प्रातिपदिकात् सिद्धत्वेन प्रतीयमानत्वेऽपि, ध्वनति इत्यादौ आश्रितक्रमरूपेण प्रतीत्या क्रियात्वमिति अग्रिमकारिकया वक्ष्यते।

एवञ्च पूर्वापरीभूतस्य सक्रमस्य क्रियारूपस्यार्थस्य भागानामागमापायित्वात् पिण्डीभूतस्यावर्तमानत्वात् प्रत्यक्षत्वाभाव इत्यपि वक्ष्यतेऽत्रैवाग्रे।

तदेवमन्वयव्यतिरेकाभ्यां द्रव्यात्फलाच्चानुमिता क्रिया।

नन्वेवमपि अस्ति-भवति-विद्यतीनां क्रियात्वं न स्यात्। पचत्यादिक्रियास्विवात्र क्रियात्वसाधकानां हेतूनामभावात्। न हि सर्वेषु साधनेषु सन्निहितेषु सत्सु अस्ति भवति विद्यते वा इति प्रयोगः कदाचिद् भवति, सर्वदाऽभावात्।

किञ्च, पचतितरामित्यादाविव अस्तितरामित्यादौ क्रियात्वसाधकस्य प्रकर्षस्याभावः। किं करोति पचतीत्यादिवच्च, किं करोति अस्तीत्यादिरूपस्य क्रियात्वसाधकस्य प्रश्नप्रतिवचनस्याभावः। सत्तायाश्च सामान्यरूपत्वेन निर्विशेषत्वात् सजातीयाद् विजातीयाच्च भेदाभाव इति कारकाणां प्रवृत्तिविशेषः क्रियेति क्रियालक्षणस्य तस्यामभाव इति।

अत्र ब्रूमः—इह अन्यथा साधनान्यस्तौ प्रवर्तन्ते, अन्यथा म्रियताविति प्रवृत्तिप्रकारभेदात् प्रवृत्तिविशेषरूपत्वं तावदस्तिक्रियायाः। अस्तेर्म्रियतेश्च। अस्तौ हि आत्मोपग्रहरूपेण=आत्मधारणरूपेण साधनानां प्रवृत्तिः।

एवं भवतौ विद्यतौ च। म्रियतौ त्वात्मपरित्यागरूपेणेत्यस्ति तावद् विजातीयाद् भेदः। असंरब्धसाधनसाध्या च सत्ता नियतमेव साधनानां सन्निहितेति प्रख्योपाख्ययोः कादाचित्कत्वाभावः। प्रकर्षप्रत्ययश्चापि दृश्यते। विद्यतेतरामयमिह नित्यसन्निधानात्।

अनियतसन्निहिताद्धि नित्यसन्निहितस्य सत्ता विशिष्यते। तेन साधनान्यत्वादभिद्यमानापि प्रकर्षेण युज्यते। किं करोतीति च क्रियाविशेषप्रश्ने अस्ति, न काञ्चित् पच्यादिकां क्रियामनुतिष्ठतीत्यस्ति प्रतिवचनम्। सामान्येन ह्यवगतायां सत्तायामस्य प्रश्नस्योपपत्तेः। नास्ति क्रियाविषय एवायम्। प्रत्यासन्नविनाशे च किं करोति देवदत्तः, अस्ति तावद् विद्यते तावदिति भवत एव प्रश्नप्रतिवचने।

किञ्च सर्वासां क्रियाणामनन्तरफलजनकत्वमस्तावप्येतदस्ति। किमत्र

---

एवं भवतौ विद्यतौ च। म्रियतौ तु साधनानां प्रवृत्तिरात्मपरित्यागरूपेण = देहपरित्यागरूपेण इत्यस्ति तावद् अस्तिम्रियत्योर्विजातीयाद् भेदः। असंरब्धसाधनसाध्या च साधनानां सत्ता मन्दप्रवृत्तिसाध्या आत्मधारणरूपा नियतमेव = नियमेनैव संनिहितेति अस्तीति प्रख्योपाख्ययोः = ज्ञानशब्दयोः कादाचित्कत्वाभावः। अस्ति-भवति-विद्यतिभ्यः प्रकर्षप्रत्ययश्चास्ति तेषां क्रियात्वसाधकः। प्रकर्षप्रत्ययश्चापि दृश्यते। 'विद्यतेतरामयमिह' इति नित्यसंनिधानमवेक्ष्य प्रयोगात्।

अनियतसंनिहिताद्धि नित्यसंनिहितस्य सत्ता विशिष्यते = भिद्यते इत्यस्ति सजातीयाद् भेदः। तेन साधनान्यत्वात् सजातीयाद् भिद्यमाना प्रकर्षेणापि युज्यते। 'किं करोति' इति च क्रियाविशेषविषयके प्रश्ने 'अस्ति, न काञ्चित् पच्यादिकां क्रियामनुतिष्ठति' इत्यस्ति प्रतिवचनं सत्तायाः क्रियात्वसाधकम्। सामान्येन हि अवगतायां सत्तायामस्य प्रश्नस्योपपत्तेः। सत्ताऽवगमाभावे चाविद्यमानविषयकस्यैतादृशप्रश्नस्यानुपपत्तेः। नास्ति इत्यपि प्रतिवचनं क्रियाविषयकमेव। सत्तारूपक्रियोपरक्तस्य अभावस्यापि व्याकरणे क्रियात्वात्। धातुत्वं तु अस्तेरेव, तस्यैव गणे पाठात्। मृतं देवदत्तमभिप्रेत्य नास्तितरामिति प्रतिवचने च सत्ताऽभावे क्रियात्वसाधकप्रकर्षयोगाच्च। अन्यथा साधनान्यस्तौ प्रवर्तन्ते, अन्यथा नास्तौ इति नास्तित्वरूपायाः क्रियायाः प्रवृत्तिविशेषरूपत्वमप्यस्ति। एवं सर्वत्र क्रियाऽभावेषु क्रियात्वमुन्नेयम्। प्रत्यासन्नविनाशे च देवदत्ते किं करोति देवदत्तः? अस्ति तावत्, विद्यते तावदिति भवत एव प्रश्नप्रतिवचने। अतोऽपि सत्तायाः क्रियारूपत्वम्।

किञ्च, सर्वासां क्रियाणां फलजनकत्वमस्ति। एतच्चास्तावप्यस्ति। किमत्र फलमिति चेत्, आत्मा मोक्षरूपेणेति ब्रूमः। तथा हि—यद्यपि आत्मा सच्चिदानन्दरूपो नित्य आत्मधारणरूपायाः सत्तायाः फलं न सम्भवति, अजन्यत्वात्, तथापि

फलमिति चेदात्मा मोक्षरूपेणेति ब्रूमः ।

'षड् भावविकाराः' इति च निरुक्तकारवचनाद् भावशब्दाभिधेयायाः सत्तायाः समस्तक्रियायोनित्वे मूलभूतायाः क्रियात्वं प्रत्यस्या न विवादः ।

यद्यपि च भावविकारेषु तिष्ठतिर्नोपसंख्यातः, तथाप्यस्यास्त्येव क्रियाधर्मान्वयः ।

तथा हि– 'क्रिया क्रियाया निर्वर्तिका भवति द्रव्यं द्रव्यस्य' इत्युक्तम् । तिष्ठतीत्युक्ते च वृद्धयपक्षययोर्निवृत्तिः प्रतीयत इति क्रियैषा कारकाणां प्रवृत्तिरूपा । असंरब्धानि हि वृद्धावपक्षये च कारकाण्यौदासीन्येनावतिष्ठन्ते ।

तथा हि—यावत् कारकाणि प्रवर्तन्ते तावत् पूर्वापरीभूतावयवः साध्यमानस्वभावः प्रवृत्तिविशेषस्तेषामवधार्यते । यदधीना फलनिष्पत्तिः ।

---

मोक्षरूपेण तस्य फलत्वं सम्भवति । मोक्षो हि सर्वबन्धनिवृत्तिरूप इति स्वाधिकरणीभूतात्मरूपः । मोक्षस्य च एतादृशस्य कार्यत्वम्—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

इत्यादिश्रुतिस्मृतिवलात् सिद्धम् । एवञ्चात्मा स्वरूपेण नित्योऽपि मोक्षरूपेण कार्य इति स्थितम् । आत्मधारणञ्चात्रात्मदर्शनमेव । कार्यकारणयोरभेदात् । आत्मदर्शनमत्र कारणम्, आत्मधारणञ्च कार्यमिति ।

षड्भावविकाराः - जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते नश्यति इति च निरुक्तकारवचनाद् भावशब्दाभिधेयाया वस्तुनो ब्रह्मरूपायाः सत्तायाः षडित्यस्योपलक्षणतयोदाहरणत्वेन समस्तक्रियायोनित्वे स्थिते क्रियाणां मूलभूतायाः सत्तायाः क्रियात्वं प्रति न विवादः । उपादानोपादेययोः साजात्यस्यैव सर्वसम्मतत्वात् ।

यद्यपि च भावविकारेषु षट्सु तिष्ठतिर्नोपसंख्यातः, तथापि अस्यास्त्येव वृद्धयपक्षयरूपक्रियानिवर्तकत्वरूपस्य क्रियाधर्मस्यान्वयः ।

तथा हि—'क्रिया क्रियाया निर्वर्तिका भवति, द्रव्यं द्रव्यस्य' इत्युक्तं भाष्ये । तिष्ठतीत्युक्ते च वृद्धयपक्षययोर्निवृत्तिः प्रतीयत इति क्रियैषा तिष्ठत्याख्या कारकाणां प्रवृत्तिरूपा । वृद्धयपक्षयक्रिययोः फलनिष्पत्तौ असंरब्धानि हि कारकाणि वृद्धौ अपक्षये चौदासीन्येनावतिष्ठन्त इति तिष्ठतिक्रियया वृद्धयपक्षयक्रिययोर्निवृत्तिः क्रियते ।

तथा हि— यावत्कारकाणि प्रवर्तन्ते तावत्पूर्वापरीभूतावयवः साध्यमानस्वभावः प्रवृत्तिविशेषस्तेषामवधार्यते, यदधीना फलनिष्पत्तिः । कारकाणां प्रवृत्ति-

शब्दार्थोऽर्थं इति चैतल्लक्षणमिति वस्तुतः सिद्धमपि साध्यत्वेनाभिधोयमाना क्रिया। तद्यथा ध्वनतोति। एवं सत्तादोनामपि साध्यतयाख्यातेनाभिधानात् क्रियात्वमित्यस्त्यादोनां धातुत्वं सिद्धम्। तथा तिष्ठतेरपि क्रियान्तरनिवृत्तिवचनत्वादेतदेव क्रियालक्षणमनुगामि।

तथा हि तिष्ठतीत्युक्ते न वर्धतेऽपक्षोयते वेति गम्यते। तथा च क्रियान्तरापाकरणेन कारकप्रवृत्तिविशेषत्वात् क्रियात्वम्। साधनसंसर्गदर्शनाच्च भूमौ तिष्ठति, बलेन तिष्ठतोति। एवमुपवसतोति भोजननिवृत्त्याकारा प्रवृत्तिः क्रिया। विनश्यत्यपक्षीयत इत्यसदवस्थापूर्वभावी कारकप्रवृत्तिविशेषः समाश्रितक्रमः क्रियेति भावविकारेषु प्रपञ्चयिष्यते।

तदेवं साधनेभ्यो भिन्ना क्रिया साधनेभ्यश्चान्यद् भवद् वस्तु, किमन्यत् साध्यात् स्यादिति साध्यस्वभावा क्रिया धातुवाच्या। न हि संयोगविभागात्मकः

---

सामान्याभावे=औदासीन्येनावस्थाने तेषां फलनिष्पादकस्य प्रवृत्तिविशेषस्याभावः फलनिष्पत्त्यभावश्चेति रीत्या वृद्धयपक्षयक्रियानिवर्तकत्वात्तिष्ठतिः क्रियेति।

इह हि व्याकरणे शब्दार्थोऽर्थ इति च सिद्धान्तमाश्रित्य कारकाणां प्रवृत्तिविशेषः क्रियेत्येतल्लक्षणमिति वस्तुतः सिद्धमपि साध्यत्वेनाभिधीयमानं क्रिया। तद्यथा—ध्वनतीति। अत्र वस्तुतः सिद्धरूपोऽपि ध्वनिः साध्यत्वेनाभिधीयमानः क्रिया इत्यग्रिमकारिकया वक्ष्यते। एवं सत्तादीनां सिद्धस्वरूपाणामपि आख्यातेन साध्यतयाऽभिधानात्। क्रियात्वमिति अस्त्यादीनां धातुत्वं सिद्धम्। तथा तिष्ठतेरपि क्रियान्तरनिवृत्तिवचनत्वाद् एतदेव क्रियालक्षणं क्रियान्तरनिवर्तकत्वरूपमनुगामि।

तथा हि—तिष्ठतीत्युक्ते न वर्धतेऽपक्षीयते वेति प्रतीयते। तथा च क्रियान्तरापाकरणेन हेतुना क्रियान्तरनिवृत्तिरूपस्य स्थाधात्वर्थस्यापि आख्यातेन साध्यतयाऽभिधीयमानस्य कारकप्रवृत्तिविशेषत्वात् क्रियात्वम्। साधनसंसर्गदर्शनाच्च पचत्यादिवत् तिष्ठतेरपि क्रियात्वम्।

तथा हि—भूमौ तिष्ठतीति अधिकरणसंसर्गः;बलेन तिष्ठतीति करणसंसर्गः। एवं तिष्ठतिवद् भोजननिवृत्तिरूपा कारकाणां प्रवृत्तिः क्रिया विनश्यति, अपक्षीयते इति भावानामसदवस्थातः पूर्वभावी विनाशापक्षयाख्यः कारकप्रवृत्तिविशेषः समाश्रितक्रमः क्रियेति भावविकारनिरूपणावसरे प्रपञ्चयिष्यते।

तदेवं साधनेभ्यो द्रव्यरूपेभ्यो भिन्ना क्रिया, साधनेभ्यश्चान्यद् भवद् वस्तु किमन्यत् साध्यात् स्यात्, विश्वस्यैव साध्यसाधनरूपाभ्यां द्विधावस्थितत्वादिति साध्यस्वभावादिः क्रिया धातुवाच्या। फलन्तु सिद्धस्वभावमक्रियात्वान्न धातुवाच्यम्। न हि संयोगविभागात्मकः सिद्धस्वभावोऽर्थः फलरूपो धातुवाच्यः। साध्यतया

सिद्धस्वभावोऽर्थो धातुवाच्यः, साध्यतया पूर्वापरीभूतत्वेनानवगमात्। तद्व्यतिरिक्तस्य चापरस्य कर्तृव्यापारस्याप्रतीतेर्न भावनान्या काचिद् धात्वर्थो विद्यते। समस्तधात्वर्थसामान्यरूपश्च करोत्यर्थं इति पचत्यादिना सामानाधिकरण्यं प्रतीयते।

पाकः पचतीति च कृदाख्याताभिहितयोर्भावयोः सिद्धसाध्यतारूपभेदाद् बुद्धिभेदः। पाकं करोति पचतीति च धात्वर्थ एव विक्लेदनाख्यः शब्दात् प्रतीयमानो वास्तवकर्मगतविक्लित्तिनिष्ठतया व्याक्रियते। विक्लिद्यतस्तण्डुलान् विक्लेदयतीत्यर्थः।

अत एव विक्लिद्यन्ति पचन्ति इति कर्मकर्तृगतव्यापाराभिधानात् प्रतीतिभेदः। द्व्यर्थः पचिरिति च कर्तृव्यापारस्य धात्वर्थतायामुपपद्यते। तस्मान्न भावना काचिदिति यागेन भावयेत् स्वर्गमिति नैष वाक्यार्थो यजेतेति, अपि तु यजिः साध्यमानशरीरोऽवसीयते, यदनुष्ठानात् फलं वस्तुसामर्थ्याद् भवतीति क्रियाविवेके क्रियैव प्रधानभूता वाक्यार्थं इति निर्णीतम्, तत एवावधार्यमलमिह विस्तरेण ॥ १ ॥

---

पूर्वापरीभावेनानवगमात्। तद्व्यतिरिक्तस्य=भावनाव्यतिरिक्तस्य चापरस्य कर्तृव्यापारस्याप्रतीतेर्न भावनाऽन्या काचिद् धात्वर्थो विद्यते। समस्तधात्वर्थसामान्यरूपश्च करोत्यर्थ इति पचत्यादिना क्रियाविशेषेण सह यस्य सामानाधिकरण्यं शाब्दबुद्धौ प्रतीयते।

पाक इति, पचतीति च कृदाख्याताभिहितभावयोः सिद्धसाध्यतारूपभेदाद् बुद्धिभेदः। पचति पाकं करोति इति च धात्वर्थ एव विक्लेदनाख्यः=विक्लित्त्यनुकूलव्यापाररूपः, तण्डुलरूपवास्तवकर्मगतविक्लित्तिनिष्ठतया=तदनुकूलत्वेन पाकशब्दात् प्रतीयमानः पाकं करोतीति व्याक्रियते इति नातोऽपि विक्लित्तिरूपं फलं धात्वर्थः, किन्तु विक्लेदनमेव। पचति तण्डुलानित्यस्य विक्लिद्यतस्तण्डुलान् विक्लेदयतीत्यर्थः।

अत एव तण्डुला विक्लिद्यन्ति इति वस्तुतः पाकक्रियाकर्मतण्डुलगतव्यापाराभिधानात्, तण्डुलान् पचन्ति चैत्रादय इत्यत्र च कर्तृगतव्यापाराभिधानात् कर्मकर्तृव्यापारयोर्विक्लेदनयोर्भेदात् प्रतीतिभेदः। द्व्यर्थः पचिरिति च कर्तृव्यापारस्य भावनारूपस्य धात्वर्थतायामेवोपपद्यते, न तु मीमांसकसम्मतप्रत्ययार्थतायाम्। तस्मान्न भावना काचिद् धात्वर्थादन्या प्रत्ययार्थ इति यजेत इत्यस्य यागेन स्वर्गं भावयेति मीमांसकसम्मतो नैष वाक्यार्थः, अपि तु यजिः साध्यमानशरीरो धात्वर्थतयाऽवसीयते, यदनुष्ठानात् स्वर्गादिकं फलं क्रियारूपवस्तुसामर्थ्याद्भवति इति क्रियाविवेके=एतन्नाम्नि स्वकृतेऽन्यकृते वा ग्रन्थे धात्वर्थक्रियैव शाब्दबुद्धौ प्रधानभूता वाक्यार्थ इति निर्णीतम्, तत एवावधार्यमलमिह विस्तरेण इति ॥१॥

इदानीमेतदेव क्रियालक्षणमुदाहरणेन स्फुटीकरोति—

कार्यकारणभावेन ध्वनतीत्याश्रितक्रमः ।
ध्वनिः क्रमनिवृत्तौ तु ध्वनिरित्येव कथ्यते ॥२॥

घण्टा ध्वनतीति ध्वनिराख्यातेनोपात्तपौर्वापर्यक्रियात्वमनुप्राप्तोऽभिधीयते । तथा हि—घण्टा ध्वनेः कारणम्, कार्यं ध्वनिः । तयोः सम्बन्धेन हेतुना कार्ये सव्यापारा घण्टा ध्वनतीत्येवमुच्यते । ध्वनेरेव वा प्रबन्धेन जायमानस्य वीचीसन्तानवद् विप्रसृतावयवत्वात् पूर्वो भागः कारणम्, उत्तरस्तु कार्यः ।

यदा तूपरतव्यापारा घण्टा, तदा पूर्वापरभावस्य निवृत्तौ घण्टाया ध्वनिरित्येवंसिद्धतया शब्देन प्रतिपादितो न क्रियालक्षणमनुपतति । ध्वनिं करोतीति तु शब्दान्तरसम्बन्धात् प्रतीयमानो वाक्यार्थः, न पदात् साध्यतयावसायः, न स्वशब्दादिति क्रियात्वाभावः । प्रातिपदिकेन सिद्धस्वभावतापन्नोऽर्थोऽभिधीयते ।

---

इदानीमेतदेव क्रियालक्षणम्=क्रियान्तरनिवर्तकत्वे सति आश्रितक्रमाकारकाणां प्रवृत्तिः क्रियेति क्रियालक्षणमुदाहरणेन स्फुटीकरोति—कार्यकारणभावेनेति ।

अस्यार्थः—'घण्टा ध्वनति, घण्टाया ध्वनिः' इति प्रयोगद्वयं लोकव्यवहारे दृश्यते । तत्राद्ये घण्टाध्वनेः कारणम्, ध्वनिस्तु तस्याः कार्यमिति कार्यकारणभावरूपसम्बन्धेन हेतुना जायमानो ध्वनिराश्रितपौर्वापर्यरूपक्रमकः क्रियारूप आख्यातेन ध्वनतीत्येवंरूपेण क्रियात्वेनाभिधीयते । क्रमनिवृत्तौ तु परिनिष्पन्नत्वेन ध्वनेः पौर्वापर्यरूपक्रमनिवृत्तौ तु ध्वनिशब्देन ध्वनिरित्येव कथ्यते, न तु ध्वनतीति ।

अयं भावः—उपात्तपौर्वापर्यम्=आश्रितक्रमं क्रियात्वमनुप्राप्तो ध्वनिः घण्टा ध्वनतीति आख्यातेनाभिधीयते ।

तथा हि—घण्टा ध्वनेः कारणम्, ध्वनिस्तस्याः कार्यम्, तयोः सम्बन्धेन हेतुना ध्वनिरूपे स्वकार्ये सव्यापारा घण्टा ध्वनतीत्येवमुच्यते । अथवा प्रबन्धेन=सातत्येन जायमानस्य ध्वनेरेव वीचीसन्तानवद्विप्रसृतावयवत्वात्=विदूरं प्रसृतावयवत्वात् पूर्वः=पूर्वो भागः कारणम्, उत्तरः=उत्तरस्तु कार्यः ।

यदा तूपरतव्यापारा घण्टा, तदा ध्वनिगतस्य पूर्वापरभावस्य निवृत्तौ सत्यां घण्टाया ध्वनिरित्येवं ध्वनिशब्देन सिद्धतया प्रतिपादितो ध्वनिर्न क्रियालक्षणमनुपतति । 'ध्वनिं करोति' इत्यत्र तु करोतीति साध्यत्वरूपं शब्दान्तरसम्बन्धात् साध्यतया प्रतीयमानो ध्वनिर्वाक्यार्थः, न तु ध्वनिपदात् सुबन्तात् साध्यतया ध्वनेरवसायः=निश्चयः,नापि स्वशब्दात् प्रातिपदिकमात्रादिति ध्वनिं करोति इत्यत्रापि ध्वनेः क्रियात्वाभावः । सिद्धस्वभावतापन्न एवार्थः प्रातिपदिकेनाभिधीयते । तत्र

तत्र करोतीति त्वाख्यातात् साध्यरूपतावसायः शब्दान्तरसम्बन्धात् प्रतीयमानो वाक्यार्थः, न पदार्थः।

एवं पाकं करोतीत्यादावपि द्रष्टव्यम्। आख्यातेनैव हि साध्यस्वभावः क्रियारूपोऽर्थः प्रत्याय्यते, न नामपदेन। शब्दश्च स्वार्थे यथाभिधानं प्रमाणमिति निश्चितमेतत्।

तथा हि--शब्दार्थोऽर्थः, न वस्त्वर्थ इत्यसकृदुक्तम् ॥ २ ॥

अत्रैवोदाहरणान्तरमाह--

श्वेतते श्वेत इत्येतच्छ्वेतत्वेन प्रकाशते।
आश्रितक्रमरूपत्वादभिधानं प्रवर्तते ॥३॥

श्वेते गुणे श्वेतते इत्येतत् तिङन्तमभिधानं क्रमरूपाश्रयेण प्रवर्तमानं क्रियारूपतामावेदयते। तत्रैव च श्वेतशब्देन सिद्धावस्थो गुणः कर्तृत्वेनोच्यते श्वेत इति। तदाह--श्वेतत्वेन प्रकाशत इति।

---

ध्वनिं करोति इति तु आख्यातात् तस्या साध्यरूपताप्रत्यय इति शब्दान्तरसम्बन्धात् प्रतीयमानो ध्वनेः साध्यत्वरूपोऽर्थो वाक्यार्थः, न पदार्थः।

एवं पाकं करोति इत्यादावपि पाकशब्दात् पाकस्य शब्दान्तरसम्बन्धात् प्रतीयमानः साध्यत्वरूपोऽर्थो वाक्यार्थः, न पदार्थ इत्येतद् द्रष्टव्यम्। आख्यातेनैव हि साध्यस्वभावः क्रियारूपोऽर्थः प्रत्याय्यते न नामपदेन। शब्दश्च स्वार्थे यथाभिधानम् =अभिधानानतिक्रमेणैव अभिधानानुसारेणैत्र प्रमाणमिति निश्चितमेतत्।

तथा हि - इह हि व्याकरणे शब्दार्थोऽर्थः, न वस्त्वर्थ इत्यसकृत्पूर्वत्रोक्तम् ॥ २ ॥

नामपदात् सिद्धस्वभावोऽर्थः प्रतीयते, आख्यातपदेन तु स एवार्थः साध्यतयाऽभिधीयते इत्यत्रैवोदाहरणान्तरमाह—श्वेतते इति।

अस्यार्थः—श्वेतः श्वेतते इत्येतदभिधानं श्वेतगुणस्य आश्रितक्रमरूपत्वात्= उपात्तपौर्वापर्यरूपक्रमकत्वात् श्वेतगुणवान् पदार्थः श्वेतत्वेन गुणेनोपलक्षितः सन् प्रकाशत इत्यस्मिन्नर्थे प्रवर्तत इति।

अयमत्र निष्कर्षः--श्वेतो गुणः श्वेतेति नाम्ना स्वभावतः सिद्धतयाऽभिधीयमानोऽनाश्रितक्रमो न क्रियात्वं भजते। स एव तु श्वेतते इति आख्यातेन साध्यतयाऽभिधीयमान उपात्तपौर्वापर्यरूपक्रमः=क्रियात्वं भजत इति।

अयं भावः--श्वेतते इति तिङन्ताभिधानं श्वेते गुणे कारकप्रवृत्तिविशेष-साध्यतया क्रमरूपतामाश्रयमाणे प्रवर्तमानं तस्य क्रियारूपतामावेदयते। तत्रैव च= श्वेतते श्वेत इति वाक्ये एव च श्वेतशब्देन सिद्धावस्थो गुणः प्रवृत्तिनिमित्तरूपः कर्तृत्वेन=कर्तृत्वशक्तिरूपेण उच्यते श्वेत इति। तदेतत् सर्वमभिप्रेत्याह--श्वेतत्वेन प्रकाशते इति। अत्रेत्थंभूतलक्षणे तृतीया।

शौक्ल्येन गुणेनोपलक्षितः प्रतिभासत इति श्वेतत इत्यस्यार्थः कारिकायामेव व्याख्यातः ॥ ३ ॥

तदेवं शब्देन साध्यतयाभिधीयमानः समाश्रितक्रमः पौर्वापर्यवानर्थः क्रियेति विवक्षिते पूर्वापरीभूतस्य क्षणप्रवाहस्य युगपदसन्निधानादेकक्रियालक्षणानुपपत्तिरित्याशङ्क्याह—

**गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।**
**बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥४॥**

क्रमवतां क्षणानामेकफलोद्देशेन प्रवृत्तानां सङ्कलनाबुद्ध्या समापादितैक्यानां क्रियात्वव्यवहारः । तत्रावयवानां समुदाये गुणभावापत्तेः शब्दभेदप्रयोजकत्वाभावादेकधातूपादानक्रियैका समुदायस्वभावावतिष्ठते । तस्याश्चावयवाश्रयः क्रमः पौर्वापर्यञ्च व्यवह्रियते । समुदायाश्रयञ्चैकत्वमध्यारोपितम्, उत्पत्तिसमनन्तरनिरुद्धानामवयवानां वस्तुभूतसमुदायाभावात् ।

ततश्चाधिश्रयणादीनां व्यापाराणां यः समुदायो बुद्ध्यैकत्वेन गृहीतः स पचत्यादीनां वाच्यः ।

---

श्वेतत्वेन=शौक्ल्येन गुणेन उपलक्षितः प्रतिभासत इति श्वेतत इत्यस्यार्थः कारिकायामेव व्याख्यात इति ॥ ३ ॥

तदेवमाख्यातशब्देन साध्यतयाऽभिधीयमानः समाश्रितक्रमः पौर्वापर्यवानर्थः क्रियेति क्रियालक्षणे विवक्षिते पूर्वापरीभूतस्य क्षणप्रवाहस्य=क्षणिकक्रियाप्रवाहस्य युगपदसंनिधानादेकक्रियारूपत्वानुपपत्तिरित्याशङ्क्याह—गुणभूतैरिति ।

अस्यार्थः—स्वस्मिन् गुणभूतैः स्वावयवैरुपलक्षितः क्रमजन्मनां व्यापाराणां समूहः, एतावतां व्यापाराणामयमेकः समूह इति संकलनात्मिकया स्वगतैकत्वबुद्ध्या प्रकल्पिताभेदः; समूहसमूहिनोर्वस्तुतोऽनतिरेकेणावयवबहुत्वे समूहे ऐक्याभावेऽपि समापादितैक्यः क्रियेति व्यपदिश्यत इति ।

अयं भावः—क्रमवतां क्षणानाम्=क्रमेण जायमानानां व्यापाराणाम् एकफलोद्देशेन प्रवृत्तानां संकलनाबुद्ध्या प्रागुक्तया समापादितैक्यानामेकक्रियात्वव्यवहारः । तत्रावयवभूतानां व्यापाराणां समुदाये गुणभावापत्त्या प्राधान्यप्रयुक्तस्य शब्दभेदप्रयोजकत्वस्य तत्राभावादेकधातूपात्ता क्रिया समुदायस्वभावा एकाऽवतिष्ठते । तस्याश्चावयवाश्रयः क्रमः पौर्वापर्यञ्च तत्र व्यवह्रियते । व्यापाराणां समुदायस्तदाश्रयमेकत्वञ्चाध्यारोपितम्, न तु वस्तुभूतम् । उत्पत्तिसमनन्तरमेव निरुद्धानाम्=विनष्टानाम् अवयवानां वस्तुभूतसमुदायाभावात् ।

ततश्चाधिश्रयणादीनां व्यापाराणां यः समुदायो बुद्ध्यैकत्वेन गृहीतोऽवस्तुभूतोऽपि स पचत्यादीनां धातूनां वाच्यः । समुदायादेव हि=सामग्रीत एव हि फलं

समुदायादेव हि फलं निष्पद्यते, न विचटनमात्रात्, अधिश्रयणादिवैयर्थ्य-प्रसङ्गादिति व्यवहितैरप्यधिश्रयणादिभिः समीहितफलानुगुणैर्यथास्वं विशेष आधातव्य इत्यनेकापेक्षे कार्ये नानान्तर्यमात्रेण कस्यचिद् विशेष इति फलविशेष-सम्पादकत्वेन पचादीनामर्थः प्रतीयमानः फलैक्यादेकत्वेनाध्यवसीयमानः क्रिया ॥ ४ ॥

यदि तर्हि समुदायः क्रिया, अधिश्रयणादीनामवयवानां पचिक्रियात्वं न स्यात्। तथा च सर्वास्वधिश्रयणाद्यवस्थासु पचतीति प्रत्ययो न प्राप्नोति इति केषुचित् क्षणेष्वतीतानागतेषु तावन्मात्रस्य पचिरूपत्वाभावाद् भूतभविष्यद्-व्यवहारो न स्यादित्याशङ्क्याह—

समूहः स तथाभूतः प्रतिभेदं समूहिषु।
समाप्यते ततो भेदे कालभेदस्य सम्भवः ॥५॥

अधिश्रयणारम्भ एव फलाभिसन्धेः समस्तक्रियाकलापस्तत्रैवाध्यस्यते। तथा च पचतीति वर्तमानकालतायां प्रयोगः। तावन्मात्रस्य च फलोपयोगिनो

---

निष्पद्यते, न विचटनमात्रात्—अवयवानां विभागो विचटनम्, न विभक्तेभ्योऽवय-वेभ्य एकेनैव व्यापारेण फलनिष्पत्तौ अधिश्रयणादिरूपेतरव्यापारवैयर्थ्यप्रसङ्गादिति फलं प्रति व्यवहृतैरप्यधिश्रयणादिभिः समीहितफलानुगुणैः=इष्टफलानुकूलैः यथास्वम्=यथायथं कर्मणि फलरूपो विशेष आधातव्यः, इत्यनेकापेक्षे कार्यफल-रूपे जननीये आनन्तर्यमात्रेण नासौ कस्यचिदेव व्यापारस्य कार्यभूतो विशेष इति फलविशेषसंपादकत्वेन पचादीनां धातूनामर्थो यावान् प्रतीयते तावान् सर्वोऽपि स्वरूपतो बहुत्वेऽपि फलैक्यादेकत्वेनाध्यवसीयमानः क्रियेति व्यपदिश्यत इति ॥४॥

यदि व्यापारसमुदायः क्रिया, तर्हि अधिश्रयणादीनामवयवानां पचिक्रियात्वं न स्यात्। दृश्यते च तेषामपि क्रियात्वम्। किं करोति इति प्रश्ने अधिश्रयतीत्यभि-प्रायेण पचतीत्युत्तरदर्शनात्। तथा च सर्वासु अधिश्रयणाद्यवस्थासु प्रत्येकं पचतीति प्रत्ययो न प्राप्नोति, केषुचित् क्षणेषु क्षणिकेषु व्यापारेषु=अतीतानागतेषु तावन्मात्रस्य पचिरूपत्वाभावाद् अपाक्षीत्, पक्ष्यति इति भूतभविष्यद्व्यवहारो न स्यादित्याशङ्क्याह—समूहः स तथाभूत इति।

अस्यार्थः—स प्रागुक्तः क्रियारूपः तथाभूतः=गुणभूतक्रमजन्मावयवको व्यापाराणां समूहः प्रतिभेदं प्रत्यवयवं समूहिषु अवयवेषु समाप्यते। ततो भेदे अवयवे कालभेदस्य=कालभेदप्रयुक्तस्य भूतभविष्यद्व्यवहारस्य संभव इति।

अयं भावः—फलमभिसंधाय स्थाल्यधिश्रयणरूपस्य व्यापारस्यारम्भ एव तत्र अधिश्रयणरूपे आद्ये व्यापारे=समस्तोऽधःश्रयणान्तः क्रियाकलापोऽध्यारोप्यते। तथा चाधिश्रयणाद्यधःश्रयणान्तेषु व्यापारेषु पचतीति वर्तमानकालतायां प्रयोगः। तावन्मात्रस्य=अधिश्रयणमात्रस्य च फलोपयोगिनो रूपस्यातीतत्वादपाक्षीदित्यपि

रूपस्यातीतत्वादपाक्षीदित्यपि प्रयुज्यते। क्षणान्तरस्य च भविनोऽध्यारोपित-पचिरूपस्याभिसन्धाने पक्ष्यतीति। तथाभूत इति गुणभूतक्रमजन्मावयवः। तथा-भूतस्य हि समुदायस्य प्रत्येकमवयवेष्वध्यासात् तत्प्रत्ययोपपत्तिः। अध्यासश्च सर्वत्र पचतीति प्रत्ययस्यानुवृत्तेरेव ज्ञायते। प्रत्यवयवपरिसमाप्तत्वाच्च समुदाय-स्यावयवानां तद्रूपाध्यारोप उपपद्यत एव।

एवमप्येकत्रावयवे समुदायरूपारोपात् साध्यताप्रत्ययः कथम्? एकत्र ह्येकीकृते समुदायेऽवयवान्तराभावात् किमपरमवशिष्टं यत् साध्यं प्रतीयते।

अत्रोच्यते—न हि समुदायबुद्ध्यैकत्वेन, नाप्यवयवबुद्ध्या अयं चायं चेति समुच्चयेन प्रत्येकं समुदायस्यावयवेष्वारोपोऽत्र, किं तर्हि, पूर्वापरीभूतावयव-त्वेनैव। तथा चैकस्मिन्नप्यवयवे व्यपगते समुदायस्य व्यपगमारोपादपाक्षीदिति भूतकालता। भाविनि च पक्ष्यतीति भविष्यत्कालता। वर्तमाने तु पचतीति तत्कालता ॥ ५ ॥

यदि तर्हि प्रत्यवयवं समूहाध्यारोपात् क्रियात्वम्, तदा तस्यावयवस्य वर्तमानस्य प्रत्यक्षत्वात् कथमिदमुक्तं भाष्ये—"क्रिया नामेयमत्यन्तापरिदृष्टा न

---

तदभिप्रायेण प्रयुज्यते। क्षणान्तरस्य च भाविनः—अधिश्रयणादुत्तरक्षणे भाविनो व्यापारान्तरस्य च अध्यारोपितसमस्तक्रियाकलापरूपस्य फलजनकतयाऽभिसंधाने पक्ष्यतीति प्रयोगः। कारिकायां तथाभूत इति। गुणभूतैः क्रमजन्मभिरवयवैरुपलक्षित इत्यर्थः। तथाभूतस्य हि समुदायस्य प्रत्येकमवयवेष्वध्यासात् तत्प्रत्ययोपपत्तिः= प्रत्येकमवयवेषु क्रियात्वप्रत्ययोपपत्तिः। अवयवेषु प्रत्येकं क्रियासमुदायस्याध्यासश्च सर्वेषु अवयवेषु पचतीति प्रत्ययस्यानुवृत्तेरेव ज्ञायते। व्यापारसमुदायस्य प्रत्यवयव-मध्यारोपेण परिसमाप्तत्वाच्च तद्रूपाध्यारोपः=क्रियात्वाध्यारोप उपपद्यत एव।

नन्वेवमपि एकत्रावयवे समुदायरूपारोपात् साध्यताप्रत्ययः कथम्?

एकत्र हि अवयवेऽध्यारोपेणैकीकृते समुदायेऽवयवान्तराभावात् किमपरम-वशिष्टं यत्साध्यतया प्रतीयेत?

अत्रोच्यते—न समुदायबुद्ध्यैकत्वेन समुदायस्य प्रत्येकमवयवेषु आरोपोऽत्र, नाप्यवयवबुद्ध्या अयं चायं चेति समुच्चयेन समुदायस्य प्रत्येकमवयवेषु आरोपोऽत्र, येन प्रागुक्तशङ्का हृदि स्थानमासादयेत्।

किं तर्हि—पूर्वापरीभूतावयवकत्वेनैव यद्यपि पच्यर्थे आद्ये व्यापारेऽधिश्रयण-रूपे वस्तुभूतं पूर्वापरीभूतावयवकत्वं नास्ति, तथापि—समुदायगतस्य तस्यारोपस्तु संभवत्येव। तथा चैकस्मिन्नप्यवयवे व्यपगते समुदायस्य व्यपगमारोपादपाक्षीदिति भूतकालता। भाविनि च एकस्मिन्नप्यवयवे पक्ष्यतीति भविष्यत्कालता। वर्तमाने तु तस्मिन् पचतीति वर्तमानकालतेति ॥५॥

यदि तर्हि प्रागुक्तरीत्या प्रत्यवयवं समूहाध्यारोपात् क्रियात्वम्, तदा तस्य= अध्यारोपितसमूहभावस्य अवयवस्य वर्तमानस्य प्रत्यक्षत्वात् कथमिदमुक्तं भाष्ये—

शक्या पिण्डीभूता निदर्शयितुम्, यथा गर्भो निर्लुठितः । साऽसावनुमानगम्ये"—त्याशङ्क्याह——

**क्रमात् सदसतां तेषामात्मानो न समूहिनाम् ।**

**सद्वस्तुविषयैर्यान्ति सम्बन्धं चक्षुरादिभिः ॥६॥**

समूहिनां क्रियाक्षणानां क्रमेण भवतां सदसद्रूपत्वात् सदेकवस्तुविषयैरिन्द्रियैः सम्बन्धाभावादिन्द्रियार्थसन्निकर्षजज्ञानविषयाभावापत्त्ययोगादत्यन्तापरिदृष्टा साधनेभ्योऽन्यानुमानगम्या क्रिया भाष्येऽभिहिता । एकस्मिन्नपि हि क्षणे समूहोऽध्यस्यमानः समाश्रितपौर्वापर्य एवाध्यस्यते, तथारूपस्यैव च क्रियात्वात् तेन च रूपेणेन्द्रियाविषयत्वात् ॥ ६ ॥

एतदेव दृष्टान्तेनोपपादयति——

**यथा गौरिति सङ्घातः सर्वो नेन्द्रियगोचरः ।**

**भागशस्तूपलब्धस्य बुद्धौ रूपं निरूप्यते ॥७॥**

**इन्द्रियैरन्यथाप्राप्तौ भेदांशोपनिपातिभिः ।**

**अलातचक्रवद् रूपं क्रियाणां परिकल्प्यते ॥८॥**

---

क्रियानामेयमत्यन्तापरिदृष्टा न शक्या पिण्डीभूता निदर्शयितुम्, यथा निर्लुठितो गर्भः । साऽसावनुमानगम्या इत्याशङ्क्याह—क्रमात् सदसतामिति ।

अस्यार्थः · क्रमात्=क्रमेण जायमानत्वात् क्षणिकत्वाच्च सदसतामुत्पत्तिक्षणे सतामुत्तरक्षणे चासतां तेषामध्यारोपिसमूहभावानां समूहिनामवयवानामात्मानः स्वरूपाणि सद्वस्तुविषयैः=वर्तमानैकवस्तुविषयकैश्चक्षुरादिभिः सह सम्बन्धं न यान्ति, क्षणिकानां व्यापाराणामुत्तरक्षणेऽवर्तमानत्वेनेन्द्रियार्थसंनिकर्षायोगात् । इन्द्रियार्थसंनिकर्षजज्ञानविषयभावापत्त्ययोगादत्यन्तापरिदृष्टा अनुमानगम्यक्रिया भाष्येऽभिहिता इति ।

अयं भावः——समूहिनाम्=स्वस्मिन्नध्यारोपितसमूहावयवभूतानां क्रियाक्षणानाम्—क्षणिकव्यापाराणां क्रमेण भवतां सदसद्रूपत्वात्=उत्पत्तिक्षणे सद्रूपत्वादुत्तरक्षणे चासद्रूपत्वात् सदेकवस्तुविषयैः——वर्तमानमात्रग्राहिभिरिन्द्रियैः सह संबन्धाभावाद् इन्द्रियार्थसंनिकर्षजज्ञानविषयत्वापत्त्ययोगाद् इन्द्रियैरत्यन्तापरिदृष्टा साधनेभ्यः=करणेभ्य इन्द्रियेभ्यः, अन्येन अनुमानरूपेण साधनेन गम्या क्रिया भाष्येऽभिहिता । यद्वा साधनेभ्यः कारकेभ्योऽन्या इति क्रियाविशेषणं हेलाराजीये । एकस्मिन्नपि हि क्षणे=एकस्मिन्नपि हि क्षणिके व्यापाररूपे अध्यारोपितस्य समूहस्यावयवे समूहोऽध्यस्यमानः समाश्रितपौर्वापर्य एवाध्यस्यते, न तु स्वरूपेण समुदायत्वेन, स्वगतैकत्वेन, अवयवानां समुच्चयरूपेण वा । तथारूपस्यैव हि=समाश्रितपौर्वापर्यरूपक्रमकस्यैव हि, क्रियात्वात् तेन च रूपेणेन्द्रियाविषयत्वादिति क्रियाया अत्यन्तापरिदृष्टत्वोपपत्तिरिति ॥६॥

गौरश्व इति वर्णसमुदायो युगपद्भाव्यवयवो यथा वर्तमानावयवद्वारेण श्रोत्रेन्द्रियपरिच्छेद्योऽपि संस्कारक्रमायातान्त्यबुद्धिनिर्ग्राह्यः, तथा क्षणसमाहारात्मिकापि क्रिया वर्तमानक्षणगतेन्द्रियसम्बन्धाध्यारोपितप्रत्यक्षभावा समुदायरूपतया फलानुमेया। तत्र स्फोटः प्रत्यक्ष एवेति नासौ दृष्टान्तोऽक्रमोऽभिन्नश्च। समुदायस्तु वर्णानामुच्चरितप्रध्वंसिनामयुगपत्कालत्वादप्रत्यक्षो बुद्ध्या निरूपितैकत्वो दृष्टान्तो वर्णसमाहारमात्रदर्शनाश्रयेण क्रियाया अप्येवंरूपत्वादसमसमयावयवसमाहारात्मकत्वात्। अत एवालातचक्रवदित्याह। भ्राम्यमाणोल्मुकराजीनां चक्राकारतया भ्रान्त्याध्यवसायवत् क्रियाक्षणानामेकत्वपरिकल्पना, प्रत्यक्षताभि-

---

एतदेव = क्रियाया अत्यन्तापरिदृष्टत्वम् अवयवे पूर्वापरीभूतावयवकत्वेन समुदायाध्यारोपश्च दृष्टान्तेनोपपादयति पद्यद्वयेन - यथा गौरिति इन्द्रियैरिति च।

अस्यार्थः —यथा गौरिति वर्णसंघातः सर्वो न श्रवणेन्द्रियगोचरः, उच्चरितप्रध्वंसित्वाद् वर्णानां भागशोऽवयवश उपलब्धस्य। श्रोत्रेण गृहीतस्य तु तस्य संघातस्य रूपं बुद्धौ निरूप्यते पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतान्त्यबुद्धिनिर्ग्राह्यः खल्वयं संघातः। भेदांशोपनिपातिभिः = व्यापारसमुदायरूपायाः पाकादिक्रियाया ये भेदांशाः = परस्परं भिद्यमाना अवयवास्तदुपनिपातिभिः, तत्सम्बन्धैरिन्द्रियैश्चक्षुरादिभिः दीर्घस्यालातस्य भ्रान्त्याऽन्यथा चक्राकारतया प्राप्तौ सत्यां ग्रहणे सति, अलातचक्रवत् = अलाते चक्राकार इव प्रत्येकमवयवेषु पाकादिक्रियाणां समुदितं रूपं परिकल्प्यत इति।

अयं भावः -- यथा गौरश्व इति वर्णसमुदायोऽयुगपद् भाव्यवयवः = क्रमजातविनष्टावयवको वर्तमानावयवद्वारेण श्रोत्रेन्द्रियापरिच्छेद्योऽपि संस्कारक्रमायातान्त्यबुद्धिनिर्ग्राह्यः = पूर्वपूर्ववर्णानुभवजनितसंस्कारक्रमेणायाता प्राप्ता यान्त्यवर्णविषया बुद्धिः श्रावणप्रत्यक्षरूपा, तया निर्ग्राह्यः, क्रमजातसंस्कारसहकृतान्त्यबुद्धिनिर्ग्राह्य इति यावत्, तथा क्षणसमाहारात्मिकाऽपि = क्षणिकाधिश्रयणादिरूपव्यापारसमुदायात्मिकाऽपि पाकादिक्रिया वर्तमानक्षणगतेन्द्रियसम्बन्धाध्यारोपितप्रत्यक्षभावा = वर्तमानक्षणिकव्यापारगतेनेन्द्रियसम्बन्धेनाप्रत्यक्षत्वेऽपि अध्यारोपितप्रत्यक्षभावा समुदायरूपतयाऽवर्तमानत्वेन वस्तुतोऽप्रत्यक्षत्वेऽपि बुद्धिनिरूपितसमुदायरूपतया फलानुमेया। तत्र = गौरिति वर्णसंघाते अभिव्यङ्ग्यः स्फोटो नित्यत्वादखण्डत्वाच्च प्रत्यक्ष एव = मानसप्रत्यक्षगोचर एव इति नासौ दृष्टान्तः, यतोऽसौ अक्रमः = पूर्वापरीभूतावयवरहितः, अभिन्नः स्वगतभेदशून्योऽखण्डश्च। उच्चरितप्रध्वंसिनां वर्णानां समुदायस्तु वर्णानामयुगपत्कालत्वादप्रत्यक्षो बुद्ध्या निरूपितस्वमतैकत्वो वस्तुतो वर्णसमाहारासत्त्वेऽपि बुद्ध्या वर्णसमाहारदर्शनरूपभ्रान्तिमात्राश्रयेण दृष्टान्तः क्रियाया अपि असमसमयावयवसमाहारात्म-

मानश्च। क्रियया प्रत्यक्षतयाध्यवसितया सह गृहीतसम्बन्धमाख्यातपदं प्रयुज्यते। एकपदोपात्ताङ्गभूतकारकभेदावधारणान्निर्ज्ञातभेदा धातुरभेदेन प्रत्याय्यत इति शब्दार्थत्वमाश्रित्योच्यते—एका क्रियेति।

तथा च साधनस्य लकारेणानभिधाने क्रियैकत्वेन व्यवह्रियते आस्यते भवद्भिरिति ॥ ७-८ ॥

भवत्वेवमधिश्रयणाद्यवयवानां पचादिक्रियाणाम्, अधिश्रयणादीनां त्ववयवक्रियाणां प्रत्यक्षतैव न्याय्येत्याशङ्क्याह—

**यथा च भागाः पचतेरुदकासेचनादयः।**
**उदकासेचनादीनां ज्ञेया भागास्तथापरे ॥९॥**

अधिश्रयणादीनामपि संस्कारकाः स्वावयवा विद्यन्त इति तेऽपि पूर्वापरीभूताः क्रमवन्त एव क्रियाविशेषाः प्रत्यक्षभावमतिवर्तन्त एव।

---

कत्वाद्=अयुगपत्कालावयवसमुदायात्मकत्वाद् एवंरूपत्वात्=बहिरसत्त्वेऽपि बुद्ध्या निरूप्यमाणरूपत्वात्। अत एवालातचक्रवदित्याह। भ्राम्यमाणोल्मुकराजीनां दीर्घाणामपि चक्राकारतया भ्रान्त्याऽध्यवसायवत् क्रियाक्षणानाम्=क्षणिकानां व्यापाराणाम् एकत्वपरिकल्पना अप्रत्यक्षत्वेऽपि प्रत्यक्षत्वाभिमानश्च। प्रत्यक्षत्वेनाऽध्यवसितया=भ्रान्त्या गृहीतया क्रियया अगृहीतसम्बन्धम्=गृहीतवाच्यवाचकभावसम्बन्धरूपशक्तिकमाख्यातपदं लोके व्यवहारार्थं प्रयुज्यते। पचतीत्याद्येकपदोपात्तक्रियाङ्गभूतकारकभेदस्यावधारणात्=असन्देहं प्रतिपादनात् कारकभेदेन निर्ज्ञातभेदा क्रिया प्रागुक्तरीत्या भ्रान्तिप्रतिपन्नेन अभेदेन=एकत्वेन प्रत्याय्यत इति क्रियाया एकत्वस्य शब्दार्थत्वमाश्रित्योच्यते–एका क्रियेति। वस्तुतः क्रियाया अनेकत्वेऽपि।

तथा च भावे साधनस्य लकारेणाभिधाने क्रियैकत्वेन व्यवह्रियते आस्यते भवद्भिरिति ॥ ७-८ ॥

ननु भवत्वेवमधिश्रयणाद्यवयवकानां पच्यादिक्रियाणामप्रत्यक्षता फलानुमेयता च, अधिश्रयणादीनां तु पच्यादिक्रियाऽवयवक्रियाणां प्रत्यक्षतैव न्याय्येत्याशङ्क्याह=यथा च भागा इति।

अस्यार्थः—यथा च पचतेः पाकक्रियाया व्यापारसमुदायरूपाया भागा अवयवा उदकासेचनाधिश्रयणफूत्कारादयः, तथा उदकासेचनादीनामपि परे अन्ये भागा अवयवाः जलाधारपात्रोद्यमनपात्राधोमुखीकरणादयो ज्ञेया इति रीत्या उदकासेचनादीनां पच्यादिक्रियाऽवयवानामपि अप्रत्यक्षतैवेति।

अयं भावः—पच्यादिक्रियावयवानामधिश्रयणादीनामपि संस्कारकाः=समुदायरूपत्वात्पादकाः स्वावयवा हस्तप्रसारणस्थालीन्यासादयोऽग्रे वक्ष्यमाणा विद्यन्त इति। तेऽपि=अधिश्रयणादयोऽपि पूर्वापरीभूताः क्रमवन्त एव क्रियाविशेषाः प्रत्यक्षगोचरत्वमतिवर्तन्त एव।

तथा हि---स्वावयवपरिकल्पनया पूर्वापरीभूतसमुदायात्मका एवैते।
तद्यथा---हस्तप्रसारणस्थालीविन्यासेष्टकाविनियोजनादयोऽध्यारोपित-समुदायरूपाः कालत्रयाभिधायिनापि अध्यशिश्रियदधिश्रयिष्यति अधिश्रयतीति शब्देन प्रत्याय्यन्त इत्यवयवसमूहात्मकत्वात् पचिक्रियावदप्रत्यक्षत्वमेव ॥ ९ ॥

पर्यन्तवर्ती भागस्तर्हि निरंशः प्रत्यक्षः स्यादित्याशङ्क्याह—

**यश्चापकर्षपर्यन्तमनुप्राप्तः प्रतीयते।**

**तत्रैकस्मिन् क्रियाशब्दः केवले न प्रयुज्यते ॥१०॥**

अल्पीयसः परमाणुप्रख्यस्याशक्यावयवविभागस्य क्रियाक्षणस्य क्रियात्वं नास्ति। आश्रितक्रमरूपत्वात् क्रियाया इति, न तेन क्रियाया अप्रत्यक्षता-व्यभिचार उद्भावनीय इत्यर्थः। क्रियात्वाभावादेव च क्रियाशब्दस्याप्रयोगः,

---

तथा हि---स्वावयवपरिकल्पनया=स्वावयवे हस्तप्रसारणादौ वक्ष्यमाणे अध्यारोपेण समुदायरूपत्वपरिकल्पनया पूर्वापरीभूतस्वावयवरूपसमुदायात्मका एवैतेऽधिश्रयणादयः।

तद्यथा---स्थालीग्रहणार्थं हस्तप्रसारणम्, चुल्ल्युपरि स्थालीविन्यासः, चुल्लिकानिर्माणार्थम् इष्टकाविनियोजनम् इत्यादयोऽधिश्रयणावयवा अध्यारोपित-समुदायरूपाः कालत्रयाभिधायिना अपिशब्देन लुङ्लृट्लङ्रूपेण प्रत्याय्यन्ते इत्यधि-श्रयणादीनामपि अवयवसमुदायात्मकत्वात् क्षणप्रध्वंसिनां व्यापाराणां समुदायस्य चावर्तमानत्वात् पच्यादिक्रियावत् प्रत्यक्षत्वमेवेति ॥ ९ ॥

ननु व्यापारसमुदाये पर्यन्तवर्ती=प्रान्तवर्ती भागो निरंशत्वात् क्रमरहितः, अत एव वर्तमानत्वात् प्रत्यक्षः स्यादित्याशङ्क्याह यश्चापकर्षपर्यन्तमिति।

अस्यार्थः---यश्च=यस्तु, अपकर्षपर्यन्तमनुप्राप्तः=बौद्धस्य व्यापारसन्तानस्य प्रतिरूपस्य बुद्ध्यापकर्षेऽवयवविभागरूपे क्रियमाणेऽपकर्षपर्यन्तमनुप्राप्तश्चरमो व्यापारः प्रतीयते प्रत्यक्षीक्रियते, तत्रैकस्मिन् स्वस्य क्रमवत्ताबुद्धौ पूर्वोत्तरभागरूप-सहायरहिते, केवले=निरंशे, क्रियाशब्दो न प्रयुज्यते=न प्रवर्तते, क्रमवत्येव व्यापारसमुदाये क्रियाशब्दप्रवृत्तेर्व्यवहारे दृष्टत्वादिति।

यद्वा---पचिक्रियाया अवयवा अधिश्रयणादयः, अधिश्रयणादीनामपि हस्त-प्रसारणादय इत्येवमवयवविभागे क्रियमाणेऽपकर्षपर्यन्तमनुप्राप्तो भाग इति व्याख्येयम्।

अयं भावः---अल्पीयसः परमाणुसदृशस्य, अत एव कर्तुमशक्यावयव-विभागस्य क्रियाक्षणस्य=क्षणिकस्य व्यापारस्य क्रियात्वं नास्ति, क्रियाया आश्रितक्रमरूपत्वाद् निरंशस्य चैकस्य व्यापारस्य प्रागुक्तस्य तत्त्वाभावादिति न तेन =अनपकर्षपर्यन्तमनुप्राप्तेन व्यापारेण क्रियाया अप्रत्यक्षताव्यभिचार उद्भावनीयः, तस्याक्रियात्वात्। तस्य क्रियात्वाभावादेव च तत्र क्रियाशब्दस्य=पाकादिशब्दस्य

शब्दार्थोऽर्थ इति न्यायात्।

क्रियाशब्दस्याप्रयोगे क्रियात्वाभावमाह। साध्यमानरूपतया हि तिङन्तेनाभिधीयमानोऽर्थः क्रिया। केवले च निरंशे क्षणमात्रे क्रियाशब्दाप्रयोगः।

अयमर्थः — नेह वास्तवो भागभेदश्चिन्त्यते; अपि तु शब्दात् प्रतीयमानः। शब्दाच्च क्षणमात्रस्वभावापि विप्रकीर्णावयवा समूहात्मनैव सर्वा क्रिया प्रतीयत इति सिद्धं शब्दवाच्यतया क्रियायाः सक्रमत्वमतीन्द्रियत्वं च। क्रमरूपानध्यासे तु प्रत्यस्तक्रमो नाख्याताभिधेयः ॥ १० ॥

यदा तु प्रयोगः —

पूर्वोत्तरैस्तदा भागैः समवस्थापितक्रमः।
एकः सोऽप्यसदध्यासादाख्यातैरभिधीयते ॥११॥

सोऽप्यपकर्षपर्यन्तमनुप्राप्तो भागः समूहान्तःपाती पूर्वोत्तरभागगतपौर्वापर्याध्यारोपितक्रमः क्रियालक्षणमनुपतत्येवेति क्रमात् सदसतां तेषां समूहिनामप्रत्यक्ष-

---

पच्यादिशब्दस्य वा धातुरूपस्याप्रयोगः। 'शब्दार्थोऽर्थ' इति प्रागुक्ताद् न्यायात्।

तत्र क्रियाशब्दस्याप्रयोगे क्रियात्वाभावमाह कारिकाकारः। साध्यमानरूपतया हि तिङन्तेनाभिधीयमानोऽर्थः क्रिया। केवले च निरंशे क्षणमात्रे=क्षणमात्रावस्थायिनि आश्रितक्रमरूपत्वाभावात् क्रियाशब्दाप्रयोगः।

अयमत्र निष्कर्षः —नेह वास्तवो भागभेदः=अवयवविभागः चिन्त्यते; अपि तु शब्दात् प्रतीयमानो बहिर्वास्तवोऽवास्तवो वा। शब्दाच्च क्षणमात्रावस्थायिस्वभावापि कालभेदेन=क्षणभेदेन विकीर्णावयवा=विभक्तावयवा अपि बुद्ध्या समूहात्मनैव सर्वा क्रिया पच्यादिरूपा प्रतीयत इति सिद्धं शब्दवाच्यतया क्रियायाः सक्रमत्वमतीन्द्रियत्वञ्च। क्रियाया अवयवे क्रमरूपानध्यारोपे तु प्रत्यक्षक्रमः=निरस्तक्रमो व्यापारो न पचत्यादिरूपाख्यातपदाभिधेयः; किन्तु व्यापारसमूह एव बौद्धः सक्रमस्तथेति ॥१०॥

यदा तु व्यापारसमुदायस्य पर्यन्तवर्तिनि भागे क्रियापदप्रयोगः, तदा आह— पूर्वोत्तरैरिति।

अस्यार्थः —यदा पर्यन्तवर्तिनि भागे क्रियापदप्रयोगः, तदा एकोऽपि सः पर्यन्तवर्तिभागः, असदध्यासात्=स्वस्मिन्नसतः पौर्वापर्यरूपस्य क्रमस्य अन्यत्र दृष्टस्य स्वस्मिन्नध्यासाद् अध्यारोपात्, पूर्वोत्तरैः स्वभागैरसद्भिरपि बुद्ध्या प्रकल्पितैः समवस्थापितक्रमः=सम्पादितक्रमः सन् आख्यातैः क्रियारूपतयाऽभिधीयत इति।

अयं भावः —स एकोऽपि अवयवपरम्परया अपकर्षपर्यन्तमनुप्राप्तो भागो व्यापारसमूहरूपक्रियान्तःपाती पूर्वोत्तरभागगतपौर्वापर्याध्यारोपितक्रमः, पच्यादिक्रियाया येऽधिश्रयणफूत्कारादयः पूर्वोत्तरभागाः, तद्गतं यत् पौर्वापर्यं तेन अध्या-

तैवेति सर्वथात्यन्तापरिदृष्टा क्रियेति सिद्धम्।

अनेनैवाशयेन निरुक्तकारः प्राह—"पूर्वापरीभूतं भावमाख्यातेनाभिचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्" ( नि० १।१।११ ) इति।

न क्षणानां पूर्वापरीभावोऽत्यन्तभेदात्। न हि यः पूर्वक्षणः स एव परः सम्पद्यते। न चैकस्यार्थस्य रूपान्तरेणापरिणामे च्विप्रत्यय उपपद्यते। अवयवेषु तु समुदायाध्यासात् तस्य चाभेदात् पूर्वापरीभावो युज्यते। पूर्वावयवानुस्यूतत्वे रूपान्तरेणावस्थानाध्यवसायाच्च्व्यर्थोऽपि च सङ्गच्छते। भागशः प्रत्यक्षत्वाच्च न शक्या पिण्डीभूता पांसुराशिवत् क्रिया निदर्शयितुमित्युक्तम्॥ ११॥

एवं साध्यस्वभावः सक्रमोऽर्थः क्रियेति लक्षणे सत्ताया नित्यत्वादसाध्यत्वादक्रमत्वात् कथमस्तीति क्रिया तिङन्तवाच्येत्याशङ्क्याह—

कालानुपाति यद् रूपं तदस्तीति प्रतीयते।
परितस्तु परिच्छिन्नं भाव इत्येव कथ्यते॥१२॥

---

रोपितः पच्यादिक्रियागतक्रमो यत्र स तथाभूतः सन् क्रियालक्षणमनुसरत्येवेति क्रमादुत्पन्नविनष्टानां तेषां सदसताम् = प्राक्सतां पश्चादसतां तेषाम् = अधिश्रयणादिकमादायापकर्षपर्यन्तमनुप्राप्तपर्यन्तानां समूहिनां क्रियारूपेणाप्रत्यक्षतयैव, स्वरूपेण प्रत्यक्षत्वेऽपि तत्र क्रियात्वव्यवहाराभावः, आश्रितक्रमत्वाभावादिति सर्वथाऽत्यन्तापरिदृष्टा क्रियेति सिद्धम्।

अनेनैवाशयेन निरुक्तकारो यास्कः प्राह—"पूर्वापरीभूतं भावमाख्यातेनाभिचष्टे, व्रजति, पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्" इति।

अस्यार्थः—आदित आरभ्य समाप्तिपर्यन्तं पूर्वापरीभूतमाश्रितक्रमं भावं क्रियारूपं व्रजति, पचतीत्याख्यातेनाभिचष्टे आख्याति इति। न क्षणानाम् = क्षणिकानां व्यापाराणां पूर्वापरीभावोऽत्यन्तभेदः। न हि यः पूर्वः क्षणः = क्षणिकः पूर्वो व्यापारः स एव परः सम्पद्यते। न चैकस्यार्थस्य रूपान्तरेण परिणामाभावे वतिप्रत्यय उपपद्यते। अवयवेषु तु व्यापारसमुदायाध्यारोपात् तादृशसमुदायस्य चाभेदात् पूर्वापरीभावो युज्यते। अवयवानां च पूर्वावस्थानुस्यूतत्वे = अवयवावस्थानुस्यूतत्वे सति रूपान्तरेण = समुदायरूपेण अवस्थानाध्यवसायात् = अवस्थानाध्यारोपाद् अभूततद्भावरूपश्च्व्यर्थोऽपि च सङ्गच्छते।

क्रियायाश्च व्यापारसमूहरूपायाः क्रियाया भागशः प्रत्यक्षत्वाच्च न शक्या पिण्डीभूता पांसुराशिवत् क्रिया निर्देशयितुम्। अवयवानां क्षणिकत्वादिति उक्तं भाष्ये॥११॥

एवं साध्यस्वभाव आश्रितक्रमोऽर्थः क्रियेति लक्षणे सत्ताया जातिरूपतया ब्रह्मरूपतया वा नित्यत्वेनासाध्यत्वादक्रमत्वाच्च कथं सत्तारूपा क्रियाऽस्तीति तिङन्तवाच्येत्याशङ्क्याह - कालानुपातीति।

अस्यार्थः—सत्ताया नित्यत्वेन सिद्धाया अपि यद्रूपं कालानुपाति वर्तमानादिकालानुगतं कालपरिच्छिन्नं तदस्ति इत्याख्यातेन साध्यरूपतया प्रतीयते।

इह साध्यत्वेनाभिधीयमानोऽर्थः सिद्धोऽपि क्रियेति। 'क्रिया चैव हि भाव्यते, स्वभावसिद्धं द्रव्यमिति' शाब्देन रूपेण क्रियालक्षणाख्यानात् सत्ताऽप्याख्यातात् साध्यतया प्रतीयमाना क्रिया। तथा च कालात् क्रिया विभज्यत इति कालानुपातिता यथायथमुपपद्यते अभूदस्ति भविष्यतीति। क्रियाधर्मस्य कालाभिव्यङ्ग्यत्वस्य दर्शनादस्त्यादीनां क्रियात्वम्, सिद्धस्य कालेनायोगात्।

न हि घट इत्युक्ते कालविशेषावगतिरस्ति। निर्ज्ञातायां च सत्तायां किं करोतीति प्रश्नसम्भवादस्तीति प्रतिवचनाभावः, न तु क्रियात्वाभावात्। विनाशाशङ्कायां 'किं करोति देवदत्तः इति प्रश्ने' अस्ति तावदिति प्रतिवचनोपपत्तेः।

कृभ्वस्तयो हि क्रियासामान्यवचनाः, पचत्यादयः क्रियाविशेषवचनाः। करोतिना हि पचत्यादीनां सामानाधिकरण्यात् तद्विशेषत्वावसायो ब्राह्मणो गार्ग्य इति यथा। यथा ब्राह्मण्यं सामान्यं तद्विशेषो गार्ग्यस्तथा करणं सामान्यं

---

तु=यत्तु तस्था रूपं परितः=सर्वतः, कालातिरिक्तेन सर्वेण विशेषणोपलक्षणोपाध्यन्यतमरूपेण परिच्छिन्नं तद् भाव इत्येव कथ्यते, न तु क्रियेति। धात्वर्थस्तु भावः क्रिया इति रूपद्वयेनाभिधीयते, न तु भाव इत्येव कथ्यत इति।

अयं भावः —इह सिद्धोऽप्यर्थः सत्ता श्वेतादिरूपः अस्तीति, श्वेतते इत्याख्यातेन साध्यत्वेनाभिधीयमानः क्रियेति व्यपदिश्यते, यतः क्रियैव हि भाव्यते=साध्यते, न तु द्रव्यम्, द्रव्यं तु स्वभावतः सिद्धमिति शाब्देन रूपेण=आख्यातशब्दात् प्रतीयमानेन साध्यत्वेन रूपेण क्रियालक्षणस्याख्यानात् सत्तापि आख्यातात् साध्यत्वेन प्रतीयमाना क्रिया। तथा च "कालात् क्रिया विभज्यन्ते" (वा० प० ३, सा० १५३) इति प्रागुक्तायाः क्रियायाः कालानुपातिता यथास्वमुपपद्यते—अभूत्, अस्ति, भविष्यतीति। क्रियाधर्मस्य कालाभिव्यङ्ग्यस्य=स्वपरिच्छिन्नतया कालज्ञाप्यत्वस्य सत्तादिषु दर्शनादस्त्यादीनामस्त्येव क्रियात्वम्, सिद्धस्य भावस्य कालेनायोगात्।

न हि घट इत्युक्ते कालविशेषावगतिरस्ति। निर्ज्ञातायाश्च सत्तायां किं करोति इति प्रश्नासम्भवाद् अस्तीति प्रतिवचनाभावः, न तु सत्तायाः क्रियात्वाभावात्। देवदत्तस्य विनाशाशङ्कायाम्=विनाशसम्भावनायां किं करोति देवदत्त इति प्रश्ने अस्ति तावदिति प्रतिवचनोपपत्तेः। करोतेः क्रियासामान्यरूपत्वात्, सत्तायाश्च तद् विशेषरूपत्वात्।

यद्यपि कृभ्वस्तयः क्रियासामान्यवचना इत्युक्तेर्भ्वस्त्योरपि क्रियासामान्यवचनत्वमेव, तथापि कृभ्वस्तिषु करोत्यपेक्षया भ्वस्त्योः क्रियाविशेषत्वमेवावसेयम्। कृभ्वस्तयो हि क्रियासामान्यवचनाः, पचत्यादयः क्रियाविशेषवचनाः। किं करोति इति प्रश्ने सति पचतीत्यादिप्रतिवचने हि करोतिना पचत्यादीनां सामानाधिकरण्यात्=एकार्थकत्वात् करोति क्रियाविशेषत्वावसायः पचत्यादीनाम्। ब्राह्मणो गार्ग्य इति यथा। यथात्र ब्राह्मणत्वं सामान्यं तद्विशेषो गार्ग्यत्वम्, तथा करणरूपा क्रिया सामान्यं तद्विशेषाः पाकादय इति किं करोति पचति इति प्रश्नप्रतिवचनयोः

पाकादयस्तद्विशेषा इति किं करोति पचतीत्यादिसामानाधिकरण्योपपत्तिः।

इत्थं च करोत्यर्थप्रश्नः पचत्यादिभिर्व्याकृतो भवति। अर्थभेदे तु न प्रश्न-समानाधिकरणो निर्णयो भवेत्। अत एव च विशेषसामानाधिकरण्ये विशेष-वचना अपि कृभ्वस्तय इत्युक्तम्।

अभिन्नां चैव भिन्नां च प्राहुः कृभ्वस्तयः क्रियाम्।
एकानेकविशेषस्था यथाऽऽहुः सार्वनामिकाः॥ इति।

अनेकव्यक्तिसमवेता सामान्यात्मिका अभिन्ना। नियतव्यक्तिनिष्ठा भिन्ना। सामान्यस्य प्रत्येकं परिसमाप्तत्वात् प्रतिनियतविशेषपरेऽभिधाने सामान्यशब्दोऽपि प्रयोगार्ह एव। तद्यथा सर्वनामशब्दाः सर्वार्थविमर्शयोग्या

---

सामानाधिकरण्योपपत्तिः। इत्थं च करोत्यर्थप्रश्नः पचत्यादिभिर्व्याकृतो भवति।

अर्थभेदे तु न प्रश्नसमानाधिकरणं प्रतिवचनं भवेत्। अत एव च कृभ्वस्तीनां स्वविशेषपच्यादिक्रियासामानाधिकरण्ये विशेषवचना अपि कृभ्वस्तय इत्युक्तम्—

अभिन्नां चैव भिन्नां च प्राहुः कृभ्वस्तयः क्रियाम्।
एकानेकविशेषस्था यथाऽऽहुः सार्वनामिकाः॥ इति।

अस्यार्थः—कृभ्वस्तयोऽनेका याः पच्यादिक्रियाव्यक्तयस्तत्समवेतां क्रिया-सामान्यात्मिकामभिन्नां चैव, पच्यादिरूपनियततत्तत्क्रियाव्यक्तिनिष्ठां भिन्नां चैव पाकत्वादिरूपां क्रियां प्राहुः।

प्रश्नप्रतिवचने कृभ्वस्तीनां क्रियाविशेषसामानाधिकरण्यसम्भवेन तेषां क्रियाविशेषवचनत्वस्यापि सम्भवात्। यथा सार्वनामिकाः = सर्वनामसंज्ञकाः शब्दा यत्तदादयः, सर्वनामन्शब्दाद् विनयादित्वात् स्वार्थे टक्। एकानेकविशेषस्थाः = एकस्मिन्नियते पदार्थे वाचकत्वेन तिष्ठन्ति इति एकस्था भिन्नमेवार्थं ब्राह्मणत्वादि-रूपमाहुः।

यथा—तं ब्राह्मणमानयेति। अनेकस्मिन् विशेषे वाचकत्वेन तिष्ठन्ति इत्यनेकविशेषस्था अभिन्नमर्थं बुद्धिविशेषविषयतावच्छेदकत्वोपलक्षितधर्मरूप-माहुरिति।

आकृतिशक्तिवादमाश्रित्येदमुक्तम्। क्रियामित्यत्र भावप्रधानो निर्देशः। क्रियागतमभिन्नं भिन्नञ्च जातिरूपं धर्मं कृभ्वस्तयः प्राहुरिति योजना। अनेक-पच्यादिक्रिया व्यक्तिसमवेता सामान्यात्मिका अभिन्ना क्रिया। पच्यादिक्रियारूप-नियतव्यक्तिनिष्ठा तु भिन्ना। सामान्यस्य प्रत्येकं परिसमाप्तत्वात् प्रतिनियत-विशेषपरेऽभिधाने सामान्यशब्दोऽपि प्रयोगार्ह एव।

यथा इदानीं देवदत्तस्तूष्णीमास्ते, यद्वा किञ्चित् करोति इति प्रश्ने पचतीत्य-भिप्रायेण करोति इत्यभिधानम्।

तद्यथा सर्वनामशब्दा यत्तदादयः प्रागुक्तसर्वार्थपरामर्शयोग्या एव नियतेऽर्थे प्रयुज्यन्ते,तं ब्राह्मणमानयेति। सामान्यार्थे सर्वनामप्रयोगस्तु यत्कृतकं तदनित्यमिति।

एव नियतेऽर्थे प्रयुज्यन्ते तं ब्राह्मणमानयेति ।

अत एव सर्वस्मिन् प्रातिपदिकार्थे प्रवृत्तेः सार्वनामिका इत्युक्ताः ।

ननु च करोत्यर्थविशेषत्वे सर्वधात्वर्थानामासनमपि करणमिति किं करोतीति प्रश्ने—न करोति, आस्ते इति करोत्यर्थनिषेधेनोत्तरं कथं सङ्गच्छते ?

उच्यते—नात्र क्रियासामान्यं पृच्छ्यते; अपि तु लोकप्रसिद्ध एव गमनादिविशेषः । तत्रैव लौकिकानां क्रियात्वाभिमानादिति युक्त एव गमनादिव्युपरमे करोतिप्रतिषेधः ।

यदा तु यां काञ्चित् क्रियां जिज्ञासते, तदास्ते शेते इत्यपि प्रतिवचनं भवत्येवेत्यासनादेरपि क्रियात्वम् ।

कथमपरिस्पन्दरूपस्य तस्य तथात्वमिति चेत्, तन्न, यस्मान्न कायव्यापार एव क्रियालक्षणः; अपि तु साधनानां प्रवृत्तिविशेष इति प्रक्रान्तम् । स च प्रवृत्तिविशेषः सर्वत्रैवानुभवसिद्धः । पर्वतस्तिष्ठतीत्यादावप्याश्रितक्रमरूपस्यार्थस्यावगमात् ।

न हि सर्वेषां साधनानामेकरूपो व्यापारः केनचिदुपपादयितुं शक्यते । तस्मात् पर्वतादेरप्येकदेशापरित्यागलक्षणस्तिष्ठतौ व्यापारोऽस्त्येव ।

---

अत एव सर्वस्मिन् प्रातिपदिकार्थे प्रवृत्ते सार्वनामिका इत्युक्ताः ।

ननु च सर्वधात्वर्थानां करोत्यर्थविशेषरूपत्वे आसनमपि कारणम्=करोत्यर्थं इति किं करोति इति प्रश्ने, न करोति, आस्ते इति करोत्यर्थनिषेधेनोत्तरं कथं सङ्गच्छते ।

उच्यते—नात्र क्रियासामान्यं पृच्छ्यते; अपि तु लोकप्रसिद्ध एव गमनादिः क्रियाविशेषः पृच्छ्यते । तत्रैव=गमनादिष्वेव लौकिकानां क्रियात्वाभिमानादिति युक्त एव गमनादिक्रियाविरामे करोतिप्रतिषेधः ।

यदा तु किं करोति देवदत्त इति प्रश्नद्वारा यां काञ्चित् क्रियां जिज्ञासते तदाऽऽस्ते शेते इत्यपि प्रतिवचनं भवत्येवेत्यासनादेरपि क्रियात्वम् ।

अपरिस्पन्दरूपस्य आसनस्य कथं क्रियात्वमिति चेत्, तन्न, यतः कायव्यापार एव न क्रिया; अपि तु साधनानाम्=कारकाणां प्रवृत्तिविशेष इति प्रक्रान्तम्=प्रक्रम एव बोधितम्, स च तेषां प्रवृत्तिविशेषः सर्वत्रैव आख्यातप्रयोगेऽनुभवसिद्धः । पर्वतस्तिष्ठति इत्यादावपि आश्रितक्रमरूपस्य स्थितिरूपस्यार्थस्यावगमात् ।

न हि सर्वेषां साधनानामेकरूपो व्यापारः केनचिदुपपादयितुं शक्यते । तस्मात् पर्वतादेरपि एकदेशापरित्यागरूपः तिष्ठतौ=तिष्ठतीत्याख्यातप्रयोगे व्यापारोऽस्त्येव । यद्यपि एकदेशापरित्यागस्याभावरूपतया न क्रियात्वं सम्भवतीति वक्तुं शक्यते, तथापि क्रियोपरक्तस्याभावस्यापि क्रियात्वमुपपादितं प्रागिति सन्तोष्टव्यम् ।

तदेवमाख्यातान्नियतकालास्तिक्रिया प्रतीयते ।

सैव च सत्ता नामपदात् सिद्धतया प्रतीयते भाव इति। अपूर्वापरो हि भावः शब्दशक्त्यनुरोधात् तिङन्तेनासादितपूर्वापरोऽभिधीयते पचतीति। कृता तु सिद्धरूपः पाक इति। अत्रापि च धातुभागेन साध्यमानावस्थैव क्रियाऽभिधीयते ।

एतावांस्तु विशेषः—आख्याते प्राधान्येनोच्यते पूर्वापरीभूता क्रिया, कृत्सु प्रत्ययार्थे गुणीभूतेति। तथा चौदनस्य पाक इति प्रकृत्यर्थद्वारकः साधनयोग उपपद्यते ।

साधने च प्रत्ययः। अन्यथा कस्य तत्साधनं प्रत्ययार्थः स्यात्, कस्य वा सिद्धताख्यो धर्मो घञादिनोच्येत, प्रत्ययार्थस्य च सिद्धतायाः सत्त्वभूतस्य प्राधान्यात् तस्याभ्यावृत्त्ययोगात् पञ्चकृत्वः पाक इति अयोगायोगः। क्रियोपपदाश्रयस्तु प्रत्ययः प्रकृत्यर्थाश्रयो भोक्तुं पाक इति भवतीत्यनन्तरकाण्डे निर्णीतमिहाप्यग्रे निर्णेष्यते ।

---

तदेवमाख्यातान्नियतकाला=भूतभविष्यद्वर्तमानान्यतमकाला अस्तिक्रिया=सत्तारूपा क्रिया प्रतीयते ।

सैव च सत्ता सत्तेति नामपदात् सिद्धतया प्रतीयते भाव इति। अपूर्वापरो हि भावो नामपदात् प्रतीयते, शब्दशक्त्यनुरोधात्। तिङन्तेन तु आसादितपूर्वापरो भावोऽभिधीयते पचतीति। कृत्प्रत्ययेन तु सिद्धरूपो भावोऽभिधीयते पाक इति। अत्रापि च=पाक इति कृत्प्रत्ययान्तेऽपि च धातुभागेन साध्यमानावस्थैव क्रियाभिधीयते ।

एतावाँस्तु विशेषः—आख्यायते पूर्वापरीभूता क्रिया प्राधान्येनोच्यते कृत्सु तु प्रत्ययार्थे गुणीभूतेति। तथा चौदनस्य पाचक इति धात्वर्थक्रियारूपप्रकृत्यर्थद्वारकः साधनयोगः=कर्मकारकसम्बन्ध उपपद्यते ।

साधने च कर्तृरूपे ण्वुल्प्रत्ययः, अन्यथा कस्य क्रियारूपस्यार्थस्य तत्साधनं प्रत्ययार्थः स्यात्। कस्य वा सिद्धताख्यो धर्मो घञादिनोच्येत। प्रत्ययार्थस्य च सिद्धतया सत्त्वभूतस्य=द्रव्यरूपस्य प्राधान्यात्, तस्याभ्यावृत्त्ययोगात्=अभ्यावृत्तिः क्रियायाः पुनः पुनर्जन्म तदयोगात् पञ्चकृत्वः पाक इति प्रयोगायोगः। सुच्प्रत्ययार्थस्य प्रकृत्यर्थयोगे तु अयमपि प्रयोग उपपद्यते। क्रियोपपदाश्रयस्तु तुमुन्नादिः प्रत्ययः पाक इत्यत्र या प्रकृतिस्तदर्थाश्रय इति भोक्तुं पाक इति भवति इत्यनन्तरकाण्डे निर्णीतमिहाप्यग्रे निर्णेष्यते ।

तदेवं पूर्वोत्तरभागगतक्रमाश्रयेण=तद्गतक्रमाध्यारोपेण आख्याताभिधेया सर्वैव क्रियाऽध्यारोपितक्रमेति सत्ताया अपि क्रियात्वे, न काचिद् विचिकित्सा। सत्तायामपि क्रमाध्यारोपसम्भवादिति ।

तदेवं पूर्वोत्तरभागगतक्रमाश्रयेणाख्यातामिधेया सर्वैव क्रियाध्यारोपित-क्रमेति न सत्ताया अपि काचित् क्रियात्वे विचिकित्सा ।। १२ ।।

यद्येवं क्रमस्यासतोऽध्यारोपादमुख्यत्वं क्रियायाः प्राप्नोतीत्याशङ्क्याह—

व्यवहारस्य सिद्धत्वान्न चेयं गुणकल्पना ।
उपचारो हि मुख्यस्य सम्भवादुपदिश्यते ।।१३।।

गोशब्दस्य सास्नादिमति मुख्यत्वात् तत्समानगुणे वाहीकादावुपचरिता प्रवृत्तिरित्युच्यते । क्रियायास्तु समानकालानाश्रितपौर्वापर्यावयवाया अभावान्न मुख्यता काचित् । सर्वत्र पूर्वोत्तरासमसमयावयवगतक्रमरूपाध्यारोपादिति नोपचारार्थः कश्चित् ।

एवंविध एव हि क्रियाव्यवहारः प्रसिद्धः ।
तथा चैकोऽपि क्षणः समाश्रितक्रमः क्रियेत्युक्तम् ।। १३ ।।

---

तदयमत्र निष्कर्षः -व्यापारसमूहस्य सक्रमस्य प्रत्येकं समूहिषु अध्यारोपात् क्रियात्वं यथा, तथा सत्ताश्वेतादिषु सिद्धेष्वपि सक्रमस्य समूहस्याध्यारोपादेव क्रियात्वमिति ।।१२।।

यद्येवं व्यापाराणां क्षणिकानां क्रमेण सदसतां समूहस्यासत्त्वेन क्रमस्यासतः प्रत्येकं समूहिषु अध्यारोपादमुख्यत्वं क्रियायाः प्राप्नोतीत्याशङ्क्याह—व्यवहार-स्येति ।

अस्यार्थः—व्यवहारस्य समूहिषु क्रियात्वव्यवहारस्य लोकसिद्धत्वादियं तेषु क्रियात्वकल्पना गुणकल्पना गौणीकल्पना न च=न हि । प्रचुरव्यवहारेणैव हि शब्दानां तत्तदर्थेषु अभिधाव्यवहार इति दृष्टं लोके ।

न चेयं गुणकल्पना इति प्रतिज्ञातेऽर्थे हेत्वन्तरमाह—उपचारो हीति ।

हि यतः, उपचारः=गौणो व्यवहारः, मुख्यस्य व्यवहारस्य अन्यत्र संभवा-दुपदिश्यते=अभिधीयते । तद्यथा सिंहशब्दः केसरिणि मुख्ये दृष्ट इति माणवके गुणसाधर्म्येण प्रयुज्यमानो गौण उच्यते । न चात्र तथा, क्रियाया मुख्यव्यवहार-स्यान्यत्रादृष्टत्वादिति ।

अयं भावः—गोशब्दस्य सास्नादिमति प्रचुरप्रयोगेण मुख्यत्वात् तत्समान-जाड्यमान्द्यादिगुणके वाहीकादावुपचरिता=गौणी प्रवृत्तिरित्युच्यते । क्रियायास्तु समानकालानाश्रितपौर्वापर्यावयवायाः=समानकालायाः अत एव अनाश्रित-पौर्वापर्या अवयवा यस्यास्तस्या अभावात् न मुख्यता काचित् । सर्वत्र पूर्वोत्तरा-समसमयावयवगतक्रमरूपाध्यासात्=संकलनात्मिकायां बुद्धौ पूर्वोत्तरभावमापन्ना येऽसमसमया अवयवास्तद्गतस्य क्रमरूपस्य समूहिषु अध्यारोपाद् इति नोपचारार्थः =नोपचारपदार्थः कश्चित् । अन्यत्र मुख्यव्यवहाराप्रसिद्धिः ।

एवंविध एव=पूर्वोक्ताध्यारोपमूलक एव हि क्रियाव्यवहारो लोके सर्वत्र प्रसिद्धः ।

अत्र पूर्वं प्रतिभेदं समूहः समूहिषु समाप्यत इति क्रमकल्पनोक्ता। अधुना प्रकारान्तरेणाह –

आहितोत्तरशक्तित्वात् प्रत्येकं वा समूहिनः।
अनेकरूपा लक्ष्यन्ते क्रमवन्त इवाक्रमाः ॥१४॥

समूहिनः क्षणाः प्रत्येकमक्रमा अपि भावतः समनन्तरवर्तिक्षणसमूहगतभेदक्रमाध्यारोपाद् अनेकत्वेन सक्रमत्वेन चावसीयन्त इति प्रत्येकं ते क्रियालक्षणमनुपतन्ति।

तथा च सर्वत्राधिश्रयणादौ पचतिशब्दप्रवृत्तिः, अतीतानागतवर्तमानतासिद्धिश्च पचत्यपाक्षीत् पक्ष्यतीति। पूर्वं समूहस्यैव प्रत्येकमध्यास उक्तः। इह तूत्तररूपस्य पूर्वेषु, न तु पूर्वस्य परेषु तस्यानुभववासनावशेनैव तद्विशिष्टोत्तरप्रतिपत्तेरयत्नसिद्धत्वादिति विशेषः ॥ १४ ॥

---

तथा च=तथा सत्येव च, एकोऽपि क्षणः=क्षणिको व्यवहारो बौद्धे व्यापारसमूहे दृष्टस्य क्रमस्याध्यारोपेण समाश्रितक्रमः क्रियेत्युक्तं प्राक् ॥१३॥

अत्र पूर्वं समूहः प्रतिभेदं समूहिषु समाप्यत इति समूहगतक्रमाध्यारोपेण समूहिषु क्रमकल्पनोक्ता। अधुना प्रकारान्तरेण=उत्तररूपस्य पूर्वेषु व्यापारेषु अध्यारोपरूपेण प्रकारान्तरेण क्रमकल्पना इत्याह आहितोत्तरशक्तित्वादिति।

अस्यार्थः – वा=अथवा, अनेकरूपाः=परस्परस्माद् विलक्षणाः समूहिनो बौद्धस्य समूहस्य भागभूताः, प्रत्येकाहितोत्तरशक्तित्वात्=आहिता जनिता, उत्तरेण भागेन अध्यारोपितेन स्वस्मिन् शक्तितः क्रमावभासनशक्तिर्येषु ते तथाभूतास्तत्त्वात्, वस्तुतोऽक्रमा अपि पूर्वभागाः क्रमवन्त इव लक्ष्यन्ते।

नन्वेवं समूहस्यान्त्यभागरूपे व्यापारे क्रमकल्पना कथम्? तदुत्तरस्य समूहभागस्याभावादिति चेत्, न, तत्र समूहाध्यारोपेणैव क्रमकल्पनायाः सम्भवात्। उभयथाऽपि च क्रमकल्पना हरिसम्मतेति न कश्चिद् दोष इति।

अयं भावः—समूहिनः क्षणाः=समूहस्य भागभूताः क्षणिका व्यापारा भावतः =स्वभावतः प्रत्येकमक्रमा अपि समनन्तरवर्तिक्षणसमूहगतभेदक्रमाध्यारोपात्= स्वोत्तरवर्तिनो ये क्षणिका व्यापारास्तेषां भेदक्रमयोः पूर्वेषु व्यापारेषु अध्यारोपाद् अनेकत्वेन सक्रमत्वेन चावसीयन्ते=प्रतीयन्त इति प्रत्येकं ते पूर्वे व्यापाराः क्रियालक्षणमनुपतन्ति।

तथा च सर्वत्राधिश्रयणादौ प्रतिवचनावसरे पचतिशब्दप्रवृत्तिः, अतीतानागतवर्तमानतासिद्धिश्च, अवयवेषु प्रत्येकं कालत्रयसम्बन्धस्याबाधितत्वात्। तथा च पचति, अपाक्षीत्, पक्ष्यतीति कालत्रये प्रयोगोपपत्तिः। पूर्वं समूहस्यैव प्रत्येकं समूहिषु अध्यास उक्तः। इह तु उत्तरभागरूपस्य पूर्वेषु भागेषु, न तु पूर्वस्य भागस्य परेषु भागेषु, पूर्वभागानुभवसंजातवासनावशेनैव पूर्वभागविशिष्टोत्तरभागप्रतिपत्तिसंभवेन तस्य=उत्तरभागे पूर्वभागप्रत्ययस्य अयत्नसिद्धत्वेनाध्यारोपवैयर्थ्यादिति

अथवा प्रधानभूतैव पच्यादिक्रिया फलं प्रत्यनन्तरा अधिश्रयणादीनां तु तादर्थ्यात् तथात्वमित्याह—

अनन्तरं फलं यस्याः कल्पते तां क्रियां विदुः ।
प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्यता ॥१५॥

यत्समनन्तरमोदनादिफलनिष्पत्तिः, सा क्रिया फलोपायत्वेनानुष्ठीयमाना।

तथा हि—यत् तद् विचटनं तण्डुलावयवानामवयवान्तरेभ्यो विभागो यदनन्तरं मार्दवादयो निष्पद्यन्ते, तद् यदाधिश्रयणादिषु प्रत्यस्तरूपं भवति, तदा पचतीत्याख्यातशब्दाभिधेयं क्रियारूपमिति । यतो ह्यनन्तरं फलनिष्पत्तिः सा क्रिया । विचटनानन्तरमेव चौदननिष्पत्तिरिति विचटनमेव तु पाकः । पूर्वे तु व्यापारस्तदुपकारिणो न कार्यजन्मनि साक्षादुपयुज्यन्ते ।

न हि साक्षादजनयत् किञ्चित् कारकं नाम । यस्त्वधिश्रयणादिकाले

---

पूर्वग्रन्थानामुत्तरग्रन्थस्यास्य च विशेषः ॥१४॥

अथवा फलं प्रत्यनन्तराऽव्यवहिता साक्षात् फलस्य जनिका प्रधानभूतैव विचटनाख्या पचिक्रिया, एवमन्यधातुष्वपि । अधिश्रयणादीनान्तु तादर्थ्यात्=प्रधानक्रियार्थत्वाद् विचटनार्थत्वात् तथात्वम्=पच्यादिक्रियात्वमित्याह-अनन्तरमिति ।

अस्यार्थः—यस्या विचटनाख्यायाः क्रियाया अनन्तरं फलं विक्लित्तिरूपं कल्पते=प्रसिध्यति जायते तां प्रधानभूतां पचिक्रियां विदुः । अन्यासान्तु अधिश्रयणादिक्रियाणां तादर्थ्यात् प्रधानीभूतपच्यादिक्रियार्थत्वात् तदाख्याता क्रियापदाभिधेयता इति ।

अयं भावः—यत् समनन्तरमोदनादिरूपफलनिष्पत्तिः, सा फलोपायत्वेनानुष्ठीयमाना क्रिया ।

तथा हि—यत् तद् विचटनं तण्डुलावयवानामवयवान्तरेभ्यो विभागरूपम्, यदनन्तरं तण्डुले मार्दवादयो निष्पद्यन्ते, तद् विचटनम्, यदा अधिश्रयणादिषु प्रत्यस्तरूपम्=प्रत्यर्पितरूपम् अध्यस्तरूपं भवति, तदा पचति इत्याख्यातशब्दाभिधेयमधिश्रयणादिकं क्रियारूपमिति । यस्मादनन्तरं हि फलनिष्पत्तिः सा क्रिया, विचटनानन्तरमेव हि फलनिष्पत्तिरिति विचटनमेव क्रिया, अधिश्रयणादिषु तु विचटनत्वारोपादेव क्रियात्वव्यवहारः । विचटनानन्तरमेव चौदननिष्पत्तिरिति विचटनमेव तु पाकः । पूर्वे तु व्यवहारा अधिश्रयणादयस्तदुपकारिणः=विचटनोपकारका इति न कार्यजन्मनि=फलजन्मनि साक्षादुपयुज्यन्ते न हि साक्षात् फलमजनयत् किञ्चिदपि कारकं नाम ।

क्रियापि च करोतीति व्युत्पत्त्या कारकम् । अत एव च 'कारके' इत्यधिकारसूत्रस्य क्रियायामित्यर्थो भाष्ये दर्शितः । यस्त्वधिश्रयणादिकाले किं करोति इति

पचतीति प्रत्ययः, स विचटनोपायत्वाधिश्रयणादीनां प्रधानभूतविचटनक्रिया-ध्यासवशात् ।

नन्वेवमधिश्रयणस्यासिद्धस्योपकारकत्वस्वभावात् सिद्धत्वम् । तत्र पचि-रूपाध्यासश्चेति प्रत्यक्षः पाकः प्राप्तः । नैतदेवम् । सिद्धस्वभावस्यार्थस्य धातु-वाच्यत्वाभावादधिश्रयणं सिद्धेन रूपेण न पचिः; अपि तु साध्येन विचटनरूपेण धातुवाच्यम् । तदध्यासात् पचिः । सिद्धसाध्ययोर्हि निष्पन्नानिष्पन्नयोरधिश्रयण-विचटनयोरैकात्म्यापत्तौ पचत्यादिशब्दप्रयोगः ।

विचटनस्य तर्हि नियतकालत्वात् पूर्वापरीभावः कथम् । उच्यते—विचटनं पाकशब्दवाच्यं भेदाभावाद् यद्यपि न पूर्वं न परम्, तथापि गुणक्रियासु तद्रूपारो-पाद् गुणक्रियाणां पौर्वापर्यात् पूर्वापरीभूतमित्युच्यते ।

अन्ये तु विचटनस्यैव रूपमधिश्रयणादिरूपं प्रतिपन्नाः, न रूपशून्यानधि-श्रयणादीन् प्रत्यस्तविचटनरूपानिति ।

---

प्रश्ने सति पचतीति प्रतिवचनादधिश्रयणादीनां विचटनोपायत्वात् प्रधानभूत-विचटनक्रियायास्तत्राध्यासवशात् ।

नन्वेवमसिद्धस्याधिश्रयणस्योपकारकत्वासम्भवात् तस्य सिद्धत्वं वाच्यम्, तत्र साध्यत्वरूपक्रियात्वसम्पत्तये च पचिरूपाध्यारोपोऽपि वाच्य इति प्रत्यक्षः पाकः प्राप्तः=पाकक्रियायाः प्रत्यक्षता प्राप्ता इति चेन्नैतदेवम् । सिद्धस्वभावस्यार्थस्य धातुवाच्यत्वाभावादधिश्रयणं सिद्धेन स्वाभाविकेन रूपेण न धात्वर्थः पचिः; अपि तु साध्येन विचटनरूपेण स्वस्मिन्नध्यारोपितेन धातुवाच्यम्, तदध्यासात्=अधि-श्रयणे विचटनाध्यासाद् अधिश्रयणं तेन रूपेण पचिः=पाकः । सिद्धसाध्ययोर्हि निष्पन्नानिष्पन्नयोरधिश्रयणविचटनयोरैकात्म्यापत्तौ=तादात्म्यापत्तौ पचत्यादि-शब्दप्रयोगः ।

एवं तर्हि विचटनस्य नियतकालवृत्तित्वात् पूर्वापरीभावः कथम् । उच्यते—पाकशब्दवाच्यं विचटनं यद्यपि स्वरूपभेदाभावाद न पूर्वं न परम्, तथापि गुण-क्रियासु=अधिश्रयणादिषु तदर्थक्रियासु, तद्रूपारोपात्=विचटनत्वारोपाद् गुण-क्रियाणाञ्च पौर्वापर्याद् अधिष्ठानधर्मेण पौर्वापर्येण अध्यस्तं विचटनमपि पूर्वापरी-भूतमित्युच्यते ।

अन्ये तु अधिश्रयणादिरूपं विचटनस्यैव रूपमिति प्रतिपन्नाः । विचटन-मेवाधिश्रयणादिरूपैरनेकरूपमिति तेषां प्रतिपत्तिः । न रूपशून्यान् अधिश्रयणादीन् प्रत्यस्तविचटनरूपान्=अध्यस्तविचटनरूपान् प्रतिपन्नाः । अधिश्रयणादिषु रूप-रहितेषु न रूपरहितस्य विचटनस्याध्याससम्भवः, रूपवत्येवाधिष्ठाने रूपवत एवा-ध्याससम्भवस्य रज्जुसर्पशुक्तिरूप्याद्यध्यासस्थलेषु दृष्टत्वात् ।

पूर्वत्र मतेऽधिश्रयणादिषु विचटनरूपस्याध्यासात् पचिप्रत्यय उक्तः। सम्प्रति तु विचटनस्यैवानेकरूपत्वादिति मतविकल्पः।

अत्र चायमाशयः। शब्दप्रमाणका वयम्। शब्दाच्चाधिश्रयणादयः पाकात्मनावगम्यन्ते। न च पचतिप्रत्ययस्य सर्वावस्थासु विशेषमुपलभामहे, येनाधिश्रयणादिषु पचतिरूपाध्यासाद् गौणः स आश्रीयते। तस्मादनेकरूपं विचटनमेव शब्दार्थं इति केचित्।

यथा तु कारिकार्थः, तथा विचटनमेव मुख्यं पचिरूपं पूर्वापरानुसन्धानेन समाश्रितक्रमं साध्यमानावस्थम्। तत्समर्थानां तु व्यापाराणामुपचरितं तत् क्रियात्वम्। तथा च "अथ कः पचेः प्रधानोऽर्थो याऽसौ तण्डुलानां विक्लित्तिः" (म० भा०) इत्युक्तम्। अत्रैव च कर्मकर्तृविषये धातुर्वर्तते पच्यते ओदनः स्वयमेवेति।

---

पूर्वस्मिन् मतेऽधिश्रयणादिषु विचटनरूपस्याध्यासात् पचिप्रत्ययः=पचतीति प्रत्यय उक्तः। इदानीं तु विचटनस्यैवाधिश्रयणाद्यनेकरूपत्त्वात् तेषु पचतीति प्रत्यय उक्त इति मतविकल्पः।

अत्र चायमाशयः—वयं वैयाकरणाः शब्दप्रमाणकाः। यच्छब्द आह तदस्माकं प्रमाणम्। पचति-शब्दात् चाधिश्रयणकाले किं करोति इति प्रश्ने पचतीति प्रतिवचनदर्शनात्। न पचतिप्रत्ययस्य सर्वावस्थासु=अधिश्रयणाद्यवस्थासु विचटनावस्थायाश्च विशेषमुपलभामहे, येनाधिश्रयणादिषु पचतिरूपाध्यासाद्=विचटनत्वारोपात् गौणः सः=अधिश्रयणादिषु पचतिशब्दप्रयोग आश्रीयेत। तस्मादनेकरूपम्=अधिश्रयणादिरूपं विचटनमेव पचिधात्वर्थं इति केचित्।

वयं तु मन्यामहे—नाधिश्रयणादिरूपं विचटनम्। विचटनं हि तण्डुलावयवानां विभागः, अधिश्रयणं तु स्थाल्या जलतण्डुलपूर्णायाश्चुल्ल्युपरिधारिणमिति भेदात्। किञ्च अधिश्रयणस्य विचटनरूपत्वेऽपि नाधिश्रयणानन्तरं फलनिष्पत्तिरिति न तस्य क्रियात्वम्। अतोऽधिश्रयणादिषु विचटनत्वारोप इति पूर्वमतमेव ज्याय इति।

किञ्च, यथा तु प्रकृतकारिकार्थः, तथा विचटनमेव मुख्यं पचिरूपं बुद्धौ पूर्वापरव्यापारानुसन्धानेन समाश्रितक्रमं साध्यमानावस्थम्। तत् समर्थानां=विचटनजनकानां तु व्यापाराणामधिश्रयणादीनामुपचरितम्=गौणं, तत्=पचिरूपं क्रियात्वम्। तथा च=तथैव च, 'अथ कः पचेः प्रधानोऽर्थः, यासौ तण्डुलानां विक्लित्तिः' इत्युक्तम्। अत्र च विक्लित्तिरूपस्य फलस्योद्देश्यत्वेन प्राधान्यमभिप्रेतम्। शाब्दं प्राधान्यं तु तदर्थानामधिश्रयणादिव्यापाराणामेव। पच्यते ओदनः स्वयमेवेति कर्मकर्तृविषये तत्रैव च=विक्लित्तावेव च पचिधातुर्वर्तते।

तादर्थ्याच्च गुणक्रियाणां प्रधानक्रियाख्योपचारे द्व्यर्थः पचिर्भवति।

अधिश्रयणोदकासेचनतण्डुलावपनैधोपकर्षणक्रियाः प्रधानस्य कर्तुः पाक इति चोच्यते। यत् "तदभिसन्धिपूर्वकं प्रेषणमध्येषणं वा युक्तम्, यत् सर्वः पच्यर्थः स्यादि"ति च भाष्ये।

कर्तृव्यापारस्य पचेरुपलक्षणार्थत्वात् सर्वधात्वर्थविषयस्याभिधानम्, तादर्थ्यादेव धातुभिरस्मिन् दर्शने युज्यते। सर्वत्रैव हि कर्तृभावनोपसर्जनमभिदधति धातवः।

तथा च कर्तृस्थक्रियाणामपि बुध्यते द्वेष्टि इच्छतीत्यादौ बोधनं निर्वर्तयतीत्याद्यर्थः। कर्तृव्यापारश्चात्र यथायथं करणप्रणिधानादयः। अस्तीत्यत्रात्मानं बिभर्तीत्यर्थः।

तथा चात्मभरणार्था व्यापारास्तादर्थ्यादभिधीयन्त एव।

एवञ्च कृत्वा द्व्यर्थः पचिरिति पचिग्रहणं सर्वधातूपलक्षणार्थं वेदितव्यम्, उदाहरणमात्रत्वादस्य। तदेवं प्रत्येकं व्यापारभेदाः समारोपितसमूहरूपाः

---

तादर्थ्याच्च = विक्लित्त्यर्थत्वाच्च गुणक्रियाणामधिश्रयणादीनां विक्लित्तिरूपप्रधानक्रियाख्योपचारे = तादृशप्रधानक्रियारूपोपचारे द्व्यर्थः पचिर्भवति। फलं व्यापारश्च धात्वर्थ इत्येवं द्व्यर्थत्वमुपपादनीयम्।

प्रधानस्य कर्तुरधिश्रयणोदकासेचनतण्डुलावपनैधोऽपकर्षणक्रियाः पाक इति चोच्यते। 'यत् तदभिसन्धिपूर्वकं = पच्यर्थाधिश्रयणादिव्यापाराभिप्रायपूर्वकम्, युक्तम् = समुचितं प्रेषणमध्येषणं वा, तत् सर्वं पच्यर्थः स्यादि'ति च भाष्ये।

अत्र च दर्शने पचेः कर्तृव्यापारस्योपलक्षणार्थत्वात् तादर्थ्यादेव = कर्तृव्यापारस्य फलार्थत्वादेव धातुभिः सर्वधात्वर्थविषयस्य कर्तृव्यापारस्याभिधानं युज्यते। तेन सर्वेऽपि धातवः फलव्यापाराभ्यां द्व्यर्था इत्यायातम्। सर्वत्रैव हि कर्तृभावनायामुपसर्जनीभूतं फलरूपमर्थमभिदधति धातवः।

तथा च कर्तृस्थक्रियाणामपि धातूनां बुध्यते, द्वेष्टि, इच्छति इत्यादौ यथायथं बोधनम्, द्वेषम्, इच्छाञ्च निर्वर्तयतीत्याद्यर्थः। तेन तेषामपि फलव्यापाराभ्यां द्व्यर्थत्वम्। कर्तृव्यापाराश्चात्र यथायथं करणप्रणिधानादयः = इन्द्रियमनसां प्रणिधानादयः। अस्तीत्यत्रात्मानं बिभर्तीत्यर्थः।

तथा चात्मभरणरूपफलार्थाः कर्तृव्यापारास्तादर्थ्यात् = फलार्थत्वाद् अभिधीयन्त एवात्रापि। एवञ्चास्यापि द्व्यर्थत्वं सिद्धम्।

एवञ्च कृत्वा द्व्यर्थः पचिरिति पचिग्रहणं सर्वधातूनामुपलक्षणार्थं वेदितव्यम्। धातूनां द्व्यर्थत्वे पचेरुदाहरणमात्रत्वात्। तदेवं प्रत्येकं व्यापारभेदाः स्वस्मिन् समारोपितबौद्धव्यापारसमूहरूपाः, समारोपितानन्तरक्षणभेदा वा = समारोपितोत्तरक्षणिकव्यापारभेदा वा क्रमिकाः = समारोपितक्रमवन्तः क्रियारूपाः, क्रियारूपत्वाच्च

समारोपितानन्तरक्षणभेदा वा क्रमिकाः क्रियारूपत्वाच्च व्यवहारस्य समानसङ्केताः समारोपं प्रतिपद्यन्त एव ।

फलप्रसवयोग्योऽन्त्यो भागः क्रिया । तदर्थास्त्वन्ये व्यापारा इति दर्शनभेदेनोपपादितम् ॥ १५ ॥

इदानीं सत्तायाः क्रमरूपाध्यासेऽपि साध्यता कथमित्याह—

**सत्सु प्रत्ययरूपोऽसौ भावो यावन्न जायते ।**
**तावत् परेषां रूपेण साध्यः सन्नभिधीयते ॥१६॥**

सत्सु हेतुषु प्रत्ययरूपं हेतुस्वभावोऽसौ पदार्थः कारणात्मना सत्त्वाद् यावन्न जायते कार्यात्मना सत्त्वं न प्रतिपद्यते, प्रत्ययरूप आविर्भूतस्वभावो वा यावन्न सम्पद्यते, तावदत्रान्तराले परेषां हेतूनां रूपेणोपलक्षितः सिद्धत्वात्

---

समानसङ्केताः=व्यापारसमूहस्य क्रियात्वबोधने=क्रियात्वव्यवहारे च यथा धातूनां सङ्केतस्तथा स्वस्य क्रियात्वबोधने क्रियात्वव्यवहारे च यो धातूनां सङ्केतस्तद्गोचराः सन्तः क्रियात्वव्यवहारस्य स्वस्मिन् समारोपं प्रतिपद्यन्त एव ।

फलप्रसवयोग्यो व्यापारसमूहस्यान्त्यो भागः क्रियारूपो मुख्यः, तदर्थास्त्वन्ये व्यापारा इति तेषु साक्षात् फलप्रसवयोग्यताया अभावाद् गौणं क्रियात्वमिति दर्शनभेदेनोपपादितमस्यां कारिकायामिति ॥१५॥

इदानीं सत्तायामक्रमस्वभावायां समूहगतस्य भागगतस्य वा क्रमरूपस्याध्यासेऽपि सिद्धस्वभावायास्तस्याः साध्यत्वं कथमित्याशङ्क्याह— सत्सु प्रत्ययरूप इति ।

अस्यार्थः —प्रत्ययरूपः=सिद्धतया हेतुस्वभावोऽसौ भावः=पदार्थः, सत्सु स्वहेतुषु यावन्न जायते, कारणात्मना सत्त्वेऽपि यावत् कार्यात्मना सत्त्वं न प्रतिपद्यते । यद्वा असौ भावः=कारणात्मना प्रागवस्थितो भावः, अदःशब्दस्य बुद्धिस्थपरामर्शकत्वात् । सत्सु हेतुषु प्रत्ययरूपः=ज्ञायमानस्वरूप आविर्भूतस्वरूपो यावन्न जायते, तावत् अत्रान्तराले परेषां=हेतूनां रूपेण साधनत्वेनोपलक्षितः सिद्धत्वाज्जनेः कर्तृभावमनुभवन्, स्वात्मना साध्यः सन्=भवन् आख्यातेनाभिधीयते । सिद्धत्वसाध्यत्वरूपावस्थाद्वयं प्राप्य पूर्वापरीभूतः साध्यमानावस्थ आख्यातेनाभिधीयत इति निष्कर्षः ।

अयं भावः — उत्पत्तेः प्राक् कारणात्मना सत्त्वात् प्रत्ययरूपो हेतुस्वभावो असौ पदार्थः=जनेः कर्तृपदार्थः, सत्सु हेतुषु यावन्न जायते=कार्यात्मना सत्त्वं न प्रतिपद्यते, यद्वा, उत्पत्तेः प्राक् कारणात्मना सन्नसौ भावो जनिकर्तृपदार्थः सत्सु हेतुषु यावत् प्रत्ययरूप आविर्भूतस्वरूपो न संपद्यते तावत्=अत्रान्तराले परेषां हेतूनां रूपेण साधनत्वेनोपलक्षित उत्पत्तेः प्राक् सिद्धत्वात् कारणात्मना कर्तृभावमनुभवन्

कर्तृभावमनुभवन् स्वात्मना साध्यो भवन्नाख्यातेन पूर्वापरीभूताः साध्यमानावस्थोऽभिधीयते समुद्युक्तकारणव्यापारः प्रतिष्ठामासादयंस्तिङन्तगोचरः पदार्थं इत्यर्थः।

तत्र च पूर्वभागे जायते शब्दगोचरः। यथा वक्ष्यति—

"पूर्वभावस्तु यज्जातात् तज्जन्मेत्यपदिश्यते"। (वा० प० ३, क्रिया० २८) इति। उत्तरभागोऽस्तिशब्दगोचरः। सत्ताप्रतिलम्भाभिमुख्यं हि जन्म। तत्र व्यापृतं व्यापारावसाने सत्तां समासाद्यास्तीति पूर्वव्यापाराध्यारोपेणाभिधीयते। अस्त्यात्मानं बिभर्ति सत्तां भावयतीति यावत्। एवं समाश्रिते साधनव्यापारे साध्यता॥ १६॥

तदभावे पुनः—

सिद्धे तु साधनाकाङ्क्षा कृतार्थत्वान्निवर्तते।
न क्रियावाचिनां तस्मात् प्रयोगस्तत्र विद्यते॥१७॥

---

स्वात्मना साध्यो भवन् एवं सिद्धत्वसाध्यत्वरूपमवस्थाद्वयं प्राप्य पूर्वापरीभूतः साध्यमानावस्थ आख्यातेनाभिधीयते। समुद्युक्तकारणव्यापारैः—उत्पत्तौ प्रतिष्ठायां स्थितौ च सम्यगुद्योगवन्ति यानि कारणानि तेषां व्यापारैः, प्रतिष्ठामासादयन् पदार्थः जायते अस्ति इति तिङन्तद्वयगोचरः।

तत्र च उत्पत्तेः पूर्वकालिको भागो जायते शब्दगोचरः। यथा वक्ष्यति—

"पूर्वभागस्तु यज्जातात् तज्जन्मेत्यपदिश्यते।" (वा० प० ३, क्रि० २८) इति।

अस्यार्थः—यत्तु जातात् जनिमनुभूय स्थितात्पदार्थात् पूर्वभागस्तज्जन्मेत्यपदिश्यते—व्यवह्रियत इति। उत्तरभागो अस्ति शब्दगोचरः। कारणात्मना प्राक् सत एव भावस्य कार्यात्मना सत्तायाः प्रतिलम्भे प्राप्तौ यदाभिमुख्यं तद् हि जन्म। तत्र व्यापृतं जायमानं वस्तु स्वव्यापारावसाने सत्तां समासाद्य अस्तीति पूर्वव्यापाराध्यारोपेण=जननानुकूलस्य पूर्वस्य स्वव्यापारस्य सत्तायामध्यारोपेणाभिधीयते।

तथा हि—अस्तीत्यस्य आत्मानं बिभर्ति स्वसत्तां भावयतीति यावत्। इयञ्च भावनाऽध्यारोपितपूर्वव्यापाररूपा। एवं साधनव्यापारे समाश्रिते—साधनरूपस्य कर्तृरूपस्य स्वस्य व्यापारे जन्मभवनाख्ये सत्तायामध्यारोपेण समाश्रिते, सिद्धस्वभावाया अपि सत्तायाः साध्यता उपपद्यत इति॥१६॥

प्रागुपपादितस्य साध्यत्वस्याभावे तु आह—सिद्धे तु इति।

अस्यार्थः—सिद्धे तु परिनिष्पन्नरूपे तु भावे साधनाकाङ्क्षा निवर्तते, कृतार्थत्वात् साधनव्यापारफलस्य सत्ताप्रतिलम्भात्मधारणादेः प्रागेव निष्पन्नत्वेन साधनव्यापारसाधनफलाभावात्। तस्मादेव हेतोस्तत्र परिनिष्पन्नरूपे भावे क्रियावाचिनां जायते, अस्तीत्यादि-तिङन्तपदानां प्रयोगो न विद्यत इति।

परिसमाप्तरूपे भावे फलाभावान्निरपेक्षकारणव्यापारे परिगृहीतक्रमार्थवचनानि तिङन्तपदानि प्रयोगं नासादयन्ति ।

तथा च तत्र भाव इति सिद्धार्थवाचकं नामपदं प्रवर्तत इत्युक्तम् ।। १७ ।।

तदेवं सर्वैव क्रिया साध्यस्वभावा क्रमवतीति निगमयितुमाह--

स चापूर्वापरीभूत एकत्वादक्रमात्मकः ।
पूर्वापराणां धर्मेण तदर्थेनानुगम्यते ।।१८।।

सोऽनन्तरप्रतिपादितसतत्त्वः क्रियाख्योऽर्थ एकत्वात् पूर्वापरभावरहितोऽत एव पूर्वापरभागगतानुपूर्वीरहितोऽपि तद्व्यतिरिक्ततदर्थपूर्वापरक्षणगतानुपूर्वीसमारोपादाश्रितक्रमरूपं क्रियालक्षणं पुष्णातीत्यर्थः। तदर्थेनेति तादर्थ्याद्

---

अयं भावः —परिसमाप्तरूपे=परिनिष्पन्नरूपे भावे फलाभावात्=सत्ताप्रतिलम्भादेः फलस्य साध्याभावात्, निरपेक्ष्यकारणव्यापारे=कारणव्यापारापेक्षाशून्ये, स्वयमपि अपरिगृहीतव्यापारे=व्यापाराभाववति तूष्णीं स्थिते, परिगृहीतक्रमार्थवचनानि=समाश्रितक्रमं क्रियारूपमभिदधति जायते-अस्तीत्यादीनि तिङन्तपदानीति प्रयोगं नासादयन्ति=न प्रयुज्यन्ते ।

तथा च तत्र भाव इति सिद्धार्थवाचकं नामपदं प्रयुज्यते, न तु साध्यार्थवाचकं जायते-अस्तीत्यादितिङन्तपदं तत्र प्रयुज्यते इत्युक्तप्रायमत्र प्राक् चेति ।।१७।।

तदेवं सर्वैव क्रिया=पच्यादिका सत्तादिका च साध्यस्वभावा तत्त्वादेव क्रमवती चेति उपसंहर्तुमाह--स चापूर्वापरीभूत इति ।

अस्यार्थः —स चाव्यवहितप्रागुदितस्वभावः स्वसमनन्तरभाविफलजनकः क्रियारूपोऽर्थ एकत्वाद् अपूर्वापरीभूतः पौर्वापर्यशून्यः, अत एवाक्रमात्मकोऽपि तदर्थेन मुख्यक्रियापूर्वापरीभूतभागवर्तिना पूर्वापराणां धर्मेण पौर्वापर्यरूपेण क्रमेण अनुगम्यते अनुस्त्रियते । तत्र तदर्थपूर्वापरभागवृत्तिक्रमरूपधर्माध्यारोपात् क्रमवान् साध्यस्वभावश्च स भवतीति फलितम् ।

अयं भावः --सोऽनन्तरप्रतिपादितसतत्त्वः=अव्यवहितप्रागुक्तस्वरूपः स्वसमनन्तरफलजनकः क्रियाख्यो अर्थः पच्यादौ चरमव्यापाररूपः, सत्तादौ च समारोपितचरमव्यापार एकत्वात् पूर्वापरभावरहितोऽत एव पूर्वापरभागगतानुपूर्वीरूपक्रमरहितोऽपि तद् व्यतिरिक्ततदर्थपूर्वापरक्षणगतानुपूर्वीसमारोपात् तद्व्यतिरिक्ताः=तादृशक्रियारूपव्यापारव्यतिरिक्ता, तदर्थाः=तादृशप्रधानक्रियार्थाः, ये पूर्वापरक्षणाः=क्षणिकाः पूर्वापरभागाः, तद्गतानुपूर्वीरूपक्रमसमारोपात्=आश्रितक्रमरूपं क्रियालक्षणं पुष्णाति । तदर्थेनेति तादर्थ्याद् गुणक्रियारूपाणां समनन्तरफलजनकप्रधानक्रियाव्यतिरिक्तव्यापाराणां प्रधानक्रियार्थत्वाद् गुणक्रियागतो धर्मः पौर्वापर्यरूपः क्रमः प्रधानक्रियायां प्रागुक्तायामुपचर्यते । तेनाक्रमाऽपि सा क्रमवती, सिद्धा

गुणक्रियागतो धर्मः प्रधानक्रियायामुपचर्यत इत्याह ॥ १८ ॥

यतः फलैक्यादभेदाध्यवसायोऽत्रेत्याह—

असन्निवर्तते तस्माद् यत् सत् तदुपलभ्यते ।

तयोः सदसतोश्चासावात्मैक इव गृह्यते ॥१९॥

एकफलोद्देशेन प्रवृत्तानां क्रमवतां क्षणानां पूर्वो व्यपगतोऽसन्, वर्तमानश्चोपलभ्यते क्षणः सन्निति। तयोर्भिन्नयोरप्यैक्यमध्यवसाया पूर्वापरापि पूर्वापरीभूता क्रमवती क्रिया व्यवस्थाप्यते ॥ १९ ॥

एवं तावत् "पदार्थानामपोद्धारे जातिर्वा व्यक्तिरेव वा" ( वा०प० ३, जा० २) इति व्यक्तिवादिमतेन क्रियालक्षणोऽपोद्धारपदार्थो निर्णीतः। इदानीं जातिवादिमतेनाह–

जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्तिनीम् ।

असाध्या व्यक्तिरूपेण सा साध्येवोपलभ्यते ॥२०॥

---

अपि सा सत्तादिरूपा अस्तीत्यादौ साध्यत्वेन प्रतीयत इत्याहानया कारिकया हरिरिति ॥१८॥

यत एकफलोद्देशेन प्रवृत्तानां मुख्यक्रियार्थानां व्यापाराणां प्रधानक्रियाकालेऽसतां सतः प्रधानक्रियारूपस्य स्वसमनन्तरभाविफलजनकस्य व्यापारस्य च फलैक्यादभेदाध्यारोपोऽत्र, तस्मात् अक्रमाया अपि क्रियायाः क्रमवत्त्वसाध्यत्वयोरुपपत्तिरित्याह— असन्निवर्तत इति।

अस्यार्थः —यतः फलैक्यादभेदाध्यवसायोऽत्र तस्माद् अस्य चतुर्थपादार्थे अन्वयः। यद् निवर्तते तदसत्, यदुपलभ्यते तत्सत्, तयोश्च सदसतोरसौ आत्मा अध्यारोपितैक्य आत्मा एक इव गृह्यते प्रतीयत इति।

अयं भावः —एकफलोद्देशेन प्रवृत्तानां क्रमवतां क्षणिकानां व्यापाराणां मध्ये यः पूर्वो व्यापारः प्रधानक्रियार्थः स निवृत्तोऽत एवासन्, यश्च व्यापारो वर्तमान उपलभ्यते स क्षणिको व्यापारः चरमः फलानुकूलः सन्निति। तयोर्भिन्नयोरपि पूर्वापरयोर्व्यापारयोरैक्यमध्यवसाय अध्यस्य अपूर्वपरापि पूर्वापरीभूता, अत एव क्रमवती क्रिया व्यवस्थास्यते शास्त्र इति ॥१९॥

"पदार्थानामपोद्धारे जातिर्वा व्यक्तिरेव वा"। (वा० प० ३, जा० २) इति।

अस्यार्थः —वाक्यार्थात् पदार्थानामपोद्धारे क्रियमाणे जातिर्वा पदार्थो व्यक्तिरेव वा पदार्थ इति। एवं तावद् व्यक्तिवादिमतेन क्रियारूपोऽपोद्धारपदार्थो निर्णीतः। इदानीं जातिवादिमतेनाह—जातिमन्ये इति।

अस्यार्थः —अन्ये केचन वादिनः अनेकक्रियाव्यक्तिवर्तिनीमपरां परां वा पाकत्वादिकां सत्तां वा जातिं क्रियामाहुः।

सा जातिः स्वेन रूपेण नित्यतयाऽसाध्याऽपि स्वाश्रयक्रियाव्यक्तिरूपे

सर्वत्र प्रत्ययानुवृत्तिप्रमाणसाधिता जातिरिति पचतीति प्रत्ययस्य कर्तृकर्मादिभेदेऽप्यनुवृत्तेः क्रियाव्यक्तिसमवेता जातिरवश्याभ्युपगन्तव्या। सैव च धातुवाच्या। स्फोटवच्चास्या असमसमयभाविभिरपि क्षणैरभिव्यक्तिः।

अत एवानेकव्यक्तिवर्तिनीमित्याह। जातित्वादेवानेकव्यक्तिवर्तित्वे लब्धे सदसद्व्यक्तिव्यङ्ग्यत्वमावेदयितुमिदमुक्तम्। भ्रमणत्वादिजातिवदुपव्यञ्जनावृत्तिबलेन क्रियाजातिरभिव्यक्तिमासादयति।

तथा च स्वतो नित्यत्वेऽप्यस्याः स्वाश्रयमुखेन साध्यत्वं क्रमवत्वं च क्रियालक्षणमवतिष्ठते। अतश्च स्वाश्रयद्वारेणैवास्याः साधनाकाङ्क्षा॥ २०॥

यथा व्यक्तिदर्शने "अनन्तरं फलं यस्याः" (वा० प० ३, क्रिया० १५) इति मतान्तरमुपदर्शितम्, तथात्रापि जातिदर्शने प्राह—

अन्ते या वा क्रियाभागे जातिः सैव क्रिया स्मृता।
सा व्यक्तेरनुनिष्पादे जायमानेव गम्यते॥२१॥

---

स्वस्मिन्नध्यारोपितेन साध्येव रूपलभ्यते प्रतीयत इति।

अयं भावः—व्यक्तिभेदेऽपि घट इत्यादिरूपो यः सर्वत्रैकविधः प्रत्ययस्तदनुवृत्तिरूपेण प्रमाणेन साधिता घटत्वादिका सत्ता वा अपरा वा जातिरिति कर्तृकर्मादिभेदेऽपि पचतीति प्रत्ययस्यानुवृत्तेः क्रियाव्यक्तिसमवेता जातिरवश्यमभ्युपेतव्या।

सैव च धातुवाच्या। यथा स्फोटस्यासमसमयभाविभिर्वर्णैरभिव्यक्तिः, तथा क्रियागतजातेरपि असमसमयभाविभिः क्षणिकैर्व्यापारैरभिव्यक्तिः।

अत एवानेकव्यक्तिवर्तिनीमित्याह। जातित्वादेवानेकव्यक्तिवर्त्तित्वे लब्धे सदसद्व्यक्तिव्यङ्ग्यत्वमावेदयितुमिदमुक्तम्। भ्रमणत्वादिजातिर्यथा क्षणिकेषु सदसत्सु व्यापारेषु वर्तमाना स्वाश्रयगतोपव्यञ्जनावृत्तिबलेनाऽभिव्यक्तिमासादयति। एवं पाकत्वादिरूपा क्रियाजातिरपि क्षणिकेषु सदसत्सु व्यापारेषु वर्तमाना स्वाश्रयगतोपव्यञ्जनावृत्तिबलेनाभिव्यक्तिमासादयति।

तथा च जातेः स्वतो नित्यत्वेऽपि स्वाश्रयक्रियाव्यक्तिमुखेन तस्याः साध्यत्वं क्रमवत्त्वञ्च क्रियालक्षणमवतिष्ठते।

अतश्च जातिरूपायाः क्रियायाः स्वाश्रयव्यक्तिद्वारेणैव कारकाकाङ्क्षा, न स्वत इत्यवधेयमिति॥२०।

यथा 'व्यक्तिः पदार्थः' इति वादिमते 'अनन्तरं फलं यस्या' इति मतान्तरमुपदर्शितं तथात्र 'जातिः पदार्थः' इति वादिमतेऽपि प्राह—अन्ते या वा इति।

अस्यार्थः—वा अथवा, अन्ते चरमे, क्रियाभागे या जातिः सैव क्रिया इति व्याकरणे स्मृता। सा च क्रियारूपा जातिः, स्वाश्रयव्यक्तेः साधनैर्निष्पादे सति अनु=पश्चात् जायमानेऽवगम्यते=प्रतीयत इति।

यस्याः क्रियाव्यक्तेरनन्तरं फलं निवर्तते, तत्र समवेता या जातिः सैव क्रिया। पूर्वास्तु तादर्थ्यात् क्रिया इति पूर्वानुसारेण गम्यमानत्वात् पुनरिह नोक्तम्। स्वाश्रयनिष्पादनद्वारेण चास्या अपि साधनयोगः साध्यत्वं च ॥ २१ ॥

एवमपरा जातिर्दर्शनभेदेन क्रियेत्युक्तम्। इदानीं परा सत्ताख्या महासामान्यरूपा जातिः क्रियेत्युपपादयति—

स्वव्यापारविशिष्टानां सत्ता वा कर्तृकर्मणाम्।
क्रिया व्यापारभेदेषु सत्ता वा समवायिनी ॥२२॥

"सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः" ॥
( वा० प० ३, जा० ३३ )

इत्युक्तत्वात् क्रियाजातित्वं सम्बन्धिभेदोपधानेन सत्तायाः समर्थयितुं कर्तृकर्मसमवेतव्यापारावच्छिन्ना सत्ता क्रिया जातिरित्याह। व्यतिरेकिणोऽपि

---

अयं भावः—यस्याः क्रियाव्यक्तेरनन्तरं फलं निवर्तते=निष्पाद्यते सा क्रिया। तस्याः पूर्वे तु व्यापारास्तादर्थ्यात्=चरमक्रियार्थत्वात्, क्रिया इति पूर्वग्रन्थेन प्रतीतत्वात् पुनरिह नोक्तम्। स्वाश्रयक्रियाव्यक्तिनिष्पादनद्वारेण च क्रियाजातेरपि साधनयोगः साध्यत्वञ्च, स्वरूपतस्तु जातेः सिद्धत्वं नित्यत्वञ्चेति ॥२१॥

एवमपरा जातिः पाकत्वादिका जातिवादिमतेन क्रियेत्युक्तम्। इदानीमपरा जातिः सत्ताख्या महासामान्यरूपा क्रियेत्युपपादयति—स्वव्यापारविशिष्टानामिति।

अस्यार्थः—वा अथवा अपरा जातिः पाकत्वादिका क्रिया इति प्रागुक्तपक्षाऽपेक्षयाऽयं विकल्पः। स्वव्यापारविशिष्टानां कर्तृकर्मणां सत्ता क्रिया। वा=अथवा, स्वव्यापारभेदेषु कर्तृकर्मणां व्यापारविशेषेषु, समवायिनी समवेता सत्ता क्रिया। तथा च स्वव्यापारविशिष्टानां कर्तृकर्मणां सत्ता क्रिया। अथवा कर्तृकर्मव्यापाराणामेव सत्ता क्रियेत्युक्तं भवति।

अयं भावः—

सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥
( वा० प० ३, जाति० ३३ )

अस्यार्थः—परब्रह्मरूपा व्यापकत्वाद् महासामान्यरूपा एकाऽपि तत्तद्व्यक्तिरूपस्वसम्बन्धिभेदाद् भिद्यमाना गोत्वादिमद्वाच्या जातिरित्युच्यते, तस्यां जातिरूपायां सत्तायां सर्वे शब्दा नामशब्दा धातुशब्दा वा व्यवस्थिता वृत्तिमन्त इति। इत्युक्तत्वात् स्वाश्रयकर्तृकर्मव्यक्तिरूपसम्बन्धिभेदं सत्ताभेदार्थमुपाधीकृत्य

हि भावाः सत्ताया भेदोपाधय इत्युक्तं कर्तृकर्मणामिति। तत्रैव क्रियासमवायात् तेषु च व्यापाराविष्टेषु क्रियाव्यवहारात् तत्समवेतैव क्रियोचिता। व्यापारसमवेता वा सत्ता स्वाश्रयोपहितभेदा अस्तु क्रिया। किमनेन व्यवधानेन कर्तृकर्मगता सत्तेति ॥ २२ ॥

अत्रैव सत्ताजातिदर्शने मतान्तरमाह—

अन्त्ये वात्मनि या सत्ता सा क्रिया कैश्चिदिष्यते।

भाव एव हि धात्वर्थ इत्यविच्छिन्न आगमः ॥२३॥

यदनन्तरं फलं तत्र व्यापारभागे या सत्ता सा क्रिया, पूर्वास्तु तादर्थ्यात्। व्यापारविशिष्टा चेत् सत्ता क्रिया अलमनया, व्यापार एवास्तु क्रियेत्याशङ्क्याऽऽगमेनैतदभ्युपगमयति भाव एव हीत्यादिना। "षड् भावविकारा भवन्तीति ह स्माह वार्ष्यायणिः" (निरु० १।२।८) इति भाष्यकारेणैवागमोऽनुसृतः। तथा च—

"तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते"। (वा० प० ३, जाति० ३४) इति सत्तैव भावशब्दवाच्या गुरवः क्रियेति मन्यन्ते। सैव हि सम्बन्धभेदोपधान-

---

सत्तायाः क्रियाजातित्वं समर्थयितुं कर्तृकर्मसमवेतव्यापारैः सामानाधिकरण्येनावच्छिन्ना सत्ता क्रियाजातिरित्याह। व्यतिरेकिणो=भेदवन्तो भावा अपि हि सत्ताया भेदोपाधय इत्युक्तं कर्तृकर्मणामिति। तत्रैव=कर्तृकर्मस्वेव क्रियासमवायात् तेषु=कर्तृकर्मसु च व्यापाराविष्टेषु सत्सु तद्व्यापारेषु क्रियाव्यवहारात् तत्समवेतैव=कर्तृकर्मसमवेतैव सत्ता जातिरूपा क्रियोचिता। अथवा कर्तृकर्मव्यापारसमवेता सत्ता स्वाश्रयोपहितभेदा=स्वाश्रयव्यक्त्युपाधिकभेदा अस्तु क्रिया जातिरूपा किमनेन कर्तृकर्मगता सत्तेति व्यवधाने=व्यवहितोक्त्या व्यापारेषु हि साक्षात् सत्तासम्बन्धः, तद्द्वारा तु कर्तृकर्मणोरित्यस्ति व्यवधानमिति ॥२२॥

अत्रैव सत्ताजातिदर्शने मतान्तरमाह—अन्त्ये वात्मनीति।

अस्यार्थः—वा=अथवा, अन्त्ये=चरमे आत्मनि व्यापारभागे या सत्ता सा क्रिया कैश्चिदिष्यते। पूर्वास्तु तादर्थ्यात् क्रिया इत्युक्तं प्राक्।

ननु व्यापार एवास्तु क्रिया, किमनया सत्तारूपया क्रियया ऽप्रसिद्धयेत्याशङ्क्याह—भाव एवेत्यादि। हि यतः, भाव एव सत्तैव सर्वधातूनामर्थः।

क्रियाभेदस्तु व्यापाररूपसम्बन्धिभेदेन सत्ताभेदादित्यविच्छिन्नः=अविच्छेदेनाचार्यपरम्पराप्राप्तः, आगमः सम्प्रदाय इति।

अयं भावः—यदनन्तरं फलं जायते तस्मिन् व्यापारभागे या सत्ता सा क्रिया। ततः पूर्वे व्यापारास्तु तादर्थ्यात् चरमव्यापारार्थत्वात् क्रियाः।

ननु व्यापारविशिष्टा चेत् सत्ता क्रिया, अलमनया क्रियया, लाघवात् प्रसिद्धेश्च व्यापार एवास्तु क्रियेत्याशङ्क्याऽऽगमेनैतदभ्युपगमयति=आगमेनैतन्मतं

मात्रेण भिद्यमाना शब्दार्थवैचित्र्यमुपपादयति। तथा हि--सम्बन्धिनोऽप्यस्यास्तत्त्वतः स्वशक्तिविस्फारा एवेति सत्ताद्वैतवादाभिप्रायेणेदं निगमयति "सत्ता स्वशक्तियोगेन" ( वा० प० ३, क्रिया० ३५ ) इत्यादि ॥ २३ ॥

इदानीं बुद्धिः शब्दार्थ इति बौद्धपक्षे क्रियाव्यवस्थामाह—

बुद्धिं तज्जातिमन्ये तु बुद्धिसत्तामथापरे ।
प्रत्यस्तरूपां भावेषु क्रियेति प्रतिजानते ॥२४॥

बुद्धिरिति तत्प्रतिभास्याकारोऽत्र विवक्षितः। तस्यैव हि भावेष्वध्यारोपो

---

स्वीकारयति। भाव एव हि इत्यादिना। "षड् भावविकारा भवन्ति इति ह स्माह वार्ष्यायणिः" इति भाष्यकारेणैवाऽऽगमोऽनुसृतः। षड् भावविकारा इत्यादेरयमर्थः। जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, नश्यति इति षड्भावस्य घटादेर्विकारा भवन्ति इति ह इत्यैतिह्ये आह स्म--उवाच, भगवान् वार्ष्यायणिः। वृषस्य एतन्नाम्नो युवाऽपत्यं पुमानिति। तथा च 'तां प्रातिपदिकार्थं च धात्वर्थञ्च प्रचक्षते' इत्युक्त्यनुसारेण सत्तैव भावशब्दवाच्या क्रियेति गुरवः=प्रभाकरा मन्यन्ते। सैव हि=सत्तैव हि अभिन्नाऽपि सम्बन्धिभेदोपधानमात्रेण=स्वाश्रयव्यक्तिरूपसम्बन्धिभेदमुपाधीकृत्यैव भिद्यमाना शब्दार्थवैचित्र्यम्=नामार्थानां धात्वर्थानाञ्च भेदमुपपादयति।

तथा हि—सत्तायाः सम्बन्धिनोऽपि वस्तुतः स्वशक्तिविस्फारा एव=स्वशक्तिविस्तारा एवेति सत्ताऽद्वैतवादाभिप्रायेण समनन्तरसमीप एव निगमयिष्यति=उपसंहरिष्यति---

सत्ता स्वशक्तियोगेन सर्वरूपा व्यवस्थिता ।
साध्या च साधनञ्चैव फलं भोक्ता फलस्य च ॥ (वा.प. ३, क्रिया० ३५)

निगदव्याख्यातोऽर्थ इति ।।२३।।

इदानीं बुद्धिः=नामशब्दाद् धातुशब्दाद् वा बुद्धौ प्रतिभासमान आकारः, सिद्धिरूपः साध्यरूपो वा विकल्प्यो=बाह्ये दृश्येऽध्यारोपितः शब्दार्थ इति बौद्धाभिमते पक्षे क्रियाव्यवस्थामाह--बुद्धिं तज्जातिमिति।

अस्यार्थः—अन्ये तु बुद्धिम्=बुद्धौ प्रतिभासमानं व्यापाराकारं विकल्प्यरूपम्, तज्जातिम्=तादृशाकारगतां जातिविकल्परूपम्, अथ=अथवा, अपरे बुद्धिसत्ताम्—तादृशव्यापाराकारगतां सत्तां विकल्प्यरूपाम्, भावेषु=बाह्येषु दृश्येषु व्यापारेषु तज्जातिषु तत्सत्तायां वा यथाक्रमं प्रत्यस्तरूपाम्=अध्यस्तरूपाम्, क्रियेति प्रतिजानते=इयमेव क्रियेति प्रतिज्ञापूर्वकं जानत इति।

अयं भावः—अत्र=कारिकायाम्, बुद्धिरिति पदेन बुद्धिप्रतिभासी=आख्यातपदजन्यायां बुद्धौ प्रतिभासमानः, व्यापाराकारः—तद्गतजात्याकारः,

दृश्यविकल्प्ययोरभेदाध्यवसायात्। मतभेदेन चात्र जातिव्यक्ती क्रिये। महासामान्यं वा सत्ता। बुद्ध्याकारसमवायिनी सत्ता क्रिया भावेष्वध्यारोपिता च सैवमिति तदाश्रयेण साधनाकाङ्क्षासाध्यत्वं च सर्वमुपपद्यते। एतच्चोपचारसत्ता शब्दार्थ इति नयेन कथ्यते।

सत्तायाः क्रियात्वे "सैव भावविकारेषु षडवस्थाः प्रपद्यते"। (वा० प० ३, जा० ३६) इत्युक्तम्। तत्र भावस्य सत्ताया विकारा विशेषाः षट् सर्वक्रियाणां योनयः। षट्त्वमपि नात्यन्ताय भेदावलम्बि ॥ २४ ॥

---

तद्गतसत्ताकारो वा विकल्प्यरूपो विवक्षितः। तस्यैव = तादृशव्यापाराकारस्य, तद्गतजात्याकारस्य, तद्गतसत्ताकारस्यैव हि भावेषु प्रागुक्तेषु दृश्येषु अध्यारोपः, आख्यातपदात् प्रतीयते। 'दृश्यविकल्प्ययोरभेदाध्यवसायमादाय शब्दव्यवहारप्रवृत्तेः।

अत्र च मतभेदेन प्रागुक्तजातिव्यक्ती क्रिये। महासामान्यरूपा सत्ता वा क्रिया बुद्ध्याकारव्यापारसमवायिनी सत्ता क्रिया, सा च = सा तु भावेषु = दृश्येषु व्यापारेषु बाह्येषु अध्यारोपिता एवं = क्रिया नान्यथा इति तदाश्रयेण = अध्यारोपाधिष्ठानद्वारा अध्यारोपितायाः सत्ताया अपि साधनाकाङ्क्षा साध्यत्वञ्च सर्वमुपपद्यते।

एतच्च उपचारसत्ताशब्दार्थः = बुद्ध्याकारव्यापारसमवायिन्याः सत्ताया विकल्प्यरूपाया यो बाह्येषु व्यापारेषु उपचारोऽध्यारोपस्तद्विषयीभूता सत्ताशब्दार्थः प्रकृते धात्वर्थः क्रियारूप इति नयेन कथ्यते। एवं सत्तायाः क्रियात्वे स्थिते --

"सैव भावविकारेषु षडवस्थाः प्रपद्यते" इत्युक्तम्।
(वा० प० ३, जाति० ३६)

अयमर्थः—सैव = सत्तैव भावविकारेषु = भावस्य सत्ताया विकारेषु जननात्मधारणादिषु षट्सु सुस्थिता सती जायमानत्वादिकाः षडवस्थाः प्रपद्यते। घटत्वादेः प्राक् सत्त्वे एव तेषां जायमानत्वादीनां षण्णामवस्थानां सम्भवात्, सत्ताया एवैते षड्विशेषा इत्यवधेयम् इति। इमे एव सत्तायाः षड्विशेषाः सर्वक्रियाणां योनयः। अवस्थाषट्कान्यतमसत्त्वे एव सर्वासां क्रियाणां समुत्पादात् ॥२४॥

अवस्थानां षट्त्वमपि नात्यन्ताय = नात्यन्तम् अवस्थाभेदावलम्बि। यत आविर्भावतिरोभावयोर्दर्शनभेदेन जन्मनाशयोर्वा षट्सु भावविकारेषु मध्ये चतुर्षु भावविकारेषु नारोपितत्वेन द्वयोरेव संकलनया सत्त्वादित्याह—आविर्भावतिरोभावाविति।

यतः —

आविर्भावतिरोभावौ जन्मनाशौ तथापरैः ।
षट्सु भावविकारेषु कल्पितौ व्यावहारिकौ ॥२५॥

सत्कार्यनये पदार्थानामाविर्भावोऽभिव्यक्तिरेवोत्पत्तिः । तिरोभावश्च ध्वंसः । असत्यकार्यनये तु जन्मापूर्वोत्पत्तिर्विनाशश्च लयः । इत्येतौ दर्शनभेदेन भिन्नौ द्वौ भावविकारौ षट्सु मध्ये परिकल्पितौ व्यवहारप्रसिद्ध्यारोपितौ ।

तथा हि—सत्तालक्षणस्य भावस्य नित्यत्वादुदयप्रध्वंसायोगः । सदैकस्वरूपत्वाच्चाविर्भावतिरोभावावपि न स्तः । धर्मान्तरस्य तु तौ सत्तागतत्वेन व्यवहृतौ सतो विनाशविरोधोऽपि सतश्च जन्मायोगो धर्मान्तरस्यापि ॥२५॥

एवं जन्मनाशावेव कल्पितौ क्रियाव्यवहारं सर्वं व्याप्नुत इत्याह—

---

अस्यार्थः —यत आविर्भावतिरोभावौ सत्कार्यवादिभिः, तथापरैरसत्कार्यवादिभिर्जन्मनाशौ षट्सु भावविकारेषु मध्ये चतुर्षु भावविकारेषु कल्पितौ= आरोपितौ, यतो व्यावहारिकौ=चतुर्षु भावविकारेषु ये व्यवहाराः —अस्ति, वर्धते, विपरिणमते, अपक्षीयत इति तेषां निर्वाहकौ ।

तथा हि—जन्म एवादिकालो जायत इत्युच्यते । तस्यैवोत्तरकालस्तु अस्तीति । वर्धत इति जन्म एवावस्थाविशेषः । सत्कार्यवादनये जन्म आविर्भावः, नाशस्तु तन्नये तिरोभाव इति । अतो जन्मनाशावेव द्वौ भावविकारौ न षडिति ।

अयं भावः —सत्कार्यवादिमते पदार्थानामाविर्भावोऽभिव्यक्तिरूपोत्पत्तिः, जन्म, नाशश्च प्रध्वंस इत्येतौ मतभेदेन भिन्नौ द्वौ भावविकारौ षट्सु विकारेषु मध्ये ये चत्वारो भावविकारास्तेषु कल्पितौ व्यावहारिकौ व्यवहारप्रसिद्ध्याऽऽरोपितौ= चतुर्षु भावविकारेषु यथायथं या जन्मनाशव्यवहारस्य प्रसिद्धिस्तयाऽऽरोपितौ ।

परमार्थतस्तु जन्मनाशौ न क्वापि स्तः । तथा हि—सत्तालक्षण एव हि सर्वो भावः प्रातिपदिकार्थश्च धात्वर्थश्च । 'तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते' (वा० प० ३, जा० ३५) इति प्रागुक्तत्वात् । तस्य च सत्तालक्षणस्य नित्यत्वाद् वस्तुत उदयध्वंसायोग इत्यारोपितौ । सत्ताया नित्यत्वेन सदैकरूपत्वाच्चाविर्भावतिरोभावावपि न स्तः ।

धर्मान्तरस्य तु तौ=आविर्भावतिरोभावौ जन्मनाशौ वा सत्तागतत्वेनारोपाद् व्यवहृतौ । सतो भावस्य धर्मान्तरस्य विनाशेन सहापि विरोधः ।

किञ्च, सतो धर्मान्तरस्य जन्मायोगोऽपीति तत्रापि अन्धपरम्परान्यायेनारोपितावेवेति । तत्र सत्कार्यवादः सांख्ययोगवेदान्तानाम्, असत्कार्यवादस्तु नैयायिकवैशेषिकबौद्धानामिति ॥२५॥

एवं कल्पितौ जन्मनाशावेव सर्वं क्रियाव्यवहारं जनयत इति द्वावेव भाव-

ताभ्यां सर्वप्रवृत्तीनामभेदेनोपसङ्ग्रहः ।
जन्मैवाश्रितसारूप्यं स्थितिरित्यभिधीयते ॥२६॥

सर्वः क्रियाकलापो यथायोगं जन्मनाशाभिन्नः। उपचयापचयरूपौ हि विकारावजस्रप्रवृत्तिषु भावेषु। तौ च तात्पर्यतो धर्मान्तराविर्भावतिरोभावलक्षणौ।

तथा हि—जन्म केनचिद् धर्मेणाविर्भावः। तत्र सव्यापारं पूर्वोत्तरावस्थात्यागावाप्त्योरन्तराले वर्तमानं जायत इत्यभिधीयते, वस्त्वात्मलाभोन्मुखं समासादितरूपं तु सव्यापारमिवास्तीति आख्यातपदेनाभिधीयत इत्यस्तित्वमात्मलाभपर्यायमाविर्भावरूपस्य जन्मन एवोत्तरोऽवस्थाविशेषः।

तथा च निरुक्तकारः — "जायते इति पूर्वभावस्यादिमाचष्टे" (नि० १।२) इत्याह। पूर्वभावस्य विपरिणामादेर्व्यावहारिकात् प्रथमस्यास्तित्वस्यादिर्जन्म इत्यर्थः। तथा 'अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणमाचष्टे' (नि० १।२) इत्युत्प-

---

विकारौ, षट्त्वं तु नात्यन्तं भेदावलम्बि इति समर्थयितुमाह—ताभ्यां सर्वप्रवृत्तीनामिति।

अस्यार्थः —ताभ्यां जन्मनाशाभ्यां सर्वासां प्रवृत्तीनां भावविकाररूपाणां चतसृणां क्रियाणाम् अभेदेन उपसङ्ग्रहो भवति। सर्वभावविकाररूपः क्रियाकलापो जन्मनाशाभ्यामभिन्न एव। धर्मान्तराविर्भावतिरोभावाभ्यां सर्वासां क्रियाणां भावविकाररूपाणां गतार्थत्वात्।

ननु स्थितिरूपो भावविकारोऽस्तिपदाभिधेयस्तिष्ठति, पदाभिधेयो वा न जन्मनाशयोरन्तर्भूत इत्याशङ्क्याह —जन्मैवेति। आश्रितसारूप्यम्=सदृशजन्मप्रवाहरूपतयाऽनिर्धार्यमाणपरस्परभेदं जन्मैव स्थितिरित्यभिधीयत इति।

अयं भावः—सर्वः क्रियाकलापो भावविकाररूपः प्रागुक्तो यथायोगम्=यथासम्भवं जन्मनाशाभ्यामन्यतरस्मादभिन्नः। उपचयापचयरूपौ=वृद्ध्यपक्षयरूपौ हि विकारौ अजस्रप्रवृत्तिषु=शश्वत्प्रवर्तमानेषु भावेषु भवतः। तौ च तात्पर्यतो धर्मान्तरस्याविर्भावतिरोभावलक्षणौ।

तथा हि —जन्म केनचिद् धर्मेणाविर्भावः। तत्र=जन्मनि सव्यापारं वस्तु पूर्वावस्थात्यागस्योत्तरावस्थाप्राप्तेश्चान्तराले वर्तमानं जायत इत्यभिधीयते आत्मलाभोन्मुखं वस्तु। समासादितरूपं तु वस्तु सव्यापारमिव अस्तीत्याख्यातपदेनाभिधीयत इत्यस्तित्वमात्मलाभपर्यायमाविर्भावरूपस्य जन्मन एवावस्थाविशेष उत्तरः। तथा च निरुक्तकार आह—

"जायते इति पूर्वभावस्यादिमाचष्टे" (१।२) इति।

अस्यार्थः —पूर्वभावस्य विपरिणामादेर्व्यावहारिकाद् भावात् प्रथमस्य,

न्नस्य सत्त्वस्येति जन्मोत्तरकालतामेवाभिव्यनक्ति। अवधारणं निश्चयः। अस्त्यात्मानं भावयति। अस्याश्च भाव्यमानायाः सत्तायाः सन्तानेन प्रवृत्तेः पूर्वोत्तरक्षणनिरोधोपजनाभ्यां सङ्ग्रहः। यावच्च सदृशसन्तानप्रवाहस्तावदलक्षितविवेको भावोऽस्तीत्यवधारणार्थमभिधीयते। अस्त्यात्मानं बिभर्त्येव न ध्वंसत इत्यर्थः। विसदृशसन्तानोपजनेऽर्थभेदेन विपरिणमत इति व्यपदिश्यते तत्त्वादप्रच्युतं वस्तु।

यदाह निरुक्तकारः—"विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद् विकारमाचष्टे" (निरु० १।२) इति। अत्रैवोपचयविवक्षायां वर्धत इति।

यदाह निरुक्तकृत्—"वर्धत इति स्वाङ्गाभ्युच्चयं संयोगिनां पदार्थानामाचष्टे" (निरु० १।२) इति। वर्धते शरीरेण, वर्धते विजयेन इति। अपचयविवक्षायां तु पूर्वमपक्षीयत इति तदनन्तरं विनश्यतीति तिरोभावाभिधानमवस्थाद्वयेन।

---

अस्तित्वस्यादिर्जन्म इत्यर्थः। तथा च—"अस्तीति उत्पन्नस्य सत्त्वस्यावधारणमाचष्टे" (१।२) इति।

अस्यार्थः - अस्तीत्याख्यातमुत्पन्नस्य पदार्थस्य यत्सत्त्वं तस्यावधारणं निश्चयमाचष्टे इति। अत्र उत्पन्नस्य सत्त्वस्येत्यनेन सत्त्वस्य जन्मोत्तरकालतामेवाभिव्यनक्ति। अवधारणमत्र निश्चयः। आत्मनः सत्तां भावयतीति। अस्याश्च भाव्यमानायाः सत्तायाः सन्तानस्य प्रवृत्तेः=क्रियारूपस्य पूर्वक्षणनिरोधेन उत्तरक्षणोपजननेन च क्रममध्यारोप्य क्रियात्वेन सङ्ग्रहः।

यावच्च सत्तायाः सदृशसन्तानप्रवाहस्तावदलक्षितविवेकभावः=अलक्षितप्रविभागा सत्ता स्वस्वरूपावधारणार्थमस्तीत्यभिधीयते। अस्तीति आत्मानं बिभर्त्येव न ध्वंसत इत्यर्थः। सत्ताया एव विसदृशसन्तानोपजने च विपरिणमत इति सत्तातोऽर्थभेदेन व्यपदिश्यते तत्त्वात्=स्वरूपाद् अप्रच्युतमेव वस्तु।

ततश्च विपरिणामोऽपि सत्ताया एव विकारः। यदाह निरुक्तकारः—"विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद् विकारमाचष्टे" (१।२) इति।

अस्यार्थः—विपरिणमत इति तत्त्वात् स्वस्वरूपादप्रच्यवमानस्य विकारं विपरिणमत इत्याचष्टे इति। एवं सत्ताया विकारोऽपि विपरिणामो धर्मान्तरेणाविर्भाव एव। अत्रैव=सत्तायामेव उपचयविवक्षायां वर्धत इति। यदाह निरुक्तकारः—"वर्धत इति स्वाङ्गाभ्युच्चयं संयोगिनां पदार्थानामाचष्टे" इति।

अस्यार्थः—फलं वर्धते, देवदत्तो वर्धते इति फलादिसंयोगिनां पदार्थानां स्वाङ्गानाम्=वृद्ध्यङ्गानाम्=वृद्धिसाधनानाम्, अभ्युच्चयं समुच्चयं वर्धत इत्याचष्टे इति। वर्धते शरीरेण, वर्धते विजयेन इत्यप्युदाहरणम्।

वस्तुसत्त्व सव तदुपचयोऽपि धर्मान्तरेणाविर्भाव एव। अपचयविवक्षायां

यदाह स एव—"अपक्षीयत इति स्वाङ्गापचयं संयोगिनामर्थानामाचष्टे, विनश्यतीति पूर्वभावस्यान्तमाचष्टे" (निरु० १।२) इति। पूर्वभावोऽस्तित्व-मुक्तम्। तदेवं द्वाभ्यां षड् व्याप्ताः, तत्राव्याप्तिर्भाष्यकृतोद्भाविता। 'सर्वथा स्थित इत्यत्र धातुसंज्ञा न प्राप्नोति। बाह्यो हि तेभ्यस्तिष्ठतिः' इत्याशङ्क्य (म० भा०) तिष्ठतेरपि क्रियात्वं वक्तुमुक्तम्—

"जन्मैवाश्रितसारूप्यं स्थितिरित्यभिधीयते" इति। सदृशप्रवाहरूपतया अनिर्धार्यमाणविभागं जन्मैवाभिधीयते स्थितिरिति। जायत इतिवत् तिष्ठतीत्यपि सिद्धम्। क्रियान्तरनिर्वर्तकत्वेन चैवमभिधानाद् व्यापारविशेषः साध्यस्वभावो धातुनाभिधीयत एव॥२६॥

किं बहुना, जन्मनाशावपि नार्थान्तर्भूतौ; अपि तु सत्तैव धात्वर्थः सर्वत्रेत्याह—

जायमानान्न जन्मान्यद् विनाशेऽप्ययदार्थता।
अतो भावविकारेषु सत्तैका व्यवतिष्ठते॥२७॥

---

तु पूर्वम् अपक्षीयत इति, तदनन्तरं विनश्यतीति तिरोभावाभिधानमवस्थाद्वयेनापक्षय-विनाशरूपेण। यदाह निरुक्तकारो यास्क एव—"अपक्षीयत इति स्वाङ्गापचयं संयोगिनामर्थानामाचष्टे, विनश्यतीति पूर्वभावस्यान्तमाचष्टे" इति।

अस्यार्थः—अपक्षीयत इति अपक्षीयमाणवस्तुसंयोगिनामर्थानामपक्षयाङ्ग-भूतानामपचयं वा=एव आचष्टे इति। विनश्यतीति पूर्वभावस्य=अपक्षयविना-शाभ्यां पूर्वस्वभावस्यास्तित्वस्य अन्तं ध्वंसतिरोभावरूपमाचष्टे इति। अत्र पूर्व-भावोऽस्तित्वमुक्तमिति। तदेवं द्वाभ्यां भावविकाराभ्यां षड्भावविकारा जन्मादयो व्याप्ताः। तत्राप्तिर्भाष्यकृतानुद्भाविता। जन्मविनाशाभ्यां भावविकारलक्षणाभ्यां स्थितिरूपस्य भावविकारस्य क्रियारूपस्याव्यवधानात्। सर्वथा स्थित इत्यत्र धातुसंज्ञा न प्राप्नोति।

बाह्यो हि जन्मादिभ्यः षड्भ्यो भावविकारेभ्यस्तिष्ठतिरित्याशङ्क्य स्थितेरपि क्रियात्वं वक्तुमुक्तम् उत्तरार्धे "जन्मैवाश्रितसारूप्यं स्थितिरित्य-भिधीयते" इति। जन्मनो यः सदृशः प्रवाहः स्थितेस्तद्रूपतया अनिर्धार्यमाणपरस्पर-विभागं जन्मैव एवमभिधीयते स्थितिरिति रीत्या जायत इतिवत् तिष्ठतीत्यपि सिद्धम्। क्रियानिर्वर्तकत्वेन चैवमभिधानात्=तिष्ठतीत्यभिधानात् सत्ताविशेष-रूपस्य जन्मन एव विकाररूपो व्यापारविशेषः स्थितिरूपः साध्यस्वभावः स्थाधातु-नाऽभिधीयत एव क्रियारूपतया इति॥२६॥

किं बहुना, जन्मनाशावपि न सत्तातोऽर्थान्तरभूतौ=भिन्नौ, अपि तु सत्तैव सर्वत्र धात्वर्थ इत्याह—जायमानान्नेति।

धर्माणां धर्मिपारतन्त्र्येणावभासात् ततो व्यतिरेको न सिद्धः। अतश्च धर्म्येवानुगतो व्यावहारिकैः सर्वावस्थो व्यवहर्तुं सकृदशक्य एवमभिधीयते जायते, अस्ति, विपरिणमते, वर्धत इति। सत आविर्भावविरोधाद् असतोऽपि निरीहस्यात्मासादनासमर्थत्वाज्जन्मार्थो वस्तुतोऽपि न कश्चित्। सतो निरन्वयध्वंसविरोधाच्च विनाशोऽपि न व्यतिरिक्तः पदार्थः कश्चित्। तस्योपजने भावस्य प्रागिवोपलम्भप्रसङ्गात्, तेन तस्य विनाशे तस्यापि व्यतिरिक्तस्योदये पूर्ववत् प्रसङ्गादुत्पद्यमानस्य च भावत्वप्रसङ्गादित्यादिदूषणमन्यैरेवाभिहितमनुसन्धेयम्।

एवञ्च षड्भावविकारेषु सत्यभूता सत्तैव महासामान्यस्वभावा। तस्याश्च नित्याया अप्याख्यातवाच्यत्वेन क्रमरूपोपग्रहवशेन साध्यस्वभावतालक्षणं क्रियात्वमुक्तम्। नामपदप्रत्याय्यत्वेन तु साधनत्वम् ॥२७॥

---

अस्यार्थः —जायमानाद् घटादेः सद्रूपात् तज्जन्म नान्यत्, धर्माणां पारतन्त्र्येणैवावभासाद् धर्मिव्यतिरेकस्यासिद्धेः। सतोऽपूर्वोत्पत्तिरूपजन्मविरोधात्।

अतः सन्नेव धर्मी जायते, अस्ति, वर्धते, विपरिणमते, इत्यवस्थाभेदैर्व्यवह्रियते। सतोऽपि निरन्वयविनाशायोगात् विनाशेऽपि अपदार्थता। विनाशोऽपि न विनश्यतोऽतिरिक्तः पदार्थः कश्चित्।

"नासतो विद्यते भावो नाभावो विद्यते सतः"।

इति गीतायां भगवदुक्तेः। अतः षट्सु भावविकारेषु जन्मादिषु एका केवला सत्तैव व्यवतिष्ठते नान्ये पञ्च भावविकारा इति।

अयं भावः —धर्माणां धर्मिपारतन्त्र्येणैवावभासात् तेषां धर्मितो व्यतिरेको न सिद्धः। अतश्च धर्म्येव घटादिः सर्वासु षट्सु अवस्थासु जन्मादिषु अनुगतो व्यावहारिकैः सर्वावस्थः सकृद् व्यवहर्तुमशक्य इति जायते, अस्ति, वर्धते, विपरिणमते इत्येवमभिधीयते। सत आविर्भावविरोधात्=जन्मविरोधात्। असतोऽपि निरीहस्यात्मासादनासमर्थत्वाज्जन्मार्थो वस्तुतोऽपि न कश्चित्। सतो निरन्वयध्वंसविरोधाच्च=निरन्वय उपादानकारणे कार्यस्य सर्वथा सम्बन्धशून्यो यो ध्वंसस्तद् विरोधाच्च, विनाशोऽपि न व्यतिरिक्तः पदार्थः कश्चित्।

किञ्च, विनाशस्योपजने तत्प्रतियोगिनो भावस्य विनाशात् प्रागिव उपलम्भप्रसङ्गात्। विनाशेन स्वप्रतियोगिनो विनाशे तस्यापि विनाशस्य प्रतियोगिनो व्यतिरिक्तस्य उदये पूर्ववद् भावस्योपलम्भप्रसङ्गात्, उत्पद्यमानस्य च ध्वंसस्य तत्त्वादेव भावत्वप्रसङ्गादित्यादिदूषणमान्यैरेव=बौद्धैरेवाभिहितमनुसन्धेयम्।

एवञ्च षट्सु प्रागुक्तेषु भावविकारेषु सत्यभूता सत्तैव महासामान्यस्वभावा। तस्याश्च जातिरूपतया ब्रह्मरूपतया वा नित्याया अपि आख्याताभिधेयत्वेन धर्मान्तरस्य स्वसंसर्गिणः क्रमरूपोपग्रहवशेन साध्यस्वभावत्वलक्षणं क्रियात्वमुक्तम्। नामपदप्रत्याय्यत्वेन तु साधनत्वमिति विवेकः ॥२७॥

असत्यपि च वस्तुनो जन्मादिभेदे व्यवहारस्तत्तद्रूपतया प्रसिद्धः। तथा हि—

पूर्वभागस्तु यज्जातात् तज्जन्म व्यपदिश्यते ।
आश्रितक्रमरूपेण निमित्तत्वे विवक्षिते ॥२८॥

परिनिष्ठितरूपो भावो जात इति व्यपदिश्यते । अस्मात् तु पूर्वोऽवस्थाविशेषो जन्म, यद्वशादसौ जात इति व्यपदेशमासादयति । तच्च जन्म निमित्तत्वेन साधनानां सव्यापारत्वे विवक्षिते पूर्वापरीभूतं जायते शब्दगोचरः क्रिया भवति ॥२८॥

यतः —

आख्यातशब्दैरर्थोऽसावेवंभूतोऽभिधीयते ।
नामशब्दाः प्रवर्तन्ते संहरन्त इव क्रमम् ॥२९॥

---

वस्तुनो जन्मादिभेदपञ्चके सत्तातिरिक्तेऽसत्यपि च तत्तद्रूपतया = जन्मादिरूपतया व्यवहारः प्रसिद्धः शुक्त्यादिषु रूप्यादिव्यवहारवत् । तथा हि दर्शयति— **पूर्वभागस्त्विति ।**

अस्यार्थः —जातात् परिनिष्ठिताद् यत्तु पूर्वभागस्तज्जन्म व्यपदिश्यते व्यवह्रियते । अत्र यच्छब्दे विधेयलिङ्गत्वमाश्रित्य नपुंसकत्वेन निर्देशः । तदुक्तमभियुक्तैः—

"उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत् सर्वनामपर्यायेण तत्तल्लिङ्गभाग् भवति" इति । तच्च जन्मसाधनानां निमित्तत्वे सव्यापारत्वे विवक्षिते सति आश्रितक्रमरूपेण जायते शब्दगोचरः क्रिया भवतीति ।

अयं भावः —परिनिष्ठितरूपो भावः = परिनिष्पन्नरूपं वस्तु जात इति व्यपदिश्यते । अस्मात्तु पूर्वोऽवस्थाविशेषो जन्म । यद्वशादसौ जात इति व्यपदेशमासादयति = प्राप्नोति । तच्च जन्मनिमित्तत्वे साधनानां सव्यापारत्वे विवक्षिते आश्रितक्रमरूपेणोपलक्षितं पूर्वापरीभूतं जायते शब्दगोचरः सन् क्रिया भवतीति ॥ २८ ॥

यतो जन्मरूपस्यार्थस्याश्रितक्रमरूपस्यैवाख्यातशब्दैरभिधानमित्याह—**आख्यातशब्दैरिति ।**

अस्यार्थः —यतोऽसौ जाताद् वस्तुनः पूर्वभागरूपोऽर्थः, आख्यातशब्दैः जायते इत्यादितिङन्तपदैः, एवंभूत आश्रितक्रमरूपोऽभिधीयते । नामशब्दा जन्मादिशब्दास्तु क्रमं संहरन्त इव = आख्यातवाच्यत्वदशायां दृष्टं पौर्वापर्यं जन्मक्षणेषु विद्यमानं समापयन्त इव, स्वार्थमभिधातुं प्रवर्तन्त इति ।

असौ जाताद् वस्तुनः पूर्वो भागः कारणात्मनावस्थानलक्षणो वस्तुतोऽविद्यमानक्रमोऽप्याख्यातशब्दाज्जायत इत्यस्मादेवंभूतः समाश्रितक्रमः प्रतीयत इति क्रियालक्षणमनुपतत्येव। तथा हि—

"पूर्वस्मात् प्रच्युताधर्मादप्राप्ता चोत्तरं पदम्।
तदन्तराले भेदानामाश्रयाज्जन्म कथ्यते" ॥
(वा॰ प॰ ३, जा॰ ३९)

इति पूर्वोत्तरावयवभेदानुपूर्वीसमाश्रयेणैव जन्यर्थो व्याख्यातः। स एव च पूर्वभागो जन्मेति नामपदेन संहृतक्रमरूपतया द्रव्यायमाणः सिद्धरूपोऽभिधीयते। आख्यातवाच्येन चाभेदाध्यवसायाच्च तत्र दृष्टस्य क्रमस्योपसंहरणाभिमान इति संहरन्त इवेति इवशब्दः। एवं सर्वत्र नामाख्यातयोः सिद्धसाध्यरूपार्थाभिधानमनुसरणीयम् ॥२९॥

यथा च जन्म पूर्वभागस्वभावम्, तथा विनाशोऽप्युत्तरभागस्वभाव इति केषाञ्चिन्मतमित्याह—

**फलं फलापदेशो वा वस्तु वा तद्विरोधि यत्।**
**तदन्य एव पूर्वेषां नाश इत्यपदिश्यते ॥३०॥**

---

अयं भावः—असौ जाताद् वस्तुनः पूर्वो भाग उपादानकारणात्मनाऽवस्थानरूपो वस्तुतः पौर्वापर्यरूपक्रमरहितोऽपि जायत इत्यस्मादाख्यातशब्दादेवंभूतः=समाश्रितक्रमः प्रतीयत इति आश्रितक्रमत्वरूपं क्रियालक्षणमनुसरत्येव। तथा हि—

पूर्वस्मात् प्रच्युताधर्मादप्राप्ता चोत्तरं पदम्।
तदन्तराले भेदानामाश्रयाज्जन्म कथ्यते ॥ इति।
(वा॰ प॰ ३, जा॰ ३९)

अस्यार्थः—पूर्वस्माद् धर्मात्=कारणात्मनाऽवस्थानलक्षणात् प्रच्युता, उत्तरश्च पदं कार्यात्मनाऽवस्थानरूपमप्राप्ता सत्ता तदन्तराले=तयोः पूर्वोत्तरपदयोरन्तराले भेदानाम्=धर्मान्तरगतस्य पौर्वापर्यस्याध्यारोपेण कल्पितानां पूर्वोत्तरावयवभेदानां क्रमस्याश्रयाज्जन्म कथ्यत सत्तैव जायत इत्याख्यातेनाभिधीयत इति पूर्वोत्तरावयवभेदानुपूर्वीसमाश्रयेणैव जनिधात्वर्थो व्याख्यातः।

स एव च पूर्वभागो जन्मेति नामपदेन सिद्धरूपोऽभिधीयते। क्रमस्य संहारेण द्रव्यायमाणत्वात्, आख्यातवाक्यनामपदवाच्यजन्मनोरभेदाध्यवसायाच्च तत्र। दृष्टस्य=आख्यातवाच्ये जन्मनि दृष्टस्य क्रमस्य नामपदवाच्ये जन्मनि उपसंहरणविभ्रम इति संहरन्त इवेति इवशब्दः प्रयुक्तः। एवं सर्वत्र=पाकः, पचति इत्यादिषु नामाख्यातपदयोः सिद्धसाध्यरूपार्थाभिधानमनुसरणीयमिति ॥ २९ ॥

यथा च जन्म जातस्य वस्तुनस्तत्सत्ताया वा पूर्वभागस्वभावस्तथा विनाशोऽपि तस्य तस्या वा उत्तरभागस्वभाव इति केषाञ्चिन्मतम्=चिरन्तनवैशेषिकाणां मतम्, आश्रित्याह—फलं फलापदेशो वेति।

फलं कार्यरूपं कारणविरुद्धं विनाशाख्यं लभते। तद्यथा संयोगः कर्मणः, ज्ञानं वा ज्ञानान्तरस्य, धर्माधर्मयोः सुखदुःखसंवेदनमित्यादि वाच्यम्। फलापदेशो यः फलमिति भ्रान्त्या परमपदिश्यते वस्तुतोऽफलमपि। तद्यथा घटस्य कपालादयो मुद्गराभिघाताज्जायमानाः, पटस्य तन्तवः शीर्णस्यानन्तर्यात् फलत्वेनाभिधीयमाना विनाशव्यपदेशमासादयन्ति। तदपि बुद्धिस्थविनाश्यप्रत्यवमर्शः। तस्य यो विरोधी भावोऽकार्यभूतोऽपि, सोऽपि विनाश इति व्यवह्रियते। तद्यथा संयोगस्य विभागः, सुखस्य दुःखमित्यादि। तदेवमन्यदेव वस्तुविनाशः, न त्वपदार्थो भावरूपस्तुच्छः। तस्यावस्तुत्वादभाव्यत्वम्, भाव्यत्वे वा तुच्छतायोग इति चिरन्तनवैशेषिकाणां मतम्।

---

अस्यार्थः—फलम्=कार्यरूपं वस्तु कारणविरुद्धम्, न तु कारणाविरोधि, अस्य वक्ष्यमाणस्य च चतुर्थपादेनान्वयः। वा=अथवा, फलापदेशः=योऽफलमपि केवलं फलमिति भ्रान्त्या अपदिश्यते, तद् यथा घटस्य कपालादयः फलापदेशा मुद्गरपाताज्जायमानाः। वा=अथवा, तद्विरोधि तस्य बुद्धिस्थस्य विनाश्यस्य विरोधि यद् वस्तु तदपि विनाश इत्यपदिश्यते। यथा संयोगस्य विभागः, सुखस्य दुःखमित्यादि।

एवं तदन्य एव प्रतियोग्यन्य एव पदार्थः, न त्वपदार्थोऽभावरूपस्तुच्छः, पूर्वेषां चिरन्तनवैशेषिकाणां मते नाश इति अपदिश्यते, तुच्छत्वे भाव्यत्वायोगादिति।

अयं भावः—फलं कार्यरूपं कारणविरुद्धं वस्तु विनाशाख्यां लभते। तद्यथा संयोगः स्वकारणस्य कर्मणः=क्रियायाः कर्मविनाशकत्वाद् विरुद्धं फलम्। एवं ज्ञानं ज्ञानान्तरस्य विनाशकत्वेन विरुद्धं फलम्, पूर्वज्ञानानन्तरभावित्वात्, पूर्वज्ञानविनाशकत्वाच्चोत्तरज्ञानस्य। धर्माधर्मयोः सुखदुःखसंवेदनम्=तदुपभोगो विनाशकत्वेन विरुद्धं फलमित्यादिकं वाक्यम्। फलापदेशो यः फलमिति भ्रान्त्या परम्=केवलम् अपदिश्यते वस्तुतोऽफलमपि।

तद्यथा मुद्गराभिघाताज्जायमानाः कपालादयो घटस्यानन्तरभावित्वात् फलापदेशाः। शीर्णस्य पटस्य तन्तवः फलापदेशाः, शीर्णपटानन्तरभावित्वात्। एते चानन्तर्यात् फलत्वेनाभिधीयमाना विनाशव्यपदेशम्=विनाशपदवाच्यताम् आसादयन्ति। तद्विरोधि इत्यत्र तदिति बुद्धिस्थस्य विनाश्यस्य प्रत्यवमर्शः। तस्य विनाश्यस्य यो विरोधी भावोऽकार्यभूतोऽपि सोऽपि विनाश इति व्यवह्रियते, तद्यथा संयोगस्य विरोधी विभागः, तस्य विनाशः। सुखस्य दुःखमित्यादि। तदेवं प्रतियोगिनोऽन्यदेव वस्तु तद्विनाशः। न त्वपदार्थोऽभावरूपस्तुच्छः, तस्याभावरूपस्यावस्तुत्वादभाव्यत्वम्, भाव्यत्वाभ्युपगमे तु तुच्छत्वायोग इति चिरन्तनवैशेषिकाणां मतम्।

स चाख्यातेन क्रियारूपतयाभिधीयते सक्रमो विनश्यतीति, नामपदेन तु संहृतक्रमो विनाश इति ।।३०।।

ननु च वस्त्वन्तरं कथं वस्तुनो विनाश इत्याशङ्क्योपपादयति--

**नैवास्ति नैव नास्तीति वस्तुनो ग्रहणाद् विना ।**

**कल्पते परूपेण वस्त्वन्यदनुगम्यते ।।३१।।**

यथा कश्चिद् अनुभवं विना अस्तीति व्यवहारो न कल्पते, तथा नास्तीत्यपीति दृष्टान्तगर्भमभिधानम् ।

तदयमत्रार्थः --संसर्गिरूपविवेकेन न कश्चिदपि वस्तुनो व्यवहार इति यथा सत्ताभिसन्धानादि नास्तीति व्यवह्रियते तथा फलाद्युपजने नास्तितव्यवहारोऽपि युज्यते । भावप्रतियोगी ह्यभावः । स च शून्यतारूपो न युज्यते, अकश्चिद्रूपस्य प्रत्येतुमशक्यत्वा ; । न हि प्रत्ययश्च जायते प्रत्येतव्यं च नास्तीति युज्यते । तस्माद् वस्त्वन्तरं फलाद्येव विशेषनाश इति युक्तमुच्यते । पररूपेणैव हि वस्तुनो ब्रह्मकल्पस्यान्यरूपतया व्यवहारावतरणम् ।।३१।।

---

स च सिद्धत्वेनाक्रमोऽपि धर्मान्तिरगतस्य क्रमस्याध्यारोपेण सक्रमः क्रियारूपतयाऽभिधीयते विनश्यतीति, संहृतक्रमस्तु नामपदेनाभिधीयते विनाश इति ।।३०।।

ननु वस्तुनो विनाशश्च वस्त्वन्तरं कथमित्याशङ्क्योपपादयति--**नैवास्ति नैवेति ।**

अस्यार्थः --वस्तुनो ग्रहणाद् अनुभवाद् विना अस्तीति व्यवहारो यथा नैव कल्पते, तथा नास्तीति व्यवहारोऽपि नैव कल्पते । अत्र यथातथापदाध्याहारेण दृष्टान्तगर्भमभिधानम् । तस्मादन्यद् वस्तुफलफलापदेशादिकं पररूपेण = नास्तितारूपेण व्यवहारे अनुगम्यत इति ।

अयं भावः --यथा कस्यचित् स्वरूपस्य अनुभवं विना नास्तीति व्यवहारो न कल्पते तथा नास्तीत्यपीति दृष्टान्तगर्भमभिधानमिदम् ।

तदयमत्रार्थः --संसर्गिरूपाविवेकेन = व्यवहारसंसर्गिणो रूपस्याविवेकेन विवेकं विना न कश्चिदपि वस्तुनो व्यवहार इति कृत्वा यथा सत्ताभिसन्धानादिना अस्तीति व्यवह्रियते, तथा फलाद्युपजने तदभिसन्धानादिना नास्तिताव्यवहारोऽपि युज्यते । भावप्रतियोगी हि = भावविरोधी हि अभावः, स च शून्यतारूपो न युज्यते । अकिञ्चिद्रूपस्य = रूपशून्यस्य प्रत्येतुमशक्यत्वात् । न हीदं युज्यते, प्रत्ययश्च जायते, प्रत्येतव्यश्च नास्तीति । तस्माद् वस्त्वन्तरं फलाद्येव प्रागुक्तम् । अन्तर्धानापेक्षया विशेषनाशः प्रध्वंसरूप इति युक्तमुच्यते । ब्रह्मण्यध्यस्तत्वाद् ब्रह्मकल्पस्य पारमार्थिकसत्त्वाभावेऽपि व्यावहारिकसत्तावतो वस्तुनो हि घटादेः पररूपेणैव हि = परस्य घटादेः रूपेणैव नास्तित्वरूपेणैव हि अन्यान्यरूपतया व्यवहारावतरणमिति ।।३१।।

ननु च वस्तुनो ग्रहणं विना अन्धतमसे स्पर्शनेन्द्रियेण शून्यतारूपानुभवाद-भावोऽवसीयत इत्याशङ्क्याह--

**भावाभावौ घटादीनामस्पृशन्नपि पाणिना ।**
**कश्चिद् वेदाप्रकाशेऽपि प्रकाशे तत एव वा ॥३२॥**

पाणिना संस्पर्शमन्तरेणाप्रकाशे तत एव वस्तुनो ग्रहणात् प्रकाश इव वस्तूनां भावाभावाववैत्येव कश्चित् प्रतिपत्ता। तथा हि—सत्यप्यालोके तदभावे वा प्रमाणान्तरात् पुरोऽवस्थितं वस्तु सम्भावयन् भावमवैति, तद्विरोधिनं चार्थं निश्चित्याभावमिति, वस्तुग्रहणायत्तावेव भावाभावव्यवहारौ। सर्वस्यामपि दशायां समन्धकारेऽपि पूर्वप्रवृत्तवस्तुग्रहणानुस्मरणनिमित्तत्वात् पाणिसञ्चारेणापि चाभावावसायो वस्तुग्रहणादेव हस्तस्थास्पृष्टस्यानुभवात्। हस्तगतं हि स्पृष्टव्य-रूपमर्थान्तरविविक्तमनुभूय स्पर्शनेन्द्रियेणार्थान्तरस्याभावो निश्चीयते। तदेवं स्थितमेव वस्त्वन्तरं फलाद्यभाव इति॥ ३२ ॥

---

ननु वस्तुनो ग्रहणं विना च=अपि अन्धतमसे=अन्धत्वकारिणि तमसि, त्वगिन्द्रियेण शून्यत्वरूपस्यानुभवादभावोऽवसीयते=निश्चीयत इत्याशङ्क्याह--**भावाभावाविति।**

अस्यार्थः--कश्चित् प्रकाशेऽप्रकाशेऽपि वा घटादीनां भावाभावौ पाणिनाऽ-स्पृशन्नपि तत एव=वस्तुनो ग्रहणादेव प्रत्यक्षरूपात्, अनुमानरूपात्, स्मरणरूपाद्वा वेद। वस्तुनो ग्रहणश्चाभावस्य फलादिरूपवस्त्वन्तररूपत्व एव संभवति, न तु तुच्छत्वे इत्यभावः फलादिरूपवस्त्वन्तररूपमेवेति स्थितमिति।

अयं भावः--कश्चित् प्रतिपत्ता अप्रकाशेऽपि तत एव=वस्तुनो ग्रहणादेव पाणिना संस्पर्शमन्तरेणापि प्रकाश इव वस्तूनां भावाभावाववैत्येव=वेत्त्येव।

तथा हि--सत्यप्यालोके तदभावे वा प्रमाणान्तरात्=प्रत्यक्षातिरिक्तात् प्रमाणादनुमानादितः, पुरोऽवस्थितं वस्तु सम्भावयन्=सम्भावनागोचरं कुर्वन्, तस्य वस्तुनो भावम्=सत्ताम् अवैति। तद्विरोधिनं चार्थं प्रमाणान्तरादेव निश्चित्य तदभावमवैतीति वस्तुग्रहणपरतन्त्रावेव भावाभावव्यवहारौ, सर्वस्यामपि दशायां समन्धकारेऽपि=सन्तते तमस्यपि पूर्ववृत्तग्रहणानुस्मरणनिमित्तत्वात्=पूर्वं प्रवृत्तं जातं यद् ग्रहणमनुभवरूपं तदनु यत् स्मरणं तन्निमित्तकत्वात्। पाणिसञ्चरणेनापि चाभावनिश्चयो वस्तुग्रहणादेव, हस्तस्थास्पृष्टस्यानुभवात्=हस्तस्थेन वस्तुनाऽ-स्पृष्टस्यासंयुक्तस्यानुभवात्। हस्तगतं हि स्पृष्टव्यरूपमर्थान्तरेण विभक्तमनुभूय स्पर्शनेन्द्रियेणार्थान्तरस्य भावो निश्चीयते।

तदेवं हस्तस्थास्पृष्टवस्त्वन्तरानुभवाद्वाऽर्थान्तरविभक्तहस्तस्थवस्त्वनुभवा-द्वार्थान्तरस्याभावो निश्चीयत इत्यायातं वस्तुग्रहणादेवाभावनिश्चय इति। तदेवं स्थितम्--फलादिरूपवस्त्वन्तरमेवाभाव इति॥३२॥

इदानीं दर्शनान्तराश्रयेण जन्मनाशौ विभजति--

**व्यापि सौक्ष्म्यं क्वचिद् याति क्वचित् संहन्यते पुनः ।**
**अकुर्वाणोऽथवा किञ्चित् स्वशक्त्यैवं प्रकाशते ॥३३॥**

व्यापकं प्रधानतत्त्वं क्वचिद् देशे काले वा सौक्ष्म्यं तनुतामापद्यत इति साऽवस्था तिरोभावात्मिका नाशो नश्यतीति च नामाख्याताभ्यां सिद्धसाध्यरूपतयाभिधीयते । तदुक्तम्—

"तिरोभावाभ्युपगमे भावानां सैव नास्तिता ।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते" ॥

( वा० प० ३, जाति० ३८ )

---

इदानीं दर्शनान्तराश्रयेण = सांख्यदर्शनमनुगतनिरुक्तकारमतमद्वैतवेदान्तदर्शनञ्चाश्रित्य जन्मनाशौ विभजति = विभज्य व्याचष्टे — **व्यापि सौक्ष्म्यमिति ।**

अस्यार्थः —व्यापि व्यापकं प्रधानत्वरूपं वस्तु समस्तसर्गरूपविकारभावापन्नं क्वचिद् देशे काले वा प्राणिनामदृष्टवशात् सौक्ष्म्यसम्पादकसामग्रीसन्निधानदशायां सौक्ष्म्यं तनुत्वं याति प्राप्नोति, सैषा घटादिरूपस्य प्रधानविकारस्य तिरोभावात्मिका नाशावस्थाऽक्रमा नाशा इति नामपदेन सिद्धत्वेनाभिधीयते । अध्यारोपितक्रमा तु नश्यतीत्यादिनाऽऽख्यातपदेन साध्यत्वेनाभिधीयते । क्वचित् पुनस्तदेव व्यापि प्रधानतत्त्वं मृदादिरूपोपादानरूपेण विकृतं घटादिकार्यरूपतया विक्रियमाणं स्वनिमित्तवशात् संहन्यते = संघातरूपतामापद्यत इति साऽवस्था घटादेराविर्भावात्मिकाऽक्रमा जन्मेति नामपदेन सिद्धत्वेन, अध्यारोपिक्रमा तु जायत इत्यादिनाख्यातपदेन साध्यत्वेनाभिधीयते । तदेवं प्रधानस्यावस्थाद्वयमनवरतप्रवृत्तिशीलरजोगुणवशाज्जायमानं सक्रमत्वात् क्रियारूपमनुपतति निरुक्तकारमतम् ।

अथवा किञ्चिदपि अकुर्वाणः, वस्तुतो निष्क्रियः परब्रह्मरूपो भावोऽचिन्त्यप्रभावया मायारूपया स्वशक्त्या एवं प्रकाशते अक्रमं जन्मादिनामपदात् सिद्धत्वेन, कालाख्यया स्वस्वातन्त्र्यशक्त्याऽध्यारोपिक्रमं तु आख्यातपदात् साध्यत्वेन प्रतीयत इत्यद्वैतवादिनां मतमिति ।

अयं भावः —व्यापकं प्रधानतत्त्वं त्रिगुणात्मकं घटादिकार्यरूपैः विकृतं प्रागुक्तरीत्या क्वचिद् देशे काले वा सौक्ष्म्यम् = तनुतामापद्यत इति सावस्था तिरोभावात्मिका, नाशो नश्यतीति च नामाख्याताभ्यां क्रमरहिता सक्रमा च यथायथं सिद्धसाध्यरूपतयाऽभिधीयते । तदुक्तम् —

तिरोभावाभ्युपगमे भावानां सैव नास्तिता ।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते ॥

( वा० प० ३, जा० ३८ )

इति। क्वचित्पुनस्तदेव व्यापि वस्तु स्वनिमित्तवशात् संहन्यते सङ्घातरूपतां भजत इति साऽवस्थाविर्भावात्मिका जन्म जायत इति च पूर्ववद् व्यवह्रियते। एतच्च प्रधानस्यावस्थाद्वयमनवरतप्रवृत्तिशीलरजोगुणवशाद् भवतीति क्रियारूपमनुपततीति। तदेवं निरुक्तकारमताश्रयेण भावविकाराः क्रियासामान्यरूपा व्याख्याताः।

यद्वा निष्क्रिय एवैको व्यापकः परब्रह्माभिधानो भावोऽचिन्त्यशक्तियुक्तो जन्मनाशव्यवहारमविद्यादशायां वर्तयति। न तु भावतो जन्मनाशौ क्वौचित् ॥३३॥

तथा हि—

**सर्वस्वरूपस्य तत्त्वस्य यत् क्रमेणेव दर्शनम्।**
**भागैरिव प्रक्लृप्तिश्च तां क्रियामपरे विदुः ॥३४॥**

---

अस्यार्थः—भावानां घटादीनां सामग्रीवशादुपादानकारणे तिरोभावाभ्युपगमे सैव, स एव तिरोभावस्तेषां नास्तिता। तस्मिंश्च तिरोभावे लब्धक्रमे सति स एव तिरोभावः क्रियारूपतया नश्यतीति आख्यातात् प्रतीयत इति। क्वचित् पुनस्तदेव व्यापि वस्तुप्रधानतत्त्वं स्वनिमित्तवशात्=स्वस्य संघातापत्तौ यन्निमित्तं तद्वशात् संहन्यते संघातरूपतां भजत इति साऽवस्थाऽऽविर्भावात्मिका जन्म जायत इति च नामाख्यातपदाभ्यां पूर्ववद् व्यवह्रियते। एतच्च प्रधानस्यावस्थाद्वयं तिरोभावाविर्भावरूपमनवरतप्रवृत्तिशीलरजोगुणवशाद् भवतीति सक्रमतया साध्यतया च क्रियालक्षणमनुसरतीति। तदेवं निरुक्तकारमताश्रयेण षडपि भावविकारा जन्मादयः सत्तात्मकक्रियासामान्यरूपतया व्याख्याताः। इदानीमद्वैतवादिमतमुत्तरार्धेनाह—**अकुर्वाण** इति। यद्वा निष्क्रिय एव=किञ्चिदकुर्वाण एव, एको व्यापकः परब्रह्मपदाभिधेयो भावोऽचिन्त्यप्रभावया निजशक्त्या मायाख्यया युक्तो जन्मनाशव्यवहारमविद्यादशायां वर्तयति, आत्मज्ञानेनाज्ञाननाशे तु न भावतः=वस्तुतः जन्मनाशौ क्वौचित्स्त इति ॥ ३३ ॥

उत्तरार्धोक्तमद्वैतिमतमेव परिष्करोति—**सर्वस्वरूपस्येति**।

अस्यार्थः—सर्वजगदधिष्ठानतया सर्वरूपस्य ब्रह्मतत्त्वस्य वस्तुतः क्रमाभावेऽपि साध्यस्वभावक्रियारूपभावविषये कालाख्यया स्वस्य स्वातन्त्र्यशक्त्या यत् क्रमेणोपलक्षितस्येव दर्शनम्, वस्तुतो भागाभावेऽपि सिद्धस्वभावभावविषये स्वस्य दिक्शक्त्या पूर्वापरभागैरुपलक्षितस्येव या प्रक्लृप्तिश्च प्रसिद्धिश्च प्रतीतिश्च तां परब्रह्मणो विवर्तभूतां जन्मनाशाख्यां क्रियामपरे सर्वाद्वैतवादिनो विदुरिति।

सर्वपरिकल्पातीततत्त्वमपि ब्रह्मसमाविष्टसर्वशक्तित्वात् सार्वरूप्येणावभासमानं कालाख्यस्वातन्त्र्यशक्तिप्रवर्तितक्रमावभासं पूर्वापरीभूतावयवसमाहारात्मिकां क्रियाप्रतिपत्तिमुपजनयति साध्यस्वभावभावविषयाम्। सिद्धस्वभावविषये तु दिक्शक्तिप्रकल्पितभागभेदप्रकल्पनान्मूर्तिप्रविभागमारचयति। तथा चाप्रविभागमपि देशकालाभ्यां प्रविभक्तमिव चकास्तीति। तत्प्रविभागानुसारिणौ जन्मनाशौ समस्तक्रियाभेदानुयायिनौ व्यावहारिकौ प्रसिद्धौ। तदेवं विवर्तदर्शनेन क्रियाख्याता। पूर्वं तु परिणामदर्शनेनोक्ता।

अत एवात्र क्रमेणेवेतीवशब्दः। एकस्य हि तत्त्वादप्रच्युतस्य वस्तुतः क्रमो नास्तीति। तथा तु दर्शनमात्रम्। अत एव—

"अकुर्वाणोऽथवा किञ्चित् स्वशक्त्यैवं प्रकाशते" इति तत्त्वादप्रच्युतस्य निष्क्रियस्य सक्रियस्येव प्रकाशनं विवर्तो द्योतितः॥ ३४॥

---

अयं भावः —सर्वपरिकल्पातीतमपि = सर्वेषां परिकल्पानां विकल्पानां कल्पनानामगोचरमपि ब्रह्मसमाविष्टसर्वशक्तित्वात् = समाविष्टसर्वानुकूलशक्तिमत्त्वात् सार्वरूप्येण = सर्वरूपतया अवभासमानं कालाख्यया स्वस्य स्वातन्त्र्यशक्त्या प्रवर्तितक्रमावभासं पूर्वापरीभूतावयवसमाहारात्मिकां साध्यस्वभावविषयां क्रियाप्रतिपत्तिं = क्रियाबुद्धिम्, उपजनयति। सिद्धस्वभावभावविषये तु स्वस्मिन् दिक्शक्तिप्रकल्पितपूर्वापरभागभेदप्रकल्पनाद् मूर्तिप्रविभागम् = मूर्तिमद्द्रव्यविभागम् आरचयति।

तथा चाप्रविभागमपि ब्रह्मदेशकालाभ्यां स्वशक्तिभ्यां प्रविभक्तमिव चकास्तीति तत्प्रविभागानुसारिणौ = वस्तुतोऽप्रविभागेऽपि ब्रह्मणि देशकालकृततत्प्रविभागानुसारिणौ जन्मनाशौ समस्तक्रियाभेदानुगतौ व्यावहारिकौ प्रसिद्धौ। तदेवं रज्जुसर्पवद् विवर्तदर्शनेन क्रियाऽऽख्याता, ब्रह्मणो विवर्तजन्मादिरूपा क्रियेति। पूर्वं तु परिणामदर्शनेन प्रधानस्य परिणामरूपाजन्मादिक्रियोक्ता। तात्त्विकोऽन्यथाभावः परिणामः, यथा—दुग्धस्य दधि। अतात्त्विकोऽन्यथाभावो विवर्तः। यथा—रज्जोः सर्प इति परिणामविवर्तयोर्लक्षणे, तत्र पूर्वलक्षणेऽन्यथाभावोऽन्यथात्वापत्तिः।

उत्तरलक्षणे तु अन्यथाभावोऽन्यथाप्रतीतिरिति ध्येयम्। भवतेः क्रियासामान्यार्थकत्वात्। अत एव = विवर्तवादाभिप्रायादेव अत्र करिकायां "क्रमेणेव" इतीवशब्दः प्रयुक्तः। एकस्य हि तत्त्वात् = स्वरूपात्, अप्रच्युतस्य ब्रह्मणो वस्तुतः क्रमो नास्ति, तथा तु = क्रमवत्तया तु दर्शनमात्रम्।

अत एव "अकुर्वाणोऽथवा किञ्चित् स्वशक्त्यैवं प्रकाशते" इति कारिकार्धेन तत्त्वादप्रच्युतस्य निष्क्रियस्य ब्रह्मणः सक्रियस्येव प्रकाशनरूपो = प्रतीतिरूपः विवर्तो द्योतित इति॥ ३४॥

इदानीं सत्ताद्वैतदर्शनेन 'षड् भावविकारा भवन्ति' इति निरुक्तकारमतमेव निगमयितुमाह—

**सत्ता स्वशक्तियोगेन सर्वरूपा व्यवस्थिता ।**
**साध्या च साधनं चैव फलं भोक्ता फलस्य च ।।३५।।**

"तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते" ।
(वा० प० ३, जाति० ३४)

तथा—

"सैव भावविकारेषु षडवस्थाः प्रपद्यते" ।
(वा० प० ३, जा० ३६)

इति जातिसमुद्देशे सर्वभावानुयायिनी सत्सदिति प्रत्ययहेतुः सर्वत्रानुगमान्महासामान्यस्वभावा सत्ता सर्वशब्दानां विषय इति प्रतिपादितम् । तथा च स्वशक्तिरूपोपाधिनियमितशरीरा सर्वात्मकत्वमनुभवन्त्यपि सिद्धसाध्यरूपतया

---

इदानीं ब्रह्मसत्ताऽद्वैतदर्शनमाश्रित्य "षड्भावविकारा भवन्ति" इति निरुक्तकारमतमेवान्यानि सर्वमतान्युपेक्ष्य उपसंहर्तुमाह— सत्ता स्वशक्तियोगेनेति ।

अस्यार्थः ब्रह्मरूपा सर्वानुगता सर्वत्र सत्सदिति प्रत्ययहेतुः सत्तैव महासामान्यरूपा स्वाश्रितस्वविषयकमायाख्यपरशक्तियोगेन परस्परविलक्षणसलक्षणसर्वजगद्रूपा व्यवस्थिता ।

तथा हि—यागादिक्रियारूपसाध्यरूपा च द्रव्यदेवतेति कर्तव्यादिरूपं साधनञ्चैव सुकृतदुष्कृतक्रियारूपसाध्यफलमिष्टानिष्टरूपं फलस्य भोक्ता कर्तृरूपतया व्यवस्थिता च सैव । अशेषस्य जगतः सुकृतदुष्कृतकर्मसाध्यादृष्टफलस्य इष्टानिष्टरूपस्य प्राणिनां सुखदुःखोपभोगार्थमेव सृष्टत्वात् ।

इदञ्चोपदर्शितं यागादिरूपश्रौतस्मार्तक्रियाविषये सत्तायाः साध्यादिरूपत्वं पच्यादिक्रियाविषयेऽपि द्रष्टव्यम् । यागादिक्रियोदाहरणस्योपलक्षणत्वादिति ।

अयं भावः —"तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते" इति, अत्र तत्पदार्थः सत्ता, तथा "सैव भावविकारेषु षडवस्थाः प्रपद्यते" इति ।

अस्यार्थः —सैव—सत्तैव, भावविकारेषु भावस्य सत्ताया विकारभूतेषु घटादिषु, जन्मादिकाः षडवस्थाः प्रपद्यते प्राप्नोतीति जातिसमुद्देशे सर्वभावानुगता सर्वत्र सत्सदिति प्रत्ययहेतुर्ब्रह्मस्वभावस्य सन्मात्ररूपस्य सर्वत्रानुगमाद् महासामान्यस्वभावा सत्ता सर्वशब्दाना वाच्यार्थोपलक्षणतया विषय इति प्रतिपादितम् । तथा च सर्वाध्यासाधिष्ठानतया सर्वात्मकत्वमनुभवन्त्यपि ब्रह्मस्वरूपा सत्ता मायारूपा स्वशक्ति-

नामाख्यातपदवाच्यतामनुभवति। तद्व्यतिरेकेण च पदार्थान्तराभावात् सैव विचित्रशक्तित्वाद् भोग्यभोक्तृतत्साधनरूपतया विश्वयात्रामुद्वहति। सर्वत्र भोक्त्रादिषु सन्मात्रस्य संविद्रूपस्यानुगमात् तस्यैव सत्यता, विकल्पपरिघटितस्तु नानाव्यवहार इति सर्वाद्वैतवादिषु समानमेतत्॥ ३५॥

अधुना यत्तत् साधनसमुद्देशे—

"प्रवृत्तिरेव प्रथमं क्वचिदप्यनपाश्रिता।
शक्तीरेकाधिकरणं स्रोतोवदपकर्षति"॥

(वा० प० ३, सा० ३३)

इति क्रियालक्षणमुक्तम्, तदनुस्मारयति—

**क्रियामन्ये तु मन्यन्ते क्वचिदप्यनपाश्रिताम्।**
**साधनैकार्थकारित्वे प्रवृत्तिमनपायिनीम्॥३६॥**

प्रवृत्तिलक्षणेयं क्रिया नित्यानाश्रिता 'अपूर्वं कालशक्तिं वा' (वा० प० ३, साधन० ३४) इत्यादिना पूर्वमेव व्याख्याता साधनशक्तिभिः सह साध्यमेकं

---

रूपोपाधिनियमितशरीरा सिद्धसाध्यरूपतया नामाख्यातपदवाच्यतामनुभवति। तादृशसत्ताव्यतिरिक्तस्य पदार्थान्तरस्याभावाच्च सैव सत्ता भोग्यभोक्तृभोगसाधनरूपतया विश्वव्यवहारं निर्वाहयति। सवत्र भोक्त्रादिषु संविद्रूपस्य सन्मात्रस्यानुगमात्तस्यैव=सन्मात्रस्यैव सत्यता।

नानाव्यवहारस्तु विकल्पपरिघटितः=कल्पनाकृतः कल्पित इति ये सर्वाद्वैतं वदन्ति तेषु समानमेतद् निरुक्तकारमतानुसारिहरिमतमिति॥ ३५॥

अधुना यत्तत् साधनसमुद्देशे—

"प्रवृत्तिरेव प्रथमं क्वचिदप्यनपाश्रिता।
शक्तीरेकाधिकरणे स्रोतोवदपकर्षति"॥

इति क्रियालक्षणमुक्तम्।

अस्यार्थः—प्रथमं सर्गादौ क्रियाशक्तिरूपा तन्त्रे प्रसिद्धा, यद्वा क्रियात्वसम्पत्तेः प्राक् प्रवृत्तिरेव प्रवहद्रूपा क्वचिदपि द्रव्येऽनुपाश्रिता एकाधिकरण एकस्मिन्नधिकरणे फलरूपे जनयितव्ये साधनानां शक्तीः काष्ठतृणादीनि स्रोत इव फलोत्पत्तयेऽपकर्षतीति तदनुस्मारयति—**क्रियामन्ये त्विति।**

अस्यार्थः - अन्ये तु तान्त्रिकाः साधनैकार्थकारित्वे साधनैः सह एकस्यार्थस्य फलस्य जनकत्वे क्वचिदपि अनपाश्रितामनपायिनीं नित्यां प्रवृत्तिमेव तन्त्रेषु क्रियाशक्तित्वेन प्रसिद्धां क्रियां धात्वर्थभूतां मन्यन्त इति।

अयं भावः—प्रवृत्तिलक्षणा=परस्यात्मनः प्रयत्नरूपा इयं क्रिया नित्या अनाश्रिता अपूर्वं कालशक्तिं वा इत्यादिना व्याख्याता (अत्रापूर्वं धर्माधर्मरूपम्)

फलं साधयतीति ताः शक्तीर्द्रव्याणां प्रवहद्रूपा सती समाकर्षयति ॥ ३६ ॥

कथमस्या नित्यायाः साध्यत्वमिति चेदाह—

**सामान्यभूता सा पूर्वं भागशः प्रविभज्यते ।**
**ततो व्यापाररूपेण साध्येव व्यवतिष्ठते ॥३७॥**

प्रथमावस्थायामपूर्वादिरूपतया सा प्रवृत्तिः सामान्येनाभिधीयते । परतस्तु यथास्वं साधनव्यापारोपपादितप्रविभागा साध्यमानरूपतया क्रियेति व्यवह्रियते ।

तथा चानुद्भिन्नविशेषरूपदशायां कारकशक्तीनां प्रवर्तिका । ततो निष्कृष्य प्रवृत्तिरिति सामान्यसमाख्यानाश्रयैव भण्यते । विशेषप्रक्रमे तु साधनसमवायिनी साध्यतामनुभवन्ती यथायथं पचिक्रिया-भिदिक्रियेत्यादिव्यवहारं वर्तयति । अत एव 'कारकाणां प्रवृत्तिविशेषः क्रिये'ति लक्षणमुद्दिष्टम् ॥ ३७ ॥

---

कर्तृकरणादिरूपसाधनशक्तिभिः सह साध्यमेकं फलं साधयतीति साधनरूपाणां द्रव्याणां ताः शक्तीः प्रवहद्रूपा सती फलजननार्थं सह समाकर्षतीति ॥ ३६ ॥

ननु प्रागुक्तरीत्या नित्यायाः प्रवृत्तेः कथं साध्यत्वमिति चेदाह—**सामान्यभूता सेति ।**

अस्यार्थः—सा प्रवृत्तिः पूर्वम्=अपूर्वादिरूपत्वदशायाम्, सामान्यभूता अपि तत्तत्साधनव्यापाररूपोपाधिभिर्भागशः प्रविभज्यते, परस्परप्रविभक्तभागा क्रियते, ततस्तस्मात् कारणात् तत्तत्साधनव्यापारतादात्म्याध्यासात् तत्तत्साधनव्यापाररूपेण साध्येव प्रसाध्यापि व्यवतिष्ठत इति ।

अयं भावः—प्रथमावस्थायाम्=क्रियात्वसम्पत्तेः प्रागवस्थायाम्, अपूर्वादिरूपतया स्थिता सा प्रवृत्तिः परस्यात्मनः प्रयत्नः सामान्येन=प्रवृत्तित्वेन रूपेण क्रियात्वेन रूपेण वा, अभिधीयते । परतस्तु=तदनन्तरन्तु, यथास्वम्=यथायथं तत्तत्साधनव्यापारोपपादितपच्यादिक्रियासमूहरूपप्रभेदा साध्यमानरूपतया क्रियेति व्यवह्रियते ।

तथा चानुद्भिन्नपच्यादिविशेषरूपदशायां कारकशक्तीनां प्रवर्तिका सा क्रिया सामान्यरूपा प्रवृत्तिः । ततो हेतोः क्रियात्वसम्पत्तेः पूर्वमनाश्रितैव सा प्रवृत्तिरिति सामान्यसमाख्यया निष्कृष्य भण्यते । विशेषप्रक्रमे तु=पच्यादिक्रियाविशेषप्रारम्भे तु साधनसमवायिनी सा साध्यतामनुभवन्ती यथायथं पचिक्रिया-भिदिक्रियेत्यादिव्यवहारं प्रवर्तयति ।

अत एव "कारकाणां प्रवृत्तिविशेषः क्रिया" इति प्राक् क्रियालक्षणमुद्दिष्टम्=संक्षेपतः कीर्तितमिति ॥ ३७ ॥

प्रकृतिः साधनानां सा प्रथमं तच्च कारकम् ।
व्यापाराणां ततोऽन्यत्वमपरैरुपवर्ण्यते ॥३८॥

अपूर्वादिस्वभावासौ सामान्यभूता प्रवृत्तिर्द्रव्याणां कारकशक्तीरादधाना प्रकृतिरिति भण्यते । अत एव प्रवर्तकत्वात् स्रोतसा तुल्या कथिता । एवंभूतापि च नित्यत्वादन्यसाधनसाध्या न भवतीति तदेवं प्रथममाद्यं कारकम्, कारकाणामपि साधकमित्यर्थः । तदेव प्रकृतिरूपं साधनभेदेषु प्रविभक्तशरीरं विशिष्टक्रियास्वभावमित्येकीयं मतम् ।

अन्ये तु ततः सामान्यभूतात् प्रवृत्तिलक्षणात् साधनभेदात् समवेतानां विशिष्टक्रियास्वभावानां व्यापाराणामन्यत्वं भेदमभ्युपयन्तीति दर्शनविकल्पः सामान्यविशेषयोर्व्यतिरेकाव्यतिरेकमतावलम्बनेनोक्तः ॥ ३८ ॥

---

तदेवं क्रियायाः प्रवृत्तिरूपत्वं प्राक् साधितमुपसंहरन् तस्याः प्रवृत्त्यन्यत्वं मतान्तरेण प्रदर्शयितुमाह—प्रकृतिः साधनानामिति ।

अस्यार्थः —साऽपूर्वकालादिस्वभावा सामान्यभूता प्रवृत्तिः साधनानां प्रवर्तकत्वात् तेषां प्रकृतिरित्याख्यायते । अत एव तच्च=तदेव प्रवृत्तिरूपं वस्तु प्रथममाद्यं कारकम्, कारकाणामपि साधकम् । तदेव प्रवृत्तिरूपं तत्तत्साधनेषु विभिन्नस्वभावमापन्नं तत्तद्विलक्षणक्रियास्वभावमिति सामान्यविशेषयोरैक्यमाश्रितमेकीयं मतम् ।

अपरैस्तु सामान्यविशेषयोर्भेदमाश्रित्य कारकव्यापाराणां क्रियाणां ततोऽन्यत्वम्=प्रवृत्तेः प्रागुक्ताया अनपायिन्या अनाश्रिताया अन्यत्वम्, उपवर्ण्यते इति ।

अयं भावः —अपूर्वकालादिस्वभावाऽसौ क्रियासामान्यभूता प्रवृत्तिर्द्रव्याणां कर्तृत्वकरणत्वादिरूपाः कारकशक्तीरादधाना तेषां प्रकृतिरिति भण्यते ।

अत एव कारकाणां प्रवर्तकत्वात्तस्याः स्रोतसा साम्यं प्राग् दर्शितम्—स्रोतोवदपकर्षतीति । स्रोतो यथा स्वस्मिन् पतितं तृणादि प्रवर्तयति तथा इयमपि कारकाणां प्रवर्तिकेति । एवंभूतापि च सा नित्यत्वात्=अपूर्वरूपत्वे भोगं विनाऽनाश्यत्वात्, कालरूपत्वे तु स्वभावतो नित्यत्वाद् अन्यसाधनसाध्या=लौकिकक्रियावल्लौकिकसाधनसाध्या न भवति इति तदेव प्रथममाद्यं कारकम्, कारकाणामपि साधकमिति यावत् ।

तदेवं तदेव प्रवृत्तिरूपं तत्तत्साधनेषु प्रविभक्तशरीरम्=विभिन्नस्वरूपम्, विशिष्टक्रियास्वभावम्=विलक्षणक्रियारूपम् इत्येकीयं मतं प्राक् प्रदर्शितम् ।

अन्ये तु ततः सामान्यभूतात् प्रवृत्तिरूपात् साधनभेदात्=आद्यसाधनरूपात् कारकविशेषात् तत्तत्साधनसमवेतानां पच्यादिलक्षणविलक्षणक्रियास्वभावानां व्यापाराणामन्यत्वं भेदं स्वीकुर्वन्ति इति दर्शनविकल्पः क्रियासामान्यतद्विशेषयोर्व्यतिरेकाव्यतिरेकमतावलम्बनेन=भेदाभेदमताश्रयेण उक्त इति ॥३८॥

तदेवं विभक्तलक्षणा क्रियाख्यातशब्दैरभिधीयते इत्युक्तम्। अत्रोच्यते साधनसंख्याकालपुरुषोपग्रहा अप्याख्यातपदात् प्रतीयन्त इति। कथं क्रियावाचिनियमेन तदित्याशङ्क्योपपादयति—

बहूनां सम्भवेऽर्थानां केचिदेवोपकारिणः।
संसर्गे कश्चिदेषां तु प्राधान्येन प्रतीयते ॥३९॥

बहूनामर्थानां सम्भवे सति सम्बन्धोऽवश्यंभावी। तत्र च न सर्वे समशीर्षिकया सम्बन्धभाजः; अपि तु केचिदेवोपकारिणोऽङ्गभूताः। ततोऽन्यः कश्चिदुपकार्योऽङ्गीति प्रतीयते। तथा च प्रधानोपसर्जनभावे सति सम्बन्धः प्रतिष्ठामासादयति ॥३९॥

ततः किमित्याह —

साध्यत्वात् तत्र चाख्यातैर्व्यापाराः सिद्धसाधनाः।
प्राधान्येनाभिधीयन्ते फलेनापि प्रवर्तिताः ॥४०॥

---

तदेवं साधनाद् विभक्तलक्षणा क्रियाऽऽख्यातपदैरभिधीयते इत्युक्तम्। अत्राशङ्क्यते—कर्तृकर्मणी कारके, एकत्वद्वित्वादिकाः संख्याः, वर्तमानादिकाः कालाः, प्रथमादिकः पुरुषः, उपग्रहः परस्मैपदात्मनेपदे, इत्येतेऽपि आख्यातपदात् प्रतीयन्ते इति। कथं नियमेन क्रियावाच्येवाख्यातमित्याशङ्क्योपपादयति—बहूनां सम्भवे इति।

अस्यार्थः—बहूनामर्थानां सम्भवे तेषामवश्यंभाविनि संसर्गे एषां मध्ये केचिदेवार्था उपकारिणोऽङ्गभूताः, कश्चित्तु अर्थः प्राधान्येन प्रतीयते। तथा चाख्यातपदात् साधनसंख्याकालपुरुषोपग्रहरूपा अर्था अङ्गत्वेन क्रियारूपस्त्वर्थः प्राधान्येन प्रतीयत इति न कोऽपि शङ्कालेश इति।

अयं भावः—बहूनामर्थानां पदाद् वाक्याद् वा प्रतीतिसम्भवे सति तेषां सम्बन्धोऽवश्यंभावी। तत्र च न सर्वेऽर्थाः समशीर्षिकया=समप्राधान्येन सम्बन्धभाजः।

अपि तु केचिदेवोपकारिणोऽङ्गभूताः, ततोऽन्यः कश्चिदर्थ उपकार्योऽङ्गीति प्रतीयते। तथा च=तथात्वे एव प्रधानोपसर्जनभावे सति तेषां परस्परं सम्बन्धः प्रतिष्ठामासादयति=स्थितिं लभते इति प्राधान्येन क्रियैवाख्यातपदेनाभिधीयत इति न शङ्कालेश इति। ३९॥

ततः प्रकृते किमायातमित्याह—साध्यत्वादिति।

अस्यार्थः—तत्र च पूर्वकारिकोक्तेऽर्थे स्थिते च, सिद्धसाधनाः सिद्धं निर्वृत्तं निष्पन्नं साधनं येषां ते तथाभूताः, स्वयं तु सिद्धसाधनसाध्यरूपाः, उद्देश्यतया

व्यापाराः क्रियारूपाः साध्यस्वभावाः तिङन्तैः प्रधानभावेनाभिधीयन्ते इति साधनाद्यभिधानेऽप्याख्यातस्य क्रियावाचित्वमुपपद्यते। क्रियाप्रधानं ह्याख्यातम्। प्रधानेन च व्यपदेशा भवन्ति। सिद्धसाधना इति। सिद्धं निर्वृत्तं साधनं कारकमेषामिति कारकापेक्षया व्यापाराणां प्राधान्यमुद्दीपयन्ति। भाव्यं हि निर्वर्त्यं प्रधानं भूतापेक्षया।

यद्येवं क्रियापेक्षयापि फलं प्रधानं तदर्थं प्रवृत्तेरित्याशङ्क्याह – फलेनापि प्रवर्तिता इति। वस्तुवृत्तेन भवतु फलं प्रधानम्। आख्यातात् तु क्रियाया एव प्राधान्याध्यवसायः। पचतीति हि न फलं शब्देनोपादीयते। अपि तु पदान्तर-निबन्धनं तत्। एकपदनिबन्धनेषु चार्थेषु गुणप्रधानभाव एव चिन्त्यते। पच्यते इत्यपि कर्मणि प्रयोगे शब्दात् पाकस्यैव साध्यतया प्राधान्यं प्रतीयते। पाको निर्वर्त्यते इति ह्यत्रार्थः।

---

प्रधानीभूतेन फलेनापि स्वसिद्ध्यर्थं प्रवर्तिताः, शाब्दबोधे तु स्वयं प्राधान्येन प्रतीय-माना व्यापाराः साधनानां सिद्धत्वेन तदपेक्षया साध्यत्वाद् आख्यातैः प्राधान्येना-भिधीयन्त इति।

अयं भावः -- व्यापाराः क्रियारूपाः, अत एव साध्यस्वभावाः तिङन्तैः प्राधान्येनाभिधीयन्ते, कृद्भिस्तु घञादिभिः सिद्धस्वभावा अभिधीयन्ते इत्याख्या-तस्य गुणतया साधनसंख्याकालाद्यभिधानेऽपि क्रियावाचित्वव्यपदेश उपपद्यते। यत आख्यातं क्रियाप्रधानम्। प्रधानेन च व्यपदेशा भवन्ति। कारिकायां सिद्धसाधना इति। सिद्धं निर्वृत्तं निष्पन्नं साधनं कारकमेषामिति सिद्धकारकापेक्षया साध्यानां व्यापाराणां प्राधान्यमुद्दीपयति। भाव्यं हि निर्वर्त्यत्वाद् भूतापेक्षया प्रधानम्। यद्येवं तदा फलमपि क्रियापेक्षया प्रधानम्, फलार्थं साधनानां प्रवृत्तेरित्याशङ्क्याह-- फलेनापि प्रवर्तिता इति।

उक्तोऽर्थो वस्तुगत्या उद्देश्यत्वेन भवतु फलं प्रधानम्। आख्यातात्तु क्रियाया एव प्राधान्यनिश्चयः। यतः पचतीत्यत्र न फलं विक्लित्तिरूपं धातु-नोपादीयते।

अपि तु द्वितीयाद्यन्ततण्डुलादिपदनिबन्धनं तत्। अत एव व्युत्पत्तिवादे द्वितीयाकारके फलं द्वितीयार्थः, व्यापारमात्रं धात्वर्थ इति मतमुपन्यस्तम्।

एकपदनिबन्धनेषु चार्थेषु = एकपदाभिधेयेषु एवार्थेषु गुणप्रधानभावोऽत्र चिन्त्यते इति पदन्तराभिधेये फले प्राधान्यसत्त्वेऽपि आख्यातपदाभिधेयेषु अर्थेषु क्रियायाः प्राधान्यमव्याहतमेव। पच्यते इत्यपि कर्मणि प्रयोगे शब्दात् पाकस्यैव साध्यतया प्राधान्यं प्रतीयते। पाको निवर्त्यते इति ह्यत्रार्थः। कर्त्रादिभिः साधनैः

स तु पाकः फलसाधनायेति सामर्थ्यात् प्रतीयते फलं प्रत्यङ्गभावः क्रियायाः । साक्षात्तु शब्दव्यापारेण प्राधान्यमेवास्याः । क्रियैव हि प्रधानभूता चोदिता सत्यनुष्ठीयते । वस्तुसामर्थ्यात् तु फलं भवति । न तु फलाय क्रिया चोदिता, प्राधान्येन चोदनाद् यजेत इत्यादि ।

अत एव सैव प्राधान्याद् वाक्यार्थो वैयाकरणानामिति क्रियाविवेकेऽस्माभिः प्रपञ्चितं तत एवावधार्यम् ।

साधनानां तु सिद्धानां परमनुपकुर्वतामभिधाने प्रयोजनाभावात् तिङन्तेन गुणभूतान्येव क्रियायां साध्यायां तान्यभिधीयन्ते ।

कर्मणोऽपि साधनस्य साधारणस्य कारकत्वस्य भावात् क्रियां प्रति गुणभाव एव । यत्र तु तदेव फलं तत्र फलरूपानुप्रवेशादस्य वास्तवं प्राधान्यम, न तु शाब्दम् ।

एतच्च क्रियाविवेकादेव विस्तरतोऽवगन्तव्यम् । सङ्ख्यापुरुषौ साधना-

---

साध्यः पाक इति बोधः । अत्र च पाकक्रियायाः प्राधान्यम् ।

स तु पाके विक्लित्तिरूपफलसाधनायेति सामर्थ्यात् फलं प्रति पाकक्रियाया अङ्गभावः प्रतीयते । साक्षात्तु शब्दव्यापारेण शाब्दबोधे प्राधान्यमेवास्याः= क्रियायाः ।

क्रियैव हि प्रधानभूता साधनैश्चोदिता सती अनुष्ठीयते । फलं तु वस्तुसामर्थ्याद्=अनुष्ठीयमानक्रियारूपवस्तुसामर्थ्याद् भवति, न तु फलाय क्रिया चोदिता भवति, तस्याः प्राधान्येन चोदनात् । अत एवोच्यते "यजेत स्वर्गकामः" इति, न तु स्वर्गाय यजेतेति । अत्र हि स्वर्गरूपस्य फलस्य तत्कामे कर्तरि तस्य च यागक्रियायां विशेषणतयाऽन्वय इति यागक्रियायाः सर्वतः प्राधान्यं शाब्दबोधे ।

अत एव सैव=क्रियैव प्राधान्याद् वाक्यार्थो वैयाकरणानामिति क्रियाविवेकेऽस्माभिः प्रपञ्चितं तत एवावधार्यम् (नायं ग्रन्थ उपलभ्यते) ।

साधनानान्तु सिद्धानां प्राधान्याभावेनाङ्गत्वेऽपि परम्=क्रियातिरिक्तमनुपकुर्वतामभिधाने प्रयोजनाभावात् क्रियायां साध्यायां गुणभूतान्येव तानि तिङन्तेनाभिधीयन्ते ।

कर्मणोऽपि साधनस्य तत्त्वेनैव साधारणस्य कारकत्वस्य तत्र भावात् क्रियां प्रति गुणत्वमेव । यत्र तु तदेव=कर्मैव फलम्, यागादेः स्वर्गादिः । तत्र तु फलस्वरूपे तस्यानुप्रवेशात् तस्य वास्तवम्=वस्तुसामर्थ्यकृतमुद्देश्यत्वलक्षणं प्राधान्यम्, न तु शाब्दम् ।

एतच्च क्रियाविवेकादेव विस्तरतोऽवगन्तव्यम् । संख्यापुरुषौ तु साधन-

धारद्रव्यधर्मत्वात् साधनद्वारेण क्रियामुपकुर्वन्तौ गुणभूतौ। तत्र कालोपग्रहौ तु साक्षादेव क्रियोपकारितया गुणभूतौ।

यत्र च भावे लकारस्तत्र सङ्ख्याद्यपेक्षमेव प्राधान्यं क्रियायाः। एकपदोपात्तस्य साधनस्याभावात् सङ्ख्यया साक्षात् सम्बन्धः प्राधान्यादेव न भवति, क्रियायाः साध्यत्वाद्ध्यसौ प्रधानम्। न ह्यनिर्वृत्तं परस्याङ्गभावमुपगन्तुमर्हति। तथा च 'असत्या भेदाभाव इत्येका क्रिया' इति भाष्यम्।

एकशब्दश्चायं भेदाभावप्रदर्शनपरो न सङ्ख्यावचनः। असत्त्वभूतत्वेन निःसङ्ख्यत्वात् क्रियायाः ॥४०॥

यद्येवं सङ्ख्यावाचिभ्यः क्रियागणनावृत्तौ कृत्वसुजादयः कथं पञ्चकृत्वः पचति, द्विः पचतीत्याशङ्क्योपपादयति—

**एकत्वावृत्तिभेदाभ्यां भेदाभेदसमन्वये।**
**सङ्ख्यास्तत्रोपलभ्यन्ते सङ्ख्येयावयवक्रियाः ॥४१॥**

---

शक्त्याधारद्रव्यधर्मत्वात् साधनद्वारेण क्रियामुपकुर्वन्तौ तत्र गुणभूतौ। तत्र कालोपग्रहौ तु साक्षादेव क्रियोपकारितया तत्र गुणभूतौ।

यत्र च भावे लकारः। यथा "पतगेन मया जगत्पतेरुपकृत्यै तव किं प्रभूयते" इत्यादौ नैषधे, तत्र संख्याकालाद्यपेक्षमेव क्रियायाः प्राधान्यम्। भावे तिङर्थभूता चैकत्वसंख्याभेदाभावरूपा। आख्यातरूपैकपदोपात्तस्य च साधनस्याभावात् संख्यया सह साक्षात् सम्बन्धः साधनस्य न भवति, क्रियायाः प्राधान्यादेव। प्रधानान्वयापेक्षिणो हि गुणा भवन्ति। 'न हि उपाधेरुपाधिर्भवति, विशेषस्य च विशेषमि'ति सिद्धान्तात्।

साधनं च क्रियायां गुणभूतमेवेत्युपपादितं प्राक्। साध्यत्वाद्धि असौ=क्रिया सर्वतः प्रधानम्। न हि अनिर्वृत्तम्=अनिष्पन्नम्, क्रियारूपं वस्तुपरस्याङ्गत्वमुपगन्तुमर्हति। तथा च=भेदाभावरूपाया एकत्वसंख्याया साक्षात् क्रियान्वयाभ्युपगम एव "असत्या भेदाभाव इत्येका क्रिया" इति भाष्यम्।

अस्यार्थः—भेदाभाव इत्येका भेदाभावरूपैकत्ववती क्रिया असत्या, तस्याः व्यापारसमूहरूपाया भिन्नत्वेन बहुत्वादिति। एकशब्दश्चायमत्र भाष्ये भेदाभावप्रदर्शनपरो न संख्यावचनः। क्रियाया असत्त्वभूतत्वेन=अद्रव्यरूपत्वेन निःसंख्यत्वादिति ॥४०॥

यद्येवम्=यद्येका क्रिया तदा संख्यावाचिभ्यः क्रियावृत्तिगणनायां कृत्वसुजादयः कथम्, पञ्चकृत्वः पचति, द्विकृत्वः पचतीति इत्याशङ्क्य समाधत्ते—एकत्वावृत्तिभेदाभ्यामिति।

निस्सङ्ख्या एकापि क्रिया यदा आवर्तते, तदा आवृत्तिनिबन्धनं भेदं स्वतश्चाभेदमुपादाय भेदाभेदयोगेऽस्याः सङ्ख्या दृश्यन्ते। सङ्ख्येया अवयवक्रिया यासाम्।

अयमर्थः—एकफलत्वादेककर्तृकत्वाच्च क्रियैका पुनः पुनः प्रवृत्तिलक्षणां चावृत्तिमनुभवति। तत्राख्यातेन सकलक्रियाप्रवाहोऽभेदेनाभिधीयते। आवृत्तिनिबन्धनं तु भेदमवयवाधिकरणं संख्यापदमनुभवति। तथा च कृत्वसुजाद्युत्पत्तिः। न ह्यत्यन्तभेदेऽभेदे वा आवृत्तिः सम्भवति, अपि तु भेदाभेदाभ्याम्।

एवं तावत् क्रियायाः स्वतः संख्यायोगो नास्ति। पचति पचतः पचन्ति तु साधनगतसंख्यासम्प्रत्यय इति। इह तर्हि कथं संख्याभेदावगमः पाकः पाकौ पाका इति। न ह्यत्र साधनमस्ति।

कृदन्तैः सिद्धतयाभिधीयमानत्वात् क्रियायाः संख्यायोगो न विरुद्धयते ॥४१॥

---

अस्यार्थः--क्रियाया व्यापारसमूहरूपाया एकफलकत्वादेककर्तृकत्वाच्चैकत्वमभेदरूपम्, तस्या आवृत्तौ तु भेदः, इत्येवमेकत्वावृत्तिभेदाभ्यां भेदाभेदसमन्वये, भेदाभेदयोः सामानाधिकरण्ये उपपन्ने सति, तत्र क्रियायाम्, संख्येयावयवक्रियाः संख्येया आवृत्तक्रियाया अवयवक्रिया यासां संख्यानां तास्तथाभूताः संख्या द्वित्वादिका उपलभ्यन्ते, कृत्वसुजादिप्रयोगे प्रतीयन्त इति।

अयं भावः ---असत्त्वभूतत्वेन निःसंख्या =संख्यासामान्यशून्या, एकापि= अभेदरूपैकत्ववत्यपि क्रिया यदा केनचिन् निमित्तेन आवर्तते तदा आवृत्तिप्रयुक्तं तस्याभेदं स्वतश्चाभेदमुपादायास्याभेदाभेदयोगे द्वित्वादिकाः संख्या दृश्यन्ते, द्विःपचति, पञ्चकृत्वः पचतीति। संख्येया गणनीया अवयवक्रिया यासां संख्यानां ताः संख्येयावयवक्रिया इति विग्रहः। एकफलकत्वादेककर्तृकत्वाच्चैका क्रिया पुनः पुनः प्रवृत्तिरूपाञ्चावृत्तिं यत्रानुभवति, तत्राख्यातेन सकलः क्रियाप्रवाहोऽभेदेनाभिधीयते। आवृत्तिनिबन्धनं तु अवयवाधिकरणकं भेदं द्व्यादिसंख्यापदं कर्तुमनुभवति =स्वजन्यानुभवगोचरं करोति, तथा च कृत्वसुजाद्युत्पत्तिः।

न हि अत्यन्तभेदेऽभेदे वा आवृत्तिः संभवति, अपि तु भेदाभेदाभ्याम्। एवं तावद् असत्त्वभूतत्वेन क्रियायाः स्वतः संख्यायोगो नास्ति। पचति पचतः पचन्ति इति तु कर्तृरूपसाधनगतसंख्यायाः क्रियायां संप्रत्यय इति। इह तर्हि कथं संख्याभेदावगमः, पाकः, पाकौ, पाका इति। न ह्यत्र साधनगतसंख्यायाः क्रियायां संप्रत्ययसम्भवः, साधनपदाभावात्।

अत्रोच्यते—कृदन्तपदैः क्रियायाः सिद्धतयाभिधानात्, तत्र संख्यासम्बन्धसम्भवादिति ॥४१॥

यदि तर्हि सिद्धतयाभिधानम्, तदा—

सिद्धस्यार्थस्य पाकादेः कथं साधनयोगिता ।
साध्यत्वे वा तिङन्तेन कृतां भेदो न कश्चन ॥४२॥

परिनिष्ठितरूपः पदार्थः साधनसम्बन्धं नानुभवति । तथा च पाकादिरिति तत्रापि साधनयोगाभावात् कृत्प्रयोगे कर्तृकर्मणोः षष्ठीविधिर्नोपपद्यते । अथ कृदभिहिते पाकादौ साध्यतयैव, तदा भाष्यकाराभिमतः कृतां तिङन्तेन भेदो विरुध्येत । भाष्यकारो हि पञ्चकृत्वः पाक इति प्रयोगं नेच्छति ॥४२॥

अथ पाकादेः सिद्धत्वेऽपि साध्यतयाभिधानं यत्राख्याते स विषय इत्याशङ्क्य व्युदस्यति—

तत्र कारकयोगाया यद्याख्यातनिबन्धनम् ।
षष्ठ्याः सा तेन सम्बन्धे व्युदस्ता कर्तृकर्मणोः ॥४३॥

---

यदि तर्हि कृदन्तैः क्रियायाः सिद्धतयाऽभिधानं तदा कृदन्तपदाभिधेयस्य सिद्धस्य पाकादेः कथं साधनयोगः, यदि तु कृदभिहिते पाकादौ साध्यतैव स्वीक्रियते तथा भाष्यकृत्सम्मतः कृदन्ततिङन्तयोरर्थभेदप्रयुक्तो भेदो विरुद्धयेत, सेयमुभयस्पाशा रज्जुरित्याशङ्कते - सिद्धस्यार्थस्येति ।

अस्यार्थः —कृदन्तपदाभिधेयस्य सिद्धस्यार्थस्य पाकादिरूपस्य कथं साधनयोगः, सिद्धत्वेन साधनानपेक्षणात् । वा=अथवा, तस्य साध्यत्वे तिङन्तेन सह कृतां=कृदन्तानां कश्चन अर्थभेदप्रयुक्तो भेदो भाष्यकृत्सम्मतो न सम्भवतीति ।

अयं भावः —परिनिष्ठितरूपः पदार्थः साधनसम्बन्धं नानुभवति, परिनिष्ठितत्वेन साधनापेक्षाशून्यत्वात्, आत्मादिवत्, तथा च पाकादिरिति तत्रापि=पाकादिष्वपि साधनयोगाभावात्, ओदनस्य पाक इत्यादौ कृत्प्रयोगे कर्मणि षष्ठीविधिर्नोपपद्यते ।

यदि तु कृदभिहिते पाकादौ साध्यतैव स्वीक्रियते, तदा भाष्यकृत्सम्मतः कृदन्ततिङन्तयोरर्थप्रयुक्तो भेदो विरुध्येत ।

भाष्यकारो हि—पञ्चकृत्वः पचति इत्यादौ पाकस्य साध्यत्वेन क्रियाभ्यावृत्तिमभ्युपेत्य कृत्वसुच्प्रयोगं मन्यते । पञ्चकृत्वः पाक इति प्रयोगं तु नेच्छति । कृदन्तप्रतिपाद्यस्य पाकस्य सिद्धत्वात्, क्रियात्वाभावेन क्रियाभ्यावृत्तेरभावादिति ॥४२॥

अथ ओदनस्य पाक इत्यादौ कृदन्ते पाकादेः सिद्धत्वेऽपि षष्ठ्या तस्य साध्यतयाभिधानम्, यथाऽऽख्याते मातुः स्मरतीत्यादौ ओदनस्य पचतीत्यादौ च

"कर्तृकर्मणोः कृति" (पा० २।३।६५) इति वचनादाख्यातमविषय एवास्याः षष्ठ्याः। अभ्युपगम्यापि तूच्यते "न लोकाव्यय···" (पा० २।३।६९) इति लकारप्रयोगे प्रतिषिद्धा नायमस्या विषयः। अत एव कृद्ग्रहणस्यैतद्व्यावर्तने अनुपयोगात् तदनादरेणैतदुक्तम्। शत्रादिव्यावृत्त्यर्थं तु तत्र लग्रहणम् ॥४३॥

एवं तर्हि पाकादौ साधनसम्बन्धकाले साध्यत्वं संख्याभेदप्रतिपत्तिवेलायां तु सिद्धत्वं भविष्यतीत्याशङ्क्याह—

**एकाभिधान एकोऽर्थो युगपच्च द्विधर्मभाक्।**
**न सम्भवति सिद्धत्वे स साध्यः स्यात् कथं पुनः ॥४४॥**

---

स=धात्वर्थस्य साध्यत्वं षष्ठ्या विषय इत्याशङ्क्य निषेधति—तत्र कारकयोगाया इति।

अस्यार्थः—तत्र मातुः स्मरतीतिवद् ओदनस्य पचतीत्यादौ कारकयोगायाः=कारकेण कर्त्रा कर्मणा वा योगः सम्बन्धो वाच्यवाचकभावरूपो यस्याः सा तथाभूता तस्याः षष्ठ्या यदि उत्पत्तौ आख्यातं बिबन्धनं बिमित्तमुच्यते, तन्न सम्भवति, यतः सा षष्ठी, कर्तृकर्मणोः, तद्वाचकपदयोरर्थद्वारा लकारेण सम्बन्धे तत्र व्युदस्ता प्रतिषिद्धा "न लोकाव्यय " (२।३।६९) इति तस्या निषेधादिति।

ननु मातुः स्मरतीत्यादौ कथं षष्ठीति चेत्, तत्र शेषे षष्ठी, न तु कारकयोगेति गृहाण।

अयं भावः—"कर्तृकर्मणोः कृति" (२।३।६५) इति वचनात् कृन्मात्रं कारकयोगायाः षष्ठ्या विषयः, न तु आख्यातम्। कारकयोगायाः षष्ठ्याः कृद्वदाख्यातमपि विषय इत्यभ्युपगम्यापि तूच्यते "न लोकाव्यय···" (२।३।६९) इति सूत्रे या लकारप्रयोगे प्रतिषिद्धा कारकषष्ठीति नाख्यातमस्या विषयः। अत एव=लकारयोगे कारकषष्ठ्याः प्रतिषेधादेव कृद्ग्रहणस्य :"कर्तृकर्मणो"रिति सूत्रघटकस्य एतद्व्यावर्तने=आख्यातव्यावर्तने अनुपयोगात्=तत्फलस्यान्यतः सिद्धत्वेनोपयोगाभावात् तदनादरेण=कृद्ग्रहणमाख्यातप्रयोगे षष्ठीप्रतिषेधकमित्यनादृत्य एतदुक्तम्=लकारप्रयोगे षष्ठी प्रतिषिद्धा इत्याख्यातमविषयः कारकषष्ठ्या इत्युक्तम्।

न च कृद्ग्रहणेनैवैतत्फलसिद्धौ तत्र लग्रहणं व्यर्थमिति वाच्यम्। लादेशशत्रादिरूपकृतिकारकषष्ठीप्रतिषेधार्थं तत्र लग्रहणस्यावश्यकत्वादिति ॥४३॥

एवं तर्हि ओदनस्य पाक इत्यादौ पाकादौ कर्मादिरूपसाधनसम्बन्धकाले साध्यत्वम्, पाकः, पाकौ, पाका इति संख्याभेदप्रतिपत्तिवेलायां तु सिद्धत्वं भविष्यति इति विरुद्धधर्मद्वययोगित्वप्रसङ्ग इत्याशङ्क्याह—एकाभिधान इति।

अस्यार्थः—एकाभिधानः=एकपदाभिधेयः, एकोऽर्थः, युगपच्च=युगपत्तु, द्विधर्मभाक्=विरुद्धधर्मद्वयभाक् न संभवति इति स पाकः सिद्धत्वे सति पुनः साध्यः कथं स्यादिति।

एकोऽर्थो युगपद् विरुद्धधर्मद्वययोगी न सम्भवतीति सिद्धसाध्योभयरूपता पाकादेरेकपदोपादानस्य नास्ति। भिन्नशब्दोपादान तु स धर्मद्वययोगी भवत्येव पचति पाचक इत्यादि ॥ ४४ ॥

इदानीमेकाभिधानत्वमेवात्र नास्ति, अपि तु भिन्नाभिधानत्वमिति पाकादौ शब्दद्वयेन धातुप्रत्ययरूपेण सिद्धसाध्यरूपोभयार्थप्रतिपादनमविरुद्धमित्येतदुपपादयितुमुपक्रमते—

**एतावत् साधनं साध्यमेतावदिति कल्पना।**
**शास्त्र एव न वाक्येऽस्ति विभागः परमार्थतः ॥ ४५ ॥**

एकशब्दोपादाने द्व्यर्थेऽन्वयव्यतिरेकवशेन शास्त्रेऽपोद्धारकल्पनायां प्रकृतिप्रत्ययविभागेनार्थविभागः शक्यक्रियः। लोके त्वखण्ड एव शब्दोऽखण्डस्यार्थस्य

---

अयं भावः - एकपदोपात्त एकोऽर्थो युगपद्विरुद्धधर्मद्वययोगी न सम्भवतीति एकपदोपादानस्य = एकपदोपात्तस्य पाकादेः सिद्धसाध्योभयरूपता नास्ति। भिन्नशब्दोपादानस्तु = भिन्नशब्दोपात्तस्तु सः = पाकः सिद्धत्वसाध्यत्वरूपविरुद्धधर्मद्वययोगी भवत्येव, पचति पाचकः इत्यादि ॥ ४४ ॥

इदानीमेकाभिधानत्वमेवात्र नास्ति, अपि तु भिन्नाभिधानत्वम्। पाक इत्यादौ घञन्ते धातुना साध्यरूपस्य पाकस्य, घञ्प्रत्ययेन च सिद्धरूपस्य पाकस्याभिधानादिति पाकादौ शब्दद्वयेन प्रकृतिप्रत्ययरूपेण सिद्धसाध्यरूपोभयार्थप्रतिपादनमविरुद्धमित्येतदुपपादयितुमुपक्रमते—एतावत् साधनमिति।

अस्यार्थः —एकपदोपात्तेऽर्थद्वयेऽन्वयव्यतिरेकाभ्यामपोद्धारकल्पनायां क्रियमाणायां शास्त्र एव एतावत् साधनम्, एतावत् साध्यमिति कल्पना कर्तुं शक्यते, न तु वाक्ये, पदे वाऽखण्डे परमार्थतो विभागोऽस्ति। यथा पचतीत्यत्र तिबर्थः कर्ता साधनम्, पचतिरूपायाः प्रकृतेरर्थः पाकक्रियारूपः साध्य इति प्रकृतिप्रत्ययतदर्थापोद्धारकल्पना शास्त्र एव क्रियते, लोके तु परमार्थतः पचतीत्येकमेवाखण्डं पदमिति।

अयं भावः —एकशब्दोपादाने = पचत्यादिरूपैकशब्दाभिहिते द्व्यर्थेऽन्वयव्यतिरेकवशेनापोद्धारकल्पनायां शास्त्रे क्रियमाणाया प्रकृतिप्रत्ययविभागेन तत्तदर्थविभागः शक्यक्रियः = कर्तुं शक्यः।

लोकव्यवहारे त्वखण्ड एव शब्दोऽखण्डस्यार्थस्य वाचक इति न तत्र = लोकव्यवहारे अर्थप्रविभागः, नापि शब्दप्रविभागः सत्यरूपः।

यद्यपि प्रकृतकारिकायां तृतीयचरणे 'शास्त्र एव पदेनास्ति' इत्येवं वक्तुमुचितम्, शास्त्रे प्रकृतिप्रत्ययापोद्धारकल्पनाया एव दृष्टत्वात्। वाक्यात् पदापोद्धारकल्पनायाः शास्त्रेऽदृष्टत्वात्, तथापि तत्र = लोके वाक्येन व्यवहाराच्च "न

वाचक इति न तत्रार्थप्रविभागः सत्यरूपः। वाक्येन तत्र व्यवहाराच्च वाक्य इत्याह ॥४५॥

तत्र कियत् साधनं कियत् साध्यं क्व कथं प्रकल्पते शास्त्र इत्याह--

**आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता।**

**प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥ ४६ ॥**

पचतीत्यादावन्वयव्यतिरेकवशेन धातुभागः क्रियायां, प्रत्ययभागस्तु कारकादौ वर्तत इति शास्त्रे परिकल्प्यते। यदाह वाक्यकारः --"प्रत्ययार्थस्याव्यतिरेकात् प्रकृत्यन्तरेषु धातोश्चार्थभेदात् प्रत्ययान्तरेष्वन्वयव्यतिरेकाभ्याम्" इति। एवं पाकादावपि ॥४६॥

तथा हि--

**साध्यत्वेन क्रिया यत्र धातुरूपनिबन्धना।**

**सत्त्वभागस्तु यस्तस्याः स घञादिनिबन्धनः ॥४७॥**

---

वाक्येऽस्ति" इत्याह=हरिरित्यवधेयमिति ॥ ४५ ॥

तत्र पाकादौ कृदन्ते कियानंशः साधनम्, कियानंशः साध्यम्, कस्मिन् पदे कथमपोद्धारकल्पनया प्रकल्पते शास्त्र इत्याह--आख्यातशब्दे इति।

अस्यार्थः--आख्यातशब्दे पचतीत्यादौ, भागाभ्याम्, प्रकृतिप्रत्ययभागाभ्यां, साध्यसाधनवर्तिता, प्रकृतौ साध्यवर्तित्वम्, प्रत्यये साधनवर्तित्वम्, यथा शास्त्रे, शब्दानुशासनशास्त्रे. प्रकल्पितः स क्रमः सा रीतिः, घञादिष्वपि घञादिरूपभावाभिधायककृदन्तेष्वपि, पाक इत्यादावपि प्रकृतिभागस्य साध्याभिधायित्वम्, प्रत्ययभागस्य च क्रियान्तरे साधनीभूतभावाभिधायित्वम्, पक्ता इत्यादौ तु तृजादीनां तस्यामेव क्रियायां साधनीभूतार्थाभिधायित्वमिति।

अयं भावः - पचतीत्यादौ=तत्सत्त्वे तत्सत्त्वसमन्वयः, तदभावे तदभावो व्यतिरेक इत्येवमभिलप्यमानान्वयव्यतिरेकमुखेन भागः क्रियायां वर्तते, प्रत्ययभागस्तु कारकभेदे=कारकविशेषे वर्तत इति शास्त्रे परिकल्प्यते। यदाह वाक्यकारः--

"प्रत्ययार्थस्याव्यतिरेकात् प्रकृत्यन्तरेषु धातोश्चार्थभेदात् प्रत्ययान्तरेष्वन्वयव्यतिरेकाभ्याम्" इति।

अस्यार्थः--पचतीत्यत्रत्यस्य प्रत्ययार्थस्य भवतीत्यादौ प्रकृत्यन्तरेषु सत्सु अव्यतिरेकात्=अभेदात्, धातोश्च पचति, पक्ता, पाचक इत्यादौ प्रत्ययान्तरेषु सत्सु अर्थभेदाद् अन्वयव्यतिरेकाभ्यां तत्तदर्थग्रहः सुकर इति। अत्र चान्वयोक्त्या व्यतिरेकः सुग्रह इति नोक्तः।

एवम्=आख्यात इव पाकादावपि साध्यसाधनवर्तिता बोध्येति ॥ ४६ ॥

तथा हि=पूर्वकारिकोक्तमेवार्थं निदर्शयति--साध्यत्वेन क्रियेति।

प्रकृतिप्रत्ययानां शास्त्रेऽसकृदुपदेशादभेदाध्यवसायेनान्वयव्यतिरेकाभ्यां प्रक्रियासिद्ध्यर्थमर्थवत्ताप्रतिज्ञानाद् य एव धातुराख्याते स एवात्र कृदन्त इति तन्निबन्धनोऽप्यभिन्नः साध्यस्वभावः। ततश्चात्र धातुभागवाच्यसाध्यार्थापेक्षितानि साधनानि स्वनिमित्तं संस्कारं विभक्तिलक्षणं प्रयुञ्जत एव।

धातोः परस्तु प्रत्ययो घञादिस्तस्य प्रकृत्यर्थस्य सत्त्वभावं दर्शयति। येन लिङ्गसंख्याभ्यां योगः। अतश्च तिङन्तेन कृतां भेदोऽप्युपपन्नः ॥४७॥

भिन्नाभिधानत्वे धर्मद्वययोगे निदर्शनमत्राह —

**बन्धुता भेदरूपेण बन्धुशब्दे व्यवस्थिता।**
**समूहो बन्धवबस्था तु प्रत्ययेनाभिधीयते ॥४८॥**

---

अस्यार्थः --तत्र, पाक इत्यादौ भावादिकृदन्ते साध्यत्वेन प्रतीयमाना क्रिया धातुरूपनिबन्धना, धातुरूपं प्रकृतिभूतं प्रतीतौ निवन्धनं निमित्तं यस्याःसा तथाभूता।

यस्तु तस्याः क्रियायाः सत्त्वभागः सिद्धत्वेन प्रतीयमानो भागो लिङ्गसंख्याद्यन्वयी स घञादिबिबन्धनः, प्रतीतो घञादिनिमित्तक इति।

अयमत्र निष्कर्षः — पाक इत्यादौ कृदन्ते प्रकृतिप्रत्ययरूपभागभेदेन साध्यत्वसिद्धत्वरूपधर्मद्वयवती पाकक्रिया व्यापारकलापरूपा प्रतीयते। तत्र साध्यत्वरूपधर्मवति भागे धातुः प्रतीतिनिमित्तम्। तत्र धातोर्वृत्तिरिति यावत्। सिद्धत्वरूपधर्मवति भागे घञादिः प्रतीतिनिमित्तम्। तत्र भागे घञादेर्वृत्तिरिति यावत्। क्वचित्तु सत्त्वभावस्तु यस्तस्या इति पाठः स चायुक्तः। भावपदस्य क्रियार्थकत्वेन अभेद इति षष्ठ्यर्थानुपपत्तेरिति।

अयं भावः — तिङ्कृत्प्रत्ययभेदेन प्रकृतिप्रत्ययानां शास्त्रेऽसकृदुपदेशाद् उभयोः प्रकृतिभूतयोर्धात्वोः समानानुपूर्वीकत्वेनाभेदाध्यवसायेन प्रक्रियाप्रसिद्ध्यर्थमपोद्धारकल्पनयाऽन्वयव्यतिरेकाभ्यामर्थवत्ताप्रतिज्ञानाद् य एव धातुराख्याते स एवात्र कृदन्त इति तन्निबन्धनोऽपि=कृत्प्रत्ययनिमित्तमपि धातुः तिङ्प्रकृतितस्ततोऽभिन्नः साध्यस्वभावभावः=साध्यस्वभावभाववाचकः। ततश्चात्र=पाक इत्यादौ कृदन्ते धातुभागवाच्यसाध्यार्थापेक्षितानि साधनानि कर्तृकर्मादीनि स्वनिमित्तकं विभक्तिलक्षणं शब्दसंस्कारं प्रयुञ्जत एव=अन्तर्भाविण्यर्थः प्रयोजयन्त्येव। पाक इत्यत्रैव धातोः परस्तु प्रत्ययो घञादिस्तस्य प्रकृत्यर्थस्य क्रियारूपस्य सत्त्वभागं दर्शयति। येन कृदर्थस्य भावस्य लिङ्गसंख्याभ्यां योगः। अतश्च=साध्यसिद्धरूपभिन्नार्थाभिधायित्वाच्च तिङन्तेन समं कृतां=कृदन्तानां अर्थकृतो भेदोऽपि उपपन्न इति ॥४७॥

भिन्नाभिधानत्वे=धर्मद्वयस्य भिन्नशब्दवाच्यत्वे एकस्मिन् धर्मिणि धर्मद्वययोगो निर्दशनम्=दृष्टान्तम्, अत्र=अस्यां कारिकायाम्, आह— बन्धुतेति।

बन्धुशब्दे बन्धुता भेदरूपेण वाच्यावस्थिता। बन्धूनां समूहो बन्धुतेति समूहप्रत्ययेऽभेदेन बन्ध्ववस्था वाच्या। न हि समूहो नाम बन्धुभ्योऽन्यः कश्चित्। एवञ्च यथा प्रकृतिप्रत्ययावत्र भेदाभेदाभ्यामभिधत्तस्तथा सिद्धसाध्यताभ्यां पाकादौ धातुप्रत्ययाभ्यामर्थाभिधानम् ॥ ४८॥

शब्दभेदाच्चात्र विषयभेदेनाविरोध इत्याह--

तत्र यं प्रति साध्यत्वमसिद्धा तं प्रति क्रिया।
सिद्धा तु यस्मिन् साध्यत्वं न तमेव पुनः प्रति ॥४९॥

साधनान्यपेक्ष्य साध्यत्वादनिर्वृत्ता क्रिया धातूपादाना। कृत्प्रत्ययापेक्षा तु

---

अस्यार्थः - बन्धुता बन्धोरसाधारणो धर्मो जात्यादिरूपः, भेदरूपेण बन्धुरूपाद् धर्मिणो भेदरूपेण, बन्धुशब्दे वाचकतासम्बन्धेन व्यवस्थिता। बन्धुशब्दवाच्येति यावत्। बन्धूनां समूह इत्यर्थः। समूहरूपा बन्धुता बन्ध्ववस्थारूपा तु तत्प्रत्ययेनाभिधीयते।

तथा च बन्धुता इत्यत्र एकस्य बन्धुरूपस्य धर्मिणः प्रकृतिप्रत्ययरूपभिन्नशब्दाभिधेयधर्मद्वययोगो यथा न विरुद्ध्यते तथा पाक इत्यादावपि एकस्याः पाकक्रियायाः साध्यत्वसिद्धत्वरूपधर्मद्वययोगो न विरुद्ध्यते, प्रकृतिप्रत्ययरूपाभिधानभेदादिति।

अयं भावः --बन्धुता बन्धोरसाधारणधर्मरूपा धर्मिणो भेदरूपेण वाच्या सती बन्धुशब्दे वाचकतासम्बन्धेनावस्थिता। बन्धूनां समूहो बन्धुतेति समूहार्थप्रत्यये तु धर्मिणोऽभेदेन बन्ध्ववस्था वाच्या न हि समूहो नाम बन्धुभ्योऽन्यः कश्चित्। एवञ्च बन्धुतेत्यत्र यथा प्रकृतिप्रत्ययावत्र धर्मिणे भेदाभेदाभ्यामर्थमभिधत्तस्तथा पाक इत्यादौ धातुप्रत्ययौ सिद्धत्वसाध्यत्वाभ्यां क्रियारूपमर्थमभिधत्त इति ॥ ४८ ॥

प्रत्यर्थं शब्दाभिनिवेश इति भाष्यसिद्धान्तदर्शितदिशा साध्यत्वसिद्धत्ववाचकप्रकृतिप्रत्ययरूपशब्दभेदाच्चात्र=पाक इत्यादौ, विषयभेदेन=अर्थभेदेन, साध्यत्वसिद्धत्वयोरविरोधोऽधिकरणभेदादित्याह तत्र यं प्रतीति।

अस्यार्थः --तत्र=पाक इत्यादौ घञादिकृदन्ते, यं प्रति=यत्साधननिरूपितं क्रियायाः साध्यत्वम, तं प्रति असिद्धा क्रिया, तत्साधननिरूपितस्य क्रियायाः सिद्धत्वसाध्यस्याभावः। यस्मिन् साधने तु क्रिया सिद्धा, यत्साधननिरूपितं तु क्रियायाः साध्यत्वं तमेव प्रति।

सिद्धेति न साध्यत्वं तं प्रति । तथा च साधनयोग इत्यर्थः ॥४९॥

अपेक्षणीयभेदात् स्वभावद्वययोगे दृष्टान्तमाह—

राज्ञः पुत्रस्य नप्तेति न राज्ञि व्यतिरिच्यते ।
पुत्रस्यार्थः प्रधानत्वं न चास्य विनिवर्तते ॥५०॥

राज्ञः पुत्रस्य नप्ता विजयतामित्यत्र नप्त्रपेक्षया पुत्रस्याप्राधान्ये व्यतिरेकेऽपि राजापेक्षया व्यतिरेको न भवति। तथा च तदपेक्षया प्राधान्यं न निवर्तते यथा, एवं पाकार्थस्यापि शब्दद्वयापेक्षे सिद्धसाध्यते न विरुध्येत इत्यर्थः ॥५०॥

---

तथा च काष्ठैः स्थाल्यामोदनस्य पाक इत्यत्र प्रकृत्युपात्तपाकक्रियायाः साध्यत्वेन साधनयोगः, न तु कृत्प्रत्ययोपात्तक्रियायाः सिद्धाया इति। सिद्धत्वेनैव च तस्या लिङ्गसंख्याद्यन्वयित्वम्, सत्त्वरूपत्वात्। साध्यरूपा तु क्रियाऽसत्त्वभूता इति न तस्या लिङ्गसंख्याद्यन्वय इति।

अयं भावः धातूपादाना धातूपात्ता क्रिया साधनान्यपेक्ष्य साध्यत्वादनिर्वृत्ता=असिद्धा। कृत्प्रत्ययोपात्ता तु सिद्धेति न साध्यत्वं तं प्रति= तत् साधननिरूपितम्। तथा च कृत्प्रत्ययोपात्तायाः सिद्धत्वेन न साधनयोग इति ॥ ४९ ॥

अपेक्षणीयभेदात्=निरूपितभेदात्, एकस्य स्वभावद्वययोगे दृष्टान्तमाह— राज्ञः पुत्रस्येति।

अस्यार्थः —राज्ञः पुत्रस्य नप्ता विजयतामित्यत्र नप्त्रपेक्षया पुत्रस्याप्राधान्यरूपव्यतिरेकसत्त्वेऽपि पुत्रस्य पुत्रपदस्यार्थः, राज्ञि राजापेक्षया न व्यतिरिच्यते, अप्राधान्येन व्यतिरिक्तो न भवति, अस्य पुत्रपदार्थस्य राजापेक्षया प्रधानत्वञ्च न निवर्तते। तथा च यथाऽत्र निरूपकभेदादेकस्यैव पुत्रपदार्थस्य प्राधान्याप्राधान्यरूपविरुद्धधर्मद्वययोगः, तथा पाक इत्यादौ एकस्या एव पाकक्रियायाः साधनापेक्षातदनपेक्षाभ्यां साध्यत्वसिद्धत्वरूपधर्मद्वययोग इति।

अयं भावः —राज्ञः पुत्रस्य नप्ता विजयतामित्यत्र नप्त्रपेक्षया पुत्रस्याप्राधान्ये व्यतिरेकेऽपि=अप्राधान्यरूपव्यतिरेके सत्त्वेऽपि राजापेक्षया अप्राधान्यरूपो व्यतिरेको न भवति। तथा च तदपेक्षया=राजापेक्षया प्राधान्यं पुत्रस्य यथा न निवर्तते एवं पाकपदार्थस्यापि प्रकृतिप्रत्ययरूपशब्दद्वयापेक्षे सिद्धत्वसाध्यत्वे न विरुध्येत इति ॥ ५० ॥

सदृशतरं दृष्टान्तमाह—

मृगो धावति पश्येति साध्यसाधनरूपता ।

तथा विषयभेदेन सरणस्योपपद्यते ॥५१॥

धावतीति तिङुपात्तकर्त्रपेक्षया सरणक्रिया साध्या। दर्शनापेक्षया साधनत्वं कर्मतामनुभवति। न ह्यत्र मृगः कर्म, द्वितीयाप्रसङ्गादिति सरणक्रियैव कर्म। तस्याश्च साधनप्रत्यक्षतायां प्रत्यक्षताभिमानात् पश्येति दर्शनक्रियोपपत्तिः।

साधनत्वं न च साध्यावस्थायामेव, अनिष्पन्नस्य परमनुपकुर्वतः साधनत्वायोगात्। उत्तरकालं तु साधनत्वं निर्वृत्तायाः क्रियायाः क्रियान्तरं प्रत्युपपद्यते।

एवं घञादिविषयेऽपि धातुना साध्यत्वेनाभिहितायां क्रियायां प्रत्ययेन सिद्धताभिमानम्। प्रकृतिप्रत्ययौ च प्रत्ययार्थं सह ब्रूत इति सिद्धतायाः प्राधान्यात् साध्यतागता वृत्त्यभावात् कृत्वसुजादयो न भवन्ति।

---

शब्दाभेदात् सदृशतरं दृष्टान्तमाह · मृगो धावतीति।

अस्यार्थः —मृगो धावति, पश्य, इत्यत्र यथा विषयभेदेन, निरूपकभेदेन, सरणस्य धावनस्य, साध्यसाधनरूपता उपपद्यते।

तथा हि धावतीत्यत्र तिङुपात्तकर्त्रपेक्षया धावनस्य साध्यत्वम्, पश्य इति धातूपात्तदर्शनापेक्षया तु तस्य कर्मत्वरूपं साधनत्वमिति। तथा पाक इत्यादौ प्रकृत्या पाकक्रियायाः साध्यत्वाभिधानम्, अप्रत्ययेन तु तस्याः सिद्धत्वाभिधानमुपपद्यत इति कारिकायामुक्तमपि दार्ष्टान्तिकमूहनीयम्।

अयं भावः धावतीत्यत्र तिङुपात्तकर्तृरूपसाधनापेक्षया सरणरूपा धावनक्रिया साध्या। पश्य इति धातूपात्तदर्शनापेक्षया साधनत्वविशेषं कर्मत्वमनुभवति।

न ह्यत्र मृगः कर्म, द्वितीयाप्रसङ्गादिति धावनक्रियैव दर्शनकर्म। धावनस्य च क्रियारूपतयाऽप्रत्यक्षत्वेऽपि तत्साधनस्य मृगस्य प्रत्यक्षत्वेन धावनक्रियायां प्रत्यक्षत्वाभिमानात् पश्येति दर्शनक्रियाकर्मत्वोपपत्तिः। धावनस्य दर्शनसाधनत्वञ्च न साध्यावस्थायामेव। तस्यामवस्थायामनिष्पन्नस्य परोपकारकत्वाभावेन साधनत्वायोगात्। साध्यावस्थोत्तरकालन्तु निष्पन्नायाः क्रियान्तरं प्रति साधनत्वमुपपद्यते।

एवं पाक इत्यादौ घञादिविषयेऽपि धातुना साध्यत्वेनाभिहितायां क्रियायां प्रत्ययेन तस्याः सिद्धताभिधानम्। प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानमिति प्रत्ययार्थभूतायाः सिद्धतायाः प्राधान्यात् साध्यक्रियागतावृत्त्यभावात् कृत्वसुजादयो न भवन्ति, पञ्चकृत्वः पाक इत्यादिरूपैः। कृत्वसुजादयो हि साध्यक्रियागतावृत्तावेव स्वभावतो भवन्तीति।

कृत्यादयस्तु लकारवत् साध्यावस्थं भावं स्वभावादाचक्षते। केवलं तु शब्दान्तरोपादानमेषां साधनमिति क्त्वोऽर्थप्रत्ययसम्बन्धो भवत्येवैषाम्। द्विः शयितव्यं भवता। 'त्रिर्भुक्तं देवदत्तेन, द्विर्भुक्त्वा गतः, द्विर्दत्तवान्' ॥५१॥

तदेवम्—

लकृत्यक्तखलर्थानां तथाऽव्ययकृतामपि।

रूढिनिष्ठाघञादीनां धातुः साध्यस्य वाचकः ॥५२॥

सर्वत्रैवान्वयव्यतिरेकाभ्यां साध्यस्वभावार्थाभिधायित्वं धातोः। संज्ञाशब्दानामपि व्युत्पत्तिकर्मणि क्रियाया उपयोगः। तत्र लकारे क्रिया प्राधान्येनाभिधीयते। कृत्यक्तखलर्थेष्वपि तथैव। निष्ठातो भेदेन क्तो नपुंसकविषय उक्तः।

---

कृत्यादयस्तु=कृत्यक्तखलर्थादयस्तु लकारवत्साध्यावस्थं भावं स्वभावादाचक्षत इति तत्र कृत्वसुजादयो भवन्ति। भेदस्तु केवलं लकारस्य कृत्यादीनाञ्चायमेव, लकारस्य साधनमेकपदोपात्तं पचतीति। एषाम्=कृत्यादीनां तु साधनं शब्दान्तरोपादानम्=शब्दान्तरोपात्तम्, क्रियावाचकपदाद् भिन्नपदोपात्तम्; इति कृत्वोऽर्थप्रत्ययसम्बन्धो भवत्येव कृत्यादीनामिति। कृत्ये द्विः शयितव्यं भवता, नपुंसके भावे क्ते त्रिर्भुक्तं देवदत्तेन। अव्ययकृति द्विर्भुक्त्वा गतः। कर्तरि निष्ठायां द्विर्दत्तवान् इति ॥५१॥

तदेवं पूर्वकारिकया दृष्टान्तविधयोक्तमर्थं दार्ष्टान्तिके योजयन् उपसंहरति—लकृत्यक्तखलर्थानामिति।

अस्यार्थः—तथा पश्य मृगो धावति इत्यत्रेव, लकृत्यक्तखलर्थानां रूढिनिष्ठाघञादीनामव्ययकृतामपि प्रकृतिभूतो धातुः साध्यस्य भावस्य वाचकः, लादयस्तु सिद्धार्थाभिधायिन इति निष्कर्षः।

अयं भावः—सर्वत्रैव=तिङन्ते कृदन्ते च अन्वयव्यतिरेकाभ्यां धातोः साध्यस्वभावभावाभिधायित्वम्। संज्ञाशब्दानामपि गोघटादीनां मणिनूपुरादीनां रथवरूथादीनाञ्च व्युत्पत्तिकर्मणि क्रियाया उपयोगः। तथा हि गच्छतीति गौणति, स्वकर्मणि घटते इति घट इति। मन्यते जनैर्महर्घत्वेनेति मणिरिति। नॄन् श्रोतॄन् पृणाति ध्वनिना इति नूपुरमिति। रमते यत्र येनेति वा रथ इति। व्रियते आच्छाद्यते प्रावरणवस्त्रेणेति वरूथो रथोपस्थ इति। तत्र लकारे क्रिया प्राधान्येनाभिधीयते, कृत्यक्तखलर्थेष्वपि तथैव। निष्ठातो भेदेन नपुंसके भावविषये क्त उक्तः।

एवं साध्यताभिधानात् साधनसम्बन्धो न विरुध्यते । तत्र साधनसम्बन्धादेव साध्यतावसायः । धातुप्रातिपदिकाभ्यां हि स्वार्थस्य सिद्धसाध्यते नावेद्येते ; अपि तु साधनसम्बन्धायत्ता धात्वर्थस्य साध्यताप्रतीतिः । साधनविभक्तयश्च प्रातिपदिकादुत्पद्यमानास्तदर्थस्य सिद्धतामावेदयन्ते । गतमेतत् ।।५२।।

"परिदेवने श्वस्तनी भविष्यन्त्यर्थे" इत्युपसङ्ख्यानं "कालविप्रकर्षात्तूपमानम्" इति प्रत्याख्यातम् । तत्र भाष्य उक्तम्--"न तिङन्तेनोपमानमस्ति" इति । तत् कथं तिङन्तेनोपमानं न भवतीत्येतदुपपादयति—

साध्यस्यापरिनिष्पत्तेः सोऽयमित्यनुपग्रहः ।
तिङन्तैरन्तरेणैवमुपमानं ततो न तैः ।।५३।।

---

एवं धात्वर्थस्य साध्यताभिधानात् साधनसम्बन्धो न विरुद्धयते । तत्र— धात्वर्थे साधनसम्बन्धादेव साध्यतानिश्चयः । यतो धातुप्रातिपदिकाभ्यां स्वार्थस्य सिद्धत्वसाध्यत्वे नाभिधीयेते; अपि तु साधनसम्बन्धाधीना धात्वर्थस्य साध्यताप्रतीतिः । पाकं कुरु पाकेन म्लान इत्यादौ साधनविभक्तयश्च प्रातिपदिकादुत्पद्यमानास्तदर्थस्य सिद्धतामावेदयन्ते, सिद्धत्वाभावे साधनत्वायोगात् । पूर्वेण गतप्रायमेतदिति ।।५२।।

परिदेवने श्वस्तनी भविष्यन्त्यर्थे इत्युपसंख्यानम् ।

अस्यार्थः —परिदेवने विलापे भविष्यन्त्या विभक्तेरर्थे, भविष्यत्सामान्ये ऌडर्थे, श्वस्तनी विभक्तिर्लृडाख्या अनद्यतनी भवति इत्युपसंख्यान कर्तव्यम् । तद् यथा नैषधीयचरिते राजगृहीतहंसविलापे—

मदर्थसन्देशमृणालमन्थरः प्रियः कियद्दूर इति त्वयोदिते ।
विलोक्य दीनान् रुदतोऽथ पक्षिणः प्रिये स कीदृग् भविता तव क्षणः ।। इति ।

अत्र अद्यतने भविष्यति लृटि प्रयोक्तव्ये लुडादेशोऽनद्यतनविभक्तिः प्रयुक्ता 'भविता' इति । इदञ्चोपसंख्यानम् "कालविप्रकर्षात्तूपसंख्यानम्" इत्यनेन वार्तिककृतैव प्रत्याख्यातम् ।

अस्यार्थः —अनद्यतनकाले भविष्यति अनद्यतनभविष्यत्कालाद् विप्रकर्षात्तु अनद्यतनभविष्यत्कालोऽद्यतनभविष्यत्कालस्योपमान भविष्यति 'भविता' 'भविष्यति' इति सिंहो माणवक इतिवत्, इति तयोः सिंहो माणवक इतिवदभेदाध्यवसाये भविष्यन्त्यर्थे श्वस्तनीविभक्तिः स्वतः सिद्धेति तदर्थं वार्तिकं न कर्तव्यमिति ।

तत्र भाष्ये उक्तम्--"न तिङन्तेनोपमानमस्ति" इति । तत् कथं तिङन्तेनोपमानं न भवतीत्येतदुपपादयति—साध्यस्यापरिनिष्पत्तेरिति ।

इह तिङन्तार्थः साध्यस्वभावोऽपरिनिष्पन्नरूपः सोऽयमित्युपमेयेन सहाभेदकल्पनेनोपग्रहीतुं न पार्यते। तिङन्तपदैः सिद्धरूपस्यैवं प्रत्यायनासम्भवात्। अतश्च इयं नु कदा गन्तेत्यादौ क्रिया क्रियया नोपमीयते। तद्यथा सिंहो माणवक इति सोऽयमित्यभेदेनाध्यवसायादिवार्थगर्भः सम्बन्धो नैवमत्र। असिद्धत्वादेव सोऽयमिति सम्बन्धस्यैवाभावात्। ततश्च इवशब्दमन्तरेण सिंहो माणवक इतिवद् अत्राभेदेनोपमानोपमेयभावो नास्ति। इवशब्दप्रयोगे तु भेदेनोपमानोपमेयभावः प्रतीयते, क्रन्दतीव गायतीति। तत्र च साध्यत्वादेव न क्रियागतः सः। साधनगतस्तु यो गायति स क्रन्दतीवेति न क्रियायाः सारूप्यम्; अपि तु सर्वनाम्ना व्यापारे गुणभूतमपि साधनं प्राधान्येन प्रत्यवमृश्य सम्बध्यते। तद्यथा यः पचति तस्यापत्यमिति न तिङन्तार्थस्यापत्ययोगः।

---

अस्यार्थः--तिङन्तद्वयप्रतिपाद्यस्य भावद्वयस्य साध्यस्यापरिनिष्पत्तेः—निष्पत्तेरभावात् परस्परं सोऽयमिति अभेदाध्यवसायरूप उपग्रहो न भवति सिद्धयोरेव अतीतवर्तमानयोरभेदोपग्रहस्येवार्थगर्भस्य सिंहो माणवक इति। ततः तस्मात् कारणात्, साध्यस्यापरिनिष्पत्तिरूपात्, एवमन्तरेण भावद्वयस्य परस्पर सोऽयमित्युपग्रहमन्तरेण, तिङन्तैस्तैः श्वस्तनी विभक्त्यन्तैस्तैः सह भविष्यन्ती विभक्त्यन्तस्य तिङन्तस्य उपमानमुपमितिक्रिया नेति।

अयं भावः—इह तिङन्तार्थः साध्यस्वभावोऽत एवापरिनिष्पन्नरूप उपमेयेन सहोपमानस्याभेदकल्पनेन सोऽयमित्युपग्रहीतुं=ज्ञातुं न पार्यते=न शक्यते। साध्यस्वभावभावाभिधायिभिः तिङन्तपदैः सिद्धरूपस्य भावस्य यदेवं तदसम्भवात्। अतश्च परिदेवनावसरे प्रयुक्ते "इयं नु कदा गन्ता" इत्यादौ भविष्यन्ती क्रिया श्वस्तन्या क्रियया नोपमीयते। तद्यथा सिंहो माणवक इति सोऽयमित्यभेदेनाध्यवसायाद् इवार्थगर्भः सम्बन्धो नैवमत्र तिङन्तार्थयोः। साध्यत्वेनासिद्धत्वादेव सोऽयमिति सम्बन्धस्यैवाभावात्।

ततश्च इवशब्दं विना सिंहो माणवक इतिवद् अत्र=तिङन्तार्थद्वये अभेदेनोपमानोपमेयभावो नास्ति। इवशब्दप्रयोगे तु भेदेनोपमानोपमेयभावः प्रतीयते, क्रन्दतीव गायतीति। तत्र च तिङन्तार्थस्य साध्यत्वादेव न क्रियागत उपमानोपमेयभावः; किन्तु कर्तृरूपसाधनगतः सः यो गायति स क्रन्दतीवेति न क्रिययोः सारूप्यम्=सादृश्यम्; किन्तु धात्वर्थव्यवहारे गुणभूतमपि कर्तृरूपं साधनं सर्वनाम्ना यत्तदन्यतररूपेण प्राधान्येन प्रत्यवमृश्य=प्रत्यवमर्शं परामर्शं तद्विषयत्व प्राप्य, परस्परमुपमानोपमेयभावेन सम्बध्यते। तद्यथा यः पचति तस्यापत्यमिति न तिङन्तार्थस्यापत्ययोगः; किन्तु तत्पदेन सर्वनाम्ना प्राधान्येन परामृष्टस्य कर्तृरूपस्य साधनस्यैव तद्योग इति।

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः' इति तूत्प्रेक्षा। नोपमा, उपमेयानिर्देशात् ॥५३॥

ननु स्वतोऽसिद्धत्वान्मा भूत् क्रियाया उपमानोपमेयभावः, साधनमुखेन तु भविष्यतीत्याशङ्क्याह--

**साधनत्वं प्रसिद्धं च तिङ्क्षु सम्बन्धिनां यतः ।**
**तेनाध्यारोप एव स्यादुपमा तु न विद्यते ॥ ५४॥**

तिङन्तवाच्यविषये ये सम्बन्धिन उपादीयन्ते, तेषां साध्यार्थपेक्षया कारकत्वं च निश्चितम्। अन्यथा सम्बन्धाभावात्। अतः पर्वतश्चलति, नभश्चलति इत्यादौ पर्वतादीनां श्रुत्या तावत् साधनभावः प्रत्याय्यते। स तु यदि नाम नावकल्पत इत्यध्यारोपितसामर्थ्याश्चलने साधनभावमुपयान्त्यगादयः, न त्वतो वाक्याच्चलतीत्युपमानोपमेयभावः प्रतीयते।

---

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः" इति तूत्प्रेक्षा, नोपमा, उपमेयानिर्देशात्। उपमेयलुप्तास्वीकारेऽपि तत्र तात्पर्यविरहः, तात्पर्याभ्युपगमेऽपि प्रागुक्तरीत्या साधनयोरेवोपमानोपमेयभाव इति ॥५३॥

ननु क्रियायाः तिङन्तवाच्यायाः साध्यस्वभावत्वेनासिद्धत्वान्मा भूत् स्वत उपमानोपमेयभावः, साधनद्वारा तु स भविष्यतीत्याशङ्क्याह-- साधनत्वं प्रसिद्धञ्चेति।

अस्यार्थः -क्रियासाधनयोरपि उपमानोपमेयभावो न सम्भवति, तदभावे तन्मुखेन सम्भावितः क्रिययोरपि उपमानोपमेयभावो न सम्भवति, यतश्च यतस्तु तिङ्क्ष् तिङर्थेषु, सम्बन्धिनामर्थानां कर्तृत्वकरणत्वादिरूपं साधनत्वं प्रसिद्धम्, तेन साधनत्वस्य प्रसिद्धत्वेन, आरोप एव, साधनत्वसम्पादकः सामर्थ्याध्यारोप एव स्यात्। उपमा तु न विद्यते, विमाने धावति सति पर्वतो धावति, नभो धावतीति वाक्याद् धावतीवेत्युपमानोपमेयभावस्याप्रतीतेः। अत्र वाक्यार्थबोधे इवपदाध्याहारेण तदर्थबोधे तु लिम्पतीवेत्यत्रेव उत्प्रेक्षा, न तूपमा उपमेयानिर्देशादित्यादिकं सर्वं पूर्ववदूह्यमिति।

अयं भावः --तिङन्तवाच्यक्रियाविषये ये सम्बन्धिनोऽर्था उपादीयन्ते, तेषां क्रियारूपसाध्यार्थपेक्षया कारकत्वञ्च निश्चितम्। अन्यथा तेषां क्रियासम्बन्धासम्भवात्। अतो विमानादौ चलति सति 'पर्वतश्चलति, नभश्चलति' इत्यादौ तिङ्श्रुत्या तावत् पर्वतादीनां साधनभावः प्रत्याय्यते।

स तु यदि नाम नावकल्पते=नाप्रसिद्ध्यति तदाध्यारोपितचलनसामर्थ्या अगादयश्चलने साधनभावमुपयान्ति, न त्वतो वाक्याच्चलति वेत्युपमानोपमेयभावः प्रतीयत इत्युक्तं प्राक्।

तद्यथा शक्त्यतिशयख्यापनाय कश्चिदभिधत्ते पर्वतं भिनत्ति, महोदधिं प्रतरतीति। नास्माद् भिनत्ति इवेत्यादिप्रतिपत्तिः।

अपि तु सम्भावितसामर्थ्यं साधनमभिसम्बध्यते क्रियया। एवं 'बिभेत्यल्पश्रुताद् वेदः' इत्यादावध्यारोपेणैव सम्बन्धो नोपमयेति कारकमुखेनापि क्रियाया-मुपमानोपमेयभावाभावः।

इत्थं च इयं नु कदा गन्तेत्यादावध्यारोपेणैवोपपत्तिर्व्याख्येया। भविष्यत्सामान्ये भविष्यदनद्यतनत्वेन दीर्घकालतया गमनस्य विवक्षिते तत्र गन्तृत्वाध्यारोपः॥५४॥

इतश्च क्रियोपमानोपमेयभावो नास्तीत्याह—

**न्यूनेषु चासमाप्तार्थमुपमानं विधीयते।**
**क्रिया चैवाश्रये सर्वा तत्र तत्र समाप्यते॥ ५५॥**

चन्द्र इव दर्शनीयं मुखमस्या इत्यादावुपमानं परिपूर्णगुणं प्रसिद्धम्, उपमेयं

---

किञ्च, देवदत्तस्य शक्त्यतिशयख्यापनाय कश्चिदभिधत्ते देवदत्तः पर्वतं भिनत्ति, महोदधिं प्रतरतीति। नास्माद् भिनत्तीत्यादिप्रतीतिः। तथा सति शक्त्यतिशयप्रख्यापकत्वाभावेन विवक्षितार्थविरुद्धार्थकारित्वापत्तेः।

अपि त्वध्यारोपेण सम्भावितसामर्थ्यं साधनं कर्तृरूपं पर्वतादिकं चलनक्रिययाऽभिसम्बद्धयते। एवं बिभेत्यल्पश्रुताद् वेद इत्यादौ चेतनत्वाध्यारोपेणैव वेदस्य भयसम्बन्धो न चलतीवेत्युपमयेति कारकमुखेनापि क्रियायामुपमानोपमेयभावस्याभावः।

इत्थञ्च इयं नु कदा गन्ता इत्यादौ अध्यारोपेणैव=भविष्यत्सामान्ये दीर्घकालतया भविष्यदनद्यतनत्वाध्यारोपेणैव उपपत्तिर्व्याख्येया।

तथा हि—गमनस्य भविष्यत्सामान्ये दीर्घकालतया भविष्यदनद्यतनत्वेन विवक्षिते तत्र=इदमर्थे गन्तृत्वारोप इति॥ ५४॥

इतश्च=एतत्कारिकायां वक्ष्यमाणहेतोश्च क्रियया सह क्रियान्तरस्योपमानोपमेयभावो नास्तीत्याह—न्यूनेषु चासमाप्तार्थमिति।

अस्यार्थः—न्यूनेषु च असमाप्तार्थमिति अपूर्णधर्मकमुपमानं विधीयते। यथा 'चन्द्र इव मुखम्' इत्यत्र चन्द्रे ये गुणा आह्लादकत्ववर्तुलत्वशीतलत्वादयो न ते सर्वे तादृशा एव च मुखे वर्तन्ते; किन्तु न्यूना अपकृष्टाश्च। क्रिया च=क्रिया तु सर्वैव तत्र तत्र आश्रये समाप्यते, न तु न्यूनत्वादपरिसमाप्ता भवतीति न क्रिययोरुपमानोपमेयभाव इति।

अयं भावः—'चन्द्रइव दर्शनीयं मुखमस्याः' इत्यादावुपमानं परिपूर्णगुणं

तु न्यूनगुणमिति। क्रिया तु साधनसाध्या स्वाधारे परिसमाप्ता सर्वैव समेति नोपमाविषयः ॥५५॥

अत्रोदाहरणार्थमाह—

येनैव हेतुना हंसः पततीत्यभिधीयते ।
आतौ तस्य समाप्तत्वादुपमार्थो न विद्यते ॥ ५६ ॥

गमिक्रियां साधयन् हंसः पक्षाभ्यां पततीत्युच्यते, आतिरपि पक्षिविशेषस्ताभ्यामेव स्वपक्षाभ्यां तथैव गमिक्रियां निष्पादयन्ती पततीत्यभिधीयत इति प्रत्याश्रयपरिसमाप्तत्वात् क्रियाया न्यूनाधिकभावाभावात् सजातीयत्वे सति गवय इव गवय इतिवदुपमानोपमेयभावो नास्तीत्यर्थः। आतिः पतति हंस इवेति तु साधनयोरुपमानोपमेयभावो न तिङन्तवाच्ययोः क्रिययोः ॥५६॥

ननु सजातीययोः क्रिययोर्मा भूदुपमानोपमेयभावः, विजातीययोस्तु स्यादित्याशङ्क्य तत्रापि निषेधति—

क्रियाणां जातिभिन्नानां सादृश्यं नावधार्यते ।
सिद्धेश्च प्रक्रमे साध्यमुपमातुं न शक्यते ॥ ५७ ॥

---

प्रसिद्धमुपमेयं तु न्यूनगुणमिति । क्रिया तु साधनसाध्या स्वाधारे परिसमाप्ता सर्वाऽपि समेति नोपमाविषयः । सिद्धस्य न्यूनेषु अपरिसमाप्तगुणकस्य चैवोपमानत्वादिति ॥ ५५ ॥

अत्र=पूर्वकारिकोक्तेऽर्थे उदाहरणार्थमाह—येनैव हेतुनेति ।

अस्यार्थः—येनैव हेतुना पक्षाभ्यां गमनक्रियासाधनरूपेण हेतुना 'हंसः पतति' इत्यभिधीयते, तस्य पक्षाभ्यां गमिक्रियासाधनरूपस्य हेतोः, आतौ=पक्षिविशेषे, समाप्तत्वात् पर्याप्त्या वर्तमानत्वात्, आतिपतने उपमारूपोऽर्थ उपमार्थ उपमानोपमेयभावरूपो न विद्यत उपमायाः प्रयोजनं न विद्यत इत्यर्थो वा हंसपतनापेक्षया आतिपतने न्यूनाधिकभावाभावादिति ।

अयं भावः—हंसः पक्षाभ्यां गमिक्रियां साधयन् पततीत्युच्यते, पक्षिविशेष आतिरपि ताभ्याम्=तत्सदृशाभ्यामेव स्वपक्षाभ्यां तथैव हंसवदेव गमिक्रियां निष्पादयन्ती पततीत्यभिधीयत इति प्रत्याश्रयपरिसमाप्तत्वात्=प्रत्याश्रयं पर्याप्तत्वाद् आतिपतनक्रियाया हंसपतनापेक्षया न्यूनाधिकभावाभावात् सजातीयत्वादेव 'गवय इव गवयः' इत्यत्रेवोपमानोपमेयभावो नास्ति, यस्तु 'हंस इवातिः पतति' इति प्रयोगस्तत्र तु कर्तृसाधनरूपयोरातिहंसयोरेवोपमानोपमेयभावः, न तिङन्तवाच्ययोः पतनक्रिययोरिति ॥ ५६ ॥

ननु सजातीययोः क्रिययोर्मा भूदुपमानोपमेयभावः, न्यूनाधिकभावाभावात्, विजातीयक्रिययोस्तु स स्यादित्याशङ्क्य तत्रापि त निषेधति—क्रियाणां जातिभिन्नानामिति ।

भिन्नजातीयाः पचति-गच्छतीत्यादयः क्रियाः परस्परतोऽत्यन्ताय व्यावर्तमानाः सादृश्यनिबन्धनमुपमानोपमेयभावं नासादयन्ति। इदं तदिति सिद्धतया परामृष्टमुपमानं क्रियारूपमन्यत्र साध्यस्वभावे क्रियारूपे सम्बन्धमुपनेतुमशक्यम्, आख्यातात् प्रतीयमानायाः क्रियायाः सिद्धत्वेनायोगात्।

तदेवं तिङन्तार्थस्योपमानोपमेयभावाभावात् कालविप्रकर्षात् तूपमानम्' (वा० ३।३।१५) इत्यस्य वार्तिकस्यायमर्थः –

गमनाध्ययनयोरलसविषयतया सम्भावनायां भविष्यत्सामान्यमपि दीर्घकालतयोपमायानद्यतनकालविवक्षायां प्रत्ययः सिद्धः। अनद्यतन इवायं भविष्यत्काल इत्यर्थः। "लक्षणहेत्वोः क्रियायाः" (पा० ३।२।१२६) इति तु लक्ष्यलक्षणभावस्य शतृशानच्प्रयोगेण प्रतीतेर्भवति क्रियायास्तद्योगः। एवं हेतुहेतुमद्भावस्य

---

अस्यार्थः --जातिभिन्नानाम्, विजातीयानां क्रियाणां सादृश्यं नावधार्यते, तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं हि सादृश्यम्, तच्च जातिभेदे नास्तीति। क्रियायां साधनैः साध्यमानायां सिद्धेः प्रक्रमे, प्रारम्भे च, साध्यं क्रियारूपवस्तूपमातुं न शक्यते, सिद्धस्यैवोपमानोपमेयभावसम्भवादिति।

अयं भावः —भिन्नजातीयाः = भिन्नानुपूर्वीकपदबोध्यत्वभिन्नाकारवत्त्वाभ्यां भिन्नधर्मवत्यः पचति-गच्छतीत्यादिपदादनुभूयमानाः क्रियाः परस्परतोऽत्यन्तं व्यावर्तमानाः सादृश्यप्रयुक्तमुपमानोपमेयभावं न लभन्ते।

इदं तदिति च = इदंपदेन तत्पदेन वा सिद्धतया परामृष्टं पाकादिकं क्रियारूपमन्यत्र गच्छतीत्यादितिङन्तपदबोध्ये क्रियारूपे साध्यस्वभावे 'इदमिव गच्छति', 'तदिव गच्छति' इत्यादिरूपेण सम्बन्धमुपनेतुमशक्यम्, आख्यातात् प्रतीयमानायाः क्रियायाः साध्यस्वभावायाः सिद्धेन अयोगात् = सिद्धेन क्रियारूपेण सह सम्बन्धासम्भवात्। तदेवं तिङन्तार्थस्य क्रियारूपस्योपमानोपमेयभावासम्भवात् कालविप्रकर्षात् तु उपमानमित्यस्य वार्तिकस्यायमर्थः—गमनाध्ययनयोरलसविषयकतया = अलसकर्तृकतया सम्भावनायां भविष्यत्सामान्यमपि 'सिंहो माणवकः' इतिवद् दीर्घकालतया अनद्यतनोऽयमित्युपमाया अनद्यतनकालतया विवक्षायां भविष्यत्सामान्ये लुट्प्रत्ययः सिद्धः।

अनद्यतन एवायं भविष्यत्काल इति अनद्यतनोऽयमिति उपमानाध्यासाभिलापस्यार्थः। लक्षणहेत्वोः क्रियाया इति तु लक्ष्यलक्षणभावस्य शतृशानच्प्रत्ययप्रयोगेण = शतृशानजन्तप्रयोगेण प्रतीतेर्भवति 'शयाना भुञ्जते यवनाः' इत्यादौ क्रियायास्तदन्तवाच्यायास्तद्योगः = लक्ष्यलक्षणभावरूपो योगः।

लिङ्प्रत्ययादप्यवगतेः। इतिशब्दप्रयोगादपि हन्तीति पलायते वर्षतीति धावतीति विशेषणविशेष्यभावोऽपि न तिङन्तवाच्यावस्थायाम्; अपि तु स्वातन्त्र्येण परामर्शे सति क्रियाया उपपद्यते। तथैवोपमानोपमेयभावस्तु न सम्भवति न्यूनाधिकभावाभावात्। पचतिकल्पं पचतितरामिति क्रियासम्बन्धिना न्यूनाधिकभाव इत्याहुः ॥५७॥

इदानीमिदं विचार्यते--इह 'धातुवाच्योऽर्थः साध्यस्वभावो घञादिवाच्यस्तु सिद्धस्वभाव.' इति भाष्ये अनयोर्भावयोर्बाह्याभ्यन्तरयोर्भेदोऽभिहितः। तमेव दृष्टान्तोपदर्शनेन व्युत्पादयितुमाह--

---

एवं हेतुहेतुमद्भावस्य 'हरिं नमेत् चेत् सुखं यायात्' इत्यादौ लिङ्प्रत्ययादप्यवगतेः, हन्तीति पलायते, वर्षतीति धावति इत्यादौ इतिशब्दप्रयोगादप्यवगतेर्भवति, 'अर्जयन् वसति' इत्यादौ शत्रन्तवाच्यायाः क्रियाया हेतुहेतुमद्भावरूपो योगः। क्रियाया विशेषणविशेष्यभावोऽपि न तिङन्तवाच्यावस्थायाम्।

अपि तु स्वातन्त्र्येण क्रियायाः परामर्शे सति उपपद्यते। तद्यथा 'अश्वो धावति' तच्छोभनमिति तत्पदेन स्वातन्त्र्येण परामृष्टस्य धावनस्य शोभनपदार्थेन सह विशेषणविशेष्यभावः। तथैवोपमानोपमेयभावस्तु न सम्भवति, न्यूनाधिकभावाभावादिति हेलाराजः।

वयं तु ब्रूमः --यद् हंसः पतति तदिवातिः पततीति रीत्या सर्वनाम्ना स्वातन्त्र्येण पतनक्रियायाः परामर्शे भवत्येव क्रियाया उपमानोपमेयभावरूपो योग इति। न्यूनाधिकभावस्तु वर्तत एव।

न हि हंसपतनसममातेः पतनम्, शक्तिभेदात्। तस्माद् यद्ययं प्रयोगो न भवति तदा अनभिधानं शरणम्, न तु क्रिययोर्न्यूनाधिकभावाभाव इति। पचतिकल्पम्, पचतितराम् इत्यादौ आद्ये न्यूनत्वम्, द्वितीये तु अतिशयरूपमाधिक्यं क्रियासम्बन्धिनां साधनानामेव, न तु क्रिययोरित्याहुः।

अत्रारुचिबीजन्तु क्रियायां प्रतीयमानयोर्न्यूनाधिकभावयोरपलापस्याशक्यत्वमिति। न तिङन्तेनोपमानमस्तीति भाष्यन्तु प्रायोवादरूपमेकदेशयुक्तिः। तस्मात् कालविप्रकर्षात् तूपमानमिति वार्तिकं सुस्थिरमिति ॥ ५७ ॥

गतमदः--भविष्यत्सामान्ये परिदेवने श्वस्तनीविभक्तिविधायकप्रागुक्तवार्तिकतत्प्रत्याख्यानवार्तिकतत्प्रत्याख्यानभाष्यसम्बद्धं विमर्शनं गतम्। इदानीमिदं विचार्यते--इह धातुवाच्यः क्रियारूपोऽर्थः साध्यस्वभावः, घञादिवाच्यस्तु स एव सिद्धस्वभाव इति भाष्ये अनयोर्भावयोर्बाह्याभ्यन्तरयोर्भेदोऽभिहितः। दृष्टान्तो-

वनं वृक्षा इति यथा भेदाभेदव्यपाश्रयात् ।
अर्थात्मा भिद्यते भावे स बाह्याभ्यन्तरे क्रमः ॥ ५८ ॥

वृक्षसमुदायो वनमित्यभेदेन कथ्यते । वृक्षा इति तु भेदेन नानात्वेन । तथा च भिद्यतेऽर्थस्वभावो न शब्दशक्तिमात्रकृतोऽत्र भेद इत्यात्मग्रहणम् । भेदाभेदयोरन्यत्वात् समुदायावयवौ भिन्नावेव । एवं धात्वर्थो भावोऽभ्यन्तरे प्रकृतिरूपे वाच्यतया भावः प्राथमकल्पिकत्वाद् आभ्यन्तरः । स साध्यमानावस्थतया घञादिप्रत्ययवाच्याद् बाह्यात् सिद्धरूपाद् भावाद् भिद्यते । प्रकृतिवाच्यो हि भावोऽभेदेन प्रतीयते साध्यमानावस्थस्य सिद्धधर्मसंख्यायोगाभावात् । साधनभेदप्रतीत्यैव चाख्याते भेदप्रतीतेर्धातुरभेदेनैव क्रियामाचष्टे । घञादिप्रत्यय-

---

पदर्शनेन तमेव = भेदमेव व्युत्पादयितुमाह--वनं वृक्षा इतीति ।

अस्यार्थः --यथा भेदाभेदव्यपाश्रयात् समुदायावयवयोर्भेदाश्रयणाद् वृक्षा इति । तयोरभेदाश्रयणात्तु वनमिति प्रतीयमानोऽर्थात्मा, समुदायरूपार्थस्वरूपम्, अवयवरूपार्थस्वरूपश्च परस्परं भिद्यते न तु शब्दशक्तिमात्रकृतस्तयोर्भेदः, स एव क्रमः प्रकारः, बाह्याभ्यन्तरे भावे भवति । तत्र पाक इत्यादौ बाह्यो भावो घञादिवाच्यः, आभ्यन्तरस्तु भावो धातुवाच्यः । यथा दृष्टान्ते समुदायावयवयोर्भेदो भेदाभेदसमानाधिकरणस्वासाधारणधर्मकृतो न तु शब्दशक्तिमात्रकृतस्तथा दार्ष्टान्तिके पाक इत्यादौ बाह्याभ्यन्तरयोर्भावयोर्भेदः सिद्धत्वसाध्यत्वरूपस्वासाधारणधर्मप्रयुक्त इति सम्पूर्णपद्यार्थनिष्कर्ष इति ।

अयं भावः --वृक्षसमुदायो वनमित्यभेदेन = अवयवगतनानात्वपरिहारेण कथ्यते । वृक्षा इति तु भेदेन अवयवगतनानात्वरूपेण । तथा च = तेन प्रकारेण च समुदायगतेनाभेदरूपेण प्रकारेण, अवयवगतेन च भेदरूपेण प्रकारेण समुदायरूपस्यावयवरूपस्य चार्थस्य स्वभावः = स्वरूपं भिद्यते, न शब्दशक्तिमात्रकृतोऽत्र भेद इति बोधयितुमर्थात्मा इत्यत्रात्मग्रहणम् । स्वगतयोर्भेदाभेदयोरन्यत्वात् समुदायावयवौ भिन्नावेव ।

एवं धात्वर्थो भावः पदाभ्यन्तरे प्रकृतिरूपे धातौ वाच्यतया भवः प्राथमकल्पिकत्वाद् = धातोः प्राथम्येन घञर्थभावापेक्षया प्रथमोपस्थितिकत्वाद् आभ्यन्तरः = अन्तरजः । स साध्यमानावस्थतया घञादिप्रत्ययवाच्याद् धात्वर्थभावापेक्षया द्वितीयकल्पिकत्वेन बाह्यात् सिद्धरूपाद् भावाद् भिद्यते । यथायं प्रकृतिप्रत्ययाभ्यां वाच्यस्य भावद्वयस्य परस्परं भेदप्रयोजको भेदाभेदौ ।

तथा हि पचतीत्यत्र प्रकृतिवाच्यो हि भावोऽभेदेन = भेदसमानाधिकरणसंख्याराहित्येन प्रतीयते, साध्यतया सिद्धधर्मसंख्यायोगाभावात् ।

पचति, पचतः, पचन्ति इत्यादौ आख्याते च कर्तृरूपसाधनभेदप्रतीत्यैव तिङ्कर्तृभेदप्रतीतेर्धातुरभेदेनैव = भेदसमानाधिकरणसंख्याराहित्येनैव क्रियां साध्यरूपामाचष्टे ।

वाच्यस्तु भावः सिद्धतयाभिधानात् लिङ्गसङ्ख्याभ्यां भेदेनैव प्रत्याय्यते पाकः पाकौ पाका इति।

आख्याते च साध्यमानावस्थस्य भावस्य प्राधान्यात् स्वधर्मेण कालेन साधनधर्मेण च प्रत्यक्त्वादिना पुरुषेण योगः। फलवत्वाच्च क्रियायाः कर्त्रभिप्रायादिनात्मनेपदादिद्योत्येन फलधर्मेणोपग्रहेण योगः। घञादिविषये तु सिद्धत्वाद् द्रव्यायमाणत्वान्नैवं कालादियोगः केवलं द्रव्यधर्मेण लिङ्गेन संख्यया च योगः। तदेवमनयोः प्रकृतिप्रत्ययार्थयोर्भावयोर्बाह्याभ्यन्तरयोर्भेदः। यस्तु लकारवाच्यो भावः शय्यते स्थीयत इत्यादौ, असौ धात्वभिधेयामेव साध्यतामनुवर्तते, न तु घञादाविव सिद्धरूपस्, स्वात्मावस्थो हि भावः साधनात्मना सिद्धतया चासंसृष्टो लकारवाच्यः। धातुवाच्यस्तु साध्यतया युक्त इति नायं लकारः स्वार्थिकः। तद्यथा स्वात्मप्रतिष्ठे प्रातिपदिकार्थे विधीयमाना प्रथमा न स्वार्थिकत्वेन व्यवह्रियते। धात्वभिधेयसाध्यतानुवर्तनाच्चास्य भावस्य कालादिना योगः।

भाव्यत्वाच्च कर्त्रा न वियुज्यतेऽयमिति द्विविधो बाह्योऽपि भावो व्यवह्रियते

---

घञादिप्रत्ययवाच्यस्तु भावः सिद्धतयाऽभिधानाद् भेदेनैव लिङ्गसंख्याभ्यां प्रत्याय्यते पाकः पाकौ पाका इति। आख्याते साध्यमानावस्थस्य भावस्य प्राधान्याच्च=प्राधान्येन प्रत्ययाच्च स्वधर्मेण=भावधर्मेण कालेन, कर्तृरूपसाधनधर्मेण च प्रत्यक्त्वपराक्त्वादिना पुरुषेण=मध्यमोत्तमपुरुषादिपदवाच्येन योगः=यथायथं साक्षात् परम्परया वा सम्बन्धः। क्रियायाः फलवत्वाच्च आत्मनेपदादिद्योत्येन कर्त्रभिप्रायादिना=कर्तृगामित्वादिना फलधर्मेण उपग्रहेण=उपग्रहपदार्थेन परस्मैपदात्मनेपदरूपेण परम्परया योगः।

घञादिविषये=घञादिकृदर्थे तु भावे नैवम्=नाख्यातवाच्ये भावे इव कालपुरुषादियोगः। घञाद्यर्थस्य भावस्य सिद्धत्वेन द्रव्यायमाणत्वात्। केवलं तस्य द्रव्यधर्मेण लिङ्गेन पुंस्त्वादिना संख्यया च योगः पाक. पाकौ इति। तदेवमनयोः प्रकृतिप्रत्ययवाच्ययोर्भावयोर्बाह्याभ्यन्तरयोर्भेदः।

यस्तु लकारवाच्यो भाव. शय्यते स्थीयते इत्यादौ, असौ क्रियाविशेषणतया धातुवाच्यामेव साध्यतामनुवर्तते=अनुकरोति न तु घञादाविव कृदर्थत्वसाम्येन सिद्धरूपः, किन्तु धातुवाच्यां साध्यतामनुवर्तमान एव सिद्धरूपः। स्वात्मावस्थो हि=धातुवाच्यतया साध्यरूपापन्न एव हि भावः साधनात्मना=साधनरूपेण कर्त्रादिना सिद्धतया वा स्वधर्मेण संसृष्ट एव धातुवाच्यां साध्यतामनुकुर्वन् लकारवाच्यः शय्यते इत्यादौ।

धातुवाच्यस्तु भावः साध्यतया युक्त इति नायं लकारः स्वार्थिकः, साध्यत्वापन्नभावानभिधानात्। तद्यथा स्वात्मप्रतिष्ठे प्रातिपदिकार्थे प्रातिपदिकेनाभिहिते

तिङभिहित एकः कृदभिहितोऽपर इति। तुमुन्नादिविधौ च क्रियासामान्येन सिद्धसाध्यरूपोभयधर्मानाश्रयेण उपपदमुपादीयते। तेन भोक्तुं पाकः कारकस्य व्रज्येत्यादिसिद्धिः। साध्यमानावस्थमन्यदेवोपलक्षितं वा क्रियारूपं धात्वर्थमाश्रित्य तुमुन्नादिविधिरित्यदोषः।

अभ्यावृत्तिस्तु भाव्यमानधर्म इति सिद्धताविषये तदभावात् कृत्वोऽर्थप्रत्ययाः पाकादिप्रयोगे न भवन्ति। तदेवं घञादिवाच्यो विलक्षणो भावः।

तत्र "कर्तरि कृत्" (३।४।६७) इति वचनात् कर्तरि घञादीनां प्राप्तौ "भावे" (३ ३।१८) इत्यर्थो निर्दिश्यते। स च प्रत्ययविधेः प्राधान्याद् गुणभूतोऽत्रेति गुणे सङ्ख्याविवक्षायां यथाश्रुतस्य च लिङ्गस्य विवक्षायां वचनान्तरे

---

सति तत्रैव विधीयमाना प्रथमा न स्वार्थिकत्वेन व्यवह्रियते, प्रातिपदिकार्थातिरिक्तप्रातिपदिकार्थधर्मभूतस्वार्थाभिधानात्। तद्यथा--इवे प्रतिकृतौ, कुत्सिते, अल्पे, ह्रस्वे वा अर्थे विधीयमानः कन् स्वार्थिकः। प्रातिपदिकार्थातिरिक्तप्रातिपदिकार्थधर्मभूतसादृश्यकुत्सितत्वाल्पत्वादिरूपस्वार्थाभिधायकत्वात्। धात्वभिधेयसाध्यतानुवर्तनाच्च=साध्यतानुकरणाच्च लकारवाच्यस्य भावस्य कालोपग्रहादिना योगः। भाव्यत्वाच्च=साध्यत्वाच्च नान्तरीयकेण कर्त्रा न वियुज्यतेऽयम्=लकारवाच्यो भाव इत्येवं बाह्योऽपि भावो द्विविधो व्यवह्रियते, तिङभिहित एकः, कृदभिहितोऽपरः। तुमुन्नादिविधौ च सिद्धसाध्यरूपोभयधर्मानाश्रयेण क्रियासामान्येन उपपदम्=उपपदार्थः क्रियारूप उपादीयते। सिद्धत्वाश्रयणे हि लिङ्गसंख्यायोगेन तुमुन्नन्तस्याव्ययत्वहानिः।

साध्यत्वाश्रयणे तु तुमुन्नन्तार्थस्य प्राधान्यापत्त्याऽनुभवसिद्धस्य विशेषणत्वस्य हानिरिति। तेन भोक्तुं पाकः, कारकस्य व्रज्येत्यादिसिद्धिः। भोजनफलकः पाको न तु विक्रयार्थो न वा जीविकानिर्वाहार्थः। भविष्यत्कालिकयत्किञ्चित्कर्मकक्रियाकर्तृकर्तृका व्रज्येति च यथायथं वाक्यद्वयस्यार्थः। साध्यमानावस्थमन्यदेव=अप्राधान्याविरोधित्वेन अन्यदेव उपलक्षितं वा=साध्यत्वेनोपलक्षितं वा, क्रियारूपमुपपदधात्वर्थमाश्रित्य तुमुन्नादिविधिरित्यदोषः=अव्ययत्वहानिविशेषणत्वहानिरूपप्रागुक्तदोषद्वयाभावः।

अभ्यावृत्तिस्तु भाव्यमानधर्म इति सिद्धताविषये तदभावात् कृत्वोऽर्थप्रत्ययाः सिद्धभावाभिधायिपाकादिप्रयोगे न भवन्ति।

तदेवं घञादिवाच्यो भावो धातुवाच्याद् भावाद् विलक्षणः। तत्र "कर्तरि कृत्" इति वचनात् कर्तरि घञादीनां प्राप्तौ भाव इत्यर्थो निर्दिश्यते। स च=भाव इत्यर्थनिर्देशश्च अत्र प्रत्ययविधेः प्राधान्याद् गुणभूत इति गुणीभूतेऽर्थनिर्देशे 'भावे' इत्यत्रैकत्वसंख्याविवक्षायां यथाश्रुतस्य च लिङ्गस्य पुंस्त्वरूपस्य विवक्षायां वचनान्तरे

लिङ्गान्तरे च प्रत्यया न स्युरिति वार्तिककारेण "भावे सर्वलिङ्गो निर्देशः" (वा० ३।२।१८) कर्तव्यतया चोदितः। लिङ्गग्रहणस्योपलक्षणार्थत्वात् संख्यापि गृह्यते तत्र। तेन भूतौ भवने भावे भावयोरित्यादिनिर्देशः कर्तव्यः। तथा च पक्तिः पचनं पाकः पाकावित्यादिसिद्धिरित्यर्थः॥ ५८॥

अत्र भाष्यकारेण 'निर्देशे नान्तरीयकत्वाल्लिङ्गसंख्यमतन्त्रम्' इति सर्वतः सिद्धिरुपपादिता। तत्र कथं नान्तरीयकत्वेनातन्त्रत्वमित्युपपादयति—

सामान्ये भाव इत्यत्र यल्लिङ्गमुपलभ्यते।
भेदानामनुमेयत्वान्न तत् तेषु विवक्ष्यते॥ ५९॥

क्रियासामान्यवचनाः कृभ्वस्तय इति भवतिना अर्थनिर्देशः क्रियमाणः सर्वधात्वर्थविषयः कृतो भवतीति 'भावे' इति सामान्यचोदनायां भावशब्दार्थे

---

लिङ्गान्तरे च भावप्रत्यया न स्युरिति वार्तिककारेण भावे सर्वलिङ्गो निर्देशः= नपुंसकलिङ्गरूपलिङ्गसर्वनामनिर्देशः कर्तव्यतया चोदितः। लिङ्गग्रहणस्योपलक्षणार्थत्वात् संख्याऽपि गृह्यते तत्र=तस्मिन् वार्तिके।

तेन भूतौ भवने भावे भावयोरित्यादिनिर्देशः कर्तव्य इति वार्तिककाराभिप्रायः।

वस्तुतस्तु नपुंसकलिङ्गरूपलिङ्गसर्वनाम्ना निर्देशः कर्तव्य इति वार्तिककृदभिप्रायो लाघवात्। तथा च पक्तिः, पचनम्, पाकः, पाकावित्यादिसिद्धिरिति॥ ५८॥

अत्र भाष्यकारेण "निर्देशे नान्तरीयकत्वाल्लिङ्गसंख्यमतन्त्रम्" इति सर्वतः सिद्धिः=सर्वस्मिन् लिङ्गे वचने च घञादिप्रत्ययसिद्धिः उपपादिता।

अस्यार्थः—भावे इति अर्थनिर्देशे लिङ्गसंख्ययोर्नान्तरीयकत्वादवश्यंभावित्वाद् उपात्तं लिङ्गसंख्यं=लिङ्गं संख्या च, अतन्त्रम्=अविवक्षितमिति। तत्र कथं नान्तरीयकत्वेनातन्त्रत्वमित्युपपादयति—सामान्ये भाव इत्यत्रेति।

अस्यार्थः—सामान्ये=क्रियासामान्यबोधके भाव इत्यत्र निर्देशे यल्लिङ्गमुपलभ्यते तत् पुंस्त्वरूपम्।

इदञ्च सख्याया अप्युपलक्षणम्। तेन या च संख्या उपलभ्यत एकत्वरूपा इत्यर्थः। तेषु निर्देशेषु तल्लिङ्गं संख्या च न विवक्ष्यते, भेदानाम्=लिङ्गभेदानामन्येषां संख्याभेदानाञ्चानुमेयत्वात्। निर्विशेषं न सामान्यमिति न्यायेन हि सामान्यनिर्देशे विशेषा अनुमीयन्त इति। तथा चोपात्तलिङ्गसंख्ययोर्विवक्षायां लिङ्गसंख्याविशेषानुमापकप्रमाणविरोध इति।

अयं भावः—कृभ्वस्तयः क्रियासामान्यवचना इति सिद्धान्तानुसारेण 'भावे' इत्यत्र भवतिना भूधातुना क्रियासामान्यार्थकेन अर्थनिर्देशः क्रियमाणः सर्वधात्वर्थ-

सामान्यरूपे भिन्नार्थप्रकृतीनां प्रत्ययानामसम्भवाद् विशेषपर्यवसाने यथाविशेषं स्त्रियां भावे नपुंसके भावे इति भावसामानाधिकरण्यान्यथानुपपत्त्या प्रत्ययविधेर्भूयोऽनुग्रहानुरोधान्नियतव्यक्तिगतलिङ्गसंख्योपादानमतन्त्रमविवक्षितमित्यर्थः। सर्वव्यक्त्यनुयायि हि भवत्यर्थसामान्यमत्र निर्दिदिक्षितम्।

तच्च निराश्रयं निर्देष्टुमशक्यमिति नान्तरीयकं नियतव्यक्त्युपादानम्।

अन्येषां तु व्यक्तिविशेषाणां सामर्थ्यात् सन्निधानमिति यथाविशेषं सर्वलिङ्गसंख्यापरिग्रहः। सकलविशेषपरिग्रहाय सामान्यचोदनायां नान्तरीयकनियतोपात्तविशेषनिष्ठतायोगात्।

---

विषयकः कृतो भवतीति भावे इति क्रियासामान्यचोदनायाम्=क्रियासामान्यविधायके शब्दे भावशब्दार्थे क्रियासामान्यरूपे सति भिन्नार्थप्रकृतीनाम्=क्रियाविशेषार्थकपच्यादिप्रकृतिकानां घञादिप्रत्ययानामसम्भवाद् भावे इत्यस्य क्रियाविशेषपर्यवसाने यथाविशेषं पाकादिरूपं क्रियाविशेषमनुसृत्य स्त्रियां भावे, नपुंसके भावे, इति भावसामानाधिकरण्ययान्यथानुपपत्त्या=पुंस्त्वविशिष्टभवत्यर्थसामानाधिकरण्यान्यथानुपपत्त्या प्रधानस्य प्रत्ययविधेर्भूयोऽनुग्रहानुरोधात्=पुंस्त्वादिरूपलिङ्गत्रयविशिष्टपचत्याद्यर्थक्रियाविशेषे घञादिप्रत्ययसिद्धिरूपभूयोऽनुग्रहानुरोधाद् भवत्यर्थरूपनियतव्यक्तिगतलिङ्गसंख्योपादानमतन्त्रमविवक्षितमित्यर्थः। सर्वधात्वर्थक्रियाविशेषरूपव्यक्त्यनुयायि हि भवत्यर्थक्रियासामान्यमत्र निर्दिदिक्षितम्।

तच्च निराश्रयं निर्देष्टुमशक्यमिति नान्तरीयकं पुंस्त्वविशिष्टभवत्यर्थक्रियाविशेषरूपनियतव्यक्त्यनुपादानम्।

अन्यासां तु पाकादिरूपक्रियाविशेषरूपाणां व्यक्तिविशेषाणां सामर्थ्यात्=भावे इत्यत्र विशेषणतयोपात्तेन क्रियासामान्येनाक्षेपात् सन्निधानमिति यथाविशेषम्=तत्तत्क्रियाविशेषमनुसृत्य भावे इत्यत्र सर्वलिङ्गसंख्यापरिग्रहः।

सकलधात्वर्थक्रियाविशेषपरिग्रहाभावे इत्यत्र क्रियासामान्यचोदनायां कृतायामस्य निर्देशस्य नान्तरीयकनियतपुंस्त्वविशिष्टोपात्तभवत्यर्थक्रियाविशेषनिष्ठत्वायोगात्=तत्परत्वायोगात्। तद्यथा--'अयं गौः पदा न स्प्रष्टव्यः' इति गोत्वसामान्यचोदनायां नेदन्तानिर्दिष्टनियतव्यक्तिनिष्ठैव; अपि तु गोत्वाश्रयसकलव्यक्तिनिष्ठैवेति।

वयं तु ब्रूमः--अस्मिन् वाक्ये यतस्तत इति पदद्वयमध्याहृत्य यतोऽयं गौस्ततो न पदा स्प्रष्टव्य इत्यर्थः। तथा चात्र गोपदं गोत्वसामान्यपरम्, सर्वस्यैव गोः पदा स्पर्शनिषेधात्। इदन्ता तु सन्निकृष्टवस्तुनिष्ठैव। अत एवाहामरः--

इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम्।
अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्॥ इति।

तद्यथा—अयं गौः पदा न स्प्रष्टव्य इति सामान्यचोदनायां नेदन्तानिर्दिष्ट-नियतव्यक्तिनिष्ठतैव ।। ५९ ।।

ननु च सामान्यचोदनायां विशेषपर्यवसानाद् भवतु पाकादौ बहुप्रकारोऽपि प्रत्ययः, प्रातिपदिकार्थस्तु भाव इति पुंस्त्वं श्रुतं कथं त्यज्यत इत्याशङ्क्याह—

निर्देशे चरितार्थत्वाल्लिङ्गं भावेऽविवक्षितम् ।
उपमासविधत्वाच्च भावादन्यत् पचादिषु ।। ६० ।।

प्रातिपदिकार्थस्य सत्त्वभूतस्य लिङ्गरहितस्यासम्भवात् तन्निर्देशे नान्त-

---

इदन्त्वस्य सामान्यरूपत्वे तु प्रकृतकोशविरोधः स्पष्ट एव दृश्यते। तस्मादत्र वाक्ये गोपदस्य गोत्वसामान्यपरत्वेऽपि व्यक्तिविशेषपरेणेदं पदेन सह सन्निधिबलाद् विशेषपरत्वं नीयत इत्येव व्याख्येयमिति ।। ५९ ।।

ननु च भाव इत्यत्र धातुना क्रियासामान्यचोदनायां निर्विशेषं न सामान्यमिति न्यायेन तस्य विशेषे पर्यवसानाद् भवतु पाको भोगो राग इत्यादौ बहुप्रकारकेऽपि घञादिः प्रत्ययः, प्रातिपदिकार्थे तु भावपदार्थे भाव इति श्रुतं पुंस्त्वं कथं त्यज्यते ? अत्र श्रुतार्थहानौ हेत्वभावादित्याशङ्क्याह—निर्देशे चरितार्थत्वादिति ।

अस्यार्थः—धात्वर्थस्य भावस्य साध्यतयाऽसत्त्वभूतत्वेन लिङ्गसंख्याराहित्येऽपि प्रातिपदिकार्थस्य सिद्धत्वेन सत्त्वभूतस्य भावस्य लिङ्गसंख्यारहितस्यासम्भवात् तन्निर्देशे लिङ्गसंख्योपादानमावश्यकमिति भाव इति निर्देशे चरितार्थत्वात्, तत्र श्रुतं पुंस्त्वरूपं लिङ्गमविवक्षितम् । नान्तरीयकत्वादवश्यप्राप्ते लिङ्गे विध्यसम्भवेनाविवक्षेत्यर्थः फलितः । च=किञ्च. उपमासविधत्वात्=उपमानसदृशत्वात्, उपमीयते यया सा उपमा उपमानम् । तत्सदृशत्वात् । सम्पदादित्वात् करणे क्विप् । बाहुलकात् । उपमानसदृशत्वादित्यर्थः । घञादिप्रत्ययविधौ हि निर्विशेषणो भावो निमित्ततयाऽङ्गम् । धातुसामान्यात् प्रत्ययविधानात् । पुंस्त्वस्य एकत्वस्य भवत्यर्थस्य च विशेषणतया विवक्षायान्तु पक्तिः, पाकः, पचनम्, पाकावित्यादयो भावे प्रयोगा न स्युः ।

कारिकाया उत्तरार्धस्यार्थस्तु भावपदार्थस्य भवत्यर्थस्योपमानसदृशत्वाद् भावाद् भवत्यर्थादन्यदर्थरूपं भावाद्विलक्षणं पाकादिरूपं पचादिषु पचादिधातुविषये प्रत्ययार्थः । उपमाप्रयोगश्च यथा भवतेर्भावस्तथा पचतेः पाकः, यजतेर्यागस्त्यजतेस्त्यागः प्रत्ययार्थ इति । यद्यपि भावादपरं पक्तिरित्यादौ लिङ्गमपीति लिङ्गतो वैसादृश्ये कथमुपमेति शङ्का न कार्या । भिन्नलिङ्गयोरपि उपमादर्शनात् । तद्यथा नाशावंश इति, धाराधराधिपो ब्राह्मणानां कामधेनुरिति । यद्यप्यत्र रूपकम् तथापि उपमामूलकमेव तदिति ।

रीयकं लिङ्गोपादानम्। ततश्च तन्नैर्देशिकमविवक्षितम्। कार्ये निरुपाधिर्भावार्थ एव विधावङ्गम्। स चात्रोपमानसदृशः, धातुसामान्याद् विधेः। यथा भवतेर्भावस्तथा पचतेः पाकस्त्यजतेस्त्यागो धात्वर्थोऽत्र प्रत्ययार्थत्वेन बोद्धव्य इत्यर्थः।

अतश्च भावाद् भवत्यर्थाद् अन्यदर्थरूपं विशिष्टं पचादिधातुविषये पाकादिरूपं प्रत्ययार्थः। तथा भावादपरं पक्तिरित्यादौ यद्यपि लिङ्गम्, तथापि भिन्नलिङ्गयोरुपमानोपमेयभावो न विरुध्यत इत्यर्थः॥ ६०॥

"पचतेर्भवतौ यत् तन्निर्दिश्यत" इत्यत्रैव परिहारान्तं भाष्येऽभिहितं व्याचष्टे—

भवतौ यत् पचादीनां तावदत्रोपदिश्यते।
न च लिङ्गं पचादीनां भवतौ समवस्थितम्॥ ६१॥

---

अयं भावः – प्रातिपदिकार्थस्य सिद्धत्वेन सत्त्वभूतस्य=द्रव्यरूपस्य लिङ्गवचनाभ्यां रहितस्यासम्भवात् तन्निर्देशे नान्तरीयकं लिङ्गवचनोपादानम्। ततश्च तन्नैर्देशिकम्--भावे इति निर्देशे भवं लिङ्गवचनमविवक्षितम्। घञादिप्रत्ययरूपे कार्ये विधौ निरुपाधिः=पुंस्त्वैकत्वरूपोपाधिरहितो भावार्थ एवाङ्गम्=निमित्तत्वेनोपकारकम्। स च=भावार्थश्चात्रोपमानसदृशः, धातुसामान्याद् घञादिप्रत्ययविधानात्। तथा च भावे इत्यस्यावृत्त्या भवतेर्भावे=भूधात्वर्थे घञादिप्रत्ययो यथा भवति तथा सर्वधातुभ्यो भावे क्रियासामान्ये घञादिप्रत्यया भवन्तीति भावे इत्यस्यार्थः। यथा भवतेर्भावस्तथा पचतेः पाकः, त्यजतेस्त्यागो धात्वर्थोऽत्र घञादिप्रत्ययार्थत्वेन बोद्धव्य इत्यर्थः।

अतश्च भवत्यर्थाद् भावादन्यदर्थरूपं विशिष्टं पचादिधातुविषये पाकादिरूपं प्रत्ययार्थः। तथा यद्यपि भावादपरं पक्तिरित्यादौ लिङ्गमपि भवतीति कथं भावपक्त्योर्भिन्नलिङ्गयोरुपमानोपमेयभाव इति कश्चिदाशङ्केत। तथापि भिन्नलिङ्गयोरुपमानोपमेयभावो न विरुध्यते। तद्यथा मदीये स्वपितृकाशीनाथपादयशोवर्णनपरे पद्ये—

शिष्याणां कामधेनुः शरणमभयदं मुक्तये प्रस्थितानां
मातेवाक्रन्दभाजां करुणतररवैर्दैन्यजोषं गतानाम्।
द्रष्टुं प्रत्युत्सुकानां विमलतरयशोगायतां मार्गणानां
कल्पद्रुः कामरत्नं जगति विजयते कोऽपि विप्रावतंसः॥ इति॥६०॥

अत्रैव भाव इत्यत्र श्रुतं पुंस्त्वं कथं त्यज्यत इति प्रश्न एव, 'पचतेर्भवतौ यत्तन्निर्दिश्यते' इति परिहारान्तरम्--पूर्वकारिकोक्तपरिहारादन्यं परिहारम्, भाष्येऽभिहितं व्याचष्टे--भवतौ यदिति।

पूर्वं सामान्यचोदनायां सर्वव्यक्तितात्पर्यादतन्त्रे लिङ्गसङ्ख्ये इत्युक्तम्। इदानीं तु य एते पुंस्त्वैकत्वे उपात्ते ते अविवक्षित एव सामान्यगते। सामान्यं ह्येकं व्यक्तिभेदेऽप्यनुवर्तमानमेकत्वं न जहात्येव। अन्यथा सामान्यमेव न भवेत्। अतश्च व्यक्तिविशेषाणां लिङ्गसंख्यान्तरयोगेऽपि पचादीनां भवतौ वर्तमानं यद्रूपं सन्मात्रं पुंस्त्वैकत्वानुगतं तावन्मात्रं सामान्यमत्र निर्दिश्यते।

न च विशिष्टं लिङ्गसङ्ख्यं सन्मात्रे रूपेऽस्तीति पक्तिः पचनं पाकः पाकौ

---

पूर्वोक्तपरिहारभाष्यार्थस्तु--पचतेर्भवतौ वर्तमानं यद्रूपं सामान्यं सन्मात्रं पुंस्त्वैकत्वानुगतं तद् भाव इत्यत्र निर्दिश्यते पचतेर्यद् विशेषरूपं द्वित्वादिका संख्या स्त्रीत्वादिकञ्च लिङ्गं तद् भाव इत्यत्र न निर्दिष्टमिति पक्तिः पाकौ इत्यादिप्रयोगोपपत्तिरिति।

प्रकृतपद्यार्थस्तु—पचादीनां भक्तौ=भवत्यर्थे भावे वर्तमानं यद्रूपं सन्मात्रं सामान्यं पुंस्त्वैकत्वानुगतं तावन्मात्रं सामान्यं=सर्वधात्वर्थसाधारणम्, अत्र=भावे इत्यत्र, उपदिश्यते=निर्दिश्यते।

यत्तु पचादीनां विशिष्टं लिङ्गं स्त्रीत्वनपुंसकत्वे विशिष्टाः संख्या द्वित्वादिकास्तद् भवतौ भाव इत्यत्र निर्दिष्टे भवत्यर्थे भावेन च समवस्थितमिति पक्तिः, पचनम्, पाकौ, पाका इत्यादौ भाव इत्यत्र निर्दिष्टस्य सन्मात्रस्य रूपस्य पुंस्त्वैकत्वानुगतस्य स्वगते लिङ्गसंख्येऽजहतोऽनुवर्तनात् तत्प्रयुक्तः सर्वो विधिरुपपद्यत इति।

अयं भावः—भाव इति सामान्यचोदनायाम्=धात्वर्थक्रियासामान्ये घञादिप्रत्ययविधौ 'निर्विशेषं न सामान्यमि'ति न्यायेन सर्वव्यक्तितात्पर्यात्=भिन्नलिङ्गसंख्याविशिष्टक्रियार्थकघञादिप्रत्ययान्तशब्दव्यक्तीनामपि भावे इत्यत्र भावशब्दवत् साध्यत्वेनाभिप्रेतत्वाद् भावे इत्यत्र पुंस्त्वैकत्वरूपे निर्दिष्टे लिङ्गसंख्येऽतन्त्रे=अविवक्षिते इति पूर्वमेवोक्तम्।

इदानीन्तु भावे इत्यत्र य एते पुंस्त्वैकत्वे उपात्ते ते क्रियासामान्ये इति क्रियाविशेषविषयेऽविवक्षित एव। सामान्यं ह्येकं व्यक्तीनां भेदेऽपि अभिन्नमेवानुवर्तमानमित्येकत्वं स्वगतं न जहात्येव। अन्यथा=तद्धाने सामान्यमेव न भवेत्। अतश्च तदाश्रयव्यक्तिविशेषाणां लिङ्गान्तरसंख्यान्तरयोगेऽपि पचादीनाम्=पचादिधात्वर्थानां भवतौ=भवत्यर्थे भावे वर्तमानं यद्रूपं सन्मात्रं पुंस्त्वैकत्वानुगतं तावन्मात्रं सामान्यमत्र=भाव इत्यत्र निर्दिश्यते।

यत्तु पचादीनां विशिष्टं लिङ्गम्=लिङ्गविशेषः स्त्रीत्वं नपुंसकत्वञ्च विशिष्टा संख्या=संख्याविशेषो द्वित्वादिकस्तत् सन्मात्रे रूपे न च=न चास्ति=नैवास्ति इति पक्तिः, पचनम्, पाकौ, पाका इत्यादौ सन्मात्रस्य रूपस्य=सत्तारूपस्य क्रियासामान्यस्य अजहत्स्वलिङ्गसंख्यस्य=स्वकीये लिङ्गसंख्ये अजहतः,

पाका इत्यादौ सन्मात्रस्य रूपस्याजहत्स्वलिङ्गसङ्ख्यस्यानुवृत्तेस्तदाश्रयो विधिः सर्वत्रोपपद्यत इत्यर्थः ॥ ६१ ॥

ननु च सामान्यस्य विशेषात्मकत्वाद् विशेषगतं लिङ्गं सामान्यसम्बन्ध्येवेति नियतलिङ्गोपादानेऽन्यत्र कथं विधिरित्याशङ्क्याह—

**एकश्च सोऽर्थः सत्ताख्यः कथञ्चित् कैश्चिदुच्यते ।**
**लिङ्गानि चास्य भिद्यन्ते पचिरूपादिभेदवत् ॥ ६२ ॥**

स एकोऽर्थो भावशब्दाभिधेयः सकलधात्वर्थविषयसिद्धतासमवेतसामान्यरूपो घञादिप्रत्ययवाच्यः सत्ताख्यः स्वशक्त्या कैश्चिच्छब्दैः सामान्यरूपः। पाकस्त्याग इत्यादिविशेषशब्दैर्विशेषरूप । तत्र च यथा पचे रूपं पठे रूपं स्वभाव

---

अनुवृत्तेस्तदाश्रयो विधिः=भावे इति क्रियासामान्याश्रयो विधिः सर्वत्र=पक्तिः, पचनम्, पाकौ, पाका इत्यादावपि उपपद्यत इति । ६१ ॥

ननु निर्विशेषं न सामान्यमिति न्यायेन सामान्यस्य विशेषात्मकत्वाद् विशेषगतं पुंस्त्वादिरूपं लिङ्गं सामान्यसम्बन्ध्येवेति कृत्वा भाव इत्यत्र पुंस्त्वरूपनियतलिङ्गोपादाने पक्तिरित्यादौ स्त्रीत्वरूपे लिङ्गे कथं भावप्रत्ययविधिरित्याशङ्क्याह— **एकश्च सोऽर्थ इति ।**

अस्यार्थः —स चैकोऽर्थो भावशब्दाभिधेयः सत्ताख्यः=सत्तापदेनाप्यभिधीयमानो घञादिप्रत्ययवाच्यः स्वशक्त्या कैश्चित् शब्दैः भावसत्तादिभिः पाकत्यागादिभिश्च कथञ्चित् केनचित् प्रकारेणाभिधीयते। तत्र भावः सत्ता इत्येवमादिभिः शब्दैः सामान्यरूपः सोऽभिधीयते, पाकस्त्याग इत्यादिविशेषशब्दैस्तु विशेषरूप इति ।

तत्र च यथा पचे रूपं स्वभाव इति सामान्यभूतः सत्ताख्योऽर्थो यागस्त्यागः पाक इत्यादौ व्यक्तिविशेषोपाश्रयवशाद् भिद्यते, तथा पाकः पक्तिः पचनमित्यादौ शब्दभेदेन लिङ्गानि स्त्रीत्वादीनि अस्य सत्तारूपस्य भावस्य भिद्यन्ते। भावः सत्ता भवनमित्यादौ तु निर्दिष्टस्य सामान्यभूतस्य सत्ताख्यस्य भावस्य शब्दभेदेन निर्देशेऽप्येकस्य लिङ्गानि नान्तरीयकत्वान्न विवक्षितानि। सामान्यविशेषयोरभेदेऽपि पाक इत्यादौ विशेषे विवक्षितं पुंस्त्वं भाव इत्यत्र सामान्ये नान्तरीयकत्वादुपात्तमिति न विवक्षितम्।

किञ्च सामान्यविशेषयोरभेदेऽपि सामान्यस्य प्रकृतिभूतस्याभेदो विशेषेषु विकारभूतेषु न तु विशेषाणां विकारभूतानामभेदः सामान्ये, प्रकृतेर्विकारानुगतत्वात्; विकाराणाञ्च प्रकृत्यनुगतत्वाभावात्। तदुक्तं कविभिः—

सत्यपि भेदापगमे नाथ ! तवाहं न मामकीनस्त्वम्।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः॥ इति ॥

इति व्यक्तिविशेषोपाश्रयवशात् सत्ताख्योऽर्थो भिद्यते, तथा शब्दभेदेन पक्तिः पचनमित्यादिना लिङ्गानि स्त्रीत्वादीन्यस्य विशिष्यन्ते ।

एवमपि च विशेषे सर्वव्यक्त्यनुयायि व्यापकं रूपमखण्डितमिति तदाश्रयेण सर्वत्र स्वकार्यं सम्पादयति । न तु नियतव्यक्तिगतेन लिङ्गसङ्ख्यादिना धर्मेण नियम्यते महाविषयत्वात् । सामान्यस्य विशेषस्वीकारसामर्थ्यात् । विशेषस्य तु सामान्यमात्मसात्कर्तुमसामर्थ्यात् स्वलिङ्गेन नियमे लिङ्गान्तरे विधिं प्रापयितुमशक्तिः ।

तथा च भाष्यम्—"यच्च पचतेर्भवतिर्भवति, न तद्भवतेः पचतिर्भवति ।

---

अत एव सामान्येन व्यपदेशो विशेषाणाम्, न तु विशेषैस्तद्धर्मैर्वा लिङ्गादिभिर्व्यपदेशः सामान्यस्य । अत एवैतत्कारिकावतारणावसरे—सामान्यस्य विशेषात्मकत्वादित्युक्तं पराक्रतम् । एवञ्च सामान्यप्रतियोगिकोऽभेदो विशेषेषु, विशेषप्रतियोगिकस्तु भेदः सामान्य इति रीत्या सामान्यविशेषयोर्भेदाभेदौ संपन्नौ इति ।

अयं भावः -स एकोऽर्थो भावशब्दाभिधेयः सकलधात्वर्थविषयसिद्धतासमवेतसामान्यरूपः=सकलधात्वर्थनिष्ठसिद्धत्वसमानाधिकरणसामान्यरूपः घञादिप्रत्ययवाच्यः सत्ताख्यः कैश्चित् शब्दैः केनचित्प्रकारेण स्वशक्त्याऽभिधीयते । भावः सत्ताभवनमित्यादिशब्दैः सामान्यरूपोऽभिधीयते, पाकस्त्यागो याग इत्यादिविशेषशब्दैर्विशेषरूपः । तत्र च यथा पचे रूपं स्वभावः पाक इत्यानुपूर्वी रूप इति पाकस्त्यागो याग इति व्यक्तिविशेषोपाश्रयवशात् सत्ताख्योऽर्थो भिद्यते तथा पक्तिः पाकः पचनमित्यादिना शब्दभेदेन लिङ्गानि स्त्रीत्वादीनि अस्य=सत्ताख्यस्य भावस्य विशिष्यन्ते=भिद्यन्ते ।

एवमपि च सर्वव्यक्त्यनुयायि=सर्वासु विशेषव्यक्तिषु अनुगतम्, व्यापकं रूपम्=सामान्यं रूपं विशेषेऽखण्डितम्=अनिराकृतमिति तदाश्रयेण=तादृशसामान्याश्रयेण सर्वत्र स्वकार्यं सामान्यं सम्पादयति ? न तु नियतव्यक्तिगतेन लिङ्गसंख्यादिना धर्मेण सामान्यं नियम्यते, महाविषयत्वात् । सामान्यस्य विशेषस्वीकारे सामर्थ्यात् । विशेषस्य तु सामान्यमात्मसात्कर्तुमसामर्थ्यात्, सामान्यस्य स्वलिङ्गेन नियमेऽभ्युपगम्यमाने लिङ्गान्तरे विधिं प्रापयितुमशक्तिः ।

तथा च भाष्यम्—यत् पचतेर्भवतिर्भवति, न तद् भवतेः पचतिर्भवति । किञ्च पचतेर्भवतिर्भवति, सामान्यम् । किञ्च भवतेः पचतिर्भवति विशेष इति सामान्यविशेषभावेनान्योऽन्यस्वीकारेऽसामर्थ्यमुक्तमनेन भाष्येण । भवतिर्हि सामान्यं पचिं विशेषं स्वीकरोति=आत्मसात्करोति, न तु पचिर्विशेषो भवति सामान्यमात्मसात्करोतीति प्रकृतभाष्याशयः ।

तथा च स्वस्य लिङ्गेन नान्तरीयकेण तादृश्या संख्यया वा विशेषस्य लिङ्गेन

किञ्च पचतेर्भवतिर्भवति सामान्यम्। किञ्च भवतेः पचतिर्भवति विशेषः"। सामान्यविशेषभावेनान्योन्यस्वीकारासामर्थ्यमुक्तम्। भवतिर्हि सामान्यं पचिं स्वीकरोति, न तु पचिर्विशेषो भवतिमित्यर्थः ॥ ६२ ॥

सम्बन्धिभेदेनैक एवार्थोऽनेकरूपत्वेन प्रतिभासत इत्यत्र भाष्ये निदर्शनमुपन्यस्तं व्याचष्टे—

आचार्यो मातुलश्चेति यथैको व्यपदिश्यते।
सम्बन्धिभेदादर्थात्मा स विधिः पक्तिभावयोः ॥ ६३ ॥

उक्तमिदं भाष्ये—"उपाध्यायस्य शिष्यो मातुलस्य भागिनेयमाह उपाध्यायं भवानभिवादयतामिति। स गत्वा मातुलमभिवादयते। तथा मातुलस्य भागिनेय उपाध्यायस्य शिष्यमाह मातुलं भवानभिवादयतामिति। स गत्वोपाध्यायमभिवादयते" इति।

अत्र च यथा एकोऽर्थः कञ्चित् प्रत्युपाध्यायः, कञ्चित् प्रति मातुलोऽभिधीयते, तथा स प्रकारः पक्तिभावयोर्बोद्धव्यः। स्वगतविशेषापेक्षया सामान्यस्वभावोऽपि पचतिर्भावं प्रति विशेषभावमापन्नः पुनः पक्तिं प्रति सामान्यमेव।

---

संख्यया वा सामान्यं न नियम्यते पूर्वत्र नान्तरीयकत्वादिति हेतुः, उत्तरत्र महाविषयत्वादिति, विशेषस्य सामान्यस्वीकारेऽसामर्थ्यादिति च हेतू इति ॥ ६२ ॥

स्वसम्बन्धिभेदेनैक एवार्थोऽनेकरूपत्वेन प्रतिभासत इत्यत्र अर्थे भाष्ये निदर्शनमुपन्यस्तम्, यत् तत् व्याचष्टे—आचार्यो मातुलश्चेति।

अस्यार्थः—यथैकोऽर्थात्माऽनेकरूपमेकम् सम्बन्धिभेदात् शिष्यभागिनेयरूपनिरूपकसम्बन्धिभेदाद् आचार्यो मातुलश्चेति भेदेन व्यपदिश्यते=व्यवह्रियते। स विधिः प्रकारः पक्तिभावयोः। यथा एकोऽर्थः कञ्चित् प्रति उपाध्यायः, कञ्चित् प्रति मातुलस्तथा एक एव पाकः स्वगतमधिश्रयणाद्यधःश्रयणान्तव्यापारविशेषकलापं प्रति सामान्यम्, भावं प्रति तु विशेष इति।

अयं भावः—उक्तमिदं भाष्ये "उपाध्यायस्य शिष्यो मातुलस्य भागिनेयमाह—उपाध्यायं भवानभिवादयतामिति। स गत्वा मातुलमभिवादयते। तथा मातुलस्य भागिनेय उपाध्यायस्य शिष्यमाह—मातुलं भवान् अभिवादयतामिति। स गत्वोपाध्यायमभिवादयते" इति।

अत्र च यथा एकोऽर्थः कञ्चित् प्रति उपाध्यायः कञ्चित् प्रति मातुलोऽभिधीयते। तथा स प्रकारः पक्तिभावयोः=पचत्यर्थभवत्यर्थयोर्बोद्धव्यः। स्वगतविशेषापेक्षया=स्वगताधिश्रयणाद्यधःश्रयणान्तव्यापारविशेषकलापापेक्षया सामान्यस्वभावोऽपि पचतिः=पच्यर्थः, भावं प्रति विशेषभावमापन्नः पुनः पक्तिं प्रति=पच्यर्थभूतमधिश्रयणाद्यधःश्रयणान्तव्यापारविशेषकलापं प्रति सामान्यमेव। ततश्च

ततश्च यथोपाध्यायशब्देन मातुलरूपतयानभिधीयमानोऽपि मातुलो वस्तुवृत्तेन तत्त्वात् स्वकार्यं प्रतिपद्यते, तथा भावशब्देन सामान्यवाचिना साक्षादभिधीयमानोऽपि विशेषः सामर्थ्यादनुमीयमानसन्निधिरिति सामान्यप्रयुक्तं कार्यं प्रतिपद्यते ।

यथा हि नोपाध्यायरूपादन्यत्र मातुलत्वम्, तथा न भावादन्यत् पचिरूपम् । सामान्यविशेषयोरत्यन्तभेदाभावात् सकलविशेषपरिहारेण सामान्यरूपानुपपत्तेरिति सर्वत्र सिद्धिः ।। ६३ ।।

।। इति भूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे क्रियासमुद्देशोऽष्टमः ।।

---

यथोपाध्यायशब्देनानभिधीयमानोऽपि मातुलो वस्तुवृत्तेन=वस्तुगत्या तत्त्वात्=मातुलत्वात् स्वकार्यम्=अभिवादनकर्मतां प्रतिपद्यते । तथा भावशब्देन सामान्यवाचिना साक्षादनभिधीयमानोऽपि विशेषः सामान्यगताद् विशेषानुमापनसामर्थ्यादनुमीयमानसन्निधिरिति सामान्यप्रयुक्तं कार्यं घञादिप्रत्ययरूपं प्रतिपद्यते ।

किञ्च यथा हि नोपाध्यायस्वरूपादन्यत्र मातुलत्वं तथा न भावात् सत्ताख्यादन्यत् पचिक्रियारूपम् । सामान्यविशेषयोर्भेदस्य प्रागुपपादितत्वेनात्यन्तभेदाभावात् सकलविशेषपरिहारेण=सकलविशेषपरिवर्जनेन सामान्यरूपानुपपत्तेः सविशेषमेव सामान्यम्, न तु निर्विशेषमिति सामान्ययुक्तो विधिर्विशेषेषु युज्यते, विशेषप्रयुक्तस्तु विधिः सामान्ये न युज्यते विशेषस्य सामान्यस्वीकारेऽसामर्थ्यादिति सर्वार्थसिद्धिरिति ।

।। इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेय-
रघुनाथकृतायामम्बाकर्त्र्यां क्रियासमुद्देशोऽष्टमः ।।

# अथ कालसमुद्देशः

क्रियानन्तरं काल उद्दिष्टः। स हि क्रियायाः परिच्छेदकः। तत्र दर्शनान्तरलक्षितं तावत् तत्स्वरूपमाह--

**व्यापारव्यतिरेकेण कालमेके प्रचक्षते।**
**नित्यमेकं विभु द्रव्यं परिमाणं क्रियावताम् ॥ १ ॥**

परापरादिप्रत्ययलिङ्गो व्यापक एकोऽमूर्तोऽत एवाकृतकत्वान्नित्यः कालः

---

शक्त्यात्मदेवतारूपैर्विकल्पत्रयगोचराम्।
कालरूपां महाकालीं जगतो जननीं नुमः॥

तृतीयकाण्डारम्भे हरिणा क्रियानन्तरं काल उद्दिष्टः=नाममात्रेण संकीर्तितः। स हि उत्पत्तिस्थितिलयरूपक्रियाभेदत्रयान्तर्गतानां सर्वासां क्रियाणां परिच्छेदक इति क्रियानिरूपणानन्तरं तदवसरः प्राप्त इति कालनिरूपणेऽवसरसङ्गतिः। तत्र दर्शनान्तरलक्षितम्=वैशेषिकदर्शने लक्षितं तावत् कालस्वरूपमाह—**व्यापारव्यतिरेकेणेति।**

अस्यार्थः--एके=काणादाः, व्यापारव्यतिरेकेण=वैशिष्टचार्थे प्रकृत्यादित्वात् तृतीया। क्रियाव्यतिरिक्तं कालं प्रचक्षते। तस्य दर्शनसम्मतं स्वरूपलक्षणमाह--नित्यमित्यादि। अकृतकत्वान्नित्यम्, जन्यभावरूपोपाधिभिः क्षणादिरूपेण भेदेऽपि वस्तुत एकम्, सर्वत्र जायमानानां भावानां जनकत्वाद् जगदाश्रयत्वाच्च सर्वभूतसंयोगित्वेन विभु परापरत्वमहत्त्वादिगुणाश्रयत्वेन द्रव्यम्, क्रियावताम्=जन्मादिक्रियावतां भावानां जन्मादिक्रियापरिच्छेदद्वारेण परिमाणम्=घटो जायते, घटोऽभूत्, घटो भविष्यति इत्यादिरूपैः परिच्छेदकम्, किञ्च कालो विभुत्वादेकत्वाच्च न स्वेन विशुद्धेन रूपेण जन्मादिक्रियाणां तद्वताञ्च परिच्छेदकः; अपि तु तत्तत् क्रियोपहितेन रूपेण क्षणघटिकादिनपक्षमासादिपदव्यपदेश्येन रूपेण। तद्यथा--'विषयोपहितं ब्रह्म चैतन्यं तं विषयमवभासयति' इति, तद्वत् कालोऽपि तत्तत् क्रियोपहितः तां तां क्रियां परिच्छिनत्ति तत्तत् क्रियादिमद्भावोपहितश्च तत्तत् क्रियादिमद्भावं परिच्छिनत्ति। परिच्छेद्यानामुपाधित्वस्वीकाराच्च नात्माश्रयादिकम्, विधेयानन्वयित्वादिति।

अयं भावः--परापरादिप्रत्ययलिङ्गः=देवदत्तो मत्तः परः, अहं देवदत्तादपर इत्यादिप्रत्ययरूपैर्हेतुभिरनुमीयमानः, व्यापक एकोऽमूर्तः=अपरिच्छिन्नपरिमाणः,

क्रियाव्यतिरिक्तो जन्मादिक्रियाद्वारेण भावपरिच्छेदको वैशेषिकैराम्नातः। स विस्तरतस्तत एवावगन्तव्यः ॥ १ ॥

कालस्य परिच्छेदकान्तरेभ्यः परिच्छेद्यभेदेन भेदमाह--

दिष्टिप्रस्थसुवर्णादि मूर्तिभेदाय कल्पते।
क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका ॥ २ ॥

मूर्तिरसर्वगतद्रव्यपरिमाणम्। तत् परिच्छिद्यते दिष्ट्याद्यायाममानेन। तथा च मूर्तिमद्वस्तुगतमेतद् दिष्टिर्वितस्तिरित्यादि। एकदिग्विभागावच्छेदेन चानेन वस्तुपरिच्छेदः। एतच्च प्रमाणम्। प्रस्थादिना तु सर्वतोऽवच्छेदेनारोहपरिणाहाभ्यां व्रीह्यादेः परिच्छेदः। प्रस्थः द्रोण आढकमिति एतत् परिमाणम्,

---

अत एव हेतुत्रितयादकृतकत्वेन नित्यः कालः क्रियाव्यतिरिक्तो जन्मादिक्रियापरिच्छेदद्वारा जन्यभावपरिच्छेदको वैशेषिकैरुक्तः। स विस्तरतस्तत एवावगन्तव्य इति ॥ १ ॥

परिच्छेदकान्तरेभ्यो दिष्टिप्रस्थादिभ्यः कालस्य परिच्छेद्यभेदेन भेदमाह— **दिष्टिप्रस्थसुवर्णादीति।**

अस्यार्थः —दिष्टिरायाममानविशेषः प्रमाणरूपः, प्रस्थो व्रीह्यादेरारोहपरिणाहाभ्यां परिच्छेदकं परिमाणम्, सुवर्णादिकं तून्मानमूर्ध्वमानरूपम्, आत्मनो गुरुत्वविशेषेण द्रव्यपरिच्छेदकम्; एतत् त्रितयं मूर्तिभेदाय=मूर्तिमतो द्रव्यस्य भेदाय कल्पते परिच्छेदाय प्रभवति। कालस्तु अमूर्तायाः क्रियाया भेदाय परिच्छेदाय कल्पते। संख्या तु सर्वस्य मूर्तस्यामूर्तस्य प्रमाणादेश्च भेदिका=परिच्छेदिका। तद्यथा--आयाममानोदाहरणं शमो दिष्टिः क्षेत्रभक्तिरिति। एतच्च प्रमाणरूपम्। परिमाणोदाहरणं तु--प्रस्थो व्रीहिरिति। सुवर्णादिरूपस्योन्मानस्योदाहरणं तु--सुवर्णं निष्कं पलं कुण्डलमिति। सूर्यादिसंचारो हि कालेन परिच्छिद्यते। मासः संवत्सर इत्यादि मूर्तस्य संख्यया परिच्छेदे द्वौ घटाविति। अमूर्तस्य तया परिच्छेदे-बहव आत्मन इति, द्वे क्रिये इति च। प्रमाणस्य तया परिच्छेदे--'एका वितस्तिः, द्वौ हस्तौ इति। परिमाणस्य तया परिच्छेदे--'चत्वारः प्रस्थाः' इति। उन्मानस्य तया परिच्छेदे--'पञ्च पलानि' इति। संख्याया अपि संख्या भेदिका--द्वे विंशती इति, पञ्च पञ्चाशत इति च।

अयं भावः --मूर्तेरसर्वगतस्य द्रव्यस्य परिमाणं तद्=असर्वगतं द्रव्यं परिच्छिद्यते, दिष्ट्याद्यायाममानेन प्रमाणाख्येन। तथा च मूर्तिमद् वस्तुगतमेतद् दिष्टिर्वितस्तिः क्षेत्रभक्तिरिति। अनेन च दिष्ट्यादिकेन प्रमाणेन एकदिग्विभागावच्छेदेन वस्तुपरिच्छेदः। एतच्च=दिष्ट्यादिकं प्रमाणम्। प्रस्थादिना तु सर्वतोऽवच्छेदेनारोहपरिणाहाभ्यां व्रीह्यादेः परिच्छेदः। 'प्रस्थो व्रीहिः, द्रोणो व्रीहिः, आढकं

परिः सर्वतोभावे। सुवर्णादि तून्मानं गुरुत्वविशेषेण द्रव्यं परिच्छिनत्ति। सुवर्णं निष्कं पलमित्यादि। एभ्यो व्यतिरिक्तः कालोऽमूर्तक्रियापरिच्छेदहेतुः। सूर्यादिसञ्चारो हि कालेन मीयते मासः संवत्सर इत्यादि। संख्या तु मूर्तामूर्तस्य सर्वस्य परिच्छेदमादधाति, प्रमाणादेश्च। बहव आत्मानः। द्वे क्रिये। एका वितस्तिः। द्वौ हस्तौ। चत्वारः प्रस्थाः। पञ्च पलानि। संख्यापि च संख्यया मीयते। द्वे विंशती। पञ्च पञ्चाशत इति॥ २॥

कालेन कथं क्रियाः परिच्छिद्यन्ते इत्याह—

उत्पत्तौ च स्थितौ चैव विनाशे चापि तद्वताम्।
निमित्तं कालमेवाहुर्विभक्तेनात्मना स्थितम्॥ ३॥

---

व्रीहिः' इति। एतत् परिमाणम्। परिः सर्वतोभावे। सुवर्णादि तून्मानं तुलागतं सत् स्वगुरुत्वविशेषेण द्रव्यं कुण्डलादिकं परिच्छिनत्ति। सुवर्णं निष्कं पलं कुण्डलमित्यादि। एभ्यः प्रमाणपरिमाणोन्मानेभ्यो व्यतिरिक्तः कालोऽमूर्तायाः क्रियायाः परिच्छेदहेतुः। सूर्यादिसञ्चारो हि स्वोपहितेन कालेन मीयते=परिच्छिद्यते मासः संवत्सर इत्यादि। संख्या तु मूर्तामूर्तस्य सर्वस्य परिच्छेदमादधाति=करोति प्रमाणादेश्च प्रागुक्तरूपस्य 'द्वौ घटौ' इति मूर्तस्य परिच्छेदे। 'बहव आत्मानः, द्वे क्रिये' इति अमूर्तयोः परिच्छेदे। 'एका वितस्तिः, द्वौ हस्तौ' इति प्रमाणयोः परिच्छेदे। चत्वारः प्रस्थाः' इति परिमाणस्य परिच्छेदे। 'पञ्च पलानि' इत्युन्मानस्य परिच्छेदे उदाहरणानि। संख्यापि च संख्यया मीयते=परिच्छिद्यते 'द्वे विंशती', 'पञ्च पञ्चाशत' इति। प्रमाणपरिमाणोन्मानलक्षणानि तु कोशे एवमुक्तानि—

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः।
आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः॥ २॥

कालेनापरिच्छिन्नेनैकेन च सर्वां क्रियां प्रति साधारणेन कथं क्रियाः परिच्छिद्यन्त इत्याह—उत्पत्तौ चेति।

अस्यार्थः—उत्पत्तिस्थितिविनाशक्रियाभिः सर्वासां क्रियाणां संग्रहः। अत एव प्रकृतकारिकायां क्रियात्रयस्यैवोपादानम्। तद्यथा पाकस्यौदननिष्पत्तावन्तर्भावः। एवं सर्वत्रापि बोध्यम्। यद्वाऽत्र क्रियात्रयोपादानं सर्वासां क्रियाणामुपलक्षणमुदाहरणरूपेण, न तु परिगणनम्। तथा च तद्वताम्=उत्पत्त्यादिक्रियावतां भावानामुत्पत्तौ च स्थितौ चैव विनाशे चापि निमित्तम्, एताभिः क्रियाभिरुपलक्षणीभूताभिर्विभक्तेन भेदितेन आत्मना स्वरूपेण क्षणदिनादिरूपेण स्थित कालमेवाहुरिति। तद्यथा—माघः कुन्दपुष्पप्रसवस्य, शरन्मल्लिकापुष्पप्रसवस्य, मयूरकेकाक्षयस्य, आविलजलप्रसादस्य च निमित्तम्। अत एव ब्रह्मणः प्रत्यूषं जगत्सर्गस्य, तद्रात्रिस्तद्विसर्गस्य, तद्दिनञ्च तत् स्थितेर्निमित्तमिति।

जन्मस्थितिविनाशाः समस्तक्रियाकलापान्तर्भावनहेतव इति तद्द्वारेण जन्मादिमतां पदार्थानां निमित्तकारणं कालमाहुः। तदपेक्षो हि पदार्थानामुदयादिरवतिष्ठते प्रविभक्तशरीरः। तथा हि—केचिद् वसन्ते प्रसूयन्ते, अपरे शरदि, प्रावृष्यन्य इत्यादि वाच्यम्। एवं स्थितिविनाशयोरपि। उपाधिभेदाच्च भिद्यमानः कालः संसर्गिषु भेदायालम् ॥ ३ ॥

यतश्चोत्पत्त्यादौ भावानां कालो निमित्तम्, अतः —

तमस्य लोकयन्त्रस्य सूत्रधारं प्रचक्षते।
प्रतिबन्धाभ्यनुज्ञाभ्यां तेन विश्वं विभज्यते ॥ ४ ॥

यन्त्रपुरुषप्रख्यं विश्वं सूत्रधारपुरुषकल्पकालप्रतिबद्धचेष्टम्। कालेन हि स्वशक्त्या भावानां स्थगनोन्मज्जने जन्मनाशपर्याये विभजता सूत्रधारेणेव यन्त्रपुरुषस्य सूत्रसञ्चारवशेनोन्मेषादिक्रियाकारिणा विश्वं प्राप्तपौर्वापर्यप्रविभागम्। प्रविभागलक्षणाश्चेष्टाः कार्यन्ते ॥ ४ ॥

---

अयं भावः —जन्मस्थितिविनाशाः स्वस्मिन् समस्तक्रियाकलापान्तर्भावनहेतव इति जन्मादिमतां पदार्थानां तद्द्वारेण=जन्मादिक्रियाद्वारेण निमित्तकारणं कालमेवाहुः। तदपेक्षो हि=कालापेक्षो हि पदार्थानामुदयादिः=जन्मस्थितिभङ्गमवतिष्ठते प्रविभक्तशरीरः=भिन्नस्वरूपः। तथा हि—केचिद् वसन्ते प्रसूयन्ते, अपरे शरदि, अन्ये प्रावृषि इत्यादि वाच्यम्=उदाहार्यम्। एवं स्थितिविनाशयोरपि निमित्तं काल इत्युदाहृतं प्राक्। क्रियारूपोपाधिभेदाच्च भिद्यमानः कालः संसर्गिषु=स्वसंसर्गिषु जन्मादिक्रियावत्सु भावेषु भेदाय=तेषां परिच्छेदाय अलम्=पर्याप्त इति ॥ ३ ॥

यतश्च भावानामुत्पत्त्यादौ प्रागुक्तरीत्या कालो निमित्तम्, अत आह—**तमस्य लोकयन्त्रस्येति**।

अस्यार्थः —अस्य=सर्वचक्षुःसन्निकृष्टस्य लोकयन्त्रस्य=यन्त्रकल्पस्य लोकस्य विश्वस्य तं कालं सूत्रधारं=सूत्रधारमिव नियामकं प्रचक्षते कवयः क्रान्तदर्शिनः। तेन=कालेन प्रतिबन्धाभ्यनुज्ञाभ्यां जन्मनः प्रतिबन्धो लयः=विनाशः, अभ्यनुज्ञा=उत्पत्तावनुमतिः, ताभ्याम्=जन्मनाशाभ्यामिदं विश्वं विभज्यते=विभागेन पौर्वापर्यप्रयुक्तेन भेदेन जन्मनाशानुकूलाः चेष्टाः कार्यंत इति।

अयं भावः – यन्त्रपुरुषप्रख्यम्=यन्त्ररूपो यः पुरुषस्तत्तुल्यं विश्वं सूत्रधारपुरुषकल्पकालप्रतिबद्धचेष्टम्=यन्त्रपुरुषस्य सूत्रधारो यः पुरुषस्तत्सदृशो यः कालस्तेन प्रतिबद्धा स्वतन्त्रचेष्टा यस्य तं तथाविधमिति विश्वविशेषणम्। कालेन हि स्वशक्त्या भावानां स्थगनोन्मज्जने आविर्भावतिरोभावरूपे जन्मनाशपर्याये कर्मणी विभजता सूत्रधारेणेव सूत्रसञ्चारवशेन यन्त्रपुरुषस्योन्मेषनिमेषादिक्रियाकारिणा प्राप्तपौर्वापर्यप्रविभागं विश्वं प्रविभागलक्षणाः=तत्तद्भावगतपौर्वापर्यप्रविभागा-

तथा हि—

यदि न प्रतिबध्नीयात् प्रतिबन्धश्च नोत्सृजेत् ।
अवस्था व्यतिकीर्येरन् पौर्वापर्यविनाकृताः ।। ५ ।।

कालकृतप्रतिबन्धाभावाद् युगपद्भावानामुत्पत्तिः स्यादिति बीजाङ्कुर-नालकाण्डादीनामानुपूर्वीनियमाभावात् सङ्करः स्यादिति कारणादुदयतामपि भावानां कालपरिवासदर्शनादवश्यमपेक्षणीयः कालो निमित्तकारणमेष्टव्यः ।।५।।

इदानीमेकत्वे विभाविते कालस्य नानात्वमुपाधिभेदनिहितमाह—

तस्यात्मा बहुधा भिन्नो भेदैर्धर्मान्तराश्रयैः ।
न हि भिन्नमभिन्नं वा वस्तु किञ्चन विद्यते ।। ६ ।।

---

नुकूलाः चेष्टाः कालेन कार्यन्ते । विश्वस्य चेष्टानां प्रविभागलक्षणत्वञ्च प्रविभागानुकूलत्वात् । कार्यकारणयोरभेदाध्यवसायेनैकत्वव्यवहारो हि बहुत्राप्रमादकृतो दृश्यत इति । ४ ।।

एतत् कारिकोक्तमर्थं युक्त्योपपादयति - यदि नेति ।

अस्यार्थः —कालो यदि भावानामनवसरे उत्पत्तिं न स्वशक्त्या महत्या अदृष्टसहकृतया प्रतिबध्नीयात्, तेषामुत्पत्त्यवसरे च तदुत्पत्त्यनुकूलयाऽदृष्टसहकारेणावार्यया स्वशक्त्या स्वशक्तिकृतं च तदुत्पत्तिप्रतिबन्धं नोत्सृजेद् न जह्यात्, तदा कालकृतपौर्वापर्यविनाकृताः=कालकृतपौर्वापर्यरहिताः अवस्थाः=बीजाङ्कुरनालकाण्डादिरूपा व्यकीर्येरन्=संकीर्येरन्, नियामकाभावाद् यौगपद्येन स्युरिति ।

अयं भावः —कालकृतस्योत्पत्तिप्रतिबन्धस्याभावाद् भावानां युगपदुत्पत्तिः स्यादिति व्रीहियवादीनां बीजाङ्कुरनालकाण्डादीनामवस्थानामानुपूर्वीनियमाभावात्=क्रमे नियामकाभावात् सङ्करः=यौगपद्येन सामानाधिकरण्यं स्यादिति । किञ्च कारणादुदयतामपि=उपादानकारणादाविर्भवतामपि भावानां कालपरिवासदर्शनाद् उत्पत्तेः पूर्वंकाले उपादानकारणे परिवासस्य सर्वात्मना वासस्य दर्शनादवश्यमपेक्षणीयः, कालो निमित्तकारणरूप एष्टव्य इति ।। ५ ।।

एवं प्रागुक्तरीत्या कालस्यैकत्वे विभाविते=विज्ञापिते सति इदानीं क्रियारूपोपाधिभेदविहितं तस्य भेदमाह —तस्यात्मा बहुधेति ।

अस्यार्थः —धर्मान्तराश्रयैः धर्मान्तराणि क्रियारूपाणि कालसंसर्गीणि सूर्यसंचाररूपाणि अक्षिपक्ष्मनिमेषोन्मेषरूपाणि च तदाश्रयैस्तत्प्रयुक्तैर्भेदैस्तस्य कालस्यात्मा क्षणलवकाष्ठादिनादिरूपैर्बहुधा भिन्नः । अनेन क्रियायाः कालपरिच्छेदकत्वमुक्तं भवति । एतत् प्रकरणीयद्वितीयकारिकायां तु कालस्य क्रियापरिच्छेदकत्वमुक्तम् ।

धर्मान्तराणि वक्ष्यमाणानि संसर्गीणि क्रियारूपाणि। तद्गतैर्भेदैरेकोऽपि कालो नानात्वेन व्यवह्रियते। तथा च नानाविधकार्यजनकः। सर्वत्रैव च पदार्थानां परोपाधिक एव भेदः, स्वतो भेदाभेदाभ्यामनिर्वाच्यत्वात्। तथा चोक्तम्--

"भिन्ना इति परोपाधिरभिन्ना इति वा पुनः।
भावात्मसु प्रपञ्चोऽयं संसृष्टेष्वेव जायते"॥ इति॥ ६॥

(वा० प० ३, जा० २०)

न हि भिन्नमभिन्नं वेति एतदुदाहरणेन व्यक्तयति--

**नैको न चाप्यनेकोऽस्ति न शुक्लो नापि चासितः।**
**द्रव्यात्मा स तु संसर्गादेवंरूपः प्रकाशते॥ ७॥**

---

तदेवमुभयोः परस्परं परिच्छेद्यपरिच्छेदकभावः समाश्रितः। अन्योन्याश्रयस्तु बीजाङ्कुरवदनुभवसिद्धस्य तस्य न बाधकः। कालस्य परोपाधिकभेदेन भिन्नत्वादेव कोकिलारवं प्रति वसन्तः, केकारवं प्रति वर्षा, हंसरवं प्रति शरद् निमित्तभावेनावकल्पते। न केवलं काल एव परोपाधिकभेदभिन्नः, किन्तु सर्वेऽपि भावाः परोपाधिकभेदेनैव भिन्नाः, स्वरूपेण तेषां मायोपादानकानां भेदाभेदाभ्यामनिर्वाच्यत्वात्। तथा च भावानां परस्परं स्वरूपमेव भेदः, तं प्रति च तेषां प्रतियोगिरूपेण परस्परं ज्ञापकहेतुत्वम्, भेदस्य ध्वंसवदनित्यत्वे कारकहेतुत्वमपि। तदेतदुच्यते—'न हि भिन्नमभिन्नं वा वस्तु किञ्चन विद्यते' इति। अत्र स्वरूपेणेति शेषः। मायामयत्वादिति हेतुरिति।

अयं भावः--धर्मान्तराणि एतत्प्रकरणीयाष्टमकारिकायां वक्ष्यमाणानि परिच्छेद्यतया कालसंसर्गीणि क्रियारूपाणि, तद्गतैर्भेदैरेकोऽपि कालो नानात्वेन व्यवह्रियते। तथा च=तथैव च, न त्वभेदे नानाविधकार्यजनकः। कारणभेदादेव कार्यभेदसंभवात्। न केवलं कालस्यैव, अपि तु सर्वत्रैव च पदार्थानां परोपाधिक एव भेदः। स्वतस्तेषां मायामयत्वेन भेदाभेदाभ्यामनिर्वाच्यत्वात्। तथा चोक्तम्—

भिन्ना इति परोपाधिरभिन्ना इति वा पुनः।
भावात्मसु प्रपञ्चोऽयं संसृष्टेष्वेव जायते॥ इति॥

अस्यार्थः---भेदरूपेषु अभेदरूपेषु वा भावात्मसु=भावस्वरूपेषु घटाद् भिन्नाः पटादय इति उपादानादभिन्ना उपादेया इति वा पुनः परोपाधिः प्रतियोग्युपाधिकः। अयं सर्वोऽपि व्यवहारप्रपञ्चः प्रतियोगिसंसृष्टेष्वेव जायत इति॥६॥

'न हि भिन्नमभिन्नं वा' इत्येतदुदाहरणेन व्यक्तीकरोति--नैको न चाप्यनेक इति।

अस्यार्थः---स तु=बुद्धिगतस्तु द्रव्यात्मा द्रव्यस्वभावो निरुपाधिर्ब्रह्मरूपः संसर्गात्=घटादितद्गतगुणादिरूपासत्योपाधिसंसर्गादारोपितादेवंरूपः 'घट इति, पट इति, एक इति, अनेक इति, शुक्ल इति, कृष्ण इति' एवं प्रकाश्यते। यथा--

निरुपाधिर्द्रव्यस्वभावो व्यवहारं नापततीत्येकत्वादिसङ्ख्यासमवायादेकादिव्यवहारः। शुक्लकृष्णरूपसमवायाच्च शुक्लकृष्णरूपतया द्रव्यमभिधीयते। एवं गोत्वादिसमवायाद् गौरित्यादिव्यवहारा बोद्धव्याः। तथा कालेऽप्युत्पत्त्यादिक्रियासम्बन्धवशादुत्पत्तिकालः, स्थितिकालो, विनाशकाल इत्यादिव्यवहार इत्यर्थः ॥ ७ ॥

अतश्च--

**संसर्गिणां तु ये भेदा विशेषास्तस्य ते मताः।**
**स भिन्नस्तैर्व्यवस्थानां कालो भेदाय कल्पते ॥ ८ ॥**

संसर्गिणः कालस्य सम्बन्धिनः सूर्यादिग्रहप्रचाररूपाः क्रियाविशेषाः। तेषां भेदेनोपहितात्मातिशयोऽसावहोरात्रपक्षमासर्त्वयनसंवत्सरयुगमन्वन्तरादिव्यवस्थाभेदमासादयति।

---

मन्दान्धकारे रज्जुः स्वस्मिन्नध्यारोपितैः सर्पत्वादिभिः सर्पः, धाराः, दण्डः, माला इति प्रकाशते व्यवह्रियते च।

वस्तुतस्तु स द्रव्यात्मा ब्रह्मरूपो निरुपाधिर्नैको, न चाप्यनेकोऽस्ति, न शुक्लो, नापि चासितः, नापि च कृष्ण इति।

अयं भावः—निरुपाधिर्द्रव्यस्वभावो ब्रह्मव्यवहारे नापतति, अवाङ्मनसगोचरत्वात्, इति तत्रारोपितादेकत्वादिसंख्यासमवायादेकादिव्यवहारः। शुक्लकृष्णरूपसमवायाच्चारोपितात् शुक्लकृष्णरूपतया द्रव्यमभिधीयते। एवं गोत्वादिसमवायात् तत्रारोपिताद् गौरित्यादिव्यवहारा बोद्धव्याः। तथा कालेऽप्युत्पत्त्यादिक्रियाध्यारोपवशादुत्पत्तिकालः, स्थितिकालो, विनाशकाल इत्यादिव्यवहार इति ॥ ७ ॥

अतश्च=कालस्य क्रियारूपस्वसंसर्गिगतभेदप्रयुक्तभेदवत्त्वाच्च, कालोऽहोरात्रमासादिव्यवस्थानां भेदाय कल्पत इत्याह—संसर्गिणां तु इति।

अस्यार्थः—संसर्गिणां तु कालस्य सम्बन्धिनां तु क्रियारूपाणां सूर्यादिग्रहप्रचाराणामक्षिपक्ष्मगतनिमेषोन्मेषादिरूपाणां च व्यापाराणां ये भेदाः=विशेषास्ते तस्य कालस्य विशेषा मता इष्टाः, प्रयोज्यप्रयोजकयोरभेदोपचारात्। स कालस्तैः सूर्यादिग्रहप्रचारादिभिर्भिन्नः सन् व्यवस्थानां सर्वासामहोरात्रपक्षमासर्त्वयनादिरूपाणां कालव्यवस्थानां भेदाय कल्पते प्रभवतीति।

अयं भावः—संसर्गिणः कालस्य सम्बन्धिनः सूर्यादिग्रहप्रचाररूपाः क्रियाविशेषाः, तेषां भेदेन=प्रत्येकं विशेषेणोपाधिरूपेण, उपहितात्मातिशयः=समुपजनितात्मविशेषः, असौ कालोऽहोरात्रपक्षमासर्त्वयनसंवत्सरयुगमन्वन्तरादिव्यवस्थाभेदमासादयति=प्राप्नोति।

तथा हि--दिवसकरोदयास्तमयावधिपरिच्छिन्नः कालोऽहरिति व्यपदेश्यः। तदुदयविच्छेदोपहितभेदस्तु निशा। आवर्तमानश्चाहोरात्राभ्यां पक्षादिव्यपदेशं यथायोगमासादयति। अक्षिपक्ष्मगतनिमेषोन्मेषादिक्रियोपहितभेदस्तु क्षणलवकाष्ठादिव्यवहारं वर्तयति ॥ ८ ॥

तदेवमुपाधिभेदाहितविशेषोऽसङ्करेण निमित्तभावमुपजनादिक्रियाव्यवच्छेदेन भावेषु कालः प्रतिपद्यते। तथा हि--

विशिष्टकालसम्बन्धाद् वृत्तिलाभः प्रकल्पते।
शक्तीनां सा प्रयोगस्य हेतुत्वेनावतिष्ठते ॥९॥

वसन्तादिकाले साधनशक्तीनां प्रवृत्तिदर्शनात् तासां प्रयोजको हेतुर्निमित्तकारणं काल उन्नीयते। कालप्रेरिता हि शक्तयो जन्मादिक्रिया भावानां साधयन्ति ॥ ९ ॥

---

तथा हि--दिवसकरोदयास्तमयाभ्यामाद्यन्ताभ्यामवयविभ्यां परिच्छिन्नः कालोऽहरिति व्यपदेश्यः। तदुदयविच्छेदोपहितभेदस्तु निशा=सूर्योदयविच्छेदेनोपाधिना परिच्छिन्नस्तु कालविशेषो निशा। अहोरात्राभ्यामावर्तमानाभ्यामावर्तमानश्च कालविशेषो यथायोगम्=यथासम्भवं पक्षादिव्यपदेशं लभते। अक्षिपक्ष्मगतनिमेषोन्मेषादिक्रियोपहितक्रियारूपोपाधिप्रयुक्तभेदस्तु कालः क्षणलवकाष्ठादिव्यवहारं वर्तयति=प्रवर्तयतीति ॥ ८ ॥

तदेवं क्रियारूपोपाधिभेदाहितविशेषः=क्रियारूपोपाधिविशेषप्रयुक्तविशेषवान् काल उपजनादिक्रियाव्यवच्छेदेन=उत्पत्तिस्थित्यादिक्रियाव्यवधानेनासङ्करेण=भेदेन भावेषु परस्परं विलक्षणस्वरूपेण निमित्तभावं प्रतिपद्यत इत्याह--विशिष्टकालसम्बन्धादिति।

अस्यार्थः--विशिष्टकालसम्बन्धात्=विलक्षणकालसम्बन्धात् शक्तीनां स्वस्वकार्यं प्रति वृत्तिलाभो=व्यापारलाभो यतः प्रकल्पते=प्रसिद्ध्यति, अतः स कालः शक्तीनां प्रयोगस्य प्रेरणया हेतुत्वेनावतिष्ठत इति।

अयं भावः--वसन्तादिकाले वासन्त्यादिकुसुमकोकिलारवादिसाधनशक्तीनां स्वकार्यानुकूलप्रवृत्तिदर्शनात् तासाम्=शक्तीनां प्रयोजको हेतुर्निमित्तकारणं काल उन्नीयते=अनुमीयते। अयमत्रानुमानप्रयोगः। वसन्तादिकाले नियमेन जायमानपिकरवादिकं जनयितुं जायमानाः साधनशक्तयः, स्वान्वयव्यतिरेकानुविधायिस्वप्रयोजकस्वनिमित्तकारणीभूतकालवत्यः, प्रवृत्तित्वात्, अस्मदादीनां कृष्यादिप्रवृत्तिवदिति। कालप्रेरिता हि साधनशक्तयो भावानां जन्मादिक्रियाः साधयन्ति इति ॥ ९ ॥

तथा च—

जन्माभिव्यक्तिनियमाः प्रयोगोपनिबन्धनाः ।
नित्याधीनस्थितित्वाच्च स्थितिर्नियमपूर्विका ॥१०॥

कालेन प्रयुक्ताः कारणशक्तयोऽभ्यनुज्ञाताः सत्यो जनयन्ति कार्यमभिव्यञ्जयन्ति च । सत्कार्यदर्शने नियमो जातस्याभिव्यक्तस्य च नियतकालमवस्थानम् । अत एव स्थितिर्नियमपूर्विकेत्याह । सापि च शाश्वतरूपकालायत्ता । विनाशोऽपि विनाशकानां कालकृतशक्तिप्रयोगाणां सामर्थ्याद् भावानां कालायत्ता इति । 'उत्पत्तौ च स्थितौ च' ( वा० प० ३, काल० ३ ) इत्यादि पूर्वोक्तमेवानेन प्रपञ्चितम् ॥१०॥

अन्यदपि कालकृतमाह—

स्थितस्यानुग्रहस्तैस्तैर्धर्मैः संसर्गिभिस्ततः ।
प्रतिबन्धस्तिरोभावः प्रहाणमिति चात्मनः ॥११॥

---

'उत्पत्तौ च स्थितौ चैव' (वा० प० ३, काल० ३) इत्यादिकारिकया विशिष्टकालसम्बन्धादिति च कारिकयोक्तमेवार्थं प्रपञ्चयति—जन्माभिव्यक्तिनियमा इति ।

अस्यार्थः —असत्कार्यवादे कार्याणां जन्म=उत्पत्तिः, सत्कार्यवादे तु तेषामभिव्यक्तिराविर्भावः, नियमो निरन्वयध्वंसवादे विनाशः, सत्कार्यवादे तु स उपादाने तिरोभावः, एते भावानां क्रियारूपाः प्रयोगोपनिबन्धनाः, कालकृतो यः साधनशक्तीनां प्रयोगः प्रेरणा तदुपनिबन्धनास्तत्कृताः । कार्याणां नित्याधीनस्थितित्वात्=नित्यकालाधीनस्थितिकत्वात् तेषां स्थितिश्च नियमपूर्विका=कालकृतप्रयुक्तिपूर्विका नियता, न त्वनियतकालिकी इति ।

यत्त्वत्र जन्माभिव्यक्तीर्व्याख्याय—"सत्कार्यदर्शने नियमो जातस्याभिव्यक्तस्य च नियतकालमवस्थानम्" इत्येवं नियमपदं व्याख्यातं हेलाराजेन, तन्न सम्यक् । एवं सत्यत्र विनाशस्यासङ्ग्रहादिति ।

अयं भावः —कालेन प्रयुक्ताः—प्रेरिताः कारणशक्तयः पूर्वं प्रतिबद्धा अपि कार्ये भाविनि सति कालेनाभ्यनुज्ञाताः सत्यः कार्यं जनयन्ति=अभिव्यञ्जयन्ति च=वा । "सत्कार्यदर्शने नियमो जातस्याभिव्यक्तस्य च कार्यस्य नियतकालमवस्थानम् । अत एव स्थितिर्नियमपूर्विकेत्याहेति" व्याख्यातं हेलाराजेन । अत्र यद् वक्तव्यं तत् प्रागेवोक्तम् । सापि=अभिव्यक्तिवत् स्थितिरपि शाश्वतकालायत्ता कालकृतशक्तिप्रयोगाणाम्=कालकृतशक्तिप्रेरणानां विनाशकानां सामर्थ्याद् भावानां विनाशोऽपि कालायत्त इति । कालस्य अशाश्वतत्वे हि नियताभावस्य स्थितिर्न स्यात् । नित्यत्वे तु कालस्य सहकारित्वात् सा उपपद्यत इति । 'उत्पत्तौ च स्थितौ च' इत्यादिना पद्येन पूर्वोक्तमेवानेन पद्येन प्रपञ्चितम्=विस्तरेणोक्तम् इति ॥ १० ॥

न केवलं भावानां जन्माभिव्यक्तिनियमा एव कालकृताः; किन्तु तेषामन्यदपि वृद्धिक्षयादिकं कालकृतमाह—स्थितस्यानुग्रह इति ।

ततः कालादवस्थितस्यापि वस्तुनो वर्धकैर्विनाशकैश्चापरैः सम्बन्धिभिर्भावैः क्रमेणानुग्रहो वृद्धिक्षयलक्षणः, भावात्मनश्च प्रतिबन्धः स्वकार्यासामर्थ्यम्, तिरोभावोऽदर्शनम्, प्रहाणं विनश्यत्तेत्यादयः सर्व एव विकाराः कालाधीनाः, नियतसमयत्वात् ॥११॥

एवञ्च कृत्वा ये क्रमवन्तः क्रियाविशेषा भावानां ते कालाधीनत्वात् पृथगप्रत्यवभासमानाः काल एवेति व्यवह्रियन्त इत्याह—

प्रत्यवस्थं तु कालस्य व्यापारोऽत्र व्यवस्थितः।
काल एव हि विश्वात्मा व्यापार इति कथ्यते ॥१२॥

अनुग्राहकत्वादिभेदेन नियतस्थितिप्रसवनिरोधावस्थासु कालस्य व्यापा-

---

अस्यार्थः --अत्र तत इत्यस्यावृत्या स्थितस्येत्यनेन, अनुग्रह इत्यनेनापि च सहान्वयः। ततः कालात् स्थितस्यापि भावस्य कालसंसर्गिभिस्तैस्तैर्वर्धकैर्विनाशकैश्च भावैस्तत एव=कालादेवानुग्रहो वृद्धचपक्षयलक्षणः क्रमेण भवति। किञ्चात्मनो भावस्वरूपस्य प्रतिबन्धः स्वकार्यासामर्थ्यम्, तिरोभावोऽदर्शनम्, प्रहाणं विनश्यत्ता=विनाश इति चैवंविधाः सर्व एव विकारास्तत एव=कालादेव भवन्तीति।

अयं भावः --ततः पूर्वोक्तरूपात् कालादवस्थितस्यापि=स्थितिरूपावस्थावतोऽपि भावस्य वर्धकैर्विनाशकैश्चापरैः=कालादतिरिक्तैः कालसम्बन्धिभिर्भावैः क्रमेणानुग्रहो वृद्धिक्षयलक्षणः=वृद्धिह्रासलक्षणः क्रियमाणस्तत एव भवति। भावात्मनश्च=भावस्वरूपस्य च प्रतिबन्धः स्वकार्यसामर्थ्यम्, तिरोभावोऽदर्शनम्, प्रहाणं विनश्यत्ता=विनाश इत्यादयः सर्वे विकाराः कालाधीना एव, नियतसमयत्वात्=नियत एव काल एषां विकाराणां समुद्भवादिति ॥ ११ ॥

एवञ्च कृत्वा=भावानां सर्वा अवस्थाः शाश्वतकालायत्ता इति प्रागुक्तरीत्या विचार्य च ये वृद्धचपक्षयलक्षणाः प्रतिबन्धादिलक्षणाश्च भावानां क्रमवन्तः क्रियाविशेषास्ते कालाधीनत्वात् कालात् पृथगप्रत्यवभासमानाः काल एवेति व्यवह्रियन्ते, अनुग्रहकालः, प्रतिबन्धकाल इत्यादि इत्याह--प्रत्यवस्थं त्विति।

अस्यार्थः --प्रत्यवस्थं तु नियतकालासु स्थितिनिरोधाख्यासु अवस्थासु प्रत्येकं तु अनुग्राहकत्वप्रतिबन्धकत्वतिरोभावकत्वादिभेदेन कालस्य व्यापारोऽत्रास्ववस्थासु व्यवस्थितः। हिशब्दः प्रसिद्धौ, विश्वात्मा विश्वस्य कालायत्तत्वाद् विश्वस्यात्मा प्रयोजकत्वेन सूत्रस्थानीयः काल एव भावानां सर्वविधव्यापाररूप इति कथ्यते, कार्यकारणयोरभेदोपचारादिति।

अयं भावः --अनुग्राहकत्वप्रतिबन्धकत्वादिभेदेन कालस्य व्यापारो नियतकालासु स्थितिप्रसवनिरोधावस्थास्वविनाभावी इति विश्वस्य कालाधीनत्वाद्

रोऽविनाभावीति विश्वस्यैतदायत्तत्वादात्मा सूत्रस्थानीयश्चेष्टहेतुत्वाद् व्यापार एवाभेदेनासौ व्यवह्रियते ॥१२॥

विश्वात्मत्वमेवास्य प्रतिपादयितुमाह —

मूर्तीनां तेन भिन्नानामाचयापचयाः पृथक् ।
लक्ष्यन्ते परिणामेन सर्वासां भेदयोगिना ॥१३॥

प्राण्यप्राणिरूपाणां भावानां तेन कालेन परिणामकरणादानुपूर्व्या वृद्धिह्रासा विवेकेन लक्ष्यन्ते यौवनस्थाविरावस्थासु । भेदयोगिनेति संसर्गिक्रियाविशेषोपहितनानात्वेनेत्यर्थः । मूर्तिग्रहणेन नित्येषु कालकृतोपकाराभावमाह । प्रतिबन्धाभ्यनुज्ञाभ्यां हि जन्मविनाशवत्यो मात्राः काले समायतन्ते ॥१३॥

अन्वर्थेन नाम्नैव कालो विश्ववैचित्र्यहेतुरित्याह—

जलयन्त्रभ्रमावेशसदृशीभिः प्रवृत्तिभिः ।
स कलाः कलयन् सर्वाः कालाख्यां लभते विभुः ॥१४॥

---

विश्वस्यात्मा प्रयोजकत्वेन सूत्रस्थानीयो भावानां सकलचेष्टाहेतुत्वात् कार्यकारणयोरभेदोपचारेण व्यापार एवासौ कालो लोके व्यवह्रियते । तद्यथा—

'अयं स कालः सम्प्राप्तो योऽप्रियः प्रिययोषिताम्' । इति ।

प्रिययोषितामप्रियो विनाशः स्वप्रयोजककालाभेदेन व्यवहृत इति ॥१२॥

कालस्य विश्वात्मत्वमेवात्रोक्तं प्रतिपादयितुमाह—मूर्तीना तेनेति ।

अस्यार्थः —तेन कालेन भिन्नानां सर्वासां मूर्तीनां जन्यानां प्राण्यप्राणिरूपाणां भावानामाचयापचया वृद्धिह्रासाभेदयोगिना कालसंसर्गिक्रियाविशेषोपहितभेदेन परिणामेन पृथक् = विवेकेन लक्ष्यन्ते यौवनस्थाविरावस्थासु इति ।

अयं भावः—प्राण्यप्राणिरूपाणाम् = चराचररूपाणां भावानामत्र मूर्तिपदेनाभिप्रेतानां तेन कालेन परिणामकरणात् = तात्त्विकान्यथाभावकरणाद् आनुपूर्व्या = क्रमेण वृद्धिह्रासाविवेकेन लक्ष्यन्ते यौवनस्थाविरावस्थासु । भेदयोगिना इत्यस्य कालसंसर्गिक्रियाविशेषोपहितनानात्वेनेत्यर्थः, मूर्तिग्रहणेनात्र जन्यभावपरिग्रहात् । नित्येषु कालकृतोपकाराभावमभिधत्ते जन्मविनाशवत्यो मात्रा हि = जन्मविनाशवन्तो भावा हि स्वप्रतिबन्धाभ्यनुज्ञाभ्यां कालस्य व्यापाराभ्यां हेतुभ्यां रूपाभ्यां फलाभ्याम् = एतत्फलसिद्धये काले समायतन्ते = कालविषयकं समीचीनं प्रयत्नं कुर्वन्ति । कालं प्रयोजयन्तीति यावत् ॥ १३ ॥

सत्कार्यवादे कालयति = उत्पत्तेः प्राक् स्वकारणेषु लीनान् भावान् बहिः क्षिपतीति काल इत्यन्वर्थेन नाम्नैव कालो विश्ववैचित्र्यहेतुरित्याह — जलयन्त्रभ्रमेति ।

अस्यार्थः —जलस्योद्धरणार्थं यन्त्रं जलयन्त्रं घटीयन्त्रम् । तच्च व्यवहृतम्—

जीवनग्रहणे नम्रा गृहीत्वा पुनरुन्नताः ।
किं कनिष्ठाः किमु ज्येष्ठा घटीयन्त्रस्य दुर्जनाः ॥ इति ॥

जलस्योद्धरणार्थं यन्त्रमरघट्टप्रायम्, तस्य भ्रम. परिवर्तनम्, तेनावेशस्तस्यैव क्षोभः, तत्तुल्याः परावर्तमानस्य कालस्य पुनः पुनर्वसन्तादिभावेनावृत्तयः, ताभिरयं विभुर्व्यापको नित्योऽपि कलयति क्षिपति कला भावपर्यायाः समुत्सृजति स्वकारणेभ्यः प्रवर्तयतीति कालाख्यामन्वर्थां लभते।

अनेनैतत् सूचयति--विश्वात्मैक एव परब्रह्माभिधानः सत्यो भावः। स एव नानाविधकार्यकारितयानन्तशक्तित्वेन व्यवह्रियते। तथा च क्रमिकांश्चक्रभ्रमवत् परावर्तमानान् भावान् प्रकाशयन् कालयति भूतानीति काल इत्युच्यते। स विभुः स्वतन्त्रः। अत एव 'स्वातन्त्र्यशक्तिः कालः' इति वाक्यपदीये सिद्धान्तितम्।

---

तस्य भ्रमो भ्रमणं परिवर्तनम्, तेनावेशो घटीयन्त्रस्यैव क्षोभस्तत्तुल्याभिः अहोरात्रकालस्य वसन्तादिकालस्य च पुनः पुनः प्रवृत्तिभिः=आवृत्तिभिः —तदुक्तं चरपटिकास्तोत्रे श्रीशङ्करभगवत्पादैः —

पुनरपि रजनी पुनरपि दिवसः, सायं प्रातः पुनरायातः।
कालः क्रीडति गच्छत्यायुः, तदपि न मुञ्चत्याशावायुः॥
भज गोविन्दं भज गोविन्दं, गोविन्दं भज मूढमते।
प्राप्ते सन्निहिते मरणे, नहि नहि रक्षति डुकृञ् करणे॥ इति॥

सर्वाः कलाः सर्वान् भावान् कालयन्=स्वकरणेभ्यो बहिःक्षिपन् प्रवर्तयन् स परब्रह्माभिधः, विभुः=विनतान् भावयतीति विभुः। विपूर्वाद् भवतेरन्तर्भावितण्यर्थाद् डुः। विभुः=स्वतन्त्रः कालः कालाख्यां लभत इति।

अयं भावः —जलस्योद्धरणार्थं यन्त्रमरघट्टप्रायमरघट्टसदृशम्। अरहट इति भाषायाम्। तस्य भ्रमः परिवर्तनम्=भ्रमणम्, तेनावेशः, तस्यैव=जलयन्त्रस्यैव क्षोभः। तत्तुल्याभिर्भ्रमतः कालस्य पुनः पुनर्वसन्तादिभावेनावृत्तिभिः, अयं विभुर्व्यापको नित्योऽपि कालयति, क्षिपति कला भावपर्यायाः समुत्सृजति स्वकरणेभ्यो बहिः प्रवर्तयतीति कालाख्यामन्वर्थां लभते।

अनेनैतत् सूचयति—विश्वस्यात्मा एक एव परब्रह्मपदाभिधेयः सत्यो भावः। स एव मायासंवलितो नानाविधकार्यकारितयाऽनन्तशक्तियुक्तो व्यवह्रियते। "पराऽस्य शक्तिर्विविधैव श्रूयते" इति श्रुतेः। तथा च क्रमिकान्—क्रमेण जायमानान् चक्रभ्रमवत् परावर्तमानान्=भ्रमतः स्वकारणेषु लीनान् भावान् कारणसामग्रीसहकृतस्तत्तदुपादानकारेणभ्यः प्रकाशयन्=आविर्भावयन् कालयति भूतानि=स्वकारणेषु लीनानि तानि तेभ्यो बहिः क्षिपतीति व्युत्पत्त्या काल इत्युच्यते। कल क्षेपे' इति चौरादिकात् स्वार्थिकणिजन्तात् पचाद्यच्। संख्यानार्थकस्य तु चौरादिकस्यैव कलयतीति भवति। मित्त्वादुपधाह्रस्वः। स च कालो

'अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः' । ( वा० प० १।३ )

इत्यत्र । इहापि च सिद्धान्तयिष्यति—

'शक्त्यात्मदेवतापक्षैर्भिन्नं कालस्य दर्शनम्' । इति ।

( वा० प० ३, काल० ६२ )

यथा हि भ्रामको बाहुना जलयन्त्रं परिवर्तयति, तथा कालशक्त्या विभुर्भावानिति ॥१४॥

---

विभुः स्वतन्त्रः । अत एव ब्रह्मणः स्वातन्त्र्यशक्तिरेव काल इति वाक्यपदीये सिद्धान्तितम् ।

अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराः षड् भावभेदस्य योनयः ॥ इति । (वा०प०१।३)

अस्यार्थः —यस्य ब्रह्मणोऽध्याहितकलाम् अध्याहिता अध्यारोपिताः कला भावा यस्यां तां तादृशीं कालशक्तिमुपाश्रिताः स्वकारणत्वेनाश्रिता जन्मादयः षड्-विकारा जायन्ते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, नश्यति इत्येवंरूपा भावभेदस्य=भावानां सजातीयानां विजातीयानाञ्च परस्परं भेदस्य योनयो भवन्तीति । इहापि च प्रकरणे सिद्धान्तयिष्यति—'शक्त्यात्मदेवतापक्षैर्भिन्नं कालस्य दर्शनम्' इति ।

अस्यार्थः —परब्रह्मणः शक्तिः काल इति । परमात्मैव काल इति । तदुक्तं गीतासु—"कालोऽस्मि लोकक्षयकृत्प्रवृद्धः" इति । देवताविशेषः कालः । तदुक्तं गीतासु—

धूमो रात्रिस्तथा कृष्णः षण्मासा उत्तरायणम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ इति ॥

अत्र सर्वे कालशब्दा देवतापरतया व्याख्याताः श्रीशङ्करभगवत्पादैः, इति पक्षैर्हेतुभिः कालविषयकं दर्शनं भिन्नमिति ।

यद्वा पूर्वोक्ताद् घटीयन्त्रादरघट्टाख्याद् भिन्नमेव जलयन्त्रम्—यद् जलेन प्रपूरितमुद्यानादौ तरूणां प्रसेकाय घण्टापथप्रसेकाय वा जलप्रक्षेपणार्थं बाहुना भ्राम्यमाणं सत्तरुषु घण्टापथेव जलं मुञ्चति । तच्च चर्मकृतं मशक इति लोके प्रसिद्धम्, आरकूटकंसादिकृतञ्च पिचकारी इति प्रसिद्धम्, पुरा घण्टापथप्रसेकाय होलिकोत्सवे वा लोके प्रयुज्यते स्म । एवञ्च यथा जलयन्त्रभ्रामको बाहुना जलयन्त्रं परिवर्तयति=सर्वतो भ्रमयन् जलं प्रवर्तयति, तथा कालशक्त्या विभुर्भावान् परिवर्तयति=स्वकारणेभ्यः प्रवर्तयतीति ॥ १४ ।

प्रतिबन्धलक्षणापि कालप्रवृत्तिरभ्यनुज्ञायैवाक्षिप्तेति सर्वथा कालपारतन्त्र्यं निदर्शनोपन्यासेनाह —

प्रतिबद्धाश्च यास्तेन चित्रा विश्वस्य वृत्तयः ।
ता स एवानुजानाति यथा तन्तुः शकुन्तिकाः ॥१५॥

हेमन्तादिकालभेदापन्नेन साधनशक्तयः कालेन प्रतिबद्धास्ता एव, वसन्तादिभावमनुप्राप्तः स एवोत्सृजतीति कालयतीत्युच्यते । तद् यथा— बृहत्पक्षिग्रहणोपायभूतान् सूक्ष्मपक्षिणस्तन्तुर्बन्धनसूत्रमेव प्रसारितं प्रवर्तयत्युत्सृजति, पुनस्तदेव सङ्कोचितं प्रतिबध्नाति । धीवरा हि पक्ष्यन्तराणां ग्रहणाय सूत्रप्रतिबद्धान् पक्षिणश्चेष्टयन्ति । तथा च ते सूत्रप्रतिबद्धास्तत्सङ्कोचविकासाभ्यां प्रतिबन्धोत्सर्गावनुभवन्ति, न तूच्छृङ्खला एवोड्डीय गन्तुं प्रभवन्ति, तथेच्छायां तन्तुनापकर्षणात् ।

एवं कालसूत्रप्रतिबद्धाः पदार्थाः सङ्कोचविकासलक्षणावुत्पत्तिध्वंसावनवरत-

---

साधनशक्तीनां प्रतिबन्धलक्षणाऽपि कालप्रवृत्तिस्तासामभ्यनुज्ञयैवाक्षिप्ताः प्रतिबन्धं विनाऽभ्यनुज्ञाया अनुपपत्तेरिति सर्वथा कालपारतन्त्र्यं विश्वस्य निदर्शनोपन्यासेन=दृष्टान्तोपन्यासेन, आह—प्रतिबद्धाश्चेति ।

अस्यार्थः —चित्राः=विचित्रकार्यानुकूलत्वाद् विचित्राः, विश्वस्य वृत्तयो विश्वस्य स्वकार्येषु प्रवृत्यनुकूलाः साधनशक्तयस्तेन कालेन प्राक् प्रतिबद्धास्ताः, स एव=काल एवानुजानाति, यथा तन्तुः=शकुन्तिकाबन्धनतन्तुः प्राक् प्रतिबद्धाः शकुन्तिका उड्डयितुमनुजानातीति ।

अयं भावः—हेमन्तादिकालभेदापन्नेन=हेमन्तादिकालविशेषरूपतामापन्नेन येन कालेन या वासन्तिकादीनां पुष्पादीनां साधनशक्तयः प्राक् प्रतिबद्धाः स एव कालो वसन्तादिभावमनुप्राप्तस्ता एव साधनशक्तीरुत्सृजति=अनुजानातीति कालयतीत्युच्यते । तद्-यथा श्येनादिरूपबृहत्पक्षिग्रहणोपायभूतान् तद्भक्ष्यभूतान् चटकादीन् सूक्ष्मपक्षिणस्तन्तुस्तद्बन्धनसूत्रमेव प्रसारितं सत् प्रवर्तयति=उत्सृजति, पुनस्तदेव सूत्रं संकोचितं सत् सूक्ष्मपक्षिणश्चेष्टितुं प्रतिबध्नाति धीवरा हि=निषादविशेषा हि जात्या हीना अपि बुद्धयावराः पक्ष्यन्तराणाम्=बृहत्पक्षिणां श्येनादीनां ग्रहणाय सूत्रप्रतिबन्धान् तद्भक्ष्यभूतान् चटकादीन् सूक्ष्मपक्षिण बृहत्पक्षिग्रहणाय प्रसारितजालसमीपे चेष्टयन्ति तद्भक्षणाय च तत्रागता बृहत्पक्षिणः श्येनादयस्तत्र स्थिते जाले निपतन्ति बध्यन्ते च । धीवराणाञ्चानया रीत्या श्येनादिग्रहणं गृहीतश्येनादिभिः शिक्षितैः पक्षिणामाखेटकरणाय इति ।

तथा च ते=सूक्ष्मपक्षिणः सूत्रप्रतिबद्धाः प्रयोजककर्तृकृताभ्यां सूत्रसंकोचविकासाभ्यां स्वचेष्टाप्रतिबन्धोत्सर्गावनुभवन्ति, न तूच्छृङ्खला इवोड्डीय गन्तुं

वरतमनुभवन्तीत्यर्थः। अतश्च कालप्रसेवकान्तर्गतं विश्वं प्राप्तकालं प्रसूयते, प्रसूतमवतिष्ठते, अवस्थितं कृतकरणीयं विनश्यति ॥१५॥

कथमित्यत्रैव क्रममाह—

**विशिष्टकालसम्बन्धाल्लब्धपाकासु शक्तिषु।**
**क्रियाभिव्यज्यते नित्या प्रयोगाख्येन कर्मणा ॥१६॥**

इह प्राणिनामुपभोगाय विश्वरचनाऽपञ्च इति प्रलयपर्यवसानसमयेऽदृष्टवशात् परमाणुषु यथास्वं कार्यजनिकाः शक्तयोऽभिमुखीभवन्ति। दर्शनान्तरे प्रधाने वा मूलकारणे कार्योन्मुखशक्तिषु च नित्येषु मूलकारणेषु परस्परसंश्लेषाय प्रयोगः प्रेरणाख्यः कर्मविशेषो जायते, येन सामान्यभूता प्रवृत्तिरिति पूर्वव्याख्यातसतत्त्वा सर्वभावगता नित्या क्रिया प्रकटीक्रियते। तथा च सव्यापाराणि कारणानि परस्परं संयुज्यन्ते ॥१६॥

---

प्रभवन्ति, तेषां तथेच्छायाम्=उड्डीय क्वचिद् गन्तुमिच्छायां बन्धनतन्तुना तेषामाकर्षणात्। एवं सूत्रप्रयोगकालेन प्रतिबद्धाः सर्वे जन्मादिविकारवन्तो भावाः संकोचविकासलक्षणावुत्पत्तिध्वंसावनुभवन्ति। अतश्च कालस्य प्रसेवकान्तर्गतम्=दासान्तर्गतं विश्वं प्राप्ते काले प्रसूयते, अवस्थानकाले प्राप्ते प्रसूतं सदवतिष्ठते अवस्थितं च कृतकार्यमवस्थानफलाभावाद् विनश्यतीति ॥ १५ ॥

कथं प्रसवावस्थानविनाशाभावानामित्याशङ्क्यात्रैव क्रममाह—**विशिष्टकालसम्बन्धादिति।**

अस्यार्थः—शक्तिषु परमाणुरूपोपादानकारणगतासु तत्तत्कार्यजनिकासु शक्तिषु, विशिष्टकालसम्बन्धाद् विलक्षणकालसम्बन्धात्, तत्तत्कार्यानुकूलकालसम्बन्धाददृष्टसहकृताद् लब्धपाकासु प्राप्तौन्मुख्यासु सतीषु नित्येषु मूलकारणेषु कालकृतेन प्रयोगाख्येन प्रेरणाख्येन कर्मणा परस्परसंश्लेषाय नित्या क्रिया क्रियासमुद्देशे व्याख्याता सत्ताख्या सर्वभावगताऽभिव्यज्यते=प्रकटीक्रियते। तथा च=एवञ्च सव्यापाराणि=नित्यक्रियारूपव्यापारवन्ति मूलकारणानि परमाणुरूपाणि परस्परं सयुज्यन्ते, ततो द्वचणुकाद्युत्पत्तिक्रमेण सर्ग इति।

अयं भावः—इह प्राणिनां सुखदुःखोपभोगाय विश्वरचनाप्रपञ्च प्रति। प्रलयपर्यवसानसमये=प्रलयावसानसमये प्राणिनामदृष्टवशात् परमाणुषु यथायथं कार्यजनिकाः शक्तयोऽभिमुखीभवन्ति=कार्योन्मुखीभवन्ति दर्शनान्तरे=सांख्यदर्शने प्रधाने वा मूलकारणे कार्योन्मुखशक्तिषु च नित्येषु मूलकारणेषु परमाणुषु परस्परसंश्लेषाय प्रयोगः कालकृतः प्रेरणाख्यः कर्मविशेषो जायते, येन मूलकारणेषु सामान्यभूता प्रवृत्तिरिति पूर्वव्याख्यातस्वरूपा सर्वभावगता नित्या क्रिया सत्ताख्या

ततश्च—

जातिप्रयुक्ता तस्यां तु फलव्यक्तिः प्रतीयते।
कुतोऽप्यद्भुतया वृत्त्या शक्तिभिः सा नियम्यते ॥१७॥

तस्यां नित्यायां क्रियायामभिव्यक्तायां सत्यम्—

"कारणेषु फलव्यक्तिः कार्यव्यक्तिः प्रजायते।
स्वाश्रयस्याभिनिष्पत्त्यै सा क्रियायाः प्रयोजिका ॥"
(वा० प० ३, जाति० २५)

इति जातेः प्रयोजकत्वमुक्तम्। नियतजातीयाभिसन्धानेन कारणानां व्यापारो-

---

प्रकटीक्रियते। तथा च सव्यापाराणि=अभिव्यक्तनित्यक्रियारूपव्यापारवन्ति मूलकारणानि परस्परं संयुज्यन्ते, ततो द्व्यणुकादिक्रमेण सर्ग इति ॥ १६ ॥

कालकृतेन मूलकारणानां प्रयोगेण तद्गतनित्यक्रियाऽभिव्यक्तौ सत्यां किं भवतीत्याकाङ्क्षायामाह—जातिप्रयुक्तेति।

अस्यार्थः—तस्यां तु मूलकारेण तिरोहितायां नित्यक्रियायामभिव्यक्तायां सत्यां तु जातिप्रयुक्ता नित्यक्रियाप्रयुक्तिद्वारा जात्या कार्यगतया प्रयुक्ता फलव्यक्तिः=कार्यव्यक्तिः, प्रतीयते=प्रजायमाना प्रतीता भवति। सा च जाता कार्यव्यक्तिः कारणशक्तिभिः कुतोऽपि कुतश्चिद्धेतोः, अद्भुतया वृत्त्या नियम्यते, येन तत्रैव तिष्ठति, तत्सम्बन्धितया च व्यवह्रियते। सांख्यसम्मतस्य सत्कार्यवादसिद्धान्तस्य, नैयायिकसम्मतस्य चासत्कार्यवादसिद्धान्तस्य प्रत्याख्यानेन कार्यविषयकस्य मायिकत्वसिद्धान्तस्य प्राग्व्यवस्थापनेन कुतोऽप्यद्भुतया वृत्त्या इत्युक्तम् इति।

अयं भावः—कारिकायां तस्यां तु इत्यस्य नित्यायां क्रियायामभिव्यक्तायां सत्यां तु इत्यर्थः। कार्योत्पत्तेः प्राग् नियतजातीयस्य करणस्यानुसन्धानेन=परामर्शेन कारणानां कार्योत्पत्तये व्यापारोपपत्तेर्जातिः फलव्यक्तेः प्रयोजककर्त्री उक्ता=जातिप्रयुक्तेति। अत्र च जातेः फलव्यक्तिप्रयोजकत्वं न साक्षात्। किन्तु मूलकारणगतनित्यक्रियाप्रयोजकत्वद्वारेति बोध्यम्। तदुक्तम्—'कारणेषु फलव्यक्तिः' इत्यादि।

अस्यार्थः—सर्गादौ प्राण्यदृष्टसहकृतकालकृतमूलकारणप्रयोगवशान्मूलकारणेषु नित्या क्रियाऽभिव्यज्यते, तया च सव्यापारेषु मूलकारणेषु कार्यरूपा फलव्यक्तिः प्रजायते। प्रजायमानायाश्च फलव्यक्तौ सा जातिः स्वाश्रयस्य फलव्यक्तिरूपस्याभिनिष्पत्त्यै मूलकारणगताया नित्यायाः क्रियायाः प्रयोजिका इति। सदसत्पक्षभेदेन व्यवस्थितस्य यथायथं सांख्यनैयायिकसम्मतस्य दर्शनद्वयस्य प्राक्प्रत्या-

पपत्तेर्जातिः प्रयोजककर्त्री। सदसत्पक्षभेदेन दर्शनद्वयस्य पूर्वं प्रत्याख्यानादाह-- कुतोऽप्यद्भुतया वृत्त्येति।

"अत्यद्भुता त्वियं वृत्तिर्यदभागं यदक्रमम्।
भावानां प्रागभूतानामात्मतत्त्वं प्रकाशते॥"
(वा० प० ३, सं० ८१)

इत्यत्र निर्णीतमेतत्। सा च जाता कार्यव्यक्तिः कारणशक्तिभिर्नियम्यते, येन तत्रैव तिष्ठति। तत्सम्बन्धितया च व्यवह्रियते। सदसत्पक्षयोरपि च कारणानां व्यापारस्य पराकरणात् स्वात्मनि कार्यस्य प्रतिष्ठापनं नियमोऽप्यद्भुताश्चर्यभूता वृत्तिः॥ १७॥

अनन्तरं किं भवतीत्याह--

**ततस्तु समवायाख्या शक्तिर्भेदस्य बाधिका।**
**एकत्वमिव ता व्यक्तीरापादयति कारणैः॥ १८॥**

---

ख्यानादाह—कुतोऽप्यद्भुतया वृत्त्येति। इदञ्च--

अत्यद्भुता त्वियं वृत्तिर्यदभागं यदक्रमम्।
भावानां प्रागभूतानामात्मतत्त्वं प्रकाशते॥ (वा०प० ३, सं०८१)

इत्यत्र निर्णीतम्।

अस्यार्थः--मूलकारणशक्तीनामत्यद्भुताऽचिन्त्याऽनिर्वाच्या त्वियं वृत्तिर्यत्–स्वोत्पत्तेः प्रागभूतानाम् असतां भावानामभागमक्रमञ्चात्मतत्त्वमात्मस्वरूपमुत्पत्तिकाले सभागमिव सक्रममिव प्रकाशते=प्रतीयत इति। सा च जाता कार्यव्यक्तिः कारणशक्तिभिर्नियम्यते, येन तत्रैव=कारण एव तिष्ठति। तत्सम्बन्धितया च=कारणसम्बन्धितया च व्यवह्रियते। सदसत्पक्षयोरपि च कारणानां व्यापारस्य पराकरणात्=निराकरणात्। नित्यत्वेन कार्यस्य कारणात्मनि सत्त्वे तद्विषयकस्य कारणव्यापारस्य वैफल्यात्, तत्र तस्यासत्त्वे च निर्विषयत्वेन कारणव्यापारासम्भवात्, कार्यस्य स्वात्मनि प्रतिष्ठापननियमोऽपि कारणानां कारणशक्तीनाञ्चाश्चर्यभूता वृत्तिः, कार्यकारणयोरुभयोरपि सदसद्विलक्षणत्वेन कार्यकारणभावनियम्यनियामकभावयोर्वस्तुभूतयोरनुपपत्तेरिति ॥१७॥

प्रजायमानायाः फलव्यक्तेरुपादानकारणे शक्तिभिर्नियमनानन्तरं किं भवतीति जिज्ञासायामाह—ततस्तु इति।

अस्यार्थः—ततस्तु=शक्तिकृतनियमानन्तरं तु, समवायाख्या कार्यकारणयोर्भेदस्य बाधिका शक्तिः, अत्र पारतन्त्र्यरूपधर्मसाम्यात् संसर्गोऽपि समवायः, शक्तित्वेन व्यवहृतः, तत्र समवायस्य प्रतियोगिनि रूपणाधीननिरूपणत्वेन प्रतियोगिपारतन्त्र्यम्, शक्तेस्तु शक्तसङ्कल्पाधीनप्रवृत्तिकत्वेन शक्तपारतन्त्र्यम्, जडशक्ति-

इह तन्तुषु पट इत्यादीह प्रत्ययहेतुः समवायः पारतन्त्र्यसाम्यात् पूर्वं शक्तित्वेन व्यवस्थापितः। स नियमानन्तरं कार्यकारणयोर्भेदं तिरोधापयति। यत एकत्वमिवात्र भासते। तथा च केचित् कारणव्यतिरिक्तं कार्यं नेच्छन्ति। भेदप्रत्ययविषयेभ्योऽभेदप्रत्ययविषयस्यावयविनोऽवयवेभ्यो वस्तुतो भेदान्नैकत्वमिति इवशब्दः॥ १८॥

एवं प्रतिष्ठितायां कार्यव्यक्तौ--

**अथास्मान्नियमादूर्ध्वं जातयो याः प्रयोजिकाः।**
**ताः सर्वा व्यक्तिमायान्ति स्वच्छे छाया इवाम्भसि॥ १९॥**

अथेति समुच्चये, ऊर्ध्वशब्देनानन्तर्यस्योक्तत्वात्। कारणशक्तिभिर्यदा व्यक्तिः स्वात्मनि निर्यमिता तदनन्तरं निष्ठासम्बन्धयोरेककालत्वात् कार्यव्यक्ति-

---

त्वेन प्रतीयमानानामपि ब्रह्मशक्तित्वात्। 'पराऽस्य शक्तिर्विविधैव श्रूयते' इति श्रुतेः। सर्गादौ ब्रह्मण एव सर्वसर्गदर्शनाच्च। श्रुतावग्निविस्फुलिङ्गेन दृष्टान्ते तथैव सिद्धत्वात्। ताः प्रजायमानाः फलव्यक्तीः कारणैः=उपादानकारणैः सह एकत्वमिव भेदे सत्यपि अभेदमिवापादयतीति।

अयं भावः—इह तन्तुषु पट इत्यादिप्रत्ययस्य हेतुर्निमित्तकारणं समवायः पारतन्त्र्यरूपधर्मसाम्यात् शक्तित्वेन व्यवस्थापितः प्राक्। सः=समवायः साधनशक्तिकृतकार्यनियमानन्तरं कार्यकारणयोर्भेदं सन्तमपि तिरोधापयति। यत एकत्वमिव=अभेद इवात्र=कार्यकारणयोः भासते। तथा च केचिदुपादानकारणभिन्नं कार्यं नेच्छन्ति। पटस्यावयवास्तन्तवः परस्परं भिन्ना इति भेदप्रत्ययविषयेभ्योऽवयवेभ्यः, इह तन्तुषु एकः पट इत्यभेदप्रत्ययविषयस्यावयविनो वस्तुतो भेदान्नैकत्वमिति इवशब्दः प्रयुक्तोऽत्र कारिकायामिति॥१८॥

एवं सोपादानकारणे प्रतिष्ठितायां कार्यव्यक्तौ किं भवतीत्याह—**अथास्मादिति।**

अस्यार्थः—अस्मान्नियमात्=कारणशक्तिकृतात् स्वोपादानकारणे कार्यनियमादूर्ध्वमथ=च, अत्राथशब्दः समुच्चये, न त्वानन्तर्यार्थिकः, ऊर्ध्वशब्देन तदर्थोक्तेः। याः फलव्यक्तीनामुत्पत्तौ प्रयोजिकास्तत्तदुपादानकारणे निलीना नित्याश्च परापरजातयस्ताः सर्वा घटत्वपृथिवीत्वद्रव्यत्वसत्तादयः, व्यक्तिमायान्ति =फलव्यक्त्या सह सम्बध्यन्ते, कारणे कार्यप्रतिष्ठायाः कारणशक्तिकृतायाः, कार्ये स्वोत्पत्तिप्रयोजकजातिसम्बन्धस्य च यौगपद्याभ्युपगमात्। तत्र दृष्टान्तः—स्वच्छेऽम्भसि छाया इव=निकटस्थवस्तुप्रतिबिम्बा इवेति।

अयं भावः– कारिकायामथेति समुच्चये 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इति कोशात्। अत्र कार्त्स्न्यं समुच्चयः। आनन्तर्ये तु नात्राथ-

र्जातैव स्वजात्या सम्बध्यते प्रयोजिकया। निष्ठोत्तरकालं तु क्षणान्तरे रूपादि-गुणोपजननाद् इन्द्रियार्थसन्निकर्षात् संयुक्तसमवायेन रूपिद्रव्यसमवायाज्जातयः प्रकाशन्ते।

तद् यथा निर्मले जले वृक्षादीनां छाया प्रतिबिम्बः जलाभेदेन, एवं व्यक्तिभिरैकात्म्यमिव प्राप्ता जातयोऽपि गृह्यन्त इति दृष्टान्तसाम्यम्। सर्वा इति सत्ताद्रव्यत्वपृथिवीत्वादयः ॥ १९ ॥

अतोऽनन्तरं गुणानामुत्पत्तिमाह--

**कारणानुविधायित्वादथ कारणपूर्वकाः।**
**गुणास्तत्रोपलभ्यन्ते स्वजातिव्यक्तिहेतवः ॥ २० ॥**

कारणानुविधायित्वेन पूर्वं कारणोत्पत्तेः पश्चात् कार्योत्पत्तिमाह। तेनैकस्मिन् क्षणे निर्गुणैव कार्यव्यक्तिः। ततोऽवयवगुणेभ्योऽसमवायिकारणेभ्यः

---

शब्दः, ऊर्ध्वशब्देनानन्तर्यस्योक्तत्वात्। कारणशक्तिभिर्यदा कार्यव्यक्तिः स्वात्मनि=कारणात्मनि नियमिता तदनन्तरं निष्ठासम्बन्धयोः=कारणे कार्यस्य प्रतिष्ठा-सम्बन्धयोः एककालत्वात् कार्यव्यक्तिर्जातमात्रैव स्वप्रयोजिकया स्वजात्या सह सम्बध्यते, निष्ठोत्तरकालं तु=कार्यव्यक्तेः स्वकारणे प्रतिष्ठोत्तरकालं तु क्षणान्तरे=कार्योत्पत्तिद्वितीयक्षणे रूपादिगुणोपजनात्=रूपादिगुणोत्पत्तेः संयुक्तसमवायसम्बन्धेन रूपिद्रव्यसमवायरूपादिन्द्रियार्थसन्निकर्षाद् जातयः प्रकाशन्ते=प्रत्यक्षगोचरी-भवन्ति।

तद्यथा=निर्मले जले वृक्षादीनां छायाप्रतिविम्वो जलाभेदेन प्रकाशते, एवं कार्यव्यक्तिभिरैकात्म्यमिव=तादात्म्यमिव प्राप्ता जातयोऽपि गृह्यन्त इति दृष्टान्तदार्ष्टान्तिकयोः साम्यम्। सर्वा इति सत्ता द्रव्यत्वपृथिवीत्वघटत्वादयः परापरजातयोऽभिप्रेता इति ॥ १९ ॥

अतोऽनन्तरम्=व्यक्तेरुत्पत्त्यनन्तरम्, तत्र गुणानामुत्पत्तिमाह—**कारणानुविधायित्वादिति।**

अस्यार्थः—अथ=गुणानां कारणीभूताया द्रव्यव्यक्तेरुत्पत्त्यनन्तरम्, कार्याणां कारणानुविधायित्वात्=कारणान्वयव्यतिरेकानुसारित्वात्, तत्र गुणकारणीभूतद्रव्य-व्यक्तौ कारणपूर्वकाः=कारणोत्पत्तिपूर्वका गुणा उपलभ्यन्ते स्वजातिव्यक्तिहेतवः, स्वगताः गुणगता या जातयो रूपत्वादिकास्तासामभिव्यक्तिहेतव इति गुणानां विशेषणमिति।

अयं भावः—कार्योत्पत्तेः कारणानुविधायित्वेन=कारणान्वयव्यतिरेकानु-सारित्वेन कार्योत्पत्तेः पूर्वं कारणोत्पत्तेरभ्युपगमात् पश्चात् कार्योत्पत्तिमाह—**कारणानुविधायित्वादिति।** तेनैकस्मिन् क्षणे=उत्पन्नस्य द्रव्यस्य प्रथमे स्थितिक्षणे

स्वावयविसमवायिकारणसहितेभ्योऽवयविनि रूपाद्युत्पत्तिः। उत्पन्नाश्च रूपादयः स्वजातौ रूपत्वादिकाः समभिव्यञ्जयन्ति। अदृष्टवशात् परमाणुषु क्रियोत्पन्ना पूर्वदेशसंयोगविभागविनाशपूर्वकं परस्परोपश्लेषेण द्व्यणुकादिक्रमेण भोगसाधनान् पदार्थानुत्पादयतीति पिण्डितार्थः। अत्र च सर्वत्र क्रमाख्या कालशक्तिः सव्यापारेति अभ्यनुज्ञेयम् ॥ २० ॥

कालकृता जन्मपर्याया भावानां व्याख्याताः। इदानीं स्थितिं व्याचष्टे--

**आश्रयाणां च नित्यत्वमाश्रितानां च नित्यता।**
**ता व्यक्तीरनुगृह्णाति स्थितिस्तेन प्रकल्पते ॥२१॥**

---

निर्गुणैव कार्यव्यक्तिः। अत एव 'उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियश्च तिष्ठति' इति नैयायिकानां नयः। ततोऽवयवगुणेभ्योऽसमवायिकारणेभ्यः स्वावयविसमवायिकारणसहितेभ्यः=स्वशब्दस्य बुद्धिस्थपरामर्शकत्वेन स्वस्य जायमानस्यावयविरूपस्य, अवयविरूपं यत् समवायिकारणं तत् सहितेभ्यः, अवयविनि रूपाद्युत्पत्तिः। उत्पन्नाश्च रूपादयः स्वजातौ रूपत्वादिकाः सम्यगभिव्यञ्जयन्ति। प्राणिनामदृष्टवशात् परमाणुषूत्पन्ना क्रिया पूर्वदेशसंयोगविभागविनाशपूर्वकं परस्परोपश्लेषेण=परस्परसंयोगेन द्व्यणुकादिक्रमेण भोगसाधनान् पदार्थानुत्पादयति इति एतत् कारिकायाः पिण्डितार्थः=समुदितार्थः। अत्र च सर्वत्र=सर्वासां कार्यव्यक्तीनामुत्पत्तौ क्रमाख्या कालशक्तिः सव्यापारा इति अभ्यनुज्ञेयम्=विज्ञेयमिति ॥ २० ॥

कालकृता भावानां जन्मपर्यायाः=जन्मक्रमा व्याख्याताः। इदानीं जातानां तेषां द्वितीयं भावविकारं स्थितिं समर्थयन् व्याचष्टे—आश्रयाणाञ्चेति।

अस्यार्थः—अत्र च शब्दद्वयमपि त्वर्थे। द्वाभ्यां परमाणुभ्यां द्व्यणुकं जायते, त्रिभिर्द्व्यणुकैः त्र्यणुकम्, चतुर्भिस्त्र्यणुकैश्चतुरणुमित्येकः सर्गक्रमः, उपादानगतसंख्याया उपादेये परिमाणजनकत्वे। तदुक्तम्—

संख्यातः परिमाणाच्च प्रचयादपि जायते। इति।

अत्राद्यस्येदमुदाहरणम्—द्वाभ्यां परमाणुभ्यां द्व्यणुकम्, त्रिभिः परमाणुभिः त्र्यणुकम्, चतुर्भिः परमाणुभिश्चतुरणुकमित्यपरः सर्गक्रमः। तत्र यासां तावत् कार्यव्यक्तीनां पार्थिवादिद्व्यणुकानां मतान्तरे द्व्यणुकत्र्यणुकादीनां वा नित्या आश्रया उपादानकारणानि परमाणवस्ताः कार्यव्यक्तिराश्रयाणां नित्यत्वमनुगृह्णाति=उपकरोति, यासां तु घटपटादिकानां कार्यव्यक्तीनामाश्रया अनित्यास्तन्तुकपालादयस्ताः कार्यव्यक्तीराश्रितानां घटत्वपटत्वादिजातीनां तु नित्यता अनुगृह्णाति, तेन कार्यव्यक्तीनां स्वोपादानकारणे स्थितिः प्रकल्पते प्रसिध्यति।

यासां तावत् कार्यव्यक्तीनां नित्या आश्रयाः कारणानि, तासां कारणविनाशपूर्वकस्य विनाशस्याभावादवस्थितत्वम्। अतश्च परमाण्वादीनां कारणानां नित्यत्वं कर्तृभूतं ताः कार्यव्यक्तीरुपकरोति, स्थापकत्वेनावस्थापनात्। अन्यथाधारविनाशान्नावतिष्ठेरन्। अनित्याश्रयाणामपि कार्यव्यक्तीनामाश्रितानां जातीनां नित्यत्वादविनाशकारणमवस्थानं स्वजातिभिरेवानुगृह्यते, तावन्तं कालं नियतजातीयतयावस्थानसम्भवात्। अन्यथाधेयानां सामान्यानामपाये द्रव्याण्यव्यवहार्यत्वादस्थितकल्पानि स्युः ।। २१ ।।

इत्थं चोत्पत्तिरिव स्थितिरपि पराधीनेत्याह--

**अनित्यस्य यथोत्पादे पारतन्त्र्यं तथा स्थितौ।**

**विनाशायैव तत् सृष्टमस्वाधीनस्थितिं विदुः ।। २२ ।।**

कारणं विनोत्पत्त्यभावाद् यथासौ तत्परतन्त्रा, तथा कारणावष्टम्भ-

---

अयं भावः—यासां तावत् कार्यव्यक्तीनां द्व्यणुकानां परमाणुगतगुणादीनां वा नित्या आश्रयाः परमाणव उपादानकारणानि तासां कार्यव्यक्तीनां कारणविनाशपूर्वकस्य विनाशस्याभावादवस्थानम् = स्वोपादानकारणे स्थितिः। अतश्च = अत एव परमाण्वादीनामुपादानकारणानां नित्यत्वं कर्तृभूतं ताः कार्यव्यक्तीरुपकरोति, स्थापकत्वेन = स्वयं स्थितिकर्तृत्वेन कार्यव्यक्तीनामवस्थापनसम्भवात्। अन्यथाऽऽधारविनाशान्नावतिष्ठेरन्। अनित्याश्रयिकाणामपि कार्यव्यक्तीनां स्वाश्रितानां जातीनां नित्यत्वाद् विनाशाभावकारणमवस्थानं स्वगतजातिभिरेवानुगृह्यते, तासां कार्यव्यक्तीनां तावन्तं कालं नियतजातीयतया = नियतजातिभावेनावस्थितिसम्भवात्। अन्यथाऽऽधेयानां सामान्यानामभावे = स्वाश्रितानां जातीनामपाये = विनाशे द्रव्याणि अन्यतः स्वविशेषकधर्माभावेनाव्यवहार्यत्वात् स्थितकल्पानि = स्थितान्यपि अस्थितानीव स्युरिति ।।२१।।

इत्थञ्चोत्पत्तिरिव स्थितिरपि पराधीना = उत्पत्तिर्यथा कारणत्रयपराधीना तथा स्थितिरपि नित्याश्रयाश्रितपराधीना इत्याह-- **अनित्यस्य यथेति।**

अस्यार्थः—अनित्यस्य भावस्य यथोत्पादे कारणत्रयपारतन्त्र्यं तथा तस्य स्थितावपि नित्याश्रयाश्रितपारतन्त्र्यम्, अन्यथा नित्यस्योपादानकारणस्य नित्यस्य चाश्रयस्याश्रितस्य च तादृशस्यावष्टम्भं विना तत् कार्यं भावजातं स्थापकाभावे स्वतःस्थित्यसम्भवाद् विनाशायैव सृष्टं स्यात्, न त्वर्थक्रियार्थमिति विचिन्त्य वैशेषिकाः कार्यभावमस्वाधीनस्थितिम् = नित्यकारणाश्रयाश्रितपराधीनस्थितिकं विदुरिति।

अयं भावः—कारणत्रयं विनोत्पत्त्यसम्भवाद् यथोत्पत्तिः कारणत्रयपराधीना, तथा नित्यकारणाश्रयाश्रितान्यतमावष्टम्भं विना स्वतः स्थित्यभावात् कृतकं वस्तु

मन्तरेण स्वतःस्थित्यभावात् कृतकमुत्पत्त्यनन्तरमेव प्रध्वंसमियादिति विनाशायैव तत् सृष्टं स्यात्, नार्थक्रियार्थमित्यर्थः। तन्मा भूदस्यापार्थकं जन्मेति कारणायत्तस्थितिकं तन्मन्यन्ते वैशेषिकाः ॥ २२ ॥

ननु क्रमयौगपद्याभ्यां स्थिरार्थक्रियानुपपत्तेरन्ते विनाशदर्शनात् तत्रापेक्षाभावात् कृतकः सन्नित्येव विनश्यतीति स्थित्यभाव इत्याशङ्क्याह—

स्थितः संसर्गिभिर्भावैः स क्रियास्वनुगृह्यते।
नैषां सत्तामनुद्गृह्य वृत्तिर्जन्मवतां स्मृता ॥ २३ ॥

संसर्गिभिः सहकारिभिः अनुगृहीतो भावोऽर्थक्रियासु योग्यः। न ह्येकं किञ्चन जनकम्, सामग्रीतः क्रियासिद्धिरित्येषां संसर्गिणां सहकारिणां सत्त्वमस्वीकृत्य कार्ये वृत्तिर्व्यापारो नास्ति जातानां भावानाम्।

उत्पत्त्यनन्तरमेव प्रध्वंसं गच्छेद् इति तद्वस्तुविनाशायैव सृष्टं स्याद् नार्थक्रियार्थमित्यनिष्टमदृष्टञ्च प्रसज्येत, तन् मा भूदस्य कृतकस्य भावस्यापार्थकं जन्मेति कारणात्तस्थितिकम् = नित्यकारणाश्रयाश्रितान्यतमपराधीनस्थितिकं तम् = कार्यभावं मन्यन्ते वैशेषिका इति ॥२२॥

ननु स्थिरस्य क्रमयौगपद्याभ्यामर्थक्रियानुपपत्तिः। तथा हि - यद्युत्पत्तेरनन्तरं स्थितस्य भावस्य क्रमेणार्थक्रियाकारित्वं स्वीक्रियते, तथा तस्य क्रमेणार्थक्रियाकारित्वे कारणं नोपपद्यते = नोपलभ्यते, नास्ति, न च वक्तुं शक्यते, शक्तस्य कालक्षेपे कारणाभावाद् इति। यदि तु तस्य युगपदर्थक्रियाकारित्वं स्वीक्रियते, तदाऽनुभवविरोध इति। किञ्च, अन्ते = उत्पत्तिक्रियासम्पत्तेरन्ते विनाशदर्शनात् तत्रापेक्षाभावात् = विनाशे स्थितेरपेक्षाऽभावात् कृतकः सन्नित्येव भावो विनश्यति, न तु स्थितः सन् इति सिद्धो जातस्य भावस्य स्थित्यभाव इति क्षणभङ्गवादिमतमाशङ्क्याह = स्थितः संसर्गिभिरिति।

अस्यार्थः—उत्पत्त्यनन्तरं स्थितः स भावः स्वसंसर्गिभिः = अर्थक्रियायां स्वसहकारिभिः पदार्थैः क्रियासु = अर्थक्रियासु जनयितव्यास्वनुगृह्यते = उपक्रियते, एषाम् = सहकारिणां भावानां सत्तामनुगृह्य = अस्वीकृत्य, जन्मवताम् = जन्यानां भावानां वृत्तिः = अर्थक्रियासु प्रवृत्तिर्न स्मृता। तथा चोत्पत्त्यनन्तरं स्थितानां भावानां सहकारिभावसंसर्गेण क्रमेण तत्तदर्थक्रियाकारित्वमिति सिद्धमिति।

अयं भावः—संसर्गिभिः सहकारिभिर्भावैरनुगृहीतः = उपकृतो भावोऽर्थक्रियासु योग्यो न केवलः स्वरूपेण। यतो नैकं किञ्चन कस्यापि जनकम्, किन्तु, कारणसामग्रीतः क्रियासिद्धिरित्येषां संसर्गिणां सहकारिणां भावानां सत्त्वमस्वीकृत्य जातानां भावानां स्वकार्ये वृत्तिर्व्यापारो नास्ति।

तदेवं क्रमभाव्यनेककार्यकर्तृत्वं तत्तत्सहकारिप्राप्तौ स्थितिलक्षणमुपपद्यते । तथा च स्थितिपर्यन्ताभ्यनुज्ञोपपत्तिः ।

यत्तु सहकारिणः किं कुर्वन्ति इति चोद्यते, तत्र सहकरणमेव सहकारार्थोऽतिशयादेरन्यत्र विचारितत्वाद् यथा प्रतीतिस्थिरत्वं समर्थितं तद्वादिभिः ॥२३॥

इदानीं प्रतिबन्धलक्षणां कालवृत्तिं व्याचष्टे—

जराख्या कालशक्तिर्या शक्त्यन्तरविरोधिनी ।
सा शक्तिं प्रतिबध्नाति जायन्ते च विरोधिनः ॥ २४ ॥

जीर्यन्ते भावोऽनयेति जरा नाम कालस्य शक्तिः प्राण्यप्राणिसाधारणयौवनादिशक्त्यन्तरप्रतिबन्धिनी कार्यव्यक्तीनां कालान्तरपरिवासावधृतार्थक्रियासु

---

तदेवं जन्यानां भावानां तत्तत्सहकारिप्राप्तौ क्रमभाव्यनेककार्यकर्तृत्वं स्थितिलक्षणमुपपद्यते । तथा च जन्यानां भावानां स्थितिपर्यन्ताभ्यनुज्ञोपपत्तिः = उत्पत्तिमारभ्य स्थितिपर्यन्तायाः सत्त्वाभ्यनुज्ञाया उपपत्तिः ।

यत्तु 'सहकारिणः किं कुर्वन्ति' इति क्षणभङ्गवादिभिः चोद्यते = प्रश्नः क्रियते, तत्र सहकार्यकारणमेव सहकारार्थोऽतिशयादेरन्यत्र विचारितत्वात् = स्वोपकार्ये प्रधानकारणे सहकारिभिरतिशयादिर्जन्यत इति पक्षस्यान्यत्र विचारेण प्रत्याख्यातत्वात् । यथा प्रतीति = सोऽयं घट इत्याद्यबाधितप्रत्यभिज्ञारूपानुभवानुसारेण जन्यानां भावानामुत्पत्त्यनन्तरं स्थिरत्वं समर्थितं तद्वादिभिः = जन्यानां भावानां स्थिरत्ववादिभिरिति ॥२३॥

भावानामुत्पत्तिस्थिती तत्र कालस्य प्रयोजकत्वं च व्याख्यायेदानीं प्रतिबन्धलक्षणां कालवृत्तिं व्याचष्टे—जराख्येति ।

अस्यार्थः—जराख्या = भावानां प्राण्यप्राणिनां जराहेतुत्वाद् जरानाम्नी या कालस्य शक्तिः शक्त्यन्तरस्य प्राण्यप्राणिसाधारणस्य यौवननवत्वदृढत्वादिरूपस्य विरोधिनी सा कार्यव्यक्तीनां तत्तदर्थक्रियासु शक्तिं व्यवहारे प्रागवधृतां प्रतिबध्नाति, ततश्च प्रतिबद्धशक्तिविरोधिनोऽवस्थाविशेषाः प्राणिषु प्रज्ञामान्द्यशरीरशोषादयः, अप्राणिषु च पूर्वाभावादपक्षयविपरिणामादयो जायन्ते । तैश्च तेषां सन्निहितः प्रध्वंस इत्यनुमीयत इति ।

अयं भावः—जीर्यन्ते भावोऽनया इति व्युत्पत्त्या जरानामिका कालस्य शक्तिर्नित्याऽपि अदृष्टसहकृता सत्यवसरे प्राण्यप्राणिसाधारणस्य यौवननवत्वदृढत्वादिरूपस्य शक्त्यन्तरस्य प्रतिबन्धिका जन्यभावानां कालान्तरपरिवासावधृतार्थक्रियासु = तेषां कालान्तरपरिवासेन = उत्पत्तिकालादन्यकाले स्थित्या अवधृतासु नियमेन दृष्टासु तत्तदर्थक्रियासु सामर्थ्यम् = शक्तिं विघ्नयति । ततश्च प्राण्यप्राणिषु तादृशसामर्थ्यविरोधिनोऽवस्थाविशेषाः प्रज्ञामान्द्यशरीरशोषविपरिणामापक्षयादयो यथायथं

सामर्थ्यं विघ्नयति। ततश्च सामर्थ्यविरोधिनोऽवस्थाविशेषाः प्राण्यप्राणिषु प्रज्ञामान्द्यशोषादयः प्रादुर्भवन्ति। यतः प्रध्वंसः प्रत्यासन्न इति लक्ष्यते ॥ २४ ॥

एवं जरसाधिष्ठिते भावे—

**प्रयोजकास्तु ये भावाः स्थितिभागस्य हेतवः।**
**तिरोभवन्ति ते सर्वे यत आत्मा प्रहीयते ॥ २५ ॥**

यैः प्रवर्तिता भावाः संसर्गिभिः सहकारिभिः स्थित्यंशहेतवः, ते सर्वेऽस्य जरसाधिष्ठितस्य कृतघ्ना इव सहोषिता अपि निवर्तन्ते। तेषु निवृत्तेषु कृतकरणीयस्यास्य भावस्य स्वरूपं प्रच्यवते ॥ २५ ॥

न तु विनाशकारणैरस्य किञ्चित् क्रियत इत्याह—

**यथैवाद्भुतया वृत्त्या निष्क्रमं निर्निबन्धनम्।**
**अपदं जायते सर्वं तथास्यात्मा प्रहीयते ॥ २६ ॥**

---

क्रमेण प्रादुर्भवन्ति। यतस्तस्य भावस्य प्रध्वंसः प्रत्यासन्न इति लक्ष्यते=अनुमीयते ॥२४॥

एवं भावे जरसाऽधिष्ठिते सति तस्य तत्सहकारिणाश्चोत्तरकालिकीं क्रियामाह—प्रयोजकास्तु इति।

अस्यार्थः—ये त्वस्य जन्यस्य भावस्य स्थितिभागस्य=उत्पत्तिस्थितिविनाशेषु स्थित्यंशस्य, प्रयोजका हेतवः, यैः प्राणिषु अनुकूलाहारविहारादिभिः, अप्राणिषु चानुकूलभूतचतुष्कसंसर्गैः प्रवर्तिता भावाः स्वस्य स्थित्यंशहेतवः, ते सर्वे जरसाऽधिष्ठितस्य भावस्य भोगप्रदप्रारब्धकर्मोपरमात् तिरोभवन्ति। यतः=यस्मात् तेषां तिरोभावादस्य जरसाऽधिष्ठितस्य भावस्यात्मा=स्वरूपं प्रहीयते=प्रच्यवत इति।

अयं भावः—यैः संसर्गिभिः सहकारिभिर्भावैः स्वकार्ये स्थितिलक्षणे प्रवर्तिता भावस्थित्यंशहेतवस्ते सर्वेऽस्य जरसाऽधिष्ठितस्य भावस्य सहोषिता अपि=चिरकालिकेन सहवासेनात्यन्तं परिचिताऽपि स्थितौ सहकारित्वाद् निवर्तन्ते, यथा कृतघ्नाः। तेषु निवृत्तेषु स्थितौ सहकारिषु कृतकरणीयस्यास्य भावस्य जरसाऽधिष्ठितस्य भोगप्रदकर्मोपरमात् स्वरूपं प्रच्यवते=विनश्यति तिरोभवति वेति।।२५।।

न तु विनाशकारणैरस्य=विनश्यतो जन्यस्य भावस्य किञ्चित् क्रियते, विनाशस्य क्रियमाणताया भावत्वापत्तेरित्याह—यथैवाद्भुतयेति।

अस्यार्थः—यथैव सर्वं जायमानं वस्तु सदसत्पक्षयोर्द्वयोरपि कारणव्यापारस्य वैयर्थ्येन व्युदासाद् निर्निबन्धनम्=निष्कारणम्, अत एव कारणव्यापाराभावात् पौर्वापर्यरूपक्रमरहितम्। अपदम्=सदसदन्यतररूपवाचकपदरहितम्, सदसद्विलक्षणम्=अनिर्वाच्यं मिथ्याभूतम्। यद्वा=मायामयत्वेनाविद्यामयत्वेन वा आश्रय-

जन्मनि सदसत्पक्षभेदेन पूर्वं कारणव्यापारस्य व्युदासादविभावितत्त्व-मविद्यमानकारणभूतनिबन्धनम्, अत एव कारणव्यापाराभावात् पौर्वापर्येणांशांशिकयाऽनिष्पत्तेरक्रमं विश्वमाजायमानमुपलक्ष्यत इति पूर्वमेव विवर्तचिन्तायां निर्णीतमेतत् ।

एवं विनाशेऽपि क्रियमाणतायां भावतापत्तेर्निर्निबन्धनमेव प्रहाणं कालपरिवासाधीनं भावानामित्यर्थः । तदेवं सर्गस्थितिप्रलयानां कालकृतप्रतिबन्धाभ्यनुज्ञावशेन सम्भव इति विश्वात्मनः कालस्य व्यापारोऽत्र सर्वत्रेति निर्णीतम् । तदुक्तम्--

"प्रत्यवस्थं तु कालस्य व्यापारोऽत्र व्यवस्थितः ।" इति ॥ २६ ॥

( वा० प० ३, काल० १२ )

इदानीं परमपि कालमनुमानहेतुमाह---

क्रिययोरपवर्गिण्योर्नानार्थसमवेतयोः ।

सम्बन्धिना विनैकेन परिच्छेदः कथं भवेत् ॥ २७ ॥

---

रहितमवस्तुभूतम्, अद्भुतया मायाया अविद्याया वा जायते, तथैवास्य जातस्य भावस्यात्मास्वरूपं सदसत्पक्षयोर्द्वयोरपि विनाशे कारणस्य व्युदासात् निर्निबन्धनं निष्क्रममेवाद्भुतया मायावृत्त्या अविद्यावृत्त्या वा प्रहीयते=प्रणश्यतीति ।

अयं भावः—उत्पत्तेः पूर्वं कार्यस्य उपादानकारणे सत्त्वेऽसत्त्वे वा कारणव्यापारस्य वैयर्थ्येन पूर्वग्रन्थे व्युदासादविभावितत्त्वम्=अविचारितस्वरूपम्, अविद्यमानकारणभूतनिबन्धनम्=कारणरहितम्, अत एव कारणव्यापाराभावात् । पौर्वापर्येणांशांशिकया=अंशसहितया अंशिकया स्वल्पांशेन अंशांशरूपैः, अनिष्पत्तेरक्रमं विश्वमाजायमानमुपलक्ष्यत इति पूर्वमेव विवर्तचिन्तायाम्=विश्वं ब्रह्मणो विवर्त इति विचारावसरे निर्णीतमेतत् । एवं विनाशेऽपि क्रियामाणतायां भावमापत्तेर्निर्निबन्धनमेव भावानां प्रहाणम्=विनाशः कालपरिवासाधीनम्=काले यः किञ्चित् कालं परिवासः स्थितिस्तदधीनम् ।

तदेवं सर्गस्थितिप्रलयानां कालकृतप्रतिबन्धाभ्यनुज्ञावशेन सम्भव इति विश्वरूपस्य कालस्य व्यापारोऽत्र=जन्येषु भावेषु सर्वत्रेति निर्णीतम् । तदुक्तम्—

'प्रत्यवस्थं तु कालस्य व्यापारोऽत्र व्यवस्थितः ॥' इति ॥

(वा० प० ३, काल० १२)

अस्यार्थः---अत्र=जन्येषु भावेषु, प्रत्यवस्थं तु=सर्वास्ववस्थासु, कालस्य व्यापारो व्यवस्थित इति ॥२६॥

इदानीं परमपि=पूर्वोक्तादन्यमपि कालानुमानहेतुमाह—क्रिययोरिति ।

अस्यार्थः—अपवर्गिण्योः=अपवर्गो ध्वंसः, उदयानन्तरं प्रध्वंसिन्योरिति यावत् । नानार्थसमवेतयोः=भिन्नार्थवर्तिन्योः, अत एव भिन्नयोः क्रिययोः, एकेनानु-

इह क्रिया तावदनेकक्षणसमाहारात्मिका युगपत् क्षणानामभावात् सक्रमेति कालशक्त्यनुगृहीतैव। सर्वः क्रमो हि कालधर्मः। द्वयोश्च क्रिययोरुदयानन्तरध्वंसित्वे समानेऽपि चिरेण कृतम्, क्षिप्रं कृतमिति विलक्षणः परिच्छेदो विनैकं सम्बन्धिनमुपाधिभूतं नावकल्पते।

नानार्थसमवेतयोरित्यनेनाश्रयभेदात् क्रियाभेदमाह। ततश्च नैकक्रियानिमित्तोऽयं व्यपदेशः। क्रियाया भिन्नाश्रयसमवेताया भेदे सति तदनुपपत्तेः।

अत एव न कार्यद्रव्यनिमित्तोऽयं व्यपदेशः, कार्यद्रव्यस्य भेदादभिन्नव्यपदेशहेतुत्वानुपपत्तेः। न च कारकादिनिमित्तमत्र, तस्यापि भेदस्यानुवृत्तेः।

तस्माद् यदत्र निमित्तं स कालः। सोऽपि चेद् भिन्नो नासावनुवृत्तः प्रत्ययः स्यादित्युक्तमेकेनेति। एको हि साधारण्यात् कालोऽनुवृत्तं प्रत्ययं जनयति॥ २७॥

---

गतेनानुवृत्तप्रत्ययहेतुना सम्बन्धिना कालेन विना परिच्छेदः 'घटश्चिरेण कृतः, पटश्चिरेण कृतः', 'घटः क्षिप्रं कृतः, पटः क्षिप्रं कृतः' इत्यादिरनुगतः प्रत्ययः परस्परं विलक्षणः कथं भवेत्। अस्य प्रत्ययस्य नैकक्रियाहेतुकत्वम्, आश्रयभेदेन क्रियाभेदात्। न द्रव्यहेतुकत्वम्, द्रव्यभेदात्। तस्मात् सर्वत्रानुगतः काल एवात्रानुगतप्रत्ययहेतुरिति सिद्धम्।

अयं भावः—इह क्रिया तावत् तत्तद्धात्वर्थरूपा अनेकक्षणसमाहारात्मिका =अनेके ये क्षणिका व्यापारास्तेषां समाहाररूपा युगपत् क्षणानामभावात् =क्षणिकानां व्यापाराणां युगपदभावात् सक्रमा इति हेतोः कालशक्त्यनुगृहीतैव =कालशक्त्योपकृतैव। सर्वः क्रमो हि कालधर्मः। द्वयोश्च क्रिययोरुदयानन्तरध्वंसित्वे समानेऽपि 'चिरेण कृतम्, क्षिप्रं कृतम्' इति प्रत्येकमनुगतोऽपि परस्परं विलक्षणः परिच्छेदः =क्रियायाः चिरत्वक्षिप्रत्वरूपपरिमाणविषयकं ज्ञानमेकमुपाधिभूतं सम्बन्धिनं विना नावकल्पते =न सम्भवति।

नानार्थसमवेतयोरित्यनेनाश्रयभेदात् क्रियाभेदमाह। ततश्च नैकक्रियानिमित्तकोऽयं चिरादिव्यपदेश इति सिद्धम्। 'पटश्चिरेण कृतो घटश्चिरेण कृतः' इति आश्रयभेदेऽपि =आश्रयभेदेन क्रियाभेदेऽपि चिरप्रत्ययानुवृत्तेः। भिन्नाश्रयसमवेतायाः क्रियायास्तत्त्वेन भेदे सति तदनुपपत्तेः =अनुवृत्तचिरादिप्रत्ययानुपपत्तेः।

अत एव न कार्यद्रव्यनिमित्तकोऽप्ययं व्यपदेशः। कार्यद्रव्यस्य भेदादभिन्नचिरादिव्यपदेशहेतुत्वानुपपत्तेः। न च कारकादिनिमित्तमत्र =अभिन्नचिरादिव्यपदेशे, तस्यापि =करकादेरपि भेदस्यानुवृत्तेरनुवृत्तचिरादिव्यपदेशहेतुत्वानुपपत्तेः।

तस्मादत्र =अनुवृत्तचिरादिव्यपदेशे यन्निमित्तं स कालः, सोऽपि चेद् भिन्नो नासौ अनुवृत्तश्चिरादिप्रत्ययः स्यादित्युक्तमेकेनेति। एको हि कालः साधारण्यात् =

यद्येवं विलक्षणश्चिरक्षिप्रादिव्यपदेशः कुत इत्याशङ्क्याह--

**यथा तुलायां हस्ते वा नानाद्रव्यव्यवस्थितम् ।**
**गुरुत्वं परिमीयेत कालादेवं क्रियागतिः ॥ २८ ॥**

सुवर्णरजतादिद्रव्यसमवेतं गुरुत्वमेक एव तुलादण्डो रेखासूत्रसम्बन्धोपहितभेदो यथा पलादिभावेन परिच्छिनत्ति, कालोऽपि स्वशक्तियोगाद् वैश्वरूप्यमनुभवन् निमेषादिक्रियाभेदोपहितनानात्वं क्रियासन्तानं चिराचिरादिभावेन परिमिमीते ।

अभ्यासातिशयवतां हस्तो द्रव्याणां गुरुत्वविशेषं परिच्छिनत्तीति सोऽपि दृष्टान्तः । यथासौ हस्तः, एवं निरुपाधिरेक एव स्वसामर्थ्यात् कालः क्रियागतं भेदं परिच्छिनत्ति ॥ २८ ॥

---

विषयभेदेऽपि सर्वेष्वनुगतप्रत्ययेषु साधारण्यादनुगतत्वाद् अनुवृत्तं प्रत्ययं जनयतीति इदञ्च सर्वं व्याख्यानं हेलाराजानुरोधेन ।

वस्तुतस्तु नानार्थसमवेतयोरपवर्गिण्योः क्रिययोरुदयानन्तरं ध्वंसितत्वे समानेऽपि 'इदं चिरेण कृतम्, इदं क्षिप्रं कृतम्' इत्येवं विलक्षणः परिच्छेदः सम्बन्धिना एकेन विना कथं भवेत्, यथा—एकेन तुलादण्डेन तुलापात्रद्वयगतं वस्तुद्वयं परिच्छिद्यते, इदं गुरु, इदं लघु इति ।

यथा वा—एकेन हस्तेन पर्यायेण वस्तुद्वयं परिच्छिद्यते, यथा—एकेन सम्बन्धिना कालेन क्रियाद्वयं परिच्छिद्यते, 'घटश्चिरेण कृतः, पटः क्षिप्रं कृतः' इति । एष एवार्थोऽग्रिमकारिकया तुलाहस्तदृष्टान्तेन प्रकटीक्रियत इति ॥ २७ ॥

यद्येवं विलक्षणश्चिरक्षिप्रादिव्यपदेशः कुतः=किं सम्बन्धिकृत इत्याशङ्क्याह—यथा तुलायामिति ।

अस्यार्थः--यथा तुलायां हस्ते वा नानाद्रव्येषु व्यवस्थितं गुरुत्वं परिमीयेत=परिच्छिद्येत । अत्र परिच्छेदक्रियाकरणयोस्तुलादण्डयोरधिकरणत्वविवक्षया सप्तमी । एवं कालात् क्रियागतिः=क्रियायाः परिच्छिन्नतया ज्ञानमिति ।

अयं भावः—यथैक एव तुलादण्डः रेखासूत्रसम्बन्धोपहितभेदः=रेखासदृशैस्तुलापात्रे पिनद्धैः सूत्रैः सह तुलादण्डस्य यः सम्बन्धस्तदुपहितभेदः=तद्रूपोपाधिकृतभेदः, सुवर्णरजतादिद्रव्यसमवेतं गुरुत्वं पलप्रस्थादिभावेन परिच्छिनत्ति तथा कालोऽपि परमात्मरूपः स्वकीयमायाशक्तियोगाद् वैश्वरूप्यम्=सर्वात्मकत्वमनुभवन् निमेषादिक्रियाभेदोपहितनानात्वो निमेषादिक्रियाभेदोपहितनानात्वं क्रियासन्तानम्=क्रियासमाहारात्मिकां क्रियां चिराचिरादिभावेन परिमिमीते=परिच्छिनत्ति ।

वस्तुपरिच्छेदेऽभ्यासातिशयवतां पण्यं वस्तुसततं विक्रीणतां जनानां वणिजां हस्तो द्रव्याणां गुरुत्वविशेषं परिच्छिनत्तीति सोऽपि दृष्टान्तः । यथाऽसौ तेषां हस्तः,

एवं चैकः स कालः --

जहाति सहवृत्ताश्च क्रियाः स समवस्थितः ।
व्रीहिर्यथोदकं तेन हायनाख्यां प्रपद्यते ॥ २९ ॥

अवस्थित एकस्मिन्नेव काले नानाविधाः क्रियास्तत्सहचारिण्योऽप्यायन्ते। अतः स कालो हायनाख्यां संवत्सरपर्यायां प्रपद्यते । जहाति क्रिया इति हायनः। तद्यथा—व्रीहिर्बीजभूतं सहावस्थितमुदकमपजहद्धायन इति व्यपदिश्यते ।

अत एव "हश्च व्रीहिकालयोः" (३।१।१४८) इति सूत्रकारेणोपमागर्भा सहैव व्युत्पत्तिरनुशिष्टा । यथा जलैर्व्रीहिः सहावस्थितैरुपक्रियते, तथा कालोऽपि क्रियाभिः सहकारिणीभिर्भावानुपकरोतीति, औपाधिकोऽस्य भेदो मुख्यस्त्व-भेदः ॥ २९ ॥

---

एवं निरुपाधिः=उपाधिकृतभेदरहित एक एव परमात्मरूपः कालः स्वसामर्थ्यात्= अनाद्यनिर्वाच्यमायास्वरूपशक्तियोगात् क्रियागतं भेदम्=विशेषं चिराचिरादिरूपया परिच्छिनत्तीति निष्कर्षः ॥ २८ ॥

यथा तुलादण्डादिदृष्टान्तेन क्रिययोः परिच्छेदकः काल एकः, एवं च= एवमपि=अनयाऽपि रीत्या स कालः=क्रिययोः परिच्छेदकः काल एक इत्याह— जहाति सहवृत्ताश्चेति ।

अस्यार्थः --चो हेतौ । यतः स कालः समवस्थितः सन् सहवृत्ताः सह स्थिताः सहचारिणीः क्रियाः जहाति, क्रियाणां क्षणिकत्वेन नाशात्, कालस्य च नित्यत्वेन समवस्थानात् । यथा व्रीहिः सहवृत्तमुदकं जहाति उदकादूर्ध्वं गतः प्रवृद्धः सन् । तेन सह वृत्तस्य भावस्य हानेन हेतुना व्रीहिः कालश्च हायनाख्यां=हायनसंज्ञां प्रपद्यते=प्राप्नोति ।

तथा च पाणिनीयं सूत्रम्---'हश्च व्रीहिकालयोः' ( पा० ३।१।१३८ ) इति, जहाति उदकमिति हायनो व्रीहिरिति व्युत्पत्तौ कर्तरि 'ण्युट्'प्रत्ययः । जहाति सहवृत्ताः क्रिया इति हायनः=संवत्सर इति ।

अय भावः - एकस्मिन् कालेऽवस्थित एव तत्सहचारिण्यो नानाविधाः क्रिया अप्यायन्ते=विनश्यन्ति, अतः स कालो हायनाख्यां संवत्सरपर्यायां प्रपद्यते । जहाति क्रिया इति हायन इति व्युत्पत्तिः । तद्यथा--व्रीहिर्बीजभूतः सहावस्थितमुदकमप-जहत् सद् हायन इति व्यपदिश्यते ।

अत एव 'हश्च व्रीहिकालयोः' ( पा० ३।१।१४८ ) इति सूत्रकारेण लुप्तोपमा-गर्भा द्वयोरर्थयोः सहैव 'ण्युट्' प्रत्ययस्य व्युत्पत्तिरनुशिष्टा । यथा व्रीहिर्जलैः सहा-वस्थितैरुपक्रियते, तथा कालोऽपि सहकारिणीभिः क्रियाभिर्भावोपकारकर्मणि स्वकर्तृके उपक्रियमाणो भावानुपकरोतीति । कालस्यौपाधिकः=क्रियारूपोपाधिकृतो भेदो गौणः, मुख्यस्त्वभेद इति ॥ २९ ॥

यदि तर्ह्यवस्थित एकः कालः, कथमस्य क्रमरूपतेत्याह—

प्रतिबन्धाभ्यनुज्ञाभ्यां वृत्तिर्या तस्य शाश्वती ।
तया विभज्यमानोऽसौ भजते क्रमरूपताम् ॥ ३० ॥

कस्याश्चित् क्रियायाः साधनशक्तीनां व्यापारविघाते प्रतिबन्धः । तद्विपर्ययोऽभ्यनुज्ञा । ताभ्यामुपलक्षिता कालस्य नित्या प्रवृत्तिर्भावेषु । सततपरिणामिषु हि भावेषु किञ्चिदाजायते किञ्चिदपक्षीयत इति नियतमेतत् । तथा च कार्यनिवेशी क्रमः काले समारोप्यते, न त्वसौ तत्र भाविक इत्यर्थः ।

क्रियाधर्मो हि मुख्यः क्रमस्तदन्यत्रोपचरितः । पौर्वापर्यं हि पूर्वापरेषु वस्तुषूपाधिभूतं लक्ष्यते, न तु स्वतन्त्रम् । एवं यौगपद्यमपि क्रमविरोधी धर्मः कार्यगतः काले समारोप्यते ॥ ३० ॥

---

ननु यदि प्रागुक्तरीत्या सदा व्यवस्थित एकः कालः, तदा कथमस्यैवंविधस्य क्रमरूपतेत्याशङ्क्याह—प्रतिबन्धाभ्यनुज्ञाभ्यामिति ।

अस्यार्थः—कालकृते साधनशक्तीनां व्यापारविघाते कस्याश्चित् क्रियायाः प्रतिबन्धो भवति । तद्विपर्ययोऽभ्यनुज्ञा । तस्यामुपलक्षितायां तस्य कालस्य शाश्वती वृत्तिः प्रवृत्तिः, तया विभज्यमानोऽसौ काल एकोऽपि क्रमरूपतां भजते ।

अयमत्र निष्कर्षः—क्रियायाः प्रतिबन्धाभ्यनुज्ञे कालस्य कार्यभूते तद्गतः क्रमः पौर्वापर्यरूपः काले कालप्रवृत्तौ च समारोप्यते ।

किञ्च, प्रतिबन्धाभ्यनुज्ञाविषयीभूतासु क्रियास्वपि क्रमो मुख्यः स काले समारोप्यत इत्यौपाधिक एव कालस्य क्रमः, न तु मुख्यः, सदैकरूपवस्तुत्वेनाक्रमत्वाद् इति ।

अयं भावः—कालकृते साधनशक्तीनां व्यापारविघाते सति कस्याश्चित् क्रियायाः प्रतिबन्धो भवति । तद्विपर्ययोऽभ्यनुज्ञा । ताभ्यामुपलक्षिताभावेषु कालस्य नित्या प्रवृत्तिः । "सन्ततं परिणामिनो हि सर्वे भावा ऋते चितिशक्तेः" इति सांख्ययोगसिद्धान्तरीत्या सततपरिणामिषु हि भावेषु किञ्चिदाजायते किञ्चिदपक्षीयते=विनश्यतीति नियतमेतत्=अवश्यंभावि एतत् । तथा च प्रतिबन्धाभ्यनुज्ञारूपस्वकार्यनिवेशी क्रमः काले समारोप्यते, न त्वसौ तत्र=काले भाविकः=स्वाभाविकः । क्रियाधर्मो हि मुख्यः क्रमः, ततोऽन्यत्र काले तदन्यभावेषु वा उपचरितः=आरोपितः । पौर्वापर्यं हि अपूर्वापरस्वभावेषु वस्तुषु=सिद्धस्वभावेषु भावेषु उपाधिभूतम्=क्रियारूपोपाधितः प्राप्तं लक्ष्यते=प्रतीयते, न तु स्वतन्त्रम्=स्वाभाविकम् । एवं क्रमविरोधी धर्मो यौगपद्यमपि प्रतिबन्धाभ्यनुज्ञारूपस्वकार्यगतः काले समारोप्यत इति ॥ ३० ॥

समविषमरूपतापि कालस्योपचरितेत्याह—

कर्तृभेदात् तदर्थेषु प्रकर्षापचयौ गतः ।
समत्वं विषमत्वं वा स एकः प्रतिपद्यते ॥ ३१ ॥

इह यदानुष्ठातारः श्रुतिस्मृतिनिबन्धनमाचारमनुतिष्ठन्ति, तदा प्रकर्षमासादयन् कालः स एवैकः कृतादिर्व्यपदिश्यते । शुभसमाचाराधिकारिबाहुल्यादभिन्न इत्यर्थः । तदर्थः कर्तृसाध्यः समाचारः ।

यदा तु कर्तारो विश्रृङ्खला यथावत्समाचारमुल्लङ्घयन्ति, तदा समाचारापकर्षादपचयप्राप्तेः कलिप्रभृतिर्विषमः कालोऽभिधीयते । तदयमेकोऽप्यनुष्ठातृभेदाद् विभागमासादयति कालः ॥ ३१ ॥

अन्यदप्यध्यारोपितं कालस्य विभागमाह—

क्रियाभेदाद् यथैकस्मिंस्तक्षाद्याख्या प्रवर्तते ।
क्रियाभेदात् तथैकस्मिन्नृत्वाद्याख्योपजायते ॥ ३२ ॥

---

क्रमवत् समविषमरूपताऽपि कालस्योपचरिता=आरोपिता एव न वास्तवी इत्याह—कर्तृभेदादिति ।

अस्यार्थः—सः=प्रागुपवर्णितः, एकोऽपि कालः तदर्थेषु तच्छब्दस्य बुद्धिस्थपरामर्शित्वात् कृतादियुगसम्बन्धिशुभाशुभसदसदाचारादिपदार्थेषु कर्तृभेदादनुष्ठातृणां न्यूनत्वाधिकत्वभेदात् प्रकर्षापचयौ गतः, यथायथं प्रकर्षमपकर्षञ्च प्राप्तः कृतादिरूपतया समत्वं कलिरूपतया विषमत्वं वा=च प्रतिपद्यत इति ।

अयं भावः—इह यदाऽनुष्ठातारः श्रुतिस्मृतिनिबन्धनम्=श्रुतिस्मृतिविज्ञापितमाचारमनुतिष्ठन्ति, तदा स एवैकः कालः प्रकर्षमासादयन् कृतादिः=कृतम्, त्रेता, द्वापर इति व्यपदिश्यते, शुभसदाचाराधिकारिबाहुल्याद् भिन्नस्तदर्थकर्तृसाध्यसमाचारः=तदर्थकर्तृसाध्यः समाचारो यत्रेति कालरूपेऽन्यपदार्थे बहुव्रीहिः ।

यदा तु कर्तारो विश्रृङ्खलाः—निर्मर्यादा यथावत् समाचारम्=स्वस्ववर्णाश्रमोचितमाचारमुल्लङ्घयन्ति तदा समाचारापकर्षात् कालस्यापचयप्राप्तेः=अपकर्षप्राप्तेः कलिप्रभृतिर्विषमः कालोऽभिधीयते । तदयमेकोऽपि कालोऽनुष्ठातृभेदात् कृतादिरूपैर्विभागमासादयतीति ॥ ३१ ॥

अन्यमपि अध्यारोपितं कालस्य विभागम्=भेदम् आह—क्रियाभेदादिति ।

अस्यार्थः—यथैकस्मिन् पुंसि तक्षणायोविकारनिर्माणादिरूपक्रियाभेदात् तक्षाद्याख्या=तक्षायस्काराद्विसंज्ञा प्रवर्तते तथैकस्मिन्नेव काले विलक्षणपुष्पप्रसवादिरूपक्रियाभेदाद् ऋत्वाद्याख्या ऋत्वयनमासपक्षाहोरात्रादिसंज्ञा प्रवर्तत इति ।

तक्षणायोविकरणादिक्रियाविशेषोपकल्पिता तक्षायस्कारादिसंज्ञा यथैकस्यैव कर्तुः प्रवर्तते, तथा विशिष्टपुष्पादिप्रसवलक्षणक्रियाभेदादेकस्यापि कालस्य वसन्तादिभेदेन समाख्या जायते। आदिग्रहणात् सितासितपक्षव्यपदेशोऽहोरात्रव्यपदेशः प्रदोषप्रत्यूषव्यपदेशश्च यथायथं क्रियाभेदोपहितो गृह्यते ।।३२।।

अन्योऽपि कालभेदोऽध्यारोपितो भवतीत्याह—

आरम्भश्च क्रिया चैव निष्ठा चेत्यभिधीयते ।
धर्मान्तराणामध्यासभेदात् सदसदात्मनः ।। ३३ ।।

उत्पत्तेः पूर्वमसदात्मा पदार्थः। उत्पन्नस्तु सदात्मा । तस्य बुद्धयैकत्वेन वस्तुरूपतया स्वीकारे सति विलक्षणधर्मभेदवशादारम्भादिकालो भेदेन व्यवह्रियते ।

तथा हि—बुद्धयाभिसन्धाय पदार्थरूपं योग्यसाधनोपार्जनमारम्भकालः ।

---

अयं भावः—यथैकस्यैव कर्तुः तक्षणायोविकरणादि=तक्षणायोविकारनिर्माणादिरूपक्रियाविशेषोपकल्पिता तक्षायस्कारादिसंज्ञा प्रवर्तते, तथा विशिष्ट=विलक्षण-पुष्पादिप्रसवलक्षणक्रियाभेदादेकस्यापि कालस्य वसन्तादिभेदेन समाख्या=संज्ञा जायते। तद् यथा मालतीप्रसवेन वसन्तः, कुन्दप्रसवेन माघः समाख्यायते। ऋत्वाद्याख्या, इत्यत्रादिग्रहणात् सितासितपक्षव्यपदेशः=शुक्लकृष्णपक्षव्यपदेशः, अहोरात्रव्यपदेशः, प्रदोषो रजनीमुखम्, प्रत्यूषोऽहर्मुखमिति व्यपदेशश्च यथायथं रविक्रियाभेदोपहितः=क्रियाभेदरूपकालोपाधिकृतो गृह्यते ।।३२।।

पूर्वोक्तादन्योऽप्यध्यारोपितः कालभेदो भवतीत्याह—आरम्भश्चेति ।

अस्यार्थः—'उत्पत्तेः प्राक् पदार्थोऽसदात्मा, पश्चात् तु सदात्मा' इति गौतमीयं मतम् । एवं सदसदात्मनः पदार्थस्य धर्मान्तराणाम्=घटत्वादिरूपसाधारणधर्मातिरिक्तधर्माणामारम्भो क्रियानिष्ठारूपाणां स्वभावत एकस्मिन् कालेऽध्यासभेदात्=आरोपविशेषात् स काल आरम्भश्च क्रिया चैव निष्ठा च आरम्भकालः, क्रियाकालः, निष्ठाकाल इत्यभिधीयते। अत्र चकारत्रयं समुच्चयार्थकम् । आरम्भश्चाभिधीयते=कालपदेनाप्यभिधीयते। एवम्=क्रिया चैव निष्ठा चेत्यत्रापि योज्यम् । क्रिया चैव इत्यत्र चकारैवकारौ उभावपि समुच्चयार्थकौ समुच्चयातिशयं द्योतयतः। संभेदेनान्यतरवैयर्थ्यमिति न्यायादिति।

अयं भावः—उत्पत्तेः पूर्वमसदात्मा पदार्थः, उत्पन्नस्तु सदात्मा। तस्य सदसदात्मनो बुद्धयैकत्वेन वस्तुरूपतया स्वीकारे सति आरम्भादिरूपविलक्षणधर्मभेदवशादारम्भादिकालो भेदेन व्यवह्रियते।

तथा हि—असन्तमपि पदार्थरूपं बुद्धयाऽभिसन्धाय तदुत्पत्तियोग्यसाधनोपार्जनमारम्भकालः। उपार्जितसाधनस्य तस्य करणं क्रियाकालः। कर्तव्यस्य=

उपार्जितसाधनस्य करणं क्रियाकालः। कर्तव्यस्य समाप्तिर्निष्ठाकालः। तदेवं यथाकालं धर्मभेदकल्पनयारम्भादिकालप्रविभागः ॥३३॥

स च सर्वत्र समान इत्याह—

**यावांश्च द्वयणुकादीनां तावान् हिमवतोऽप्यसौ।**
**न ह्यात्मा कस्यचिद् भेत्तुं प्रचेतुं वापि शक्यते ॥ ३४ ॥**

अवयविनां निरंशत्वादारम्भादिकालः सर्वेषां समानः। अवयवास्तु

---

कार्यावस्थापन्नस्य समाप्तिः=कार्यावस्थायाः समाप्तिः निष्ठाकालः। कार्यस्य नितरां स्थितिः, निकृष्टा निष्कर्षमुत्कर्षं प्राप्ता स्थितिरिति व्युत्पत्तिः। कृतस्य समवस्थितस्य पदार्थस्य समाप्तिस्तु विनाशः। तदेवं यथाकालं धर्मभेदकल्पनया=आरम्भादिरूपाणां कार्यधर्मभेदानां कालेऽध्यारोपेणारम्भादिकालप्रविभाग इति।

नन्वत्र कार्यस्य विनाशावस्थायाः कालेऽध्यारोपमादाय कुतो न तुरीयः कालभेदोऽत्रोक्तः। व्यपदिश्यते चारम्भकाल इतिवत् 'विनाशकाले विपरीतबुद्धिरिति' इति चेन्न, विनाशस्याभावरूपस्य निःस्वभावत्वेन भावधर्मत्वसम्भवात्। विनाशकाले इति तु बौद्धस्य भाविनो विनाशस्य संनिहिते पूर्वकाल इत्यर्थः। बौद्धेन च विनाशेन सह कालस्य संनिधिः सम्भवत्येव, उभयोरपि भावत्वात्। यथाश्रुतार्थस्तु न सम्भवति। विनाशकाले विपरीतबुद्धेः साधनाभावाद् जन्मानुपपत्तेरिति ॥३३॥

स च=आरम्भादिकालश्च सर्वत्र=महापरिमाणेषु अल्पपरिमाणेषु चावयवेषु समान इत्याह—**यावांश्चेति**।

अस्यार्थः—असौ आरम्भादिकालो यावांश्च यत् परिमाणकस्तु द्वयणुकादीनां तावान्=तत्परिमाणक एव हिमवतोऽपि।

ननु हिमवत आत्मा=स्वरूपं महापरिमाणः, द्वयणुकादीनां तु आत्माऽल्पपरिमाण इति कथं तयोरारम्भादिकालस्य समानपरिमाणकत्वमित्याशङ्क्याह—**न ह्यात्मेति**।

हि=यतः, कस्यचिदवयविन आत्मा भेत्तुम्=अपचयेन इतरस्माद् विशेषयितुम्, अपचेतुमिति यावत्। प्रचेतुं वाऽपि=प्रचयेनेतरस्माद् भेत्तुं वापि, न शक्यते, अवयविमात्रस्य कार्यद्रव्यस्य निरंशत्वेन समानत्वात्। तस्मादवयवबहुत्वेनावयविनः प्रचयः, अवयवाल्पत्वेन त्ववयविनोऽपचयः परिकल्प्यते=अवयविनि अध्यारोप्यते, न तु तत्र वास्तवौ प्रचयापचयौ। तदेतदग्रिमकारिकया वक्ष्यते—

'अन्यैस्तु भावैरन्येषां प्रचयः परिकल्प्यते'। इति। (वा० प० ३, काल० ३५)

अयं भावः—अवयविनामवयवेभ्यो व्यतिरिक्तानां निरंशत्वादारम्भादिकालः सर्वेषाम्=महापरिमाणानामल्पपरिमाणानाञ्च समानः। यतोऽवयवा अवयविभ्योऽ-

ततोऽर्थान्तरम् । परिमाणमपि च गुणोऽन्य एवावयविन इति न तद्भेदे तस्य रूपं प्रचेतुमपचेतुं वा शक्यते ।

तस्मादवयविमात्रस्य कार्यद्रव्यस्य समानत्वान्न तद्वशेनाल्पपरिमाणानां महापरिमाणानां चारम्भादिकालो विशिष्यते, अपि त्ववयविव्यतिरिक्तधर्मान्तरवशेनेत्यर्थः ॥३४॥

तदाह—

अन्यैस्तु भावैरन्येषां प्रचयः परिकल्प्यते ।
शनैरिदमिदं क्षिप्रमिति तेन प्रतीयते ॥ ३५ ॥

अल्पपरिमाणमहापरिमाणानामवयविनामन्यैर्व्यतिरिक्तैरेवावयवैर्बहुभिः प्रचयोऽल्पैरपचयश्च परिकल्प्यतेऽध्यारोप्यते । तथा च बह्ववयवोऽवयवी शनैर्निष्पद्यते । अल्पावयवस्तु क्षिप्रमित्यारम्भादिकालस्तत्र विलक्षणोऽवधार्यते । समुदायतिरोहितभेदत्वादवयवधर्मैरवयविनो व्यपदेशः, न तु भावतः कालो भिद्यतेऽवयविनाम् ॥३५॥

---

र्थान्तरभूताः । परिमाणमपि च तस्य गुणोऽन्य एवावयविन इति न तद्भेदे=परिमाणस्यावयविनो भेदे सति परिमाणेनावयविनो रूपं प्रचेतुमपचेतुं वा शक्यते ।

तस्मादवयविमात्रस्य कार्यद्रव्यस्य निरंशत्वेन समानत्वान्न तद्वशेन=अवयविवैजात्यवशेनाल्पपरिमाणानां महापरिमाणानां चारम्भादिकालो विशिष्यते=भिद्यते, अपि तु अवयविव्यतिरिक्तधर्मान्तरवशेन=अवयविव्यतिरिक्तस्यावयवस्य यद् धर्मान्तरमल्पत्वबहुत्वरूपं तद्वशेनेति फलितमिति ॥३४॥

तदाह=पूर्वकारिकोक्तमेवार्थं प्रसाधयन्नाह—अन्यैस्त्विति ।

अस्यार्थः—अन्यैस्तु=अवयविव्यतिरिक्तैस्तु भावैः=अवयवैः, बहुभिः अन्येषाम्=अवयवव्यतिरिक्तानामवयविनाम्, प्रचयः परिकल्प्यते=अवयविष्वध्यारोप्यते । तेन अवयवस्याल्पत्वबहुत्वाभ्यामवयविषु यथायथं प्रचयापचययोरध्यारोपेणेदं महापरिमाणं वस्तु शनैः कृतम्, इदमल्पपरिमाणं वस्तु क्षिप्रं कृतमिति प्रतीयते । तेनाल्पपरिमाणानां महापरिमाणानां च कार्यद्रव्याणामारम्भादिकालस्तत्रारोपितेन प्रचयेनापचयेन च भिद्यत इति ।

अयं भावः—अल्पपरिमाणानां महापरिमाणानाञ्चावयविनामन्यैः स्वव्यतिरिक्तैरेवावयवैर्बहुभिः प्रचयोऽल्पैस्तैरपचयस्तत्र परिकल्प्यते=अध्यारोप्यते । तथा च बह्ववयवोऽवयवी शनैर्निष्पद्यते, अल्पावयवस्तु स क्षिप्रमित्यारम्भादिकालस्तत्र विलक्षणोऽवधार्यते । अवयविनां प्रचयापचयाभ्यामध्यारोपिताभ्यां क्षणसमूहरूपे कालेऽपि प्रचयापचययोरध्यारोपात् । अवयवावयविनां समुदायस्य तिरोहितभेदत्वात् । अवयवधर्मैर्बहुत्वप्रयुक्तैः प्रचयैरल्पत्वप्रयुक्तैरपचयैश्चावयविनां प्रचितत्वा-

यतः—

असतश्च क्रमो नास्ति स हि भेत्तुं न शक्यते ।
सतोऽपि चात्मतत्त्वं यत् तत् तथैवावतिष्ठते ।। ३६ ।।

उत्पत्तेः पूर्वमसन् भावः । तस्य निःस्वभावत्वात् पौर्वापर्येण विभागाभावात् क्रमो नास्ति । उत्पन्नस्यापि विद्यमानस्य तेनैव प्रकारेणाशक्यभेदत्वेन स्वरूपस्यावस्थानादविद्यमानः क्रम इति बुद्धयानुसन्धाने न क्रमव्यवहारः सदसतो-रित्यर्थादभिहितं भवति । भेदाश्रयो हि क्रमः ।

स च भेदः पदार्थस्योत्पद्यमानावस्थस्य तत्त्वतः सदसदवस्थाद्वयरूपस्य प्रत्यवस्थमसम्भवीति तत्सङ्कलनया पूर्वापररूपताध्यारोपः । एवं प्रथम एव क्रमः काल्पनिक इति सर्वस्तथारूपो न मुख्यः ।।३६।।

न केवलं क्रियाभेदनिमित्ताः काले एकस्मिन्नृत्वाद्याख्याः प्रवर्तन्ते, यावद् भूतादिव्यपदेशा अपीत्याह—

---

पचितत्वव्यपदेशः, न तु भावतः=वस्तुस्वभावतोऽवयविनां महापरिमाणानामल्प-परिमाणानाञ्च कालो भिद्यते, तेषां निरंशत्वेन समानत्वादिति ।।३५।।

पूर्वकारिकोक्तमर्थमुपपादयति—असतश्चेति ।

अस्यार्थः—उत्पत्तेः प्रागसतो भावस्य निःस्वभावत्वेन क्रमो नास्ति, हि=यतः, सः=उत्पत्तेः प्रागसन् भावः, भेत्तुम्=असत्त्वादेव पौर्वापर्येण विभक्तुं न शक्यते । सतोऽपि चोत्पत्त्यनन्तरं विद्यमानस्यापि च यदात्मतत्त्वं तत् तथैव=तेनैव प्रकारेण, असति उक्तेन प्रकारेण निरंशत्वादशक्यविभागत्वेन, अवतिष्ठते इत्येवं सदसतोः प्रत्येकं क्रमनिरासे तयोर्बुद्धयाऽनुसन्धानेऽपि न क्रम इति सर्वत्र क्रमो न मुख्यः; किन्तु सदसतोर्बुद्धयाऽनुसन्धानेनाध्यारोपित इति ।

अयं भावः—भावः=कार्यद्रव्यम् उत्पत्तेः प्रागसन्, तस्य निःस्वभावत्वेन निरंशत्वात् । पौर्वापर्येण विभागाभावात् क्रमो नास्ति । उत्पन्नस्यापि विद्यमानस्य तेनैव प्रकारेण निरंशत्वादशक्यविभागत्वेन स्वरूपस्यावस्थानात् क्रमो न विद्यत इति बुद्धयाऽनुसन्धानेऽपि न मुख्यः क्रमव्यवहारः सदसतोरित्यर्थादभिहितं भवति । यतः क्रमो भेदाश्रयः । स च भेद उत्पद्यमानावस्थस्य तत्त्वतः=वस्तुतः सदसद-वस्थाद्वयरूपस्य पदार्थस्य प्रत्यवस्थमसम्भवी इति, तत् सङ्कलनया=तयोर्बुद्धयाऽ-नुसन्धानेन पूर्वापररूपतारूपस्य क्रमस्याध्यारोपः । एवं प्रथम एवोत्पद्यमानावस्थस्य जन्यभावस्य क्रमः काल्पनिक इति सर्वोऽपि क्रमः=उत्पत्त्युत्तरकालिकोऽपि क्रमः तथारूपः=काल्पनिको न मुख्य इति ।। ३६ ।।

एकस्मिन् काले न केवलं क्रियाभेदहेतुका ऋतुमासायनाद्याख्याः प्रवर्तन्ते;

क्रियोपाधिश्च सन् भूतभविष्यद्वर्तमानता ।
एकादशभिराकारैर्विभक्ताः प्रतिपद्यते ।। ३७ ।।

उत्पन्नध्वस्ता यदा क्रिया भवन्ति, तदा तदुपाधिः कालो भूत इति व्यपदिश्यते । यदा तु सन्निहितसाधनाः सम्भाव्यमानोदयाः क्रियाः, तदा तदुपाधिः कालो भविष्यत्तां प्रतिपद्यते । प्रारब्धापरिसमाप्तक्रियोपाधिस्तु वर्तमानसंज्ञः, ते च भूतादयः कालविभागाः, पुनरवान्तरभेदेनैकादशधा भवन्ति ।।३७।।

कथमित्याह—

भूतः पञ्चविधस्तत्र भविष्यंश्च चतुर्विधः ।
वर्तमानो द्विधाख्यात इत्येकादश कल्पनाः ।। ३८ ।।

---

अपि तु भूतभविष्यदादिव्यपदेशा अपीत्याह क्रियोपाधिश्चेति ।

अस्यार्थः – स एकोऽपि कालः क्रियोपाधिश्च सन्=भिन्नाभिः क्रियाभिरुपहितश्च सन् भिद्यमान एकादशभिराकारैर्विभक्ता भूतभविष्यद्वर्तमानताः प्रतिपद्यते= प्राप्नोति ।

अयं भावः —उत्पन्नध्वस्ताः=पूर्वमुत्पन्नाः पश्चाद् ध्वस्ता यदा क्रिया भवन्ति, तदा तदुपाधिः=तादृशक्रियोपहितः कालो भूत इति व्यपदिश्यन्ते । यदा तु सन्निहितसाधनाः=पूर्वकालिकैः साधनैः सन्निहिता भाविन्यः सम्भाव्यमानोदयाः= सम्भावनागोचरोत्पत्तिकाः क्रियाः, तदा तदुपाधिः=तादृशक्रियोपहितः कालो भविष्यत्तां प्रतिपद्यते । प्रारब्धापरिसमाप्तक्रियोपाधिस्तु=प्रारब्धा अपरिसमाप्ता च या क्षणसमूहात्मिका एका क्रिया तदुपहितस्तु कालो वर्तमानसंज्ञः । ते च भविष्यद्वर्तमानरूपाः कालविभागाः पुनरवान्तरभेदेनानद्यतनरूपेण वक्ष्यमाणेन एकादशधा भवन्ति ।।३७।।

ते भूतादयः कालविभागाः कथं पुनरवान्तरभेदेनैकादशधा भवन्तीति जिज्ञासायामाह—भूतः पञ्चविध इति ।

अस्यार्थः—तत्र=तेषु भूतभविष्यद्वर्तमानसंज्ञकेषु कालविभागेषु, भूतः पञ्चविधः । तथा हि—भूतसामान्यमेकः, अद्यतनभूतो द्वितीयः, अनद्यतनभूतस्तृतीयः, अद्यतनानद्यतनसमुदायश्चतुर्थः । भविष्यन्नपि अध्यारोपितभूतभावो भूतभेदः पञ्चमो गौणः ।

भविष्यंश्च भविष्यत्कालस्तु चतुर्विधः । तथा हि—भविष्यत् सामान्यमेकः, अद्यतनो भविष्यद् द्वितीयः, अनद्यतनो भविष्यत् तृतीयः, अद्यतनानद्यतनसमुदायरूपो भविष्यच्चतुर्थः ।

उक्तलक्षणो वर्तमानस्तु द्विधाऽऽख्यातः कथितः । तथा हि—मुख्यो वर्तमान एकः, अमुख्यस्त्वतिदिष्टवर्तमानभावो द्वितीयः । इत्येवं भूतभविष्यद्वर्तमानकालानामेकादशकल्पना भवन्तीति ।

भूतसामान्यं विशेषेभ्यो व्यावृत्तेरेको भूतभेद इति गण्यते। तथा चोक्तं 'सामान्यमपि यथा विशेषस्तद्वदिति'। अद्यतनो द्वितीयो भूतभेदः। अनद्यतनस्तृतीयः।

अद्यतनानद्यतनसमुदायस्ताभ्यामन्यत्वाच्चतुर्थः। परोक्षस्त्वनद्यतनभेदो न भूतभेद इति न पृथग् गण्यते।

यस्तु भविष्यन्नप्यतिदेशाद् भूतकार्याणि लभते स पञ्चमो भूतभेदोऽध्यारोपितभूतभावो गौणः। भविष्यत्सामान्यमद्यतनोऽनद्यतनोऽद्यतनानद्यतनसमुदायश्चेति चत्वारो भविष्यद्भेदाः।

---

अयं भावः - भूतसामान्यमेको भूतभेद इति गण्यते, भूतविशेषेभ्योऽद्यतनादिभ्यस्तस्य व्यावृत्तेः। तदुदाहरणं यथा—

अभूदभूमिः प्रतिपक्षजन्मनां भियां तनूजस्तपनद्युतिर्दितेः।
यमिन्द्रशब्दार्थनिषूदनं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते॥ इति।
(माघः प्रथमसर्गः)

अत्र हि भूतकालस्याद्यतनत्वानद्यतनत्वादिरूपविशेषविद्योतकशब्दानुपादानाद् भूतसामान्यं लुङर्थः।

तथा चोक्तम्—"सामान्यमपि यथा विशेषस्तद्वत्" इति।

अस्यार्थः—यथा अद्यतनादिर्विशेषो भूतभेदस्तद्वत् सामान्यमपि भूतभेद इति।

अद्यतनो द्वितीयो भूतभेदः। तदुदाहरणं यथा—'अद्यागमत्, अद्यागतो वा' इति। अत्राद्यतनभूतकालो लुङर्थो निष्ठाप्रत्ययार्थो वा।

भूतकालगतविशेषस्याद्यतनत्वस्याद्यपदेनावद्योतनात्—अनद्यतनस्तृतीयः। तदुदाहरणं यथा—ह्य आगच्छत्। भूतकालगतस्यानद्यतनत्वस्य ह्यःपदेनावद्योतनाद् अनद्यतनभूतो लङर्थो निष्ठाप्रत्ययार्थो वा।

अद्यतनानद्यतनसमुदायस्ताभ्यामन्यत्वाच्चतुर्थः। तदुदाहरणं यथा—'देवदत्तः एतद्दिनं यावत् त्रिभिर्दिनैः कटमकुरुत' इति। लुङं बाधित्वा परत्वाल्लङ्। अत्राद्यतनानद्यतनसमुदायरूपो भूतकालः प्रतीयते। परोक्षस्त्वनद्यतनभेदो न भूतभेदः, किन्तु भूतभेदानद्यतनभेद इति पृथङ् न गण्यते।

यस्तु भविष्यन्नप्यतिदेशाद् भूतकार्याणि लभते, स पञ्चमो भूतभेदोऽध्यारोपितभूतभावो गौणः। तदुदाहरणं यथा—

"देवश्चेदवर्षीत् तदा धान्यमवाप्स्म' इति। अत्र 'आशंसायां भूतवच्च' इति सूत्रेण भविष्यत्यर्थे भूतवदतिदेशाल्लुङ्।

भविष्यत्सामान्यमद्यतनोऽनद्यतनोऽद्यतनानद्यतनसमुदायश्चेति चत्वारो भविष्यद्भेदाः।

यस्तु अनद्यतनवत् प्रतिषेधाद् भविष्यत्सामान्यकार्याणि प्रतिपद्यते, सोऽनद्यतनोऽपि शास्त्रव्यवहारे भविष्यत्सामान्यमेव। मुख्यो वर्तमान एकः। अमुख्यस्तु अतिष्दिटवर्तमानभावः, "वर्तमानसामीप्ये .... (३।३।१३१) इति भूतो भविष्यंश्च, स द्वितीयः। तदेते शास्त्रकार्यप्रविभागार्थं कालस्य भेदाः

तत्राद्यो यथा– 'पिपीलिकाऽण्डसञ्चरणाद् भविष्यति वृष्टिः' इति। अत्राद्य श्वो वा परश्वो वेति निर्णायकपदाभावाद् भविष्यत्सामान्ये लृट्।

द्वितीयो यथा–'अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति' इति। अत्राद्यपदसत्तयाऽद्यतनभविष्यति लृट्।

तृतीयो यथा--'श्व आगन्ता' इत्यत्र श्वःपदेन भविष्यत्कालस्यानद्यतनत्वं प्रतीयते।

गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम्।
अलिकुलकोकिलललिते नैष्यति सखि सुरभिसमयेऽसौ॥ इति।

अत्रानद्यतनभविष्यति सामान्ये लृट् सतोऽपि अनद्यतनत्वस्याविवक्षणात्।

चतुर्थो यथा —

रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः।
इत्थं विचिन्तयति कोशगते द्विरेफे हा हन्त हन्त नलिनीं गज उज्जहार॥ इति।

अत्र दिनावसाने सङ्कुचत्पद्मकोशबद्धे पद्ममकरन्दरसलम्पटे भ्रमरे इत्थं विचिन्तयति सति जलावगाहाय सरःप्रविष्टो गजो नलिनीमुज्जहारेति वाक्यार्थ-ज्ञानात्, अत्राद्यतनानद्यतनसमुदाये भविष्यति लृट् इति प्रतीयते। अत्र हि रात्रेः पूर्वार्द्धोऽद्यतनकालः, तस्याः पश्चिमार्द्धो भाविदिनश्चानद्यतनकालः 'इत्येवमद्यतना-नद्यतनसमुदायरूपस्य भविष्यद्भेदस्यात्रोपपत्तिः। अद्यतनांशविवक्षयाऽत्र लृट्, यदि तु कदाचिदत्रानद्यतनांशविवक्षा तदा लुटः प्रयोगो न दण्डवारित इत्यवधेयम्।

यस्तु अनद्यतनवत् प्रतिषेधाद्=नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोरिति सूत्रेण अनद्यतनवत् प्रतिषेधात् भविष्यत् सामान्यकार्याणि प्रतिपद्यते सोऽनद्यतनोऽपि शास्त्रव्यवहारे भविष्यत्सामान्यमेव। तदुदाहरणं यथा रघुवंशे –

दिवं मरुत्वानिव भोक्ष्यते भुवं दिगन्तविश्रान्तरथो हि तत्सुतः।
अतोऽभिलाषे प्रथमं तथाविधे मनो बबन्धान्यरसात् विलङ्घ्य सा॥ इति।
(रघुवंशः, तृतीयसर्गः)

अत्र हि भाविनि पृथिव्युपभोगक्रियाप्रबन्धेऽनद्यतनवत् प्रतिषेधाद् भविष्य-त्सामान्ये लृट्। पृथिव्युपभोगक्रियायाः सातत्यरूपः प्रबन्धस्तु दिवं मरुत्वानिवेति दृष्टान्तेन गम्यते। न हि मरुत्वत्कर्तृको दिव उपभोगोऽसन्ततः श्रुतः स्मृतो वेति।

मुख्यो वर्तमान एकः, अमुख्यस्तु भूते भविष्यति च योऽतिदिष्टवर्तमानभावः "वर्तमानसामीप्ये वर्तमानवद् वा" (पा० ३।३।१३१) इति सूत्रेण स द्वितीयः।

कल्पिताः, न त्वसावियत्संख्यः। एवमनन्तभेदत्वात् क्रियाभेदाद् भूतादिभेद उक्तः ॥ ३८ ॥

क्रिया चातीताविद्यमाना कथं भूतव्यपदेशं काले समर्थयेदित्याशङ्क्याह—

काले निधाय स्वं रूपं प्रज्ञया यन्निगृह्यते।
भावास्ततो निवर्तन्ते तत्र संक्रान्तशक्तयः ॥३९॥

क्रियया निर्वर्तिताः पदार्था व्यतीता इति भण्यन्ते व्यपगतस्वरूपाः। तत्र यत् तेषां वर्तमानावस्थायां बुद्ध्या स्वरूपं गृहीतम्, तत् स्थायिनि काले स्वाधारे समर्प्य व्ययन्ते, यतोऽनुभूताः स्मर्यमाणावस्था जायन्ते। तथा चातीतेऽध्वनि सङ्क्रान्तशक्तयो व्यवहारं स्वायत्तमनुपतन्ति।

एतदुक्तं भवति—भावोपाधितया कालतत्त्वं प्रख्यायते। भावाश्चानुभूतौ

---

तदुदाहरणं यथा—'कदा भवानागतः' इति प्रश्ने 'अधुनैवागच्छामि' इति, 'कदा भवान् गमिष्यति' इति प्रश्ने 'एष गच्छामि' इति। तदेते कालस्य भेदाः शास्त्रकार्यप्रविभागार्थम्=प्रविभागेण शास्त्रकार्यप्रवृत्त्यर्थं कल्पिताः, न त्वसावियत्संख्य इति परिगणनम्। एवं तस्य कालस्यानन्तभेदत्वात् क्रियोपाधिको भूतादिभेद एकादश उक्त इति ॥ ३८ ॥

ननु क्रियोपाधिकः कालभेदो भूतादिव्यपदेशहेतुरित्युक्तम्, क्रिया चातीता तत एवाविद्यमाना कथं काले भूतव्यपदेशं समर्पयेदित्याशङ्क्याह—काले निधायेति।

अस्यार्थः — जन्यभावानां रूपद्वयम्, स्थूलं सूक्ष्मञ्च, तत्र तेषां स्थूलं रूपं चक्षुरादिभिरिन्द्रियैर्गृह्यते। सूक्ष्मं रूपं तूपादानकारणे तिरोहितं कारणशक्तिपदवाच्यं प्रज्ञया गृह्यते। तत्र तेषां यद्रूपं प्रज्ञया निगृह्यते=नितरां गृह्यते, स्वस्थूलरूपविनाशावसरे प्राप्ते तत्स्वरूपं सर्वाधारे काले स्वाधारे स्वोपादानकारणाधारे च निधाय भावास्ततः कालाद् निवर्तन्ते, विनश्यन्ति, तत्र काले सङ्क्रान्तशक्तयः=स्वोपादानकारणेन सह काले सङ्क्रान्तसूक्ष्मरूपकाः सन्त इति।

अयं भावः—क्रियया निर्वर्तितांशात् कालाद् निवृत्ता अर्था व्यतीता इति भण्यन्ते व्यपगतस्वरूपाः। तत्र यत्तेषाम्=भावानां वर्तमानावस्थायां बुद्ध्या=चक्षुरादिजन्यया स्वरूपम्=स्थूलं रूपं गृहीतं तत् स्थायिनि स्वाधारे काले समर्प्य व्ययन्ते=विनश्यन्ति, यतोऽनुभूता भावाः स्मर्यमाणावस्था जायन्ते=भवन्ति। तथा चातीतेऽध्वनि=अतीतकालरूपे मार्गे सङ्क्रान्तशक्तयः=सङ्क्रान्तसूक्ष्मरूपाः सन्तः स्वायत्तं व्यवहारमनुपतन्ति=स्वाधीनो यो व्यवहारः 'अभूद् घट' इत्यादिरूपस्तद् गोचरा भवन्ति।

एतदुक्तं भवति—अवाङ्मनसगोचरपरमात्मरूपतया प्रख्याय अगोचरीभूतमपि कालतत्त्वं भावोपाधितया=जन्यभावरूपोपाधिपरिच्छिन्नतया प्रख्यायते=

स्मर्यमाणावस्थास्तस्य भूतव्यपदेशमेव स्वोपाधितया कल्पयन्ति। तथा चाभूद् घट इत्यादिव्यवहारः। अतश्चैतदेव कालसद्भावावेदकं लिङ्गम्, असत्यर्थे तद्व्यवहारानुपपत्तेः ॥ ३९ ॥

कालसङ्क्रान्तरूपत्वेऽभूदित्यादिव्यवहारात् कालसिद्धिस्तर्हि कालसिद्ध-भविष्यद्व्यपदेशोऽपि कथमित्याह--

भाविनां चैव यद्रूपं तस्य च प्रतिबिम्बकम्।
सुनिर्मृष्ट इवादर्शे काल एवोपपद्यते ॥ ४० ॥

समर्थहेतुसन्निधानसमये सम्भावितोत्पत्तीनां पदार्थानां यद्रूपं बाह्यम्, यच्च तस्य बाह्यस्य रूपस्य बुद्धौ निश्चितं प्रतिबिम्बरूपम्, तदाकारस्तयोर्द्वयो-र्दृश्यविकल्पयोरेकत्वाध्यवसायात् स्थायिनि काले समारोहस्तत्र सङ्क्रान्तशक्ति-त्वमिति तदध्यारोपात् काले भविष्यत्त्वमध्यवसाय बाह्येषु भावेषु तदुपाधि तद् व्यवह्रियते। निर्मलतले दर्पणे रूपप्रतिबिम्बमवसाय नियतरूपनिश्चय इत्यर्थः। कालादिप्रसेवकान्तर्गता एव पदार्थाश्चकासतीत्यादर्शसाम्यम् ॥ ४० ॥

---

अभिलापरूपायाः प्रख्याया गोचरो भवति। भावश्च पूर्वमनुभूता इदानीं स्मर्यमाणा-वस्थास्तस्य=कालस्य स्वोपाधितया=स्वस्वरूपभूतोपाधिकृतपरिच्छेदेन भूत-व्यपदेशमेव कल्पयन्ति। तथा चाभूद् घट इत्यादिव्यवहारः। अतश्चैतदेव= अभूद् घट इत्यादिव्यवहारसत्त्वमेव कालसद्भावावेदकं लिङ्गम्। असत्यर्थे तद् व्यवहारानुपपत्तेरिति।

तथा चायमर्थः फलितः—स्थूलरूपायाः क्रियाया असत्त्वेऽपि सूक्ष्मरूपायास्त-स्याः सत्त्वेन तया कालपरिच्छेदादभूद् घट इत्यादिव्यवहारोपपत्तिरिति ॥३९॥

ननु कालसंक्रान्तरूपत्वेऽभूदित्यादिव्यवहारात् कालसिद्धभविष्यद्व्यप-देशोऽपि कथम्, भविष्यतः कालसंक्रान्तरूपत्वासम्भवादित्याशङ्क्याह--भाविनाञ्चै-वेति।

अस्यार्थः—भाविनाञ्चैव यद्रूपं सूक्ष्ममुपादानकारणे तिरोहितं समर्थहेतु-संनिधानसमये संभावितोत्पत्तिकं प्रज्ञया निगृह्यमाणमतीतभावप्रतिबिम्बवत् तस्य च=तस्यापि प्रतिबिम्बकं सुनिर्मृष्टे इष्टकाचूर्णादिघर्षणया सुनिर्मले आदर्शे इव काल एवोपपद्यते। एवञ्चातीतवद् भविष्यतोऽपि सूक्ष्मरूपेण कालसंक्रान्तप्रति-बिम्बस्य कालोपाधित्वसम्भवेन कालसिद्धभविष्यद्व्यपदेशहेतुत्वं समवेत्येवेति निष्कर्षः।

यत्तु हेलाराजेन व्याख्यातम्—"समर्थहेतुसंनिधानसमये साम्यम्..." इत्यनेन। तदपेशलं प्रतिभाति, भविष्यतो बाह्यस्य रूपस्य बुद्धौ प्रतिबिम्बा-सम्भवात्। विद्यमानस्यैव स्वच्छे उपाधौ प्रतिबिम्बदर्शनात्। किञ्चैतद् व्याख्यान-

एवञ्च कालसङ्क्रान्तरूपत्वाद् भावानामजस्रपरिणाम इत्याह—

तृणपर्णलतादीनि यथा स्रोतोऽनुकर्षति ।
प्रवर्तयति कालोऽपि मात्रा मात्रावतां तथा ॥ ४१ ॥

नदीप्रवाहो यथा तृणानि कानिचित् प्रेरयति स्वस्थानात् प्रच्यावयति, कानिचित् पुनराक्षिप्य तत्स्थाने निवेशयति, एवमजस्रप्रवृत्तिः कालो भावानाक्षिप्याक्षिप्योत्सृजति, उत्सृष्टानां च धर्मपरिणामान् वर्तयति ॥ ४१ ॥

दृष्टान्तान्तरेणैतदेव द्रढयति—

आविश्येवानुसन्धत्ते यथा मतिमतां गतीः ।
वायुस्तथैव कालात्मा विधत्ते क्रमरूपताम् ॥ ४२ ॥

---

मक्षरबहिर्गतम् । किञ्चैतद् व्याख्यानं प्रदर्शितपूर्वप्रक्रियाविरोध्यपि । भूतव्यपदेशप्रक्रियायां भावानां सूक्ष्मरूपस्यैव 'तत्र संक्रान्तशक्तय' ( वा० प० ३; काल० ३९ ) इति काले संक्रमणवर्णनादिति ॥ ४० ॥

पूर्वोक्तहेलाराजीयव्याख्याने कालादिप्रसेवकान्तर्गता इत्यस्यार्थः । कालबुद्धयादयो ये भगवतो जगदवभासनजगत्सर्गादिकार्येषु सहकारितया प्रसेवकास्तदन्तर्गता एव पदार्थाश्चकासति=अवभासन्त इति ।

एवञ्च भूतभविष्यद्वर्तमानानां भावानां कालसंक्रान्तरूपत्वादजस्रपरिणाम इत्याह—तृणपर्णलतादीनीति ।

अस्यार्थः—यथा स्रोतो नदीप्रवाहः स्वसंक्रान्तानि तृणपर्णलतादीनि अनुकर्षति, तथा कालोऽपि स्वसंक्रान्ता मात्रावतामवयविनां भावानां मात्रा अवयवान् कार्यान्तरजननलक्षणाय परिणामाय प्रवर्तयति । मीयते=निर्मीयते वस्तु यया सा मात्राऽवयव इति ।

अयं भावः—अनुकर्षति, प्रवर्तयति इति तत्तत् क्रियाबोधकं पदद्वयं सम्भावितक्रियासामान्योपलक्षणम् । एवञ्च नदीप्रवाहो यथा तृणादीनि कानिचित् प्रेरयति, स्वस्थानात् प्रच्यावयति, कानिचित्तु पुनराक्षिप्य तत्स्थाने निवेशयति, एवमजस्रप्रवृत्तिः कालो भावानाक्षिप्याक्षिप्योत्सृजति, उत्सृष्टानाञ्च भावानां धर्मलक्षणान् परिणामान् वर्तयति=करोति इति ॥ ४१ ॥

दृष्टान्तान्तरेणैतदेव=क्रमेण जायमाने भावानां सर्गविसर्गरूपे निमज्जनोन्मज्जने कालायत्ते एव इत्येतदेव द्रढयति—आविश्येवेति ।

अस्यार्थः—यथा वायुर्गतिमतां भावानां गतीस्तेषु आविश्येव स्वगतिमनु तेषु भावेषु संधत्ते=सम्यग् दधाति तथा कालात्मा भावेष्वाविश्येव क्रमरूपतां विधत्ते=भावविषयकप्रतिबन्धाभ्यनुज्ञाभ्यां भावेषु निमज्जनोन्मज्जनपौर्वापर्यरूपां क्रमरूपतां विधत्त इति ।

यथा प्राणाख्यो वायुः शरीरिणामन्तरवयवसन्धिष्ववस्थितो गमनागमनादिचेष्टाः साधयति, तथा कालात्मापि भावानामात्मन्यनुप्रविश्य प्रतिबन्धाभ्यनुज्ञाभ्यां निमज्जनोन्मज्जनपौर्वापर्यलक्षणं प्रवर्तयति ॥ ४२ ॥

ततश्चेदं सिध्यतीत्याह—

अयनप्रविभागश्च गतिश्च ज्योतिषां ध्रुवा ।
निवृत्तिप्रभवाश्चैव भूतानां तन्निबन्धनाः ॥ ३४ ॥

दक्षिणायनमुत्तरायणमिति कालकृतमर्यादायत्तः प्रविभागः । नक्षत्राणां च नियता गतिरुदयादिरूपा कालमनुपतति । महाभूतानां च सर्गप्रलयसमये जन्मनाशावाविर्भावलक्षणौ कालायत्ताविति सर्वोपकारी कालो विश्वात्मेत्युच्यते ॥ ४३ ॥

---

अयं भावः — यथा प्राणाख्यो वायुः शरीरिणामन्तरवयवसन्धिषु अवस्थितः—

हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ॥ इति ॥

गमनागमनादिचेष्टाः साधयति, तथा कालात्माऽपि भावानामात्मन्युपविश्य जन्मप्रतिबन्धजन्माभ्यनुज्ञाभ्यां निमज्जनोन्मज्जनयोः पौर्वापर्यलक्षणं क्रमं भावेषु प्रवर्तयति ।

अयमत्र निष्कर्षः —स्वपरिच्छेदकनिमज्जनोन्मज्जनक्रियागते पौर्वापर्ये कालात्मा भावेषु विधत्ते अध्यारोपयतीति ॥ ४२ ॥

ततश्चेदम् = वक्ष्यमाणं कालकृतमयनादिप्रविभागरूपं वस्तु सिद्धयतीत्याह—अयनप्रविभागश्चेति ।

अस्यार्थः —अयनप्रविभागश्च = दक्षिणायनमुत्तरायणमिति प्रविभागोऽपि, ज्योतिषां ग्रहनक्षत्राणां ध्रुवा नियता गतिश्च = गतिरपि उदयादिरूपा = उदयोऽस्तमयः, वक्रत्वम्, अतिचारः, भेदनमित्यादिरूपा ज्यौतिषशास्त्रोक्ता, सर्गप्रलयसमये भूतानाम् = पृथिव्यादिभूतपञ्चकस्य निवृत्तिप्रभवाश्चैव, निवृत्तिर्विनाशः, प्रभवो जन्म, जन्मविनाशा अपि, तन्निबन्धनाः = कालनिमित्तका इति ।

अयं भावः —दक्षिणायनमुत्तरायणमिति प्रविभागः कालकृतमर्यादाधीनः । तथा हि— मकरार्कादारभ्य मिथुनार्कपर्यन्तमुदगयनम् । कर्कार्कादारभ्य धनुरर्कपर्यन्तं दक्षिणायनमिति । तत्र दक्षिणायनं मृतानां कर्मकृतां स्वर्गप्रापको मार्गः । उदगयनन्तु संन्यासिनां नैष्ठिकब्रह्मचारिणां वैखानसानाञ्च वनवासिनां ब्रह्मलोकप्राप्तिफलः क्रममुक्तये मार्गः । तदुक्तम्—

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥ इति ॥

ज्योतींषि नक्षत्रपर्यायाणि कालप्रविभागरूपाणि, नान्यत् तत्त्वमित्याह—

मात्राणां परिणामा ये कालवृत्त्यनुयायिनः ।
नक्षत्राख्या पृथक् तेषु चिह्नमात्रं तु तारकाः ॥४४॥

विशिष्टकालसम्बन्धवशेन ये भूतानां विशिष्टाः परिणामास्ते पृथक् पृथक् प्रविभक्ता कृत्तिकादिनक्षत्रसंज्ञाः प्रतिपद्यन्ते । तथा हि—चन्द्रमसा योगे पुष्यादीनां यो भावो जातः स तद्व्यपदेशं लभते, तिष्यः पुनर्वसुर्वा माणवक इति । अत एवात्र जातप्रत्ययस्यादर्शनमन्वाख्यायते । स्वाभाविकं ह्यर्थाभिधानं

---

अत्र प्रतिसंचारः प्रलयः । नक्षत्राणाञ्च नियता = नियतकाला गतिरुदयास्तमयरूपा कालमनुपतति = कालानुसारिणी । महाभूतानाञ्च = पृथिव्यादिभूतपञ्चकस्य च सर्गप्रलयकाले आविर्भावतिरोभावलक्षणौ जन्मविनाशौ कालाधीनाविति सर्वोपकारी कालो विश्वात्मेत्युच्यते ।

काल एव हि विश्वात्मा व्यापार इति कथ्यते । इति । (वा०प० ३, काल० १२) विश्वात्मा = विश्वस्यात्मवदन्तरवस्थितो नियन्ता इत्यर्थ इति ॥ ४३ ॥

ज्योतींषि = ज्योतिष्प्रधानानि अश्विन्यादिमण्डलानि नक्षत्रपर्यायाणि = नक्षत्रवाचकेन अश्विन्यादिपदेनापि बोध्यानि कालप्रविभागरूपाणि = अश्विन्यादिसंज्ञकं कालप्रविभागं रूपयन्ति = बोधयन्ति इति तथाविधानि, नान्यत् तत्त्वम् = मण्डलान्येवाश्विन्यादि पदवाच्यानि, कालप्रविभागस्तु अश्विन्यादिपदलक्ष्या इति तु न तत्त्वम्, इत्याह—मात्राणां परिणामा इति ।

अस्यार्थः --मात्राणाम् = भूतपञ्चकरूपाणां विषयाणाम्, मीयन्ते = प्रमीयन्ते इति मात्रा विषया इति व्युत्पत्तेः । मात्राणां ये परिणामा भौतिकाः, कालवृत्त्यनुयायिनः कालस्य वृत्ति भावपरिच्छेदाख्यामनुगताः, विशिष्टकालपरिच्छिन्ना इति यावत् । तेषु पृथग् नक्षत्राख्या = नक्षत्रशब्दो मुख्यः, अत्र पृथग्ग्रहणात् कालस्यापि नक्षत्राख्या = अद्याश्विनी, अद्य भरणी इत्यादिः । तारकास्तु = अश्विन्यादिमण्डलानि तु तेषां नक्षत्रसंज्ञकानां भावपरिणामानां चिह्नमात्रम् = स्वोदयास्तमयादिरूपैः क्रियाविशेषैर्लक्षणमात्रमिति मुख्यनक्षत्रपदार्थैर्भावपरिणामैः सह तारकाणां लक्ष्यलक्षणभावरूपसम्बन्धसत्त्वात् तारकासु नक्षत्रशब्दो लाक्षणिक इत्यवधेयमिति ।

अयमत्र निष्कर्षः —अद्य पुष्य इति व्यवहाराद् नक्षत्रशब्दः कालप्रविभागेषु मुख्यः । 'पुष्यो माणवकः' इति व्यवहारात् कालप्रविभक्ते भावेऽपि मुख्यः । मण्डलेषु नक्षत्राख्या तु लाक्षणिकी । चिह्नमात्रं तु तारका इत्युक्तेरिति ।

अयं भावः--विशिष्ट(विलक्षण)कालसम्बन्धवशेन विशिष्टाः = विलक्षणा ये भूतानां परिणामास्ते पृथक् पृथक् प्रविभक्ताः = पुष्यतिष्यादिका नक्षत्रसंज्ञाः प्रतिपद्यन्ते । तथा हि—पुष्यादीनां नक्षत्राणां चन्द्रमसा सह योगे यो भावो जातः

शब्दानां व्युत्पाद्यते। तेन विशिष्टकालोपजातः पदार्थः तिष्यादिव्यपदेश्य इति भावतो मात्रापरिणाम एव नक्षत्रोपाधिः कालः। पृथग्ग्रहणात् कालस्यापि नक्षत्रसमाख्या गम्यते कृत्तिकारोहिणीत्यादि। स हि कालभोगो भावेषूपाधिर्जनितक्रियामुखेन। तस्यैव तु ज्ञापकानि ज्योतींषि, न तु तावदेव नक्षत्रस्य रूपम्, चन्द्रमसा योगे तदुपपत्तेः॥ ४४॥

यथा च नियतकालविशेषो ज्योतीरूपैश्चिह्नैः कार्यभूतैर्ज्ञाप्यते, तथान्यैरपीत्याह—

**रुतैर्मृगशकुन्तानां स्थावराणां च वृत्तिभिः।**
**छायादिपरिणामैश्च ऋतुधामा निरूप्यते॥ ४५॥**

---

स तद्व्यपदेशम्=तिष्यपुष्यादिव्यपदेशं लभते। तिष्यः पुनर्वसुर्वा माणवक इति। अत एवात्र=तिष्यः पुष्यो माणवक इत्यादौ जातप्रत्ययस्य=जातार्थकप्रत्ययस्य अदर्शनम्=लोपम् अन्वाख्याय पुष्यादिशब्दानां तत्तदर्थाभिधानं व्युत्पाद्यते। तेन विशिष्टकालोपजातः पदार्थः तिष्यपुष्यादिव्यपदेश्य इति भावतः=वस्तुतः मात्रा परिणाम एव=भावपरिणाम एव नक्षत्रोपाधिः=विशिष्टकालप्रविभागरूपनक्षत्ररूपोपाधिपरिच्छिन्नः कालः=लक्षणया काल इति व्यपदेश्यः। कारिकायां पृथग्ग्रहणात् कालस्यापि नक्षत्रसमाख्या=अद्य कृत्तिका, अद्य रोहिणी इत्यादिः। स हि कालभागो भावेषूपाधिर्जनिक्रियामुखेन=स हि नक्षत्रसंज्ञकः कालभागस्तत्र जातेषु भावेषूपाधिः परिच्छेदको जनिक्रियामुखेन। तद्यथा—पुष्ये काले जातो भावः पुष्य इति। तस्यैव तु कालभागस्य स्वोदयादिक्रियाद्वारा ज्ञापकानि ज्योतींषि=ज्योतिर्मण्डलानि, न तु तावदेव=ज्योतिर्मण्डलमात्रमेव नक्षत्रस्य रूपम्, तस्य चन्द्रमसा योगे तदुपपत्तेः=नक्षत्रोपपत्तेरिति॥ ४४॥

यथा च नियतः कालविशेषो ज्योतीरूपैरश्विन्यादिभिर्नक्षत्रमण्डलैः=स्वकार्यभूतैर्लक्षणैः स्वोदयास्तमय एव गतिविशेषद्वारा ज्ञाप्यते, तथाऽन्यैरपि मृगशकुन्तरुतादिभिरित्याह—रुतैर्मृगशकुन्तानामिति।

अस्यार्थः—मृगशकुन्तानां रुतैः=मृगाणां जम्बूकादीनां शकुन्तानां च हंसपिकादीनां शब्दैः, स्थावराणाञ्च वृक्षलतादीनां वृत्तिभिः=नवनवपुष्पकिसलयोद्भेदादिरूपाभिः छायादिपरिणामैश्च=छायातपादिरूपैस्तमः सूर्यादीनां परिणामैश्च ऋतुधामा ऋतवो धाम स्थानं यस्यासौ ऋतुधामा=कालो निरूप्यते। तथा हि—जम्बुकरुतैर्विज्ञायते कियती रात्रिर्व्यतीतेति। गोमहिष्यादिरुतैर्विज्ञायते अस्या गर्भग्रहणकालः प्राप्त इति। हंसरुतैर्विज्ञायते संप्राप्ता शरदिति, पिकरुतैर्विज्ञायते संप्राप्तो वसन्त इति, मयूररुतैर्विज्ञायते संप्राप्ता प्रावृडिति, कुन्दलतया विकसितया विज्ञायते संप्राप्तः शिशिर इति, मालत्या विकसितया विज्ञायते संप्राप्तो वसन्त इति पादलग्नया निजच्छायया मध्याह्नकालो विज्ञायते, ललाटं तपेनातपेन ग्रीष्मो विज्ञायत इति।

ऋतवो धाम स्थानं यस्य तदात्मकत्वेन प्रतिभासात् कालाख्या हि स्वातन्त्र्यशक्तिर्ब्रह्मणो वसन्तादिभेदेन प्रविभक्ता चकास्ति। यथा चासौ नियत-ऋतुभेदः पुंस्कोकिलादिकूजितवशेन नवनवकिसलययोगेन सूर्यादिसञ्चारविशेषोपलक्ष्यमाणच्छायातपादिभेदेन लतावतानप्रसूनविशेषेण चावधार्यते। तथा हि—

"सुगन्धिकुसुमामोदमत्तषट्पदनिर्भरः।
पुंस्कोकिलरवाकीर्णवनोद्देशो विभाव्यते ॥

मधुर्मधुरझंकारसुखमारुतसङ्गमः।
प्रबोधितप्रियाबाहुमञ्जरीसक्तवल्लभः॥

मल्लिकामोदरुचिरो घर्मार्तगजकम्पितः।
प्रकम्पिपवनाशुष्कलताकुसुमसञ्चयः॥

शुष्यदास्यपिपासार्तप्राणिसङ्कुरगह्वरः।
प्रतप्तपांसुनिचयो ग्रीष्मः सोऽमा विभाव्यते ॥

प्रशान्तातपसञ्चारा नीरदाच्छादिताम्बराः।
जलाप्लावितभूभागाः सञ्चारविषमाः क्वचित् ॥

---

अयं भावः—ऋतवो धाम स्थानं यस्य स ऋतुधामा कालः तदात्मकत्वेन=ऋतुतादात्म्येन प्रतिभासात्। ब्रह्मणो हि कालाख्या स्वातन्त्र्यशक्तिर्वसन्तादिभेदेन प्रविभक्ता चकास्ति। यथा चासौ नियतऋतुविशेषः पुंस्कोकिलादिकूजितवशेन, तरूणां नवनवकिसलयोद्भेदेन सूर्यादिसंचारविशेषोपलक्ष्यमाणच्छायातपादिभेदेन लतावतानप्रसूनविशेषेण=लताया अवतानः=प्रतानस्तस्य प्रसूनविशेषेण चावधार्यते=अनुमीयते। तथा हि—

सुगन्धिकुसुमामोदमत्तषट्पदनिर्भरः। इत्यादि,
यामामितः स्फीततरुप्रकर्षः ॥ इत्यन्तः।

अस्य ऋतुवर्णनपरस्य पद्यदशकस्यायमर्थः। सुगन्धीनां कुसुमानामामोदेन मत्ता ये षट्पदा भ्रमरास्तैर्निर्भरः=पूर्णः। पुंस्कोकिलानां रवैराकीर्णो व्याप्तो वनोद्देशो=वनप्रदेशो यत्र स तथाभूतो मधु=वसन्तो विभाव्यते=अनुमीयते प्रेक्षकैः।

मधुरः झंकारो यस्य तादृशो यः सुखः=सुखकरो मारुतस्तस्य सङ्गो यत्र स तादृशः। पत्या प्रबोधितायाः प्रियाया बाहुमञ्जर्योः सक्तो वल्लभो यत्र स तादृशः।

मल्लिकायास्तदानीं विकसितायाः आमोदेन रुचिरः। घर्मार्तैः पथिकैराकुलः। प्रकम्पिभिः प्रकम्पयितृभिः पवनैराशुष्कः अतिशयेन शुष्को लतानां कुसुमानाञ्च सञ्चयः=समूहो यत्र शुष्यदास्यैः=शुष्यन्मुखैः पिपासार्तैः प्राणिभिः संकटः संकुलो

मयूरकेकारवपूरिताशा लतागृहन्तःस्थितकामिसङ्घाः।
उत्कण्ठितप्रोषितदत्तकम्पा वर्षा विभाव्यन्त इह क्रमेण ॥

हंसानां निनदेन पद्मनिचयैर्लाक्षाद्रवोद्भासिभि-
र्नैर्मल्येन दिशां विशुद्धधवलैरभ्रैर्नभोलाञ्छनैः।
शालीनां परिपाकशोभिवपुषा हृद्यैर्मृगाणां गतैः
संभाव्या शरदभ्रमुक्तविमलव्योमस्फुरत्तारका ॥

प्रसूनैस्तत्रत्यैर्दिशि दिशि चकासद्भिरमलै-
र्जडिम्ना सन्नाङ्गैः पशुभिरथ काकैर्वनगतैः।
निशानां विस्तारैरभिमततमैः कान्तमनसां
हिमैर्हेमन्ताख्यः समय इह लक्ष्यः स्फुटवपुः ॥

हिमप्रपातस्थगितोऽत्र मार्गो विशीर्णपर्णः शिशिरोऽपि लक्ष्यः।
शीतार्तसीदच्छकुनिप्रकाण्डो नीहारधारावृतभूमिपृष्ठः ॥

---

गह्वरो=गर्भगृहं यत्र। प्रतप्तः पांसुनिचयः=धूलीसमूहो यत्र एवंभूतः सोष्मा=ऊष्मणा सहितो ग्रीष्मर्तुर्विभाव्यते।

प्रशान्त आतपो जनसंचारश्च यासु तास्तादृश्यः। नीरदैराच्छादितमम्बरं गगनं यासु तास्तथाविधाः। जलैराप्लाविता अतिशयेन सिक्ता भूभागा यासु तास्तादृश्यः। क्वचित् संचारे=गमने विषमाः=अयोग्याः। मयूराणाम्=केकारवैः पूरिता आशा=दिशो यासु तास्तादृश्यः। लतागृहाणामन्तःस्थितः कामिसंघो यासु तास्तादृश्यः। उत्कण्ठितानां पत्नीम्=प्रियां पत्युत्सुकानां प्रोषितानां परदेशं गतानां दत्तः कम्पो याभिस्तास्तादृश्यः। इह क्रमेण वर्षा ऋतुरूपा विभाव्यन्ते।

हंसानां निनदेन, लाक्षाद्रववदुद्भासिभिः पद्मनिचयैः=रक्तकमलसमूहैः, दिशां मेघापगमान्नैर्मल्येन, विशुद्धधवलैः=सर्वथा धवलैः, नभोलाञ्छनैः नभसो भूषणभूतैः अभ्रैर्मेघैः, शालीनां व्रीहीणां परिपाकेण शोभिना वपुषा मृगाणां हृद्यैर्मनोहारिभिर्गतैर्गमनैः, अभ्रैर्मुक्ते अत एव विमले व्योम्नि स्फुरन्त्यस्तारका नक्षत्राणि यस्यां सा तादृशी शरदृतुः सम्भाव्या अस्ति।

दिशि दिशि चकासद्भिः=विकसद्भिः, अमलैस्तत्रत्यैः हेमन्तभवैः प्रसूनैः; जडिम्ना=जाड्येन, सन्नाङ्गैः पशुभिः=गोमहिष्यादिभिः, अथ वनगतैः काकैश्च जडिम्ना सन्नाङ्गैः, कान्तमनसाम्=कान्ते मनो यासां तासाम्, कान्तानुरक्तानां कान्तानाम्—अभिमततमैर्निशानां विस्तारैः, हिमैश्च हेमन्ताख्यः समयः स्फुटवपुः इह लक्ष्यः।

अत्र हेमन्ते, मार्गो हिमप्रपातेन स्थगितः=आच्छादितः, एतदनन्तरभावी शिशिरोऽपि विशीर्णपर्णः=विशीर्णानि पर्णानि यत्र तादृशः, लक्ष्यः। शीतार्तः, अत एव सीदन्तः शकुनयो यत्र तथाविधानि प्रकाण्डानि वृक्षाणां शाखा यत्र तादृशः।

प्रफुल्लकुन्दप्रकरप्रचारस्तुषारसङ्घातविभेददक्षः ।
वहत्यजस्रो शिशिरो नभस्वान् यत्राभितः स्फीततरुप्रकर्षः" ।। ४५ ।।

इदानीमद्वैतवादेऽपि कालोपयोगं भावानामाह–

निर्भासोपगमो योऽयं क्रमवानिव दृश्यते ।
अक्रमस्यापि विश्वस्य तत् कालस्य विचेष्टितम् ।।४६।।

सम्बन्धसमुद्देशे प्रदर्शितदिशाऽक्रमं ब्रह्मविवर्तरूपं विश्वम् । तस्य यदिदं क्रमेणावभासनम्, तत् कालशक्तिकृतप्रबन्धाभ्यनुज्ञासामर्थ्यम् । कालाख्या हि ब्रह्मशक्तिरविद्यैव क्रमावभासकारितया जीवात्मसु सफलेति ब्रह्मकाण्ड एव निर्णीतम् । एष तावत् प्रथमः कालव्यापारोऽत्र क्रमावभासः ।। ४६ ।।

---

नीहारधाराभिः=तुषारधाराभिः आवृतं भूमिपृष्ठं यत्र तादृशः ।

प्रफुल्लानां कुन्दानां कुन्दपुष्पाणां प्रकरेषु वृक्षात् पतितेषु समूहेषु प्रचारो जनसंचारो यत्र स तादृशः, एतदन्तं शिशिर-ऋतुविशेषणम् । तुषारसंघातस्य= घनीभूतस्य विभेदे दक्षः, इदं तत्रत्यवायुविशेषणम् । एवंभूतः शिशिरो नभस्वान् वायुः अजस्रं वहति । यत्र वायौ वाति सति, अभितः=सर्वतः स्फीतानां प्रवृद्धानां तरूणां प्रकर्ष औन्नत्यं परिणाहश्च लक्ष्यते, आवरकाणां पुराणपत्राणां प्रपतनादिति ।।४५।।

इदानीमद्वैतवादेऽपि भावानां कालोपयोगमाह—निर्भासोपगम इति ।

अस्यार्थः —ब्रह्मविवर्तरूपतयाऽक्रमस्यापि विश्वस्य योऽयं क्रमवानिव निर्भासोपगमः —निर्भासस्य=ज्ञानस्य, उपगमः=गोचरत्वप्राप्तिः, दृश्यते=अनुभूयते । लम्बकस्तूपकादिक्रमेण घटो जायत इति तत्कालस्य विचेष्टितम् । कालाख्यायाः= ब्रह्मशक्तेरविद्यायाः विलास इति ।

अयं भावः—सम्बन्धसमुद्देशे प्रदर्शितदिशाऽक्रमम्=ब्रह्मविवर्तरूपं विश्वम् । विवर्तो हि प्रतिभासमात्रशरीरत्वादक्रमः । तस्य=अक्रमस्य विश्वस्य यदिदं क्रमेणावभासनम्=अंकुरो नालं काण्डमिति, तत्कालस्य विचेष्टितम्=कालशक्तिकृतप्रतिबन्धाभ्यनुज्ञासामर्थ्यम्=कालरूपया ब्रह्मणः शक्त्या कृते ये कार्याणां प्रतिबन्धाभ्यनुज्ञे तयोः सामर्थ्यम् । कालाख्या हि ब्रह्मणः शक्तिरविद्यैव वस्तूनां क्रमावभासकारितया जीवेषु सफलेति ब्रह्मकाण्ड एव निर्णीतम् ।

अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराः षड् भावभेदस्य योनयः ।। इति ।।

(वा० प०, ब्रह्म० ३)

एष तावत् प्रथमः कालव्यापारोऽत्र निरूपितो विश्वस्य क्रमावभास इति ।। ४६ ।।

तदनन्तरोऽपि कालभेद औपाधिक इत्याह—

दूरान्तिकव्यवस्थानमध्वाधिकरणं यथा ।
चिरक्षिप्रव्यवस्थानं कालाधिकरणं तथा ॥ ४७ ॥

दूरोऽयमध्वा निकटोऽयमिति कर्तृगतिभेदेनाध्वनि व्यवस्था, न तु मार्गभेदोऽत्र कश्चित् । य एव हि मन्दगतीनां दूरः, स एव चतुरचेष्टानामासन्नोऽध्वा । एवं स्थायिन्यपि काले प्रचितसन्तानक्रियोपाधिः चिरमिति व्यवस्थानम् । अपचितसन्तानक्रियोपाधिः क्षिप्रमिति ॥ ४७ ॥

इदानीं पूर्वोक्तोऽपि भूतादिभेदः कालस्य क्रियोपाधिः, विशेषमत्र वक्तुं पुनः प्रतिपाद्यते—

तस्याभिन्नस्य कालस्य व्यवहारे क्रियाकृताः ।
भेदा इव त्रयः सिद्धा याँल्लोको नातिवर्तते ॥ ४८ ॥

अभिन्नेन कालेन व्यवहर्तुमशक्यत्वाल्लोके त्रयो भेदा इव, परमार्थत

---

क्रमावभासानन्तरकालिकोऽपि चिरक्षिप्रादिकः कालभेद औपाधिकः=यथायथं प्रचितापचितसन्तानकक्रियोपाधिक इत्याह— **दूरान्तिकव्यवस्थानमिति ।**

अस्यार्थः—यथा दूरान्तिकव्यवस्थानम्—'अयमध्वा अस्य दूरोऽयमध्वाऽस्यान्तिकः' इति कर्तृगतिभेदेनाध्वाधिकरणा व्यवस्था एकस्मिन्नेवाध्वनि क्रियते, एकस्याप्यध्वनः कर्तृगतिभेदेन भिन्नत्वात् । यो हि अध्वा अजङ्घालस्य दूरः स एव हि जङ्घालस्यान्तिक इत्यनुभवात् । एवञ्च कर्तृगत्युपाधिकोऽत्रैकस्याप्यध्वनो भेद इति दृष्टान्ते आयातम् । तथा चिरक्षिप्रव्यवस्थानम्—'इदं चिरेण कृतम्, इदं क्षिप्रं कृतम्' इति वस्तुत एकस्मिन्नपि काले चिरक्षिप्ररूपभेदव्यवस्था, कालाधिकरणम्=एकस्मिन्नपि काले यथायथं प्रचितापचितासन्तानकक्रियोपाधिकमिति ।

अयं भावः—'दूरोऽयमध्वा, निकटोऽयमध्वा' इत्येकस्मिन्नेवाध्वनि कर्तृगतिभेदेन भेदव्यवस्था, न तु प्रकृते दृष्टान्ते मार्गभेदोऽत्र कश्चित् । य एव हि मन्दगतीनां शिशुवृद्धादीनां दूरः, स एवाध्वा चतुरचेष्टानाम्=चातुर्येण चलताम् आसन्नः=सन्निकटः ।

एवं स्थायिन्यभिन्नेऽपि काले प्रचितसन्तानकक्रियोपाधिकं चिरमिति व्यवस्थानम् । अपचितसन्तानकक्रियोपाधिकं क्षिप्रमिति व्यवस्थानम् । एवञ्च यथा दृष्टान्ते गन्तृगतिभेदोपाधिकोऽध्वभेद एकस्यापि, एवं दार्ष्टान्तिके क्रियाभेदोपाधिक एकस्यापि कालस्य भेद इति ॥४७॥

इदानीं पूर्वोक्तोऽपि कालस्य क्रियोपाधिको भूतादिभेदस्तद्गतविशेषं वक्तुमत्र पुनः प्रतिपाद्यते—**तस्याभिन्नस्येति ।**

अस्यार्थः—अभिन्नेन कालेन व्यवहर्तुमशक्यत्वात् तस्य=प्रागुपवर्णितस्य

एकत्वात्, क्रियोपाधयः प्रसिद्धाः, तस्य भूतभविष्यद्वर्तमानाख्याः। क्रियाव्युपरमे भूतः, सम्भावितायां क्रियायां भविष्यत्, क्षणप्रवाहरूपेण प्रवर्तमानायां तस्यां वर्तमानो मुख्य एवायम् ॥ ४८ ॥

कथमस्य भेदो न भवतीत्याह—

एकस्य शक्तयस्तिस्रः कालस्य समवस्थिताः।
यत्सम्बन्धेन भावानां दर्शनादर्शने सताम् ॥ ४९ ॥

कार्यभेदे कारणभेदानुमानम्, शक्तिभेदादेव च कार्यभेदोपपत्तेः। कालाख्यस्य जगत्कारणस्य मुख्यो भेदो नास्ति।

---

कालस्य वस्तुतोऽभिन्नस्यापि व्यवहारदशायां तत्तत्क्रियाकृताः=तत्तत्क्रियोपाधिकाः त्रयो भेदा इव, वस्तुतः कालस्यैकत्वात्, भूतभविष्यद्वर्तमानाख्याः सिद्धाः, यान् त्रीन् कालभेदान् लोको नातिवर्तते, चतुर्थस्य कालभेदस्यासत्त्वादिति।

अयं भावः—अभिन्नेन कालेन व्यवहर्तुमशक्यत्वाद् लोकव्यवहारे तस्य कालस्य भूतभविष्यद्वर्तमानाख्यास्त्रयो भेदा इव, वस्तुतः कालस्यैकत्वात्। क्रियाकृताः=क्रियोपाधिकाः प्रसिद्धाः।

तथा हि—अवान्तरक्रियाप्रवाहरूपायाः क्रियाया व्युपरमे भूतः काल इति व्यवहारः, तादृश्यां क्रियायां सम्भावितायां भविष्यन्निति व्यवहारः सम्भावितोत्पत्तिकक्रियोपाधिकः। क्षणप्रवाहरूपेण=क्षणिकावान्तरक्रियाप्रवाहरूपेण प्रवर्तमानायां तस्याम्=क्रियायां वर्तमान इति व्यवहारः। मुख्य एवायम्=तत्तत्क्रियोपाधिककालभेदविषयकोऽपि लोकव्यवहारे मुख्य एवायं भूतादिव्यवहारः, अहं स्थूलः, अहं कृश इत्यादिदेहात्मव्यवहारवदबाधितत्वादिति ॥४८॥

अस्य कालस्य भूतादिभेदः परमार्थः कथं न भवतीत्याशङ्क्याह—**एकस्य शक्तय इति।**

अस्यार्थः—परब्रह्मरूपस्यैकस्य कालस्य भूतभविष्यद्वर्तमानाख्यास्तिस्रः शक्तयः समवस्थिताः। 'पराऽस्य शक्तिर्विविधैव श्रूयते' इति श्रुतेः। यत्सम्बन्धेन=यासां भूतादिरूपाणां तिसृणां कालशक्तीनां सम्बन्धेन सत्कार्यनये सर्वदा सतामपि भावानां दर्शनादर्शने भवतः।

तथा हि—भूतभविष्यद्रूपकालशक्तिसम्बन्धे भावानामदर्शनम्। वर्तमानाख्यकालशक्तिसम्बन्धेन तु तेषां दर्शनमिति।

अयं भावः—कार्यभेदे सति कारणभेदानुमानम्, कार्यभेदस्य चोपपत्तिः कालगतशक्तिभेदादेव सम्भवतीति कालाख्यस्य जगत्कारणस्य परब्रह्मरूपतया एकस्य मुख्यो भेदो नास्ति।

तथा हि–वर्तमानशक्तिसम्बन्धेन भावानां सतामेवाभिव्यक्तिर्जन्म। अतीतानागतकालशक्तिसम्बन्धेन तु सतामेव तिरोभावोऽदर्शनमनभिव्यक्तिर्विनाशः प्राक्प्रध्वंसाभावरूप इति शक्तिभेदात् कार्यभेदोपपत्तौ कालभेदकल्पना निर्निमित्ता ॥ ४९ ॥

दर्शनादर्शने एव शक्तिप्रविभागेन विभजति—

द्वाभ्यां स किल शक्तिभ्यां भावानां वरणात्मकः।
शक्तिस्तु वर्तमानाख्या भावरूपप्रकाशिनी ॥ ५० ॥

अतीतानागतशक्तिभ्यां वरणं तिरोधापनं भावानां सतां कालः करोति। वर्तमानशक्त्या दर्शनं भावरूपप्रकाशनम् ॥ ५० ॥

ननु यथानागतशक्तिकृतावरणानां पुनरभिव्यक्तिर्वर्तमानशक्तिसम्बन्धो दृश्यते, तथातीतशक्तिकृतावरणानामपि कथं न भवतीत्याशङ्क्याह –

अनागता जन्मशक्तेः शक्तिरप्रतिबन्धिका।
अतीताख्या तु या शक्तिस्तया जन्म विरुध्यते ॥ ५१ ॥

---

तथा हि—वर्तमानाख्यकालशक्तिसम्बन्धेनोपादानकारणे सतामेव भावानामभिव्यक्तिर्जन्म। सतामेव तु भावानामतीतानागतकालशक्तिसम्बन्धेन तिरोभावोऽदर्शनमनभिव्यक्तिर्विनाशः प्रागभावः प्रध्वंसाभावरूप इत्येवं कालशक्तिभेदादेव कार्यभेदोपपत्तौ कालभेदकल्पना निर्निमित्ता। 'कालोऽस्मि लोकक्षयकृत्प्रवृद्धः' (गीता०) इत्यादिशास्त्रेषु श्रुतस्य युक्तस्य च कालैकत्वस्य बाधानौचित्यात्। 'गुणे त्वन्याय्यकल्पना' इति न्यायेन काले काले गुणीभूतायां तच्छक्तावेव भेदकल्पनाया औचित्यादिति ॥४९॥

भूतभविष्यद्वर्तमानाख्यकालशक्तिकृते दर्शनादर्शन एव शक्तिप्रविभागेण विभजति=विभज्य दर्शयति—**द्वाभ्यां स किलेति**।

अस्यार्थः —स कालो द्वाभ्यां भूतभविष्यदाख्याभ्यां स्वशक्तिभ्यां भावानां वरणात्मकः=आच्छादनात्मकः, तिरोधायकः किल, अत्र किलशब्दः प्रसिद्धौ। या तु वर्तमानाख्या कालस्य शक्तिः स भावरूपप्रकाशिनी=तिरोहितस्य भावस्य यद्रूपं तस्य प्रकाशिनी=प्रकाशिकेति।

अयं भावः —काल उपादानकारणे सदासतामेव भावानामतीतानागतशक्तिभ्यां वरणं तिरोधापनं करोति। वर्तमानशक्त्या स भावानां सतामेव दर्शनं रूपप्रकाशनं करोतीति ॥५०॥

ननु यथाऽनागतशक्तिकृतावरणानां भावानां वर्तमानशक्तिसम्बन्धे पुनरभिव्यक्तिर्दृश्यते, तथाऽतीतशक्तिकृतावरणानामपि भावानां वर्तमानशक्तिसम्बन्धे पुनरभिव्यक्तिः कथं न भवतीत्याशङ्क्याह—**अनागता जन्मशक्तेरिति**।

जन्मसहचरिताया वर्तमानशक्तेरनागतशक्तिरविरोधिनी प्रतिबन्धं न करोत्युदये। स्वकाले हि तया सा प्रतिबद्धा। समर्थहेतुसम्पाते तु वर्तमानशक्ते-रुदयानुकूल्यमनागतशक्तिर्भजते। यस्य हि कालान्तरे वर्तमानता, स एवानागतः कथ्यते। अतीतशक्त्या तु जन्मशक्तिर्वर्तमानाख्या विरुध्यत एव। न हि मृतस्य पुनर्जन्मेति नातीतेऽध्वनि पतितमाविर्भवति वस्तु॥ ५१॥

ननु च शक्तिमदाश्रिताः शक्तयः शक्तिमानिव सदा सन्निहिता इति सदैव तद्योगे भावानां युगपद् विरुद्धरूपदर्शनादर्शनप्रसङ्ग इत्याशङ्क्याह—

**तमःप्रकाशवत् त्वेते त्रयोऽध्वानो व्यवस्थिताः।**
**अक्रमास्तेषु भावानां क्रमः समुपलभ्यते॥ ५२॥**

---

अस्यार्थः—अनागता भविष्यदाख्या शक्तिर्जन्मशक्तेर्जन्मसहचरिताया वर्तमानशक्तेरप्रतिबन्धिका। अनागता शक्तिर्हि स्वकाले वर्तमानशक्तेः प्रतिबन्धिका। जन्मकाले तु वर्तमानशक्तेरानुकूल्यं भजते, अनागतशक्तिरनागतस्यैवाग्रे वर्तमानत्वात्। अतीताख्या तु या कालस्य शक्तिस्तया जन्म विरुध्यते। अतीते हि मृतस्य पुनर्जन्मासम्भवादिति।

अयं भावः—अनागता शक्तिर्जन्मसहचरिता या वर्तमानशक्तेरविरोधिनी अतो भावस्योदये वर्तमानशक्तेः प्रतिबन्धं न करोति। स्वकाले हि तया=अनागतशक्त्या सा=वर्तमानशक्तिः प्रतिवद्धा। कार्यसमर्थहेतुसम्पाते त्वनागतशक्तिर्वर्तमानशक्तेरुदयानुकूल्यं भजते। यस्य हि कालान्तरे=भाविनि काले वर्तमानता स एव भावः पूर्वकालेऽनागत इत्युच्यते। अतीतशक्त्या सह तु जन्मशक्तिर्वर्तमानाख्या विरुध्यत एव। न हि मृतस्य=अतीतस्य पुनर्जन्मेति नातीतेऽध्वनि पतितं वस्त्वाविर्भवतीति॥५१॥

ननु च शक्तयः शक्तिमदाश्रिता इति शक्तिमान् काल इव ता अप्याश्रयनित्यत्वाद् नित्या इति सदा सन्निहिता इति सदैव भावानां भूतादिरूपकालशक्तित्रययोगे भावानां युगपद् विरुद्धरूपदर्शनादर्शनप्रसङ्ग इत्याशङ्क्याह—**तमःप्रकाशवदिति।**

अस्यार्थः—एते तु त्रयोऽध्वानो भूतभविष्यद्वर्तमानाख्याः। आसां कालशक्तीनामध्वत्वारोपरूपो व्यवहारस्तु गतागताधारत्वसाम्यात्। तथा हि—यथा गन्तारोऽध्वसु गतागतं कुर्वन्ति तथा भावाः परिणाममनुभवन्तो भूतादिषु कालशक्तिषु गतागतं कुर्वन्तीति। तमः प्रकाशवद् व्यवस्थिताः। तत्र अतीतानागतरूपे कालशक्ती तमोरूपे, भावानामदर्शनहेतुत्वेन वरणरूपत्वसाम्यात्। वर्तमानाख्या तु कालशक्तिः प्रकाशरूपा, भावानां दर्शनहेतुत्वात्। यद्यप्येते त्रयोऽप्यध्वानः कालशक्तिरूपा आश्रयनित्यत्वेन नित्या इत्यक्रमास्तथाप्येतच्छक्तिमाहात्म्यादेतेषु भावानां क्रमः समुपलभ्यत इति।

भूतभविष्यद्वर्तमानाख्यास्त्रयः कालविभागा अध्वान इवाध्वानः। यथा ह्यध्वसु गन्तारो गमनागमनादिप्रबन्धं वर्तयन्ति, तथैतेषु भावाः परिणाममनुभवन्तो गतागतप्रबन्धमुपरचयन्ति। भविष्यदध्वनि य एव स्थितः स एव वर्तमानाध्वनि पतित्वाऽतीतेऽध्वनि पुनः पतति। तथा च त्रैयध्विकाः पदार्थाः परिणामवादिभिरभ्युपगम्यन्ते। यदुक्तं पातञ्जले 'धर्मास्त्र्यध्वान' (योग-द० ३।१३) इति।

यद्यपि चैते त्रयः शक्तिविशेषाः कालात्मन्यक्रमा एवावस्थिताः, तथापि तमःप्रकाशरूपत्वादाधेयेषु भावेषु प्रवृत्तिं वर्तयन्तो दर्शनादर्शनाभ्यां सदसद्रूपोपकल्पनया पौर्वापर्यं विदधति। तद्यथा त्रयः सत्त्वरजस्तमोलक्षणगुणा नित्यत्वाद् युगपदवस्थाना अपि अङ्गाङ्गिभावोपगमनेन यथायथं स्ववृत्त्युल्लासे विचित्रपरिणामाद् भावानुपरचयन्ति, तथेमे कालभेदाः स्वशक्तिमाहात्म्याद् भावभेदेषु क्रमोपरचनचतुरा इत्यर्थः॥ ५२॥

---

अयं भावः—भूतभविष्यद्वर्तमानाख्यास्त्रयः कालविभागा अध्वान इवाध्वानः। तथा हि—यथा गन्तारोऽध्वसु गमनागमनादिप्रबन्धम्=सातत्यं वर्तयन्ति, तथैतेषु=भूतादिषु भावाः परिणाममनुभवन्तो गतागतप्रबन्धमुपरचयन्ति।

तथा हि—य एव पदार्थो भविष्यदध्वनि स्थितोऽनागत इति स एव वर्तमानाध्वनि पतित्वाऽतीतेऽध्वनि पुनः पतति। तथा च त्रैयध्विकाः=त्रिषु अध्वसु भवाः 'कालाट्ठञ्', पदार्थाः परिणामवादिभिः=सांख्यैर्योगैश्चाभ्युपगम्यन्ते। यदुक्तं पातञ्जले—"धर्मास्त्र्यध्वानः" इति।

अस्यार्थः—उपादानकारणस्य धर्मभूताः कार्यभावास्त्र्यध्वानो भूतभविष्यद्वर्तमानाख्यत्र्यध्वगता इति। यद्यपि चैते त्रयः शक्तिविशेषा भूतभविष्यद्वर्तमानाख्या आश्रयनित्यत्वेन नित्यत्वाद् अक्रमा एव=पौर्वापर्यरूपक्रमरहिता एव कालात्मन्यवस्थिताः, तथापि तमःप्रकाशरूपत्वात् स्वाधेयेषु भावेषु प्रवृत्तिं=स्वव्यापारं वर्तयन्तो यथायथं दर्शनादर्शनाभ्यां भावेषु सदसद्रूपोपकल्पनया पौर्यापर्यं विदधति। तद्यथा सत्त्वरजस्तमोलक्षणास्त्रयो गुणा नित्यत्वाद् युगपदवस्थितिका अपि अङ्गाङ्गिभावोपगमनेन यथायथं स्वस्ववृत्त्युल्लासे विजातीयविचित्रपरिणामाद् भावानुपरचयन्ति, तथेमे कालभेदा भूतादयः स्वशक्तिमाहात्म्याद् भावभेदेषु क्रमोपरचने दक्षा इति।

तथा चायमत्र निष्कर्षः—यद्यपि भूतादिकास्तिस्रोऽपि कालशक्तय आश्रयनित्यत्वेन नित्या इति अक्रमास्तथापि विचित्रभोगप्रदविचित्रादृष्टवशाद् भावविषयको व्यापार आसां कादाचित्क इति क्रमेण भावानां दर्शनादर्शने कुर्वन्त्यस्तेषु पौर्वापर्यरूपं क्रमं विदधतीति॥५२॥

तमःप्रकाशरूपत्वमेव विभजति—

द्वौ तु तत्र तमोरूपावेकस्यालोकवत् स्थितिः।
अतीतमपि केषाञ्चित् पुनर्विपरिवर्तते ॥ ५३ ॥

अतीतानागतावध्वानौ भावावरणहेतुत्वात् तमःस्वभावौ। आवरणं हि तमोधर्मः। 'गुरुवरणकमेव तमः' (सां० का०) इत्युक्तम्। वर्तमानोऽध्वा प्रकाशतुल्यः सत्त्वसदृशः। 'सत्त्वं लघुप्रकाशकमिष्टम्' (सां का० १३) इति। रजस्तु प्रवृत्तिसामान्यं कालस्वरूपं सर्वत्रान्वयि। प्रतिबन्धाभ्यनुज्ञाभ्यां प्रवर्तकं प्रेरणानुरूपं रजः कालात्मकमेव। त्रैगुण्यपरिणामात्मकत्वञ्च ब्रह्मदर्शनेऽपि कालस्योपपन्नमेव शक्तिरूपस्यापि। ज्ञानक्रियाशक्तिभिर्जीवात्मनि गुणत्रयम्। तत्रैव च कालशक्तिस्तद्रूपातीतशक्तिर्जन्मशक्तेः प्रतिबन्धिकेति पूर्वमुक्तम्।

केचित् तु मन्यन्ते—'अतीताध्ववर्तिनोऽपि पुनः कालान्तरे जगत्परावर्तेषु-

---

भूतादिकानां तिसृणां कालशक्तीनां तमःप्रकाशरूपत्वमेव विभजति = विभज्य दर्शयति—**द्वौ तु तत्रेति**।

अस्यार्थः—तत्र तेषु = भूतभविष्यद्वर्तमानेषु कालभेदेषु, द्वौ अतीतानागतावध्वानौ तु भावानामावरणहेतुत्वात् तमोरूपौ = तमःस्वभावौ। एकस्य वर्तमानस्य कालभेदस्यालोकवत् स्थितिः, भावानां प्रकाशकत्वात्। केषाञ्चिन्मते त्वतीतमपि वस्तु अनागतवत् पुनर्विपरिवर्तते पुनरपि वर्तमानतामापद्यते, भावानामात्यन्तिकविनाशाभावादिति।

अयं भावः—अतीतानागतावध्वानौ = कालभेदौ भावावरणहेतुत्वात् तमःस्वभावौ। आवरणं हि तमोगुणस्य धर्मः। 'गुरुवरणकमेव तमः' इत्युक्तं सांख्यकारिकायाम्। वर्तमानोऽध्वा कालभेदः प्रकाशतुल्यः सत्त्वगुणसदृशः = सत्त्वगुणानुरूपः। 'सत्त्वं लघुप्रकाशकमिष्टम्' इति सांख्यकारिकोक्तेः। रजोगुणस्तु प्रवृत्तिसामान्यरूपः कालस्वरूपः सर्वत्रान्वयी। सर्वेषु कालभेदेषु भूतादिभेदभिन्नेषु अन्वयी।

तदेवं तमोऽतीतानागतान्वयि, सत्त्वं वर्तमानान्वयि, रजस्तु भूतादिकालत्रयान्वयि इत्यायातम्। कार्याणां प्रतिबन्धाभ्यनुज्ञाभ्यां प्रवर्तकं प्रेरणानुरूपं रजः कालात्मकमेव। तत्पूर्वदर्शनेऽपि शक्तिरूपस्यापि कालस्य त्रैगुण्यम् = सत्त्वरजस्तमोरूपगुणत्रयात्मकत्वं भूतभविष्यद्वर्तमानरूपाः परिणामाश्चोपपन्नमेव। जीवात्मन्यपि ज्ञानक्रियामोहशक्तिभिर्गुणत्रयं कल्प्यते। तत्र ज्ञानं सत्त्वस्य परिणामः, क्रिया रजसः, मोहस्तमस इति। कालशक्तिस्तद्रूपातीतशक्तिस्तत्रैव च = जीवात्मन्येव च जन्मशक्तेः प्रतिबन्धिकेति पूर्वमुक्तम्।

केचित्तु मन्यन्ते—अतीताध्ववर्तिनोऽपि भावाः कालान्तरे जगत्परावर्तेषु = जगत्सर्गेषु पुनरुद्भवन्ति। कृतपरिनिष्ठिताः = पूर्वं कृताः पश्चात् परिनिष्ठिताः

द्भवन्ति। कृतपरिनिष्ठिता हि भावाः प्रधानप्रसेवकान्तर्गता यथाकालमुद्दर्शयन्त्यात्मानम्, पुनः प्रलये तत्रैव तिरोभवन्ति' इति। पञ्चाधिकरणदर्शनस्थानां सांख्यानामयमागमः।

इत्थं चात्र दर्शने सुतरां त्रैयध्विकत्वमुपपद्यते, सर्वेषामपि त्रिष्वप्यध्वसु सञ्चारात्। प्रबन्धप्रवृत्ते जगति पूर्वमतीतानां वर्तमानता नास्ति। जगत्परिवर्तेऽपि न तदेवावर्तते; अपि तु तत्सदृशमित्यतीतशक्तेर्वर्तमानशक्तिविरोधः पूर्वमुक्तः। इह तु 'नाभावो विद्यते सतः' (गीता–२।१६) इति तिरोभूतं पुनस्तदेवावर्तत इति दर्शनात् कथ्यते। तदेवं धर्मधर्मिणोः कथञ्चिद् व्यतिरेकमभ्युपगम्य स्थायी धर्मी वर्तमानो, धर्मास्तु त्र्यध्वान इतीदं दर्शनमुक्तम् ॥ ५३ ॥

इदानीं धर्मधर्मिणोरव्यतिरेकं भाविकमाश्रित्य धर्मिणो युगपदपि व्यपदेशत्रयं धर्मद्वारकं प्रवर्तत इति महाभाष्यमतमाह—

> युगपद् वर्तमानत्वं तद्धर्मा प्रतिपद्यते।
> केषाञ्चिद् वर्तमानत्वाच्चैति तद्वदतीतताम् ॥ ५४ ॥

---

समाप्ता अतीता हि भावाः प्रधानप्रसेवकान्तर्गताः=प्रधानस्य प्रकृष्टः प्रसेवको यः कालस्तदन्तर्गताः, यथाकालमात्मानं दर्शयन्ति, पुनः प्रलये=विनाशे तत्रैव=प्रधानप्रसेवके काल एव तिरोभवन्तीति। पञ्चाधिकरणदर्शनस्थानाम्=प्रकृतिः, महत्तत्त्वम्, अहङ्कारः, तन्मात्राणि, तन्मात्रपदेन तत्कार्याणि भूतभौतिकानि अपि परिगृह्यन्तेऽत्र। पुरुष इति पञ्च विचारस्य अधिकरणानि यत्र दर्शने तस्मिन् स्थितानां सांख्यानामयमभ्युपगमः।

इत्थं चात्र सांख्यदर्शने भावानां सुतरां त्रैयध्विकत्वमुपपद्यते। सर्वेषामपि भावानां त्रिष्वप्यध्वसु सञ्चारात्। प्रबन्धेन=अविच्छेदेन प्रवृत्ते जगति पूर्वमतीतानां भावानां वर्तमानता नास्ति। जगत्परिवर्तेऽपि=प्रलयानन्तरं जगतः सर्गेऽपि न तदेव=अतीतमेव आवर्तते=पुनर्जायते, अपि तु तत्सदृशम्=अतीतसदृशम् इति मत्वाऽतीतशक्तेर्वर्तमानशक्तिविरोधः पूर्वमुक्तः। इह तु=अतीतमिति केषाञ्चिदित्यत्र तु "नाभावो विद्यते सतः' इति सिद्धान्ते तिरोभूतं पुनस्तदेवावर्तत इति दर्शनात् कथ्यते।

तदेवं धर्मधर्मिणोः कथञ्चित् कल्पितं व्यतिरेकमभ्युपगम्य स्थायी धर्मी घटादिर्वर्तमानः, धर्माः कम्बुग्रीवादयः पृथुबुध्नोदरत्वादयश्च त्र्यध्वानः=भूताद्यध्वत्रयगता इतीदं सांख्यदर्शनमुक्तमिति ॥५३॥

इदानीं धर्मधर्मिणोरव्यतिरेकम्=अभेदं भाविकम्=स्वाभाविकं वास्तविकम् आश्रित्य धर्मिणो युगपदपि भूतादिरूपतया व्यपदेशत्रयं धर्मद्वारकं प्रवर्तत इति महाभाष्यमतमाह—**युगपद् वर्तमानत्वमिति**।

ते अतीतवर्तमानानागतरूपा धर्मा यस्यासौ तद्धर्मा धर्मी युगपदेकवारमेव वर्तमानत्वं साम्प्रतिकत्वं प्रतिपद्यते। धर्मस्य वर्तमानत्वात् तद्व्यतिरिक्तो धर्मी तथा वर्तमानत्वाच्चानन्तरामप्यतीततां तद्वद् वर्तमानत्ववदेति युगपदेवातीतता-मप्यासादयति। कस्यचिद् धर्मस्यातीतत्वात् तद्व्यतिरिक्तो धर्मीत्यर्थः।

एवं कस्यचिद् धर्मस्यानागतत्वादनागतताम्प्येति। तदेवं धर्मी स्थायी भावतः सदैव वर्तमानोऽपि धर्मत्रैविध्यात् सकृदपि त्र्यध्वा व्यवह्रियते। अव्यतिरि-क्ताश्च सन्निवेशवद् धर्मा इत्यन्यत्र स्थापितम् ॥ ५४ ॥

नन्वतीतवर्तमानयोर्विरोधात् कथमेकत्र समावेश इत्याशङ्क्याह—

हेतूपकारादाक्षिप्तो वर्तमानत्वमागतः।
शान्तहेतूपकारः स पुनर्नोपैति दर्शनम् ॥ ५५ ॥

---

अस्यार्थः—ते = अतीतानागतवर्तमानरूपा घटत्वादयो धर्माः = कम्बु-ग्रीवादयः, पृथुबुध्नोदरत्वादयश्च यस्यासौ तद्धर्मा, तद्धर्मा, धर्मी = घटादिः सत्कार्यवादे सद्रूपतया सदा वर्तमानत्वेऽपि धर्मद्वारकं युगपदेकवारमपि वर्तमानत्वं प्रतिपद्यते, केषाञ्चित् स्वधर्माणां वर्तमानत्वात्। तथा = तद्वत् वर्तमानत्ववद् अतीततान्च एति, केषाञ्चित् स्वधर्माणामतीतत्वात्। एवं कस्यचित् स्वधर्मस्यानागतत्वादना-गतत्वमप्येति। स्वाभाविकं तु तस्य सदा वर्तमानत्वमेवेति।

अयं भावः—ते अतीतवर्तमानानागतरूपा धर्मा यस्यासौ तद्धर्मा, धर्मी = स्वभावतः सद्रूपतया सदा वर्तमानत्वेऽपि युगपदेकवारमेव = अपि साम्प्रतिकत्वं प्रतिपद्यते, स्वधर्मस्य वर्तमानत्वात् = साम्प्रतिकत्वात् तद्व्यतिरिक्तः = धर्माभिन्नो धर्मी। तथा वर्तमानत्वाच्चानन्तरावपि पूर्वपरावव्यवहितावपि धर्मौ अतीतानाग-ताख्यौ एति अतीततां, तद्वद् वर्तमानत्ववदेति, युगपदेवातीततामप्यासादयति, कस्यचिद् धर्मस्यातीतत्वात् तदव्यतिरिक्तः = तदभिन्नो धर्मीत्यर्थः।

एवं कस्यचिद् धर्मस्यानागतत्वादनागतताम्प्येति। तदेवं धर्मी स्थायी, न तु भूतादिरूपतया कादाचित्कः, भावतः = स्वभावतः सदैव वर्तमानोऽपि स्वधर्माणां भूतादिभेदैस्त्रैविध्यात् सकृत्सकृदपि भूतादिभेदैस्त्र्यध्वा व्यवह्रियते। धर्माश्च घटत्व-पटत्वादयो धर्मिभ्यो = घटपटादिभ्योऽव्यतिरिक्ताः सन्निवेशात् = कम्बुग्रीवादिरूप-घटाद्याकृतिवद् आतानवितानादिरूपपटाद्याकृतिवच्च इत्यन्यत्र व्यवस्थापित-मिति ॥ ५४ ॥

नन्वतीतत्ववर्तमानत्वयोर्विरोधात् कथमेकत्र समावेश इत्याशङ्क्याह—**हेतूपकारादिति।**

अस्यार्थः—हेतूपकारादाक्षिप्तो हेतुभिः कृतादुपकारादाक्षिप्तो = दर्शनपथं प्रापितो धर्मी वर्तमानत्वमागतः। स एव धर्मी शान्तहेतूपकारः = उपरतकरण-

यदा संरब्धा हेतवः कार्योपकारमारभन्ते, तदा तत्सामर्थ्याज्जायमानो भावो दर्शनपथमवतरन्नर्थक्रियाः सम्पादयन् वर्तमान इति व्यपदिश्यते। उपरतकरणव्यापारस्तु परिसमाप्तकरणीयोऽदर्शनमनुपतन्नतीतः। यदा तु हेतवो नोपकाराय संरब्धास्तदानागतः। इत्येकस्यापि परोपाधिप्रकल्पितो व्यपदेशभेदोऽविरुद्ध इत्यर्थक्रियासदसत्त्वनिमित्तो व्यपदेशः।

ननु यदेवार्थक्रियाकारि तदेव परमार्थसदित्यतीतेऽध्वनि तदभावात् कथं सत्त्वम्। न वयमर्थक्रियानिमित्तं सत्त्वमुपेमः, अपि तु स्वरूपेण सतां पदार्थानां स्वरूपजुषां गुणत्रयमयम्। तस्य च नित्यस्य नास्ति विनाशः, सर्वत्र सर्वदानुग्रहाद् वीतपञ्चकेन साधितत्वात्। तदुक्तम्—'तदेव त्रैलोक्यं व्यक्तेरपैति न सत्त्वादि'ति ॥५५॥

---

व्यापारः परिसमाप्तकरणीयोऽर्थक्रियामकुर्वन् पुनर्दर्शनं नोपैतीति अतीत इत्युच्यते। तथा चैकस्यैवार्थक्रियासदसत्त्वाभ्यामतीतत्ववर्तमानत्वव्यपदेशोऽविरुद्धः, परोपाधिकत्वादिति।

अयं भावः — यदा संरब्धाः=परिपक्वभोगप्रदप्राण्यदृष्टप्रेरितकालव्यापारिता हेतवः कार्योपकारमारभन्ते तदा तत्सामर्थ्याज्जायमानो भावो दर्शनपथमवतरन् स्वार्थक्रियाः सम्पादयन् वर्तमान इति व्यपदिश्यते। उपरतकरणव्यापारस्तु भावः करणव्यापारोपरमादेव परिसमाप्तकरणीयोऽर्थक्रियामकुर्वन् अदर्शनमनुपतन्नतीत इत्युच्यते। यदा तु हेतवो नोपकाराय संरब्धास्तदाऽनागतः। इत्येवमेकस्यापि भावस्य सदा वर्तमानस्याप्यर्थक्रिया सदसत्त्वरूपपरोपाधिप्रकल्पितो भूतानागतादिव्यपदेशभेदोऽविरुद्ध इत्यर्थक्रिया सदसत्त्वनिमित्तो व्यपदेशः।

ननु यदेवार्थक्रियाकारितदेवपरमार्थसदिति अतीतेऽध्वनि=भावे तदभावात्=अर्थक्रियाकारित्वाभावात् कथं सत्त्वमिति चेत्, न, वयमर्थक्रियाकारित्वनिमित्तकं भावस्य सत्त्वमुपेमः, अपि तु स्वरूपेण सतां पदार्थानां स्वरूपजुषाम्=स्वाकारयोगिनां गुणत्रयमयम्=सत्त्वगुणप्रधानकगुणत्रयविकारभूतं सत्त्वमुपेमः, तस्य च=गुणत्रयमयस्य सत्त्वस्य च नित्यस्य=स्वकारणरूपेण नित्यस्य नास्ति विनाशः=आत्यन्तिको नाशः, सर्वत्र सर्वदाऽनुग्रहात्=सर्वेषु भावेषु गुणत्रयकार्येषु सर्वदा सत्त्वगुणकृतोपकारदर्शनात्, वीतपञ्चकेन=विगतं शब्दादिरूपविषयप्रपञ्चकं मानसाद् यस्य तेनाचार्यविशेषेण साधितत्वात्=गुणत्रयकार्यस्य त्रैलोक्यस्य शाश्वतिकत्वस्य साधितत्वात्। तदुक्तम्—

'तदेव त्रैलोक्यं व्यक्तेरपैति न सत्त्वात्' इति।

अस्यार्थः — तदेव=गुणत्रयमयमेव, त्रैलोक्यं व्यक्तेः=अभिव्यक्तेः सकाशादपैति=अपगच्छति, न सत्त्वादपैति=न सत्त्वप्रधानकगुणत्रयरूपस्वोपादानकारणा-

अतीतानागतयोरध्वनोर्भावस्यादर्शनं समानमभिप्रेत्य केचित् संक्षेपरुचयः कालस्य द्वयमेव प्रतिबन्धाभ्यनुज्ञापर्यायमभ्युपयन्तीत्याह—

द्वे एव कालस्य विभोः केषाञ्चिच्छक्तिवर्त्मनी ।
करोति याभ्यां भावानामुन्मीलननिमीलने ॥५६॥

प्राक्प्रध्वंसाभावयोर्भावस्यादर्शनमविशिष्टमित्येकैव तत्कारणकालस्य सर्वप्रभविष्णुस्वरूपस्य शक्तिः प्रतिबन्धलक्षणा, द्वितीया त्वभ्यनुज्ञालक्षणा भावाभासविधायिनी सर्वप्रभविष्णुरूपस्य । तदेवं कालतत्त्वं व्याख्यातम् ॥५६॥

अत्र तु केचिद् विप्रतिपद्यन्ते 'अभिन्नेन कालेन व्यवहर्तुमशक्यत्वाद् य एव तद्भेदोपाधिः क्रियादिः परिकल्प्यते, स एव व्यवहारनिमित्तम्, किमदृश्यमानेनानुपपन्नेन कालात्मना कृत्यमि'त्यादि वदन्तः । यदि परिकल्पितरूपेण कालेन विना व्यवहारदौस्थ्यं तदीदृशमस्तु कालतत्त्वमिति तद्दर्शनेनाह

कलाभिः पृथगर्थाभिः प्रविभक्तं स्वभावतः ।
केचिद् बुद्ध्यनुसंहारलक्षणं त प्रचक्षते ॥५७॥

---

दपगच्छतीति, त्रैलोक्योपादानकारणीभूतं सत्त्वादिगुणत्रयं तु सर्वदा तिष्ठत्येवेत्याशय इति ॥५५॥

अतीतानागतयोः — भूतभविष्यतोः अध्वनोर्भावस्यादर्शनं समानमभिप्रेत्य केचित् संक्षेपरुचयः कालस्य भेदद्वयमेव प्रतिबन्धाऽभ्यनुज्ञापर्यायं दर्शनादर्शनरूपमभ्युपयन्ति=स्वीकुर्वन्ति इत्याह —द्वे एव कालस्येति ।

अस्यार्थः—केषाञ्चिन्मते विभोः=प्रभोः सर्वेषां भावानां प्रतिबन्धाभ्युज्ञारूपनिग्रहानुग्रहसमर्थस्य कालस्य द्वे एव=द्वावेव, शक्तिवर्त्मनी=शक्तिमार्गौ, कालो याभ्यां प्रतिबन्धाभ्यनुज्ञारूपाभ्यां द्वाभ्यां मार्गाभ्यां भावानामुन्मीलननिमीलने दर्शनादर्शने करोतीति ।

अयं भावः — प्रागभावप्रध्वंसाभावयोर्भावस्यादर्शनमविशिष्टम् — तुल्यम् इत्यदर्शनरूपस्य कार्यस्यैक्यात् तत्कारणस्य कालस्य सर्वप्रभविष्णुरूपस्यैकैव शक्तिः प्रतिबन्धलक्षणा, द्वितीया तु तस्य सर्वप्रभविष्णुरूपस्याभ्यनुज्ञालक्षणा भावाभासविधायिनी=भावदर्शनकरी शक्तिः । तदेवं स्वभावत एकमपि क्रियारूपोपाधिभिर्भूतादिभेदभिन्नं कालतत्त्वं व्याख्यातमिति ॥५६॥

अत्र तु केचित् विप्रतिपद्यन्ते, अभिन्नेन कालेन व्यवहर्तुमशक्यत्वाद् य एव भूतादिकालभेदोपाधिः क्रियादिः परिकल्प्यते, स एव भूतादिकालव्यवहारनिमित्तं भवतु, किमदृश्येन अनुपपन्नेन च कालात्मना कार्यमित्यादिवदन्तः । यदि च परिकल्पितरूपेण कालेन विना भूतादिव्यवहारदौस्थ्यम्, तदेदृशम्=क्रियाणां बुद्ध्यनुसंहारलक्षणम्, अस्तु कालतत्त्वमिति तद्दर्शनेन=तादृशकालवादिदर्शनानुसारेणाह—कलाभिः पृथगर्थाभिरिति ।

भिन्नाः क्रियालक्षणाः सङ्कलना बुद्ध्यनुसंह्रियमाणाः सङ्कल्यमानाश्चिर-क्षिप्रादिव्यपदेशस्य निमित्तं भवन्ति, एवमहोरात्रादिव्यपदेशस्य। तथा च बुद्ध्या सङ्कलनमात्रमेवाबहिस्तत्त्वं चिरादिकालरूपं विलक्षणमेव व्यवतिष्ठते।

तथा हि—चिरकालस्यावान्तरप्रविभागेन भिन्ना एव कलाः स्वांशाः परि-कल्प्यन्ते। एवं क्षिप्रकालस्याहरादिकालस्य च। न तु क्रियोपाधिवशादयं चिरादि-भेदः, पूर्वोक्तनयेन बुद्धेः स्वयंभेदात्। स एव च स्वविषये सङ्कल्यमाने क्रिया-सन्ताने समारोप्यते। बुद्धिधर्मो हि विषयरूपानुपातीति दृष्टमेतत्। विषयभूत-लक्षणगताल्पत्वमहत्त्ववशेन चिरादिभावो बुद्धिसङ्कलनस्य कालरूपस्य व्यव-ह्रियते ॥५७॥

---

अस्यार्थः — केचिद् वादिनः पृथगर्थाभिः बुद्ध्यनुसंहारलक्षणादबहिस्तत्त्वात् कालात् परस्परतश्च भिन्नस्वरूपाभिः क्रियालक्षणाभिः कलाभिः स्वांशैः स्वभावतः चिरक्षिप्रादिभेदैरहोरात्रादिभेदैश्च प्रविभक्तं बुद्ध्यनुसंहारलक्षणम् = क्रियाणां बुद्ध्याऽ-नुसंहारः सङ्कलनं तल्लक्षणं तं कालं प्रचक्षते।

अत्रायं निष्कर्षः — क्रियाणां बुद्ध्याऽनुसहारलक्षणः कालः, न तु तस्य बुद्धि-सङ्कलनातिरिक्तं किञ्चिद् बहिस्तत्त्वम्। बुद्ध्याऽनुसंहृताभिश्च क्रियाभिरल्पाभिः क्षिप्रत्वव्यवहारः, बहुभिश्च ताभिश्चिरत्वव्यवहारः। रविक्रियाणां सङ्कलनयैव क्षणा-होरात्रादिव्यवहार इति।

अयं भावः — परस्परं भिन्नाः क्रियालक्षणाः क्षणाः सङ्कलनाबुद्ध्या = गणना-त्मिकया बुद्ध्याऽनुसंह्रियमाणा = स्वभावतो विभक्ता अपि सङ्कलनाबुद्ध्या संमूही-क्रियमाणाः सङ्कल्यमानाः = एतावन्त इति गण्यमानाः चिरक्षिप्रादिव्यपदेशस्य निमित्तं भवन्ति। एवमहोरात्रादिव्यपदेशस्य। तथा च बुद्ध्या सङ्कलनमात्रमेव चिरादिकालस्य स्वरूपमबहिस्तत्त्वम् = बाह्यस्वरूपरहितं विलक्षणमेव व्यवतिष्ठते = व्यवस्थितं भवति।

तथा हि—चिरकालस्य बुद्ध्यनुसंहारलक्षणस्यावान्तरप्रविभागेण भिन्ना एव कलाः स्वांशाः परिकल्प्यन्ते। एवं क्षिप्रकालस्य बुध्यनुसंहारलक्षणस्याहरादिकाल-स्य च। न तु एकस्य विभोः कालस्य क्रियारूपोपाधिवशादयं चिरादिभेदः; किन्तु विलक्षणबुद्ध्यनुसंहाररूपकालभेदप्रयुक्तः पूर्वोक्तनयेन = पूर्वोक्तरीत्या क्रियाणां सङ्कलनात्मिकाया बुद्धेः स्वयंभेदात्। स एव च सङ्कलनात्मको बुद्धिभेदः कालस्वरूपः सङ्कल्यमाने = गण्यमाने स्वविषये क्रियासन्ताने समारोप्यते। बुद्धिधर्मो हि विषय-रूपानुपातीति दृष्टमेतत्। यथा बुद्धिधर्मः प्रत्यक्षत्वं परोक्षत्वञ्च तद्विषये घटे आरोप्य व्यवह्रियते, प्रत्यक्षो घटः, परोक्षो घट इति। एवं सङ्कलनात्मकबुद्धिगतं कालत्वं तद्विषये क्रियासन्ताने समारोप्य क्रियासन्तानस्तत्तत्कालत्वेन व्यवह्रियते। तथा सङ्कलनात्मकबुद्धिविषयभूतक्रियालक्षणक्षणगताल्पत्वमहत्त्ववशेन चिरक्षिप्रादिभावो बुद्धिसङ्कलने कालरूपे व्यवह्रियत इति ॥ ५७ ॥

तत्र तावत् कालतत्त्वं नास्त्यन्यो बाह्यः कश्चित् काल इति बौद्धप्रायाः। भवत्वेवम्, नास्माकं विप्रतिपत्तिरत्रेत्याह—

ज्ञानानुगतशक्तिं वा बाह्यं वा सत्यतः स्थितम्।
कालात्मानमनाश्रित्य व्यवहर्तुं न शक्यते ॥५८॥

ज्ञाने बुद्धावनुगतास्तदाकाराः शक्तयश्चिरक्षिप्रवर्तमानादिभेदरूपा यस्यासावेवंविधो बुद्ध्यनुसंहारमात्रस्वभावो वास्तु कालः तस्माद्, बाह्यो वा कश्चित् प्रविभक्तवर्तमानादिशक्तिः पारमार्थिको द्रव्यपदार्थः। नास्माभिर्दर्शनविवेकः प्रारब्धः, किन्तु शाब्दे व्यवहारे यदङ्गं, तत् परीक्ष्यम्। अस्ति च भिन्नकालः शाब्दो व्यवहारोऽभूदस्ति भविष्यतीति। तत्र यथायोगमविचारितरमणीयः कालोऽभ्युपगन्तव्य इत्यर्थः ॥५८॥

तथा हि कैश्चिद् भावेभ्यो व्यतिरिक्त एव कालोऽभ्युपगत इत्याह—

तिस्रो भावस्य भावस्य केषाञ्चिद् भावशक्तयः।
ताभिः स्वशक्तिभिः सर्वं सदैवास्ति च नास्ति च ॥५९॥

---

तत्र तावद् विज्ञानमेव=क्रियाणां सङ्कलनात्मकं विज्ञानमेव कालत्वम्, नास्त्यन्यो बाह्यः कश्चित् काल इति बौद्धप्रायाः=बौद्धसदृशाः। भवत्वेवम्, नास्माकमत्र विप्रतिपत्तिरित्याह—ज्ञानानुगतशक्तिमिति।

अस्यार्थः—ज्ञाने क्रियाणां सङ्कलनात्मिकायां बुद्धौ. अनुगतास्तदाकाराः शक्तयश्चिरक्षिप्रवर्तमानादिभेदरूपा यस्यासौ तथाविधस्तं बुद्ध्यनुसंहारमात्रस्वभावं वा, सत्यतः=परमार्थतः स्थितं बाह्यं वा बुद्ध्यनुसंहाराद् भिन्नं प्रविभक्तवर्तमानादिशक्तिं वा कालात्मानं=कालस्वरूपमनाश्रित्य व्यवहर्तुं न शक्यते। कल्पितेनाकल्पितेन वा कालेनैव अभूदस्ति भविष्यतीत्यादिकः शाब्दो व्यवहारः कर्तुं शक्यते, नान्यथेति निष्कर्षः।

अयं भावः—ज्ञाने क्रियाणां सङ्कलनात्मिकायां बुद्धावनुगतास्तदाकाराः शक्तयः चिरक्षिप्रवर्तमानादिभेदरूपा धर्मा यस्यासावेवंविधो बुध्यनुसंहारमात्रस्वभावो वा तस्माद् बाह्यः=भिन्नो वा कश्चित् प्रविभक्तवर्तमानादिशक्तिकः पारमार्थिको द्रव्यपदार्थः कालोऽस्तु। नास्माभिरत्र प्रकरणे कालविषयको दर्शनविवेकः प्रारब्धः, किन्तु शाब्दे व्यवहारे यदङ्गं कालरूपं तत् परीक्ष्यम्। अस्ति च भिन्नकालः=भूतादिकालभेदानुगतः शाब्दो व्यवहारः, अभूदस्ति भविष्यतीति। तत्र यथायोगम्=यथासम्भवमविचारितरमणीयस्तदुपपत्तये कालपदार्थोऽभ्युपगन्तव्य इति ॥५८॥

कालस्य दर्शनविवेके क्रियमाणे कालोऽनवस्थित एव, तथा हि—बाह्याभ्यन्तरभेदेन कालस्वरूपं द्विधा प्राङ् निरूपितम्। कैश्चित्तु=सांख्यैस्तु सत्त्वादिगुणत्रयकार्येभ्यो भावेभ्यो व्यतिरिक्त एव कालो भावेषु गुणत्रयशक्तिरूपोऽभ्युपगत इत्याह तिस्रो भावस्येति।

पारमर्षनये सततपरिणामिषु भावेषु सत्त्वरजस्तमसां शक्तिमात्रमतीतादिकालभेदसमाख्या। तथा च सर्वेषां भावानां गुणत्रयमयत्वाच्छक्तित्रययोगित्वे यथायथं शक्त्युद्भवानुद्भवाभ्यां सदसत्त्वेन व्यवहारः ॥५९॥

तथा हि—

सत्त्वादव्यतिरेकेण तास्तिस्रोऽपि व्यवस्थिताः।
क्रमस्तास्तदभेदाच्च सदसत्त्वं न भिद्यते ॥६०॥

भावादव्यतिरिक्तास्ता एव शक्तयः क्रम इत्युच्यन्ते। आविर्भावतिरोभावौ हि वर्तमानादिशक्तिसमन्वयवशाद् भावाः प्रतिपद्यमानाः क्रमरूपमात्मनि दर्शय-

---

अस्यार्थः — केषाञ्चित् = सांख्यानां मते तिस्रो भूतभविष्यद्वर्तमानाख्याः, भावशक्तयः = भावेषु सत्त्वादिगुणत्रयकार्येषु सत्त्वादिगुणत्रयस्य शक्तयः, भावानाम् = भावस्याभावस्य च प्रयोजिका इति शेषः। तत्र भूताख्या शक्तिर्भावानां प्रध्वंसाभावस्य प्रयोजिका, भविष्यदाख्याशक्तिर्भावानां प्रागभावस्य प्रयोजिका, वर्तमानाख्या तु शक्तिर्भावानां भावस्य = सत्त्वस्य प्रयोजिका इति। सर्वं भावजातं ताभिः = स्वशक्तिभिः सदैव अस्ति च नास्ति चेति। भूतभविष्यदाख्या तमसः शक्तिर्भावानामदर्शनस्य प्रयोजिका, वर्तमानाख्या तु सत्त्वस्य शक्तिर्भावानां दर्शनस्य प्रयोजिका, रजस्तु प्रवर्तकं कालसामान्यरूपमित्युक्तं प्रागिति।

अयं भावः —पारमर्षनये=परमर्षेः कपिलस्य नये मते सततपरिणामिषु भावेषु सत्त्वरजस्तमसां शक्तिमात्रम् अतीतादिकालभेदसमाख्या = अतीतादिकालभेदैः समाख्यातम्। तथा च सर्वेषां भावानां गुणत्रयमयत्वात् = सत्त्वादिगुणत्रयविकारत्वात्—तत्कार्यत्वाद् भूतादिशक्तित्रययोगित्वे स्थिते यथायथं तत्तत् शक्त्युद्भवानुद्भवाभ्यां सदसत्त्वेन व्यवहारः। तत्र वर्तमानशक्त्युद्भवे सत्त्वेन व्यवहारो भूतभविष्यत्शक्त्युद्भवे तु असत्त्वेन व्यवहार इति ॥ ५९॥

भावानां सदसत्त्वं शाश्वतिकमिति सर्वं सदैवास्ति च नास्ति च इत्युक्तम्, तदुपपादयति—सत्त्वादव्यतिरेकेणेति।

अस्यार्थः —तास्तिस्रोऽपि भावानां भूतादिशक्तयः सत्त्वाद् भावादव्यतिरेकेणाभेदेन व्यवस्थितास्ता एव च दर्शनादर्शनरूपविलक्षणस्ववृत्तिवशाद् भावेष्वाविर्भावतिरोभावौ प्रापयन्त्यः क्रम इत्युच्यन्ते। एतादृशक्रमवशादेव च भावानां सदसत्त्वव्यवहारः। तदभेदाच्च भूतादिशक्तीनां स्वाश्रयभावाभेदाच्च तादृशशक्तियुक्तं भावानां सदसत्त्वं न परस्परं विद्यते। न वा भावाद् भिद्यते, तदभिन्नाभिन्नस्य तदभिन्नत्वनियमादिति।

अयं भावः —भावादव्यतिरिक्ताः=अभिन्नास्ता एव भूतादिशक्तयः क्रम इत्युच्यन्ते। भावा हि वर्तमानादिशक्तिसम्बन्धवशादाविर्भावतिरोभावौ प्रतिपद्य-

न्तीति शक्त्यस्ता एव तात्पर्यतः क्रमः। अव्यतिरेकेऽपि च भावाच्छक्तीनां सदा भाववदवस्थानेऽपि वृत्तिवैचित्र्यात् सङ्करो न भवति। दर्शनादर्शने हि तत्रासां व्यापारः। स च विलक्षणः। तद्वशादेव च सदसत्त्वव्यवहार इति सोऽपि भावतो न विभिद्यते। अतीतानागतावस्थस्य हि दर्शनमपवृत्तं न सत्त्वमिति दर्शनाभाव एवासत्त्वव्यवहारात् सत्त्वस्य च तदानीमपि विद्यमानत्वात् सदसत्त्वं न भिद्यते ॥६०॥

यतः—

दर्शनादर्शने नैकं दृष्टादृष्टं तदेव तु।
अध्वनामेकता नास्ति न च किञ्चिन्निवर्तते ॥६१॥

---

मानाः=प्राप्नुवन्तः आत्मनि=स्वस्वरूपे क्रमरूपं दर्शयन्तीति ता वर्तमानादिशक्तय एव तात्पर्यतः क्रमस्वरूपाः सन्ति। भूतादिशक्तीनां भावादव्यतिरेकेऽपि च भावस्येव सदाऽवस्थानेऽपि च दर्शनादर्शनरूपस्ववृत्तिवैचित्र्याद् भावानामाविर्भावतिरोभावरूपयोः कार्ययोः सङ्करो न भवति। दर्शनादर्शने हि तत्र=भावानामाविर्भावतिरोभावयोः, आसाम्=शक्तीनां व्यापारः। स च परस्परं विलक्षणः। तद्वशादेव च भावानां सदसत्त्वव्यवहार इति सोऽपि=सदसत्त्वपदार्थोऽपि स्वाश्रयभावतो न विभिद्यते। अतीतानागतावस्थस्य=भूतभविष्यदवस्थस्य हि भावस्य दर्शनमपवृत्तम्=अपगतम्, न सत्त्वमिति भावानां दर्शनाभाव एव तदसत्त्वव्यवहारात् तेषां सत्त्वस्य च तदानीमपि=असत्त्वव्यवहारकालेऽपि विद्यमानत्वाद् भावानां सदसत्त्वं परस्परं भावेभ्यश्च न भिद्यत इति ॥६०॥

अनन्तरकारिकोक्तार्थे हेतुमाह—दर्शनादर्शने इति।

अस्यार्थः—यतो वर्तमानशक्त्या भावानां प्रकाशनं दर्शनम्, अतीतानागतशक्तिभ्यां भावानां तिरोधानमदर्शनम्, त एते दर्शनादर्शने वर्तमानादिशक्तीनां व्यापारभूते नैकम्=एकं न, अतो वर्तमानादिशक्तीनां दर्शनादर्शनरूपव्यापारभेदाद् भावानां सदसत्त्वे शाश्वतिकेऽपि क्रमेण भासेते इत्याशयः। दृष्टादृष्टं तु वस्तु तदेव, अत एकस्यैव वर्तमानादिरूपम्, शक्तित्रयमित्याशयः। अध्वनां वर्तमानादिशक्तिरूपाणामेकता नास्ति, शाब्दे व्यवहारेऽभूदस्ति भविष्यतीति शब्दभेदेन व्यवह्रियमाणत्वात्।

एतेन भिन्नव्यवहारनियामकः शक्तिभेदः प्रदर्शितः। किञ्चिदपि वस्तु न च निवर्तते=कस्यापि वस्तुनो न चात्यन्तिको विनाशः, 'नाभावो विद्यते सतः' इत्युक्तेः। एतेन वस्तुनः सर्वदा सत्त्वं प्रतिपादितं भवतीति।

वर्तमानशक्त्या प्रकाशनं दर्शनं संवेदनम्, अतीतानागतशक्तिभ्यां तु तिरोधानमदर्शनमसंवेदनम्, तयोः परस्परपरिहारेणावस्थानाद् नैकत्वमिति कार्यभेदादध्वभेद एव, न सङ्करः। यत्पुनस्तद्वस्तु दृष्टं सददृष्टमतीतं च तदेकमेव धर्मिरूपम्, धर्माणामागमापायाभ्यामपि धर्मिणस्तत्त्वादप्रच्युतेः।

अतश्चात्र भावादभिन्नानामप्यध्वनां वर्तमानादिरूपाणां कार्यसाङ्कर्याभावादेकत्वसङ्करो नास्ति। यतश्च सद्रूपमत्यन्तनिरन्वयध्वंसं नोपपद्यते, तिरोभावमात्रं तु। ततः सदसत्त्वं न भिद्यते। सत्त्वादसत्त्वस्य भेदो नास्ति। सत्त्वमेव हि तिरोभूतमसत्त्वमिति व्यवह्रियते, न त्वभावो नाम कश्चिन्नीरूप इत्यर्थः।

तदुक्तं पातञ्जले—

"धर्मी त्र्यध्वा धर्मास्त्र्यध्वानस्ते तल्लक्षितास्तां प्राप्नुवन्तोऽन्यत्वेन

---

अयं भावः—वर्तमानशक्त्या भावानां प्रकाशनं दर्शनं संवेदनम्। अतीतानागतशक्तिभ्यां तु तिरोधानमदर्शनमसंवेदनम्, तयोर्दर्शनादर्शनयोः परस्परपरिहारेण = परस्परविरोधेन अवस्थानाद् नैकत्वमिति दर्शनादशनरूपकार्यभेदादध्वभेद एव, न त्वध्वनां सङ्करः। यत् पुनस्तद् वस्तु दृष्टं सददृष्टमतीतञ्च तदेकमेव धर्मिरूपम्। धर्माणामागमापायाभ्यामपि धर्मिणस्तत्त्वात् = स्वरूपाद् अप्रच्युतेः। यथा—तिरोभवतो घटस्य घटत्वकम्बुग्रीवादिमत्त्वपृथुबुध्नोदरत्वादयो धर्मा अपयन्ति। धर्मी तु नापैति, तस्यैव हेतुसन्निपाते पुनरुद्भवात्।

अतश्चात्र भावादभिन्नानामप्यध्वनां वर्तमानादिरूपाणां त्रयाणां दर्शनादर्शनरूपकार्ययोः साङ्कर्याभावादेकत्वरूपः सङ्करो नास्ति। यतश्च वस्तु सद्रूपमतोऽत्यन्तनिरन्वयध्वंसं तन्नोपपद्यते। अपि तु विनश्यतोऽवस्तुनः स्थूलरूपेण विनाशः सूक्ष्मरूपेण चोपादानकारणेऽन्वयोऽस्त्येवेति सत्कार्यवादसिद्धान्तः। विनश्यतो वस्तुनस्तिरोभावमात्रं तु भवति, न तु सर्वथोच्छेदः। ततः = तस्मात् सदसत्त्वम् = सत्त्वमसत्त्वञ्च परस्परं न भिद्यते। सत्त्वादसत्त्वस्य भेदो नास्ति। सत्त्वमेव हि तिरोभूतमसत्त्वमिति व्यवह्रियते। न त्वभावो नाम कश्चिन्नीरूप इति।

तदुक्तं पातञ्जले—

"धर्मी = त्र्यध्वा, धर्मास्त्र्यध्वानस्ते तल्लक्षितास्तां तामवस्थां प्राप्नुवन्तोऽन्यत्वेन प्रतिनिर्दिश्यन्ते, अवस्थान्तरतो न द्रव्यान्तरतः" इति। तथा—"अनागतलक्षणं हित्वा वर्तमानलक्षणं प्रतिपन्नो न चानागतातीताभ्यां वियुक्तः" इति। अस्य वाक्यद्वयस्यार्थः—धर्मी त्र्यध्वा = त्रिषु अध्वसु भूतभविष्यद्वर्तमानेषु वर्तते, सत्कार्यवादे शाश्वतिकत्वात्; धर्माः पर्यायेण त्र्यध्वानः, अनित्यत्वात्। अत्र धर्मिपदेनोपादानकारणम्, धर्मपदेन च कार्याणि गृह्यन्ते। तद्यथा मृत्तिकारूपो भावो धर्मी, धर्माश्च घटादयः। ते च धर्मास्तल्लक्षिताः = अध्वत्रयलक्षिताः सन्तस्तां तामवस्थां नवत्वपुराणत्वादिकां प्राप्नुवन्तोऽन्यत्वेन निर्दिश्यन्तेऽवस्थान्तरतः = अवस्थाभेदात्,

प्रतिनिर्दिश्यन्ते अवस्थान्तरतो न द्रव्यान्तरतः" ( यो० द० ३।१३ ) इति। तथानागतलक्षणं प्रतिपन्नो न चानागतातीताभ्यां वियुक्त इति ॥६१॥

इदानीं यथासम्भवं कालतत्त्वे मतान्तराण्युपसंहरति —

शक्त्यात्मदेवतापक्षैर्भिन्नं कालस्य दर्शनम् ।
प्रथमं तदविद्यायां यद्विद्यायां न विद्यते ॥६२॥

कालाख्या स्वातन्त्र्यशक्तिर्ब्रह्मण इति तत्रभवद्भर्तृहरेरभिप्रायः । व्याख्यातारस्तु कारणशक्तिरेव काल इति व्याचक्षते ।

तथा हि बीजशक्तिरङ्कुरोपलम्भमभ्यनुजानती काण्डप्रसवं च तदानीं प्रतिबध्नती कालकार्यकरणात् कालः । एवमङ्कुरादिशक्तावपि यथोत्तरमनन्तरकार्यजननाद् व्यवहिततत्कार्यप्रतिबन्धाच्च कालतत्त्वं बोद्धव्यम् । एतच्चायुक्तमिति लक्ष्यते । नियतकारणा हि भावाः स्वकारणसन्निधाने भवन्ति, नान्यथेति कारणसामर्थ्यमेवेदम् । तत्र तु नियतकालत्वात् सहकारीकालस्तदन्य एव युक्तः । कारणपरम्परया भावानामुत्पद्यमानानां च क्रमदर्शनाच्च क्रमाख्या कालशक्तिर्भावोपाधिरित्येवाभ्युपगन्तव्या । ततश्च भावभेदावभासने प्रभुः, स एव तत्र

---

नवादन्योऽयं पुराण इति, न तु द्रव्यान्तरतः, अयं घटादन्य इति द्वितीयवाक्यस्यार्थः। अनागतलक्षणं भविष्यत्तां हित्वा वर्तमानलक्षण प्रतिपन्नो धर्मी न चानागतातीताभ्यामध्वभ्यां वियुक्तः, शाश्वतिकत्वादिति ॥ ६१ ॥

इदानीं यथासम्भवं कालतत्त्वे = कालतत्त्वविषयकाणि मतान्तराण्युपसंहरति —शक्त्यात्मदेवतापक्षैरिति ।

अस्यार्थः —ब्रह्मणः स्वातन्त्र्यशक्तिः काल इति श्रीभर्तृहरेः पक्षः, आत्मा = परमात्मा काल इति गीतासु, भावावभासोपाधिकः, क्रमावभासोपाधिको वा जीवात्मा काल इति केचित्, महती देवताविग्रहवती काल इति केषाञ्चिन्मतम्। अहोरात्रसन्ध्यादिरूपः खण्डकालोऽपि तत्तद्देवतारूप इत्यपि केचित् ।

एतच्चोपपादितं चतुर्दशकारिकाव्याख्यावसरे । एतैः पक्षैः कालस्य दर्शनं भिन्नम् । तत्र ब्रह्मणः स्वातन्त्र्यशक्तिः काल इति यत्कालदर्शनं तदविद्यायां संसारहेतुभूतायां सत्यां प्रथमाद्यं कार्यम्, विषयस्याद्यत्वमभिप्रेत्य विषयिणि आद्यत्वमभिहितम् । यत्कालदर्शनं विद्यायामद्वैतात्मसाक्षात्कारलक्षणायां सत्यां न विद्यते। अद्वैतबुद्धेर्द्वैतबुद्धिविरोधितया तस्यां सत्यां कालदृष्टेरसम्भवादिति ।

अयं भावः —ब्रह्मणः स्वातन्त्र्याख्या शक्तिः काल इति श्रीभर्तृहरेरभिप्रायः। अन्ये तु एतत्कारिकाव्याख्यातारः कारणशक्तिरेव काल इति व्याचक्षते ।

तथा हि—बीजशक्तिरङ्कुरोपलम्भमभ्यनुजानती काण्डप्रसवञ्च तदानीं प्रतिबध्नती प्रतिबन्धाभ्यनुज्ञारूपकालकार्यकरणात् कालः। एवमङ्कुरादिशक्तावपि

तदनुयायिक्रमावभासनेऽपीति स्वतन्त्र्यस्य चिदात्मन एव जीवात्मगतेयं शक्तिः कालाख्या युक्ता। तथा ह्युक्तं वाक्यपदीयेऽस्माभिः।

अत एवैतद्दर्शनानुगुणदर्शनान्तरमाह—आत्मा पुरुषो जीव एव कालः। काल एव जीवस्तस्यैव क्रमावभासात्, स एव हि यथातत्त्वमर्थवान् प्रत्येतुमसमर्थः स्वाभासकालानुसारेण तत्र क्रममध्यवस्यति। ततश्च ततः कालभेदप्रक्लृप्तेः स एवोपचारेण कालाख्यां प्रतिपद्यते। स एव हि कालशक्तेरविद्याशक्तिसहचारिण्याः फलभूमिः। तददृष्टादिवशेनैव च भावेषु प्रतिबन्धाभ्यनुज्ञे।

अन्ये तु विग्रहवतीं महाप्रभावां देवतां कालत्वेन प्रतिपन्नाः। अत्रापि चिद्रूपस्य ब्रह्मणः शक्तिर्देवतैव सकलजगद्ग्रासघस्मरेत्येतदानुगुण्यमेवेतीदमेवात्र सिद्धान्तरूपं दर्शनम्। अत एवैतत् कालदर्शनम्, 'अविद्यायां संसारहेतुभूतायां प्रथमं भेदावभासमयो हि संसारः। भेदश्च देशकालाभ्याम्, तत्र च कालभेदो

---

यथोत्तरमनन्तरकार्यंजननाद् व्यवहिततत्तत्कार्यप्रतिबन्धाच्च कालत्वं बोद्धव्यम्। एतच्चायुक्तमिति लक्ष्यते। नियतकारणका हि भावाः स्वकारणसन्निधाने भवन्ति, नान्यथेति कारणसामर्थ्यमेवेदम्, तत्र तु भावोत्पत्तेर्नियतकालत्वात् कारणानां सहकारी कालस्तदन्य एव युक्तः। कारणपरम्परयोत्पद्यमानानां भावानां क्रमदर्शनाच्च क्रमाख्या कालशक्तिर्भावोपाधिः=भावस्योपाधिः, इत्येवाभ्युपगन्तव्या। ततश्च जीवस्य भावभेदावभासने=भावविशेषावभासने प्रभुः स एव=काल एव, तदनुयायिक्रमावभासनेऽपि=भावानुगतक्रमावभासनेऽपि इति स्वतन्त्रस्य चिदात्मन एव सर्वगतस्य जीवात्मगतेयं शक्तिः कालाख्या युक्ता। तथा ह्युक्तं वाक्यपदीये अस्माभिः।

अत एवैतद्दर्शनानुगुणं दर्शनान्तरमाह आत्मा पुरुषो जीव एव कालः। तस्य च=जीवस्य च कालात् क्रमावभासात्। स एव हि यथातत्त्वम्=यथास्वरूपम् अर्थान् प्रत्येतुमसमर्थः स्वाभासकालानुसारेण तत्र=अर्थेषु क्रममध्यवस्यति। ततश्च तत एव=जीवादेव कालभेदप्रक्लृप्तेः कालविशेषप्रसिद्धेः। स एव=जीव एव उपचारेण=कालभेदप्रकल्पकत्वप्रयुक्तेन कालत्वारोपेण कालाख्यां प्रतिपद्यते। स एव हि=जीव एव हि अविद्याशक्तिसहचारिण्याः कालशक्तेः सर्गद्वारा प्राप्यमाणस्य फलस्य भोगलक्षणाया भूमिः। तददृष्टादिवशेनैव च=जीवादृष्टादिवशेनैव च भावेषु कालकृते प्रतिबन्धाभ्यनुज्ञे।

अन्ये तु विग्रहवतीं महाप्रभावां देवतां कालत्वेन प्रतिपन्नाः=ज्ञातवन्तः। अत्रापि चिद्रूपस्य ब्रह्मणः शक्तिर्देवतैव सकलजगद्ग्रासघस्मरेत्येतदानुगुण्यमेव=शक्तिपक्षानुगुण्यमेव इतीदमेव=शक्तिः काल इतीदमेव अत्र=त्रिषु कालपक्षेषु सिद्धान्तरूपं दर्शनम्। अत एवैवत् कालदर्शनमविद्यायां संसारहेतुभूतायां प्रथमम्,

जगत्सृष्टेराद्यः। अक्रमा हि पश्यन्तीरूपा संवित् प्राणवृत्तिमुपारूढा कालात्मना परिगृहीतक्रमेव चकास्ती'ति कृतनिर्णयं वाक्यपदीये शब्दप्रभायां अस्माभिस्तत एवावगमनीयम्।

निष्क्रमं हि ब्रह्मतत्त्वं विद्यामयमकालकलितमविद्यावशात् क्रमरूपोपग्रहेण यथायथं विवर्तत इति कालानुवेधात्पदार्थानां क्रमेग प्रत्यवभासोऽनादिसिद्ध-जीवात्मगतः, सर्वस्य च भेदजातस्याविद्यामयत्वात्। कालेनापि दर्शनभेदेन योऽयमृतप्रविभागः, सोऽप्यविद्याविजृम्भितमेव। आविर्भूतायां तु विद्यायां सर्वस्य भेदप्रपञ्चस्यापगमादयमप्यपैति।

अतश्चात्र युक्तायुक्ततया विचारणं प्रयासमात्रफलकमेव। व्यवहारे सर्वस्यैवासत्यतया सत्त्वव्यवस्थयानुपपत्तेरित्यत्र तात्पर्यार्थः। तदेवं जन्मवतां पदार्थानां व्यवहारे काल उपयोगीति स्थितम्॥ ६२॥

कथं तर्हि नित्यानां शब्दानां कालकृतो ह्रस्वत्वादिभेदः। कल्पित इति ब्रूमः। तद् यथा चिरमिदं कृतं क्षिप्रमिदं कृतमिति ज्ञानयोः स्वतःसमानकालत्वेऽपि विषयगत-

---

कालशक्तिसहकृताया एवाविद्याशक्तेः सर्गहेतुत्वात्। भेदावभासमयो हि संसारः। भेदश्च देशकालाभ्यां भवति। तत्र च कालभेदः=कालविशेषं जगत्सृष्टेराद्यः। अक्रमा हि परब्रह्मस्वरूपा पश्यन्तीरूपा संवित् प्राणवृत्तिमुपारूढा=प्राण्यदृष्ट-सहकृतयाऽविद्याशक्त्या प्राणतादात्म्याध्यासमापन्ना परिगृहीतक्रमेव कालात्मना चकास्ति इति कृतनिर्णयं वाक्यपदीये शब्दप्रमायां श्रीहेलाराजेनेति।

निष्क्रमं हि ब्रह्मतत्त्वं विद्यामयम्–विद्यास्वरूपम् अकालकलितम्=कालेन कलितं ग्रस्तं न भवतीति तथा अविद्यावशात् क्रमरूपोपग्रहेण=प्राणवृत्तिगतस्य क्रमरूपस्य तत्रारोपमूलकेनोपग्रहेण यथायथं कालात्मना विवर्तते इति पदार्थानां कालानुबेधात् क्रमेण प्रत्यवभासोऽनादिसिद्धजीवात्मगतः। सर्वस्य च भेदजातस्या-विद्यामयत्वात्, अविद्यायाश्च जीवात्मगतत्वात्। कालेनापि दर्शनभेदेन=दर्शनभेदो-पलक्षितेन योऽयम् ऋतप्रविभागः=ऋतस्य—सत्यस्य—सत्यत्वेनाभिमतस्य जगतः प्रविभागः, सोऽप्यविद्या विजृम्भित एव=अविद्या कृत एव। आविर्भूतायां तु विद्यायां सर्वस्य भेदप्रपञ्चस्याविद्याकृतस्यापगमादयमपि=कालोऽपि अपैति। तदुपादानभूताया अविद्याया विद्यया निवर्तनात्।

अतश्चात्र=कालदर्शने युक्तायुक्ततया विचारणं प्रयासमात्रफलकमेव। व्यवहारे सर्वस्यैवासत्यतया सत्त्वव्यवस्थाया अनुपपत्तेरित्यत्र तात्पर्यार्थः। तदेवं जन्मवतां पदार्थानां भूतादिव्यवहारे काल उपयोगीति स्थितम्॥ ६२॥

कथं तर्हि नित्यानामक्रमाणां शब्दानां कालकृतो ह्रस्वत्वादिभेदः। शब्दाभि-व्यञ्जकक्रमवद्ध्वनिकल्पित इति ब्रूमः। तद्यथा–"चिरमिदं कृतम्, क्षिप्रमिदं

प्रचयापचयाभ्यां कालभेदप्रतिभास इव स्वात्मनि लक्ष्यते तथा ह्रस्वादावपि शब्दतत्त्वस्य नित्यत्वात् समानकालत्वेऽपि समुपचरितः कालभेदः यद्येवम्—

अभेदे यदि कालस्य ह्रस्वदीर्घप्लुतादिषु ।
दृश्यते भेदनिर्भासः स चिरक्षिप्रबुद्धिवत् ॥ ६३ ॥
ह्रस्वदीर्घप्लुतावृत्त्या नालिकासलिलादिषु ।
कथं प्रचययोग्यः स्यात् कल्पनामात्रहेतुकः ॥ ६४ ॥

वास्तवे ह्रस्वादौ कालस्याभेदेऽपि चिरक्षिप्रज्ञानवदुपचरिते कालभेदे समाश्रीयमाणे ह्रस्वस्य पुनःपुनरुच्चारणे नालिकायाः पानीयस्रुतिरल्पा, ततस्त्रिभागाधिका दीर्घस्योच्चारणवृत्त्या, ततोऽपि प्लुतस्य त्रिभागाधिकेति योऽयं

---

कृतम्" इति ज्ञानयोः स्वतःसमानकालत्वेऽपि स्वविषयक्रियागतप्रचयाप्रचयाभ्यां कालभेदप्रतिभास इव स्वात्मनि = ज्ञानात्मनि लक्ष्यते, तथा शब्दतत्त्वस्य नित्यत्वात् समानकालत्वेऽपि = कालकृतभेदाभावेऽपि ह्रस्वादावपि समुपचरितः कालभेदः । यद्येवम् ह्रस्वदीर्घप्लुतावृत्त्या नालिकासलिलादिस्रुतिषु कथं प्रचयाप्रचययोगः स्यादित्याशङ्कते—अभेदे यदीति ।

अस्यार्थः—ह्रस्वादौ कालस्य वास्तवेऽभेदेऽपि यदि चिरक्षिप्रबुद्धिवत्— 'चिरमिदं कृतम्, क्षिप्रमिदं कृतम्' इति स्वभावतः समानकालज्ञानवत् कालस्य भेदनिर्भासः कल्पितो दृश्यते इत्युच्यते, तदा स कल्पनामात्रहेतुकः = कल्पितः कालस्य भेदनिर्भासो ह्रस्वदीर्घप्लुतावृत्त्या नालिकासलिलादिषु तत् स्रुतिषु, कथं प्रचययोग्यः स्यात्, प्रचयस्य वास्तवत्वात् । तत्प्रयोजकस्य ह्रस्वादौ कालभेदस्य च कल्पितत्वादिति पूर्वपक्षः । अत्र चतुःषष्टितमकारिकायाम्—'कथं प्रचययोग्यः स्यात्' इत्येव पाठो युक्तः, अन्वितार्थकत्वात् । व्याख्यातश्चायमेव पाठः । 'कथं प्रचययोगः स्यात्' इति पाठस्तु प्रकृतार्थान्वय्यर्थकत्वाभावादयुक्त इति ।

अयं भावः—ह्रस्वादौ कालस्य वास्तवेऽभेदेऽपि चिरक्षिप्रज्ञानवत् तत्रोपचरिते = आरोपिते कालभेदे समाश्रीयमाणे ह्रस्वस्य पुनःपुनरुच्चारणे नालिकायाः पानीयस्रुतिरल्पा, दीर्घस्योच्चारणावृत्त्या ततस्त्रिभागाधिका पानीयस्रुतिः, प्लुतस्योच्चारणावृत्त्या ततोऽपि त्रिभागाधिका इति योऽयं पानीयस्रुतेः प्रकर्षसम्बन्धः, स कथं कल्पनामात्रकृतकालभेदवतः स्वतः कालविभागशून्याद् ह्रस्वादिभेदाद् भवेत् । ह्रस्वादीनां हि अभिन्नकालता पारमार्थिकी, भिन्नकालता तु कल्पिता । न च कल्पनाकल्पितोऽर्थोऽर्थक्रियासु अन्वयी = अर्थक्रियानुगतः इति ह्रस्वादीनां सर्वेषां समुच्चारणे सलिलस्रुतिरेकरूपैव स्यात् । आदिग्रहणादन्येषां भावानां निष्पत्तौ भेदो ह्रस्वादिसमुच्चारणे दृश्यमान उदाहरणीयः । तस्मात् तत्त्वतः—

प्रकर्षस्स्कन्धः सलिलस्रुतेः, स कथं कल्पनामात्रकृतकालभेदात् स्वतः कालविभागशून्याद् ह्रस्वादिभेदाद् भवेत्। ह्रस्वादीनां ह्यभिन्नकालता परमार्थिकी, कल्पिता तु भिन्नकालता। न च कल्पनाकल्पितोऽर्थोऽर्थक्रियास्वन्वयीति ह्रस्वादिसमुच्चारणे सलिलस्रुतिरेकरूपैव स्यात्। आदिग्रहणादन्येषां भावानां निष्पत्तिभेदो ह्रस्वादिसमुच्चारणे दृश्यमान उदाहार्यः। तस्मात् तत्त्वत एव भिन्नकाला ह्रस्वादयः शब्दा इति कालवृत्त्यनुरोधान्नित्यत्वव्याघात इत्यर्थः ॥६३—६४॥

अत्र समाधिः—

**अभिव्यक्तिनिमित्तस्य प्रचयेन प्रचीयते।**
**अभिन्नमपि शब्दस्य तत्त्वमप्रचयात्मकम् ॥ ६५ ॥**

शब्दस्य ह्रस्वादिभेदभिन्नस्यापि नित्यत्वात् कालवच्छेदाभावेऽपि तदभिव्यञ्जकध्वनिग्रामस्योपचयापचयाभ्यां कालभेदाद् व्यङ्ग्यव्यञ्जकयोर्भेदानवधारणाच्छब्देऽपि कालभेदानवधारणम्। प्राकृता हि ध्वनयः शब्दस्वरूपसम्भेदेन श्रूयमाणाः स्वगतं कालभेदं तत्रावभासयन्ति। नहि व्यञ्जकध्वनिविवेकेन शब्दतत्त्वग्रहणम्। 'अन्त्येन ध्वनिना सह बुद्धौ शब्दोऽवभासत' इत्युक्तम्। ततश्चाभिव्यञ्जकाधीनत्वाच्छब्दतत्त्वोपलम्भस्य यथा व्यञ्जकस्तद्धर्मः स्वरूपनिवे-

---

परमार्थतः एव भिन्नकाला ह्रस्वादयः शब्दा इति कालवृत्त्यनुरोधाद् ह्रस्वादिशब्दानां नित्यत्वव्याघात इति। तथा चात्रेदमनुमानम् ह्रस्वादयोऽनित्या, कालवृत्त्यनुरोधित्वाद् घटादिवदिति ॥ ६३–६४ ॥

अत्र समाधिः—अभिव्यक्तिनिमित्तस्येति।

अस्यार्थः— अभिन्नमपि नित्यत्वात् कालकृतभेदरहितमपि ह्रस्वादिशब्दस्य अप्रचयात्मकं तत्त्वमभिव्यक्तिनिमित्तस्य शब्दाभिव्यक्तिनिमित्तस्य ध्वनेः प्रचयेन प्रचीयते=प्रचितं प्रतीयते स्वतस्तु ह्रस्वादिभेदभिन्नस्य शब्दस्य तत्त्वं न प्रचीयते, नित्यत्वादिति।

अयं भावः—यद्यपि शब्दस्य ह्रस्वादिभेदभिन्नस्यापि नित्यत्वात् कालावच्छेदो नास्ति, तथापि=कालावच्छेदाभावेऽपि तदभिव्यञ्जक=शब्दाभिव्यञ्जकध्वनिग्रामस्य=ध्वनिसमूहस्योपचयापचयाभ्यां कालभेदाद् व्यङ्ग्यव्यञ्जकयोः शब्दध्वन्योर्भेदानवधारणात् शब्देऽपि कालभेदावधारणम्। प्राकृता हि ध्वनयः=शब्दग्राहका हि ध्वनयः शब्दस्वरूपसम्भेदेन=शब्दस्वरूपतादात्म्येन श्रूयमाणाः स्वगतं कालभेदं तत्र=शब्देऽवभासयन्ति। न हि स्वव्यञ्जकध्वनिविवेकेन=भेदेन शब्दतत्त्वग्रहणम्। 'अन्त्येन ध्वनिना सह बुद्धौ शब्दोऽवभासते' इत्युक्तम्। तेन ध्वनिशब्दयोः परस्परतादात्म्येनैव ग्रहणस्योक्तप्रायत्वात्। ततश्चाभिव्यञ्जकध्वन्यधीनत्वात् शब्दतत्त्वोपलम्भस्य यथा व्यञ्जकस्तथा तद्धर्मः कालभेदोऽपि

श्येवेति भिद्यते नालिकासलिलस्रुतिः। अत एव च 'तपरस्तत्कालस्य' (१-१-७०) इति ध्वनिगतकालाध्यासादुपपद्यते वैकृतध्वनिजनितस्तु वृत्तिभेदो न भेदक इति निर्णीतमेव पूर्वकाण्डे। वक्ष्यते चाग्रे—'सर्वश्च ह्रस्वदीर्घानुनासिकत्वादिधर्मव्रातः शब्दात्मनि व्यञ्जकाधीन' इति। ब्रह्मकाण्ड एव विस्तरेणोक्तम्—

"नादस्य क्रमजन्मत्वान्न पूर्वो न परश्च सः।
अक्रमः क्रमरूपेण भेदवानिव जायते॥" (वा०प०ब्रह्म०४९) इत्यादि।

तत्र चिरक्षिप्रज्ञानवन्नायमस्वरूपसमवायी कालभेदो येनाभेदस्य भाविकस्य भावात् कार्यभेदो न स्यादित्युच्यते। अपि तु व्यङ्ग्यव्यञ्जकयोः शब्दनादयोरविवेकेन, श्रोतृभिरभेदाध्यवसायाद् व्यञ्जकमन्तरेण शब्दस्वरूपाव्यवस्थानादन्तरङ्गध्वनिनिहितः कालभेदो व्यवहाराङ्गमेवेत्यर्थः। न हि यथा ज्ञानस्य विषयस्तथा

---

तादात्म्याध्यासेन शब्दस्वरूपनिवेश्येवेति भिद्यते नालिकासलिलस्रुतिरित्युक्तं हेलाराजेन।

वस्तुतस्तु नेदं युक्तम्। अत्रापि शब्दे प्रतीयमानस्य कालभेदस्य कल्पितत्वानपायात्। तस्माद् ध्वनिधर्मः कालभेद एव नालिकासलिलस्रुतिभेदस्य प्रयोजको न तु शब्देऽध्यारोपितः कालभेद इति वक्तुं युक्तम्। अत एव च 'तपरस्तत्कालस्य' इति (पा० १।१।७०) ध्वनिगतस्य कालभेदस्य शब्देऽध्यासादुपपद्यते। वैकृतध्वनिजनितस्तु द्रुतादिवृत्तिभेदो न शब्दभेदक इति निर्णीतमेव पूर्वकाण्डे—

शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते॥ इति॥ (वा० प० ब्र० ७७)

वक्ष्यते चाग्रे—"सर्वश्च ह्रस्वदीर्घानुनासिकत्वादिधर्मव्रातः शब्दात्मनि व्यञ्जकाधीनः" इति।

ब्रह्मकाण्ड एव विस्तरेणोक्तम्—

नादस्य क्रमजन्मत्वान्न पूर्वो न परश्च सः।
अक्रमः क्रमरूपेण भेदवानिव जायते॥ (वा० प० १।४९)

इत्यादि। तत्र चिरक्षिप्रज्ञानवन्नायमस्वरूपासमवायी = शब्दस्वरूपासमवेतः कालभेदो येनाभेदस्य भाविकस्य = भावगतस्य वास्तवस्य भावात् कार्यभेदः = सलिलस्रुतिभेदो न स्यादित्युच्येत, अपितु व्यङ्ग्यव्यञ्जकयोः शब्दनादयोरविवेकेन = विवेकाग्रहेण श्रोतृभिरभेदाध्यवसायाद् व्यञ्जकमन्तरेण शब्दस्वरूपा व्यवस्थानादन्तरङ्गध्वनिनिहितः = शब्दस्वरूपग्राहकेष्वन्तरङ्गैर्ध्वनिभिर्निहितः शब्दस्वरूपेऽध्यारोपितः कालभेदो व्यवहाराङ्गमेवेत्यर्थः। न हि यथा ज्ञानस्य सम्बन्धी विषयस्तथा शब्दस्य सम्बन्धिनो ध्वनयः। विवेकाविवेकाभ्यां वैषम्यात्। विषयाकारस्य शताद्यात्मकस्य = शतादिसंख्यामितस्य ज्ञानाकारादेकस्माद् विवेकेन संवेदनात्,

शब्दस्य ध्वनयः। विषयाकारस्य ज्ञाताद्यात्मकस्य ज्ञानाकाराद् विवेकेन संवेदनाच्छब्दध्वनीनां च विवेकात्। पूर्वपक्षे तु स्वरूपानिवेशी गजनिमीलितेन भेदनिर्भासः शङ्कितः। तथा च कार्यभेदानुपपत्तिश्चेदिता ॥ ६५ ॥

न केवलं ह्रस्वदीर्घादावेव शब्दतत्त्वमभिन्नम्, यावत् सर्वत्रैव पदवाक्यविषय इत्याह—

**एवं मात्रातुरीयस्य भेदो दाशतयस्य वा।**
**परिमाणविकल्पेन शब्दात्मनि न विद्यते ॥ ६६ ॥**

मात्रायाश्चतुर्थस्य भागस्यापचिततरध्वनिव्यङ्ग्यस्य, दश अवयवा येषां ते दशतयाः समुदायाः ऋगात्मानः, समूहस्य दाशतयस्य चतुष्षष्ट्यात्मकस्य वेदराशेः प्रचिततरध्वनिव्यङ्ग्यस्य कालपरिमाणभेदेन विशेषो नास्ति। द्वयोरपि शब्दयोर्नित्यत्वेन समानत्वाद् व्यञ्जकगतः केवलं कालभेद इत्यर्थः। तद्यथा हस्तिमशकज्ञाने स्वरूपेणैकरूपे अप्याकारोपप्लवाद् विलक्षणे इवानुभूयेते एवं

---

शब्दानां ध्वनीनाञ्च परस्परमविवेकात् = अभेदग्रहात्। पूर्वपक्षे तु शब्दस्वरूपानिवेशो भेदनिर्भासो गजनिमीलितेन शङ्कितः। तथा च = तथैव च सलिलस्रुतिरूपकार्यभेदानुपपत्तिश्चोदिता सम्भवति इति। इदञ्च सर्वं हेलाराजव्याख्यानमनुरुध्योक्तम्। अस्य प्रत्याख्यानन्तु प्रागेवोक्तम्—"वस्तुतस्तु नेदं युक्तमित्यादिना" इति ॥ ६५ ॥

न केवलं ह्रस्वदीर्घादावेव शब्दतत्त्वमभिन्नम्,अपितु सर्वत्रैव पदवाक्यविषयेऽपि इत्याह - एवं मात्रातुरीयस्येति।

अस्यार्थः—एवम् ह्रस्वदीर्घादाविव,मात्रतुरीयस्य = मात्रायाश्चतुर्थस्य भागस्य कल्पितस्यापचिततरध्वनिव्यङ्ग्यस्य, दाशतयस्य = दश अवयवा येषां ते दशतयाः समुदाया ऋगात्मानः, तेषां समूहस्य दशतयस्य चतुष्षष्ट्यात्मकस्य = चतुःषष्टिवर्णात्मकस्य वेदराशेर्वा प्रचिततरध्वनिव्यङ्ग्यस्य शब्दात्मनि परिमाणविकल्पेन कालपरिमाणभेदेन भेदो न विद्यते। शब्दाभिव्यञ्जकध्वनिगतस्तु कालपरिमाणभेदः शब्दे ध्वनितादात्म्याध्यासापन्ने भ्रान्त्या प्रतीयत इति।

अयं भावः—मात्रायाश्चतुर्थस्य भागस्यापचिततरध्वनिव्यङ्ग्यस्य, दश अवयवा येषां ते दशतयाः समुदाया ऋगात्मकाः, तेषां समूहस्य दाशतयस्य चतुःषष्टिवर्णात्मकस्य वेदराशेः प्रचिततरध्वनिव्यङ्ग्यस्य च कालपरिमाणभेदेन विशेषो नास्ति। मात्राचतुर्थभागदाशतयरूपयोर्द्वयोरपि शब्दयोर्नित्यत्वेन कालभेदासम्भवात् व्यञ्जकगतः केवलं कालभेद इत्यर्थः।

तद् यथा हस्तिमशकज्ञाने स्वरूपत एकरूपेऽपि आकारोपप्लवात् = स्वगतभेदारोपरूपविषयकृतोपप्लवात् विलक्षणे = भिन्ने इवानुभूयेते, एवं शब्दात्मा स्फोट-

शब्दात्मा स्फोटस्वभावः सर्वत्र पदवाक्यविषयेऽपि विलक्षणोऽभिव्यञ्जकभेदाद् विलक्षण इव चकास्ति ॥ ६६ ॥

यदि तर्हि ध्वनिभेदाद् ह्रस्वादिभेदः, कार्यभेदाभिधायिवृत्तिभेदोऽपि कथं स्यात्। ततश्च द्रुतायां तपरकरणे मध्यविलम्बितयोरुपसङ्ख्यानं कर्तव्यं स्यादित्याशङ्क्याह—

अनुनिष्पादिकल्पेन येऽन्तराल इव स्थिताः।
शब्दास्ते प्रतिपत्तॄणामुपायाः प्रतिपत्तये ॥ ६७ ॥

प्राकृतध्वनिभिरभिव्यक्ते शब्दतत्त्वेऽनुरणनरूपा ये पश्चात्कालभाविनो ध्वनयः सन्तानेन वर्तन्ते श्रोत्रान्तराल इव स्थिताः, शीघ्रसन्तानवर्तनात् ते श्रोत्रदेशमनुप्राप्ताः शब्दप्रचयग्रहणहेतुतां श्रोत्रगुणात् प्रतिपद्यमाना द्रुतादिवृत्तिभेदं रचयन्ति। ततश्च ते शब्दतत्त्वाद् बहिर्भूता न भिन्दन्ति तत्। तदुक्तम्—

"शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदं तु वैकृताः।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥" इति।
(वा० प० ब्र० ७७)

---

स्वभावः सर्वत्र = पदवाक्यविषयेऽपि नित्यत्वादविलक्षणोऽपि = कालभेदतत्प्रयुक्तवैलक्षण्यरहितोऽपि = अभिव्यक्तध्वनिगतकालभेदाद् विलक्षण इव चकास्ति ॥ ६६ ॥

ननु यदि ध्वनिभेदाद् ह्रस्वादिभेदो न स्वाभाविकः, तर्हि पानीयस्रुतिरूपकार्यभेदविधायिद्रुतादिवृत्तिभेदोऽपि शब्दतत्त्वे कथं स्यादिति कार्यभेददर्शनेन द्रुतादिवृत्तिभेदः शब्दतत्त्वे वस्तुभूतः स्वीकार्यः, ततश्च द्रुतायां तपरकरणे मध्यमबिलम्बितयोरुपसंख्यानं कर्तव्यं स्यादित्याशङ्क्याह अनुनिष्पादिकल्पेनेति।

अस्यार्थः अनुनिष्पादिकल्पेनेति भावप्रधानो निर्देशः। अनुनिष्पादिकल्पत्वेन = अनुनिष्पादिसादृश्येनानुरणनसादृश्येनेत्यर्थः। ये शब्दाः ध्वनयो वैकृताः शब्दस्याभिव्यक्तेरूर्ध्वं जायमानाः अनुनिष्पादिकल्पेन अनुरणनसादृश्येनोपलक्षिताः सन्तानेन वर्तमाना अपि, अन्तराले इव श्रोत्रान्तराले इव स्थितास्ते शब्दानां प्रचितत्वापचितत्वप्रतिपत्तये प्रतिपत्तॄणामुपाया इति।

अयं भावः -प्राकृतध्वनिभिरभिव्यक्ते शब्दतत्त्वेऽनुरणनरूपा ये पश्चात् कालभाविनो वैकृता ध्वनय उत्पत्तिदेशमारभ्य श्रोत्रपर्यन्तं सन्तानेन वर्तन्ते श्रोत्रान्तराले इव स्थिताः, ते शीघ्रं स्वसन्तानावर्तनात् श्रोत्रदेशमनुप्राप्ताः शब्दप्रचयग्रहणे = ज्ञाने हेतुतां श्रोत्रगुणात् = श्रोत्रानुकूल्यात् प्रतिपद्यमाना द्रुतादिवृत्तिभेदं रचयन्ति। ततश्च ते = द्रुतादयो वृत्तिविशेषाः शब्दतत्त्वाद् बहिर्भूता न भिन्दन्ति तत् = शब्दतत्त्वम्। तदुक्तम्—

शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥ इति। (वा० प० १।७७)

वार्त्तिकेऽप्युक्तम्—"सिद्धं त्ववस्थिता वर्णा वक्तुश्चिरवचनाद् वृत्तयो विशिष्यन्ते" ( भा० वा० १।१।७० ) इति ।। ६७ ।।

तदेवं जन्मवतां कालेनानवच्छेदाद् नित्यानां शब्दानां तदनुपपत्ति चोदयित्वा व्यञ्जकगतत्वेन समर्थितम् । इदानीं प्रकृतमेव कालस्य परोपाधिकं भेदव्यवहारं दर्शयति—

**विशिष्टमवधिं तं तमुपादाय प्रकल्पते ।**
**कालः कलावतामेकः क्षणमासर्तुभेदभाक् ।। ६८ ।।**

कलावतां सावयवानामनित्यानां भावानामवच्छेदकः कालो नियतपदार्थोदयाद्यवधिपरिग्रहेण लवमुहूर्तादिविभागव्यवस्थामासादयति ।। ६८ ।।

---

अस्यार्थः—प्राकृतध्वनिभिः शब्दस्याभिव्यक्तेरूर्ध्वं तु वृत्तिभेदे जननीये वैकृता ध्वनयोऽनुरणनरूपाः समुपोहन्ते संघत्य कारणानि भवन्ति, तैर्द्रुतादिवृत्तिभेदैः स्फोटात्मा = स्फोटस्वरूपम्, न भिद्यते, द्रुतादिवृत्तीनां शब्दतत्त्वाद् बहिर्भूतत्वादिति। वार्तिकेऽप्युक्तम्—"सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते;' इति । (म० भा० १।१।७०)

अस्यार्थः—सिद्धन्तु द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानमिति वचनं विनापि कार्यं सिद्धन्तु । यतो वर्णा अवस्थिताः = द्रुतादिवृत्तिभेदैर्वैकृतध्वनिधर्मैरविकृताः, वक्तुश्चिराचिरवचनाद् द्रुतादिवृत्तयो विशिष्यन्ते परस्परं भिद्यन्त इति । एवञ्च द्रुतादिवृत्तयो वैकृतध्वनिधर्माः शब्दतत्त्वाद् बहिर्भूता इति नास्ति उपसंख्यानस्यावश्यकतेति ।। ६७ ।।

तदेवं जन्मवतां ध्वनीनां कालेन नित्यानां शब्दानामनवच्छेदात् तदनुपपत्तिम् = एकस्यां वृत्तौ पाठे परस्यां वृत्तौ कार्यानुपपत्तिं चोदयित्वा कालभेदस्य च व्यञ्जकगतत्वेन समर्थितम् ।

इदानीं प्रकृतमेवैकस्य कालस्य परोपाधिकम् = क्रियोपाधिकं जन्यभावमात्रोपाधिकं वा भेदं व्यवहारे दर्शयति—विशिष्टमवधिमिति ।

अत्र कलावतामित्यस्मादुत्तरत्रावच्छेदक इति प्रथमान्तपदाध्याहारः ।

अस्यार्थः—एकोऽपि कालः विशिष्टम् = विलक्षणम्, तं तमवधिम्- सूर्योदयसूर्यास्तमयादिरूपमवधिमुपादाय क्षणमासर्तुभेदभाक् सन् कलावतां सावयवानामनित्यानां भावानामवच्छेदकः प्रकल्पते = सम्पद्यत इति ।

अयं भावः—कलावतां सावयवानामत एवानित्यानां भावानामवच्छेदकः एकोऽपि कालो नियतसूर्यादिपदार्थोदयाद्यवधिपरिग्रहेण लवमुहूर्तमासादिविभागव्यवस्थां प्राप्नोति ।

वस्तुतः काल एक एव व्यवहारे क्षणमासादिरूपभेदस्तु औपाधिक इति तत्त्वम् ।। ६८ ।।

तथापि नैषा व्यवस्था भाविकीत्याह—

**बुद्धचवग्रहभेदाच्च व्यवहारात्मनि स्थितेः।**
**तावानेव क्षणः कालो युगमन्वन्तराणि वा ॥ ६९ ॥**

क्षणसन्तानो यावान् सङ्कलनाबुद्ध्यैकत्वेन गृह्यते, तावानेकः कालो मासादिरूपो व्यवस्थाप्यते। अपचयकाष्ठागतस्तु क्षण इत्युपचयकाष्ठाप्राप्तो मन्वन्तरमित्यादीति भावतो द्रव्यभूतस्यैकत्वेऽपि कालस्य कल्पनेयं बौद्धी। बुद्धचानुसंहारकालपक्षे तु मुख्यैवेयम् ॥ ६९ ॥

ननु नालिकास्रुत्या क्षणाहोरात्रादिकालव्यवहार इति सैवास्तु कालः किमपरेण तेन कल्पितेनेत्याशङ्कचाह—

**प्रतिबन्धाभ्यनुज्ञाभ्यां नालिकाविवराश्रिते।**
**यदम्भसि प्रक्षरणं तत्कालस्यैव चेष्टितम् ॥ ७० ॥**

---

यद्यपि 'कालः कलावतामेकः क्षणमासर्तुभेदभाक्' (६८) इत्युक्तम्, तथापि नैषा व्यवस्था भाविकी = वास्तवी इत्याह—**बुद्धचवग्रहभेदाच्चेति**।

अस्यार्थः—बुद्धचवग्रहभेदाच्च = संकलनात्मिकया बुद्धचा यः क्षणानामेकत्वेनावग्रहो ग्रहणं तस्माच्च, तस्मात् तु यावान् यत्परिमाणकः कालो व्यवहारात्मनि स्थितः, तावानेव क्षणः कालोऽपकर्षकाष्ठां प्राप्तः, युगमन्वन्तराणि वा तावानेव कालः प्रचयकाष्ठां प्राप्तः। एवञ्च सङ्कलनात्मकबुद्धिपरिकल्पित एवैकस्य कालस्य क्षणमासादिरूपैर्नानात्वव्यवहारः, न तु वास्तव इति सिद्धम्।

अयं भावः—जन्यभावानां यावान् क्षणसन्तानः सङ्कलनात्मिकया बुद्धचा एकत्वेन गृह्यते, तावान् एकः काल उपचयापचयतारतम्येन मासादिरूपो व्यवस्थाप्यते। अपचयकाष्ठां प्राप्तस्तु क्षण इति, उपचयकाष्ठां प्राप्तो मन्वन्तरमित्यादीति भावतः = वस्तुतो द्रव्यभूतस्य कालस्यैकत्वेऽपि इयं कालस्य मासयुगादिरूपत्वकल्पना बौद्धी = बुद्धिकृता, न तु मुख्या। बुद्धचा जन्यभावानामनुसंहारः = समूहीकरणं काल इति पक्षे तु मुख्यैवेयं मासादिकल्पना इति ॥ ६९ ॥

ननु नालिकाविवरविनिःसृतपानीयस्रुत्या क्षणाहोरात्रादिव्यवहार इति सैवास्तु कालः, किमपरेण कल्पितेन कालेनेत्याशङ्कचाह—**प्रतिबन्धाभ्यनुज्ञाभ्यामिति**।

अस्यार्थः—नालिकाविवराश्रितेऽम्भसि यत् प्रतिबन्धाभ्यनुज्ञाभ्यामुपलक्षितं प्रक्षरणम् = कस्यचिदम्भो भागस्य प्रक्षरणं प्रतिबद्धम्, कस्यचित् त्वभ्यनुज्ञातम्, न तु नालिकाविवराश्रितस्य सर्वस्यैवाम्भसः प्रक्षरणं प्रतिबद्धमभ्यनुज्ञातं वा, तत् कालस्यैव चेष्टितम्। नालिकाविवराश्रितपयःस्रुतेरपि प्रतिबन्धकोऽभ्यनुज्ञापकश्च कालः स्वीकार्य एवेति हृदयम्।

७५

घटिकोभयवर्तिनोऽम्भसश्छिद्रान्निस्सरतो यत् कस्यचिद् भागस्य पूर्वं निस्सरणमपरस्य तदैवानिस्सरणम्, तत् कालकृतशक्तिप्रतिबन्धाभ्यनुज्ञासामर्थ्यम्।

अन्यथा गुरुत्वादम्भोऽवयवी समस्तावयवव्यापी युगपन्निर्गच्छेत्। क्रमेण तु निस्सरणात् कालोऽत्र सव्यापारो व्यतिरिक्त इति नाम्भःस्रुतिरेव कालः। तत्परिच्छेदिका त्वसौ। सा हि निमेषक्रियया प्राणप्रवाहेण बुद्धिक्षणसन्तानेन वा परिच्छिन्ना तदपरकालपरिच्छेदायालम्। निमेषादिरपि सूक्ष्मेण क्रमरूपेण कालेन परिच्छिन्न इति क्रमाख्या कालशक्तिः सूक्ष्मरूपानुस्यूता सर्वभावेष्वशक्यप्रतिक्षेपानुभूयमानत्वात्। सर्वा हि संवित् क्रमरूपाच्छुरितेति अक्रमं परं तत्त्वमग्नीषोमस्वभावं सोमसूर्यादिरूपविवर्तदशावलम्बनेनाविरतपरिवर्तं प्राणिनामनुग्रहोपघाताय जगदण्डवृत्तिमातनुते। एतच्च वाक्यपदीये विस्तरेणास्माभिर्निर्णीतम् ॥ ७० ॥

कालस्य तर्ह्येकरूपत्वाच्छिद्रापचयोपचयाभ्यामम्भःस्रुतेस्तद्भेदः कथमव-

---

अयं भावः—घटिकोदरवर्तिनोऽम्भसश्छिद्रान्निःसरतः कस्यचिद् भागस्य यत् पूर्वं निःसरणमपरस्य तदैवानिःसरणम्, तत् कालकृतशक्तिप्रतिबन्धाभ्यनुज्ञासामर्थ्यम् = कालकृते येऽम्भसि प्रक्षरणशक्तेः प्रतिबन्धाभ्यनुज्ञे तयोः सामर्थ्यं शक्तिः काले इति।

अन्यथाऽम्भोऽवयवी समस्तावयवव्यापी गुरुत्वाद् युगपन्निर्गच्छेत्। क्रमेण तु तस्य निःसरणाद् विज्ञायते, कालोऽत्र = क्रमेणाम्भसो निःसरणे सव्यापार इति ततो व्यतिरिक्त इति नाम्भःस्रुतिरेव कालः। कालपरिच्छेदिका त्वसौ = अम्भःस्रुतिः। सा हि = अम्भःस्रुतिर्हि निमेषरूपया क्रियया, प्राणप्रवाहेण बुद्धिक्षणसन्तानेन = क्षणिकानां बुद्धीनां सन्तानेन = सन्ततेन समूहेन वा परिच्छिन्ना सती तदपरकालपरिच्छेदाय = तस्या अम्भःस्रुतेरपरोऽन्यो यो कालस्तस्य परिच्छेदाय अलम् = प्रभुः—पर्याप्ता। अम्भःस्रुतेः परिच्छेदको निमेषादिरपि सूक्ष्मेण क्रमरूपेण कालेन परिच्छिन्न इति क्रमाख्या कालशक्तिः सूक्ष्मरूपा सर्वभावेषु अनुस्यूताऽशक्यप्रतिक्षेपा = अशक्यनिरासा, अनुभूयमानत्वात्। सर्वा हि संवित् क्रमरूपाच्छुरिता = क्रमरूपेणाविद्यया स्वस्मिन्नध्यारोपितेन व्याप्ता इति वस्तुतोऽक्रमं परं तत्त्वमग्नीषोमस्वभावम् = अग्नीषोमवत् प्रकाशस्वभावमन्यस्यापि प्रकाशकम्, सोमसूर्यादिरूपस्वविवर्तदशावलम्बनेनाविरतपरिवर्तम् = सततं परिवर्त्तमानम्, प्राणिनामनुग्रहोपघाताय = प्राणिनामनुग्रहाय = उपघाताय = निग्रहाय च जगदण्डवृत्तिम् = जगदण्डे प्राणिनां प्रसवपालनसंहारफलकं व्यापारमातनुते = प्रकुरुते। एतच्च वाक्यपदीयटीकायां शब्दप्रमायां विस्तरेण श्रीहेलाराजेन निर्णीतमिति ॥ ७० ॥

एवं तर्हि कालस्यैकरूपत्वाद् घटिकाच्छिद्रोपचयापचयाभ्यां जायमानाया

धार्यंत इत्याशङ्क्याह—

अल्पे महति वा छिद्रे तत्सम्बन्धे न भिद्यते ।
कालस्य वृत्तिरात्मापि तमेवास्यानुवर्तते ।। ७१ ।।

अल्पेन नालिकाच्छिद्रेणाम्भःसम्बन्धे सति कालस्य व्यापारः प्रतिबन्धाभ्यनुज्ञालक्षणो न भिद्यते, नापि महता छिद्रेणाम्भःसम्बन्धे सति । एवमपि च कालात्माभिन्नरूपोऽपि तमेव छिद्रसम्बन्धमनुवर्तते । तदनुवर्तनाच्चायमल्पच्छिद्रे प्रतिबन्धाभ्यनुज्ञाबाहुल्याद् दीर्घः कालोऽवधार्यते ।

अयमर्थः—अभेदेऽप्यत्र कालस्य छिद्रविशेषसम्बन्धोपधीयमानो भेदोऽवधार्यत इति । अत एव घटिकावरुद्धमम्भो न पतति, छिद्रमुक्तं तु पततीति किं कालेन कार्यमिति न वाच्यम्, मूलभूतस्य कालव्यापारस्याप्रत्याख्येयत्वात् । य एवोपहितप्रतिबन्धाभ्यनुज्ञे कालकृते, त एव घटिकावयवच्छिद्राभ्यामनुविधीयेते । यथा

---

अम्भःस्रुतेर्हेतोस्तद्भेदः = कालभेदः कथमवधार्यत इत्याशङ्क्याह—अल्पे महति वेति ।

अस्यार्थः --घटिकायाश्छिद्रेऽल्पे महति वा तत्सम्बन्धे अम्भःसम्बन्ध सति कालस्य वृत्तिः अम्भःप्रक्षरणशक्तेः प्रतिबन्धाभ्यनुज्ञालक्षणो व्यापारो न भिद्यते । तथा अस्य कालस्यात्मापि = स्वरूपमपि, तमेव अम्भसश्छिद्रसम्बन्धमेवानुवर्तते । तदनुवर्तनाच्च अल्पच्छिद्रे प्रतिबन्धाभ्यनुज्ञा बाहुल्याद् दीर्घः कालोऽवधार्यते । महति च्छिद्रे प्रतिवन्धाभ्यनुज्ञाल्पत्वाद् अल्पः कालोऽवधार्यत इति ।

अयं भावः --अल्पेन नालिकाच्छिद्रेण प्रसर्पतः पयसः सम्बन्धे सति कालस्य व्यापारः प्रतिबन्धाभ्यनुज्ञालक्षणो न भिद्यते स्वरूपतः, अल्पत्वबहुत्वाभ्यां तु भिद्यते । नापि महता च्छिद्रेणाम्भःसम्बन्धे सति तस्य वृत्तिः स्वरूपतो भिद्यते । एवमपि च कालात्माऽभिन्नरूपोऽपि तमेव छिद्रसम्बन्धमनुवर्तते । तदनुववर्तनाच्चाल्पच्छिद्रे प्रतिबन्धाभ्यनुज्ञाबाहुल्यादयं दीर्घः कालोऽवधार्यते । महति छिद्रे तु प्रतिबन्धाभ्यनुज्ञाऽल्पत्वादल्पः कालोऽवधार्यंत इति ।

अयमर्थोऽत्राभिप्रेतः—कालस्याभेदेऽपि अत्र = काले छिद्रविशेषसम्बन्धोपधीयमानः कालस्य भेदोऽवधार्यत इति । अत एव निश्छिद्रघटिकावरुद्धमम्भो न पतति, छिद्रमुक्तं तु पततीति किं कालेन कार्यमिति शङ्का तु न कार्या, मूलभूतस्य कालव्यापारस्य प्रतिबन्धाभ्यनुज्ञालक्षणस्याप्रत्याख्येयत्वात् । य एवोपहितप्रतिबन्धाभ्यनुज्ञे = अल्पत्वबाहुल्योपहिते प्रतिबन्धाभ्यनुज्ञे कालकृते तु एवाल्पत्वमहत्त्वपरिमिताभ्यां घटिकावयवच्छिद्राभ्यामनुविधीयेते = अम्भःप्रक्षरणमनुविधीयेते । यथा बीजस्याङ्कुरजनने कालकृते प्रतिबन्धाभ्यनुज्ञे कुसूलक्षेत्राभ्यां यथासंख्यं

बीजस्याङ्कुरजननप्रतिबन्धाभ्यनुज्ञे कालकृते कुसूलक्षेत्राभ्यां पोष्यते। अत एवात्मापि तमेवास्यानुवर्तत इत्युक्तम्। दृष्टस्य हि कारणस्य कालशक्तेश्च परस्परमानुगुण्यात् साहभाव्ये नैकतरावलम्बनेनेतरप्रतिक्षेपो न्याय्यः ॥ ७१ ॥

किं बहुना, स्वशक्तिवैचित्र्यादभिन्नोऽपि कालात्मा सर्वत्र भावेषु भेदमादर्शयतीत्याह—

**आक्रीड इव कालस्य दृश्यते यः स्वशक्तिभिः।**
**बहुरूपस्य भावेषु बहुधा तेन भिद्यते ॥ ७२ ॥**

कालमुखप्रेक्षित्वाद् भावानामसौ प्रभुरेतैराक्रीडैराक्रीडमानस्तदुन्मज्जननिमज्जने डोलाक्रीडावत् सम्पादयन् वर्तमानादिरूपवैचित्र्येण स्वसामर्थ्याध्यासितमात्मभेदमुद्दर्शयति ॥ ७२ ॥

---

पोष्येते। अत एव "आत्मापि तमेवास्यानुवर्तते" इत्युक्तम्। दृष्टस्य हि कारणस्य कालशक्तेश्च परस्परमानुगुण्यात् साहभाव्ये = परस्परसहकारित्वे स्थिते सति नैकतरावलम्बनेन इतरप्रतिक्षेपो न्याय्यः। तथा चाम्भःस्रुतेः प्रतिबन्धाभ्यनुज्ञे कालकृते घटिकावयवच्छिद्रकृते चेति नैकतरेणेतरस्य वैयर्थ्यमिति ॥ ७१ ॥

किं बहुना, अभिन्नोऽपि कालात्मा स्वशक्तिवैचित्र्याद् भावेषु स्वभेदमादर्शयतीत्याह—**अकाण्ड इव कालस्येति।**

अस्यार्थः—एकस्यापि कालस्य स्वशक्तिभिर्बहुरूपस्य यो भावेषु बहुधा आक्रीड इव दृश्यते तेनोपाधिभूतेन कालो भिद्यते। यथा वासन्तीविकासेन वसन्तकालः कुन्दप्रसवेन माघमासः, हंसागतिंरवाभ्यां शरत्कालः, मयूरनृत्येन केकया च मधुरया वर्षाकालः, सूर्यस्य गतिविशेषैरयनभेद इत्यादिकं कालस्याक्रीडोदाहरणम्।

पुनरपि रजनी पुनरपि दिवसः सायं प्रातः पुनरायातः।
कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः ॥
(चर्पट-मञ्जरी)

इत्यप्युदाहरणमिति।

अयं भावः—भावानां कारणशक्तिप्रतिबन्धाभ्यनुज्ञयोः कालकृतत्वेन तेषां कालमुखप्रेक्षित्वेनैतेषां प्रभुः काल एतैराक्रीडैराक्रीडमानो भावानामुन्मज्जननिमज्जने डोलाक्रीडावत् सम्पादयन् स्वसामर्थ्याध्यासितं वर्तमानादिरूपवैचित्र्येणात्मभेदमुद्दर्शयतीति।

एतदुक्तं भवति—कार्यभेदेन शक्तिभेदानुमानम्, शक्तिभेदेन च कालभेदः। शक्तेश्च कार्योन्मुख्यं प्राणिनां प्रारब्धेन भोगादृष्टेनेति ॥ ७२ ॥

तथा हि—

त्वचिसारस्य वा वृद्धिं तृणराजस्य वा दधत् ।
तावत् तद्वृद्धियोगेन कालतत्त्वं विकल्पते ।। ७३ ।।

तावदेव तत्परिमाणमेव कालतत्त्वं प्रतिबन्धाभ्यनुज्ञामात्रहेत्वभिन्नं वंशस्य वेणोः क्रमेण फलप्रसवपर्यन्तां वृद्धिमुपचयं सम्पादयत् ततोऽधिकतरां तालस्य वृद्धिं जनयत्, तेन वृद्धिसम्बन्धभेदेन भावेष्वाक्रीडभूतेन भिद्यते । तथा च वंशस्य वृद्धिपर्यन्तः कालोऽल्पः, तालस्य तु भूयानवतिष्ठते । एवमन्यत्रापि भावेषु जन्मस्थितिविनाशावस्थाभेदसम्बन्धेन कालविभाग उदाहार्यः ।। ७३ ।।

यदि तहर्यवस्थाभेदात् कालभेदः, अवस्थाविनाशादपि तस्य विनाशे नित्यत्वं न स्यादित्याशङ्क्याह—

---

स्वशक्तिभिः स्वशक्तिजन्यभावक्रियाभिश्चैकस्यापि कालस्य भेद इत्येतदुदाहरणमुखेन प्रदर्शयति—त्वचिसारस्य वेति ।

अस्यार्थः— तावत् तत्परिमाणमेव, कालतत्त्वम् = कालस्वरूपम्, त्वचिसारस्य = वंशस्य वा क्रमेण वृद्धिं दधत्, तृणराजस्य = तालस्य वा क्रमेण वृद्धिं दधत् । तद्वृद्धियोगेन तयोर्वंशतालयोर्यथायथं वृद्धियोगेन कालतत्त्वं विकल्पते = विकल्पितं भवति, भिद्यत इति यावत् । तथा च वंशस्य फलपर्यन्तया वृद्धया योगेन कालाल्पत्वम्, तालस्य तु फलपर्यन्तया वृद्धयायोगेन कालभूयस्त्वमिति एकस्यापि कालस्य भेद इति ।

अयं भावः—तावदेव = तत्परिमाणमेव, कालतत्त्वं प्रतिबन्धाभ्यनुज्ञामात्रहेत्वभिन्नम् = प्रतिबन्धाभ्यनुज्ञामात्रयोः स्वव्यापारयोर्हेतुभूतमभिन्नम्, वंशस्य वेणोः क्रमेण फलप्रसवपर्यन्तां वृद्धिं सम्पादयत्, ततोऽप्यधिकतरां तालस्य वृद्धिं जनयत्, तेन तयोर्वृद्धिसम्बन्धभेदेन भावेषु कालस्याक्रीडभूतेन भिद्यते । तथा च वंशस्य वृद्धिपर्यन्तः कालोऽल्पः, तालस्य तु भूयानवतिष्ठते, एवमन्यत्रापि भावेषु जन्मस्थितिविनाशावस्थाभेदसम्बन्धेन कालविभाग उदाहार्यः । तद्यथा जन्मभेदेन कालभेदः । गौर्दशमे मासि प्रसूते, महिषी त्वेकादशे इति ।

स्थितिभेदेन कालभेदो यथा— शाल्मलितरुश्चिरं तिष्ठति, सञ्जीवनतरुस्तु अचिरमिति ।

विनाशभेदेन कालभेदो यथा—मृद्घटः क्षिप्रं नश्यति, सुवर्णघटस्तु चिरेणेति ।

अवस्थाभेदेन कालभेदो यथा—एकसाप्ताहिको नवोऽयं घटः, षाण्मासिकः पुराणोऽयं घट इति ।। ७३ ।।

व्यतिक्रमेऽपि मात्राणां तस्य नास्ति व्यतिक्रमः ।
न गन्तृगतिभेदेन मार्गभेदोऽस्ति कश्चन ॥ ७४ ॥

कालाधिकरणत्वाद् भावानां तदवस्थानां चापगमेऽपि नाधारापगमः; यथा गन्तॄणां तद्गमनानां चोपरमेऽपि मार्गोऽध्वा नापैति । क्रियाव्युपरमादेव हि वसन्तादिकालोपरमो व्यवह्रियते परम् । न तु वस्तुतः कालोऽपैति, नित्यत्वात् ॥ ७४ ॥

तथा हि—

उदयास्तमयावृत्त्या ज्योतिषां लोकसिद्धया ।
कालस्याव्यतिपातेऽपि तार्द्धर्म्यमिव लक्ष्यते ॥ ७५ ॥

सूर्यादिसञ्चारोपनीतविभागः कालात्मेति तदपगमादेवानपयन्नपि व्यपगत इवावधार्यते गतमहो व्युष्टा रजनी, निर्गतः शिशिर इति ॥ ७५ ॥

---

ननु यद्यवस्थाभेदात् कालभेदस्तर्हि अवस्थाविनाशादपि तस्य विनाशे नित्यत्वं तस्य न स्यादित्याशङ्क्याह—व्यतिक्रमेऽपि मात्राणामिति ।

अस्यार्थः—मीयन्ते = प्रमीयन्ते परिच्छिद्यन्ते वा भावा याभिरिति मात्रा भावानामवस्थाः, तासां व्यतिक्रमे विनाशादपगमेऽपि तस्य मात्राणामाधारभूतस्य कालस्य व्यतिक्रमो विनाशादपगमो नास्ति । तद्यथा—गन्तॄणां गतिभेदेन कश्चन मार्गभेदो नास्ति । तथा च वसन्तादिकालपरिच्छेदिकानामादित्यग्रहनक्षत्रादिक्रियाणां मृगशकुन्तस्थावरादिव्यापाराणाञ्चोपरमेण वसन्तादिकालोपरमः केवलं व्यवह्रियतं, न तु वस्तुतः कालस्योपरमः, कालनित्यत्वादिति ।

अयं भावः—भावानामवस्थानाञ्च कालाधिकरणकत्वे न तेषामुभयेषामपगमेऽपि न तदाधारस्य कालस्यापगमः । यथा—गन्तॄणां तद् गमनक्रियाणाञ्चोपरमेऽपि मार्गो नापैति । आदित्यादिक्रियाव्युपरमादेव हि वसन्तादिकालोपरमः केवलं व्यवह्रियते, न तु वस्तुतः कालोऽपैति, नित्यत्वादिति । न हि क्रियाभेदेन तदाधारभेदो वस्तुभूतः क्वचिद् दृष्ट इति, तत्तत्क्रियाभिन्नस्य कालस्य क्रियापगमेऽपगमो व्यावहारिक एव, न वस्तुसन्निति ॥ ७४ ॥

उक्तमेवार्थमुपपत्त्या विशदीकरोति—उदयास्तमयावृत्त्या इति ।

अस्यार्थः—ज्योतिषां सूर्यादीनां लोकसिद्धया उदयास्तमयावृत्त्या अहोरात्रादिरूपैर्विभक्तस्य कालस्य नित्यस्याव्यतिपातेऽपि = अनपगमेऽपि तदुपाधिभूतानां सूर्यादिक्रियाणामपगमात् तार्द्धर्म्यमिव = व्यपगमधर्मवत्त्वमिव लक्ष्यते । इवशब्दस्तार्द्धर्म्यस्यावस्तुभूतत्वमवद्योतयति ।

अयं भावः—सूर्यादिसञ्चारोपनीतविभागः = सूर्यादिक्रियोपहितभेदः कालात्मा इति तदपगमादेव = सूर्यादिसञ्चारापगमादेव अनपयन्नपि = अनपगच्छन्नपि व्यपगत

यतश्च ज्योतिर्गत्या कालनानात्वव्यवहारः, ततः सैव काल इत्यर्वाग्दर्शनाः केचिद् मन्यन्त इत्याह—

आदित्यग्रहनक्षत्रपरिस्पन्दमथापरे ।
भिन्नमावृत्तिभेदेन कालं कालविदो विदुः ॥ ७६ ॥

उदयावधिरस्तमयावसानः सूर्यसञ्चारो दिवसः । अस्तमयादिरुदयपर्यवसानो रात्रिः कालः । स च पञ्चदशावृत्तिः पक्षः । त्रिंशत्कृत्वो मासः । चन्द्रमसः सकलनक्षत्रातिक्रमो मास इत्येवं वा कल्पना । बृहस्पतेरेकराशिसञ्चरणं संवत्सरः । एवमन्येषामपि ग्रहनक्षत्राणां ज्योतिषशास्त्रप्रसिद्धेन गतिप्रचारभेदेन युगमन्वन्तरकल्पमहाकल्पादिप्रविभागः कालोऽनुसर्तव्यः ॥ ७६ ॥

तदेवमेषां क्रिया कालः प्रसिद्धा सती क्रियान्तरमप्रसिद्धं परिमापयतीत्याह—

क्रियान्तरपरिच्छेदे प्रवृत्ता या क्रियां प्रति ।
निर्ज्ञातपरिमाणा सा काल इत्यभिधीयते ॥ ७७ ॥

---

इवावधार्यते । व्युष्टा = व्यतीता रजनी, निर्गतः शिशिर इति ॥ ७५ ॥

यतश्च ज्योतिर्गत्या कालनानात्वव्यवहारः, ततः सैव = ज्योतिर्गतिरेव काल इत्यर्वाग्दर्शनाः = बाह्यदृष्टयः केचिद् मन्यन्त इत्याह—आदित्यग्रहनक्षत्रेति ।

अस्यार्थः—अथेति पक्षान्तरे । अपरे कालविदः आवृत्तिभेदेन भिन्नमादित्यग्रहनक्षत्रपरिस्पन्दं तत् क्रियारूपमेव कालं विदुः । अत्रादित्यस्य ग्रहत्वेऽपि ब्राह्मणवसिष्ठन्यायेन पृथगुक्तिः । ग्रहाश्च नव—आदित्यसोमादयः सप्त, राहुकेतू द्वाविति । नक्षत्राणि अश्विन्यादयः सप्तविंशतिरिति ।

अयं भावः—सूर्योदयमारभ्य सूर्यास्तमयपर्यन्तमावृत्त्या भवन् सूर्यसञ्चारो दिवसः । अस्तमयादिरुदयावसानः कालो रात्रिः । स च पञ्चदशावृत्तिकः पक्षः । त्रिंशदावृत्तिको मासः । यद्वा चन्द्रमसः सकलनक्षत्रातिक्रमो मास इत्येवं कल्पना । बृहस्पतेरेकराशिसञ्चरणं संवत्सरः । मासानां द्वादशावृत्त्या वा । एवमन्येषामपि ग्रहनक्षत्राणां ज्यौतिषशास्त्रे प्रसिद्धेन गतिप्रचारभेदेन युगमन्वन्तरकल्पमहाकल्पादिप्रविभागः कालोऽनुसर्तव्य इति ॥ ७६ ॥

तदेवमेषां मते काचन क्रिया सूर्यादिसञ्चाररूपा कालत्वेन प्रसिद्धा सती क्रियान्तरमध्ययनादिकं तत्त्वेनाप्रसिद्धं परिमातीत्याह—क्रियान्तरपरिच्छेदे इति ।

अस्यार्थः—क्रियान्तरपरिच्छेदे प्रवृत्ता या क्रिया सूर्यादिसञ्चाररूपा दिवसादिपदवाच्या सा काल इत्यभिधीयते । किञ्च या क्रिया गोदोहनादिरूपाऽन्यतो निर्ज्ञातपरिमाणा सा क्रियामासनादिकां प्रति काल इत्यभिधीयते । आद्यायाः उदाहरणम्—'दिवसमधीते, रात्रिमधीते' इति । द्वितीयाया उदाहरणम्—'गोदोहमास्ते' इति ।

सूर्यादीनां गतिप्रचारो दिवसादिशब्दवाच्यः। गोदोहादिक्रियाविशेषश्च परिच्छिन्नपरिमाणत्वात् तदपरा प्रसिद्धपरिमाणास्यादिक्रियाविशेषपरिच्छेदहेतुत्वात् कालाख्यामासादयति। दिवसमधीते। रात्रिमधीते। गोदोहमास्ते। क्रियान्तरपरिच्छेदे प्रवृत्तेत्यनेनैव गतत्वात् क्रियां प्रतीति पुनर्वचनमपेक्षाभेदेन क्रियायाः कालत्वानियमख्यापनार्थम्। तथा चान्यतः प्रसिद्धपरिमाणो गोदोहनादिरपि देवदत्तादिगतास्यादिक्रियाः परिच्छिन्दन् भवत्येव कालः॥ ७७॥

अन्तर्मुखोऽपवरकान्तर्गतः सूर्यादिसञ्चारं नालिकास्रुतिं चानवधारयन् कथं कालप्रविभागमवैतीत्याह—

**ज्ञाने रूपस्य सङ्क्रान्तिर्ज्ञानेनैवानुसंहृतिः।**
**अतः क्रियान्तराभावे सा क्रिया काल इष्यते॥ ७८॥**

---

अयं भावः– सूर्यादीनां गतिरूपः प्रचारो दिवसादिपदवाच्यः कालः। गोदोहनादिरूपः क्रियाविशेषश्च कालत्वेनाप्रसिद्धोऽपि सूर्यादिसञ्चारात् कालत्वेन प्रसिद्धादन्यतो गमनादिक्रियया उपलक्षणीभूतया विशेषणीभूतया वा परिच्छिन्नपरिमाणकत्वात् तदपरा प्रसिद्धपरिमाणास्यादिक्रियाविशेषपरिच्छेदहेतुत्वात् = गोदोहनातिरिक्ता प्रसिद्धपरिमाणकामनादिक्रियाविशेषपरिच्छेदहेतुत्वात् कालाख्यां लभते। 'दिवसमधीते, रात्रिमधीते, गोदोहमास्ते' इति। क्रियान्तरपरिच्छेदे प्रवृत्तेत्यनेनैव गतार्थत्वात् क्रियां प्रतीति पुनर्वचनमपेक्षाभेदेन क्रियायाः कालत्वानियमख्यापनार्थम् = अपेक्षाविशेषप्रयुक्तो यः क्रियायाः कालत्वनियमः सूर्यादिसञ्चार एव काल इत्येवंरूपः सूर्यादिसञ्चाररूपक्रियाविशेषापेक्षस्तदभावख्यापनार्थम्। तथा चान्यतः = सूर्यादिसञ्चारादन्यतो गमनादिक्रियात उपलक्षणाद् विशेषणाद्वा प्रसिद्धपरिमाणो गोदोहनादिरपि देवदत्तादिगता सनादिक्रियाः परिच्छिन्दन् कालो भवत्येव।

अत एव 'गोदोहमास्ते' इत्यत्र "कालाध्वनोरत्यन्तसंयोगे" (पा० २।३।५) इति सूत्रेण गोदोहस्य कालत्वेन कर्मत्वम्। "अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्" (वा० १।४।५१) इति वार्तिकं तु न कर्तव्यम्। "कुरून् स्वपिति, मासमास्ते, गोदोहमास्ते, क्रोशमास्ते" इत्यादौ देशादीनां कर्मत्वं तु धातूनां स्वार्थकरणके व्यापने लक्षणया कुरून् स्वपिति इत्यस्य स्वापेन कुरून् व्याप्नोतीत्यर्थः। एवमन्येषामपि कर्मत्वं निर्वहतीति इदं वार्तिकं न कर्तव्यमिति॥ ७७॥

अन्तर्मुखः (बहिःक्रियामनवधारयन्) अपवारकान्तर्गतः, अत एव सूर्यादिसञ्चारं नालिकास्रुतिञ्चानवधारयन् कथं कालप्रविभागमवैति इत्याशङ्कायामाह—**ज्ञाने रूपस्येति।**

अन्तर्मुखोऽपि प्रकृतां काञ्चिदेव प्राणप्रवाहादिरूपां क्रियां बुद्धौ सङ्क्रान्ताकारामवैति। बुद्ध्यन्तरैश्च तान् बुद्धिनिवेशिनः क्रियाक्षणान् सङ्कलयति। तथा च बाह्यक्रियाभावेऽपि बुद्धिनिवेशिनीयं क्रिया बाह्यापरक्रियापरिच्छेदकत्वात् काल इत्युच्यते।

तथा हि भूयसीनां बुद्धीनामुदये बाह्ये चिरकालत्वमवैति, अल्पीयसीनामुदये क्षिप्रकालत्वमिति। प्राणचारेण च कलयन्त्येवार्थान् योगिनः, अन्येऽपि प्राणक्षणगणनयेति प्रसिद्धमेतत्।

तथा हि षष्ट्युत्तरशतत्रयावधिप्राणप्रचारनालिकाकलनया सहस्राण्येकविंशतिः षट्शतानि चाहोरात्रगणनामाहुः ॥ ७८ ॥

यदि तर्हि क्रियातिरिक्तो नास्ति कालः, तदा सत्ताख्यायाः क्रियायाः

---

अस्यार्थः—ज्ञाने रूपस्य बाह्यस्य क्रियाकारस्य सङ्क्रान्तिः प्रतिबिम्बनम्, किञ्च ज्ञाने सङ्क्रान्तानां क्रियारूपाणां ज्ञानेनैव बुद्ध्यन्तरेणैवानुसंहृतिः बुद्धौ सङ्कलनया समूहीकरणम्, अतः क्रियान्तराभावे बाह्यक्रियाणामभावे सा क्रिया ज्ञानरूपा काल इष्यते।

वस्तुतस्तु तदानीमपि प्राणादिक्रियाऽस्त्येवेति तत्त्वमिति।

अयं भावः—अन्तर्मुखोऽपि प्रकृताम्=तदानीं वर्तमानां काञ्चिदेव प्राणप्रवाहादिरूपां क्रियां बुद्धौ सङ्क्रान्ताकाराम्=प्रतिबिम्बितामवैति। तांश्च बुद्धिनिवेशिनः क्रियारूपान् क्षणान् बुद्ध्यन्तरैः सङ्कलयति। तथा च क्रियान्तरपरिच्छेदिकाया बाह्यक्रियाया अभावेऽपि बुद्धिनिवेशिनीयं प्राणप्रवाहादिरूपा क्रिया बाह्यायाः परस्याः क्रियायाः परिच्छेदकत्वात् काल इत्युच्यते।

तथा हि—भूयसीनां बुद्धीनामुदये बाह्येऽर्थे चिरकालिकत्वमवैति, अल्पीयसीनां तासामुदये सति तत्र क्षिप्रकालिकत्वमवैतीति। प्राणचारेण च यथायथं कलयन्त्येव चिरकालिकत्वेन क्षिप्रकालिकत्वेन चार्थान् योगिनः, अन्येऽपि=योगिव्यतिरिक्ता अपि प्राणक्षणगणनयाऽर्थानां चिरकालिकत्वं क्षिप्रकालिकत्वञ्चावयन्तीति प्रसिद्धमेतत्।

तथा हि—षष्टयुत्तरशतत्रयावधिप्राणप्रचारनालिकाकलनया सहस्राण्येकविंशतिः षट्शतानि चाहोरात्रगणनामाहुः=षष्टयुत्तरशतत्रयावधिः प्राणप्रचारो यासु प्रत्येकं ता नालिका घटिकाः षष्टिसंख्याकास्तासु प्राणप्रचाराणां कलनया एकविंशतिः सहस्राणि षट्शतानि च प्राणप्रचारा भवन्ति इत्येवमहोरात्रगणनामाहुर्गणका इति ॥ ७८ ॥

यदि तर्हि क्रियातिरिक्तो नास्ति कालः, तदा सत्ताख्यायाः क्रियायाः स्वपरिच्छेदकेन सत्तान्तरेण क्रियाभूतेन योगाभावाद् भूता सत्तेति कथमुच्यत इत्या-

सत्तान्तरेण क्रियाभूतेन योगाभावाद् भूता सत्तेति कथमुच्यत इत्याशङ्क्याह—

भूतो घट इतीयं च सत्ताया एव भूतता ।
भूता सत्तेति सत्तायाः सत्ता भूताभिधीयते ॥ ७९ ॥

भूतो घट इत्यत्र कस्य भूतत्वम् । न तावद् घटस्य, तस्य द्रव्यात्मकत्वात् कालेनासंस्पर्शात् । क्रियाणां साध्यस्वभावानामपि करणभूतेन कालेन सम्बन्धात् । धातुवाच्या तु सत्ताख्या क्रिया भूतेति निष्ठाप्रत्ययेनावेद्यते । सा तु सत्तात्र घटसमवायिनीति पारम्पर्येण घटेन सम्बन्धो न तु साक्षाद् द्रव्यकालयोः । व्यतिरिक्तकालदर्शनेऽप्यस्ति सम्बन्धः । क्रियामुखस्तु सः ।

एवंभूता सत्तेत्यत्रापि शब्देन धातुवाच्यान्या सत्ता क्रियारूपा, अन्या च प्रातिपदिकवाच्या द्रव्यायमाणेति सत्तान्तरयोगे धातुवाच्यसत्ताभूतत्वद्वारेणैव

---

शङ्क्याह—भूतो घट इतीयमिति ।

अस्यार्थः—'भूतो घट' इत्यत्र प्रतीयमाना इयं भूतता च घटसत्ताया एव न तु घटस्य । एवंभूता सत्ता इत्यत्र सत्तायाः सत्ताभूताऽभिधीयते न तु सत्ताभूताऽभिधीयत इति ।

एतदुक्तं भवति—'भूतो घटः' इत्यत्र भूधातुना सत्ता उच्यते, क्तप्रत्ययेन तु तस्या भूतत्वमुच्यते, एवंभूता सत्ता इत्यत्र धातुना सत्ता उच्यते, क्तप्रत्ययेन तु तस्या भूतत्वमुच्यते । एवञ्च सत्ता भूता इत्यत्र सत्तायाः सत्ताभूता इत्यर्थः । तथा च भूधातुवाच्या सत्ता क्रियारूपाऽन्या, प्रातिपदिकवाच्या तु द्रव्यायमाणाऽन्या । नित्याया अपि सत्तायाः स्वाश्रयोपाधिकं जन्यत्वप्रयुक्तं भेदमादाय कालत्रययोगोऽविरुद्ध इति ।

अयं भावः—'भूतो घट' इत्यत्र सत्ताघटयोः कस्य भूतत्वमभिधीयते । न तावद् घटस्य, तस्य द्रव्यात्मकत्वात्, सिद्धस्वभावत्वेन कारणभूतेन कालेनासंस्पर्शात् । क्रियाणां साध्यस्वभावानामधिकरणभूतेन सम्बन्धसम्भवात् । भूधातुवाच्या तु सत्ताख्या क्रियाभूता इत्यत्र क्तप्रत्ययेन भूतत्वेनावेद्यते । सा तु सत्ताऽत्र = भूतो घट इत्यत्र घटसमवायिनीति पारम्पर्येण = सत्ताद्वारा भूतत्वस्य घटेन सम्बन्धः, न तु साक्षाद् द्रव्यकालयोः सम्बन्धः । क्रियाव्यतिरिक्तकालदर्शनेऽपि अस्ति घटेन सह भूतत्वस्य सम्बन्धः । किन्तु क्रियामुखः = क्रियाद्वारकः सः ।

एवंभूता सत्ता इत्यत्रापि शब्देनाभिधीयमाना धातुवाच्या सत्ताऽन्या क्रियारूपा, प्रातिपदिकवाच्या त्वन्या द्रव्यायमाणा = द्रव्यवदाचरन्ती द्रव्यवत् प्रतीयमाना—सिद्धस्वभावा इति द्रव्यभूतायाः सत्तायाः सत्तान्तरयोगे सिद्धे सति धातुवाच्यसत्तायाः साध्यस्वभावाया भूतत्वद्वारेणैव द्रव्यायमाणसत्ताया भूतत्वसम्प्रत्यय इति न काचिदनुपपत्तिः । नित्याया अपि सत्ताया अनित्यस्वाश्रयोपधानेनानित्यत्व-

द्रव्यायमाणसत्ताभूतत्वसम्प्रत्यय इति न काचिदनुपपत्तिरित्यर्थः। नित्याया अपि सत्तायाः स्वाश्रयोपधानेन भेदे सति तद्द्वारेण त्रिकालयोगोऽविरुद्धः ॥ ७९ ॥

गतमेतत्। इदानीं कालस्वरूपे निर्णीते तदाश्रयः शास्त्रे व्यवहारो विचार्यते। 'वर्तमाने लट्' (३।२।१२३) इत्यत्रोक्तं 'नित्यप्रवृत्ते च कालाविभागात्' इति। नित्येष्वर्थेषु कालविभागाभावाद् वर्तमानत्वानुपपत्तेः शासितव्या भवन्ती।

ननु च सम्प्रतितनत्वं वर्तमानत्वं भूतभविष्यत्प्रतियोगि। नित्येषु चाविच्छेदेन प्रवर्तमानेषु भूतभविष्यतोरभावात् सुतरां तदुपपत्तिः।

तत्रोच्यते—इहेमे कालनिमित्ता व्यपदेशाः परस्परव्यावृत्तशरीराः कालकृतोपकाराणामेव भावानां युक्ताः। ते च जन्मवन्तः। तत्र हि नियतावधिजन्मपरिग्रहेणैतदुपपत्तिः।

तथा हि—साधनसन्निधानेऽभिमुखोत्पत्तयो यावदवस्थानं वर्तमाना व्यपगतशरीरा भूताः। तदयं वर्तमानव्यपदेशो भूतभविष्यदवधिमध्यवर्ती, यत्र भूत-

---

सम्पत्त्या नित्यसत्तातो भेदे सति तद्द्वारेण = धातुवाच्यानित्यसत्ताद्वारेण नित्यसत्तायास्त्रिकालयोगः = भूतभविष्यद्वर्तमानकालयोगः, अविरुद्ध इति ॥ ७९ ॥

गतमेतत् = कालस्वरूपविचारो गतः। इदानीं कालस्वरूपे निर्णीते तदाश्रयः = कालनिमित्तकः शास्त्रे व्यवहारो विचार्यते। वर्तमाने लट् (पा० ३।३।१२३) इत्यत्रोक्तं भाष्ये—"नित्यप्रवृत्ते च कालाविभागात्" (म० भा० ३।२।१२३) इति।

अस्यार्थः—नित्येष्वर्थेषु नित्यप्रवृत्तेषु = नित्यं स्थितिमत्सु भूतभविष्यद्वर्तमानरूपकालत्रयविभागाभावाद् वर्तमानत्वानुपपत्तेर्भवन्ती लट्प्रत्ययः शासितव्या = विधातव्या इति।

ननु च सम्प्रतितनत्वं वर्तमानत्वं भूतभविष्यत्प्रतियोगि = भूतभविष्यद्विरोधि, नित्येषु च पर्वतादिष्वविच्छेदेन प्रवर्तमानेषु = स्थितिमत्सु भूतभविष्यतोरभावात् सुतरां तदुपपत्तिः = वर्तमानत्वोपपत्तिः इति चेत्, तत्रोच्यते—इहेमे कालनिमित्ताका भूतभविष्यद्वर्तमानव्यपदेशाः परस्परव्यावृत्तस्वरूपाः कालकृतोपकाराणामेव भावानां युक्ताः। ते च = कालकृतोपकाराभावाश्च जन्मवन्तः। तत्र हि = कालकृतोपकारेषु जन्मवत्सु भावेषु हि नियतावधिजन्मपरिग्रहेण एतदुपपत्तिः = भूतभविष्यद्वर्तमानव्यपदेशोपपत्तिः।

तथा हि—साधनसन्निधानेऽभिमुखोत्पत्तयो भाविनः, साधनादवाप्तजन्मानो यावदवस्थानं वर्तमानाः, व्यपगतशरीराः = विनष्टस्वरूपा भूता इति। तदयं वर्तमानव्यपदेशो भूतभविष्यदवधिमध्यवर्ती यत्र भूतभविष्यन्तौ न स्तः, तत्र नवै

भविष्यन्तौ न स्तस्तत्र नैव सम्भवति। तदुक्तं भाष्ये—'भूतभविष्यत्प्रतिद्वन्द्वो वर्तमान' इति।

यत्र हि—भूतभविष्यन्तौ, तत्र तत्प्रतियोगी वर्तमान इत्यर्थः। नित्येषु च भूतभविष्यतोरभावात् तदभावः। प्रक्रमापेक्षया च भवन्ती शिष्येत्युक्तम्। सर्व एव तु कालप्रत्ययाः शिष्याः। अत एवाह—'कालाविभागादि'ति।

एवञ्च कृत्वात्र कालावच्छेदाभावात् कालोपाधिरूपा क्रियैव नास्ति। सा हि कालोपाधिः सक्रमा साध्यमानस्वभावा। तदभावश्चात्रेति क्रियाकारकोपाधिनिबन्धना सर्वैव व्यवस्था वक्तव्येत्युक्तं भवति।

तत्र च परिहार उक्तः—'सन्ति च कालविभागा' इति। स्थास्यन्ति पर्वतास्तिष्ठन्ति अस्थुरिति।

पुनश्चोदितम्—'किं शक्यन्त एते शब्दाः प्रयोक्तुम्' इति। सन्ति कालविभागा इति।

---

सम्भवति। तदुक्तं भाष्ये 'भूतभविष्यत् प्रतिद्वन्द्वो वर्तमानः' इति।
( म० भा० ३।२।११२ )

अस्यार्थः—भूतभविष्यतोः प्रतिद्वन्द्वो विरोधी व्यवच्छेदको वर्तमान इति। तथा हि—वर्तमानो घट इत्युक्ते न भूतो न भविष्यन्निति गम्यत इति। एवञ्च यत्र हि भूतभविष्यन्तौ तत्र तत्प्रयोगी वर्तमान इति व्याप्तिमुखेन सिद्धं भवति। नित्येषु च भावेषु भूतभविष्यतोरभावात् तदभावः=वर्तमानाभावः। क्रियागतः प्रक्रमापेक्षया च भवन्ती शिष्या, लट्प्रत्ययः शिष्यः, इत्युक्तम्। नित्यानाञ्च पर्वतादीनां स्थितिक्रियायां प्रक्रमो नास्ति, यत एकरूपैव तेषां सदा स्थितिरिति 'पर्वतास्तिष्ठन्ति' इति प्रयोगानुपपत्तिरिति। किं बहुना—सर्व एव तु कालप्रत्ययाः प्रक्रमापेक्षयैव शिष्याः। अत एवाह—सामान्येन "कालाविभागाद्" इति।

एवञ्च कृत्वाऽत्र=नित्यभावानां स्थितिक्रियायाम् कालपरिच्छेदाभावात् कालोपाधिरूपा क्रियैव नास्ति। सा हि कालोपाधिः सक्रमा साध्यमानस्वभावा, तदभावश्चात्र=नित्येषु भावेषु सक्रमायाः साध्यमानस्वभावायाः स्थितेरभावायाश्च इति क्रियाकारकरूपोपाधिनिबन्धना सर्वैव कालप्रत्ययव्यवस्था वक्तव्येत्युक्तं भवति।

तत्र च परिहार उक्तः—"सन्ति च कालविभागाः" ( म०भा० ३।२।१२३ ) इति। "स्थास्यन्ति पर्वतास्तिष्ठन्ति अस्थुः" ( म० भा० ३।२।१२३ ) इति।

अस्यार्थः—यतो लोके स्थास्यन्ति पर्वतास्तिष्ठन्ति अस्थुरिति प्रयोगा दृश्यन्ते, अतो विज्ञायते सन्ति च नित्येषु कालविभागा इति।

पुनश्चोदितम्—"किं शक्यन्त एते शब्दाः प्रयोक्तुम्, सन्ति कालविभागा इति" ( म० भा० ३।२।१२३ ) इति।

अयमभिप्रायः—कालविभागादेवैषां शब्दानां प्रयोगोऽसिद्ध इति चोद्ये कथमेष एव निश्चायकः कथ्यत इति। अत उक्तं 'नावश्यं शब्दप्रयोगादेवे'ति। पूर्वापरीभूतस्याख्यातात् प्रतीतेः शब्दप्रमाणकानां तत एवार्थव्यवस्थानाद् भवेदपि शब्दप्रयोगः कालविभागे प्रमाणम्, किन्त्ववधार्यापि तमत्रार्थ एव कालविभागः प्रतिपाद्यत इत्यर्थः। तदाह—'भूतभविष्यद्वर्तमानानां राज्ञां याः क्रियास्तास्तिष्ठतेरधिकरणमि'ति ॥७९॥

एतद्भाष्यं व्याचष्टे—

**परतो भिद्यते सर्वमात्मा तु न विकल्प्यते।**
**पर्वतादिस्थितिस्तस्मात् पररूपेण भिद्यते ॥८०॥**

पर्वतनद्यादीनामपि नित्यानामपरतत्सहचरितपदार्थगतसत्तोपाश्रयेण सत्ता-

---

अस्यार्थः—सन्ति कालविभागा इति कृत्वा—'स्थास्यन्ति पर्वताः, तिष्ठन्ति अस्थुः' इति शब्दाः प्रयोक्तुं शक्यन्ते किमिति।

अयमभिप्रायः—कालविभागादेवैषां शब्दानां प्रयोगोऽसिद्ध इति चोद्ये कथमेष एव=एषां शब्दानां प्रयोग एव निश्चायकः कथ्यत इति। अत उक्तम्—"नावश्यं शब्दप्रयोगादेव" इति। पूर्वापरीभूतस्यार्थस्य क्रियारूपस्याख्यातात् प्रतीतेः शब्दप्रमाणकानां तत एव=शब्दादेवार्थव्यवस्थानाद् भवेदपि शब्दप्रयोगः कालविभागे प्रमाणम्, किन्त्वनादृत्यापि तमत्र=प्रकृते आर्थ एव=अर्थप्राप्त एव कालविभागः प्रतिपद्यत इत्यर्थः। तदाह—"भूतभविष्यद्वर्तमानानां राज्ञां याः क्रियास्तास्तिष्ठतेरधिकरणम्" ( म० भा० ३।२।१२३ ) इति।

अस्यार्थः—भूतभविष्यद्वर्तमानानां राज्ञायाः क्रियास्तास्तिष्ठतेः पर्वतादिस्थितेर्नित्याया अधिकरणम्—परिच्छेदकत्वेनाश्रयीभूता इति। एतद् भाष्यं व्याचष्टे—**परतो भिद्यत इति।**

अस्यार्थः—सर्वं भावजातं परस्परं भिद्यमानं परतो भिद्यते, भेदस्य प्रतियोगिसापेक्षत्वात्। आत्मा तु=स्वरूपं तु प्रतियोगिनिरपेक्षं कस्यापि न विकल्प्यते=न विच्छेदेन भेदेन कल्प्यते, स्वरूपं तु कस्यापि प्रतियोगिनिरपेक्षं न भिद्यत इति यावत्। तस्मात्=परानपेक्षस्य स्वरूपस्य भिद्यमानत्वाभावात्, पर्वतादिस्थितिः=पर्वतादीनामात्ममरणलक्षणा सत्ता, पररूपेण=परस्य पर्वतादिभिन्नस्य तत्सहचरितस्य राजादिरूपस्य भावस्य यद्रूपं धर्मः=सत्ता प्रतिक्षणं भिद्यमाना तया भिद्यते। पर्वतादिसहचरितवस्त्वन्तरगतक्रियारूपोपाधिभेदात् पर्वतादिस्थितेर्नित्याया अपि भेदः; तत्प्रयुक्तश्च तस्याः कालभेद इति पर्यवसन्नमिति।

अयं भावः—पर्वतनद्यादीनामपि प्रवाहरूपेणेश्वरानङ्गीकर्तृमीमांसकमतेन वा नित्यानामपरतत्सहचरितपदार्थगतसत्तारूपोपाध्युपाश्रयेण सत्ताभेदात् तेषां

भेदात् कालभेदोपपत्तिः। सर्वमेव हि भावजातमुपाधिसंसर्गवशेन भिद्यते, न तु स्वरूपेणेति भिन्ना इति परोपाधिरित्युक्तमेव। राज्ञां हि क्रियाः पर्वतादिस्थितेर्भेदकत्वाद् आश्रयत्वेन व्यवह्रियन्ते।

यथा हि—राजक्रियाणां त्रैकाल्यं क्रमिकत्वं साध्यमानता च, तथा तत्सहचरितानामपि पर्वतादीनां स्थितेस्तदध्यारोप इति गौणस्त्रिकालविषयः प्रयोगोऽत्रोपपन्न इति न्याय्या भवन्ती ॥८०॥

अथवा राजक्रियासाहचर्येण वर्तमाना स्थितिः प्रत्यवस्थमाश्रयोपकारमनुभवन्ती पर्वतादीनां स्वयमेव भिद्यते। सहचारितक्रियाभेदेन तु स भेदस्तस्य सारूप्यादनधिगतसतत्त्वो ज्ञाप्यत इत्याह—

प्रसिद्धभेदा व्यापारा विरूपावयवक्रियाः।
साहचर्येण भिद्यन्ते सरूपावयवक्रियाः ॥८१॥

विसदृशस्वभावा अवयवक्रिया येषां व्यापाराणां ते पचिभिदिक्रियारूपाः

---

सत्तायाः कालभेदोपपत्तिः। सर्वमेव हि भावजातं प्रतियोगिरूपोपाधिसम्बन्धवशेन भिद्यते, न तु स्वरूपेणेति "भिन्ना इति परोपाधिः" (वा० प० ३, जाति० २०) इत्युक्तमेव। राज्ञां हि क्रियाः पर्वतादिस्थितेः परिच्छेदकत्वेन भेदकत्वादाश्रयत्वेन व्यवह्रियन्ते।

यथा हि राजक्रियाणां त्रैकाल्यं क्रमिकत्वं साध्यमानता च, तथा तत्सहचरितानां पर्वतादीनां स्थितेरपि, तदध्यारोपात्=राजादिक्रियागतस्य त्रैकाल्यादिरूपधर्मत्रयस्य तत् सहचरितपर्वतादिस्थितावध्यारोपाद् इति त्रिकालविषयः पर्वताः स्थास्यन्ति, तिष्ठन्ति, अस्थुः, इति प्रयोगोऽत्रोपपन्न इति न्याय्या भवन्ती=न्याय्यो वर्तमाने लट्प्रत्ययः, पर्वतास्तिष्ठन्ति इति ॥८०॥

अथवा राजक्रियासाहचर्येण वर्तमाना पर्वतादीनां स्थितिः प्रत्यवस्थम्=कल्पितासु तत्तदवस्थासु आश्रयोपकारम्=परिच्छेदकत्वेनाश्रयीभूतराजादिक्रियाकृतं वर्तमानादिकालत्रयसम्पत्तिलक्षणमुपकारमनुभवन्ती स्वयमेव भिद्यते। स तु तस्या भेदः=पर्वतादिस्थितेर्भेदः सारूप्यादविज्ञातसतत्त्वः सहचरितक्रियाभेदेन=सहचरितपच्यादिक्रियाभेदेन ज्ञाप्यत इत्याह—प्रसिद्धभेदा व्यापारा इति।

अस्यार्थः—विरूपावयवक्रियाः=विरूपा विसदृशा अवयवक्रिया येषां व्यापाराणां ते विरूपावयवक्रिया राजादीनां व्यापाराः पचि भिदिक्रियारूपा वा ते प्रसिद्धभेदा लोके प्रतीतभेदाः। ये तु पर्वतादीनां स्थित्यादिरूपा व्यापाराः सरूपावयवक्रियाः=सरूपा अवयवक्रिया येषां ते तथाभूताः, ते साहचर्येण विरूपावयवक्रियाणां व्यापाराणां राजादिक्रियारूपाणां साहचर्येण भिद्यन्त इति।

अयं भावः—विसदृशस्वभावा अवयवक्रिया येषां व्यापाराणां ते पचिभिदि-

प्रसिद्धभेदा भिन्नकाला विलक्षणा एव प्रतीताः। ये तु सदृशावयवक्रियाव्यापाराः पर्वतादेरात्मभरणलक्षणस्थितिरूपाः, ते सादृश्यादेव दुरवधारभेदा राजक्रियाभिर्विसदृशसन्तानाभिरवधृतविभागाभिः सहचरिताभिः कालभिन्ना ज्ञाप्यन्ते। अतश्च ता राजक्रियाः परिच्छेदकत्वादाधारभूताः पर्वतादिस्थितेः कालत्वेन व्यवह्रियन्ते।

सूर्यादिसञ्चारविशेषोपलक्ष्यमाणभेदाश्चापि पर्वतादिस्थितयः, राजक्रियाणामुपलक्षणत्वात्। प्रसिद्धतरा हि राज्ञां क्रिया भाष्य उक्ताः। आधारावष्टम्भेन स्थितेः प्रतिलक्षणमुपजनात् समाश्रितक्रमत्वे क्रियात्वमप्यविरुद्धम्।

तथा हि—'जन्मैवाश्रितसारूप्यं स्थितिः' इत्युक्तम्। नित्यानामपि चाधारेण प्रतिक्षणं ध्रियमाणत्वमविकल्पितपौर्वापर्यमेव जन्मसमाख्यां प्रतिपद्यते। शाब्दे च व्यवहारे शब्दार्थोऽर्थ इत्याख्यातात् स क्रमः प्रतीयमानोऽर्थः क्रियालक्षणमनुपतत्येव गतमेतत्।.८१॥

---

क्रियारूपा राजादिक्रियारूपा वा व्यापारास्ते प्रसिद्धभेदा लोके भिन्नकाला विलक्षणा एव प्रतीताः। अधिश्रयणादयो हि पच्यवयवा विलक्षणाः परस्परम्, एवमुद्यमनादयो भिद्यवयवाः। ये तु व्यापाराः सदृशावयवक्रियाः पर्वतादेरात्मभरणधारणलक्षणस्थितिरूपास्ते सादृश्यादेव दुरवधारावयवभेदा राजक्रियाभिर्विसदृशसन्तानाभिः = विसदृशावयवाभिरवधृतविभागाभिः = लोके निर्णीतभेदाभिः सहचरिताभिः कालभिन्नाः = भिन्नकाला ज्ञाप्यन्ते। अतश्च ता राजक्रियाः पर्वतादिस्थितेः परिच्छेदकत्वादाधारभूताः कालत्वेन व्यवह्रियन्ते।

किञ्च पर्वतादिस्थितयो न केवलं राजक्रियाभिरेवोपलक्ष्यमाणभेदाः, अपि तु सूर्यादिसञ्चारविशेषैरप्युपलक्ष्यमाणभेदाः, राजक्रियाणां क्रियासामान्योपलक्षणत्वात्। असिद्धतरा हि राज्ञां क्रियाः पर्वतादिस्थितेः परिच्छेदकत्वेन भाष्ये उक्ताः। पर्वतादिस्थितेर्नित्याया अपि राजादिक्रियाणां परिच्छेदकत्वेन स्वाधारभूतानामवष्टम्भेन प्रतिक्षणमुपजनात् = आधारक्रियागतोपजनाध्यासात् समाश्रितक्रमत्वे सति क्रियात्वमप्यविरुद्धम्। तथा हि—"जन्मैवाश्रितसारूप्यं स्थितिः" ( वा० प० ३, क्रि० २६ ) इत्युक्तम्।

अस्यार्थः—आश्रितं सन्तानानां सारूप्यं यत्र तत् तथाभूतं जन्मैव तेषां स्थितिरिति। नित्यानामपि च भावानां पर्वतादीनां स्वस्थितेः परिच्छेदकत्वाद् राजादिक्रियारूपेणाधारेण प्रतिक्षणं ध्रियमाणत्वमविकल्पितपौर्वापर्यमेव = अनध्यारोपितपौर्वापर्यरूपक्रमकमेव जन्मसंज्ञां प्रतिपद्यते। शाब्दे च व्यवहारे शब्दार्थोऽर्थः = शब्दात् प्रतीयमानोऽर्थः शब्दार्थः शब्दाभिधेय इति सिद्धान्तेनाख्यातात् प्रतीयमानः स क्रमोऽर्थः क्रियालक्षणं साध्यतया प्रतीयमानत्वरूपमनु-

उक्तमिदं वार्त्तिके—'प्रवृत्तस्याविरामे शिष्या भवन्त्यवर्तमानत्वात्' ( वा० ३।२।१२३ ) इति।

प्रवृत्तस्य मुख्यफलानवाप्तेर्यदा विरामो न भवति, अथ च क्रियान्तरारम्भात् सा प्रवृत्ता क्रियातीता, तदा वर्तमानप्रत्ययो वक्तव्यः। इह वसामः। इह पुष्यमित्रं याजयाम इति। क्रियान्तरे प्रवृत्तो याजयन्नप्येवं प्रयुङ्क्ते दक्षिणादिमुख्यफलानवाप्तेश्च याजनाभिसन्धेरविरतः।

अत्र समाधिरुक्तः—'न्याय्या त्वारम्भानपवर्गादि'ति मुख्यस्य फलस्यानभिनिर्वृत्तेस्तत्पर्यन्तत्वाच्च क्रियायाः क्रियान्तरव्यवधानेऽप्यनपवृत्तैव क्रियेति वर्तमानप्रत्ययो भवन्ती न्याय्या। अथान्तरा क्रियान्तरैर्विच्छेदादवर्तमानत्वमभि-

---

पतत्येव=अनुसरत्येव। गतमेतत्=नित्यायाः पर्वतादिस्थितेः त्रैकाल्योपपत्तिविषयकं विमर्शनं गतमिति ॥ ८१ ॥

उक्तमिदं वार्तिके—"प्रवृत्तस्याविरामे शिष्या भवन्त्यवर्तमानत्वात्" ( वा० ३।२।१२३) इति।

अस्यार्थः—क्रियायां प्रवृत्तस्य पुरुषस्य फलार्थिनः फलानवाप्तेः क्रियातोऽविरामे सति भवन्ती लट्प्रत्ययः—शिष्या, अतीतानां भाविनाञ्च क्रियाक्षणानामवर्तमानत्वादीति।

अयं भावः—क्रियायां प्रवृत्तस्य पुरुषस्य मुख्यफलानवाप्तेर्यदा तत्साधनीभूतक्रियातो विरामो न भवति, अथ च मध्ये मध्ये क्रियान्तरारम्भात् सा प्रवृत्ता क्रियाऽतीता, तदा वर्तमानप्रत्ययो वक्तव्यः। 'इह वसामः, इह पुष्यमित्रं याजयामः' इति। इह काश्यामध्ययनार्थं वसन्नपि मध्ये मध्ये ग्रामं गच्छति, इह पुष्यमित्रं याजयन् क्रियान्तरे स्नानसन्ध्यावन्दनादौ प्रवृत्तोऽपि दक्षिणादिरूपयागादिमुख्यफलानवाप्तेश्च याजनाभिसन्धेः=याजनाभिप्रायाद् अविरत एवं प्रयुङ्क्ते इति।

अत्र समाधानमुक्तं भाष्ये—"न्याय्यात्वारम्भानपवर्गात्" ( म० भा० ३।२।१२३) इति।

अस्यार्थः—न्याय्या तु भवन्ती, आरभ्यत इत्यारम्भः, आरब्धा क्रिया, कर्मणि घञ्, आरब्धायाः क्रियाया व्यापारसमूहरूपायाः फलाभिनिर्वृत्तिपर्यन्तं क्रियान्तरव्यवधानेऽप्यनपवर्गात्=असमाप्तेरिति।

अयं भावः—केषाञ्चित् क्रियाक्षणानामतीतत्वेऽपि व्यापारसमूहरूपक्रिया साध्यस्य फलस्यानभिनिष्पदाद् व्यापारसमूहरूपायाः क्रियायाः फलाभिनिष्पत्तिपर्यन्तत्वाच्च मध्ये क्रियान्तरव्यवधानेऽपि अनपवृत्तैव=असमाप्तैव व्यापारसमुदायरूपा क्रिया इति वर्तमानप्रत्ययो भवन्ती अत्र न्याय्येति। यदि मध्ये क्रियान्तरैर्विच्छेदादवर्तमानत्वमत्राभिमतं चकास्ति, तदा "अस्ति च मुक्तसंशये

मतमत्र चकास्ति, तदा 'अस्ति च मुक्तसंशये विरामः' ( म० भा० ३।२।१२३ ) इत्युक्तम् ।

भुङ्क्ते इत्यादावपि हि वर्तमाने निस्संशयोऽस्त्येवावान्तरक्रियाव्यवधानः । तथा हि—'सोऽप्यवश्यं भुञ्जानो हसति जल्पति पानीयं वा पिबति' इति भाष्य उक्तम् ॥८१॥

तदेतद् व्याचष्टे—

व्यवधानमिवोपैति निवृत्त इव दृश्यते ।
क्रियासमूहो भुज्यादिरन्तरालप्रवृत्तिभिः ॥८२॥
न च विच्छिन्नरूपोऽपि सोऽविरामान्निवर्तते ।
सर्वैव हि क्रियान्येन सङ्कीर्णेवोपलभ्यते ॥८३॥

पूर्वापरीभूतावयवसमुदायात्मको भुज्यादिक्रियासमूहोऽन्तरालपतिताभिर्हाससङ्कथनादिक्रियाभिरतीतानागतलक्षणानां व्यवधानमिव प्राप्नोति । तृप्तिफल-

---

विरामः" ( म० भा० ३।२।१२३ ) इत्युक्तम् ।

अस्यार्थः—भुङ्क्ते इत्यादावपि हि मुक्तसंशये वर्तमाने प्रारब्धायाः क्रियाया विरामः क्रियान्तरेण व्यवधानञ्चास्त्येवेति ।

अयं भावः—भुङ्क्ते इत्यादावपि हि वर्तमाने निःसंशयाऽस्त्येवावान्तरक्रियाव्यवधानम् । तथा हि—"सोऽप्यवश्यं भुञ्जानो हसति जल्पति पानीयं वा पिबति" इति भाष्ये उक्तम् । तदेतद् भाष्यं व्याचष्टे—व्यवधानमिवोपैतीति, न च विच्छिन्नरूपोऽपीति च कारिकाद्वयेन ।

अस्यार्थः—क्रियासमूहः-पूर्वापरीभूतव्यापाररूपावयवसमुदायात्मको भुज्यादिः अन्तरालप्रवृत्तिभिः मध्यकालिकैः क्रियान्तरैः, व्यवधानमिवोपैति=प्राप्नोति । भुजि-क्रियायास्तृप्तिफलकत्वाच्च तावत् कालं तस्या एकः सन्तानो व्यवस्थित एवेति क्रियाक्षणानां व्यवधानेऽपि नास्ति क्रियासमूहस्य व्यवधानमिति इवशब्दः प्रयुक्तोऽत्रेति ।

किञ्च क्रियासमूहो भुज्यादिः क्रियान्तरैर्व्यवधानेऽनागतावयवाभावञ्चाभिसन्धायातीतावयवकल्पनया निवृत्त इव स क्रियासमूहो दृश्यते । किञ्च मध्यकालिकैः क्रियान्तरैर्विच्छिन्नरूपोऽपि स क्रियासमूहो भुज्यादिर्न च निवर्तते, भुजेस्तृप्तिरूपफलावसानत्वेनाविरामात्, असमाप्तेः । हि=यतः सर्वैव क्रिया अन्येन मध्यभवेन क्रियान्तरेण सङ्कीर्णेव=मिश्रितेवोपलभ्यत इति । अत्रापि इव शब्दः प्राग्वदेव प्रयुक्त इति ।

अयं भावः—पूर्वापरीभूतावयवसमुदायात्मको भुज्यादिः क्रियासमूहो मध्यभवाभिर्हाससङ्कथनादिक्रियाभिः स्वावयवातीतानागतक्षणानां व्यवधानमिव

त्वाच्च भुजेरेकः सन्तानो व्यवस्थित एवेतीवशब्दो न हि समूहव्यवधानम्, अपि तु क्षणानाम्। न च तावन्मात्रं क्रियास्वरूपम्। अनागतावयवाभावं चाभिप्रेत्यातीतावयवकल्पनया निवृत्त इव स क्रियासमूहो दृश्यते। एवमपि चान्तरालक्रियाभिरवयवद्वारेण विच्छिन्नस्वभावोऽसावाफलप्राप्तेरनुवर्तनादविरतोऽवस्थित एव वर्तमानस्वभावः।

न केवलं भुज्यादिरेव, यावद्धासस‍ङ्कथनादिरपि क्रियान्तरैर्व्यवधीयत एव। अक्षिनिमेषादेरपि व्यवधानम्, अन्ततः प्रश्वासोच्छ्वासादेरपि भावात्। विश्रम्य विश्रम्य च क्रियारम्भात् सङ्कीर्णेव, न तु सर्वथा सङ्कीर्णा आफलप्राप्तेर्विरामाभावात्। अन्तरालक्रियाणामवश्यम्भाविनीनां सहकारित्वस्यायोगात्। सन्दर्शनादिफलपर्यन्तः क्षणसमूहः क्रिया। तत्र च भौतिकव्यापारोपरमेऽप्यन्तरा सन्दर्शनप्रार्थनादेर्मानसव्यापारस्य यावत् फलाधिगमः, तावदविराम एव। एवं याजनादेरप्यविरतत्वाद् वर्तमानता सिद्धा ॥८२–८३॥

---

प्राप्नोति। भुजेस्तृप्तिफलकत्वाच्च = भुजेस्तृप्तिफलकत्वेन तृप्तिपर्यन्तभावित्वाच्च तस्या एकः सन्तानः = व्यापारसमूहः व्यवस्थित एव, न तु क्रियान्तरसङ्कीर्ण इति इवशब्दोऽत्र प्रयुक्तः। न हि समूहस्य क्रियान्तरैर्व्यवधानम्, अपि तु क्रियाक्षणानाम्। न च तावन्मात्रम् = क्रियाक्षणमात्रं क्रियास्वरूपम्, अपितु क्रियाक्षणसमूहरूपम्। मध्यभवेन क्रियान्तरेण व्यवधाने सति अनागतावयवभावं चाभिप्रेत्यातीतावयवकल्पनया निवृत्त इव सः = भुज्यादिरूपः क्रियासमूहो दृश्यते। एवमपि चाविच्छिन्नस्वभावोऽप्यन्तरालक्रियाभिः अवयवद्वारा विच्छिन्नस्वभावोऽसावाफलप्राप्तेरनुवर्तनादविरतोऽवस्थित एव वर्तमानस्वभावः, न तु निवृत्तः।

न केवलं भुज्यादिरेवान्तरालप्रवृत्तिभिर्व्यवधीयते, अपि तु हाससङ्कथनादिरपि क्रियान्तरैर्व्यवधीयत एव। अस्ति हि अक्षिनिमेषादेरपि व्यवधानम्, अन्तःश्वासप्रश्वासादेरपि व्यवधायकस्य भावात्। विश्रम्य विश्रम्य च भुज्यादिक्रियारम्भात् क्रियान्तरैर्हाससङ्कथनादिभिः सङ्कीर्णेव भुज्यादिक्रिया, न तु सर्वथा सङ्कीर्णा, आफलप्राप्तेस्तस्या विरामाभावात्। "राधा कृष्णं पश्यति, सीता रामं पश्यति" इत्यादौ सन्दर्शनादिः समागमरूपफलपर्यन्तः क्षणसमूहः = क्रियासमूहः क्रिया। तत्र च = क्षणसमूहरूपायां क्रियायाञ्च कृष्णादिसमीपगमनादिरूपभौतिकव्यापारोपरमेऽप्यन्तरा = मध्ये सन्दर्शनप्रार्थनादिर्मानसव्यापारस्य यावत् समागमरूपफलाधिगमस्तावदाविराम एव। एवं याजनादेरन्तरालक्रियान्तरव्यवधानेऽपि दक्षिणावाप्तिरूपमुख्यफलपर्यन्तमविरतत्वात्। "पुष्यमित्रं याजयामः" इत्यादौ वर्तमानता सिद्धेति ॥ ८२–८३ ॥

एवं तावत् फलावसानः समूहः क्रियेति फलान्तरहेतुक्रियान्तरव्यवधानमुपेत्यापि वर्तमानत्वं समर्थितम्, यद्वान्तरालप्रवृत्तं क्रियान्तरं भिन्नजातीयमेव न भवतीत्याह—

**तदन्तरालदृष्टा वा सर्वैवावयवक्रिया ।**
**सादृश्यात् सति भेदे तु तदङ्गत्वेन गृह्यते ॥८४॥**

तस्या भुज्यादिक्रियाया मध्यवर्तिनो ये क्रियाभेदा हसितादयस्ते भुज्यादेरवयवा एव, गुणव्यापाररूपा आचमनादिवदुपकारकत्वात् । ततश्चाचमनादिभिः सादृश्यात् सत्यपि हासादीनां क्वचिदसन्निधानेऽपि भुजिनिर्वृत्तेः प्रसिद्धतरैर्दध्युपसेचनादिभिरङ्गैर्भेदे भुज्यङ्गत्वेन ग्रहणम्, यथा द्विपुरुषवाह्ये भारे तृतीयस्योप-

---

एवं तावत्—मुख्यफलावसानो व्यापारसमूहः क्रियेति सिद्धान्ते फलान्तरहेतुक्रियान्तरव्यवधानमुपेत्यापीह वसामः, इह पुष्यमित्रं याजयामः, इत्यादौ वर्तमानत्वं समर्थितम्, अथाधुना=यद्वान्तरालप्रवृत्तं क्रियान्तरं क्रियावयवेभ्यो भिन्नजातीयमेव न भवति, किन्तु अङ्गत्वावयवत्वाभ्यां सजातीयमेवेत्याह—**तदन्तरालदृष्टा वेति ।**

अस्यार्थः—वा=अथवा, तदन्तरालदृष्टा=तस्या भुज्यादिक्रियाया अन्तराले मध्ये दृष्टा या हसितादिक्रिया सा सर्वैव=सर्वाऽपि आचमनादिवदवयवक्रिया, सादृश्यात्=भुज्युपकारकत्वेनाचमनादिसादृश्यात् ।

यदि तु तदन्तरालदृष्टानां हसितादीनां क्रियान्तराणामभावेऽपि क्वचिद् भुजिक्रियाऽभिनिर्वृत्तिर्दृश्यत इति नास्ति आचमनादिवदवयवक्रियात्वं हसितादीनामित्युच्यते, तदाऽप्याह—**सति भेदे त्विति ।**

हसितादीनां क्वचिद् भुजिक्रियानुपकारकत्वादनवयवत्वेनाचमनादिरूपभुजिक्रियाऽवयवेभ्यो भेदे सति तु हसितादिकं तदङ्गत्वेन भुजिक्रियाङ्गत्वेन गृह्यते । यथा द्विपुरुषबाह्ये भारे तृतीयस्योपनिपततस्तदङ्गत्वेन ग्रहणमिति । अङ्गत्वमत्रावयवत्वाभावेऽप्युपकारत्वलक्षणं बोध्यमिति ।

अयं भावः—तस्या भुजिक्रियाया मध्यवर्तिनो ये दृष्टाः क्रियाविशेषा हसितादयस्ते भुजेरवयवा एव गुणव्यापाररूपाः=अङ्गव्यापाररूपाः, भोजनाद्यन्तविहिताचमनादिवदुपकारकत्वात् । ततश्चाचमनादिभिर्भुज्यङ्गैः सादृश्याद् भुज्यवयवत्वेन ग्रहणं हसितादीनाम्, हासादीनां क्वचिदसन्निधानेऽपि भुजिनिवृत्तेरवयवत्वेन प्रसिद्धतरैर्दध्युपसेचनादिभिरवयवैः सह हासादीनां सत्यपि भेदे भुज्यङ्गत्वेन ग्रहणम्, यथा द्विपुरुषवाह्ये भारे तृतीयस्योपनिपततोऽवयवत्वाभावेऽपि भारवहनाङ्गत्वेन ग्रहणम् । अत्र तुशब्दोऽप्यर्थे सतिपदानन्तरं द्रष्टव्यः, सत्यपि भेदे इति योजना ।

निपत[illegible]ः। तुशब्दोऽप्यर्थे। सुहृदो हि निर्वृतचेतसः परस्परं हाससङ्कथनादिकुर्वाणा एव [illegible]ुजि प्रतिपद्यन्ते।

तदेवमत्र प्रत्यवयवं क्रियासमाप्तिम् 'आदिकर्मणि न्याय्या त्वाद्यपवर्गात्' (मह[illegible]भा० ३।२।१०२) इति निष्ठासमर्थनन्यायेनाभिप्रेत्य पूर्वपक्षः प्रवृत्तः। फलप[illegible]न्तक्रियासमूहाश्रयेण तु सिद्धान्त इति स्थितम् ॥८४॥

इदानीं सर्वत्रैव वर्तमानत्वं क्रियाया अनुपपन्नमित्याक्षिपति—

**सदसद् वापि वस्तु स्यात् तृतीयं नास्ति किञ्चन।**
**तेन भूतभविष्यन्तौ मुक्त्वा मध्यं न विद्यते ॥८५॥**

---

सुहृदो हि निर्वृतचेतसः परस्परं हाससङ्कथनादिकं कुर्वाणा एव सन्धिषु भुजि प्रतिपद्यन्ते।

तदेवमत्र "आदिकर्मणि न्याय्या त्वाद्यपवर्गात्" (महाभा० ३।२।१०२) इति।

अस्यार्थः—'भुजगशयनादुत्थिते शार्ङ्गपाणावि'ति मेघदूते, 'माघमासे रटन्त्यापः किञ्चिदभ्युदिते रवौ' इति माघमाहात्म्ये यथायथम् उत्थातुमारब्धवति=अभ्युदेतुमारब्धवति, मासप्रमितः प्रतिपच्चन्द्र इत्यत्र मासं परिच्छेत्तुमारब्धवानित्यर्थे आदिकर्मणि=आदिक्रियायां तु अतीतायां निष्ठा न्याय्या, आद्यपवर्गाद् आदिक्रियायाः समाप्तत्वादिति। इति निष्ठासमर्थनन्यायेन प्रत्यवयवं क्रियासमाप्तिमभिप्रेत्य "प्रवृत्तस्याविरामे शिष्या भवन्त्यवर्तमानत्वात्" इति पूर्वपक्षः प्रवृत्तः। फलपर्यन्तः क्रियासमूहः क्रिया इत्येतदाश्रयेण तु सिद्धान्तपक्षः प्रवृत्त इति स्थितमिति ॥ ८४ ॥

इदानीं सर्वत्रैव सर्वथैव क्रियाया वर्तमानत्वमनुपपन्नमित्याक्षिपति—**सदसद् वाऽपीति।**

अस्यार्थः—वस्तु सदसद् वापि स्यात् सम्भाव्यते। तथाहि—यस्य वस्तुनः क्रिया अतीता स सिद्धस्वभावो भावः सन्नित्युच्यते। यस्य तु भावस्य बहिरसतो बौद्धस्य क्रिया अनागता स साध्यस्वभावोऽनिष्पन्नो भावोऽसन्नित्युच्यते। किञ्चन=किमपि वस्तु तृतीयं सदसदात्मकं नास्ति, परस्परविरोधिधर्मवत एकस्याभावात्। तेन=पूर्वार्धोक्तेन हेतुना, भूतभविष्यन्तौ भावौ मुक्त्वा मध्यं वर्तमानं वस्तु न विद्यते। एवं भावसामान्यस्य वर्तमानक्रियाया अभावः सिद्धः। किञ्च—"क्रिया नामेयमत्यन्तापरिदृष्टावयवा न शक्या पिण्डीभूता निदर्शयितुम्" (पा० ३।२।१२३) इति भाष्योक्तेः क्रियाऽत्यन्तं परोक्षा फलानुमेया, फलकालेऽतीतत्वेन लट्प्रत्ययेनाभिधातुं न शक्यत इति वर्तमानप्रत्ययानुपपत्तिरिति।

साध्यमानावस्था क्रिया भण्यते। तत्र च यः क्षणोऽतीतः, स सन् सिद्धस्वभाव इति क्रिया तत्रातीता। यश्चासन्, स साध्यः, स भावी क्षण इति तत्र भविष्यदुपाधिका क्रिया। न चान्योऽस्ति कश्चित् क्षणः सदसदुभयरूपः। विरुद्धस्वभावस्यैकत्वविरोधात्। ततश्च वर्तमानता धात्वर्थविशेषणं नोपपद्यते। तदुक्तं भाष्ये—

"अनागते न पतसि अतिक्रान्ते च काक न।
यदि सम्प्रति पतसि कृत्स्नो लोकः पतत्ययम्॥

हिमवानपि चलती"ति। परोक्षा क्रिया फलेनानुमीयमानातीतत्वात् कथं वर्तमानप्रत्ययेनोच्येत। एवं हिमवानपरिदृष्टसंयोगविभागक्रियाकार्यः कस्मान्न पततीति वर्तमानप्रत्ययेन व्यपदिश्येतेत्यर्थः॥८५॥

---

अयं भावः—क्रिया साध्यमानस्वभावा भण्यते। तत्र च यो भावक्षणोऽतीतः=अतीतक्रियः स सन् सिद्धस्वभाव इति क्रिया तत्रातीता। क्रियात्ययाभावे भावस्य सिद्धत्वासम्भवात्। यश्चासन्=असत् क्रियः स साध्यः स भावी भावक्षण इति तत्र भविष्यदुपाधिका=भविष्यत्पदार्थपरिचिता क्रिया। न चान्योऽस्ति कश्चिद् भावक्षणः सदसदुभयरूपः, विरुद्धस्वभावस्यैकत्वविरोधात्=विरुद्धस्वभावस्यैकत्वायोगात्। ततश्च "वर्तमाने लट्" (पा० ३।२।१२३) इति सूत्रे वर्तमानता धात्वर्थविशेषणं नोपपद्यते। तदुक्तं भाष्ये—

अनागते न पतसि अतिक्रान्ते च काक न।
यदि सम्प्रति पतसि सर्वो लोकः पतत्ययम्॥ इति।
(म० भा० ३।२।१२३)

अस्यार्थः—काकं प्रत्युक्तिच्छलेन कस्यचिद् वर्तमानत्वनिह्नवरूपा वाचोयुक्तिः। हे काक! त्वमनागते काले न पतसि, तस्यानागतत्वादेव। हे काक! त्वमतिक्रान्ते च काले न पतसि, तस्यातिक्रान्तत्वादेव। यदि त्वं सम्प्रति वर्तमानकाले पतसि तदाऽयं दृश्यमानः कृत्स्नो लोकः पतति। प्रागुक्तरीत्या वर्तमानकालाभावेन तत्र पतनासम्भवादेवमुक्तिः।

किञ्च तदा हिमवानपि चलति। प्रागुक्तरीत्या वर्तमानपतनासम्भवेऽपि तद् व्यवहारे हिमवतो वर्तमानचलनासम्भवेऽपि तत् कर्तृकस्तद्व्यवहारः स्यात्। किञ्च प्रागुक्तभाष्योक्तरीत्या परोक्षा क्रिया प्रत्यक्षेण फलेनानुमेया फलकालेऽतीतत्वेन कथं वर्तमानप्रत्ययेनोच्यते।

एवं हिमवानपरिदृष्टसंयोगविभागक्रिया कार्यः=स्थावरत्वादपरिदृष्टं संयोगविभागजनकं क्रियारूपं कार्यं यस्य स तथाभूतः कस्मान्न पततीति व्यपदिश्येतेति॥८५॥

साध्यमानावस्थत्वमेव क्रियायाः स्वेन रूपेण सत्त्वं वर्तमानत्वमिति चेदाह–

**निर्वृत्तिरूपमेकस्य भेदाभावान्न कल्पते ।**
**सदसद् वापि तेनैकं क्रमरूपं कथं भवेत् ।।८६।।**

एकस्यार्थात्मनो विभागाभावान्निष्पत्तिरूपं क्रमरूपत्वं क्रियालक्षणं नास्ति। तथा हि—सद्वा वस्तु स्यात्, असद्वा। तत्र सद् विद्यमानत्वादेवानिर्वर्त्य-मनाश्रितक्रमरूपम्, असदप्यसत्त्वादेव तदवस्थायामनाश्रितनिर्वृत्तिरूपं कथं क्रमिकं स्यात्। न ह्यसतः सर्वधर्मशून्यस्य कश्चित् क्रमः। तृतीयराश्यभावाच्च निर्वर्त्यमानं क्रमिकं क्रियारूपं नास्तीति कथं तद् वर्तमानं स्यात् ।।८६।।

अथोच्यते—बह्वः क्षणाः समाश्रितपौर्वापर्याः क्रियेति, सा फलोपजनात् प्राग् वर्तमानतामासादयेदिति। तदपि न। यतः,

**बहूनां चानवस्थानादेकमेवोपलभ्यते ।**
**यथोपलब्धिस्मरणं तत्र चाप्युपपद्यते ।।८७।।**

---

साध्यमानावस्थत्वमेव क्रियायाः स्वेन रूपेण सत्त्वं तदेव वर्तमानत्वमिति चेदाह–निर्वृत्तिरूपमेकस्येति।

अस्यार्थः—एकस्य क्रियारूपस्य पदार्थस्य भेदाभावात्=विभागाभावात्, निर्वृत्तिरूपम्=निष्पत्तिरूपं क्रमरूपत्वं क्रियालक्षणं न कल्पते=न प्रसिद्ध्यति। तेन एकस्य भेदाभावेन, सदसद् वापि एकं वस्तु क्रमरूपम्, क्रमेण रूप्यमाणं क्रमिकं कथं भवेत्। सतः सत्त्वादेव क्रमासम्भवात्। असतश्च सर्वधर्मशून्यस्य क्रमाभावात्। सदसद्भ्यामतिरिक्तस्य तृतीयस्य प्रकारस्याभावाच्च क्रमिकं क्रियारूपं नास्तीति कथं तस्या वर्तमानत्वमिति।

अयं भावः—एकस्यार्थात्मनः=पदार्थस्य विभागाभावाद् निष्पत्तिरूपं क्रमरूपत्वं क्रियालक्षणं नास्ति। तथा हि—सद् वा वस्तु स्यात्, असद् वा। तत्र सद् विद्यमानत्वादेवानिर्वर्त्यम्=अनिष्पाद्यम् अनाश्रितक्रमरूपम्=क्रमरहितम्, असदप्यसत्त्वादेव=अविद्यमानत्वादेव तदवस्थायामनाश्रितनिर्वृत्तिरूपम्=निष्पत्ति-रहितम्, कथं क्रमिकं स्यात्। न ह्यसतः सर्वधर्मशून्यस्य कश्चित् क्रमरूपो धर्मः सम्भवति। तृतीयप्रकाराभावाच्च निर्वर्त्यमानम्=साध्यमानं क्रमिकं क्रियारूपं वस्तु किमपि नास्तीति कथं तद् वर्तमानं स्यादिति ।।८६।।

यद्यप्युच्यते–बह्वः क्रियाक्षणाः समाश्रितपौर्वापर्याः=समाश्रितक्रमाः क्रियेति सा फलोत्पत्तेः प्राग्वर्तमानतामासादयेद् इति। तदपि न यतः—बहूनाञ्चान-वस्थानादिति।

अस्यार्थः—बहूनां व्यापाराणां युगपदनवस्थानाच्च=तु एकमेव=एक एव

क्रमजन्मानोऽवयवा विप्रकीर्यमाणस्वभावा, न युगपत्कालभाविनः। ततश्च सन्निहित एक एव क्षणः समुपलभ्यत इति तस्य भेदाभावात् क्रमाभावः। अथ बहवः क्रमिका युगपत् स्मर्यन्त इत्युच्यते, तदपि न। यस्मादनुभवपूर्वकं स्मरणमेकस्य च क्रमानुभवो न वृत्त इति कथं स्मरणमपि तत्र क्रमावेदकं स्यात् ॥८७॥

न चापि बहूनामेकक्रियात्मकत्वं युज्यत इत्याह—

सदसद्रूपमेकं स्यात् सर्वस्यैकत्वकल्पने।
निर्वृत्तिरूपं निर्वृत्तेः सामान्यमथवा भवेत् ॥८८॥

---

व्यापार उपलभ्यते, तस्य तु एकस्य भेदाभावात् क्रमो नास्तीति तस्य क्रियात्वाभावे वर्तमानत्वाभावः।

यच्चुच्यते बहूनां क्रमिकाणां व्यापाराणां युगपत् स्मरणमिति न काप्यनुपपत्तिरिति। तदपि न। यतो यथाऽन्यत्र तथा तत्रापि च यथोपलब्धि=यथानुभवं स्मरणमुपपद्यते, न तु अनुभवविपरीतम्। अनुभवश्चैकैकस्यैव व्यापारस्य न तु बहूनामिति न बहूनां व्यापाराणां तत्र स्मरणसम्भवः, एकैकस्य व्यापारस्य स्मरणसम्भवेऽपि तस्य भेदाभावेन क्रमाभावः, तेन च क्रियात्वाभावः, तेन तस्य वर्तमानत्वाभाव इति।

अयं भावः—व्यापारसमूहरूपायाः क्रियाया अवयवभूता व्यापाराः क्रमजन्मनः, अत एव विप्रकीर्यमाणस्वभावाः=परस्परवियुक्तस्वरूपाः, तेन न युगपत्कालभाविनः। ततश्च सन्निहित एक एव व्यापारक्षणः समुपलभ्यत इति तस्य भेदाभावात् क्रमाभावः। यदि बहवः क्रमिका व्यापारा युगपत् स्मर्यन्त इत्युच्यते, तदपि न। यस्मादनुभवपूर्वकं स्मरणं भवति, इति न बहूनां स्मरणम्, एकस्य चानुभवस्मरणयोर्द्वयोः सम्भवेऽपि तस्य क्रमानुभवो न वृत्त इति कथं तत्र स्मरणमपि क्रमावेदकं स्यादिति पूर्वोक्तसर्वानुपपत्तितादवस्थ्यमिति ॥८७॥

न चापि बहूनां व्यापाराणामेकक्रियात्मकत्वं युज्यते, तथा सति क्रियाया व्यापारसमूहरूपायाः सदसद्रूपत्वप्रसङ्गेन वर्तमानत्वासम्भवाद् व्यापारसमूहे क्रियासामान्यान्वयेन समूहस्य क्रियात्वेऽपि प्रत्येकं क्रियात्वाभावेन कथं क्रियाणां वर्तमानतेत्याह—**सदसद्रूपमेकं स्यादिति**।

अस्यार्थः—सर्वस्य व्यापारसमूहरूपस्यैकत्वकल्पन एकक्रियात्मकत्वकल्पन एकं क्रियात्मकं वस्तु सदसद्रूपं स्यात्। तथा च क्रियाया वर्तमानत्वानुपपत्तिः। अथवा निर्वृत्तेः साध्यस्वभावाया व्यापारसमूहरूपायाः क्रियाया निर्वृत्तिरूपम्=निर्वृत्त्या निष्पत्त्या निरूप्यमाणं निष्पत्तियोग्यत्वरूपं सामान्यं व्यापारसमूहेऽन्वयी एको धर्मो भवेत्। व्यापाराणां तु प्रत्येकं क्रिया व्यक्तिस्वभावता न सिद्ध्येत्।

अतीतानागतानां सदसद्रूपाणां क्षणानामेकक्रियात्मकत्वाभ्युपगमे सर्वस्य वस्तुनः सदसद्रूपमयं विरुद्धमेकत्वं प्रसज्येत। न चैतद् युक्तम्, विरुद्धानामनुभवेनैकत्वबाधात्।

यद्वा बहूनां भिन्नानामेकत्वविरोधात् कश्चिदन्वयी स्वभाव एकः कल्पयितव्यः। तथा च निर्वृत्तेर्निष्पद्यमानायाः साध्यस्वभावायाः क्रियायाः निर्वृत्तिरूपं निष्पत्तियोग्यत्वं प्रत्येकं क्षणानामेकक्रियात्मकत्वं रूपं सामान्यं भवेत्। तथा चैका क्रिया न सिध्येदित्यभिप्रायः।

बहूनां ह्यन्वयी कश्चित् स्वभावोऽङ्गीकृतः क्रियात्मा, न तु बहव एका क्रियेति क्रियाव्यक्तेरभाव एव। भिन्नानामेव हि क्षणानां निर्वृत्तिरूपान्वयः, न तु प्रत्येकं क्रियाव्यक्तिस्वभावता तेषां सिद्ध्यति। ततश्च कथं वर्तमानाः क्रियाः ॥८८॥

---

तथा च कथं क्रियाणां वर्तमानत्वम्। व्यापारसमूहस्य क्रियात्वेऽपि तस्य सदसद्रूपत्वेन वर्तमानत्वासम्भव इति।

अयं भावः—अतीतानागतानामत एव सदसद्रूपाणां व्यापारक्षणानां बुद्धिपरिकल्पितस्य समूहस्यैकक्रियात्मकत्वाभ्युपगमे सर्वस्य वस्तुनः सदसद्रूपमयम्=सदसद्रूपात्मकम्, विरुद्धम्=विरुद्धस्वभावम् एकत्वं प्रसज्येत। न चैतद् युक्तम्, विरुद्धानां सतोऽसताञ्चैकत्वस्यानुभवेन बाधात्।

यद्वा बहूनां भिन्नानाम्=भिन्नजातीयानां व्यापाराणामेकत्वविरोधात् कश्चित् सर्वानुगत एकः स्वभावः कल्पयितव्यः। तथा च निर्वृत्तेर्निष्पत्तिरूपायाः साध्यस्वभावायाः क्रियाया निर्वृत्तिरूपं निष्पत्तियोग्यत्वं प्रत्येकं क्षणानामेकक्रियात्मकत्वं रूपं सामान्यं भवेत्। तथा चैका क्रिया व्यक्तिर्न सिद्ध्येदित्यभिप्रायः।

तथा हि—बहूनामन्वयी कश्चित् स्वभावोऽङ्गीकृतः क्रियात्मा स च जातिरूपः, न तु एवं बहवो व्यापारा एका क्रिया सिद्धेति, क्रियाव्यक्तेरभाव एव। भिन्नानामेव हि व्यापारक्षणानां निर्वृत्तिरूपैकधर्मान्वयः, न तु प्रत्येकं तेषां क्रियाव्यक्तिस्वभावता सिद्ध्यति। ततश्च प्रत्येकं व्यापाराणां वर्तमानत्वेऽपि क्रियाव्यक्तिस्वभावत्वाभावात् कथं वर्तमानः क्रिया इति ॥ ८८ ॥

फलावसानो व्यापारसमूहः क्रमिकः क्रिया, यद्यपि बहिर्नैतादृशः क्रियापदार्थ उपलभ्यते न वोपपद्यते व्यापाराणामसहभाविनां सदसतां समूहक्रमयोरसम्भवात्। समूहाभावे तत्र एकत्वस्याप्यभावः, एवञ्च तत्र वर्तमानत्वस्याप्यभावः, तथापि बुद्धौ स उपपद्यते चाप्युपलभ्यते च। तथा च बुद्धौ व्यापारसमुदायरूपायाः क्रियायाः समुदायरूपत्वेन फलाभेदेन वा एकत्वम्, व्यापाराणां पौर्वापर्यस्य ग्रहणाच्च क्रमिकत्वम्, युगपद्ग्रहणेन च वर्तमानत्वम्, किञ्च प्रत्येकं व्यापारक्षणानामपि

अत्र समाधिमाह—

कार्योत्पत्तौ समर्थं वा स्वेन धर्मेण तद् यथा ।
आत्मतत्त्वेन गृह्येत सा चास्मिन् वर्तमानता ।।८९।।

इहैकत्वं क्रियायाः क्षणसमुदायरूपायाः कल्पितम् । तथा हि—एकफलोद्देशेन प्रवर्तमाना नियतपौर्वापर्याः क्षणाः क्रियेति फलाभेदादसावेका । एवं यथायथं फलभेदेन भिद्यते क्रिया ।

अत्र च सदसत्त्वेऽपि क्षणानां वर्तमानतोपपद्यत एव । न हि सत्त्वं वर्तमानतालक्षणम्, किन्तु प्रारब्धापरिसमाप्तत्वम् । तच्च यावतः क्षणसमूहस्य फलावधिप्रवृत्तिस्तावतः प्राक् फलोपजनादभेदेनाध्यवसितस्यास्त्येव । कार्योत्पत्तौ च स एव समर्थः ।

स च मनोव्यापारपूर्वभावी कायव्यापारपर्यन्तः साधनसंरम्भफलानुमेयः । तत्र च स्वेन क्रमात्मकेन धर्मेण युक्तं तत् समूहरूपं यदात्मतत्त्वेनात्मीयेन

---

क्रमाध्यारोपात् क्रियात्वम्, किञ्च प्रारब्धापरिसमाप्तत्वं वर्तमानत्वमिति सदसतां व्यापाराणां वर्तमानत्वोपपत्तिरित्येवमत्र समाधिमाह— **कार्योत्पत्तौ समर्थं वा इति** ।

अस्यार्थः— यत् कार्योत्पत्तौ समर्थं व्यापारसमूहात्मकं क्रियारूपं तत् स्वेन धर्मेण क्रमात्मकेन तथा आत्मतत्त्वेन स्वस्य बुद्धिगोचरेण स्वभावेन स्वरूपेण वा यद् गृह्येत सा च = सैव तेन तेन रूपेण ग्रहणरूपा बुद्धौ व्यापारसमूहस्य क्रियारूपस्य विद्यमानता अस्मिन् व्यापारसमूहे क्रियारूपे वर्तमानता इति ।

अयं भावः—इह = बुद्धौ क्षणसमुदायरूपायाः क्रियाया एकत्वं कल्पितम् । तथा हि—एकं फलमुद्दिश्य प्रवर्तमाना नियतपौर्वापर्या बहवो व्यापारक्षणाः क्रियेति फलाभेदात् = फलगतस्यैकत्वस्य तत्रारोपाद् असौ = एवंलक्षणा क्रिया एका । एवं यथायथं तत्तद्धात्वर्थफलभेदेन पचिभिद्यादिरूपा क्रिया भिद्यते ।

अत्र च व्यापारक्षणानां सदसद्रूपत्वेऽपि वर्तमानतोपपद्यत एव । यतो न सत्त्वं वर्तमानरूपत्वम्, किन्तु प्रारब्धापरिसमाप्तत्वम् । तच्च यावतो व्यापारक्षणसमूहस्य फलावधिप्रवृत्तिः, तावतोऽनेकत्वेऽपि प्राक् फलोपजननादभेदेनाध्यवसितस्यास्त्येव, अभेदाध्यवसाये च फलाभेदो हेतुः । कार्योत्पत्तौ च = फलोत्पत्तौ च स एव = फलावधिको व्यापारसमूह एव समर्थः, न तु व्यापाराः प्रत्येकम् ।

स च मनोव्यापारपूर्वभावी = मनोव्यापारा ज्ञानेच्छायत्नरूपाः क्रमिकाः पूर्वभाविनो यत्र स तथाविधः कायव्यापारपर्यन्तः साधनसंरम्भफलानुमेयः = साधनानां संरम्भेण कार्यानुकूलकर्तृव्यापारसहकारि स्वव्यापारसातत्येन, फलेन चानुमेयः क्रमिकाणां तेषां समूहस्य च परोक्षत्वात् ।

अत्र चायं क्रमः—"जानाति, इच्छति, यतते, चेष्टते" इति । अत्र ज्ञानेच्छा-

विद्यमानेन स्वभावेन गृह्यते, तदा तस्यैवंविधस्य येयं विद्यमानता सा वर्तमानता। वाशब्दो वक्ष्यमाणापेक्षया विकल्पद्योतकः।

अयमर्थः—नियतपौर्वापर्यः समूहस्तावत् क्रमिकः। तस्य च सदसद्रूपकत्वेऽपि फलावधि परस्परमध्यस्तक्रमः सकलः सन्निहित एकैकोऽपि क्षणो वर्तमानतामनुभवति। यद्यपि च नासावेकः क्रमिक इति न क्रिया, तथाप्यपरक्षणगतः क्रमः तत्रानुभववासनया निश्चीयत एवेति न कश्चिद् दोषः। तदुक्तं भाष्ये—

"क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद् विचेष्टितम्।
तदपेक्ष्य प्रयुञ्जीत गच्छतीत्यविचारयन्'॥ इति। (म०भा०)

फलकामना मानसो व्यापारो क्रियाप्रवृत्तौ हेतुः। क्रियार्थं विचेष्टितं (फलावसाने यः) साधनानां संरम्भः। सामान्यविशेषभावेन च तदर्थता। एवञ्च

---

यत्ना मनोव्यापाररूपाः, चेष्टा तु कायव्यापारः। हिताहितप्राप्तिपरिहारानुकूला क्रिया चेष्टा इति तल्लक्षणम्। तत्र च स्वेन क्रमात्मकेन धर्मेण युक्तं क्रियासमूहरूपं यदा आत्मतत्त्वेन आत्मीयेन बुद्धौ विद्यमानत्वेन स्वभावेन गृह्यते, तदा तस्यैवंविधस्य येयं संकलनात्मकबुद्धौ विद्यमानता सा वर्तमानता। वाशब्दो वक्ष्यमाणकारिकायां वक्ष्यमाणपक्षापेक्षया विकल्पद्योतकः।

वस्तुतस्तु—स्वेन धर्मेण तथा आत्मतत्त्वेन वा यद् गृह्येत सा चास्मिन् वर्तमानता इत्येवं योजनयाऽत्र वाशब्दस्य विकल्पद्योतकत्वसंभवेऽन्यथा व्याख्यानं न युक्तम्।

अयमर्थः—नियतपौर्वापर्यः क्रियासमूहस्तावत् क्रमिकः। तस्य च सदसद्रूपकत्वेऽपि बुद्धौ फलावधिपरस्परमध्यस्तक्रमः सकलः सन्निहित एकैकोऽपि व्यापारक्षणो वर्तमानतामनुभवति।

यद्यपि च नासावेकः क्रमिक इति नासौ क्रिया, तथाप्यपरक्षणगतः क्रमः तत्रानुभववासनाजन्यया स्मृत्या निश्चीयत एवेतिं न कश्चिद् दोषः। तदुक्तं भाष्ये—

क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद् विचेष्टितम्।
तदपेक्ष्य प्रयुञ्जीत गच्छतीत्यविचारयन्॥इति॥
(म० भा० २।२।१२३)

अस्यार्थः—क्रियाप्रवृत्तौ=कर्तृव्यापारप्रवृत्तौ उद्देश्यतया यो हेतुः फलरूपः, तदर्थम्=फलार्थं यद् विचेष्टितम्=इतरसाधनानां कर्तुश्च विचेष्टितम्—विविधा चेष्टा, तदवेक्ष्य=तेषां तत् समूहस्य च प्रागुक्तरीत्या वर्तमानत्वं सक्रमत्वञ्चापेक्ष्य अविचारयन्=इदं साधु असाधु वेति अविचारयन्—इदं साध्वेव इति निश्चिन्वन् इति यावत्। गच्छतीति वर्तमाने लटं प्रयुञ्जीतेति।

हेलाराजेन तु एवंभावातो व्याख्यातम्—"फलकामना मानसो व्यापार" इत्यादि।

मानसव्यापारपूर्वकः कायव्यापारः फलावसानोऽभेदेनाध्यवसितो वर्तमानक्रिया-स्वभावः स्ववाचकशब्दप्रतिपाद्य इति स्फुटमुक्तम् ॥८९॥

वाशब्दसूचितं पक्षान्तरमाह—

क्रियाप्रबन्धरूपं यदध्यात्मं विनिगृह्यते ।
सङ्क्रान्तबिम्बमेकत्र तामाहुर्वर्तमानताम् ॥९०॥

पूर्वं क्षणसमूहस्यैकत्वमेकफलोद्देशेन समर्थितम् । इदानीं तु सङ्कलना-बुद्ध्युपारूढस्य बुद्ध्याकाररूपत्वेन भाविकत्वमेकत्वमुच्यते ।

तथा हि—विप्रसूतावयवः क्रियाकलापो ज्ञानात्मनि (स्वभावे) सङ्क्रान्ताकार

---

वस्तुतस्तु मम व्याख्याने हेलाराजीयव्याख्याने च फलतो न विरोध इत्यव-धेयमिति ॥८९॥

पूर्वकारिकोक्तमेव वर्तमानत्वस्वरूपं विशदीकरोति—क्रियाप्रबन्धरूपमिति ।

यत्तु हेलाराजेनावतारितम्—"वाशब्दसूचितं पक्षान्तरमाह" इति तदपे-शलम् । पूर्वकारिकायामपि बौद्धस्यैव क्रियासमूहस्य क्रमैकत्वोपपत्तिद्वारा वर्तमान-त्वोपपादनाद् विषयैक्येन विकल्पानवतारादिति ।

हेलाराजेनापि पूर्वकारिकाव्याख्याऽवसरे बौद्धान्येव क्रियासमूहस्यैकत्व-क्रमिकत्ववर्तमानत्वानि व्यख्यातानि । तथा हि—"न हि सत्त्वं वर्तमानतालक्षणम्" इत्यादि । अत्राभेदाध्यवसायो बहूनां क्रियाक्षणानां बौद्ध एवैकत्वाध्यासरूपः । अग्रेऽपि—"नियतपौर्वापर्यः" इत्यारभ्य "वर्तमानतामनुभवति" इत्यन्तेन ।

अत्र क्रमाध्यासो वर्तमानत्वञ्च बौद्धमेव प्रदर्शितम् । अग्रेऽपि—"यद्यपि इत्यारभ्य कश्चिद् दोषः" इत्यन्तेन ।

अत्रापि एकैकस्य क्षणस्य क्रमो बौद्ध एव दर्शितः । अग्रेऽपि—"एवञ्च मानसव्यापारपूर्वकः" इत्यारभ्य "इति स्फुटमुक्तम्" इत्यन्तेन । अत्र च मानस-व्यापारपूर्वकः कायव्यापार इति क्रमः, अभेदेनाध्यवसित इति एकात्वाध्यासः, वर्तमानक्रिया स्वभाव इति वर्तमानत्वं बौद्धमेवोपपादितम् । अत्रैकत्वस्य बौद्धत्वं शाब्दम्, क्रमवर्तमानत्वयोस्तु तदार्थमिति विवेकः ।

अथास्याः कारिकाया अर्थः प्रदर्श्यते । यत् क्रियाप्रबन्धरूपम्=क्रिया-समूहरूपम्, एकत्र=एकस्यां बुद्धौ, संक्रान्तबिम्बम्=संक्रान्ताकारम्, अध्यात्मम्—बुद्धौ, विनिगृह्यते=विशेषेण नितरां गृह्यते, तां ग्रहणरूपां वर्तमानतामाहुरिति ।

अयं भावः—पूर्वं क्षणसमूहस्य=क्रियासमूहस्य एकत्वम्=एकफलोद्देशेन प्रवृत्त्या समर्थितम् । इदानीं तु संकलना बुद्ध्युपारूढस्य बुद्ध्याकाररूपत्वेन भाविकम्=वास्तविकम् एकत्वमुच्यते ।

तथा हि—विप्रसृतावयवः=विप्रकीर्णावयवः क्रियासमूह एकस्मिन्

एकस्मिन् यदावधार्यते, तदा तस्मादेकज्ञानादभेदात् तद्वद् वर्तमान एकश्च निश्चीयते। क्रमेणानुभूतानामपि च सङ्कलना भवत्येवानुभववासनायाः प्रत्यासन्नत्वात्। अन्यथा समुदायादिज्ञानाभावः। अनुभवपूर्वकत्वं हि स्मरणस्य नियतम्, न तु क्रमेणोपलब्धं युगपत् स्मर्यते, शतादिप्रत्ययाभावप्रसङ्गात्। बुद्ध्याकारस्य च बुद्धि( वही )रूपतयाध्यवसायाद् बाह्यमेकं वर्तमानं व्यवह्रियते। तत्सिद्धौ च तदपेक्षयातीतानागतसिद्धिर्नान्यथेति सिद्धं क्रियायाः कालत्रयविशेषणम्। गतमदः ॥९०॥

इह क्रियातिपत्तौ लृङ्विधाने भूतभविष्यन्तावुपादीयेते। तयोरनुपपत्तिं चोदयति—

क्रियातिपत्तिरत्यन्तं क्रियानुत्पत्तिलक्षणा।
न च भूतमनुत्पन्नं न भविष्यत् तथाविधम् ॥९१॥

'यदि कमलकमाह्वास्यन्न शकटं पर्यभविष्यत्' इति कमलकाह्वानशकटापरिभावनलक्षणायाः क्रियाया अतिपत्तिः साधनशक्तिवैकल्यान्नियतानुत्पत्तिः। न

---

ज्ञानात्मनि संक्रान्ताकारो यदाऽवकीर्यते, तदा तस्मादेकज्ञानाभेदात् तद्वत्=एकज्ञानवद् वर्तमान एकश्च निश्चीयते। क्रमेणानुभूतानामपि च व्यापाराणां संकलना=एकस्यां बुद्धौ गणना भवत्येव। अनुभवजनिताया वासनाया बुद्धौ प्रत्यासन्नत्वात्=सन्निहितत्वात्। अन्यथा क्रमिकाणां व्यापाराणां समुदायादिज्ञानाभावः। अनुभवपूर्वकत्वं हि स्मरणस्य नियतम्, तत्तु क्रमेणोपलब्धं युगपत् स्मर्यते। अन्यथा शतादिप्रत्ययाभावप्रसङ्गात्। बुद्ध्याकारस्य च बाह्यस्य बुद्धिरूपतयाऽध्यवसायाद् बाह्यमेकं वर्तमानञ्च व्यवह्रियते क्रियासमूहरूपम्। तत् सिद्धौ च=वर्तमानसिद्धौ च तदपेक्षयाऽतीतानागतसिद्धिर्नान्यथेति सिद्धं क्रियायाः कालत्रयं विशेषणम्। गतमदः=वर्तमानकालविमर्शनं गतमिति ॥९०॥

इह=व्याकरणशास्त्रे क्रियातिपत्तौ लृङ्विधाने=अत्यन्तं क्रियानुत्पत्तिनिमित्तके लृङ्विधाने भूतभविष्यन्तौ कालौ निमित्ततयोपादीयेते, तयोरनुपपत्तिं चोदयति=क्रियातिपत्तिरिति।

अस्यार्थः—"लिङ्निमित्ते लृङ्क्रियातिपत्तौ" (पा० ३।३।१३९) इति सूत्रे प्रयोगोपाधितया लृङो निमित्तभूता क्रियातिपत्तिरत्यन्तं क्रियाऽनुत्पत्तिरूपा। न चात्यन्तमनुत्पन्नं क्रियास्वरूपं भूतं व्यवस्थापयितुं शक्यते, नापि तथाविधम्=अत्यन्तमनुत्पन्नं भविष्यद् व्यवस्थापयितुं शक्यते। कदाचिदुत्पन्नस्यैव कदाचिद् भूतत्वभविष्यत्त्वयोः सम्भवात् तेन तेन रूपेण व्यवहाराच्चेति।

अयं भावः—"यदि कमलकनामानं दक्षं शकटिकमाह्वास्यन्न शकटं पर्यभविष्यत्" इति कमलकाह्वानशकटापरिभवनलक्षणयोः क्रिययोरतिपत्तिः स्वस्व-

चानुत्पन्नं क्रियास्वरूपं भूतं भविष्यद् वा शक्यते व्यवस्थापयितुम्। उत्पन्नस्य हि सत्तातिक्रमो भूतः, समर्थसाधनसन्निधाने सम्भावितोत्पत्तिकश्च भविष्यन्। अत्र च साधनाभावात् सम्भावितापि नोत्पत्तिः। अत एवात्यन्तग्रहणेनानुत्पत्तिर्विशेषिता ॥ ९१ ॥

अत्र भूतभविष्यद्व्यवहारं समर्थयते—

**प्राग् विरुद्धक्रियोत्पादान्निर्वृत्ते वा विरोधिनि।**
**व्यापारेऽवधिभेदेन विषयस्तत्र भिद्यते ॥ ९२ ॥**

'यदि कमलकमाह्वास्यन्न शकटं पर्यभविष्यत्' इत्यपरिभवस्य निमित्तं समर्थसाधनाह्वानं भविष्यदसम्भावयन्नेवमभिधत्ते। एवं चाह्वानविरोधिनः कमलकदेशान्तरगमनादपरिभवविरोधिनः शकटगुरुतरभारारोपाच्च पूर्वमप्रतिद्वन्द्विनो

---

साधनशक्तिवैकल्यान्नियतानुपपत्तिः। न चानुपपन्नं क्रियास्वरूपं भूतं भविष्यद् वा शक्यते व्यवस्थापयितुम्। उत्पन्नस्य हि सत्तातिक्रमः=वर्तमानताया अतिक्रमो भूतः। समर्थसाधनसन्निधाने सम्भावितोत्पत्तिकश्च भविष्यन्। अत्र च=प्रकृते च साधनवैकल्यादुत्पत्तिः सम्भाविताऽपि न। अत एव प्रकृतकारिकायामनुत्पत्तिरत्यन्तग्रहणेन विशेषितेति। अत्रानुत्पत्तावात्यन्तिकत्वं सम्भावितत्वाभावरूपमिति ॥ ९१ ॥

अत्र=क्रियाया अत्यन्तमनुत्पत्तिस्थले भूतभविष्यद्व्यवहारं समर्थयते प्राग् विरुद्धक्रियोत्पादादिति।

अस्यार्थः—"यदि कमलकमाह्वास्यन्न शकटं पर्यभविष्यत्, किन्तु नैतत् सम्भाव्यते, कमलकस्य देशान्तरगमनात्" इति, "यदि कमलकमाह्वास्यन्न शकटं पर्यभविष्यत्, किन्तु नैवं भूतम्, कमलकस्य देशान्तरगमनात्" इति वा परिसमाप्ते वाक्ये। तत्र चाह्वानविरुद्धायाः कमलकदेशान्तरगमनक्रियाया उत्पादात् प्राक्, शकटापरिभवविरुद्धायाश्च शकटगुरुतरभारारोपक्रियाया उत्पादात् प्राक्, वा=अथवा प्रागुक्ते विरोधिनि व्यापारे निर्वृत्ते निष्पन्ने सति, अवधिभेदेन अवधेर्विरुद्धक्रियोत्पादरूपस्य विरुद्धक्रियानिर्वृत्तिरूपस्य वा भेदेन तत्र प्रागुक्तवाक्यद्वये विषयो भविष्यद्रूपो भूतरूपश्च भिद्यत इति।

अयं भावः—यदि कमलकमाह्वास्यन्न शकटं पर्यभविष्यत्, किन्तु नैतत् संपत्स्यते, कमलकस्य देशान्तरगमनादित्यत्रापरिभवस्य निमित्तं समर्थसाधनाह्वानम्=शकटापरिभवक्रियाशक्तिकमलकरूपकर्तृसाधनाह्वानं भविष्यत्कालिकमसम्भावयन्नेवमभिधत्ते। एवञ्चाह्वानविरोधिनः कमलकदेशान्तरगमनात्, अपरिभवविरोधिनश्च शकटगुरुतरभारारोपात् प्राग् अप्रतिद्वन्द्विनः=विरोधिरहितस्याह्वानस्यापरिभवस्य च भविष्यत्वेऽवधित्वेनापेक्ष्यस्य प्रागुक्तस्य प्राक्कालस्य

भविष्यत्त्वे कालस्यापेक्ष्यस्य भेदादवच्छेदात् क्रियातिपत्तेरपि भविष्यद्विषयो विभज्यते। शकटापरिभवस्य क्रियारूपस्य निष्पत्तिः, कमलकाह्वानाभावात्, तदाह्वानं च देशान्तरगमनान्न सम्पत्स्यत इति तस्य भविष्यतोऽसम्भावनाया-मत्यन्तानुत्पत्तिलक्षणस्य क्रियातिपत्तिरूपस्यापि भविष्यत्ता।

यदि हि समर्थसाधनाह्वानं भविष्यति, तदा क्रिया सम्पत्स्यत इति तस्या भविष्यत्त्वे तदत्यन्ताभावोऽप्यभविष्यत्। तथा यदि स तेन ब्राह्मणार्थिना दृष्टोऽभविष्यदुताभोक्ष्यताप्यभोक्ष्यत्, न तु भुक्तवानित्यत्राभोजनस्य भोजनप्रतिद्वन्द्विनो व्यापारस्यातीतत्वात् क्रियातिपत्तेरप्यवधिभेदादतीतविषयतया भूतत्वेन व्यवहारः। गतमेतत्॥ ९२॥

इदानीं कालप्रसङ्गेनायथाकालप्रत्ययविधानार्थं 'धातुसम्बन्धे प्रत्ययाः' (३।४।१) इति सूत्रं विचारयति—

**व्यभिचारे निमित्तस्य साधुत्वं न प्रकल्पते।**
**भाव्यासीदिति सूत्रेण तत् कालेऽन्यत्र शिष्यते॥ ९३॥**

---

भेदात्—तादृशक्रियोत्पादेनावच्छेदात् क्रियातिपत्तेरपि भविष्यद्विषयो विभज्यते। शकटापरिभवस्य क्रियाप्रतियोगिकत्वेन क्रियारूपस्यानिष्पत्तिः, कमलकाह्वानाभावात्, तदा ह्वानञ्च देशान्तरगमनान्न सम्पत्स्यत इति तस्य=तदाह्वानस्य भविष्यतोऽसम्भावनायामत्यन्तानुत्पत्तिलक्षणस्य क्रियातिपत्तिरूपस्यापि भविष्यत्ता।

यदि हि समर्थसाधनाह्वानं भविष्यति तदाऽशकटापरिभवरूपा क्रिया सम्पत्स्यते तस्याः=शकटापरिभवरूपायाः क्रियाया भविष्यत्वे तदत्यन्ताभावोऽप्यभविष्यत्। यदि कमलकमाह्वास्यन्न शकटं पर्यभविष्यत्; किन्तु नैवंभूतमिति द्वितीयवाक्यस्थले तु शकटापरिभवविरोधिनः कमलकदेशान्तरगमनरूपस्य व्यापारस्यातीतत्वात्। क्रियातिपत्तेरपि क्रियाविरोधिव्यापारनिर्वृत्तिरूपावधिभेदादतीतविषयतया भूतत्वेन व्यवहारः। तथा यदि स ब्राह्मणो ब्राह्मणार्थिना तेन यजमानेन दृष्टोऽभविष्यदुताभोक्ष्यत, अपि अभोक्ष्यत, न तु दृष्ट इत्यत्रादर्शनस्य भोजनप्रतिद्वन्द्विनो व्यापारस्यातीतत्वात् क्रियातिपत्तेरपि क्रियाविरोधिव्यापारनिर्वृत्तिरूपावधिभेदादतीतविषयतया भूतत्वेन व्यवहार इति। गतमेतत्=क्रियातिपत्तौ लङ्विधाने भूतभविष्यदनुपपत्तिविषयकं विमर्शनं गतमिति॥ ९२॥

इदानीं कालविचारप्रसङ्गेन अयथाकालप्रत्ययविधानार्थम् "धातुसम्बन्धे प्रत्ययाः" (पा० ३।४।१) इति सूत्रं विचारयति—**व्यभिचारे निमित्तस्येति**।

अस्यार्थः—भाव्यासीदित्यत्र स्वकालरूपस्य निमित्तस्य व्यभिचारे तत्काले स्वकाले पूर्वोक्तप्रयोगस्य साधुत्वं न प्रकल्पते, अतः सूत्रेण 'धातुसम्बन्धे प्रत्ययाः' (पा० ३।४।१) इति सूत्रेण, अन्यत्र=स्वकालादन्यत्र, प्रत्ययस्य साधुत्वं शिष्यते=उपदिश्यत इति।

इह यथास्वं नियत एव काले प्रत्यया विहिता इति स्वकालव्यभिचारे कालान्तरे तेषां साधुत्वं न स्यात्। तद्यथा 'भाव्यासीदग्निष्टोमयाज्यस्य पुत्रो जनिता' इत्यादौ भावीति भविष्यत्काले प्रत्ययोऽन्वाख्यातः, आसीदिति भूतकालेन सम्बन्धं न यायात्। तथा अग्निष्टोमेनेष्टवान् इति भूते प्रत्ययोऽन्वाख्यातो जनितेति भविष्यत्कालेन सम्बन्धो न स्यादिति सूत्रारम्भः। धातूनां स्वतः-सम्बन्धाभावात् तदर्थोऽत्र धातुरित्युक्तः। भेदाधिष्ठानत्वाच्च सम्बन्धस्य वृत्ताव-नेकसंख्यान्तर्भावः।

साधनद्वारेण च धात्वर्थानां विशेषणविशेष्यभावलक्षणः सम्बन्धः। प्रत्यया-धिकाराच्च प्रत्ययपरिग्रहे सिद्धेऽधात्वधिकारविहितप्रत्ययस्यापि मतुपो वर्तमान-कालसत्तोपाधिपरित्यागे कालान्तरेऽपि सति धातुसम्बन्धे साधुत्वं यथा स्यादिति पुनः प्रत्ययग्रहणस्य प्रयोजनमुक्तं भाष्ये—'गोमानासीद् गोमान् भविता' इति।

---

अयं भावः—इह व्याकरणे यथायथं नियत एव काले भूतभविष्यदादौ लङ्-लृङादयः प्रत्यया विहिता इति स्वकालव्यभिचारे कालान्तरे तेषां साधुत्वं न स्यात्। तद्यथा—'भाव्यासीद् अग्निष्टोमयाज्यस्य पुत्रो जनिता' इत्यादौ भावीत्यत्र भविष्यत्काले णिनिरूपः प्रत्ययोऽन्वाख्यातः, 'आसीत्' इति भूतकालेन सम्बन्धं न प्राप्नुयात्, विरोधात्। तथाऽग्निष्टोमेन यागेनेष्टावान् इति भूते णिनिरूपः प्रत्ययोऽन्वाख्यातो जनितेति भविष्यत्कालेन सम्बद्धो न स्यादिति विचिन्त्य 'धातुसम्बन्धे प्रत्ययाः' (पा० ३।४।१) इति सूत्रारम्भः। धातूनां परस्परं स्वतः—सम्बन्धाभावाद् धात्वर्थोऽत्र सूत्रे धातुपदेनोक्तः। सम्बन्धस्य भेदाधिष्ठानत्वाच्च 'धातुसम्बन्धे' इत्यत्र समासरूपायां वृत्तावनेकसंख्यान्तर्भावः। तथा च धात्वोः सम्बन्धः, धातूनां सम्बन्ध इति विग्रहो बोध्यः, न तु वृत्तावौत्सर्गिकीमभेदैकत्वसंख्यामाश्रित्य 'धातोः सम्बन्धः' इति विग्रह इति।

साधनद्वारेण च धात्वर्थानां विशेषणविशेष्यभावलक्षणः सम्बन्धः। तद्यथा—'भाव्यासीत्' इत्यत्र कर्तृरूपं साधनं द्वारीकृत्य भवनक्रियासत्ताक्रिययोः परस्परं सम्बन्धः, तथा च भविष्यत्कालिकभवनक्रियाकर्तृकर्तृका अतीतकालिकी सत्ता इति बोधः। "प्रत्ययः" (पा० ३।१।१) "परश्च" (पा० ३।१।२) इत्यधिकारादेव धातु-सम्बन्धे इत्यत्र प्रत्ययपरिग्रहे सिद्धे पुनः प्रकृतसूत्रे प्रत्ययग्रहणमधात्वधिकारविहित-प्रत्ययस्यापि मतुपो वर्तमानकालिकसत्तारूपोपाधिपरित्यागे कालान्तरेऽपि धातुसम्बन्धे सति धातुत्वं यथा स्यादित्येतदर्थमिति पुनः प्रत्ययग्रहणस्य प्रयोजनमुक्तं भाष्ये—'गोमानासीत्, गोमान् भविता' इति। तदेतत् सूत्रं वार्तिककृता प्रत्याख्यातम्—'धातुसम्बन्धे प्रत्ययस्य यथाकालविधानात् सिद्धम्' इति।

अस्यार्थः—धातुसम्बन्धेऽनेन सूत्रेण विहितस्य प्रत्ययस्य यत् फलं तद् यथा-

तदेतत् सूत्रं वार्त्तिके प्रत्याख्यातं 'धातुसम्बन्धे प्रत्ययस्य यथाकालविधानात् सिद्धमिति'। यथास्वं कालेषु प्रत्ययाः पदसंस्कारदर्शने विहिता इत्यन्तरेणाप्येतत्सूत्रं सिद्धमिष्टमित्यर्थः ॥ ९३ ॥

अत्रोच्यते—

**स्वकाल एव साधुश्चेत् कालभेदे गतिः कथम् ।**

भाव्यादिशब्दस्य स्वकाले संस्कारेऽङ्गीक्रियमाणे सत्यासीदिति प्रयोगसम्बन्धे कालान्तरप्रतीतिः कुतस्त्या। अत्राप्युक्तं वार्तिके—'उपपदस्य तु कालान्यत्वमिति'।

उपपदस्य विशेषणस्य विशेष्यसम्बन्धात् तत्कालत्वं वाक्यादवसीयत इति वाक्यार्थोऽसौ पदसंस्कारवेलायामसन्निहितो नाङ्गम्।

---

काले प्रत्ययविधानात् सिद्धमिति। यथायथं तत्तत्कालेषु प्रत्ययाः पदसंस्कारपक्षे विहिता इत्यन्तरेणापि एतत् सूत्रं सिद्धमिष्टमिति फलितार्थः, वाक्यसंस्कारपक्षमादाय सूत्रं प्रवृत्तम्, वार्तिकं तु पदसंस्कारपक्षमादायेति विवेकः।

वस्तुतस्तु लोके वाक्यस्यैव व्यवहारसाधनत्वेन प्रकृतिप्रत्ययान्वाख्यानद्वारा पदान्वाख्यानद्वारा च वाक्यस्यैव व्याकरणान्वाख्येयत्वम्, अत एव 'वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः' इत्युक्तम्। तथा च वाक्यसंस्कारपक्ष एव मुख्य इति प्रकृतसूत्रप्रवृत्तिरेव समुचितेत्यवधेयमिति ॥ ९३ ॥

अत्र=प्रकृतवार्तिके आशङ्क्य वार्तिकान्तरेण समाधानमत्रोच्यते—**स्वकाल एवेति**।

अस्यार्थः—भाव्यादिशब्दः स्वकाल एव=भविष्यत्काल एव, साधुश्चेत्, कालभेदे भिन्नकालिकासीदित्यादिशब्दसम्बन्धे कालान्तरस्य गतिः प्रतीतिः कथमिति। अत्र सामाधानमुक्तं वार्तिके—'उपपदस्य तु कालान्यत्वम्' (म० भा० ३।४।१) इति।

अस्यार्थः—उपपदस्य भविष्यत्कालिकार्थबोधकस्य भावीत्यादिविशेषणपदस्य आसीदित्याद्यतीतकालिकार्थरूपविशेष्यबोधकपदसम्बन्धात् कालान्यत्वमतीतकालिकार्थबोधकत्वं वाक्यादवसीयत इति।

अयं भावः—भाव्यादिशब्दस्य स्वकाले=भविष्यत्काले संस्कारेऽङ्गीक्रियमाणे सत्यासीदिति विरुद्धकालिकार्थबोधकप्रयोगसम्बन्धे तस्य=भाव्यादिरूपोपपदार्थस्य कालान्तरप्रतीतिः कुतस्त्या।

अत्राप्युक्तं वार्तिके—'उपपदस्य तु कालान्यत्वम्' (म० भा० ३।४।१) इति। उपपदस्य विशेषणस्य=भाव्यादिरूपोपपदार्थस्य विशेषणस्य 'आसीत्' इत्यादिपदबोध्यविरुद्धकालिकार्थरूपविशेष्यसम्बन्धाद् विशेषणस्य तत् कालत्वम्=

एतद् व्याचष्टे—

वाक्यार्थादतदर्थेषु विशिष्टत्वं न सिद्धयति ॥ ९४ ॥

सोऽर्थो वाक्यार्थपर्यालोचनागम्यो येषां पदानां न भवति तेष्वतदर्थेषु वाक्यार्थायोग्यार्थेषु सत्सु वाक्यार्थस्य तैरवच्छेदाद् विशिष्टत्वं न भवति। तथा च भावीत्यस्य भूतकालानुपादानाद् आसीदित्यनेन सम्बन्धाभावाद् वाक्यार्थो विशिष्टो नावतिष्ठेत।

तस्मादेकवाक्यतावशाद् विशेष्यकालानुवृत्तौ विशेषणस्य सिद्धायां नार्थः सूत्रेणेत्यर्थः ॥ ९४ ॥

प्रत्युत सूत्रारम्भे विवक्षितोऽर्थो न प्रतीयेतेत्याह—

तदर्थश्चेदवयवो भाविनो भूततागतिः।
न स्यादत्यन्तभूतत्वमेवैकं तत्र सम्भवेत् ॥ ९५ ॥

---

अतीतकालिकत्वम्, वाक्यादवसीयत इति तत्कालत्वं वाक्यार्थो न तु पदार्थ इति पदसंस्कारवेलायामसन्निहित इति विशेषणस्य तत्कालत्वं न पदसंस्काराङ्गमिति भविष्यत्काल एव पदसंस्काराङ्गमिति तत्रैव भाव्यादिशब्दस्य साधुत्वमिति।

उपपदस्य कालान्यत्वमिति समाधानवार्तिकं व्याचष्टे—वाक्यार्थादिति।

अस्यार्थः—पदेषु अतदर्थेषु सत्सु सोऽर्थो वाक्यार्थपर्यालोचनागम्योऽर्थो येषां पदानां न भवति, तानि पदान्यतदर्थानि तेषु अतदर्थेषु सत्सु तैर्वाक्यार्थे विशेषणभूतैरवच्छेदाद् वाक्यार्थस्य विशिष्टत्वं न सिद्धयति—'भाव्यासीत्' इत्यादौ विशेष्यविशेषणपदयोर्भिन्नकालिकार्थबोधकत्वादिति। विशेषणस्य विशेष्यकालानुवृत्तौ सिद्धायामेतदर्थं 'धातुसम्बन्धे प्रत्ययाः' इति सूत्रं न कर्तव्यमिति।

अयं भावः—सोऽर्थो वाक्यार्थपर्यालोचनागम्योऽर्थो येषां पदानां न भवति तेषु अतदर्थे वाक्यार्थायोग्यार्थबोधकेषु पदेषु सत्सु तैः=तादृशपदार्थैर्विशेषणभूतैरवच्छेदाद् वाक्यार्थस्य विशिष्टत्वं न सिद्धयति। तादृशपदार्थस्य वाक्यार्थेऽनन्वयात्। तथा च भावी इति विशेषणपदे भूतकालानुपादानाद् भविष्यद्रूपभूतकालोपादानाच्च आसीदित्यनेन सम्बन्धाभावाद् वाक्यार्थो विशिष्टः—विशेष्यविशेषणभावापन्नः नावतिष्ठेत।

तस्माद् विशेषणे प्रत्ययोपस्थापितमपि भविष्यत्कालरूपमर्थं वाक्यस्य विशिष्टार्थविषयकतात्पर्यानुरोधेन परित्यज्य एकवाक्यतावशाद् विशेषणस्य कालानुवृत्तौ सिद्धायां प्रकृतसूत्रस्य न प्रयोजनमिति ॥ ९४ ॥

सूत्रारम्भे तु 'भाव्यासीत्' इत्यादौ विवक्षितोऽर्थः=भाविनो भूतत्वरूपोऽर्थः न प्रतीयेत इत्याह—तदर्थश्चेदिति।

अस्यार्थः—पदविशिष्टस्य वाक्यस्यावयवो विशेषणरूपो भाव्यादिः। तदर्थः—

यद्यस्माद् वचनाद् भावि कृत्यमासीदित्यादौ वाक्येऽवयवो भावीत्यादि-विशेषणभूतः, प्रधानभूताख्यातविषयभूतकालाभिधायी व्यवस्थाप्यते, तथा भविष्यतः कृत्यस्य या भूतकालता प्रतिपिपादयिषिता सा न विज्ञायेत। केवलमासीदित्यनेन भूतताया गमिताया अपि भावीत्यनेन पुनः श्रुतितुल्येनावधारणं प्रतीयेत। तथा च यदिदं कृत्यं कर्तव्यरूपं वस्तु तदासीदेव भूतमेवेति वाक्यार्थोऽवतिष्ठेत। न चैष विवक्षितः।

तस्मात् स्वकाल एवान्वाख्यानाद् वाक्यार्थपर्यालोचनाद् भाविनो भूतता-गतिः सिद्ध्यति। विवक्षिता भाव्यवस्थाप्यस्य कृत्यस्यातीता। सम्प्रतीदं वर्तमानं जातम्। त्रैयध्विका हि पदार्थाः पूर्वमुपपादिताः। तथा च भविष्यदध्वनोऽतीताध्वप्रवेशो न्याय्यः। यथोक्तं भगवता व्यासमुनिना—

"अवश्यंभाविनं नाशं भावित्वाद् विध्युपस्थितम्।
अयमेव हि ते कालः पूर्वमासीदनागतः"॥ इति॥९५॥

---

प्रधानभूताख्यातविषयकालाभिधायी चेद् यदि, तदा भाविकृत्यस्य भूतता गतिभूतत्वज्ञानम्, न स्यात्, आसीदित्यस्य सम्बन्धेन तत्र भविष्यत्वस्य बाधात्, किन्तु तस्यापि विशेष्यगतभूतकालाभिधायित्वेनात्यन्तभूतत्वमेवैकं तत्र सम्भवेत्, द्विरभिधानेऽतिशयार्थप्रतीतेरिति।

अयं भावः — यद्यस्माद् वचनात् = 'धातुसम्बन्धे प्रत्ययाः' इति सूत्राद् भाविकृत्यमासीदित्यादौ वाक्येऽवयवो भावीत्यादिर्विशेषणभूतः प्रधानभूताख्यातविषयभूतकालाभिधायी व्यवस्थाप्यते, तदा भविष्यतः कृत्यस्य या भूतकालता प्रतिपिपादयिषिता सा न विज्ञायेत। केवमासीदित्यनेन गमिताया अपि भूतताया भावीत्यनेन पुनः श्रुतितुल्येन = पुनरुक्तशब्दतुल्येनावधारणं प्रतीयेत। तथा च यदिदं कृत्यं कर्तव्यरूपं वस्तु तदासीदेव भूतमेवेति वाक्यार्थोऽवतिष्ठेत। न चैष विवक्षितः।

तस्मात् स्वकाल एव = भविष्यत्काल एव भाविशब्दस्यान्वाख्यानाद् वाक्यार्थपर्यालोचनाद् भाविनो भूततागतिः सिद्ध्यति। अस्य कृत्यस्य विवक्षिता भाव्यवस्थाऽपि अतीता, सम्प्रतीदं वर्तमानं जातमिति तदर्थः। त्रैयध्विकाः = त्रैकालिका हि पदार्थाः पूर्वमुपपादिताः। तथा च भविष्यदध्वनो भावस्यातीताध्वप्रवेशो न्याय्यः। यथोक्तं भगवता व्यासमुनिना —

अवश्यंभाविनं नाशं भावित्वाद् विध्युपस्थितम्।
अयमेव हि ते कालः पूर्वमासीदनागतः॥ इति।

अस्यार्थः — अवश्यंभाविनो नाशस्य भविष्यत्त्वाद् विधिना = दैवेन उपस्थितं = वर्तमानम्, वर्तमानकालो जातः 'अवश्यंभाविनं नाशं भावित्वात्' इत्यत्र 'अकेनोर्भविष्यदाधमर्ण्ययोः' (पा० २।३।७०) इति द्वितीया। उदाहरति — अयमेव

नन्वेवं स्वकालेऽन्वाख्यातस्य वाक्यार्थात् कालान्तरावगतावप्युपात्तकालत्यागप्रसङ्गः। न प्रसङ्ग इत्याह—

**विशिष्टकालता पूर्वं तथापि तु विशेषणे।**
**आश्रयात् सोऽन्तरङ्गत्वात् तत्र साधुर्भविष्यति ॥ ९६ ॥**

पदान्तरसम्बन्धात् पूर्वं भाव्यादिशब्दस्य विशिष्ट एव स्वकाले व्युत्पादितत्वात् साधुत्वम्। विशेषणेऽपि च तस्य पदान्तरसम्बन्धे तथैव विशिष्टकालता। यस्मादजहदेव स्वकालयोगं तत्र विशेष्यकालमनुवर्तते। भाविनो हि भूतता।

अतश्च योऽसावाश्रितः स्वकालः संस्कारनिमित्तत्वेन, तस्य पूर्वमेवाश्रयणा-

---

हि कालः=वर्तमानकालः, पूर्वं ते अनागतः=भविष्यन्नासीदिति। अत्र हि अनागतस्यातीतत्वेन वर्तमानत्वमुक्तमिति। अथवा—भाविनं नाशमवश्यंभावित्वादुपस्थितं वर्तमानं विद्धि जानीहि इति योजना इति ॥९५॥

नत्वेवं भाव्यासीत्, 'अग्निष्टोमयाज्यस्य पुत्रो जनिता' इत्यादौ स्वस्वकालेऽन्वाख्यातस्य णिनेर्वाक्यार्थपर्यालोचनात् कालान्तरावगतावपि उपात्तकालत्यागप्रसङ्ग इति प्राप्ते, न प्रसङ्ग इत्याह—**विशिष्टकालतेति**।

अस्यार्थः—अत्र तथाशब्ददर्शनाद् यथाशब्दाध्याहारः। आसीदित्यादिपदान्तरसम्बन्धात् पूर्वं यथा भाव्यादिशब्दस्य विशिष्टकालता वर्तमानादिव्यावृत्तभविष्यद्रूपकालाभिधायित्वम्, तस्य विशेषणेऽपि तु—तस्य आसीदित्यादिपदान्तसम्बन्धाद् विशेषणत्वेऽपि च तथा विशिष्टकालता। यस्मात् स्वकालात्यागपुरस्सरमेव तस्य विशेष्यकालानुवृत्तिः। भाविनो हि भूतताऽत्र वाक्ये विवक्षिता। यतो भाव्यादिशब्दस्य 'आसीत्' इत्यादिपदान्तरसम्बन्धात् पूर्वं संस्कारनिमित्तत्वेन भविष्यत्कालस्याश्रयात्=आश्रयणात् तस्य कालस्य पूर्वोपस्थितत्वेनान्तरङ्गत्वात् तत्रैव भाव्यादिशब्दः पदान्तरसम्बन्धेऽपि साधुर्भविष्यति, न तु स्वकालहानेन विशेष्यकाल इति।

अयं भावः—"आसीत्" इत्यादिपदान्तरसम्बन्धात् पूर्वं भाव्यादिशब्दस्य विशिष्ट एव स्वकाले=भूतादिव्यावृत्त एव भविष्यद्रूपे स्वकाले व्युत्पादितत्वात् साधुत्वम्। तस्य पदान्तरसम्बन्धे सति विशेषणेऽपि च=विशेषणत्वेऽपि च तथैव=पदान्तरसम्बन्धात् पूर्ववदेव विशिष्टकालता=भूतादिव्यावृत्तभविष्यत्कालाभिधायित्वम्। यस्मादजहदेव स्वकालयोगं तत्र=भाव्यासीदित्यादौ भाव्यादिशब्दो विशेष्यकालमनुवर्तते। भाविनो हि भूतता।

अतश्च योऽसौ स्वकालो भाव्यादिशब्दे संस्कारनिमित्तत्वेनाश्रितस्तस्य पदान्तरसम्बन्धात् पूर्वमेवाश्रयणादन्तरङ्गत्वे सति पदान्तरसम्बन्धेऽपि तत्रैव=स्वकाल एव भाव्यादिशब्दः साधुः, न तु तस्य स्वकालत्यागः, तद्गतत्वेनैव=

दन्तरङ्गत्वे सति तत्रैव साधुः शब्दो भाव्यादिः पदान्तरयोगेऽपि । न तु स्वकाल-त्यागः, तद्गतत्वेनैव वाक्यार्थाद् विशिष्टतागतेः ।

एवमग्निष्टोमयाज्यस्य पुत्रो जनितेत्यत्र भूतस्यैव भाविता वाक्यार्थात् । सूत्रारम्भे त्वत्यन्तं भविष्यत्तैव गम्येतेति प्रत्याख्यातं सूत्रम् ।। ९६ ।।

वार्त्तिकाभिप्रायेण केचित् तु समर्थयन्ते । कथमित्याह—

**आमिश्र एव प्रक्रान्तः स पदार्थस्तथाविधः ।**
**केवलस्य विमिश्रत्वं नित्येऽर्थे नोपपद्यते ।। ९७ ।।**

इह प्रयुक्तानां शब्दानामन्वाख्यानाद् व्यवहाराय शब्दप्रयोगाद् वाक्यमेव तदङ्गमन्वाख्येयम् । तथा च पदान्तरार्थसमन्वययोग्यपदार्थापोद्धारपूर्वकं पदानाम-नुशासनाद् वाक्यावधिकेऽन्वाख्याने प्रथमत एव सर्वः पदार्थो विशिष्ट आमिश्र

---

भविष्यत्कालनिष्ठत्वेनैव वाक्यार्थपर्यालोचनाद् विशिष्टतागतेः = भूतकालाभिधा-यित्वावगमात् ।

एवम् 'अग्निष्टोमयाज्यस्य पुत्रो जनिता' इत्यत्र वाक्यार्थपर्यालोचनाद् भूतस्यैव भाविता विवक्षिता । 'धातुसम्बन्धे प्रत्ययाः' इति सूत्रारम्भे त्वत्रात्यन्तं भविष्यत्तैव गम्येतेति वार्तिककृता सूत्रं प्रत्याख्यातमिति ।

वस्तुतस्तु धातुसम्बन्धे सति विशेष्यकालविशेषणत्वापन्ने स्वकाले प्रत्यया इति सूत्रव्याख्याने सूत्रारम्भमूलभूते वाक्यसंस्कारपक्षे चाश्रीयमाणे न कश्चिद् दोष इति वयम्, समर्थयिष्यते च सूत्रं मूल एव —'शुद्धे च काले व्याख्यातम्' ( वा० प० ३, काल० ९८ ) इति कारिकायां तद्व्याख्याने हेलाराजीये चेति ।। ९६ ।।

केचित्तु प्रकृतवार्त्तिकाभिप्रायेण 'भाव्यासीत्' इत्यादिकं साधयितुम् 'धातु-सम्बन्धे प्रत्ययाः' इति सूत्रं समर्थयन्ते, कथमित्याह—आमिश्र एवेति ।

अस्यार्थः—आमिश्र एव = विशेष्यभूतेन विशेषणभूतेन वा पदार्थान्तरे-णान्वित एव, पदार्थः प्रक्रान्तः प्रक्रमे पदान्तरसम्बन्धात् पूर्वमेव, केवलेन पदेन बोधितः, स तथाविधो विशिष्टः पदार्थ एव, न तु वाक्यार्थः, पदान्तरसम्बन्धे त्वभि-व्यज्यत इति हृदयम् । नित्येऽर्थे भाष्यवार्तिकाद्यनुसारेण स्वीकृते सति पूर्वं केवलस्य पदार्थस्य पदान्तरसम्बन्धे सति विमिश्रत्वम्—पदार्थान्तरविशिष्टत्वं नोपपद्यते । कादाचित्कत्वे नानित्यत्वादिति ।

अयं भावः—इह = लोकव्यवहारे प्रयुक्तानां शब्दानां व्याकरणेनान्वा-ख्यानात् = साधुत्वबोधनाद् व्यवहाराय शब्दप्रयोगाद् वाक्यमेव तदङ्गम् = व्यव-हाराङ्गं व्याकरणेनान्वाख्येयम् । तथा च पदान्तरार्थसमन्वय( सम्बन्ध) योग्य-पदार्थापोद्धारपूर्वकं पदानां व्याकरणेनानुशासनाद् वाक्यावधिकेऽन्वाख्याने प्रथमत एव सर्वः पदार्थो विशिष्ट आमिश्र एवोपात्तस्तादृशः, यादृशो वाक्यप्रयोगादव-

एवोपात्तः, यादृशो वाक्यप्रयोगादवसीयते। इतरपदार्थसमन्वयनिरपेक्षं तु पदानुशासने केवलस्य पूर्वमवस्थितस्य पश्चादितरपदसमन्वये विशिष्टतायां नित्यः शब्दार्थसम्बन्धो विरुध्येत।

"सामान्यार्थस्तिरोभूतो न विशेषेऽवतिष्ठते।
उपात्तस्य कुतस्त्यागो निवृत्तः क्वावतिष्ठताम्" ॥

इत्यादि चात्र दूषणमुक्तम् ॥ ९७ ॥

एवं सामान्येनाभिधाय एतदेव प्रकृते योजयति--

**शुद्धे च काले व्याख्यातमामिश्रे न प्रसिध्यति।**
**साधुत्वमयथाकालं तत् सूत्रेणोपदिश्यते ॥ ९८ ॥**

---

सीयते। इतरपदार्थसमन्वयनिरपेक्षे तु पदानुशासने केवलस्य पूर्वमवस्थितस्य पश्चादितरपदसमन्वये विशिष्टतायां स्वीक्रियमाणायां नित्यः शब्दार्थसम्बन्धो विरुध्येत। अत्र च=इतरपदार्थसमन्वयनिरपेक्षे पदानुशासने च दूषणमुक्तम्--

सामान्यार्थस्तिरोभूतो न विशेषेऽवतिष्ठते।
उपात्तस्य कुतस्त्यागो निवृत्तः क्वावतिष्ठताम् ॥ (वा० प० २।१५)

इत्यादि।

अस्यार्थः--'भाव्यासीत्' इत्यादौ भावीति पदस्य पदान्तरसम्बन्धात् पूर्वं स्थितः सामान्यार्थो भविष्यत्कालरूपः पदान्तरसम्बन्धे सति स्वविरोधिनो विशिष्टार्थस्य भाविनो भूतत्वस्य प्रादुर्भावात् तिरोभूतो निवृत्तः, अतः स एव सामान्यार्थो विशेषे भाविनो भूतत्वरूपे नावतिष्ठते।

अत्र प्रथमपदार्थोऽनुपपत्तिं दर्शयति--उपात्तस्य कुतस्त्याग इति। उपात्तस्य भावीत्यत्र प्रत्ययेनोपात्तस्य भविष्यत्सामान्यरूपस्यार्थस्य निवर्तकहेतुं विना कुतस्त्यागो निवृत्तिः, शब्दार्थनित्यत्वस्य वैयाकरणनयेऽभ्युपगमात्। कथञ्चिन्निवृत्त्यभ्युपगमेऽपि निवृत्तः सामान्यार्थस्तत्त्वादेव क्वावतिष्ठताम्। विशेषे नावस्थातुमर्हति। एवञ्चामिश्रोऽर्थोऽन्यः, केवलश्च सामान्यरूपोऽर्थोऽन्य इति आमिश्रेऽर्थे प्रत्ययविधानार्थं 'धातुसम्बन्धे प्रत्ययाः' इति सूत्रमावश्यकमिति हृदयमिति ॥९७॥

एवं पूर्वकारिकया सामान्येनाभिधाय एतदेव प्रकृते=भाव्यादित्यादौ योजयति--शुद्धे च काल इति।

अस्यार्थः--भावीत्यत्र शुद्धे भूतकालसंसर्गरहिते च=तु काले भविष्यत्सामान्यरूपे व्याख्यातं णिनिप्रत्ययस्य साधुत्वम्। आमिश्रे भूतसंसर्गवति भविष्यत्काले विशिष्टरूपे न प्रसिध्यति, तत्र तत् साधकाभावात्। तत्=तस्मात्, अयथाकालम्=भविष्यत्कालादन्यस्मिन् काले भूतव्यामिश्ररूपे 'धातुसम्बन्धे प्रत्ययाः' (पा० ३।४।१) इति सूत्रेण प्रत्यय उपदिश्यत इत्यप्राप्ता यथाकाल-

भावीति भविष्यति भूतेनासंसृष्टे प्रत्ययः साधुरुक्तः। स भूतसंसृष्टे न प्राप्नोति प्रथममेवापेक्षिते। तस्मात् सूत्रेण व्यामिश्रे काले प्रत्ययविधानमुपपद्यते ॥ ९८ ॥

विशेषाभावात् तर्हि भूतकालोऽप्यासीदिति भावीत्येतद्भविष्यत्कालसम्मिश्रे कस्मात् साधुर्न भवतीत्याह—

आख्यातपदवाच्येऽर्थे निर्वर्त्यत्वात् प्रधानता।
विशेषणं तदाक्षेपात् तत्काले व्यवतिष्ठते ॥ ९९ ॥

भूतं भाव्यायोपदिश्यत इत्याख्यातवाच्या क्रिया साध्यमानस्वभावा सर्वत्रैव वाक्यार्थभूता प्रधानम्। नामपदवाच्यं तु सिद्धस्वभावं कारकं गुणभूतम्। प्रधानानुयायिनश्च गुणाः, न तु गुणानुयायिप्रधानमित्याख्यातवाच्येनार्थेन स्वोपकारायाक्षिप्तो नामपदवाच्योऽर्थो गुणभूतस्तत्कालमनुविधत्ते।

---

प्रत्ययविधानार्थं सूत्रमावश्यकमिति।

अयं भावः—भावी इत्यत्र भूतेनासंसृष्टे भविष्यति णिनिप्रत्ययः साधुरुक्तः। स भूतसंसृष्टे भविष्यति न प्राप्नोति प्रथममेव=आसीदिति पदान्तरसम्बन्धात् प्रागेव अनपेक्षिते। तस्मादत्र व्यामिश्रे काले भूतसंसृष्टभविष्यद्रूपे 'धातुसम्बन्धे प्रत्ययाः' इति सूत्रेण प्रत्ययविधानमुपपद्यतेऽन्यथासिद्धत्वादिति ॥ ९८ ॥

नन्वेवं तर्हि "आसीत्' इति पदबोध्यो भूतकालोऽपि भावीत्येतत्पदबोध्यभविष्यत्कालसम्मिश्रे भूते कस्मात् साधुर्न भवतीत्याह—आख्यातपदवाच्येऽर्थ इति।

अस्यार्थः—आख्यातपदवाच्येऽर्थे आसीदिति आख्यातपदवाच्येऽर्थे भूतकालिकसत्त्वरूपे निर्वर्त्यत्वात् निर्वर्त्यत्वेनोद्देश्यत्वलक्षणा आर्थिकी प्रधानता। भावीत्येतत्पदबोध्यं कर्तृसाधनरूपं विशेषणं तु तदाक्षेपात्—तेन प्रधानीभूतेनाख्यातार्थेन क्रियारूपेण स्वोपकारायाक्षेपात् तत्काले=प्रधानीभूताख्यातार्थक्रियाकाले भूते व्यवतिष्ठते।

एवञ्च प्रधानानुरोधित्वं गुणस्य विशेषणस्य, न तु गुणानुरोधित्वं प्रधानस्येति नावतरणिकोक्तशङ्काया अवकाश इति।

अयं भावः—भूतं भाव्यायोपदिश्यते='सिद्धं साध्यायोपदिश्यते' इति न्यायेनाख्यातवाच्या क्रिया साध्यमानत्वस्वभावा सर्वत्रैव वाक्यार्थभूता=वाक्यजन्यप्रतिपत्तिविशेष्यभूता प्रधानम्। नामपदवाच्यं तु सिद्धस्वभावं कारकं तत्र गुणभूतम्। प्रधानानुसारिणश्च गुणा न तु गुणानुसारिप्रधानम् इत्याख्यातवाच्येनार्थेन क्रियारूपेण साध्येन स्वोपकारायाक्षिप्तः साधनभूतो नामपदवाच्योऽर्थो गुणभूतस्तत्कालम्=आख्यातवाच्यप्रधानीभूतक्रियाकालमनुविधत्ते=अनुसरति।

एवं च न्यायेनैव समन्वयान्यथानुपपत्त्या गुणप्रधानसन्निधावेकस्मिन् वाक्ये प्रधानानुयायित्वाद् गुणानां प्रधानानुग्रहाय तत्कालस्यापि स्वकालापरित्यागेनैवानुवर्तनाद् भाव्यासीदित्यादिप्रयोगे सिद्धे नार्थः सूत्रेणेति।

एतदुक्तं भवति—आमिश्रत्वं हि सर्वत्र सम्बन्धे सति पदार्थानां यथायोगं विशिष्टमस्त्येव। केवलं पदान्तरप्रयोगं विना न निश्चीयते तदित्येतावता सामान्येऽर्थे पदं वर्तते, विशेषेऽर्थे वाक्यमित्युच्यते। न तु त्यागग्रहौ कौचित् ॥९९॥

तथाविधे चार्थे पदसंस्कारादामिश्रेऽपि प्रक्रम एव वृत्तः संस्कारः। न हि कालान्तरव्यतिभिन्ने स्वकाले निषेधोऽस्ति प्रत्ययस्य। तस्मान्नार्थोऽत्र यत्नेनेत्याह—

**सम्प्रत्ययानुकारो वा शब्दव्यापार एव वा।**
**अध्यस्यते विरुद्धेऽर्थे न च तेन विरुध्यते ॥ १०० ॥**

---

यत्त्वत्र हेलाराजेनैवमुक्तम्—"एवञ्च न्यायेनैव इत्यारभ्य प्रयोगे सिद्धेनार्थः सूत्रेणेति" इत्यन्तेन तदेतदयुक्तम्। शङ्कासमाधानयोरुपक्रमोपसंहारयोर्वा भिन्नार्थविषयकत्वेनासामञ्जस्यात्।

अवतरणिकायां भाव्यासीदित्यत्र भविष्यत्कालसम्मिश्रे भूते लुङ्प्रत्ययः साधुः कस्मान्न भवतीति शङ्का। अस्याः समाधानं तु—गुणानां प्रधानानुरोधित्वम्, न तु प्रधानस्य गुणानुरोधित्वमिति भाव्यासीदित्यत्र भूतसम्मिश्रे भविष्यति प्रत्ययः, न तु भविष्यत् सम्मिश्रे भूत इति। न त्वत्र सूत्रप्रत्याख्यानाप्रत्याख्यानयोरेकस्य निर्धारणावसर इति।

किञ्चाभिहितान्वयवादे लक्षणकचक्षुष्कदृष्ट्या पदसंस्कारपक्षः, एतद्दृष्ट्यैव च प्रायेण सर्वाणि पाणिनेः सूत्राणि प्रवृत्तानि, अस्मिंश्च पक्षे भाव्यासीदित्यत्र भावीत्यस्य भविष्यत्सामान्ये साधुत्वे न विशिष्टे भविष्यति साधुत्वं न स्यादिति 'धातुसम्बन्धे प्रत्ययाः' इति सूत्रं सार्थकम्।

अन्विताभिधानवादे च लक्ष्यैकचक्षुष्कदृष्ट्या वाक्यसंस्कारपक्षः, यथा—खादतमोदता इत्यादिवृत्तौ। एवञ्च लक्ष्यैकचक्षुष्कदृष्ट्या 'धातुसम्बन्धे प्रत्ययाः' (पा० ३।४।१) इति शास्त्रस्य प्रवृत्तिवैयर्थ्येनाप्रवृत्त्या एतत्सूत्रप्रत्याख्यानं न युक्तमिति। एतत् कारिकया च एतदुक्तं भवति। यथायोगम्=यथासम्भवं पदार्थानां परस्परसम्बन्धे अवश्यंभाविनि सति सर्वत्र पदार्थानामामिश्रत्वं हि विशिष्टमस्त्येव। केवलं पदान्तरप्रयोगं विना न निश्चीयते तदित्येतावता सामान्येऽर्थे पदं वर्तते, विशेषेऽर्थे वाक्यमित्युच्यते, न तु सामान्यार्थस्य त्यागः, विशेषार्थस्य च परिग्रहः कश्चिदिति ॥ ९९ ॥

ननु कालान्तरव्यतिभिन्ने स्वकाले प्रत्ययविधानार्थम् 'धातुसम्बन्धे प्रत्ययाः' (भा०३।४।१) इति सूत्रस्य नास्ति आवश्यकता विरोधेन स्वकाले कालान्तरसम्भेदासम्भवादित्याशङ्क्याह—सम्प्रत्ययानुकारो वेति।

इह वचनेनार्थानां स्वभावातिक्रमाभावात् कालान्तरे साधुत्वानुशासनमात्रात् तत्र प्रतीतिर्नोपपद्यत इत्यकिञ्चित्करं सूत्रम्। सङ्गतिस्तु गुणप्रधानभावेन समन्वयोपपत्तेः प्रधानकालानुरोधेनैकवाक्यतावशेन दर्शिता।

अथवा यथास्वकालेष्वेव सम्बन्धेऽप्येते प्रत्ययाः। अध्यारोपेण तु समन्वयः।

तथा ह्यग्निष्टोमयाजीत्यनेन भूतविशिष्ट एवार्थः प्रत्याय्यते। जनितेत्येतत्सम्बन्धे तु स भूतकालावच्छिन्नो ज्ञानाकारोऽनुपपद्यमानो विरुद्धे तस्मिन् भविष्यति कालेऽध्यस्यते समारोप्यते। योऽयं भविष्यत्कालो जनितः, तत्र जन्मोत्तरकालमग्निष्टोमकरणयागसमाप्तिमाश्रित्याधुनैव भूतकालोऽयमुपात्तः। तेनायमर्थः—सोऽस्य पुत्रो जनिता, योऽग्निष्टोमेन यष्टेति।

---

हेलाराजेन तु इयं कारिका अन्यथावतारिता तत्तु अवतरणं न युक्तम्, "अध्यस्यते विरुद्धेऽर्थे न स तेन विरुध्यते" इति कारिकार्धस्थ विरोधाभावोपपादनपरत्वेनावतरणे विरोधस्यैवाशङ्काविषयत्वौचित्यादिति।

एतस्याः कारिकाया अयमर्थः—भूतभविष्यत्कालौ एकज्ञानगोचरौ तदाकारौ तत्र वर्तमानौ च। यथा च सम्प्रत्ययस्य ज्ञानस्यानुकार आकारो भूतं भविष्यद्वा स्वविरुद्धे अर्थे तस्यैव ज्ञानस्य गोचरेऽध्यस्यते आरोप्यते शब्दव्यापार एव वाऽभिधाशक्तिलक्षणः स्वविषयविरुद्धेऽर्थे अध्यस्यते। अतः सोऽध्यासाधिष्ठानभूतोऽर्थः, तेनाध्यस्यमानेनार्थेन सह न विरुध्यत इति।

अयं भावः—इह=भाव्यासीदित्यादौ 'धातुसम्बन्धे प्रत्ययाः' इति वचनेन अर्थानां कालस्वभावातिक्रमाभावात् कालान्तरे साधुत्वानुशासनमात्रात्=तत्र कालान्तरविषया प्रतीतिर्नोपपद्यत इत्यकिञ्चित्करम्—'धातुसम्बन्धे प्रत्ययाः' (पा० ३।४।१) इति सूत्रम्, इति हेलाराजः।

अस्माभिस्तु सूत्रसार्थक्यं प्राग् दर्शितम्। सङ्गतिस्तु=भाव्यासीदित्यादौ भूतभविष्यत्कालयोः परस्परविरुद्धयोः परस्परं समन्वयस्तु विरुद्धयोरप्यर्थयोः परस्परं गुणप्रधानभावेन परस्परं समन्वयोपपत्तेः प्रधानकालानुरोधेनैकवाक्यतावशेन पूर्वकारिकायां दर्शिता।

अथवा परस्परं विरुद्धयोरर्थयोः सम्बन्धेऽपि यथास्वम्=यथायथं स्वकालेष्वेवैते विरुद्धकालार्थकाः प्रत्यया। विरुद्धेऽर्थे सम्प्रत्ययाकाराध्यारोपेण तु विरुद्धयोः कालयोः परस्परं समन्वयः।

तथा हि—'अग्निष्टोमयाजी' इत्यनेन भूतविशिष्ट एवार्थः प्रत्याय्यते। 'जनिता' इत्यनेन पचात् तस्य सम्बधे तु स भूतकालावच्छिन्नो ज्ञानाकारोऽनुपपद्यमानो विरुद्धे तस्मिन् भविष्यति कालेऽध्यस्यते=समारोप्यते, योऽयं भविष्यत्कालो

यद्वा शब्दस्याग्निष्टोमयाजीत्यस्य व्यापारः स्वार्थाभिधानलक्षणो भविष्यति कालेऽध्यस्यते। उत्पत्स्यमानस्यार्थस्यानेन प्रतिपादनानुपपत्तेर्भावी व्यापारोऽस्य। सोऽस्य पुत्रो जनिता, यो जातोऽभिवृद्धोऽग्निष्टोमयाजीतीमं व्यपदेशं लप्स्यत इत्यर्थः।

तदेतदुक्तं भाष्ये—'कदा चैवं व्यपदेक्ष्यते। यदानेनेष्टं भवती'ति तदित्थं सम्प्रत्ययानुकारेण शब्दव्यापारेण वाऽध्यस्यमानेन सोऽर्थो विरुद्धत्वाभिमतो न विरुध्यते। नास्त्यत्र समन्वयविरोध इत्यर्थः ॥ १०० ॥

एतदेव निदर्शनेन व्युत्पादयति—

भूतं भविष्यदित्येतौ प्रत्ययौ वर्तमानताम्।
अत्यजन्तौ प्रपद्येते विरुद्धाश्रयरूपताम् ॥ १०१ ॥

तद् वस्तुभूतम्, भविष्यदन्यद् इत्येतौ प्रत्ययौ ज्ञाने समुत्पद्यमानौ स्वतो

---

जनितुः, तत्र जन्मोत्तरकालिकीमग्निष्टोमकरणयागसमाप्तिमाश्रित्य = अध्यारोप्याध्युनैव भूतकालोऽयं शब्देनोपात्तः। तेनायमर्थः सम्पद्यते—'सोऽस्य पुत्रो जनिता योऽग्निष्टोमेन यष्टा' इति।

यद्वा शब्दस्याग्निष्टोमयाजीत्यस्य व्यापारः स्वार्थाभिधानरूपो भविष्यति कालेऽध्यस्यते। तेनाग्निष्टोमयाजीत्यस्य शब्दस्य व्यापारो भावी, उत्पत्स्यमानस्यार्थस्यानेन शब्देन वर्तमानेन प्रतिपादनानुपपत्तेः। तथा चायमर्थ एवं सति सम्पद्यते—'सोऽस्य पुत्रो जनिता, यो जातोऽभिवृद्धोऽग्निष्टोमयाजी' इतीमं व्यपदेशं लप्स्यत इति।

तदेतदुक्तं भाष्ये—"कदा चैवं व्यपदेक्ष्यते यदाऽनेनेष्टं भवति"। तदित्थं योऽर्थो विरुद्धत्वेनाभिमतः कालरूपः स सम्प्रत्ययाकारेण शब्दव्यापारेण वा स्वस्मिन्नध्यस्यमानेन सह न विरुध्यत इति नास्त्यत्र विरुद्धयोः कालयोः परस्परं समन्वयविरोध इति ॥ १०० ॥

एतदेव = भिन्नयोः कालयोरविरोधमेव निदर्शनेन = दृष्टान्तेन व्युत्पादयति— भूतं भविष्यदितीति।

अस्यार्थः — तद् वस्तुभूतम्, भविष्यदन्यदित्येतौ प्रत्ययौ ज्ञाने समुत्पद्यमानौ स्वतो वर्तमानतामपरित्यजन्तौ अतिविरुद्धयोर्भूतभविष्यतोराकारयोराश्रयरूपतां यथा प्रपद्येते तथा स्वकालापरित्यागेन कालान्तरेऽध्यारोपोऽत्र = अग्निष्टोमयाजीत्यत्र युक्त इति अर्थसंगृहीतः साध्यान्वयः = अर्थात् संगृहीतः साध्ययोः = अपूर्वत्वेन विधेययोः, कालयोर्विरुद्धयोः परस्परमन्वयः। भूतभविष्यदाकारौ हि प्रागुक्तौ प्रत्ययौ अपरित्यक्तवर्तमानस्वसंवेदनरूपौ स्वाकारं भूतभविष्यद्रूपयाऽध्यवस्यतः।

एवमग्निष्टोमयाजीत्यत्र सम्प्रत्ययानुकारोऽपि = एतत् पदजन्यसम्प्रत्यया-

वर्तमानकालावपि विषययोः स्वकालविरुद्धयोर्भूतभविष्यतोराकारं धारयतो यथा;
एवं स्वकालापरित्यागेन कालान्तरेऽध्यारोपोऽत्र युक्त इत्यर्थः सङ्गृहीतः साध्यान्वयः। भूतभविष्यदाकारौ हि प्रत्ययौ भूतभविष्यद्रूपतया स्वाकारमध्यवस्यतोऽपरित्यक्तवर्तमानस्वसंवेदनरूपौ।

एवमग्निष्टोमयाजीति सम्प्रत्ययानुकारोऽपि स्वकालमजहदध्यारोपविषयस्य विरुद्धस्य भविष्यत आश्रीयमाणस्य रूपं प्रतिपद्यते। न ह्यध्यस्यमानं स्वरूपं जहाति गोत्वमिव वाहीके ॥ १०१ ॥

इदानीं कालप्रसङ्गेन वर्तमानसामीप्यं विचारयति—

**अध्वनो वर्तमानस्य यः शेषो य उपक्रमः।**
**तद् वर्तमानसामीप्यं शास्त्रे भेदेन दर्शितम् ॥ १०२ ॥**

आ फलसमाप्तेः क्रियाबन्धोऽव्युपरतो वर्तमानः काल इत्युक्तम्। तस्य च यः शेषः समाप्तत्वेऽपि संस्कारानुवृत्तिलक्षणः, तद् भूतविषयं वर्तमानसामीप्यम्। यश्चारम्भो मानसः सङ्कल्पो वर्तमानस्य, तद् द्वितीयं भविष्यद्विषयं

कारोऽपि स्वकालमपरित्यजन् अध्यारोपविशेष्यस्य स्वविरुद्धस्य भविष्यतोऽध्यासाधिष्ठानतयाऽऽश्रीयमाणस्य रूपं तादात्म्याध्यासेन प्रतिपद्यते।

न ह्यध्यस्यमानं वस्तुस्वरूपं जहाति यथा वाहीकेऽध्यस्यमानं गोत्वं स्वरूपं न जहाति। तदयमत्र संक्षिप्तार्थः। तद् वस्तुभूतम्, भविष्यदन्यद् इत्येते ज्ञाने समुत्पद्यमाने स्वतो वर्तमानतामजहती अपि यथा विरुद्धयोः स्वाकारयोर्भूतभविष्यतोराश्रयरूपतां प्रपद्येते तथाऽग्निष्टोमयाजी इत्यत्र जायमानस्य प्रत्ययस्य आकारः स्वकीयं भूतकालमजहत् स्वविरुद्धस्य भविष्यतोऽध्यासविषयस्याध्यासाधिष्ठानतयाऽऽश्रीयमाणस्य रूपं तादात्म्याध्यासेन प्रतिपद्यत इति। अत्र दृष्टान्ते यथापदमध्याहार्यम्। दार्ष्टान्तिकं तु तथापदसहितं सर्वमध्याहार्यमेवेति ॥१०१॥

इदानीं कालप्रसङ्गेन वर्तमानसामीप्यं विचारयति—अध्वनो वर्तमानस्येति।

अस्यार्थः—वर्तमानस्याध्वनः काललक्षणस्याव्युपरतक्रियाप्रबन्धावच्छिन्नस्य तत् समाप्तिदशायामपि शेषः, चक्रभ्रमिसंस्कारानुवृत्तिवत् संस्कारानुवृत्तिलक्षणः, यश्च वर्तमानस्याध्वन उपक्रमः—क्रियाप्रबन्धात् प्राक् तद्विषयकमानससङ्कल्पलक्षणस्तदारम्भस्तद्रूपं वर्तमानसामीप्यं भेदेन=भूतभविष्यद्विषयकत्वभेदेन शास्त्रे द्विधा दर्शितम्।

अयं भावः — फलस्य या समाप्तिः=सम्यग् आप्तिः=प्राप्तिः तत्पर्यन्तमव्युपरतः क्रियाप्रबन्धः=क्रियासन्तानो वर्तमानः काल इत्युक्तं प्राक्। तस्य च=तु यः शेषः क्रियाप्रबन्धस्य समाप्तत्वेऽपि चक्रभ्रमिसंस्कारवत् संस्कारानुवृत्तिलक्षणः, तद् भूतविषयं वर्तमानसामीप्यम्। यश्च वर्तमानस्य क्रियाकलापस्यारम्भो मानससङ्कल्परूपस्तद् द्वितीयं भविष्यद्विषयकं वर्तमानसामीप्यम्। तत्र=द्विविधेऽपि

वर्तमानसामीप्यम्। तत्र कायव्यापारादर्शनाद् वर्तमानतानवसाये भूतभविष्यत्स्वभावे वर्तमानप्रत्यया अतिदिश्यन्ते। वावचनात् पक्षे भूतभविष्यत्प्रत्ययानामनुशासनान्नेदं वर्तमानमेव सद्भेदेनोपादीयते। अत्रापि पूर्ववत् स्वकाल एव गच्छामीत्यादिपदस्य संस्कारः।

अतो हि वर्तमानस्यैव प्रतीतिः। पदान्तरप्रयोगे तु तत्कालेऽध्यारोपः। वावचनात् पक्षेऽध्यारोपितरूपाश्रयाद् भूतभविष्यत्प्रत्यया भवन्तीति नार्थो यत्नेन ॥ १०२ ॥

प्रार्थनास्वभावाशंसा प्रतीतिविशेषत्वाद् वर्तमाना प्रत्युपस्थिता कथं भविष्यत्कालेति भाष्येऽभिहितेत्यत आह—

**आशंसा वर्तमानाऽपि विषयेण भविष्यता।**
**भाष्ये भविष्यत्कालेति कार्यार्थं व्यपदिश्यते ॥ १०३ ॥**

ज्ञानस्वभावत्वाद् वर्तमानकालापि प्रार्थ्यमानस्य विषयस्यानागतत्वाद्

---

वर्तमानसामीप्ये कायव्यापारादर्शनाद् वर्तमानत्वानिर्धारणे भूतभविष्यत्स्वभावे तस्मिन् = वर्तमानसामीप्ये वर्तमानप्रत्यया अतिदिश्यन्ते। "वर्तमानसामीप्ये वर्तमानवद् वा" (पा० ३।३।१३१) इति सूत्रे वावचनात् पक्षे भूतभविष्यत्प्रत्ययानामनुशासनादिदम् = वर्तमानसामीप्यम्, अतिदेशतो वर्तमानमेव सद् वर्तमानाद् भेदेन भूतभविष्यद्रूपेणोपादीयते। अत्रापि पूर्ववत् = भाव्यासीदित्यादाविव स्वकाल एव 'गच्छामि' इत्यादिपदस्य संस्कारः।

अतो हि = गच्छामीत्यादिपदाद् हि वर्तमानस्यैव प्रतीतिः केवलात्। समनन्तरकाल एवेत्यादिपदान्तरप्रयोगे तु तत्काले = भविष्यत्काले वर्तमानत्वस्याध्यारोपः। सूत्रे वावचनात् पक्षेऽध्यारोपितरूपानाश्रयाद् भूतभविष्यत्प्रत्यया अपि भवन्तीति नार्थो वर्तमानसामीप्ये वर्तमानत्वातिदेशरूपेण यत्नेन इति हेलाराजः।

वयं तु पश्यामः — लक्षणैकचक्षुष्कान् अधिकारिण उद्दिश्य पाणिनेः शास्त्रप्रणयने प्रवृत्तिः।

न च लक्षणैकचक्षुष्का लक्षणं विना वर्तमानत्वाध्यारोपानध्यारोपाभ्यां भूतभविष्यद्वर्तमानप्रत्ययान् लक्ष्येषु निर्णयन्ति, तेषां लक्षणं विना लक्ष्यापरिज्ञानादिति तेषां लक्ष्यनिर्धारणार्थमतिदेशशास्त्रं सार्थकमिति ॥१०२॥

ननु आशंसा सम्भावनास्वरूपा, सम्भावना च प्रतीतिविशेषत्वात् प्रत्युपस्थिता = सन्निहिता तत एव वर्तमाना इति कथं भविष्यत्काला इति भाष्येऽभिहिता इत्यत आह — आशंसा वर्तमानाऽपीति।

हेलाराजस्तु — अन्यथा इमां कारिकामवतारितवान्।

विषयधर्मेण भविष्यत्कालाशंसा व्यपदिष्टा। तथा च भूतप्रत्ययलक्षणं कार्यं भविष्यति विषये निर्देष्टुं युक्तम् ॥ १०३ ॥

यदि विषयधर्मेणापि व्यपदेशो भवति, तदेष्यमाणस्यानागतत्वादिच्छापि भविष्यत्काला स्यादिति तत्र चिकीर्षतीति वर्तमानकालप्रत्यया अप्यतिदेष्टव्या इत्याशङ्क्याह—

**इच्छा चिकीर्षतीत्यत्र स्वकालमनुरुध्यते।**
**भविष्यति प्रकृत्यर्थे तत्कालं नानुरुध्यते ॥ १०४ ॥**

---

इदन्तु न युक्तं प्रतिभाति। प्रार्थनायाः स्वानुकूले कर्मणि प्रवर्तनारूपत्वेन प्रतीतिविशेषरूपत्वाभावात्। अत एव प्रार्थनघटितस्य "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्" (पा० ३।३।१६) इति सूत्रस्य स्थाने "प्रवर्तनायां लिङ्" इति लघुभूतं न्यासान्तरं कृतम्। तदुक्तम्—

अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥ इति। (म० भा० ३।३।१६)

अत्र 'चतुर्षु' इत्यस्य—निमन्त्रणामन्त्रणाधीष्टप्रार्थनेषु इत्यर्थः। प्रवर्तनारूपमित्यस्य विधिपदप्रतिपाद्यमिति शेष इति।

प्रकृतकारिकार्थस्तु—सम्भावनारूपज्ञानस्वभावत्वेन वर्तमानाऽपि वर्तमानकालाऽपि आशंसा भविष्यता स्वविषयेण हेतुना भविष्यत्काला इति कार्यार्थं भविष्यतिविषये भूतवर्तमानप्रत्ययलक्षणकार्यार्थं व्यपदिश्यत इति। इयञ्च कारिका व्याख्याता हेलाराजेन ज्ञानस्वभावादित्यादि।

अत्र --'ज्ञानस्वभावत्वात्' इत्यस्यादौ सम्भावनारूपेति शेषः। 'प्रार्थ्यमानस्य' इत्यस्य स्थाने सम्भाव्यमानस्य इति ज्ञेयम्। भूतप्रत्ययलक्षणमित्यत्र भूतेति वर्तमानस्याप्युपलक्षणं बोध्यमिति। उदाहरणं तु --"देवश्चेदवर्षीत्, वर्षति, वर्षिष्यति वा तदा धान्यमवाप्स्म, वपामो, वप्स्यामो वा" इति। "आशंसायां भूतवच्च" (पा० ३।३।१३२) इति सूत्रस्यायं विषयः। सूत्रे चकारेण वर्तमानवदित्यस्य संग्रह इति ॥ १०३ ॥

ननु यदि विषयधर्मेणापि कालेन क्रियायाः कालव्यपदेशो भवति, तदेष्यमाणस्य विषयस्यानागतत्वादिच्छाऽपि भविष्यत्काला स्यादिति। तत्र=भविष्यति चिकीर्षतीति वर्तमानकालप्रत्यया अप्यतिदेष्टव्याः, न तु अतिदिश्यन्ते, किन्तु चिकीर्षतीति वर्तमानकालप्रत्यया उपदिश्यन्त एवेत्याशङ्क्याह—इच्छा चिकीर्षतीत्यत्रेति।

अस्यार्थः—चिकीर्षतीत्यत्र सन् प्रकृतिकृधात्वर्थे सन्प्रत्ययार्थगुणभूते भविष्यति सति सन्नन्तधातुवाच्या इच्छाशब्दतः प्रधानभूता तत एव स्वकालं

चिकीर्षतीत्यत्र येयमिच्छा सन्नन्तधातुवाच्या, सा प्रधानम्। तदुपसर्जनभूता करोतिक्रिया तद्विषयः। तस्योपसर्जनस्य भविष्यत्कालत्वेऽपि सनः प्रकृतिभूतधातुवाच्यस्य 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति सन्नन्तधातुवाच्याया इच्छाया वर्तमानत्वात् स एव कालेनानुवर्त्य इति सिद्धो वर्तमानप्रत्ययः। न हि प्रधानं गुणाननुविधत्त इति गुणभूतकरोतिक्रियाकालानुवृत्तिरत्र नास्ति॥ १०४॥

आशंसायामपि स्वकालानुवृत्तिः कथं न भवतीत्याह—

आशंस्यमानतन्त्रत्वादाशंसायां विपर्ययः।
प्रयोक्तृधर्मः शब्दार्थे शब्दैरेवानुषज्यते॥ १०५॥

यथेच्छा प्रत्ययार्थत्वात् प्रधानम्, नैवमाशंसा। न हि सा प्रत्ययवाच्या,

---

वर्तमानकालमनुरुध्यते, तत्कालम्=तस्य स्ववाचकप्रकृत्यर्थस्य कालं भविष्यत्कालं प्रकृत्यर्थस्याप्रधानत्वान्नानुरुध्यते। 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्' इति हि अबाधो वैयाकरणनय इति।

अयं भावः—'चिकीर्षति' इत्यत्र येयमिच्छा सन्नन्तधातुवाच्या सा शब्दतः प्रधानम्, प्रत्ययार्थत्वात्। तदुपसर्जनभूता करोतिक्रिया तद्विषयः। तस्य सनः प्रकृतिभूतधातुवाच्यस्य 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्' इति न्यायेन इच्छायामुपसर्जनस्य भविष्यत्कालत्वेऽपि सन्नन्तधातुवाच्याया इच्छाया वर्तमानत्वात् स एव=वर्तमानकाल एव भविष्यत्कालेनानुवर्त्य इति सिद्धः 'चिकीर्षति' इत्यत्र वर्तमानप्रत्ययः। न हि प्रधानं गुणान् अनुविधत्ते=अनुसरति, इति लोकप्रसिद्ध्या सन्नर्थेच्छायां गुणभूतकरोतिक्रियाकालानुवृत्तिरत्र नास्तीति॥ १०४॥

'चिकीर्षति' इत्यत्रेच्छायामिव 'देवश्चेद् वर्षति धान्यं वपामः' इत्यत्राशंसायामपि स्वकालानुवृत्तिः कथं न भवतीत्याशङ्क्याह—आशंस्यमानतन्त्रत्वादिति।

अस्यार्थः—यद्यप्यत्राशंस्यमानं देववर्षणं धान्यवपनञ्च नेच्छावत् प्रत्ययार्थत्वेन प्रधानम्, तथाप्युद्देश्यत्वलक्षणमार्थं प्राधान्यं तस्यास्त्येव, आशंसा तु नेच्छावत् प्रत्ययार्थभूता, किन्तु प्रयुक्ते शब्दे प्रयोक्तृधर्मः सा गम्यत इति नेच्छावत् प्रत्ययार्थत्वेन प्राधान्यमस्याः, यद्यपि उद्देश्यत्वलक्षणमार्थं प्राधान्यमेष्यमाणस्याप्यस्ति, तथापि शाब्दं प्रकृत्यर्थत्वेन तस्याप्राधान्यमिच्छायास्तु शब्दतः प्राधान्यम्, शाब्दं प्राधान्यञ्च प्रथमोपस्थितिकत्वात् प्रबलमिति तत् सम्भवे तेनैव शास्त्रीयो व्यवहारः। तथा चाशंस्यमानतन्त्रत्वात्=आशंस्यमानाधीनत्वादाशंसायाम्—इच्छातो विपर्ययः=वैपरीत्यम्, अप्राधान्यमिति यावत्। एवञ्चाशंसायां नेच्छावत् स्वकालानुवृत्तिः, किन्तु आशंस्यमानकालानुवृत्तिरेवेति।

ननु आशंसाप्रयोक्तृधर्मः, सा च कथं शब्दसंस्कारनिमित्तम्, शब्दार्थो हि

अपि तु तद्विषय एवाशंस्यमानः प्रत्ययाभिधेयः। प्रयोक्तृधर्मो ह्याशंसा, न शब्दार्थः। तथा हि—उपाध्यायश्चेद् आगतो व्याकरणमधीतमेवेत्याशंस्यमानमुपाध्यायागमनं व्याकरणाध्ययनं च प्रत्ययवाच्यं तन्त्रं प्रधानमिति तत्कालानुवृत्तिरेव न्याय्या। एतदाशंसिना तु प्रयोक्त्रा वाक्यमिदं प्रयुक्तमिति गम्यमानत्वमाशंसायाः।

कथं तर्हि प्रयोक्तृधर्म आशंसा शब्दसंस्कारनिमित्तम्। शब्दार्थो हि संस्कारनिमित्तं न्याय्य इत्याशङ्क्योक्तं—प्रयोक्तृधर्मः शब्दार्थे शब्दैरेवानुषज्यत इति। अध्यारोप्यते प्रयोक्तृधर्मः प्रयोज्यस्य शब्दस्याभिधेये शब्देनैव। तस्मिन् हि प्रयुक्ते गम्यते स धर्मः प्रयोक्तरीति गम्यमानत्वादाबाधादिवद् युक्तं

---

शब्दसंस्कारनिमित्तं भवतीत्युचितमित्याशङ्क्याह—प्रयोक्तृधर्म इति।

अस्यार्थः—प्रयोक्तृधर्मो ह्याशंसाप्रयुक्तैः शब्दैरेव शब्दार्थे स्वार्थेऽनुषज्यतेऽध्यारोप्यत इति।

अयं भावः—'चिकीर्षति' इत्यत्र यथेच्छाप्रत्ययार्थत्वात् प्रधानम्, नैवमाशंसा। न हि सा प्रत्ययवाच्या, अपि तु तादृशशब्दप्रयोगे सति गम्यते सा प्रयोक्तरीति, "अपि तु आशंसाविषय एव आशंस्यमानः प्रत्ययाभिधेयः" इति हेलाराजः। तन्न युक्तं प्रतिभाति। 'देवश्चेदवर्षीत्, धान्यमवाप्स्म' इत्यत्राशंस्यमानस्य देववर्षणस्य धान्यवपनस्य च प्रत्ययार्थत्वाभावात्। प्रयोक्तृधर्मो हि आशंसा, न प्रकृत्यर्थः प्रत्ययार्थो वा।

यत्त्वत्रोक्तं हेलाराजेन—"उपाध्यायश्चेदागतः" इत्यारभ्य "गम्यमानत्वमाशंसायाः" इत्यन्तेन।

अत्र "आशंस्यमानमुपाध्यायागमनं व्याकरणाध्ययनञ्च प्रत्ययवाच्यमित्यंशो दुष्टः। आशंस्यमानयोस्तयोः प्रत्ययार्थत्वाभावात्"। किञ्चात्र 'तन्त्रं प्रधानम्' इत्यंशोऽपि दुष्टः। तन्त्रशब्दस्यायत्तवचनत्वात्। काव्यप्रकाशस्य व्याख्याने प्रदीपे हि—"अनन्यपरतन्त्राम्" इत्यस्य व्याख्यानावसरे तन्त्रशब्दस्यायत्तवचनत्वं व्याख्यातमिति तत एव द्रष्टव्यम्।

ननु आशंसा प्रयोक्तृधर्म इति कथं शब्दसंस्कारनिमित्तम्, शब्दार्थो हि शब्दसंस्कारनिमित्तं न्याय्य इत्याशङ्क्योक्तम्—

प्रयोक्तृधर्मः शब्दार्थे शब्दैरेवानुषज्यत इति। प्रयोक्तृधर्म आशंसा, स्वप्रयोज्यस्य शब्दस्याभिधेये शब्देनैवाध्यारोप्यत इति तदर्थः। तस्मिन् हि शब्दे प्रयुक्ते गम्यते आशंसारूपो धर्मः प्रयोक्तरीति गम्यमानत्वाद् युक्तं शब्दसंस्कारनिमित्तत्वमाशंसायाः। यथा अबाधायाः प्रयोक्तृधर्मत्वेऽपि शब्देन तस्याः शब्दार्थेऽध्यारोपाद् द्विवचनोपपत्तिरिति। पुरुषधर्मेष्वपि हि निमित्तभूतेषु सत्सु शास्त्रमधिकृतम्—

शब्दसंस्कारनिमित्तत्वमस्य। पुरुषधर्मेष्वपि हि शास्त्रमधिकृतमिति विचारितं वाक्यपदीये। गतमेतत् ॥ १०५ ॥

इह वार्तिककारः पपाठ—अनिष्पन्ने निष्पन्नशब्दः शिष्योऽनिष्पन्नत्वादिति। अनिर्वृत्ते कार्ये भूतप्रत्यया वक्तव्या इत्यर्थः। तद्यथा 'देवश्चेद् वृष्टः, सम्पन्नाः शालय' इति। निष्पन्नसदृशार्थोऽनिष्पन्न इति पर्युदासेन योग्यहेतूपनिपाते सम्भाव्यमाननिष्पत्तिरुच्यते। तेनानागतमात्रे भूतप्रत्यया न भवन्ति। अनिष्पन्न इत्युक्तेऽपि चानिष्पन्नत्वादिति हेतूपदर्शनम्। उपचारेणायं प्रयोगो न वेदितव्य इत्यर्थः। अनागतरूपेणैवानुपचरितातीतावस्थे न कार्यमत्र प्रतीयत इत्युपसङ्ख्येयो भूतप्रत्यय इत्यर्थः। अत एव भाष्यं 'तत्र भवितव्यम्। निष्पत्स्यन्ते शालयः' इति भविष्यत्प्रत्ययस्यैव युक्ततामाह।

अस्य प्रत्याख्यानम्—'सिद्धं तु भविष्यत्प्रतिषेधादि'ति। 'देवश्चेद् वृष्टः, सम्पत्स्यन्ते शालयः' इति केनचिदुक्ते, 'मैवं वोचः, सम्पन्नाः शालय इत्येवं

---

प्रवृत्तम्, लक्ष्यसंस्कारायेति विचारितं वाक्यपदीये। गतमेतत्=कालातिदेशप्रसङ्गो गत इति ॥ १०५ ॥

इह वार्तिककारः पपाठ—"अनिष्पन्ने निष्पन्नशब्दः शिष्योऽनिष्पन्नत्वात्" इति।

अस्यार्थः—अनिष्पन्ने=अनिर्वृत्ते क्रियारूपे कार्ये, निष्पन्नशब्दः=निष्पन्ने क्रियारूपेऽर्थे जायमानः शब्दो भूतप्रत्ययः, शिष्यो वक्तव्यः, अनिष्पन्नत्वात्, क्रियारूपस्यार्थस्यानिष्पन्नत्वेनोपचारेणापि भूतप्रत्ययप्रयोगासम्भवात्। तद्यथा—'देवश्चेद् वृष्टः सम्पन्नाः शालयः' इति। अत्र सम्पन्ना इत्यस्य निष्पन्ना इत्यर्थः। इह निष्पत्तिधात्वर्थः समग्रसाधनसम्पत्तौ फलोपजनरूपो मुख्यः। स च वृष्टिमात्रेण न सम्पन्न इति अनिष्पन्ने तत्र निष्पन्नशब्दः=भूतप्रत्ययः, शिष्य इत्यभिप्रायो वाक्यकृतः। प्रकृतवार्तिकेऽनिष्पन्नपदे पर्युदासार्थको नञ्। तेन निष्पन्नसदृशोऽर्थोऽनिष्पन्न इत्यर्थे जाते योग्यहेतूपनिपाते सम्भाव्यमाननिष्पत्तिकोऽत्रानिष्पन्न इत्युच्यते। तेनानागतमात्रे=अनागतसामान्ये योग्यहेतूपनिपाताभावेनानागते भूतप्रत्यया न भवन्ति। अनिष्पन्न इति पूर्वमुक्तेऽपि पुनरनिष्पन्नत्वादित्युक्तिरूपं हेतूपदर्शनमुपचारेणाप्ययं प्रयोगः—देवश्चेद् वृष्टः सम्पन्नाः शालय इति प्रयोगः, न वेदितव्य इत्यर्थम्। अनागतरूपेणैवानुपचरितातीतावस्थेन कार्यमत्र=देवश्चेत् वृष्टः सम्पन्नाः शालय इत्यत्र प्रतीयते इत्युपसंख्येयोऽत्र भूतप्रत्यय इत्यर्थः।

अत एव "तत्र भवितव्यम्, निष्पत्स्यन्ते शालयः" इति भाष्यं भविष्यत्प्रत्ययस्यैव युक्ततामाह। अस्य भाष्यस्य प्रत्याख्यानवार्तिकम्—"सिद्धं तु भविष्यत्प्रतिषेधात्" (म० भा० ३।३।१३३) इति।

ब्रूही'ति भविष्यद्वाचिनः शब्दस्य लोके प्रतिषेधो दृश्यते। भूतवाचिन एव त्वस्यनुज्ञानमिति वार्तिकार्थः।

तदेतत् कथं भवतीति वार्तिकाभिप्रायमाचष्टे—

**अप्शालिबीजसंयोगे वर्तते निष्पदिर्यदा।**
**तत्रावयववृत्तित्वाद् भविष्यत्प्रतिषेधनम् ॥ १०६ ॥**

इह निष्पत्तिर्धात्वर्थः समग्रसाधनसम्पत्तौ फलोपजनो मुख्यः। स यदावयवमात्रे जलशालिसम्बन्धमात्रेऽध्यारोप्यते, तदा तावन्मात्रस्य वर्षमात्रेण सम्पत्तेरतीतो धात्वर्थ इति सिद्धा भूतप्रत्ययाः। भविष्यत्प्रत्ययानामयमविषय एव जलशालिसंयोगस्य निष्पत्तेरिति भविष्यतः प्रतिषेधो युक्तः ॥ १०६ ॥

यदा तु मुख्य एव निष्पत्त्यर्थः, तदात्र कथं भूतकालतेत्याह—

**फलप्रसवरूपे तु निष्पदौ भूतकालता।**
**धर्मान्तरेषु तद्रूपमध्यस्य परिकल्प्यते ॥ १०७ ॥**

---

अस्यार्थः — सिद्धन्तु—देवश्चेद् वृष्टः सम्पन्नाः शालय इति रूपम्, कुतः? भविष्यत्-प्रतिषेधात् · "देवश्चेद् वृष्टः सम्पत्स्यन्ते शालय इति मैवं वोचः, सम्पन्नाः शालय इति ब्रूहि" इत्येवं भविष्यद्वाचिनः शब्दस्य लोके प्रतिषेधदर्शनादिति भूतवाचिन एव तु प्रत्ययस्यात्राभ्यनुज्ञानमिति भाष्यप्रत्याख्यानवार्तिकार्थः। तदेतदभ्यनुज्ञानं कथं भवति इत्याशङ्क्य प्रत्याख्यानवार्तिकाभिप्रायमाचष्टे—अप्शालिबीजसंयोगे इति।

अस्यार्थः — इह अप्शालिबीजसंयोगादिः फलोपजनान्तः क्रियाकलापो मुख्या निष्पत्तिः। यदा तु अप्शालिबीजसंयोगे निष्पदिः = निःपूर्वकः पद्धातुः लक्षणया वर्तते तदा तत्रावयववृत्तित्वाद् निष्पत्त्यवयवे वृत्तित्वाद् लाक्षणिकत्वाद् भविष्यत्प्रतिषेधनम्—देवश्चेद् वृष्टः सम्पत्स्यन्ते शालय इति प्रयुक्तस्य भविष्यत्कालस्य प्रतिषेधनम् —मैवं वोचः, सम्पन्नाः शालय इति ब्रूहि इत्येवं रूपमिति।

अयं भावः — इह निष्पत्तिर्धात्वर्थः समग्रसाधनसम्पत्तौ सत्यां फलोपजनो मुख्यः। सफलोपजनरूपो मुख्यो धात्वर्थो यदाऽवयवमात्रे जलशालिसम्बन्धमात्रेऽध्यारोप्यते तदा तावन्मात्रस्य वृष्टिमात्रेण सम्पत्तेः सिद्धतयाऽतीतो धात्वर्थ इति सम्पन्ना इत्यादौ भूतप्रत्ययाः सिद्धाः। भविष्यत्प्रत्ययानां तु अयं निष्पन्नत्वेनाविषय एव, जलशालिसंयोगस्य निष्पत्तेरिति भविष्यतः कालस्यात्र लोकव्यवहारे प्रतिषेधो युक्त इति ॥ १०६ ॥

यदा तु मुख्य एव निष्पत्यर्थोऽप्शालिबीजसंयोगमारभ्य फलप्रसवपर्यन्तः, तदाऽत्र = देवश्चेद् वृष्टः सम्पन्नाः शालय इत्यत्र कथं भूतकालतेत्याशङ्क्याह— फलप्रसवरूपे त्विति।

समग्रसाधनसन्निधानसाध्ये यदा निष्पदिलक्षणे धात्वर्थे फलजन्मपर्यन्ते निष्पदिर्धातुर्वर्तते, तदा पूर्वेषु कार्यनिष्पत्तेरन्येषु कारणाश्रितेषु बीजोदकसंयोगाहितातिशयेषु धर्मेषु तत् कार्यनिष्पत्तिरूपमध्यस्यते। तेषामतीतत्वात् फलप्रसवस्याप्यतीतता परिकल्प्यत इति भूतप्रत्ययाः ॥ १०७ ॥

प्रकारान्तरेणोपचारमाह—

उपयुक्ते निमित्तानां व्यापारे फलसिद्धये।
तत्र रूपं यदध्यस्तं तत्कालं तत् प्रतीयते ॥ १०८ ॥

सामग्रीसाध्यत्वात् कार्यस्य बहूनि निमित्तानि सापेक्षाणि जनकानि। तेषां फलजन्मनि यो व्यापार उपकारस्तस्योपयुक्तत्वात् फलस्य यद्रूपं भावि, तत्र तस्मिन् हेतूपकाररूपं तद् अध्यस्तम्, तस्य हेतुव्यापारस्यातीतत्वादतीतकालत्वे तदभेदापन्नं तत्फलमपि तत्कालमतीतकालमवसीयते। पूर्वं कारणधर्मेष

---

अस्यार्थः—फलप्रसवरूपे तु निष्पदौ = निष्पत्तिपदार्थे सति, धर्मान्तरेषु = फलप्रसवजनकादतिरिक्तेषु धर्मेषु, तद्रूपम् = फलप्रसवरूपम्, अध्यस्य = अनुकूलत्वेन अध्यारोप्य फलप्रसवरूपायां निष्पत्तौ भूतकालता परिकल्प्यते। धर्मान्तराणामतीतत्वेन तेष्वारोपितस्य फलप्रसवस्यापि भूतकालता सिध्यतीति फलितमिति।

अयं भावः—समग्रसाधनसन्निधानसाध्ये यदा निष्पत्तिलक्षणे धात्वर्थे फलप्रसवपर्यन्ते निष्पदिर्धातुर्वर्तते, तदा पूर्वेषु = बीजोदकसंयोगात् पूर्वेषु कार्यनिष्पत्तेरन्येषु = तदन्येषु कारणाश्रितेषु बीजोदकसंयोगाहितातिशयेषु धर्मेषु क्रियारूपेषु तत् कार्यनिष्पत्तिरूपमध्यस्यते = अध्यारोप्यते। तेषामतीतत्वात् फलप्रसवस्याप्यतीतता परिकल्प्यत इति सिद्धा भूतप्रत्ययाः—'देवश्चेद् वृष्टः सम्पन्नाः शालयः' इत्यत्रेति ॥ १०७ ॥

प्रकारान्तरेण = कारणधर्मेषु फलाध्यारोपादन्येन प्रकारेण फले कारणधर्माणामध्यारोपरूपमुपचारमाह—उपयुक्ते निमित्तानामिति।

अस्यार्थः—फलसिद्धये जाते निमित्तानाम् = कारणानां व्यापारे = उपकारे उपयुक्ते = अतीते सति फलस्य यद्रूपं भावि तत्राभेदेनाध्यस्तं तत् कारणव्यापाररूपं वस्तु इति कारणव्यापारस्यातीतत्वात् तदध्यासाधिष्ठानं फलमपि तत्कालमतीतकालं प्रतीयत इति।

अयं भावः—कार्यस्य साधनसामग्री साध्यत्वाद् बहूनि निमित्तानि परस्परं सापेक्षाणि फलं प्रति जनकानि। तेषां निमित्तानां फलजन्मनि यो व्यापार उपकारस्तस्योपयुक्तत्वात् फलस्य यद्रूपं भावि तत्र कारणोपकाररूपं यदध्यस्तं तस्य कारणव्यापारस्य अतीतत्वादतीतकालत्वे तदध्यासाधिष्ठानं फलमपि तत्कालमतीतकालं प्रतीयत। पूर्वकारिकायां कारणधर्मेषु फलस्याध्यारोप उक्तः, इह तु फले कारण-

फलस्याध्यारोपः, इह तु फले कारणधर्माणामिति विशेषः। उपचारप्रयोजनं तु कारणानामत्र समर्थतरत्वप्रतिपादनम्।

एतेन च 'हेतुभूतकालसम्प्रेक्षितत्वादिति' द्वितीयं प्रत्याख्यानवार्त्तिकं विवतम्। निमित्तस्य वर्षस्य योऽतीतः कालः स कार्येऽध्यस्यते। कारणान्तरापेक्षाभावप्रतिपादनाय प्रतीयत इत्यर्थः। निष्पन्नत्वे निष्पन्नकार्याणि शालयः कथं तदानीमेव न कुर्वन्तीति चोदयित्वोक्तम्—'अन्यद् इदानीमुच्यत' इति यद्यर्थक्रियाकरणं शालीनां निष्पत्तिः, तदा कोष्ठस्था अपि न निष्पन्नाः स्युः, अर्थक्रियायां भुजिलक्षणायामवहननाद्यपेक्षणात्॥ १०८॥

अथ हेतूपकारसमाप्तिमात्राधीना निष्पत्तिः, तदा यथायथं हेतूपयोगनिष्पत्तौ निष्पत्तिव्यवहारः सिद्ध इत्याह—

**निष्पत्ताववधिः कश्चित् कश्चित् प्रतिविवक्षितः।**
**हेतुजन्मव्यपेक्षातः फलजन्मेति चोच्यते॥ १०९॥**

---

धर्माणामध्यारोप इति विशेषः। उपचारप्रयोजनं तु=फले कारणधर्माणामध्यारोपप्रयोजनं तु कारणानामत्र = फले समर्थतरत्वप्रतिपादनम्।

एतेन "हेतुभूतकालसम्प्रेक्षितात्" ( म० भा० ३।३।१३३ ) इति द्वितीयं प्रत्याख्यानवार्तिकं विवृतम्। अस्य वार्तिकवचनस्यार्थः। फलं प्रति हेतुभूतस्य हेतुव्यापारस्य फलेऽभेदेनाध्यस्तस्य यो भूतकालस्तत् सम्प्रेक्षितत्वात् फलस्यापि भूततेति। शालिनिष्पत्तिरूपं फलं प्रति निमित्तस्य वर्षस्य=वृष्टेर्योऽतीतः कालः स कार्ये शालिनिष्पत्तिरूपे निमित्ताध्यासाधिष्ठानेऽध्यस्यते। अध्यस्यमानश्च स कारणान्तरापेक्षाभावप्रतिपादनाय प्रतीयत इत्यर्थः।

ननु अनिष्पन्नानामपि शालीनां प्रागुक्तरीत्याऽतीतनिमित्तव्यापाराध्यारोपेण निष्पन्नत्वे निष्पन्नकार्याणि शालयः कथं तदानीमेव न कुर्वन्ति इत्याशङ्क्योक्तम्—"अन्यदिदानीमुच्यते" ( म० भा० ३।३।१३३ ) इति।

अस्यार्थः—वर्षोत्तरभाविनां शालीनां वर्षाकाले निष्पन्नत्वं नास्तीति पूर्वमुक्तम्। तत्तु मया निमित्ताध्यारोपेण समाहितम्। इदानीं तु अर्थक्रियाकारित्वं निष्पन्नत्वं तत्तु तदानीं शालीनां नास्ति इत्येतदन्यदुच्यत इति। यद्यर्थक्रियाकरणं शालीनां निष्पत्तिस्तदा कोष्ठस्था अपि शालयो न निष्पन्नाः स्युः, अर्थक्रियायां भुजिस्वरूपायां मुसलावहननाद्यपेक्षणात्, कोष्ठस्थानाञ्च तदभावेनानिष्पन्नत्वापत्तेरिति।

तथा चास्याः कारिकाया एवं योजना—फलसिद्धये निमित्तानां व्यापारे उपयुक्ते सति तत्र फले यद्रूपं निमित्तव्यापाररूपमभेदेनाध्यस्तं तत्कालं निमित्तव्यापारकालिकं तत्=फलं प्रतीयत इति॥ १०८॥

यदि हेतूपकारसमाप्तिमात्राधीना निष्पत्तिः, तदा यथायथं=यथास्वं हेतूपयोगनिष्पत्तौ फलनिष्पत्तिव्यवहारः सिद्ध इत्याह—निष्पत्तावबधिरिति।

इह कश्चिद् बीजसलिलसंयोगमात्राधीनां निष्पत्तिं शालीनां मन्यते, कश्चित्तदुत्तरकालभाव्यातपादिसंयोगजनितोपकारपरम्पराधीनाम्, इति निष्पत्तिहेतुरनवस्थितः। कारणस्य ह्युपकारविशेषख्यापनायैवमुच्यते। तत्र च प्रथमतरनिमित्तगतोपकाराधिक्यकल्पनायां निमित्तान्तरव्यापारापह्नवेन तावत एव हेतोर्जन्मनः फलजन्मव्यवहारः, आतपादिसंयोगलक्षणहेतुजन्मनो वेति तस्यातीतत्वात् फलमप्यतीतव्यवहारयोग्यम्।

एष चोपचाराश्रय एव व्यवहारो हेतुभूतकालसम्प्रेक्षाया इति नर्तेऽध्यासाद् भवत्यसौ। जलबीजसंयोगमात्रं तु निष्पदिवाच्यमाश्रित्यपूर्वः परिहारः। अत्र निष्पद्यर्थो गौणः, उत्तरत्र तु परिहारे निष्पद्यर्थो मुख्यः, कार्यकारणयोस्त्वभेदाध्यास इति विकल्प उपपन्नः॥ १०९॥

---

अस्यार्थः — कश्चिद् निष्पत्तौ अवधिर्बीजसलिलसंयोगरूपो निष्पत्तौ कैश्चिद् हेतुरुच्यते। कैश्चित्तु निष्पत्तौ यो हेतुत्वेन प्रतिविवक्षितः स निष्पत्तौ हेतुरुच्यते। उत्तरकालभाव्यातपादिसंयोगजनितोपकारपरम्परारूपः। तत्र पूर्वो गौणः, उत्तरस्तु मुख्यः। किञ्च, हेतौ फलस्यारोपेण हेतुजन्मव्यपेक्षातस्तदानीं फलस्य जन्म इति च उच्यते। एवञ्च हेतौ फलाध्यारोपेऽपि न फले भूतकालाध्यारोपः, मुख्यस्यैव हेतुगतस्य भूतकालस्य तत्र भानसम्भवादिति। तथा चाग्रे वक्ष्यति—"तस्मादवधिभेदेन सिद्धा मुख्यैव भूतता" ( वा० प० ३, काल० १११ ) इति।

अयं भावः — इह कश्चिद् बीजसलिलसंयोगमात्राधीनां शालीनां निष्पत्तिं मन्यते। कश्चित्तदुत्तरकालभाव्यातपादिसंयोगजनितोपकारपरम्पराधीनां तां मन्यत इति रीत्या शालीनां निष्पत्तिहेतुरनवस्थितः। अन्यो हि शालीनां निष्पत्तौ बीजसलिलसंयोगकृत उपकारः, अन्यश्च तत्र तदुत्तरकालभाव्यातपादिसंयोगजनित इति भेदेन कारणस्य हि कार्ये उपकारविशेषख्यापनायैवमुच्यते। तत्र च बीजसलिलसंयोगरूपप्रथमतरनिमित्तगतव्यापारकृतोपकाराधिक्यकल्पनायामातपादिसंयोगरूपनिमित्तान्तरकृतोपकारपरम्परायाः सत्या अपि अपह्नवेन तावत एव= बीजसलिलसंयोगमात्रस्यैव हेतोर्जन्मनः फलजन्मव्यवहारः, आतपादिसंयोगलक्षणहेतुजन्मनो वेति हेतुजन्मनोऽतीतत्वाद् हेतावध्यस्तं फलमपि अतीतव्यवहारयोग्यम्।

एष च हेतुगतस्य भूतकालस्य फले सम्प्रेक्षामूलकः फलेऽतीतत्वव्यवहार उपचाराश्रय एव=हेतौ फलाध्यारोपमूलक एव इति तत्र तदध्यासं विना नासौ भवति। जलबीजसंयोगमात्रं तु निष्पदिधातुवाच्यमाश्रित्य—अप्शालिबीजसंयोगे इति कारिकोक्तः पूर्वः परिहारः। अत्र निष्पद्यर्थो गौणः। फलप्रसवरूपे तु इति, उपयुक्ते निमित्तानामिति कारिकाद्वयोक्ते उत्तरत्र तु परिहारे निष्पद्यर्थो मुख्यः,

सामग्रीसाध्यत्वात् कार्यस्य कथमेकसाधनसम्पत्तिमात्रे सम्पत्तिः स्यादित्येतच्चोद्यं विचारयितुमाह—

**अबहिस्साधनाधीना सिद्धिर्यत्र विवक्षिता ।**
**तत् साधनान्तराभावात् सिद्धमित्युपदिश्यते ॥ ११० ॥**

अन्तरङ्गे कस्मिंश्चित् साधने सन्निहिते ततोऽन्यस्य बहिर्भूतस्य साधनस्यापेक्षातिरस्कारेण विवक्षितं साध्यं सत्कल्पं सिद्धमेवेति लोके व्यवहारः प्ररूढः । तदनुसारेणैव च शास्त्रे व्यवस्थोपपत्तिः, लोकप्रसिद्धस्यैव शब्दार्थव्यवहारस्य शास्त्रेणानुगमात् । यथा च यथाविवक्षं कालत्रययोगेनात्र व्यवहारः सिद्ध इति ॥ ११० ॥

निगमयति—

**तस्मादवधिभेदेन सिद्धा मुख्यैव भूतता ।**
**अनागतत्वमस्तित्वं हेतुधर्मव्यपेक्षणे ॥ १११ ॥**

---

कार्यकारणयोस्त्वत्राभेदाध्यारोप इति निष्पत्तावववधिः कश्चित् कश्चित् प्रतिविवक्षित इति विकल्प उपपन्न इति ॥ १०९ ॥

कार्यस्य साधनसामग्रीसाध्यत्वाद् एकसाधनसम्पत्तिमात्रे कथं कार्यस्य सम्पत्तिः स्यादितीमं प्रश्नं समाधातुमाह—अबहिः साधनाधीना इति ।

अस्यार्थः — यत्र कार्ये अबहिःसाधनाधीना = अन्तरङ्गैकसाधनमात्राधीना बहिरङ्गान्यसाधनतिरस्कारेण तदनपेक्षा सिद्धिर्विवक्षिता, तत् कार्यं साधनान्तराभावात् = साधनान्तरस्य तिरस्कारेण तदपेक्षाया अभावात्, सिद्धमित्युपदिश्यते । एवञ्चैकसाधनसम्पत्तावपि कार्यसम्पत्तिः सम्भवतीति न प्रागुक्तशङ्कावकाश इति ।

अयं भावः — अन्तरङ्गे कस्मिंश्चित् साधने सन्निहिते ततोऽन्यस्य बहिर्भूतस्य साधनस्यापेक्षातिरस्कारेण विवक्षितं साध्यं सत्कल्पम् = विद्यमानप्रायं सिद्धमेवेति लोके व्यवहारः प्ररूढः । यथा लोके बहुकर्तृसाध्ये कार्ये देवदत्तश्चेनायात इदं कार्यं सिद्धमेवेत्युच्यते । तदनुसारेणैव = लोकव्यवहारानुसारेणैव च शास्त्रे व्यवस्थोपपत्तिः । लोकप्रसिद्धस्यैव शब्दार्थव्यवहारस्य शास्त्रेणानुगमात् = शास्त्रेणानुसरणात् । तथा च यथाविवक्षं कालत्रययोगेनात्र = देवश्चेद् वृष्टो वर्षिष्यति वर्षति वा तदा सम्पन्नाः, सम्पत्स्यन्ते, सम्पद्यन्ते वा शालय इत्यत्र व्यवहारः सिद्धः ।

तथा हि—साधनव्यापारस्यातीतत्वे सम्पन्ना इति, अनागतत्वे सम्पत्स्यन्त इति, वर्तमानत्वे सम्पद्यन्त इति व्यवहारत्रयस्य कालत्रययोगेनोपपत्तिः सम्भवतीति ॥ ११० ॥

प्रकृतमर्थमुपसंहरति—तस्मादवधिभेदेनेति ।

निष्पत्तौ योऽवधिः कारणं तस्य भेदेन यथाभेदं तत्र कार्यस्याध्यासात्। तद्वदतीतता मुख्या। कारणे हि कार्योपचारः, न तु भूतस्य कालस्य। यदा हेत्वन्तरस्य भाविकार्यजननव्यापारोऽपेक्ष्यते, तदा मुख्येनैव रूपेणानागतत्वं भविष्यत्त्वं कार्यस्य।

यदा तु हेत्वन्तरस्य प्रत्यासन्नकार्यजननव्यापारो विवक्ष्यते, तदा व्यापार-प्रबन्धस्य फलावधेरेकत्वेन पूर्वोत्तरसदसदवयवात्मकस्यापि सत्त्वाद् वर्तमानत्वमिति प्रयोगत्रयं सिद्धं निष्पन्ना निष्पत्स्यन्ते निष्पद्यन्ते शालय इति। गतमेतत्।

अपरमपि वार्त्तिककारः पपाठ—"अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः कर्तुर्विद्यमानत्वात्" इति। भवन्त्या लड्विभक्तेरर्थे वर्तमाने काले भूतभविष्य-दर्थास्तिङ्विभक्तयो वक्तव्याः। वर्तमाने हि लडेव स्यात्। तत्र भवन्त्यर्थ इत्युक्तेऽपि कर्तुर्विद्यमानत्वादिति हेतूपादानं प्रयोगकालावधृतं सत्त्वं शब्द-निबन्धनम्, न तु वास्तवमेवेत्येतत्प्रतिपादनार्थम्। कूपोऽभूदभवद् भविष्यति भवितेति प्रयोगकालेऽपि कूपस्य कर्तुरविनष्टस्यैवोपलम्भादित्यर्थः। तथा चैतद्

---

अस्यार्थः — तस्मात्=हेतौ फलस्य फले हेतोर्वाऽध्यारोपात्, अवधिभेदेन कारणभेदेन यथाभेदं कार्यस्याध्यासात् कारणवत् कार्यस्यापि भूतता मुख्यैव सिद्धा। किञ्च हेतुधर्मव्यपेक्षणे हेतोः साधनस्य यो धर्मो व्यापारस्तस्यानागतत्वास्तित्वव्य-पेक्षणे सति कार्यस्यानागतत्वमस्तित्वञ्च मुख्यमेव सिद्धम्, हेतौ फलस्याध्यारोपेऽपि हेतुकालस्यैव मुख्यस्य फले भानात्। यथा जपाकुसुमलौहित्यस्य मुख्यस्यैव स्फटिके भानमिति।

अयं भावः — कार्यस्य निष्पत्तौ यः पूर्वोऽवधिः कारणं तस्य भेदेन यथाभेदं तत्र=कारणे कार्यस्याध्यासात् तद्वत्=कारणवत् कार्यस्यापि भूतता मुख्या। कारणे हि कार्यस्याध्यासः, न तु भूतस्य कालस्य तत्राध्यासः।

यदा हेत्वन्तरस्य=भूतातिरिक्तस्य हेतोर्भाविकार्यजननव्यापारोऽपेक्ष्यते, तदा मुख्येनैव रूपेण भविष्यत्वरूपमनागतत्वं कार्यस्य। यदा हेत्वन्तरस्य=प्रागुक्तो भयातिरिक्तस्य हेतोः प्रत्यासन्न(सन्निहित)कार्यजननव्यापारो विवक्ष्यते, तदा फला-वधेर्व्यापारप्रबन्धस्य=व्यापारसन्तानस्यैकत्वेन पूर्वोत्तरसदसदवयवात्मकस्यापि सत्त्वाद् वर्तमानत्वमिति रीत्या प्रयोगत्रयं सिद्धं निष्पन्ना निष्पत्स्यन्ते=निष्पद्यन्ते शालय इति। गतमेतत्=प्रकृतो विचारः समाप्त इति॥ १११॥

अपरमपि वार्त्तिकं वार्त्तिककारः पपाठ—"अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः कर्तुर्विद्यमानत्वात्" (म० भा० ३।३।१३३) इति। अस्त्यर्थानां धातूनां प्रयोगे भवन्त्या लड्विभक्तेरर्थे वर्तमाने काले सर्वास्तिङ्विभक्तयो भूतभविष्यदर्थिका

व्याख्यानभाष्यम्—कूपोऽनेन कदाचिदवधृतो न चास्यापायं पश्यति' इति विद्यमानत्वं सम्प्रत्यवध्रियमाणत्वमेव व्याचष्टे। अत्र प्रत्याख्यानम्—'सिद्धं तु यथास्वकालं समुच्चारणात्' इति। आत्मीयेष्वेव कालेषु यथायोगं तिङ्विभक्तीनां प्रयोगोऽयम्, न तु वर्तमान एवेति नार्थ उपसंख्यानेनेत्यर्थः। एतदेव साधयितुमुक्तम्—'अवात्वात्' इति। अविकल्पत्वादेषां प्रयोगाणामात्मीय एव काले समुच्चारणम्। वर्तमाने ह्येषां साधुत्वोपसंख्याने तत्रैव सर्वास्तिङ्विभक्तयः पर्यायेण दृश्येरन्। न च दृश्यन्त इत्युक्तम्। 'असिद्धविपर्यासश्च' असिद्धं च वैपरीत्यमित्यर्थः। न हि कश्चित् कूपोऽभूदित प्रयुयुक्षिते कूपो भविष्यतीति। प्रयुङ्क्ते। तस्मादविकल्पितात् प्रयोगादसङ्करेण च प्रयोगाद् यथास्वकाले तिङ्विभक्तीनामुच्चारणं सिद्धम् ॥ १११ ॥

---

वक्तव्याः, वर्तमाने हि लडेव स्यात्। कर्तुर्विद्यमानत्वादिति तदर्थः। तत्र भवन्त्यर्थे इत्युक्तेऽपि कर्तुर्विद्यमानत्वादिति हेतूपादानं प्रयोगकालेन अवधृतम्=विज्ञातं सत्त्वं शब्दनिबन्धनम्=शब्दहेतुकं शब्दप्रयुक्तम्, न तु वास्तवमेवेत्येतत्प्रतिपादनार्थम्। कूपोऽभूदभवद् भविष्यति भविता इति अस्त्यर्थकधातुप्रयोगकालेऽपि कूपरूपस्य कर्तुरविनष्टस्यैवोपलम्भादिति वार्त्तिकाभिप्रायः। उत्पत्त्यर्थकस्य प्रयोगे तु न कर्तुर्विद्यमानत्वमित्यवधेयम्। तथा चैतद् व्याख्यानभाष्यम्—'कूपोऽनेन कदाचिदवधृतो न चास्यापायं पश्यति' ( म० भा० ३।३।१३३ ) इति विद्यमानस्य सम्प्रति अवध्रियमाणत्वम्=ज्ञायमानत्वम् एव व्याचष्टे। अत्र प्रत्याख्यानम्—'सिद्धं तु यथास्वकालं समुच्चारणात्' ( म० भा० ३।३।१३३ ) इति।

अस्यार्थः — अस्त्यर्थानां भवन्त्यर्थे सर्वतिङ्विभक्तिरूपं कार्यं सिद्धन्तु, यथास्वकालम्=स्वकालानतिक्रमेण, सर्वासां तिङ्विभक्तीनां समुच्चारणादिति। आत्मीयेष्वेव कालेषु यथायोगं तिङ्विभक्तीनां प्रयोगोऽयम्, न तु वर्तमान एवेति नार्थ उपसंख्यानेनेति तदभिप्रेतोऽर्थः। एतदेव=सर्वासां तिङ्विभक्तीनां यथास्वकालं समुच्चारणमेव साधयितुमुक्तम्—अवात्वादिति। अविकल्पत्वादेषां प्रायोगाणामात्मीय एव काले समुच्चारणम्। वर्तमाने ह्येषां प्रयोगाणां साधुत्वोपसंख्याने तत्रैव सर्वास्तिङ्विभक्तयः पर्यायेण दृश्येरन्। न च दृश्यन्त इत्युक्तम्—'असिद्धविपर्यासश्च' ( म० भा० ३।३।१३३ ) इति। असिद्धविपर्यास इति षष्ठ्यर्थे बहुव्रीहिः। असिद्धविपर्यासश्च सर्वासां तिङ्विभक्तीनां प्रयोगः, असिद्धश्च वैपरीत्यमित्यर्थः। न हि कूपोऽभूदिति प्रयुयुक्षिते कूपो भविष्यतीति प्रयुङ्क्ते। तस्मादविकल्पितात् प्रयोगादसङ्करेण च प्रयोगाद् यथास्वम्=यथायथं स्वस्वकाल एव तिङ्विभक्तीनामुच्चारणं सिद्धम् ॥ ११ ॥

तदेतत् कथमुपपद्यत इति वार्त्तिकाभिप्रायमाचष्टे—

**सतामिन्द्रियसम्बन्धात् सैव सत्ता विशिष्यते ।**
**भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः ॥ ११२ ॥**

इह पदार्थानां सर्वो व्यवहारः संसर्गिधर्मान्तराच्छुरणेनेत्युक्तमेव । ततश्चात्र येयं कूपसत्ता, सा गृहीता सती शब्दप्रगोगस्य निमित्तभावमापद्यते, अगृहीताया असत्कल्पत्वादिति ग्रहणोपाधिर्व्यवहारमवतरति । ग्रहणं चेन्द्रियार्थसन्निकर्ष-निमित्तमिति पथि कूपस्येन्द्रियेण सन्निकर्षो यत्र भावी, तत्र भविष्यन्ती सत्ता व्यवह्रियते ।

यत्र तु भूतः सः, तत्र भूता । यत्र तु सम्प्रतितनः, तत्र वर्तमानेति त्रिकालविषयाः प्रयोगाः सामान्यविशेषभूता अपि सिद्धाः । विप्रकृष्टे हीन्द्रिय-सम्बन्धेऽतीते भूतविशेषविषया लृङादयः, विप्रकृष्टे चागामिनि भविष्यद्विशेषविषया लुङादयः ॥ ११२ ॥

---

तदेतत् कथमुपपद्यत इति मनसि निधाय वार्त्तिकाभिप्रायमाचष्टे—**सतामिन्द्रियसम्बन्धादिति ।**

अस्यार्थः—सतां घटादीनां यया ते सन्तः सैव सत्ता इन्द्रियसम्बन्धाद् विशिष्यते=भूतभविष्यद्वर्तमानकालभेदेन भिद्यते । इन्द्रियसम्बन्धस्य वर्तमानत्वे वर्तमाना सत्ता, तस्य भूतत्वे भूता सत्ता, तस्य भविष्यत्त्वे तु भविष्यन्ती सत्ता इति । हि=यतः, एकस्य भेदेन व्यवहारः सर्वोऽपि वस्त्वन्तरनिबन्धनः=वस्त्वन्तर-रूपोपाधिपरिच्छेदकृत इति ।

अयं भावः—इह पदार्थानां सर्वो व्यवहारः संसर्गिधर्मान्तराच्छुरणेन=संसर्गि यद् धर्मान्तरं तस्य आच्छुरणेन=उपाधिरूपेण उपरञ्जकतया भानेन इत्युक्तमेव । ततश्चात्र येयं कूपसत्ता सा गृहीता सती शब्दप्रयोगस्य निमित्तभावमापद्यते, अगृहीता या असत्कल्पत्वादिति ग्रहणरूपं धर्ममुपाधीकृत्य व्यवहारमवतरति= व्यवहारगोचरतामापद्यते । सत्ताया ग्रहणञ्चेन्द्रियार्थसन्निकर्षनिमित्तकमिति पथि कूपस्येन्द्रियेण सह सन्निकर्षो यत्र भावी तत्र भविष्यन्ती सत्ता व्यवह्रियते ।

यत्र तु भूतः स तत्र भूता सत्ता, यत्र तु सम्प्रतितनः सः=वर्तमानकालिक-इन्द्रियार्थसन्निकर्षः, तत्र वर्तमाना सत्ता इति त्रिकालविषयाः प्रयोगाः सामान्य-विशेषभूता अपि=सामान्यभूता विशेषभूता अपि सिद्धाः । तत्र सामान्यभूतो लुङ् भूते, भविष्यति तु सामान्यभूतो लृङ्, विशेषभूतस्तु लङ् भूते, अनद्यतनभूतार्थ-कत्वात् । भविष्यति तु विशेषभूतो लुट्, अनद्यतनभविष्यदर्थकत्वात् । विप्रकृष्टे हि देशे इन्द्रियसम्बन्धेऽतीते भूतविशेषविषया=अनद्यतनभूतविषयाः लङादयः, विप्रकृष्टे च देशे आगामिनि इन्द्रियार्थसन्निकर्षे भविष्यद्विशेषविषया लुङादय इति ।

ननु च यथा भूतभविष्यद्विभक्तयो वर्तमानविषयं नावगाहन्ते, तथा सापि तद्विषयान् नावगाहेतेति कूपोऽस्तीति प्रयोगो भूते भविष्यति चेन्द्रियसम्बन्धे न स्यादित्याशङ्क्याह—

**अस्तित्वं वस्तुमात्रस्य बुद्धया तु परिगृह्यते ।**

**यः समासादनाद् भेदः स तत्र न विवक्षितः ।। ११३ ।।**

इन्द्रियसम्बन्धासम्बन्धनिमित्तस्य भूतभविष्यल्लक्षणस्य भेदस्याविवक्षायां मनसा सन्मात्रं कूपमभिसन्धायास्तीति प्रयोगः सामान्येनात्रोपपद्यत इत्यर्थः। विशेषास्तु परस्परविरोधिनो न सङ्कीर्यन्ते ।। ११३ ।।

किं वात्रौपाधिकेन सत्ताया भेदेन, तात्त्विक एव सत्ताया भेदः प्रत्यवस्थित इत्याह—

**योगाद् वा स्त्रीत्वपुंस्त्वाभ्यां न किञ्चिदवतिष्ठते ।**

**स्वस्मिन्नात्मनि तत्रान्यद् भूतं भावि च कथ्यते ।।११४।।**

---

अत्रोपाधिः —अवाच्यत्वे सति प्रतीयमानः, अत्रेन्द्रियार्थसन्निकर्षोऽपि तादृश एवोपाधिर्भूधातुना सत्तावदवाच्यत्वादिति ।। ११२ ।।

ननु इन्द्रियसम्वन्धस्य वर्तमानत्वे सत्ताया वर्तमानत्वमिति प्रागुक्तरीत्या स्थिते भूते भविष्यति चेन्द्रियसम्बन्धे कूपोऽस्तीति प्रयोगो न स्यादित्याशङ्क्याह— अस्तित्वं वस्तुमात्रस्येति ।

हेलाराजीयावतरणस्य प्रकृतार्थेन सह सम्बन्धः सुगूढः । मदीयमवतरणं बु प्रकृतार्थेन सह स्फुटं सम्वध्यत इति विशेषः ।

प्रकृतकारिकार्थस्तु — यत्र तु वस्तुमात्रस्य केवलस्य वस्तुनः, न तु इन्द्रियसम्बन्धस्य अस्तित्वम् = सत्ता, बुद्धया परिगृह्यते, तत्र यः समासादनात् = इन्द्रियसम्बन्धात् सत्ताया भेदः स न विवक्षितः । एवञ्च बुद्धया परिगृह्यमाणां वर्तमानां सत्तामादायेन्द्रियसम्वन्धस्य भूतत्वे भविष्यत्त्वेऽपि च कूपोऽस्तीति वर्तमानकालिकः प्रयोग इति ।

अयं भावः — इन्द्रियसम्बन्धासम्बन्धनिमित्तकस्य भूतभविष्यद्वर्तमानलक्षणस्य सत्ताभेदस्याविवक्षायां बुद्धया सन्मात्रं कूपमभिसन्धाय कूपोऽस्तीति प्रयोगः सामान्येनात्रोपपद्यत इति । भूतभविष्यद्वर्तमानलक्षणास्तु विशेषाः परस्परविरोधिनो न सङ्कीर्यन्त इति ।। ११३ ।।

अथवा किमत्रौपाधिकेन सत्ताया भेदेन, तात्त्विक एव सत्ताया भेदोऽत्र प्रत्यवस्थित इत्याह—योगाद् वेति ।

अस्यार्थः — वा इति पक्षान्तरे विकल्पगोचरे स्त्रीत्वपुंस्त्वाभ्यामपचयोपचयरूपाभ्यां योगात् किञ्चिदपि वस्तु स्वस्मिन्नात्मनि नावतिष्ठते = क्षणमपि

'न कश्चित् स्वस्मिन्नात्मनि मुहूर्त्तमप्यवतिष्ठते वर्धते। यावदनेन वर्धितव्यमपायेन वा युज्यते' इति स्त्री-सूत्रे (४।१।३) भाष्यम्। तत्रोपचयः पुंस्त्वम्, अपचयः स्त्रीत्वमिति लिङ्गसमुद्देशे वक्ष्यति—

"उत्पत्तिः प्रसवोऽन्येषां नाशः संस्त्यानमिष्यते"। इति।

एवञ्च स्त्रीत्वपुंस्त्वाभ्यामपचयोपचयाभ्यामजस्रप्रवृत्तिभ्यां सर्वभावानां सम्बन्ध इति प्रतिक्षणमन्योन्यरूपसदृशप्रबन्धरूपभावमध्येऽवस्थाभेदगतस्त्रिकालयोग उपपद्यत एव तात्त्विकः।

अतश्चान्यदेवातिक्रान्तेन्द्रियसम्बन्धं भूतं रूपम्, अन्यदेव च भविष्यदिन्द्रियसम्बन्धं भावि, अन्यदेव च वर्तमानेन्द्रियसम्बन्धम्। अभेदेन तु बुद्ध्या समीक्ष्य रूपसामान्यमस्तीति वर्तमानप्रत्ययवाच्यं सिद्धम्॥ १४४॥

॥ इति भूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे कालसमुद्देशो नवमः॥

---

अपरिणम्य न तिष्ठति। तत्र=तस्मिन् सति, अवस्थाभेदेन भूतं भावि चाद् वर्तमानमपि अन्यत्=भिन्नं कथ्यते। सामान्यतोऽभिन्नापि सत्ता प्रतिक्षणं परिणामकृतेनावस्थाभेदेन भिन्ना इति तात्त्विक एव भूतभविष्यद्वर्तमानलक्षणः सत्ताया भेद इति फलितार्थः।

अयं भावः—"न कश्चित् स्वस्मिन्नात्मनि मुहूर्त्तमप्यवतिष्ठते, वर्धते यावदनेन वर्धितव्यम्, अपायेन वा युज्यते" इति "स्त्री"-सूत्रे (४।१।३) भाष्यम्। तत्र वृद्धिरूपचयः पुंस्त्वम्, अपायोऽपचयः स्त्रीत्वम् इति लिङ्गसमुद्देशे वक्ष्यति—

"उत्पत्तिः प्रसवोऽन्येषां नाशः संस्त्यानमिष्यते।"(वा०प० ३,लिङ्ग० २७)इति।

गर्भापेक्षया प्रचयरूपा उत्पत्तिः प्रसवः पुंस्त्वम्, चरमापचयरूपो नाशः संस्त्यानमन्येषां मतेन स्त्रीत्वमिष्यत इति तदर्थः।

एवञ्च स्त्रीत्वपुंस्त्वाभ्यामपचयोपचयरूपाभ्यामजस्रं प्रवृत्ताभ्यां सर्वभावानां पर्यायेण सम्बन्ध इति प्रतिक्षणमन्यान्यरूपसदृशप्रबन्ध(सदृशसन्तान)रूपभावमध्येऽवस्थाभेदतस्त्रिकालयोग उपपद्यत एव तात्त्विकः।

अतश्चातिक्रान्तेन्द्रियसम्बन्धकमन्यदेव भूतं रूपम्, भविष्यदिन्द्रियसम्बन्धकञ्चान्यदेव भाविरूपम्, वर्तमानेन्द्रियसम्बन्धकञ्चान्यदेव वर्तमानं रूपम्, कालत्रये वस्तुनोऽवस्थाभेदस्य वस्तुभेदकत्वात्। भावानामवस्थाभेदेन स्वरूपभेदेऽपि बुद्ध्या रूपसामान्यमभेदेन समीक्ष्य तु अस्तीति वर्तमानप्रत्ययवाच्यं सामान्यरूपं भूतेऽपि सिद्धमिति॥ ११४॥

॥ इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथशर्मकृतायामम्बाकर्त्र्यां कालसमुद्देशो नवमः॥

॥ शुभं भूयात्॥

# अथ पुरुषसमुद्देशः

तिङभिहितेन भावेन कालपुरुषोपग्रहसंख्या अभिव्यज्यन्त इति स्थिते कालं परीक्ष्य पुरुषं परीक्षते—

प्रत्यक्ता परभावश्चाप्युपाधी कर्तृकर्मणोः ।
तयोः श्रुतिविशेषेण वाचकौ मध्यमोत्तमौ ॥ १ ॥

प्रतिपुरुषं प्रतिनियतं वाञ्चति चेष्टत इति प्रत्यङ्, अन्तर्यामी जीवात्मा । स हि प्रतिदेहं नियतो वर्तते । तद्भाव उत्तमपुरुषवाच्योऽर्थः । अहङ्कारसमानाश्रयत्वं यदाख्यातात् प्रतीयते क्रियायाः, स उत्तमपुरुषविषय इत्यर्थः ।

तथा चाहङ्काराश्रयस्य कर्तस्तिङन्तवाच्यस्य कर्मणश्च स उपाधिभूतः प्रज्ञायते, स्ववाचकादात्मनेपदपरस्मैपदरूपेण भिन्नात् । तद्यथा—पचे पचामीति कर्त्रुपाधिरुत्तमपुरुषो विषयः ।

---

पुरुषे या परा शक्तिर्व्यवहारप्रवर्तिका ।
विमृश्यमाना मनसो ममाधिमपकर्षतु ॥

तिङभिहितेन = तिङ्प्रकृतिभूतधात्वभिहितेन भावेन = क्रियया कालपुरुषोपग्रहसंख्याः कर्तृकर्मप्रत्ययवाच्या अभिव्यज्यन्त इति स्थिते कालं परीक्ष्यावसरप्राप्तं पुरुषं परीक्षते—प्रत्यक्ता इति ।

अस्यार्थः—प्रतिपुरुषं प्रतिनियतं वा प्रतिदेहमञ्चति गच्छति बुद्धिविषयो भवति चेष्टते वा इति प्रत्यग् जीवात्मा अन्तर्यामी अहङ्काराश्रयः, तस्य भावस्तत्ता अहङ्कारः, परभावश्च = परत्वमहङ्काराश्रयादन्यत्वरूपञ्च, कर्तृकर्मणोरुपाधिर्विशेषणम् । अत्रोपाधिशब्दश्छन्दोऽनुरोधेन व्यावर्तकत्वरूपधर्मसाम्येन विशेषणे प्रयुक्तः । श्रुतिविशेषेण = शब्दविशेषेण कर्मणि लकारे यका, कर्तरि लकारे शप्श्यन्नादिरूपेणोपलक्षितौ मध्यमोत्तमौ तयोः प्रत्यक्तापरत्वयोर्वाचकौ । तयोः कर्तृकर्मविशेषणत्वेन कर्तृकर्मवाचकौ मध्यमोत्तमौ तद्विशेषणयोस्तयोरपि वाचकाविति फलितमिति ।

अयं भावः—प्रतिपुरुषं प्रतिदेहं वा प्रतिनियतमञ्चति चेष्टत इति प्रत्यगन्तर्यामी जीवात्मा अहङ्काराश्रयः । स हि प्रतिदेहं नियतो वर्तते । तस्य भावोऽहङ्काररूप उत्तमपुरुषवाच्योऽर्थः । क्रियाया अहङ्कारसमानाश्रयत्वमाख्याताद् यत् प्रतीयते स उत्तमपुरुषवाच्य इत्यर्थः ।

तथा चाहङ्काराश्रयस्य तिङन्तवाच्यस्य कर्तुः कर्मणश्चोपाधिभूतः = विशेषणभूतोऽहङ्काररूप आत्मनेपदपरस्मैपदरूपेण भिन्नात् स्ववाचकादुत्तमपुरुषात्

कर्मोपाधिस्त्वात्मनेपदादेव प्रतीयते, कर्मण्यात्मनेपदस्यैव भावात्, पच्ये इति। तदयं कर्त्रादिसाधनविशेषणं पुरुष इत्युच्यते।

मध्यमस्तु पुरुषः परत्वम्। मध्यमवाच्यः। स हि कर्तृकर्मविशेषणभूतः प्रश्नादिविषयभावोपगमनयोग्यः स्वात्मनः परः स्ववाचकात् पूर्ववद् भिन्नात् प्रतीयते, तद्यथा—पचसि पचसे इति कर्त्रुपाधिः। कर्मोपाधिस्त्वात्मनेपदादेव, पच्यसे इति। तदेवं श्रुतिविशेषेण शब्दविशेषेणोपलक्षितौ मध्यमोत्तमौ यथायोगं स्वार्थमाचक्षाते।

'यः कर्तृकर्मविशेषणभूतः, स पुरुषः' इति पूर्वाचार्याः प्राहुः। अत एव कर्तृकर्मविशेषणत्वात् पुरुषस्य भावविषयता नास्तीति। तत्र लकारे मध्यमोत्तमयोरप्रयोगः। प्रथम एव शेषत्वात् तत्र प्रयुज्यते। प्रत्यक्तापरभावौ तु शब्दान्तरप्रयोगावसेयौ। आस्यते मया, शय्यते त्वयेति॥ १॥

---

प्रज्ञायते। तद्यथा—पचे पचामि इत्यत्र कर्तुरुपाधिरुत्तमतिङ्वाच्यः पुरुषः।

कर्मण उपाधिस्तु पुरुष आत्मनेपदादेव प्रतीयते, कर्मणि आत्मनेपदस्यैव सत्त्वात्—पच्ये इति। तदयमहङ्काररूपः पुरुषः कर्तृकर्मरूपसाधनविशेषणमित्युच्यते।

मध्यमस्तु पुरुषः परत्वम्—अहङ्काराश्रयाद् अन्यत्वम्—भेदो मध्यमवाच्यः। स हि कर्तृकर्मविशेषणभूतः प्रश्नप्रेरणादिविषयत्वप्राप्तियोग्यः स्वात्मनः=अहङ्काराश्रयात् परः स्ववाचकात् पूर्ववद् भिन्नात्=आत्मनेपदपरस्मैपदरूपेण भिन्नात् प्रतीयते। तद्यथा—'पचसि, पचसे' इत्यत्र कर्त्रुपाधिः=कर्तृविशेषणम्, स्वात्मनोऽन्यत्वरूपो मध्यमः पुरुषः।

कर्मोपाधिस्तु=कर्मविशेषणं तु तदात्मनेपदादेव प्रतीयते पच्यसे इति। कर्मणि परस्मैपदाभावात्।

तदेवं श्रुतिविशेषेण शब्दविशेषेण कर्मणि लकारे यका, कर्तरि लकारे च शबादिना यथायथमुपलक्षितौ मध्यमोत्तमौ यथायोगम्=यथासम्भवं स्वार्थमाचक्षाते।

यः कर्तृकर्मविशेषणभूतः स पुरुष इति पूर्वाचार्याः प्राहुः। अत एव पुरुषस्य कर्तृकर्मविशेषणत्वाद् भावविषयता नास्तीति। तत्र=भावे लकारे मध्यमोत्तमयोरप्रयोगः प्रथमः पुरुष एव शेषत्वात् तत्र प्रयुज्यते। भूयते इति। प्रत्यक्तापरभावौ तु तत्र शब्दान्तरप्रयोगादेवावसेयौ, 'आस्यते मया, शय्यते त्वया' इति मध्यमोत्तमयोस्तत्राप्रयोगादिति॥ १॥

यदि प्रत्यक्ताहङ्कारेण समानाधिकरणता ततोऽन्या परभावेन समानाधिकरणता चानयोः पुरुषयोर्यथायोगं वाच्या, तदा चेतनेष्वेवाहङ्कारपरभावयोरुपपत्तेरचेतनविषये 'शृणोत ग्रावाण' इत्यादावनयोः प्रयोगो न प्राप्नोतीत्याशङ्क्याह—

**सदसद्वाऽपि चैतन्यमेताभ्यामेव गम्यते ।**
**चैतन्यभागे प्रथमः पुरुषो न तु वर्तते ॥ २ ॥**

**स्वपराधिष्ठानं चैतन्यं भाविकमध्यारोपितं वा आभ्यामभिधीयते कर्तृकर्मोपाधिभूतम् । शब्दादवगम्यमानस्येहार्थस्यान्वाख्याननिमित्तत्वाच्छाब्दं चैतन्यं**

---

ननु यदि अहङ्कारेण समानाधिकरणतारूपा प्रत्यक्ता, ततोऽन्या परत्वेन= स्वात्मान्यत्वेन समानाधिकरणता चानयोः पुरुषयोः=मध्यमोत्तमयोः यथायोगम्= यथासम्भवं वाच्या, तदा परत्वस्य चेतनत्वेन स्वात्मसादृश्ये सति स्वात्मान्यत्वे सति स्वात्मविरोधित्वरूपत्वेन चेतनेष्वेवाहङ्कारपरभावयोरुपपत्तेरचेतनविषये—शृणोत ग्रावाण इत्यादावनयोः=मध्यमोत्तमयोः प्रयोगो न प्राप्नोति, इत्याशङ्क्याह— सदसद्वाऽपीति ।

अस्यार्थः—सद्=विद्यमानं प्राणिषु चैतन्यम्, असद्=अविद्यमानमध्यारोपितमप्राणिषु चैतन्यम्, एताभ्यामेव मध्यमोत्तमाभ्यामेव गम्यते प्रत्यक्तापरत्वयोः सामानाधिकरण्येन प्रतीयते, न तूच्यते, अनन्यलभ्यो हि शब्दार्थ इति सिद्धान्तात्, अत्र चैतन्यस्य चार्थापत्तिलभ्यत्वात् ।

अत्रैवकारेण व्यवच्छेद्यमर्थं दर्शयति उत्तरार्धेन—चैतन्यभाग इति ।

चिदचिद्रूपस्य विश्वस्य शाब्दव्यवहारगोचरस्य चैतन्यभागे अध्यारोपितेऽनध्यारोपिते वा प्रथमः पुरुषस्तु न वर्तते । 'शेषे प्रथमः' ( पा० १।४।१०८ ) इत्युक्तेः । अतोऽनध्यारोपितचैतन्येऽचेतने प्रत्यक्तापरत्वयोरसमानाधिकरणे चेतने च—'पतति कूलम्, घटो भवति, भवान् पचति' इत्यादौ प्रथमः पुरुषः प्रयोक्तव्यः साधुश्चेत्युक्तं भवतीति ।

यद्यपि 'भवान् पचति, चैत्रः पचति' इत्यादावपि स्वात्मान्यत्वरूपपरत्वसमानाधिकरणं चैतन्यमस्तीति मध्यमप्रयोगः स्यात्, तथापि तत्र तमःप्रकाशवत् स्वाभाविकं स्वात्मविरोधित्वं भवदर्थे युष्मदर्थवन्नास्तीति न तत्र मध्यमप्रयोगापत्तिरिति —'चैत्रः पचति' इत्यत्र तु स्वात्मत्वं परत्वं वा नावबुध्यत इति तत्रापि 'शेषे प्रथमः' ( पा० १।४।१०८ ) ।

अयं भावः—स्वपराधिष्ठानम्=स्ववृत्तिपरवृत्ति च चैतन्यं भाविकम्= स्वाभाविकमध्यारोपितं वा शृणोत ग्रावाण इत्यादावचेतनेऽध्यारोपितं वा कर्तृकर्मविशेषणभूतं मध्यमोत्तमाभ्यामभिधीयते । व्यवहारे शब्दादवगम्यमानस्यार्थस्येह=

सर्वत्रास्ति। पदान्तरसम्बन्धादनवधृतचैतन्यस्यं तु समारोपकल्पना। यदि समारोपित-चैतन्योऽप्यनयोर्विषयः, तदा प्रथमपुरुषस्य को विषय इत्यत आह—चैतन्यभाग इत्यादि।

अध्यारोपितचैतन्योऽपि प्रथमपुरुषस्य न विषयः, तस्य शेषे विधानात्। ततश्चानध्यारोपितचैतन्योऽचेतनोऽस्य विषयः, पतति कूलम्, शुष्यन्ति व्रीहय इत्यादि। भागग्रहणं समानाधिकरणाभ्यां स्थानित्वोपाधिकाभ्यां युष्मदस्मद्भ्यां योऽन्यश्चेतनो विषयस्तत्र प्रथमस्य प्रवृत्तेः 'भवान् पचति', 'आस्यते त्वया', 'शय्यते मया' इत्यत्रापि पदान्तरगम्यं चैतन्यमिति चैतन्यांशसंस्पर्शेन साध्यसाधनभावमात्र-मवगमयति प्रथमः पुरुष इति युक्तम्।

चैतन्यमात्मपरवर्ति, द्वौ पुरुषावुत्तममध्यमो चैतन्यरहितत्वं प्रथमः पुरुष इत्यत्र तात्पर्यार्थः॥ २॥

'बुध्यते, जानाति, चेतयते' इत्यादौ चैतन्योपाधेः कर्तुरवगमात् कथं चैतन्य-भागे प्रथमः पुरुषो न प्रवर्तत इत्यत आह—

**बुधिजानातिचितिभिः प्रथमे पुरुषे सति।**
**संज्ञानार्थेन चैतन्यस्योपयोगः प्रकाश्यते॥ ३॥**

---

व्याकरणे शब्दसाधुत्वान्वाख्याननिमित्तत्वात् शाब्दम्=शब्दव्यवहारगोचरीभूतम् अध्यारोपितमनध्यारोपितं वा चैतन्यं सर्वत्र=चेतनेऽचेतने चास्ति। 'शृणोत ग्रावाण' इत्यादौ अनवधृतचैतन्यस्य=अज्ञातचैतन्यस्य तु पदान्तरसम्बन्धात् चैतन्य-समारोपकल्पना। यदि समारोपितचैतन्योऽचेतनोऽप्यनयोः=मध्यमोत्तमयोर्विषयः, तदा प्रथमपुरुषस्य को विषय इत्यत आह—**चैतन्यभाग इत्यादि।**

अध्यारोपितचैतन्योऽचेतनोऽपि प्रथमपुरुषस्य न विषयः, तस्य शेषे विधा-नात्। ततश्चानध्यारोपितचैतन्योऽचेतनोऽस्य=प्रथमपुरुषस्य विषयः—'पतति कूलम्, शुष्यन्ति व्रीहयः' इत्यादि। यद्यपि व्रीहिवृक्षेष्वपि चैतन्यमस्ति, तथापि अव्यक्तचैतन्यवत्तयाऽचेतनोपचारः। भागग्रहणं तु कर्तृसमानाधिकरणाभ्यां स्थानित्वोपाधिकाभ्याम्=प्रसङ्गोपाधिकाभ्यां युष्मदर्थास्मदर्थाभ्यां योऽन्यश्चेतनो भवदर्थश्चैत्रादिपदार्थश्च प्रागुक्तरीत्या मध्यमोत्तमयोरविषयः, तत्र प्रथमस्य प्रवृत्तेः कृतम्—'भवान् पचति' इति। 'आस्यते त्वया, शय्यते मया' इत्यत्रापि पदान्तरगम्यं चैतन्यमिति चैतन्यासम्बन्धेन साध्यसाधनभावमात्रमवगमयति प्रथमः पुरुष इति युक्तं भागग्रहणम्।

आत्मपरवर्ति=आत्मवर्ति परवर्ति च चैतन्यं द्वौ पुरुषावुत्तममध्यमौ, युष्म-दस्मदर्थचैतन्यरहितत्वं प्रथमः पुरुष इत्यत्र तात्पर्यार्थः॥ २॥

ननु 'बुध्यते, जानाति, चेतयते' इत्यादौ चैतन्योपाधेः=चैतन्यविशेषितस्य कर्तुरवगमात् कथं चैतन्यभागे प्रथमः पुरुषः, न तु वर्तत इत्युक्तम्, अत आह—**बुधि-जानातिचितिभिरिति।**

संवेदनार्थैर्बुध्यादिधातुभिर्ज्ञानलक्षणेन वार्थेन वाच्येन करणभूतेन बुध्यते इत्यादौ प्रथमपुरुषोत्पत्तौ सत्यामपि न चैतन्यस्य व्यापारो व्यज्यते। धात्वर्थो ह्यत्र चैतन्यलक्षणः। स च कर्तृकर्मणोरवच्छेदक इति तद्वशाच्चैतन्यप्रकाशः, न तु प्रथमपुरुषप्रयोगात्। अन्यत्राज्ञानार्थधातुविषये प्रथमपुरुषान्नियमेन चैतन्यानभिव्यक्तेः। न हि यथा मध्यमोत्तमाभ्यां युष्मदस्मदर्थविषयतया विधानाच्चैतन्योपाधिकयोः कर्तृकर्मणोरवगतिस्तथा प्रथमात्, शेषे विधीयमानत्वेन चैतन्योपाधिनियमाभावात्। युष्मदि तु विधीयमानो मध्यमो नियमेन चैतन्यमभिद्योतयति, युष्मदश्चेतनेष्वेव प्रयोगात्॥ ३॥

परभावे मध्यमे विधीयमाने मतान्तरेण विशेषमाह—

सम्बोधनार्थः सर्वत्र मध्यमे कैश्चिदिष्यते।
तथा सम्बोधने सर्वां प्रथमां युष्मदो विदुः॥ ४॥

---

अस्यार्थः—बुधिजानातिचितिभिः संज्ञानार्थैः संवेदनार्थकैर्धातुभिः स्वार्थस्य चैतन्यस्य उपयोगः कर्तृविशेषत्वरूपो व्यापारः प्रथमे पुरुषे सत्यपि, प्रथमपुरुषोत्पत्तौ सत्यामपि, न प्रकाश्यते=न व्यज्यते, धात्वर्थस्य चैतन्यस्य वाक्यार्थे प्रधानस्य प्रत्ययार्थे कर्तरि विशेषणतयाऽन्वयायोगात्। शेषे विधीयमानस्य प्रथमपुरुषस्य मध्यमोत्तमयोरिव चैतन्यावाचकत्वाच्च। अन्यत्राज्ञानार्थकधातुयोगे प्रथमपुरुषेण चैतन्याभिधानादर्शनाच्चेति। ज्ञानार्थकधातुयोगे कर्तृविशेषितस्य चैतन्यस्य शब्दतो भाने सति अर्थापत्त्या कर्त्रवच्छेदकत्वं चैतन्ये भासत इति न तत्रापि प्रथमपुरुषवाच्यता चैतन्यस्येति।

अयं भावः—संवेदनार्थकैर्बुध्यादिधातुभिः, यद्वा संज्ञानरूपैरर्थैः करणभूतैः, बुध्यते इत्यादौ प्रथमपुरुषोत्पत्तौ सत्यामपि न चैतन्यस्य व्यापारः कर्त्रवच्छेदकत्वलक्षणो व्यज्यते। यतोऽत्र चैतन्यं धात्वर्थः, न तु प्रथमपुरुषस्यार्थः। स च शब्दतः प्रधानभूतोऽपि अर्थात् कर्तृकर्मणोरवच्छेदक इति तद्वशात्=बुद्ध्यादिधातुवशात् चैतन्यस्य प्रकाशः, न तु प्रथमपुरुषप्रयोगात्। अन्यत्राज्ञानार्थकधातुविषये प्रथमपुरुषान्नियमेन चैतन्यानभिव्यक्तेः। न हि युष्मदस्मदर्थविषयतया विधानात्, यथा मध्यमोत्तमपुरुषाभ्यां चैतन्योपाधिकयोः—चैतन्यविशेषितयोः कर्तृकर्मणोरवगतिस्तथा प्रथमपुरुषात्। शेषे विधीयमानत्वेन चैतन्यरूपस्य कर्तृविशेषणस्य नियमेन मानाभावात्। युष्मद्युपपदे तु विधीयमानो मध्यमो नियमेन चैतन्यमभिद्योतयति, युष्मदश्चेतनेष्वेव प्रयोगादिति॥ ३॥

परभावे=स्वात्मान्यत्वे विधीयमाने मध्यमपुरुषे मतान्तरेण प्रैषेऽप्रैषे च सम्बोधनार्थसत्त्वरूपम्, सम्बोधने सर्वप्रथमाविभक्त्युत्पत्तिरूपञ्च विशेषमाह—सम्बोधनार्थ इति।

यत्र प्रैषो विवक्षितः, तत्र क्रियासु विनियोगावधानस्थापनार्थं सम्बोधनमस्त्येव सर्वेषामपि मते। तद्यथा—गच्छ, भुङ्क्ष्वेत्येवमादौ। त्वं पचसीत्येवमादावपि तु प्रैषाभावे केचित् सम्बोधनमिच्छन्ति, ये आभिमुख्यकरणमात्रलक्षणं सम्बोधनमुपयन्ति, अतश्च युष्मदो विधीयमाना प्रथमापि सर्वैव वचनत्रयरूपापि सम्बोधनविभक्तिरेतेषां मते ॥ ४ ॥

यद्येवं मध्यमप्रथमयोः सम्बोधनार्थत्वात् 'स्वाहेन्द्रशत्रुर्वर्धस्व,' 'राजा भव, युध्यस्व' इत्यादावपि मध्यमसमानाधिकरणं प्रथमान्तं पदं सम्बुद्ध्यन्तं स्यात्। नैवं दृश्यत इति कथमेतदित्याशङ्क्याह—

सम्बोधनं न लोकेऽस्ति विधातव्येन वस्तुना।
स्वाहेन्द्रशत्रुर्वर्धस्व यथा राजा भवेति च ॥ ५ ॥

---

अस्यार्थः—कैश्चिद् वादिभिर्मध्यमे मध्यमपुरुषे सर्वत्र प्रैषे अप्रैषे वा सम्बोधनार्थ इष्यते। तत्र प्रैषे गच्छ भुङ्क्ष्व इत्यादौ विनियोगावधानफलकमभिमुखीकरणं सम्बोधनपदार्थः। अप्रैषे त्वं पचसि इत्यादावभिमुखीभावमात्रं सम्बोधनार्थः। 'सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः' इत्युक्तम्। तथा सम्बोधने युष्मदः=युष्मच्छब्दात् सर्वां प्रथमां विभक्तित्रयरूपाम्, न तु प्रथमैकवचनमात्ररूपां विदुरिति।

अयं भावः—यत्र प्रैष=विधिर्विवक्षितः, तत्र क्रियासु गमिभुज्यादिषु विनियोगावधानस्थापनार्थम्=प्रैषेऽवधानस्थापनार्थम्=अप्रमादार्थं सम्बोधनमस्त्येव सर्वेषामपि वादिनां मते। तद्यथा—गच्छ भुङ्क्ष्वेत्येवमादौ। त्वं पचसि इत्येवमादावपि तु प्रैषाभावे केचित् सम्बोधनमिच्छन्ति, येऽभिमुखीभावमात्रं सम्बोधनमुपयन्ति=स्वीकुर्वन्ति।

हेलाराजेन तु "ये आभिमुख्यकरणमात्रलक्षणं सम्बोधनमुपयन्ति" इत्युक्तम्, तदपेशलम्, पूर्वस्मात् पक्षादविशेषात्। तस्मान्मदुक्तमेव सम्यक्। अतश्च युष्मच्छब्दाद् विधीयमाना प्रथमाऽपि सर्वैव वचनत्रयरूपाऽपि सम्बोधनविभक्तिरेतेषां मते, न तु प्रथमैकवचनरूपैवेति ॥ ४ ॥

यद्येवं मध्यमप्रथमयोः=मध्यमपुरुष-प्रथमाविभक्त्योः सम्बोधनार्थत्वात् 'स्वाहेन्द्रशत्रुर्वर्धस्व', 'राजा भव युध्यस्व' इत्यादावपि मध्यमपुरुषसमानाधिकरणं प्रथमान्तं पदं सम्बुध्यन्तं स्यात्, नैवं दृश्यत इति कथमेतदित्याशङ्क्याह—सम्बोधनं न लोकेऽस्तीति।

अस्यार्थः—लोके विधातव्येन विधेयेन वस्तुना सह संसृष्टं सम्बोधनं नास्ति। यथा—'स्वाहेन्द्रशत्रुर्वर्धस्व, राजा भव युध्यस्व' इति चेति। अत्र चेन्द्रशत्रुत्वं राजत्वं च विधीयमानम्, तेन सह सम्बोधनस्य सामानाधिकरण्यलक्षणः सम्बन्धो नास्ति—तेन

'सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः' ( वा० प० ३, का० १६३ ) इति साध्यस्य विधीयमानस्य सम्बोधनं नास्ति। न ह्यपूर्वोऽर्थ उपदिश्यमानोऽनवाप्तसत्त्वोऽप्रतीयमाननियतरूपोऽभिमुखीभावमर्हत्युपगन्तुम्। इह चेन्द्रशत्रुत्वं राजत्वं च विधीयमानमिति सत्यपि प्रैषे सम्बोधनाभावः। तथा च गुणनलोपप्रतिषेधौ न भवतः। तदत्र मध्यमे सम्बोधनं नास्तीति कैश्चिदत्रैतदिष्यत इत्युक्तम् ॥ ५ ॥

यदा च युष्मदः प्रथमासम्बोधनविभक्तिः, तदा शास्त्रकार्यमिदं सिद्धमित्याह—

युष्मदः प्रथमान्तस्य परश्चेन्न पदादसौ।
युष्मदर्थस्य सिद्धत्वान्नियता चाद्युदात्तता ॥ ६ ॥

सिद्धत्वादिति सम्बोधनविषयत्वं पुष्णाति। तथा चामन्त्रितस्यादिरुदात्तो भवतीति प्रथमान्तस्य युष्मदो नियमेनाद्युदात्तत्वं भवति, यदि पदादुत्तरोऽसौ न भवति। तद्यथा—'त्वमग्ने प्रयाजानुयाजानां पुरस्तात्', 'त्वमग्ने द्युभिस्त्वमाशु-

---

इन्द्रशत्रो वर्धस्व इति, राजन् युध्यस्वेति च सम्बोधनविभक्तिस्तत्प्रयुक्तं कार्यंञ्च गुणो नलोपश्च न भवतीति।

अयं भावः —'सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः' इत्युक्तेः साध्यस्य विधीयमानस्यार्थस्य सम्बन्धिसम्वोधनं नास्ति। न ह्यपूर्वोऽर्थ उपदिश्यमानोऽनवाप्तसत्त्वः=अप्राप्तसत्ताकोऽप्रतीयमाननियतरूपोऽभिमुखीभावमुपगन्तुमर्हति। इह चेन्द्रशत्रुत्वं राजत्वञ्च विधीयमानमिति सत्यप्यत्र प्रैषे सम्बोधनाभावः। तथा च 'इन्द्रशत्रुः' इत्यत्र 'ह्रस्वस्य गुणः' राजा भवेत्यत्र च 'न ङिसम्बुध्योः' ( पा० ८।२।८ ) इति नलोपप्रतिषेधश्च न भवति। तदत्र मध्यमपुरुषे सत्यपि सम्बोधनं नास्तीत्यभिप्रेत्य 'कैश्चिदत्रैतदिष्यते' इति पूर्वकारिकायामुक्तमिति ॥ ५ ॥

यदा च युष्मदः प्रथमासम्बोधनविभक्तिः, तदा प्रथमान्तस्य युष्मच्छब्दस्याद्युदात्तत्वरूपं शास्त्रकार्यमिदं सिद्धमित्याह—युष्मदः प्रथमान्तस्येति।

अस्यार्थः—युष्मदर्थस्य सिद्धत्वात्, सिद्धत्वेन सम्बोधनविषयत्वात् प्रथमान्तस्य युष्मद आद्युदात्तता च नियता=नियमेन सिद्धा। चेद् यद्यसौ प्रथमान्तो युष्मच्छब्दः पदात्परो न भवतीति 'त्वमग्ने प्रयाजानुयाजानां पुरस्तात्' इत्यादि उदाहरणमिति। कारिकायां सिद्धत्वादित्युक्त्या युष्मदर्थस्य सम्बोधनविषयतां पुष्णाति। तथा चामन्त्रितस्यादिरुदात्तो भवतीत्यनेन प्रथमान्तस्य युष्मदो नियमेनाद्युदात्तत्वं सिद्धं भवति, यदि पदादुत्तरोऽसौ न भवति। तद्यथा—'त्वमग्ने प्रयाजानुयाजानां पुरस्तात्, त्वमग्ने द्युभिः, त्वमाशुशुक्षणिः' इत्यादौ। पदात्परत्वे तु युष्मद आमन्त्रितमनुदात्तं भवति। पदात् परत्वे आमन्त्रितस्य निघातविधानात्।

शुक्षणिः' इत्यादौ। पदात् परत्वे त्वामन्त्रितमनुदात्तं भवति, तत्र निघात-विधानात्। यथा—'देवीरापः शुद्धा यूयम्' इति ॥ ६ ॥

यदि तर्हि पुरुषप्रत्ययानामर्थनियमस्तदा 'तेन दीव्यतिः' ( पा० ४।४।२ ) इत्यादौ प्रथमपुरुषेणार्थे निर्दिश्यमाने शालाकिकोऽस्मि, आक्षिकोऽस्मि, शालाकिकोऽसि, आक्षिकोऽसीत्यादौ मध्यमोत्तमविषये तद्धितो न स्यादित्याशङ्क्याह —

**गुणप्रधानताभेदः पुरुषादिविपर्ययः।**
**निर्दिष्टस्यान्यथा शास्त्रे नित्यत्वान्न विरुध्यते ॥ ७ ॥**

नित्याः शब्दाः शास्त्रेणानुविधीयन्ते। तत्र चापोद्धारार्थोऽन्वाख्यानेऽङ्ग-भावेनोपादीयमानो नान्तरीयकपुरुषादिनियमानादरेण निमित्तभावमुपैति। ततश्च लक्षणे क्रियाप्रधानाख्यातपदोपादानेऽपि लक्ष्ये तद्धितान्तं सत्त्वप्रधानं भवति, येन लिङ्गादिना तद्धर्मेण युज्यते।

एवमन्यथापि लक्षणे पुरुषसङ्ख्याकालोपादाने सर्वत्र नित्यशब्दानुगमः कृतो भवति ॥ ७ ॥

---

देवीरापः शुद्धा यूयमिति। अत्र शुद्धपदात्परो युष्मच्छब्दः प्रथमान्त आमन्त्रित इति तस्य निघात इति ॥ ६ ॥

ननु यदि पुरुषप्रत्ययानामर्थनियमो येन मध्यमोत्तमविषये प्रथमो न भवति, प्रथमविषये च मध्यमोत्तमौ न भवत इति, तदा 'तेन दीव्यति' ( पा० ४।४।२ ) इत्यादौ प्रथमपुरुषेणार्थे निर्दिश्यमाने 'शालाकिकोऽस्मि शलाकया दीव्यामि, शालाकिकोऽसि शलाकया दीव्यसि, आक्षिकोऽस्मि अक्षैर्दीव्यामि, आक्षिकोऽसि, अक्षैर्दीव्यसि' इत्यादौ मध्यमोत्तमविषये तद्धितो न स्यादित्याशङ्क्याह—गुण-प्रधानताभेद इति।

अस्यार्थः—शास्त्रेऽन्यथा निर्दिष्टस्य गुणप्रधानताभेदः पुरुषादिविपर्ययः शब्दानां नित्यत्वान्न विरुध्यत इत्यन्वयः। तद्यथा शास्त्रे 'तेन दीव्यति' ( ४।४।२ ) इति प्रथमपुरुषेण निर्देशः, अक्षादिकरणिका देवनक्रियेति गुणप्रधानभावः, 'आक्षिकोऽस्मि' इत्यत्र अक्षकरणकदेवनकर्ता इत्येवं गुणप्रधानभावः, 'अक्षैर्दीव्यामि' इति पुरुषविपर्ययः। इदं सर्वं शब्दानां नित्यत्वान्न विरुध्यते।

तथा हि—नित्याः शब्दाः, ते च शास्त्रेणानुविधीयन्ते=साधुत्वेन बोध्यन्ते, न त्वपूर्वाः क्रियन्ते। तत्र च परिकल्पितापोद्धारपदार्थो नित्यानां शब्दानाम-न्वाख्यानेऽङ्गभावेनोपादीयमानः स्वनान्तरीयकपुरुषादिनियमानादरेण निमित्त-भावमुपैति।

ततश्च 'तेन दीव्यति' ( ४।४।२ ) इत्यादिलक्षणे क्रियाप्रधानाख्यातपदो-पादानेऽपि 'आक्षिकः' इत्यादिलक्ष्ये तद्धितान्तं सत्त्वप्रधानम्=द्रव्यप्रधानं भवति,

एतदेवोपोद्बलयितुमाह—

**यथानिर्देशमर्थाः स्युर्येषां शास्त्रं विधायकम् ।**
**किञ्चित् सामान्यमाश्रित्य स्थिते तु प्रतिपादनम् ॥ ८ ॥**

यदि शास्त्रं शब्दानां जनकं स्यात्, तदा यथाशास्त्रं तेषामर्थोऽवतिष्ठेत् । न चैवम्, 'कार्ये युगपदन्वाचययौगपद्यम्' ( वा० १।१।४४ ), 'द्वेधा अप्रतिपत्तिः' ( वा० १।१।४४ ) इत्युक्तत्वात् । नित्याः शब्दाः शास्त्रेण ज्ञाप्यन्ते । तथा च 'अर्थानादेशात्' किञ्चिदर्थरूपमदूरविप्रकर्षेण समानमन्वाख्यानाङ्गभावेनाश्रित्यावस्थितमेव शब्दरूपं नियतार्थमन्वाख्यायत इति सिद्धमिष्टम् ॥ ८ ॥

---

येन लिङ्गादिना तद्धर्मेण=सत्त्वधर्मेण युज्यते । एवमन्यथाऽपि लक्षणे पुरुषसंख्याकालोपादाने सर्वत्र नित्यशब्दानुगमः कृतो भवति=नित्यानां शब्दानां लक्षणेनानुसरणं कृतं भवति । तथा च—'आक्षिकोऽसि आक्षिकाः सन्ति, आक्षिका आसन्' इत्यादिप्रयोगोपपत्तिरिति ॥ ७ ॥

पूर्वकारिकोक्तमेवार्थमुपपादयितुमाह—यथानिर्देशमिति ।

अस्यार्थः—येषां वैयाकरणानां मते शास्त्रं शब्दानामर्थानाञ्च विधायकम्, तेषां मते यथानिर्देशम्—शास्त्रेऽर्थानां यो यथानिर्देशस्तमनतिक्रम्य व्यवहारे शब्दानामर्थाः स्युः, अत्र शब्दानां विधायकत्वं जनकत्वरूपम्, अर्थानां विधायकत्वञ्चाज्ञातज्ञापकत्वरूपमिति विशेषः । अनुशासनात् प्राक् स्थिते तु शब्दे व्यवहारगोचरस्यार्थस्य शास्त्रनिर्दिष्टेऽर्थे किञ्चित् सामान्यमाश्रित्य शास्त्रेऽर्थस्यान्वाख्यानाङ्गतया प्रतिपादनम् । यथा व्यवहारे आक्षिक इत्यस्य अक्षकरणकदेवनकर्ता इत्यर्थः ।

शास्त्रे तु 'तेन दीव्यति' इत्यनेन अक्षकरणिका देवनक्रिया इत्यर्थस्यान्वाख्यानाङ्गतयाऽन्यथा निर्देशः । अत्रोभयत्र गुणप्रधानभावविपर्ययेऽपि कालपुरुषसंख्याविपर्ययेऽपि च देवनक्रियायामक्षकरणकत्वम्, देवनत्वञ्च सामान्यमाश्रित्यान्वाख्यानाङ्गतयाऽर्थस्य शास्त्रेण प्रतिपादनमिति ।

अयं भावः—यदि शास्त्रं शब्दानां जनकं स्यात्, तदा यथाशास्त्रं तेषां शब्दानामर्थोऽवतिष्ठेत । न चैवं सम्भवति, कार्ये युगपदन्वाचययोर्यौगपद्ये द्वेधाऽप्रतिपत्तिरित्युक्तत्वात् ।

अस्यार्थः—'ईश्वरं गुरुं च भजस्व' इत्यादिव्यवहाररूपे कार्ये युगपदन्वाचययोः=यौगपद्यान्वाचययोः समुच्चयान्वाचययोर्यौगपद्ये विवक्षिते द्वेधाऽप्रतिपत्तिः, समुच्चयस्यैव अन्वाचयस्यैव वा एकतरस्य तत्र भानादिति शास्त्रस्य शब्दजनकत्वे तूभयोरर्थयोर्युगपद् भानं स्यादिति । अतः शब्दा नित्याः शास्त्रेण ज्ञाप्यन्ते, न त्वपूर्वा विधीयन्ते । तथा चार्थानादेशनात्=अर्थानां शास्त्रेण विधानाद् ।

अत्रैव भाष्यकारीयं निदर्शनमाह—

योऽश्वे यः पीठ इत्यत्र भूतयोरश्वपीठयोः ।
यथोपलक्षणार्थत्वं तथार्थेष्वनुशासनम् ॥ ९ ॥

बहुष्ववस्थितेषु क इह देवदत्त इति प्रश्ने कथ्यते—"योऽश्वे पीठे वा तिष्ठति' इति । अत्र यथाश्वपीठयोः सिद्धयोरेव देवदत्तज्ञापनाय भूतविभक्त्योपादीयमानयोर्यथावस्थितयोरेवोपयोगो भवति, एवमर्थानामपि यथास्वभावं शब्देषूपयोगः ।

यथा चात्राश्वपीठयोर्विधीयमानेन देवदत्तसंज्ञारूपेणोपयोगः, तथार्थानामपि प्रत्ययादिना विधीयमानेनेति न तेऽत्र वाक्ये भेदेन विधीयन्ते, अपि तु तेषु सप्तम्या भूतविभक्त्या निर्दिश्यमानेषु सिद्धेषु निमित्तेषु प्रत्ययादेरेव कार्यस्य विधिरिति यथायोगं सर्वत्रेष्टसिद्धिः ॥ ९ ॥

॥ इति भूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे पुरुषसमुद्देशो दशमः ॥

---

किञ्चिदर्थरूपमदूरविप्रकर्षेण = किञ्चित् सान्निध्येन समानमन्वाख्यानाङ्गभावेन = शब्दसाधुत्वानुशासनाङ्गभावेन आश्रित्य अवस्थितमेव नियतार्थं शब्दरूपमन्वाख्यायत इति सिद्धमिष्टमिति ॥ ८ ॥

अत्रैव भाष्यकारीयं निदर्शनम् = दृष्टान्तम् आह—योऽश्व इति ।

अस्यार्थः—यथा 'योऽश्वे तिष्ठति स देवदत्तः', 'यः पीठे तिष्ठति स देवदत्तः' इति भूतयोः सिद्धयोरेवाश्वपीठयोर्विधीयमानदेवदत्तोपलक्षणार्थत्वम्, न तु विशेषणत्वम्, सिद्धत्वेनाविधीयमानत्वात् । तथाऽर्थेषु अनुशासनं शास्त्रमुपलक्षणत्वेन बोधकम्, न तु शब्दवत् तद्विशेषणतयाऽर्थानां विधायकमिति ।

अयं भावः—बहुष्ववस्थितेषु क इह = एषु देवदत्त इति प्रश्ने कथ्यते । योऽश्वे पीठे वा तिष्ठतीति । अत्र यथाऽश्वपीठयोर्ज्ञातत्वेन सिद्धयोरेव देवदत्तज्ञापनाय भूतविभक्त्या = भूतार्थकविभक्त्या अधिकरणत्वेनोपादीयमानयोः = बोध्यमानयोर्यथाऽवस्थितयोरेवोपयोगो भवति, न त्वपूर्वयोः, एवमर्थानामपि यथास्वभावं शब्देषूपयोगः, न त्वपूर्वस्वभावानामर्थानां शब्दवद् विधायकं शास्त्रम् ।

यथा चात्राश्वपीठयोः सिद्धयोर्विधीयमानेन देवदत्तसंज्ञारूपेण सह निमित्तनिमित्तिभावेनोपयोगः, तथाऽर्थानामपि प्रत्ययागमादेशादिना सह निमित्तनिमित्तिभावेनोपयोग इति । न ते शास्त्रे निर्दिश्यमाना अर्था अत्र वाक्ये भेदेन विधीयन्ते, वाक्यभेदरूपमहादोषप्रसङ्गात्, अपि तु तेषु = अर्थेषु भूतविभक्त्या सप्तम्या निर्दिश्यमानेषु निमित्ततया सिद्धेषु सत्सु प्रत्ययादेरेव कार्यस्य = निमित्तिनो विधिरिति यथायोगं सर्वत्र आक्षिकादिषु कालपुरुषसंख्यादिभेदेऽपीष्टसिद्धिरिति ॥ ९ ॥

॥ इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथशर्मकृतावम्बाकर्त्र्यां प्रकीर्णकाण्डे पुरुषसमुद्देशो दशमः ॥

# अथ संख्यासमुद्देशः

इदानीं संख्यां विचारयति—

संख्यावान् सत्त्वभूतोऽर्थः सर्व एवाभिधीयते ।
भेदाभेदविभागो हि लोके संख्यानिबन्धनः ।। १ ।।

भेदापोद्धारलक्षणा संख्या एकादिका परार्धपर्यवसाना । भेदश्चेदं तद् इति सर्वनामप्रत्यवमर्शयोग्यवस्तुगतः । तथा च सर्व एव द्रव्यात्मार्थो भिन्न एको द्वौ बहव इत्यादिसंख्यायुक्तो व्यवह्रियते । द्वित्वादिका संख्या भेदमेकत्वसंख्या चाभेदमाश्रये व्यवहारयति । तथा च कार्यादस्माद् द्रव्ये संख्या निश्चीयते । पृथक्त्ववशाद्धि द्रव्याणां पृथक्त्वेन व्यवहारः, एकादिव्यवहारस्तु संख्यावशात् संसर्गवादिभिरभ्युपगम्यते ।

---

इदानीमवसरप्राप्तमपि उपग्रहमलौकिकत्वेन दुरूहत्वाद् बहु विचार्यं परित्यज्य लोकप्रसिद्धं संख्यामल्पविचार्यां सूचीकटाहन्यायेन प्राग् विचारयति— संख्यावानिति ।

अस्यार्थः — सर्व एव सत्त्वभूतोऽर्थः = द्रव्यरूपोऽर्थः संख्यावान् अभिधीयते सुबन्तपदैः तिङन्तपदैर्वा । लिङ्गसंख्यान्वितं द्रव्यमिति द्रव्यपदार्थनिरुक्तेः । हि = यतो द्रव्यस्य भेदाभेदविभागः संख्यानिबन्धनः, संख्याप्रयुक्तः, तत्र द्रव्यस्य भेदव्यवहारो द्वित्वादिसंख्याकृतः, अभेदव्यवहारश्च तस्यैकत्वसंख्याकृत इति ।

अयं भावः —भेदापोद्धारलक्षणा = कस्यचिद् द्रव्यस्य द्रव्यसमुदायाद् भेदेनापोद्धारः पृथक्करणं तल्लक्षणा = तद्रूपा संख्या एकादिका परार्धपर्यवसाना = परार्धपर्यन्ता । तद्यथा एकस्यानेकस्माद् भेदेन पृथक्करणमेकत्वसंख्यया । अनेकस्य च द्रव्यसमुदायादेकस्माद् वा द्रव्याद् भेदेनापोद्धारो द्वित्वादिसंख्यया । भेदश्चेदं तदिति सर्वनामप्रत्यवमर्शयोग्यवस्तुगतो वैधर्म्यरूपः ।

तथा च सर्व एव द्रव्यात्मार्थः परस्परं भिन्न एको द्वौ बहव इत्यादिसंख्यायुक्तो व्यवह्रियते वैधर्म्यसत्त्वे, तदभावे तु संख्याभेदप्रयुक्त एव तेषां परस्परं भेदः । तत्र द्वित्वादिका संख्या स्वाश्रये भेदम्, एकत्वसंख्या च स्वाश्रयेऽभेदं व्यवहारयति ।

तथा च कार्यादस्माद् = द्रव्ये भेदाभेदव्यवहाररूपात् कार्यात् तत्कारणीभूता संख्या द्रव्ये निश्चीयते । भेदातिरिक्तपृथक्त्वरूपगुणवशाद् हि द्रव्याणां पृथक्त्वेन

वृत्तावपि च सत्त्वभूत उपसर्जनार्थः संख्यावानेवावधार्यते। निस्संख्या-व्ययार्थभेदेन सैव चाभेदैकत्वसंख्या व्याख्यास्यते। विशेषप्रतीतिनिबन्धनाभावाच्च सख्याभेदो नावधार्यते। यत्र त्वस्ति निबन्धनं शौ[पा]र्शौर्पिकादौ, तत्र भवत्येव विशेषावसाय इति वक्ष्यत एवेति सर्व एव सत्त्वभूतोऽर्थः संख्यावानभिधीयत इति व्याप्तिसिद्धिः।

यत्रापि तद्धितार्थनिर्देशादावनङ्गं संख्या, तत्रापि नान्तरीयकतया सत्त्वभूत-स्यार्थस्य संख्योपादानं भवत्येवेत्यस्ति व्याप्तिः।

तदित्थं सत्त्वभूतस्यार्थस्यैकत्वानेकत्वभेदः संख्यानिबन्धन इति।

---

व्यवहारः, एकादिव्यवहारस्तु संख्यावशात् पदार्थयोः संसर्ग आकाङ्क्षाभास्य इति मन्वानैः संसर्गवादिभिर्नैयायिकवैशेषिकैर्भेदातिरिक्तपृथक्त्वगुणवादिभिरभ्युपगम्यते।

वैयाकरणैस्तु —द्रव्येषु भिन्नत्वव्यवहारः पृथक्त्वातिरिक्तभेदवशात् संख्या-वशाच्च, पृथक्त्वव्यवहारोऽपि तत एव, भेदातिरिक्तपृथक्त्वानभ्युपगमात्। एकादि-व्यवहारस्तु संख्यावशादभ्युपेयते। समासादिवृत्तावपि च सत्त्वभूतः=द्रव्यरूप उपसर्जनीभूतः पदार्थः संख्यावानेवावधार्यते, अभेदैकत्वसंख्यायास्तत्र भानात्। तदुक्तम्—

अभेदैकत्वसंख्याया वृत्तौ भानमिति स्थितिः॥ इति।

वृत्तावुपसर्जनीभूतार्थस्य निस्संख्याऽव्ययार्थभेदेन सैव च=वृत्तावुपसर्जनी-भूतार्थे भासमानैव चाभेदैकत्वसंख्या व्याख्यास्यतेऽग्रेऽत्रैव। वृत्तावुपसर्जनीभूतस्यार्थ-सामान्यस्यैव भानमिति तद्विशेषप्रतीतिनिमित्ताभावाच्च संख्याभेदः=संख्याविशेषो नावधार्यते; किन्त्वभेदैकत्वसंख्यैवावधार्यते।

यत्र त्वस्ति वृत्तौ पदार्थविशेषप्रतीतिनिबन्धनम्=निमित्तं पार्पिकादौ, तत्र वृत्तावपि भवत्येव संख्याविशेषावसाय इति वक्ष्यत एवेति सर्व एव सत्त्वभूतोऽर्थः संख्यावानभिधीयत इति व्याप्तिसिद्धिः।

क्वचित्तु 'शौर्पिकादौ' इति पाठः, स त्वपपाठः।

तथा हि —शूर्पेण क्रीतः, शूर्पाभ्यां क्रीतः, शूर्पैः क्रीत इत्यविशेषेण शौर्पिक-शब्दात् प्रतीयते। पार्पिकशब्दात्तु पर्पाभ्यां चरतीति द्वित्वसंख्याविशिष्टपर्प-करणकगमनकर्तृरूपोऽर्थः प्रतीयते। येन काष्ठपीठेन पङ्गवश्चरन्ति स पर्पः। पर्पद्वयेनैव च करद्वयधृतेन पङ्गवश्चरन्ति, नैकेन न बहुभिरिति।

यत्रापि 'तस्यापत्यम्' (४।१।९२) इत्यादिके तद्धितार्थनिर्देशादौ अविवक्षि-तत्वेनानङ्गं संख्या तत्रापि सत्त्वभूतस्यार्थस्य नान्तरीयकतया संख्योपादानं भवत्ये-वेत्यस्ति व्याप्तिः पूर्वोदीरिता।

तदित्थं सत्त्वभूतस्यार्थस्यैकत्वानेकत्वभेदः संख्यानिबन्धन इति।

वैशेषिकाणां द्रव्याश्रिता गुणात्मिका संख्या। न च पदार्थ एवासहाय एकत्वम्, ससहायश्च यथायोगं द्वित्वादीति सहायविरहतद्योगयोर्धर्मान्तरत्वाभावान्न कश्चिदन्यो द्रव्यात् सङ्ख्यालक्षणो गुण इति व्यतिरिक्तसङ्ख्याभाव इति वाच्यम्, प्रत्ययभेदात्।

अन्यो हि ससहायताप्रत्ययोऽन्यश्च द्वौ त्रय इत्यादिप्रत्ययः। ससहायेष्वपि चैकत्वप्रत्ययोऽस्तीति न तद्विरह एवैकत्वसङ्ख्या। अबाध्यमानविलक्षणप्रत्ययावेदितसद्भावा हि पदार्था यथायथं भिन्नस्वभावा एव न्याय्याः।

अनेकसङ्ख्या च शतादिकानेकस्मिन् द्रव्ये समवेतापेक्षाबुद्धिप्रभाविताव-धार्यत एव व्यासज्यवृत्तिः संयोगविभागादिवत्। न ह्यनेकद्रव्यं नास्ति, तत्र वा नेयं प्रतीतिः। शतमित्यादिका केवलमनेकाश्रयत्वेऽपि सामान्याद् भिद्यते। सङ्ख्यासामान्यस्य प्रत्ययाश्रयपरिसमाप्तत्वादर्थान्तरापेक्षत्वात्तु सङ्ख्याया इत्यादिवैशेषिकोक्तयुक्तयोऽनुसरणीयाः।

अव्यतिरिक्तधर्मवादिनस्त्वव्यतिरिक्तामाश्रयात् सङ्ख्यां मन्यन्ते। समवायेन

---

वैशेषिकाणां मते संख्या गुणात्मिका द्रव्याश्रिता च। न च पदार्थ एवा-सहाय एकत्वम्, ससहायश्च यथायोगं द्वित्वादिका संख्या, न तु द्रव्यरूपपदार्थधर्मः संख्या इत्येवं सहायाभावतद्योगयोर्धर्मान्तरत्वाभावान्न कश्चिद् द्रव्यादन्यः संख्या-रूपो गुण इति द्रव्यव्यतिरिक्ताया गुणरूपायाः संख्याया अभाव इति वाच्यम्, प्रत्यय-भेदात्=अनुभवभेदात्।

अन्यो हि पुत्रमित्रभृत्यसहित आगत इत्यादिरूपः ससहायताप्रत्ययः, अन्यश्च एको द्वौ त्रय इत्यादिप्रत्ययः। ससहायेष्वपि च भार्यापुत्रमित्रभृत्यादिसहायसत्त्वेऽ-प्येक एव पचतीति एकत्वप्रत्ययोऽस्तीति च सहायविरह एवैकत्वसंख्या। अबाध्यमानविलक्षणप्रत्ययावेदितसद्भावा हि पदार्था यथायथं भिन्नस्वभावा एव न्याय्याः।

अनेकसंख्या=अनेकेषु द्रव्येषु व्यासज्यवृत्तिः संख्या च शताधिका अने-कस्मिन् द्रव्ये समवेता अपेक्षाबुद्धिप्रभाविता=अयमेकोऽयमेक इत्यादिकयाऽपेक्षा-बुद्धया जनिता व्यासज्यवृत्तिरवधार्यत एव संयोगविभागादिवत्। न ह्यनेकद्रव्यं नास्ति, तत्र वा इयं प्रतीतिर्नास्ति। शतमित्यादिका संख्या च केवलमनेकाश्रय-त्वेऽपि संख्यासामान्याद् भिद्यते। संख्यासामान्यस्य प्रत्याश्रयपरिसमाप्तत्वात्, शतादिसंख्याविशेषस्य त्वतथात्वाद् अर्थान्तरापेक्षत्वाच्च, संख्यासामान्यस्य त्वर्था-न्तरानपेक्षत्वाद् इत्यादिवैशेषिकोक्तयुक्तयो वाऽनुसरणीयाः।

आश्रयादव्यतिरिक्तधर्मवादिनस्तु आश्रयादव्यतिरिक्तां संख्यां मन्यन्ते। धर्मधर्मिणोः संख्यासंख्येययोः परस्परं समवायेन तिरोहितभेदत्वाद् नीरक्षीरवद्

तिरोहितभेदत्वाद् व्यतिरेकानवधारणाच्चेदं मतम्। अत्रापि तद्दर्शिता युक्तयो वाच्याः।

तथा ह्यत्यन्तभेदे तद्विशिष्टप्रत्ययानुदय इति काल्पनिक एव भेद इति मन्यन्ते ॥ १ ॥

अस्माकं तु शब्दप्रमाणकानां पदार्थविचारानादराद् यथायथं पदार्थकल्पना तीर्थिकैः कृता। तामाश्रित्य लक्षणाङ्गः पदार्था व्यवस्थाप्या इत्याह—

स धर्मो व्यतिरिक्तो वा तेषामात्मैव वा तथा।
भेदहेतुत्वमाश्रित्य सङ्ख्येति व्यपदिश्यते ॥ २ ॥

सङ्ख्यालक्षणो धर्मस्तेषां सत्त्वभूतानां सङ्ख्येयानामात्मैवाभिन्न एव वाऽस्तु, तेभ्यो व्यतिरिक्तो वाऽस्तु। किमनेन निष्प्रयोजनेनास्माभिर्विचारेण, शब्दार्थस्येह विचारयितुं प्रक्रमात्। शब्दाच्चैको द्वौ त्रय इत्यादेर्भेदव्यवहारे हेतुः कश्चिद् धर्मोऽवधार्यते।

न हि पदार्थमात्रादनुपाधेरेव व्यवहारो घटते। स च धर्मः सञ्चष्ट इति सङ्ख्येत्यन्वर्थेन नाम्ना व्यवह्रियते ॥ २ ॥

---

व्यतिरेकानवधारणाच्चेदमाश्रया व्यतिरिक्तसंख्यावादिमतं प्रवृत्तम्, न तु वस्तुत आश्रयादव्यतिरिक्ता संख्या, धर्मधर्मिणोः सर्वत्रैव भेदानुभवात्। अत्रापि मते प्रत्याख्यानाय एतन्मतवादिदर्शिता युक्तयो वाच्याः।

तथा हि—संख्यासंख्येययोरत्यन्तभेदे तद्विशिष्टप्रत्ययानुदय इति काल्पनिक एव तयोर्भेद इति ते मन्यन्ते। अभेदस्तु तयोरर्थापत्तिलभ्यो वास्तव इति ॥ १ ॥

अस्माकं तु शब्दप्रमाणकानां शब्दाभिहित एव पदार्थ इति पदार्थविचारानादराद् यथायथं प्रकृत्यर्थप्रत्ययार्थपरिकल्पनद्वारा पदार्थकल्पना तीर्थिकैः=शास्त्रकारैर्वैयाकरणैः पाणिन्यादिभिः कृता। तामाश्रित्य लक्षणाङ्गाः=शब्दसाधुत्वानुशासने सूत्राङ्गभूताः पदार्था व्यवस्थाप्या इत्याह—स धर्म इति।

अस्यार्थः—स धर्मः=संख्यारूपो धर्मः, व्यतिरिक्तो वा=आश्रयाद् भिन्नो वा, तथा=तेन प्रकारेण=पूर्वकारिकोक्तेन प्रकारेण, तेषाम्=संख्येयानामात्मैव=स्वरूपमेव वाऽस्तु। तथापि स्वाश्रयभेदहेतुत्वमाश्रित्य स धर्मः संख्येति व्यपदिश्यते=व्यवह्रियते। सञ्चष्टे सम्यग् ब्रूते=सम्यग् बोधयति स्वाश्रयं भिन्नतयाऽभिन्नतया वा यो धर्मः स संख्या इति अन्वर्थव्युत्पत्तेरिति।

अयं भावः—स संख्यालक्षणो धर्मस्तेषां द्रव्यरूपाणां संख्येयानामात्मैव=स्वरूपादभिन्न एव वाऽस्तु, तेभ्यः संख्येयेभ्यो व्यतिरिक्तो वाऽस्तु। किमनेन निष्प्रयोजनेनास्माभिर्विचारितेन शब्दादवबुध्यमानस्यैवार्थस्येह विचारयितुं प्रक्रमात्। 'एकः, द्वौ, त्रयः' इत्यादेः शब्दाच्च भावानां भेदव्यवहारे हेतुः कश्चिद् धर्मोऽवधार्यते,

यदि द्रव्याश्रिता संख्या, कथं गुणादीनां तन्निमित्तो व्यवहार इत्याशङ्क्याह —

**समवेता परिच्छेद्ये क्वचिदन्यत्र सा स्थिता ।**
**प्रकल्पयति भावानां सङ्ख्याभेदं तथात्मनः ॥ ३ ॥**

**या द्रव्ये परिच्छेद्ये भेदहेतुः सङ्ख्या, सा तत्रैव समवेता गुणत्वात् । यदा तु गुणादीनां परिच्छेदिका सा तेभ्योऽन्यत्र द्रव्येऽपि स्थिता, तत्रैव तस्याः समवायान्निर्गुणानामपि तेषामेकार्थसमवायात् स्वनिमित्तं व्यवहारं वर्तयति । आत्मनोऽपि च सङ्ख्या द्रव्येऽपि स्थिता भेदं व्यवहारयति । तद्यथा शतं शते शतानीत्यादि ।**

**न हि शतसङ्ख्यायामेकत्वद्वित्वबहुत्वानि समवेतानि विरोधादद्रव्यत्वान्निर्गुणत्वाच्च ।**

---

स एव संख्या । न ह्यनुपाधेरेव=व्यावर्तकधर्मरहितादव्यावृत्तादेव पदार्थमात्राद् व्यवहारो घटते । स च धर्मः सञ्चष्टे इति संख्येत्यन्वर्थेन नाम्ना व्यवह्रियत इति ॥ २ ॥

यदि द्रव्याश्रिता संख्या, तदा कथं गुणादीनां पञ्चविंशतिर्गुणाः, पञ्च कर्माणि, चत्वारोऽभावा इति संख्यानिमित्तो व्यवहार इत्याशङ्क्याह—समवेता परिच्छेद्ये इति ।

अस्यार्थः —या संख्या द्रव्ये परिच्छेद्ये स्थिता तद् भेदहेतुः, या च संख्या क्वचित् परिच्छेद्येभ्यो गुणादिभ्योऽन्यत्र द्रव्येऽपि स्थिता, सा संख्या द्रव्यस्य गुणादीनाञ्च भेदं प्रकल्पयति, तथा आत्मनः=संख्याया भेदं प्रकल्पयति ।

तत्राद्यस्योदाहरणम्—'एको द्वौ त्रयो वा घटाः' इति । द्वितीयस्योदाहरणम्—'पञ्चविंशतिर्गुणाः' इत्यादि । तृतीयस्योदाहरणम्—'शतम्, शते, शतानि' इति ।

अत्र हि शते एकत्वं द्वित्वं त्रित्वं वाऽविद्यमानमन्यत्र स्थितमपि सामानाधिकरण्येन परिच्छेदकतया प्रतीयत इति ।

अयं भावः —या द्रव्ये परिच्छेद्ये भेदहेतुः=तत्परिच्छेदहेतुः संख्या, सा तत्रैव=द्रव्य एव समवेता, गुणत्वात् । यदा तु गुणकर्माभावादीनां परिच्छेदिका सा तेभ्यः=गुणादिभ्योऽन्यत्र द्रव्येऽपि स्थिता, तत्रैव तस्याः समवायात् । निर्गुणानामपि तेषाम्=गुणकर्मादीनाम् एकार्थसमवायात्=सामानाधिकरण्यात् स्वनिमित्तं व्यवहारं प्रवर्तयति । किञ्च, संख्या द्रव्येऽपि स्थिता आत्मनोऽपि भेदं व्यवहारयति=भेदव्यवहारं प्रवर्तयति । तद्यथा—'शतम्, शते, शतानि' इत्यादि ।

न हि शतसंख्यायामेकत्वद्वित्वबहुत्वानि समवेतानि परस्परं विरोधात्,

एवं द्रव्यगता सङ्ख्या रूपादिषु समारोप्यत इति चतुर्विंशतिर्गुणा इति व्यवहारः। तथैव पञ्च कर्मजातयः, द्वे सामान्ये इत्यादि।

तथा चत्वारोऽभावा इत्यादिरपि निरुपाख्यस्याभावस्य वस्तुधर्मायोगादौपाधिको भेदव्यवहारः।

एवञ्च गौणमुख्यभेदेन व्यवहारोपपत्तेस्तावन्मात्रस्य चेहोपयोगात् तीर्थिकपरिकल्पितप्रक्रियानादरेण भेदगणनमात्रलक्षणा सङ्ख्या सर्वत्राविशेषेण वर्ण्यते ॥ ३ ॥

द्रव्यसमवायेऽपि गुणादिषु संख्याया भेदव्यवहारनिमित्तत्वे दृष्टान्तमाह—

परत्वे चापरत्वे च भेदे तुल्या श्रुतिर्यथा।
सङ्ख्याशब्दाभिधेयत्वं भेदहेतोस्तथा गुणे ॥ ४ ॥

---

शतसंख्याया अद्रव्यत्वात्=अद्रव्यत्वेन संख्यानाश्रयत्वाद् निर्गुणत्वाच्च=निर्गुणत्वेनापि संख्यानाश्रयत्वाच्च।

एवं द्रव्यगता संख्या रूपादिषु गुणेषु सामानाधिकरण्यात् समारोप्यत इति चतुर्विंशतिर्गुणा इति व्यवहारः। अथैव पञ्च कर्माणि, द्वे सामान्ये इत्यादिव्यवहारः।

तथा चत्वारोऽभावाः—'प्रागभावः, प्रध्वंसाभावः, अत्यन्ताभावः, अन्योऽन्याभावः' इत्यादिरपि निरुपाख्यस्य=निःस्वभावस्याभावस्य वस्तुधर्मायोगात्=वस्तुधर्मेण चतुष्ट्वेन संख्यारूपेण सम्बन्धासम्भवात्, औपाधिकः=आश्रयरूपोपाधिगतसंख्याप्रयुक्तोऽभावेषु भेदव्यवहारः।

एवञ्च द्रव्येषु गुणेषु च यथायथं गौणमुख्यभेदेन संख्याव्यवहारोपपत्तेस्तावन्मात्रस्य=संख्याव्यवहारमात्रस्य च गौणस्य मुख्यस्य वा इह व्याकरणे उपयोगात् संख्याविषये नैयायिकादितीर्थिकपरिकल्पितप्रक्रियानादरेण भावभेदगणनमात्ररूपा संख्या सर्वत्र=द्रव्ये गुणादिष्वभावे चाविशेषेण वर्ण्यते व्याकरणशास्त्रेण इति ॥ ३ ॥

द्रव्यसमवेताऽपि संख्या गुणादिषु स्वानाश्रयेषु भेदव्यवहारनिमित्तमित्यत्र दृष्टान्तमाह—परत्वे चेति।

अस्यार्थः—यथा द्रव्ये गुणादिषु वा भेदे=भेदव्यवहारे कार्ये परत्वे चापरत्वे चार्थे तुल्या श्रुतिः=तुल्यः शब्दः, द्रव्यगतपरत्वापरत्वयोरिव गुणादिगतपरत्वापरत्वयोरपि तुल्य एव परशब्दोऽपरशब्दश्च। तथा गुणे भेदहेतोः संख्यारूपस्य पदार्थस्य संख्याशब्दाभिधेयत्वं तुल्यम्। यथा द्रव्यगतसंख्यायाः संख्याशब्दाभिधेयत्वम्, तथा गुणगतसंख्याया अपि संख्याशब्दाभिधेयत्वम्। द्रव्ये गुणे च संख्या एकैवेति यावत्। तत्र द्रव्ये संख्यायाः साक्षाद् भेदकत्वम्, गुणादिषु तु सामानाधिकरण्येनेति विशेष इति।

इह देशसम्बन्धात् परत्वापरत्वलक्षणौ गुणावपेक्षाबुद्धिप्रभावितौ द्रव्ये समवेतावुत्पद्येते। तथा च ताभ्यां द्रव्यं परमपरमिति व्यवह्रियते। तद्वदेव च गुणादयोऽपि परापरशब्दाभ्यामभिधीयन्ते।

ततश्च यथात्र गुणविषयभेदव्यवहारे तावेव द्रव्यगुणौ सव्यापाराविति परः, अपर इत्यभिन्नमभिधानम्, तथा भेदहेतोर्द्रव्यसमवेताया एव सङ्ख्याया गुणादिविषयेऽपि तथैवैकादिशब्देन व्यवहारः, न त्वपरा गुणादावेकत्वादिका संख्या विद्यत इत्यर्थः। देशेन सम्बन्धः साक्षाद् द्रव्यस्यैवेति तन्निमित्तयोः परत्वापरत्वयोर्द्रव्य एव समवायो निश्चित इति दृष्टान्ततोपपत्तिः ॥ ४ ॥

किं बहुना, स्वाश्रयधर्मेणाश्रितानां व्यवहारः सर्व एव दृष्ट इत्याह—

अस्वतन्त्रे स्वतन्त्रत्वं परधर्मो यथा गुणे।
अभेद्ये भेद्यभावोऽपि द्रव्यधर्मस्तथा गुणे ॥ ५ ॥

द्रव्याश्रयिणि नित्यपरतन्त्रे गुणे पटस्य रूपमिति द्रव्यधर्मस्वातन्त्र्यं यथा

---

अयं भावः—इह द्रव्ययोर्यथायथं देशद्वयसम्बन्धात् परत्वापरत्वरूपौ गुणौ द्रव्यदेशोभयविषयकापेक्षाबुद्धिविशेषप्रभावितौ=जनितौ द्रव्ये समवेतावुत्पद्येते। तथा च ताभ्याम्=परत्वापरत्वाभ्यां गुणाभ्यां तदाश्रयीभूतं द्रव्यं परमपरमिति व्यवह्रियते। तद्वदेव च गुणकर्मजात्यादयोऽपि परापरशब्दाभ्यामभिधीयन्ते।

ततश्च यथाऽत्र गुणविषयकभेदव्यवहारे तावेव द्रव्ययोर्गुणौ सव्यापारौ यौ द्रव्यस्य भेदव्यवहारे इति द्रव्ये गुणादौ च परोऽपर इत्यभिन्नमभिधानम्, तथा भावभेदहेतोर्द्रव्यसमवेताया एव संख्याया गुणादिविषयेऽपि तथैव=द्रव्यविषय इव एकादिशब्देन व्यवहारः। न त्वन्या गुणादावेकत्वादिका संख्या विद्यते। देशेन सह साक्षात् सम्बन्धो द्रव्यस्यैव, न तु गुणादेरिति द्रव्यसम्बन्धनिमित्तकयोः परत्वापरत्वयोर्द्रव्य एव समवायो निश्चितः, न तु गुणादाविति तयोर्गुणादिभेदकसंख्याविषये दृष्टान्ततोपपत्तिरिति ॥ ४ ॥

किं बहुना, न केवलमाश्रितानां गुणादीनां संख्याव्यवहार एव स्वाश्रयधर्मेण दृष्टः, अपि तु तेषां सर्वं एव व्यवहारः संख्यातिरिक्तविषयकोऽपि स्वाश्रयधर्मेणैव दृष्ट इत्याह—अस्वतन्त्रे इति।

अस्यार्थः—अस्वतन्त्रे=द्रव्याश्रिततया द्रव्यपरतन्त्रे गुणे यथा पटस्य रूपमित्यादौ परधर्मः=परस्य द्रव्यस्य धर्मः स्वातन्त्र्यं व्यपदिश्यते, तथाऽभेद्ये गुणतया संख्यानाश्रयत्वेन संख्यया व्यवच्छेत्तुमयोग्ये गुणे द्रव्यधर्मो भेद्यभावोऽपि संख्यया भेद्यत्वमपि व्यपदिश्यत इति।

अयं भावः—द्रव्याश्रिततया नित्यपरतन्त्रे गुणे द्रव्यस्य स्वाभाविको धर्मः स्वातन्त्र्यं 'पटस्य रूपम्' इत्येवं यथा व्यपदिश्यते, तथा गुणत्वेन संख्यानाश्रयतया

व्यपदिश्यते, तथा सङ्ख्यया व्यवच्छेत्तुमनर्हत्वेऽपि तदवच्छेद्यत्वं स्वातन्त्र्याविनाभावी द्रव्यधर्मो योक्ष्यते पटस्य रूपमेकं द्वे त्रीणीत्यादि।

अयमत्र भावः—इह यदा शुक्लः पट इत्यादिर्द्रव्योपसर्जनभावमापन्नो गुणोऽभिधीयते, तदासौ द्रव्यसामानाधिकरण्यात् तद्धर्मेण समन्वयं सहत एव। द्रव्यान्निष्कृष्य तु पटस्य शुक्ल इत्याद्यभिधाने स्वातन्त्र्यमात्मीयं द्रव्यरूपमसम्भवीति स्वाश्रयायातं तद् व्यवस्थापनीयम्। तदेव च शब्दशक्त्यानुवर्तते ॥५॥

तथा हि—

स्वबुद्धया तमपोद्धृत्य लोकोऽप्यागममाश्रितः।
स्वधर्मादन्यधर्मेण व्याचष्टे प्रतिपत्तये ॥ ६ ॥

न केवलं वैशेषिको गुणस्य द्रव्यधर्मेण वर्तयति, यावद् द्रव्यादन्यो द्रव्ये समवेतो गुण इत्येवंभूतम्। वैशेषिकागममनुवर्तमानो लोकोऽपि तस्माद् द्रव्यादपोद्धारबुद्धया तं गुणं भिन्नं स्वतन्त्रं निश्चित्य द्रव्यधर्मेण संख्यावत्त्वादिना गुण-

---

संख्यया व्यवच्छेत्तुमयोग्यत्वेऽपि संख्याऽवच्छेद्यत्वं स्वातन्त्र्याविनाभावी=स्वातन्त्र्यव्यापको द्रव्यधर्मी योक्ष्यते=युक्तो भविष्यति, 'पटस्य रूपम्' इति गुणस्य द्रव्यनिरूपितं स्वातन्त्र्यं दृष्टान्तः। 'एकं द्वे त्रीणि' इति संख्यायाः संख्याभेद्यत्वं दार्ष्टान्तिकम्।

अयं भावः—इह यदा 'शुक्लः पटः' इत्यादिर्गुणो द्रव्यविशेषणत्वमापन्नोऽभिधीयते, तदाऽसौ द्रव्यतादात्म्याद् द्रव्यधर्मेण सम्बन्धं सहत एव। 'पटस्य शुक्लः' इत्यादिरूपेण द्रव्यान्निष्कृष्याभिधाने तु द्रव्यस्वरूपं स्वातन्त्र्यमात्मीयमसम्भवीति स्वाश्रयागतं तद् व्यवस्थापनीयम्। तदेव च शब्दशक्त्या गुणेऽनुवर्तत इति ॥५॥

एतमेवार्थं विशदीकरोति—स्वबुद्धयेति।

अस्यार्थः—आगममाश्रितः=वैशेषिकादिशास्त्रमाश्रितो द्रव्यादतिरिक्तं निर्गुणं गुणादिकं मन्वानो लोकोऽपि स्वबुद्धया तं गुणादिकं द्रव्ये विशेषणीभूतं द्रव्यादपोद्धृत्य निष्कृष्य स्वधर्माद् निर्गुणत्वादितोऽन्यधर्मेण द्रव्यधर्मेण संख्यावत्त्वादिना तद्भेदप्रतिपत्तये व्याचष्टे=विशेषरूपेणाख्यातीति।

अयं भावः—न केवलं वैशेषिक एव द्रव्यधर्मे संख्यावत्त्वादिना गुणस्य व्यवहारं प्रवर्तयति, अपि तु लोकोऽपि—'द्रव्यादन्यो द्रव्ये समवेतो गुणः' इत्येवंभूतं वैशेषिकागमम्=वैशेषिकसम्प्रदायमनुवर्तमानः, तस्माद् द्रव्यादपोद्धारबुद्धया तं गुणं द्रव्याद् भिन्नं स्वतन्त्रं निश्चित्य गुणधर्मान्निर्गुणत्वाद् विलक्षणेन द्रव्यधर्मेण संख्यावत्त्वादिना परं प्रति प्रतिपादयति शब्दशक्तिमनुसृत्य।

तद्यथा—'पटस्येदमेकं चित्रं रूपम्' इति। अत्र गुणात्मकं चित्रं रूपमेकत्वसंख्यारूपगुणवत्तया परं प्रति प्रतिपाद्यते। तदभावपक्षे तु=चित्ररूपस्य चित्रगन्धादि-

धर्मविलक्षणेन परं प्रतिपादयति शब्दशक्तिमनुसृत्य। तद्यथा—पदस्येदमेकं चित्रं रूपम् ।। ६ ।।

तदभावपक्षे तु प्रत्यवयवमनेकं भिन्नरूपमेव रूपमित्यवयविनि बहूनि रूपाणि। यदि वा संसर्गिधर्माच्छुरितस्य वस्तुनोऽभिधाने। द्रव्यगुणादयस्तत्र समाना इत्याह—

परोपकारतत्त्वानां स्वातन्त्र्येणाभिधायकः।
शब्दः सर्वपदार्थानां स्वधर्माद् विप्रकृष्यते ।। ७।।

परेणान्येन धर्मेणोपक्रियमाणमवच्छिद्यमानं तत्त्वं रूपं येषां ते परोपहितोपकाराः पदार्थाः शब्देनाभिधीयन्त इति व्यवहारे सर्वार्थानां द्रव्यगुणादीनामनुपाधिस्वरूपं न शब्देन स्पृश्यते। न हि संसर्गिधर्मविविक्ता निजेन शुद्धेन वास्तवेन रूपेण व्यवहारमवतरन्त्यर्थाः।

तथा च द्रव्यवद् गुणोऽपि पटस्य रूपमिति स्वातन्त्र्येणाभिधीयमानः संसर्गिसंख्यादिकृतोपकार एवाभिधीयते।

---

वदभावपक्षे तु प्रत्यवयवमनेकं भिन्नरूपमेव रूपमित्यवयविनि बहूनि रूपाणि। अत्रापि गुणात्मकेष्ववयवगता बहुत्वसंख्या प्रतीयते, न त्वात्मगतेति ।। ६ ।।

यदि वा=अथवा संसर्गिधर्माच्छुरितस्य=वस्तुतोऽध्यारोपेण वा संसर्गी यो धर्मः, तदाच्छुरितस्य तदालिङ्गितस्य वस्तुनोऽभिधाने द्रव्यगुणादयस्तत्र समाना इत्याह—परोपकारतत्त्वानामिति।

अस्यार्थः—यदि परोपकारतत्त्वानाम्=परेण स्वस्मादन्येन धर्मेण कृत उपकारोऽवच्छेदस्तत्त्वं स्वरूपं येषां तेषाम्, सर्वपदार्थानां स्वातन्त्र्येणोपलक्षितानां निर्धर्मकाणामभिधायकः शब्दः स्यात्, तदा स स्वधर्माद् वाचकत्वाद् विप्रकृष्यते दूरीभवति। अर्थस्य वाचक एव न स्यादिति यावत्। यत् किञ्चिद्धर्मविशिष्ट एव शब्दस्य शक्तिग्रहात्। केवले द्रव्यस्वरूपे निर्धर्मके सङ्केतग्रहासम्भवादिति।

अयं भावः—परेण आश्रयीभूतात् स्वस्मादन्येन धर्मेणोपक्रियमाणमवच्छिद्यमानं व्यावर्त्यमानं तत्त्वं स्वरूपं येषां ते परोपहितोपकाराः सर्वे पदार्थाः शब्देनाभिधीयन्त इति व्यवहारे सर्वार्थानां द्रव्यगुणादीनामनुपाधि( निर्धर्मकम् )स्वरूपं न शब्देनाभिधाविषयतया स्पृश्यते। न हि स्वसंसर्गिधर्मैर्विविक्ताः=स्वसंसर्गिधर्मविरहिता निजेन शुद्धेन=अनुपहितेन, केवलेन वास्तवेन रूपेण व्यवहारमवतरन्त्यर्थाः।

तथा च द्रव्यवद् गुणोऽपि पटस्य रूपमित्यादिरीत्या स्वातन्त्र्येण=प्राधान्येनाभिधीयमानः स्वसंसर्गिसंख्यादिकृतोपकार एवाभिधीयते।

शब्दो हि न गुणानामेव, अपि तु द्रव्याणामप्यारोपाधिकेन रूपेणोपलक्षितानां स्वधर्माद् विप्रकृष्यते दूरीभवति। सामान्याद्यसंसृष्टे तस्य सम्बन्धव्युत्पत्तेः कर्तुमशक्यत्वादिति सर्वत्र शब्दः परोपदर्शितविषय एव ॥ ७ ॥

अर्थोऽपि परोपकाराहितविशेष एवेत्यत्र दृष्टान्तमाह—

यथैवाविषयं ज्ञानं न किञ्चिदवभासते।
तथा भावोऽप्यसंसृष्टो न कश्चिदुपलभ्यते ॥ ८ ॥

ज्ञानं बोधमात्रस्वभावं नियमेन व्यवहारयोग्यं विषयपारतन्त्र्यात् तत्कृतोपरागविवेकेन शक्यव्यवहारं यथा, एवं ज्ञेयमपि संसृष्टधर्मोपरागरहितं वस्तुमात्ररूपतयाऽपि ज्ञेयतामभिधेयतां च नासादयतीत्यत्र परोपकारतन्त्रमेवैतत् ॥ ८ ॥

यद्येवमिदं सामान्यं भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तम्, अयं विशेषो व्यावृत्तिप्रत्ययहेतुरित्येवं द्रव्यसंसर्गविविक्तः कथं व्यवहारः, सामान्यादिषु अपरोपाधेस्तस्याभावादित्याशङ्क्याह—

---

शब्दो हि न गुणानामेव, अपि तु द्रव्याणामपि अपरोपाधिकेन=परधर्मरहितेन रूपेणोपलक्षितानां वाचकत्वात् स्वधर्माद् विप्रकृष्यते दूरीभवति। गुणसामान्याद्यसंसृष्टेऽर्थे तस्य=शब्दस्य सम्बन्धव्युत्पत्तेः=शक्तिग्रहस्य कर्तुमशक्यत्वादिति कृत्वा शब्दः सर्वत्र=द्रव्याभिधाने गुणाद्यभिधाने च परोपदर्शितविषय एव=परधर्मेण व्यावृत्ततयोपदर्शितार्थविषयक एवेति ॥ ७ ॥

अर्थोऽपि परोपकाराहितविशेष एव=स्वपरधर्मकृतोपकाराहितातिशय एव व्यवहारे उपलभ्यत इत्यत्र दृष्टान्तमाह—**यथैवाविषयमिति**।

अस्यार्थः – यथैव किञ्चिदपि ज्ञानं स्मृतिरूपं वाऽनुभवरूपं वाऽविषयम्=विषयसंसर्गशून्यं नावभासते, तथा भावोऽपि अर्थोऽपि कश्चिदपि असंसृष्टः, स्वपरधर्मसंसर्गरहितः=शब्दान्नोपलभ्यते, शब्दगोचरो न भवति, धर्मसंसृष्ट एव सङ्गतिग्रहादिति।

अयं भावः—ज्ञानं बोधमात्रस्वभावं निर्विषयं नियमेन व्यवहारायोग्यम्, ज्ञानस्य विषयपारतन्त्र्यात् तत्कृतोपरागविवेकेन=विषयकृतसम्बन्धराहित्येनाशक्यव्यवहारं यथा, एवं ज्ञेयमपि संसृष्टधर्मोपरागरहितम्=विशेषणतया स्वसंसृष्टधर्मसम्बन्धशून्यं वस्तुमात्ररूपतया विज्ञेयतामभिधेयताञ्च नासादयतीत्यत्र परोपकारतन्त्रमेवैतत्=अर्थस्य विज्ञानमभिधानञ्चेति ॥ ८ ॥

यद्येवम् 'इदं सामान्यं यतो भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तम्', अयं विशेषो यतो व्यावृत्तिप्रत्ययहेतुरित्येवं द्रव्यसंसर्गविविक्तः=द्रव्ये यो व्यावर्तकधर्मस्य संसर्गस्तद्रहितः कथं व्यवहारः, सामान्यादिषु सामान्याद्यन्तरानङ्गीकारेण

भेदेन नु समाख्यानं यल्लोकोऽप्यनुवर्तते ।
आगमाच्छास्त्रसदृशो व्यवहारः स वर्ण्यते ।। ९ ।।

सामान्यविशेषाभ्यां द्रव्येष्वभिन्नभिन्नप्रत्ययाविति निष्कृष्टस्वभावानामुपाधीनां नित्यपरतन्त्राणामपि भेदेन स्वतन्त्रतया प्रतिपादनं शास्त्रे तावदपोद्धाराश्रयेण युक्तम् ।

लोकोऽपि शास्त्रवासनया तदनुगच्छतीति वैशेषिकागमानुसारेणायं व्यवहारो लौकिकैः प्रतन्यते ।। ९ ।।

तथा च प्रसिद्धेरत्रापि संसर्गिधर्मपरिकल्पना न्याय्येत्याह—

बुद्ध्या स्थितेषु तेष्वेवमध्यारोपो न दुर्लभः ।
परधर्मस्य न ह्यत्र सदसत्त्वं प्रयोजकम् ।। १० ।।

द्रव्यान्निष्कृष्यापोद्धारबुद्ध्यैवं भेदेन सामान्यादिषु समाख्याने परधर्मस्य

---

परोपाधेस्तस्य=परधर्मनिमित्तकस्य व्यवहारस्याभावादित्याशङ्क्याह—भेदेन तु समाख्यानमिति ।

अस्यार्थः —नित्यपरतन्त्राणामप्युपाधीनां पारतन्त्र्याद् भेदेन स्वतन्त्रतया यत् समाख्यानं प्रतिपादनम् इदं सामान्यं भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तम्, अयं विशेषो व्यावृत्तिप्रत्ययहेतुरिति । तद् आगमाद् वैशेषिकशास्त्रमनुसृत्य लोकोऽपि अनुवर्तते । स लोकव्यवहारे वैशेषिकशास्त्रसदृशो विशिष्टद्रव्यादपोद्धारमूलको वर्ण्यत इति ।

अयं भावः —अपोद्धारबुद्ध्या विशिष्टाद् द्रव्यान्निष्कृष्टस्वभावानामुपाधीनां गुणसामान्यादिधर्माणां नित्यं द्रव्यपरतन्त्राणामपि पारतन्त्र्याद् भेदेन स्वतन्त्रतया यत् प्रतिपादनम्—सामान्यविशेषाभ्यां द्रव्येष्वभिन्नभिन्नप्रत्ययाविति व्यवहाररूपं तत् शास्त्रे तावद् बुद्ध्याऽपोद्धाराश्रयेण युक्तम् ।

लोकोऽपि वैशेषिकशास्त्रवासनया तत्=प्रागुक्तं प्रतिपादनमनुगच्छतीति वैशेषिकागमानुसारेणायं व्यवहारो लौकिकैः प्रतन्यत इति ।। ९ ।।

तथा चैतस्य स्वातन्त्र्येण गुणादीनां व्यवहारस्य प्रसिद्धेरत्रापि द्रव्यसंसर्गिधर्मस्याध्यारोपरूपा परिकल्पना न्याय्येत्याह—बुद्ध्या स्थितेष्विति ।

अस्यार्थः =एवमपोद्धारबुद्ध्या स्वातन्त्र्येण स्थितेषु तेषु=सामान्यादिषु व्यवहारे परस्य द्रव्यधर्मस्याध्यारोपो न दुर्लभः । हि=यतः अत्र=अध्यारोपे परधर्मस्य सदसत्त्वं सत्त्वमसत्त्वं वा न प्रयोजकमिति ।

अयं भावः —विशिष्टाद् द्रव्यस्वरूपादपोद्धारबुद्ध्या निष्कृष्यैवं प्रागुक्तरीत्या पारतन्त्र्याद् भेदेन स्वतन्त्रया सामान्यादिषु समाख्याने परधर्मस्य=द्रव्यधर्मस्य स्वातन्त्र्यविषयकस्योपाधिमत्त्वस्य सामान्यादिष्वध्यारोपो न दुर्लभः, अपोद्धार-

स्वातन्त्र्यविषयस्योपाधिमत्त्वस्याध्यारोपो न दुर्लभः, बुद्धया सर्वनामप्रत्यवमर्शयोग्यतापादनादुपाधिमद्रूपतायामुपाधिसंसर्गस्य न्याय्यत्वात् ।

अध्यारोपे च वास्तवे सत्त्वासत्त्वे न प्रयोजके, येनोपाधिभूते वस्तु सति सामान्ये विशेषे च स्वातन्त्र्याभावात् कथमुपाधियोगोऽसन् कल्प्यत इति चोद्येत । अत्यन्ताविद्यमानेऽपि हि बहिरर्थे बुद्धया समावेशो दृश्यते समुद्रः कुण्डिकेति यथेति कथञ्चिद् बहिःसत्त्वे धर्ममात्रारोपो न विरुध्यते ।

अत एवासत्त्वमपि यावन्नाध्यारोपे उपयुज्यते, सतोऽप्यसत्त्वारोपादपुत्रोऽयमित्यतिशयख्यापनार्थमसत्त्वमप्यप्रयोजकमित्युक्तम् ।। १० ।।

यतश्च स्वातन्त्र्येणाध्यारोपस्तत्—

सामान्येष्वपि सामान्यं विशेषेषु विशिष्टता ।
सङ्ख्यासु सङ्ख्या लिङ्गेषु लिङ्गमेवं प्रकल्पते ।। ११ ।।

---

बुद्धया इदं तदिति सर्वनामप्रत्यवमर्शयोग्यतापादनात्, उपाधिमद्रूपतायाम् = उपाधिमद्रूपत्वेन प्रमायामुपाधिसंसर्गस्य न्याय्यत्वात् ।

अध्यारोपे च वास्तवे सत्त्वासत्त्वेन प्रयोजके, येनोपाधिभूते वस्तु सति = अनध्यारोपिते सामान्ये विशेषे च स्वातन्त्र्याभावात् कथमुपाधियोगोऽसन् कल्प्यत इति चोद्येत । अत्यन्तविद्यमानेऽपि हि बहिरर्थे बुद्धया समावेशः = बुद्धया परिकल्पिते समारोपो दृश्यते । समुद्रः कुण्डिकेति यथा ।

अत्र हि कुण्डिकायाः समुद्रत्वं बहिरत्यन्तासद् इति कथञ्चिद् बहिःसत्त्वे धर्ममात्रारोपो न विरुध्यते । अत एव = सतोऽपि असत्त्वारोपादिति वक्ष्यमाणबुद्धिस्थहेतोरेव आरोप्यस्य असत्त्वमपि तावन्नाध्यारोपे उपयुज्यते । सतोऽपि असत्त्वारोपात्, अपुत्रोऽयमिति ।

अत्र हि सतोऽपि पुत्रस्य असत्त्वप्रतिपादनं मूर्खत्वादिदोषप्रख्यापनाय । असत्त्वमपि अप्रयोजकमिति तु सत्त्वेऽप्रयोजकत्वातिशयप्रख्यापनार्थम् । तथा हि— असत्त्वमपि यदि अध्यारोपेऽप्रयोजकम्, तदा सत्त्वेऽप्रयोजकत्वातिशय इति ।। १० ।।

यतश्च सामान्यादीनां स्वातन्त्र्येण निर्देशे परधर्माध्यारोप इति स्थितिस्तत आह—सामान्येष्वपीति ।

अस्यार्थः—एवम् = प्रागुक्तमार्गेण, सामान्यादीनां स्वातन्त्र्येण निर्देशे सामान्येष्वपि सामान्यम्, विशेषेष्वपि विशिष्टता = विशेषः, संख्यास्वपि संख्या, लिङ्गेष्वपि लिङ्गमध्यारोपेण प्रकल्पते प्रसिध्यति । तत्र गोत्वं जातिः, घटत्वं जातिः, पटत्वं जातिरित्याद्यनुवृत्तप्रत्ययहेतुर्जातित्वरूपं सामान्यं घटत्वादिषु सामान्येषु । विशेषो विशेष इत्यभिन्नाभिधानप्रत्ययहेतुर्विशेषत्वरूपं सामान्यं विशेषेषु ।

गोत्वादिसामान्यभेदेषु बुद्धयावसितेष्वन्वयिरूपपरिकल्पनया सामान्यान्तरयोगो न विरुध्यते, द्रव्यायमाणानां बुद्धया निरूपणात् ।

एवं विशेषेषु तथैव बुद्धया द्रव्यायमाणेष्ववसितेषु विशेषो विशेष इत्यभिन्नाभिधानप्रत्ययहेतुः सामान्यम्, परस्परव्यावृत्तप्रत्ययहेतुश्च विशेषो युज्यते, द्रव्यवदुपाधिमत्त्वेनावसायात् शतादिसङ्ख्यायां च शतं शते शतानीत्यादिप्रातिपदिकेन द्रव्यायमाणायामभिधीयमानायामन्या सङ्ख्या द्रव्यधर्म एवारोप्यते । स्त्रीत्वादिषु च लिङ्गेषु तथैव द्रव्यायमाणेषु शब्देनाभिहितेषु द्रव्यधर्मलिङ्गान्तरयोगः पुमान् पौस्नं, पुंस्तेति, गार्ग्यायणी कारीषगन्ध्येति च स्त्रीत्वेऽपि स्त्रीत्वाश्रयो द्वितीयस्त्रीप्रत्ययः ।

तथा च भाष्यकारः—'भावोऽपि भावेन युज्यते, स्त्रीत्वं स्त्रीत्वेन' ( म० भा० ) इत्याह ॥ ११ ॥

---

किञ्च, तेष्वेव तद्विशेषत्वैतद्विशेषत्वादिरूपो विशेषः । संख्यासु शतसहस्रादिकासु एकद्वित्वबहुत्वादिसंख्यारूपा संख्या, लिङ्गेषु च पुंस्त्वस्त्रीत्वादिषु पुमान् पुंस्त्वं पुंस्ता, स्त्री स्त्रैणं स्त्रीता इति लिङ्गान्तरयोग इत्यादिकमूह्यमिति ।

अयं भावः—गोत्वादिसामान्यविशेषेषु बुद्धया द्रव्यात् पृथक्कृत्य स्वातन्त्र्येण गृहीतेषु जातित्वादिरूपान्वयिरूपपरिकल्पनया जातित्वादिरूपसामान्यान्तरयोगो न विरुध्यते, स्वभावतोऽसत्त्वभूतानामपि गोत्वादीनां द्रव्यायमाणानां बुद्धया निरूपणात् । एवं तथैव=गोत्वादिसामान्यवदेव विशेषेष्वपोद्धारबुद्धया द्रव्यायमाणेषु अवसितेषु=द्रव्यात् पृथक्कृत्य स्वातन्त्र्येण गृहीतेषु विशेषो विशेष इत्यभिन्नाभिधानप्रत्ययहेतुः सामान्यम् । परस्परव्यावृत्तप्रत्ययहेतुश्च तद्विशेषत्वादिरूपो विशेषो युज्यते । द्रव्यवदुपाधिमत्त्वेन=व्यावर्तकधर्मवत्त्वेन निश्चयात् । शतादिसंख्यायाश्च—'शतं शते शतानि' इत्यादौ प्रातिपदिकेन द्रव्यायमाणायामभिधीयमानायाम्=द्रव्यवदभिधीयमानायामन्यसंख्या एकत्वद्वित्वादिका द्रव्यधर्म एवारोप्यते। स्त्रीत्वादिषु च लिङ्गेषु तथैव शतादिसंख्यावदेव द्रव्यायमाणेषु प्रातिपदिकेनाभिहितेषु द्रव्यधर्मलिङ्गान्तरे योगः 'पुमान्, पौस्नम्=पुंसां समूहः पुंस्ता' इति । 'गार्ग्यायणी कारीषगन्ध्या' इति च प्रथमं स्त्रीत्वेऽपि स्त्रीत्वाश्रयः=अपरस्त्रीत्वनिमित्तको द्वितीयः स्त्रीप्रत्ययः ।

अत्र प्रथमोदाहरणे प्रथमः स्त्रीप्रत्ययः ष्फः, द्वितीयस्तु ङीष् । द्वितीयोदाहरणे तु प्रथमः स्त्रीप्रत्ययः ष्यङ्, द्वितीयस्तु चाप् ।

तथा च भाष्यकारः—"भावोऽपि भावेन युज्यते स्त्रीत्वं स्त्रीत्वेन" इति ।

अत्र भावोऽसाधारणो धर्मः, यथा गोत्वं गवामसाधारणो धर्मः स्वासाधारणधर्मेण गोत्वत्वेन युज्यते । गोत्वं नित्यमिति । स्त्रीशब्दार्थे च स्त्रीत्वं स्त्रीत्वेन

तदेवं प्रासङ्गिकमभिधाय प्रकृतं निगमयति—

**अतो द्रव्याश्रितां सङ्ख्यामाहुः संसर्गवादिनः।**

**भेदाभेदव्यतीतेषु भेदाभेदविधायिनीम् ॥ १२ ॥**

यतो द्रव्यगतयैव सङ्ख्ययोक्तेन न्यायेन गुणादीनामपि तन्निमित्तो व्यवहारः सिद्ध्यति, अतो धर्माणां संसर्गमेकत्र द्रव्ये येऽभ्युपयन्ति काणादास्ते द्रव्यसमवेतामेव सङ्ख्यां ब्रुवते, निरुपाधिषु भेदाभेदव्यतिक्रान्तेषु द्रव्येषु गुणादिषु च भेदाभेदप्रत्ययनिमित्तभूताम्। एकत्वसङ्ख्या अभेदप्रत्ययनिमित्तम्, द्वित्वादिका भेदप्रत्ययनिमित्तमित्यर्थः ॥ १२ ॥

यदि तर्हि स्वयं भेदाभेदव्यतीताः पदार्थाः, कथं तेभ्योऽन्या सङ्ख्या तांस्तथा व्यवहारयेदित्यत आह—

**आत्मान्तराणां येनात्मा तद्रूप इव लक्ष्यते।**

**अतद्रूपेण संसर्गात् सा निमित्तसरूपता ॥ १३ ॥**

---

युज्यत इति। प्रथमं स्त्रीत्वं स्त्री इत्यत्र प्रातिपदिकार्थः, द्वितीयन्तु ङीप्प्रत्ययार्थ इति ॥ ११ ॥

तदेवं सामान्यादीनामपि सामान्यादियोगं प्रासङ्गिकमभिधाय प्रकृतं निगमयति —अतो द्रव्याश्रितामिति।

अस्यार्थः—यतो द्रव्यगतयैव संख्यया गुणादीनामपि संख्यावत्त्वेन व्यवहारः, अतः संसर्गवादिनो ये गुणजात्यादिसमुदायो द्रव्यमिति न वदन्ति, किन्तु गुणजात्यादिधर्मसंसर्गो द्रव्य इति वदन्ति काणादास्ते भेदाभेदव्यतीतेषु भेदाभेदविरहितेषु गुणजात्यादिषु भेदाभेदविधायिनीम्=भेदाभेदप्रत्ययनिमित्तभूतां द्रव्याश्रितामेव संख्यामाहुः, न तु स्वाश्रितामिति।

अयं भावः—यतो द्रव्यगतयैव संख्यया प्रागुक्तेन न्यायेन गुणजात्यादीनामपि संख्यानिमित्तको व्यवहारः सिद्ध्यति, न तु स्वाश्रितया, अतो धर्माणामेकत्र द्रव्ये ये संसर्गं वदन्ति काणादास्ते द्रव्यसमवेतामेव संख्यां निरुपाधिषु=निर्धर्मकेषु अत एव भेदाभेदविरहितेषु द्रव्येषु गुणादिषु च भेदाभेदप्रत्ययनिमित्तभूतामाहुः। तत्रैकत्वसंख्याऽभेदप्रत्ययनिमित्तम्, द्वित्वादिका तु सा भेदप्रत्ययनिमित्तमिति ॥१२॥

ननु यदि पदार्थाः स्वयम्=स्वरूपतो भेदाभेदव्यतीताः, तर्हि कथं तेभ्योऽन्या संख्या तान् तथा=भेदाभेदवत्त्वेन व्यवहारयेदित्यत आह—आत्मान्तराणामिति

अस्यार्थः—गुणादित आत्मान्तराणामन्येषां द्रव्याणामात्मा स्वरूपमतद्रूपेणाद्रव्यरूपेण गुणादिना येन संसर्गात् समवायात् तद्रूप इव गुणादिरूप इव लक्ष्यते समवायेन भेदतिरोधानात्, सा निमित्तसरूपता=निमित्तसदृशस्वभावता, न तु निमित्तस्वभावत्वमेवेति।

इह परस्परविविक्ताः पदार्था द्रव्यादयो यथालक्षणं प्रमाणेन प्रतीताः। तत्र चान्येषामपि द्रव्याणामतद्रूपेण गुणादिना येन संसर्गात् समवायाख्यात् सम्बन्धात् तद्रूप इव गुणादिरूप इवात्मा लक्ष्यते समवायेन भेदतिरोधानात्, सा आभासमात्रे परं निमित्तस्य गुणादेः सरूपता। तस्येव रूपं स्वभावोऽस्येति तत्स्वभावता, न तु परमार्थतस्तत्स्वभावत्वमेव, यथायथं स्वप्रमाणतो भिन्नत्वावेदनादिति। परोपधानेन व्यवहारेऽपि न पदार्थाः सङ्कीर्यन्त इत्यर्थः ॥ १३ ॥

कथं न सङ्कीर्यन्ते, यावता तथैव सर्वदैवैषामाभास इत्याशङ्क्य कार्यभेदाद् भेदमाह—

संसृष्टेष्वपि निर्भागे भूतेष्वर्थक्रिया यथा।
सत्त्वादिषु च मात्रासु सर्वास्वेवं प्रतीयते ॥ १४ ॥

पृथिव्यादिषु भूतेष्वपृथग्भावेन संसर्गं प्राप्तेषु धृतिसङ्ग्रहपक्तिव्यूहावकाशदानलक्षणा अर्थक्रिया यथा प्रत्येकं भिन्नैव, सत्त्वरजस्तमोलक्षणेषु च सर्वभाव-

---

अयं भावः—इह परस्परं विभिन्ना द्रव्यादयः पदार्था यथालक्षणम्=यथास्वभावं प्रमाणेन प्रतीताः। तत्र च गुणादितोऽन्येषामपि द्रव्याणामतद्रूपेणाद्रव्यरूपेण गुणादिना येन संसर्गात् समवायाख्यात् सम्बन्धात् तद्रूप इव गुणादिरूप इवात्मा स्वरूपं लक्ष्यते, समवायेन द्वयोर्भेदतिरोधानात्। सा ताद्रूप्येण प्रतीतौ निमित्तस्य गुणादेः स्वाभासमात्रे परम्=केवलं सरूपता, तस्येव रूपं स्वभावोऽस्येति तत्स्वभावता, न तु वस्तुतस्तत्स्वभावत्वमेव, यथायथं स्वस्वप्रमाणतो द्वयोर्भिन्नत्वावेदनादिति। परोपधानेन=परधर्माध्यारोपेण ताद्रूप्येण व्यवहारेऽपि न पदार्थाः सङ्कीर्यन्त इति फलितार्थः ॥ १३ ॥

ननु कथं न सङ्कीर्यन्ते द्रव्यगुणादयः पदार्थाः, यतस्तथैव=सङ्कीर्णतयैव सर्वदैवैषामाभास इत्याशङ्क्यार्थक्रियारूपकार्यभेदात् तेषां परस्परं भेदमाह—**संसृष्टेष्वपीति।**

अस्यार्थः—यथा निर्भगं निरवयवमपृथग्भावेनेति यावत्। संसृष्टेष्वपि=संसर्गप्राप्तेष्वपि, भूतेषु आकाशादिषु पञ्चसु अर्थक्रियाधारणसङ्ग्रहपाचनविविधचेष्टाऽवकाशदानलक्षणा प्रत्येकं भिन्नैव, एवम्=तथा सत्त्वादिषु सत्त्वरजस्तमोलक्षणेषु च सर्वभावगतेष्वपि निर्भागं संसृष्टेष्वपि प्रकाशप्रवृत्तिनियमलक्षणार्थक्रिया भिन्ना, तथा सर्वासु द्रव्यगुणकर्मसामान्यविशेषलक्षणास्वपि मात्रासु मीयन्त इति व्युत्पत्त्या विषयेषु निर्भागं संसृष्टासु भिन्ना एवार्थक्रिया प्रतीयते, ततश्चार्थक्रियाभेदात् पदार्था न सङ्कीर्यन्त इति।

अयं भावः—पृथिव्यप्तेजोवाय्वाकाशेषु भूतेष्वपृथग्भावेन संसर्गं प्राप्तेषु धृतिसङ्ग्रहपक्तिव्यूहावकाशदानलक्षणा=धृतिः—धारणम्, सङ्ग्रहः—पांशुपिष्टादीनां पिण्डीकरणम्, पक्तिः=पाचनम्, व्यूहः=विविधा चेष्टा, अवकाशदानम्—सर्वेषां

गतेष्वपि निर्भक्तेषु प्रकाशप्रवृत्तिनियमलक्षणार्थक्रिया विलक्षणा, तथा द्रव्यगुणकर्मसामान्यविशेषलक्षणास्वपि मात्रास्वन्योन्यसाहचर्येणापि निर्भक्तासु वस्तुभागरूपास्ववस्थितासु भिन्ना एवार्थक्रियाः।

तथा हि—द्रव्यं गुणानामाश्रयभावेनार्थक्रियाकारि। गुणास्तु द्रव्ये स्वरूपसमर्पणेन यथायथमुपयोगिनः। एवं शेषेष्वपि यथायोगं वाच्यमिति निमित्तनिमित्तिनोरर्थक्रियाभेदाद् भेदसिद्धिः स्वरूपसम्भेदेऽपि। गतमेतत्॥ १४॥

इदानीं संख्या स्वरूपेण परीक्ष्यते। तत्र द्वित्वादिका संख्या किमेकत्वादन्या, नान्या वा अन्यत्वे द्वित्वादीनामेकत्वापेक्षोत्पत्तिर्न स्यात्। अनन्यत्वेऽपि तु भेदो निर्निबन्धन इत्यत आह—

द्वित्वादियोनिरेकत्वं भेदास्तत्पूर्वका यतः।
विना तेन न सङ्ख्यानामन्यासामस्ति सम्भवः॥ १५॥

---

भावानां स्वस्मिन् समावेशनम्। अर्थक्रिया यथा प्रत्येकं भिन्नैव, सत्त्वरजस्तमोलक्षणेषु च सर्वभावगतेष्वपि निर्भक्तेषु=निर्भागेषु गुणेषु प्रकाशप्रवृत्तिनियमलक्षणाऽर्थक्रिया विलक्षणा, तथा द्रव्यगुणकर्मसामान्यविशेषलक्षणास्वपि मात्रास्वन्योऽन्यसाहचर्येण स्थितावपि निर्भक्तासु=निर्भागासु वस्तुनो भागरूपास्ववस्थितासु भिन्ना एवार्थक्रियाः।

तथा हि—द्रव्यं गुणानामाश्रयरूपेण धारणरूपार्थक्रियाकारि। गुणास्तु द्रव्ये स्वरूपसमर्पणेन=स्वरूपतापादनेन यथायथमुपयोगिनः। कर्मणां तु तत्तत्फलजननरूपा अर्थक्रियाः। सामान्यस्य समानप्रतीतिगोचरत्वापादनरूपाऽर्थक्रिया। विशेषाणाञ्च तत्तदर्थानां परस्परं व्यावर्तनरूपाऽर्थक्रिया इत्येवं निमित्तनिमित्तिनोर्गुणगुणिनोः स्वरूपसम्भेदेऽपि अर्थक्रियाभेदाद् भेदसिद्धिरिति। गतमेतत्=गुणजात्यादिषु गुणजात्यादिभानप्रकारविचारो गत इति॥ १४॥

इदानीं संख्या स्वरूपेण परीक्ष्यते। तत्र द्वित्वादिका संख्या किमेकत्वादन्या, नान्या वा? अन्यत्वे द्वित्वादीनामेकत्वतद्बुद्ध्यपेक्षोत्पत्तिर्न स्यात्। अनन्यत्वेऽपि तु एकत्वद्वित्वादीनां परस्परं भेदो निर्निमित्त इत्यत आह—द्वित्वादियोनिरिति।

अस्यार्थः—एकत्वं द्वित्वादीनां संख्यानां योनिः कारणम्, यतो द्वित्वादिसमनियता भेदास्तत्पूर्वकाः=अभेदरूपैकत्वपूर्वकाः।

द्वितीयपादार्थे हेतुमाह उत्तरार्धेन—विना तेनेति।

तेन एकत्वेन विनाऽन्यासां संख्यानां द्वित्वादिकानां परार्धान्तानां सम्भवो नास्ति। एकत्वातिरिक्तानां सर्वासां संख्यानामेकत्वविषयकापेक्षा बुद्धिजन्यत्वादिति।

तेनैकत्वेन विनाऽन्यासां द्वित्वादीनां संख्यानां यतः सम्भव उत्पत्तिर्नास्ति, अतो द्वित्वादीनामेकत्वं योनिः कारणमिति तदपेक्ष्य द्वित्वाद्युत्पत्तिः, न तु तदभिन्ना द्वित्वादिकाः सङ्ख्याः।

कथं तेन विनाऽन्यासामसम्भव इत्यत्र युक्तिः—भेदास्तत्पूर्वका यत इति।

अभेदपूर्वका भेदा इति सहजमेकत्वं भावानामाद्यम्। द्वित्वादयस्तु तत्पूर्वकाः पदार्थान्तरसन्निधौ जायन्त इति दृष्टम् ॥ १५ ॥

तथा हि—

एकत्वे बुद्धिसहिते निमित्तं द्वित्वजन्मनि।
एकत्वाभ्यां समुत्पन्नमेवं वा तत् प्रतीयते ॥ १६ ॥

प्रथममिन्द्रियसंयुक्तयोर्द्वयोर्द्रव्ययोर्य एकत्वे समवेते तदाश्रितं यत् सामान्यं तत् संयुक्तसमवेतसमवायादिन्द्रियार्थसन्निकर्षात् प्रतीयते। अतस्तद्विशेषणावच्छिन्नयोरेकत्वगुणयोर्ज्ञानम्, तदपेक्षे त एकत्वे स्वाश्रयद्रव्यसमवेतं द्वित्वं जनयतः। द्रव्यद्वयं हि द्वित्वस्य समवायिकारणम्, एकत्वगुणावसमवायिकारणम्, कार्यैणैकार्थ-

---

अयं भावः—यतस्तेनैकत्वेन विना अन्यासां द्वित्वादिकानां संख्यानां सम्भव उत्पत्तिर्नास्ति, अतो द्वित्वादीनामेकत्वं योनिः कारणमिति तदपेक्ष्य = एकत्वमपेक्ष्य द्वित्वाद्युत्पत्तिः, न तु तदभिन्नाः = एकत्वाभिन्ना द्वित्वादिकाः संख्याः।

कथं तेन विनाऽन्यासां संख्यानामसम्भव इत्यत्र युक्तिः—भेदास्तत्पूर्वका यत इति।

अभेदपूर्वका भेदा इति भावानां सहजमाद्यञ्चैकत्वम्। द्वित्वादयस्तु पदार्थान्तरसन्निधौ तत्पूर्वकाः = एकत्वपूर्वका जायत इति दृष्टम् = अनुभवसिद्धम् ॥ १५ ॥

तथा हि—पूर्वकारिकोक्तमेवार्थं विशदीकरोति—एकत्वे बुद्धिसहिते इति।

अस्यार्थः—अयमेकः, अयमेक इति बुद्धिसहिते एकत्वे—तादृशबुद्धिसहितमेकत्वद्वयम्, द्वित्वजन्मनि निमित्तम् = कारणम्। तद्यथा द्रव्यद्वयं द्वित्वस्य समवायिकारणम्। एकत्वसंख्यारूपौ गुणौ असमवायिकारणम्। प्रागुक्ताऽपेक्षाबुद्धिर्निमित्तकारणम्। वा = अथवा एकत्वाभ्यां समुत्पन्नं तत् = द्वित्वम्, एवमपेक्षाबुद्धिपूर्वकं प्रतीयते। तथा चास्मिन् मतेऽपेक्षाबुद्धिरहिताभ्यामेकत्वाभ्यां द्वित्वं जायते, अपेक्षाबुद्धिसहिताभ्यां तु ताभ्यां तत् प्रतीयत इति फलितमिति।

अयं भावः—इन्द्रियसंयुक्तयोर्द्वयोर्द्रव्ययोर्य एकत्वे समवेते तदाश्रितं यत् सामान्यं तत् संयुक्तसमवेतसमवायरूपादिन्द्रियार्थसन्निकर्षात् प्रथमं प्रतीयते चक्षुषा त्वचा वा। अतस्तद्विशेषणावच्छिन्नयोः = एकत्वगतसामान्यरूपविशेषणावच्छिन्नयोः एकत्वगुणयोर्यज्ज्ञानं तदपेक्षे ते एकत्वे स्वाश्रयद्रव्यसमवेतं द्वित्वं कार्यैकार्थसम-

समवायलक्षणया लब्ध्या प्रत्यासत्त्या। अपेक्षाबुद्धिर्निमित्तकारणम्। न ह्यपश्यत एकत्वे द्वित्वबुद्धिरित्यन्वयव्यतिरेकाभ्यां बुद्धेः कारणत्वनिश्चयः।

समवायित्वं च द्रव्यस्यैव, प्रत्यासत्त्यभावाच्चासमवायित्वमपि नास्तीति निमित्तकारणं बुद्धिरवस्थाप्यते। समवाय्यसमवायिव्यतिरिक्तं हि कारणं सामान्यसमाख्यया निमित्तमित्युच्यते।

तदेवं कारणत्रितयाज्जाते द्वित्वे प्रथमं तत्सामान्यज्ञानम्, ततस्तद्गुणज्ञानम्, ततस्तद्विशिष्टं द्वे द्रव्ये इति ज्ञानमिति काणादनयः। 'नागृहीतविशेषणा हि विशेष्यबुद्धिः' इति तेषामाम्नायः।

अन्ये त्वेकत्वबुद्ध्योर्द्वित्वपरिच्छेद एवान्वयव्यतिरेकाभ्यां व्यापारावधारणादेकत्वे बुद्धिनिरपेक्ष एव द्वित्वं जनयतः। तथा च जातमेकत्वबुद्धिपूर्वकं गृह्यत इति मन्यन्ते।

प्रक्रियाभेदोऽत्र ग्रन्थगौरवभयान्न प्रदर्श्यंते, प्रथमकाण्ड एव तु कथितः॥१६॥

---

वायरूपया प्रत्यासत्त्या लब्ध्या जनयतः, अतस्तत्र तेऽसमवायिकारणे। द्रव्ये तु तत्र समवायिकारणे, अपेक्षाबुद्धिर्निमित्तकारणम्; न हि एकत्वेऽपश्यतो द्वित्वबुद्धिरुपजायत इत्यन्वयव्यतिरेकाभ्यामपेक्षाबुद्धेर्द्वित्वं प्रति निमित्तकारणत्वनिश्चयः।

समवायिकारणत्वं तु द्रव्यस्यैवेति अपेक्षाबुद्धेर्द्रव्यत्वाभावात् समवायिकारणत्वं प्रत्यासत्त्यभावाच्चासमवायिकारणत्वमपि नास्तीति निमित्तकारणं बुद्धिरवस्थाप्यते। समवाय्यसमवायिव्यतिरिक्तं हि कारणं कारणसामान्यसमाख्यया निमित्तमित्युच्यते।

तदेवं कारणत्रितयाज्जाते द्वित्वे प्रथमं तत्सामान्यज्ञानम् = एकत्वगतसामान्यज्ञानम्, ततस्तद्गुणज्ञानम् = एकत्वरूपयोर्गुणयोर्ज्ञानम्, ततस्तद्विशिष्टयोर्द्रव्ययोर्ज्ञानमपेक्षाबुद्धिरूपम्, अयमेकोऽयमेक इति, ततो द्वे द्रव्ये इति ज्ञानमिति काणादनयः। 'नागृहीतविशेषणा हि विशेष्यबुद्धिः' इति तेषामाम्नायः = आम्नायसमः सिद्धान्तः। अत एकत्वज्ञानाभावे तद्विशिष्टद्रव्यज्ञानरूपापेक्षा बुद्ध्यभावः, तदभावे निमित्तकारणाभावाद् द्वित्वोत्पत्त्यभावः, तदभावे विषयाभावाद् द्वे द्रव्ये इति प्रत्यक्षप्रमित्यभाव इति।

अन्ये त्वेकत्वबुद्ध्योरपेक्षाबुद्धिरूपयोर्द्वित्वपरिच्छेद एव = द्वित्वावधारण एव, न तु द्वित्वोत्पत्तौ, व्यापारावधारणादपेक्षाबुद्धिनिरपेक्ष एवैकत्वे द्वित्वं जनयतः, तथा = प्रागुक्तप्रकारेण जातं द्वित्वमेकत्वबुद्धिपूर्वकं गृह्यत इति मन्यन्ते।

द्वित्वोत्पत्तिविषये यद्यपि सन्ति बहवः प्रक्रियाभेदाः काणादानाम्, तथापि तेऽत्र ग्रन्थगौरवभयान्न प्रदर्श्यन्ते, अत्र यद् वक्तव्यं तत् प्रथमकाण्ड एव तु कथितम्। तथा चैतदभियुक्तानामप्रमादगीतं वचः—

द्वित्वे च पाककजोत्पत्तौ विभागे च विभागजे।
यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुः॥ इति॥१६॥

द्वित्वस्य रूपेऽपि मतभेद इत्याह—

**एकत्वसमुदायो वा सापेक्षे वा पृथक् पृथक् ।**
**एकत्वे द्वित्वमित्येवं तयोर्द्विवचनं भवेत् ॥ १७ ॥**

एकत्वाभ्यां नापूर्वं द्वित्वं जन्यते, अपि तु तयोः समुदायो वनयूथादिवदवयवाभिन्नो द्वित्वम् । तथा चावयवाश्रयस्तत्र भिन्नाकारावभासः, सङ्घाश्रयश्चैकाकारावभासः प्रत्यय उपपद्यते ।

वृक्षसमुदायश्च यथा वनमित्यनेन विलक्षणेन शब्देनोच्यते, तथैकत्वसमुदायोऽपि द्वित्वमिति । एवं समुदायप्राधान्यम् ।

यदा त्ववयवप्राधान्यविवक्षा तदा एकत्व एव परस्परापेक्षे द्वित्वमिति व्यवह्रियेते, नातोऽन्यः कश्चिद् गुण इत्येतद्दर्शनद्वयमव्यतिरेकपक्षे ।

अत्र च पक्षे तयोरेकत्वयोर्द्विवचनं भवेत्, अवयवप्राधान्यात् । एकवचनं त्वेकाकारावभासपूर्वकं द्वित्वमिति दृश्यत इति नैष पक्षो न्याय्य इत्यर्थः ।

तथा हि—'द्व्येकयोः' ( १।४।२२ ) इति द्विवचनं द्वित्वे विधीयमानं द्वित्वस्यैकत्वाभ्यामव्यतिरेकादेकत्वयोरेव तत् स्यात् । तथा च द्व्येकयोरित्येकत्वत्रयस्य द्वन्द्वविषयत्वाद् बहुवचनं स्यादिति भावः ।

---

द्वित्वस्य स्वरूपेऽपि मतभेद इत्याह—एकत्वसमुदायो वेति ।

अस्यार्थः—एकत्वसमुदायो वा द्वित्वम्, परस्परसापेक्षे पृथक् पृथगवस्थिते एकत्वे = एकत्वद्वयं वा द्वित्वमित्येवमेकत्वद्वयादनतिरिक्तस्य द्वित्वस्याभ्युपगमे तयोरेकत्वयोर्बोधनार्थं द्वित्वपदाद् द्विवचनं भवेत्, न तु द्वित्वमित्येकवचनमिति ।

अयं भावः—एकत्वाभ्यां नापूर्वं द्वित्वं जन्यते, अपि तु एकत्वयोः समुदायो वनयूथादिवदवयवाभिन्नो द्वित्वम् । तथा चावयवाश्रयस्तत्र भिन्नाकारावभासः, 'अयमेकोऽयमेकः' इति समुदायश्चैकाकारावभासः प्रत्यय उपपद्यते—'इमे द्वे' इति ।

वृक्षसमुदायश्च यथा 'वनम्' इत्यनेन वृक्षाद् विलक्षणेन वनशब्देनोच्यते, तथैकत्वसमुदायोऽपि द्वित्वमिति एकत्वाद् विलक्षणेन द्वित्वशब्देनोच्यते। एवं समुदायप्राधान्यम् ।

यदा त्ववयवप्राधान्यविवक्षा, तदैकत्व एव परस्परापेक्षे द्वित्वमिति व्यवह्रियेते, नातोऽन्यः = नैकत्वद्वयादन्यः कश्चिद् गुणो द्वित्वं नाम इत्येतद् दर्शनद्वयं द्वित्वस्यैकत्वद्वयादव्यतिरेकपक्षे ।

अत्र च पक्षे द्वित्वमित्यत्र तयोरेकत्वयोर्द्विवचनं भवेत्, अवयवप्राधान्यात् । द्वित्वमित्येकवचनं तु 'अयमेकोऽयमेकः' इत्येकत्वाकारावभासपूर्वकं दृश्यत इति नैष पक्षः = एकत्वद्वयादनतिरिक्तं द्वित्वमिति पक्षो न्याय्यः ।

तथा 'द्व्येकयोः' ( १।४।२२ ) इति द्विवचनं द्वित्वे विधीयमानं द्वित्वस्यैक-

तस्मादेकाकारावभासप्रत्ययविषयमेकत्वाभ्यां जनितमन्यदेव द्वित्वमित्येव न्याय्यम् ।

एवं त्रित्वादयोऽपि दशसङ्ख्यापर्यवसाना वेदितव्याः । विंशत्यादिसङ्ख्यायां तु विचारो भविष्यति ।। १७ ।।

नन्वेवं द्वित्वबहुत्वसंख्याभेदस्यैकत्वात् कथं द्वयोर्द्विवचनम्, बहुषु बहुवचनमिति व्यवहार इत्यत आह—

एकोऽपि गुणभेदेन सङ्ख्यो भेदं प्रकल्पयेत् ।
आश्रयाश्रयिभेदो हि तदाश्रयनिबन्धनः ।। १८ ।।

द्वित्वबहुत्वादिलक्षणः सङ्घः समुपजातो व्यतिरिक्तः कल्पितो वेति द्वैतम् । तत्रोत्पत्तिपक्षे जन्यपरवशत्वाज्जनका गुणाः । कल्पितपक्षे त्ववयवाः समुदायपारतन्त्र्याद् गुणाः । तेषां भेदेन द्वित्वबहुत्वादेर्भेदः स्वात्मना एकस्यापि ।

तथा च द्वयोर्बहुष्विति च व्यवहारोपपत्तिः । यस्मादाधाराधेययोर्यो भेदो भेदव्यवहारः, स तदाश्रयेण सम्बन्धेन हेतुना भवति ।

---

त्वाभ्यामव्यतिरेकादेकत्वयोरेव तत् स्यात् । तथा च 'द्व्येकयोः' इत्यत्रैकत्वत्रयस्य द्वन्द्ववाच्यत्वाद् द्व्येकेषामिति बहुवचनं स्यात् ।

तस्मादिमे द्वे इति एकाकारावभासप्रत्ययविषयीभूतम्, एकत्वाभ्यां जनितम्, एकत्वद्वयादन्यदेव द्वित्वमित्येव न्याय्यम् ।

एवं त्रित्वादयोऽपि दशसंख्यापर्यवसाना एकत्वत्रयादिभ्यः, एकत्वत्रयादिसमुदायेभ्यो वाऽन्या एव तज्जाता वेदितव्याः । विंशत्यादिसंख्यायां त्वग्रे विचारो भविष्यतीति ।। १७ ।।

नन्वेवम् = एकत्वाभ्यां जनितं ततोऽन्यद् द्वित्वमित्यादिस्वीकारे द्वित्वबहुत्वसंख्याभेदस्य = तद्विशेषस्यैकत्वात् कथं "द्वयोर्द्विवचनं बहुषु बहुवचनम्" (१।४।२१) इति व्यवहारः, सर्वेषु संख्याविशेषेषु एकवचनस्यैवोचितत्वादित्यत आह—एकोऽपि गुणभेदेनेति ।

अस्यार्थः—स्वरूपेणैकोऽपि द्वित्वबहुत्वादिलक्षणः संघ एकत्वतो जनितस्तद्व्यतिरिक्तः, कल्पितो वा एकत्वतोऽनतिरिक्तः, गुणभेदेन आद्यपक्षे स्वजनकैकत्वरूपजन्यपरवशगुणभेदेन, कल्पितपक्षे एकत्वरूपस्वावयवभेदेन स्वात्मनि स्वत एकस्मिन्नपि भेदं प्रकल्पयेत्, अतो द्वित्वबहुत्वादिषु द्विवचनबहुवचनोपपत्तिरिति । हि = यतः, आश्रयाश्रयिभेदः = आधाराधेयभेदव्यवहारः, जनकस्य कार्यार्थिमाश्रीयमाणत्वाज्जनकीभूतमेकत्वमप्याश्रयः, तदाश्रितश्च जन्यमिति जन्यजनकभेदव्यवहार इत्यर्थो वा, तदाश्रयनिबन्धनः = तौ आधाराधेयौ जन्यजनकौ वा आश्रयौ यस्य स सम्बन्धस्तदाश्रयस्तन्निबन्धनः, तदाश्रितसम्बन्धनिमित्तक इति ।

तथा चाश्रयाश्रयिणोर्धर्मधर्मिणोर्वस्तुत एकत्वेऽपि तयोः परस्परं भेदस्त-

तथा ह्याश्रितस्य भेदेन क्वचिदाश्रयस्य भेदो व्यवह्रियते ।

तद्यथा पाटवस्य भेदेनैकोऽप्यर्थात्मा 'परुद्भवानपटुरासीत्, पटुतरश्चैषमोऽन्य एवासि संवृतः' इति भिन्नो व्यवह्रियते । तथेहैकत्वानां जनकत्वेनाश्रीयमाणत्वादाश्रयाणां भेदे तदाश्रितं तज्जन्यं बहुत्वादिभेदेन व्यवह्रियत इत्यर्थः ।

'द्व्येकयोः……' (१।४।२२) इत्यत्र तु द्वित्वं स्वगतेनैवाभेदेन निर्दिश्यते ।। १८ ।।

---

दाश्रितसम्बन्धनिमित्तकः, एवमाश्रयभेदेन क्वचिदाश्रितस्य भेदः, तद्यथा—'शुक्लात् पटात् प्रसादः शुक्लतरः' इति, 'महतः पटात् प्रसादो महत्तरः' इति ।

अत्र शुक्लत्वरूपस्य कस्यचिन्मते एकत्वेऽपि आश्रयभेदाद् भेदः, मध्यमपरिमाणरूपस्य महत्त्वस्यैक्येऽपि आश्रयभेदेन भेदः ।

यद्वा 'देवदत्ताद् यज्ञदत्तो नृतरः, पुरुषतरो वा' इति नृत्वस्य पुंस्त्वस्य वा ऐक्येऽपि आश्रयभेदाद् भेदः ।

क्वचित्तु आश्रितभेदादाश्रयभेदः । तद्यथा—'परुद्भवान् पटुः, ऐषमस्तु पटतरोऽन्य एवासि संवृतः' इति । अत्राश्रितस्य पटवस्य भेदाद् व्यक्तेर्भेदः ।

तथा चेहैकत्वानां जनकत्वे नाश्रयाणां भेदेन तदाश्रितानां तज्जन्यानां द्वित्वबहुत्वानां स्वरूपत एकत्वेऽपि भेदव्यवहार इति द्वित्वबहुत्वयोर्द्विवचनबहुवचनोपपत्तिरिति।

अयं भावः—द्वित्वबहुत्वादिलक्षण एकत्वसंघ एकत्वतः समुपजात एकत्वव्यतिरिक्तः, कल्पितो वेति द्वैतम्=संशयः। तत्र द्वित्वबहुत्वादीनामुत्पत्तिपक्षे तज्जनकानि एकत्वानि गुणाः, जन्यपरवशत्वात् । द्वित्वबहुत्वादीनाम् एकत्वसमुदायरूपतया कल्पितत्वपक्षे त्वेकत्वरूपा अवयवा गुणाः, समुदायपरतन्त्रत्वात् । तेषामेकत्वरूपाणां गुणानां भेदेन स्वात्मना एकस्यापि द्वित्वबहुत्वादेर्भेदः ।

तथा च द्वयोर्बहुष्विति च द्विवचनबहुवचनप्रयोगरूपव्यवहारोपपत्तिः । यस्मादाधाराधेययोर्भेदव्यवहारः, स तदाश्रयेण=आधाराधेयाश्रितेन सम्बन्धेन=संयोगसमवायादिना हेतुना भवति ।

तथा हि=तद्वदेव हि आश्रितस्य भेदेन क्वचिदाश्रयस्य भेदो व्यवह्रियते ।

तद्यथा—पाटवस्य भेदेनैकोऽप्यर्थात्मा—परुद्भवान् अपटुरासीत्, ऐषमश्च पटुतर अन्य एवासि संवृत इति भिन्नो व्यवह्रियते ।

तथेह द्वित्वबहुत्वादिषु एकत्वानां जनकत्वेनाश्रीयमाणत्वादाश्रयाणाम्=जनकानामेकत्वानां भेदे तदाश्रितम्=तज्जन्यं द्वित्वबहुत्वादिभेदेन व्यवह्रियते ।

'द्व्येकयोः' (१।४।२२) इत्यत्र द्वित्वं स्वगतेनाभेदेनैव निर्दिश्यते, न तु स्वजनकैकत्वगतेन भेदेन इति 'द्व्येकयोः' इत्यत्र द्विवचनोपपत्तिः, अन्यथा बहुवचनं स्यादिति ।। १८ ।।

तदेवं दशसङ्ख्यापर्यवसाना सङ्ख्या विचारिता। इदानीं विंशत्यादिः सङ्ख्याभेदो विचार्यते।

तत्र चोत्पत्तिरेकत्वैरेवापेक्षाबुद्धिसहितैरिति समानं पूर्वेण। किन्तु तदभिधायी शब्दः सङ्ख्यासङ्ख्येयोभयवचनो दृश्यते, गवां विंशतिः, विंशतिर्गाव इत्यादिः।

तत्र यदि प्रकृतमर्थनिर्देशमनपेक्ष्य द्वौ दशतौ विंशतिरिति स्वार्थे निपातनं वर्ण्यते, तदा विंशतिगवं त्रिंशत्पूलीति समासो न स्यात्। द्वौ हि दशद्वर्गौ विंशतिः, त्रयो दशद्वर्गास्त्रिंशदिति सङ्ख्येयेन सामानाधिकरण्याभावः। एकवचनं च न स्यात्, विंशतिस्त्रिंशदिति यथायथं वर्गभेदनिबन्धनस्य वचनभेदस्य प्रसङ्गात्। तदुक्तं वार्त्तिके—

'विंशत्यादयो दशदर्थे चेत् समासवचनानुपपत्तिः' (वा० ५।१।५९) इति।

दशद्वर्गद्वयाभिधायिनो द्विशब्दात् स्वार्थे शतिच्प्रत्ययो द्विशब्दस्य च विन्भाव इतीष्टः समासो वचनं च न स्यात्। गवां विंशतिर्गोविंशतिरिति

---

एवं द्रव्येषु भेदाभेदविधायिनी एकत्वादिका दशसंख्यान्ता संख्या विचारिता। इदानीं विंशत्यादिः संख्याभेदो विचार्यते।

तत्र च = विंशत्यादिसंख्यासु चोत्पत्तिरपेक्षाबुद्धिसहितैरेकत्वैरेवेति समानं पूर्वेण = दशसंख्यान्तसंख्याविचारेण। किन्तु संख्याभिधायी शब्दः संख्यासंख्येयोभयवचनो दृश्यते। अत्र संख्यावाची गवां विंशतिः, संख्येयवाची विंशतिर्गाव इत्यादिः।

तत्र यदि प्रकृतम् = संख्यासंख्येयोभयविषयम् अर्थनिर्देशमनपेक्ष्य "पङ्क्तिविंशति०" (पा० ५।१।५९) इत्यादिसूत्रेण द्वौ दशतौ विंशतिरिति स्वार्थे = विंशतिपदार्थे विंशतिशब्दस्य निपातनं वर्ण्यते, तदा विंशतिगवं त्रिंशत्पूली इति समासो न स्यात्। द्वौ हि दशद्वर्गौ विंशतिः, त्रयो दशद्वर्गास्त्रिंशदिति संख्येयेन गोपदार्थेन च सह सामानाधिकरण्याभावे समाहारे समासाभावः स्यात्, विंशतित्रिंशच्छब्दाभ्यामेकवचनञ्च न स्यात्, किन्तु विंशतिशब्दाद् द्विवचनम्, त्रिंशच्छब्दाच्च बहुवचनं नियमेन स्यात्, यथायथं वर्गभेदनिबन्धस्य वचनभेदस्य प्रसङ्गात्।

न चैवं दृश्यते, एकवचनमेव तूभयत्रापि नियमेन दृश्यते। तदुक्तं वार्त्तिके— "विंशत्यादयो दशदर्थे चेत् समासवचनानुपपत्तिः" इति।

अस्यार्थः—विंशत्यादयः शब्दा दशद्वर्गद्वयादिरूपेऽर्थे चेत् = विंशतिगवम्, त्रिंशत्पूली इत्यत्र संख्येयेन सामानाधिकरण्याभावात् समासानुपपत्तिः, विंशतिस्त्रिंशदित्यत्र चैकवचनस्यानुपपत्तिरिति।

अयं तु निष्कर्षः—दशद्वर्गद्वयाभिधायिनो द्विशब्दात् स्वार्थे शतिच्प्रत्ययः,

समासो भवत्येव। 'क्रोशशतयोजनशतयोः' इत्यादिज्ञापकाच्चात्र गुणेन नेति निषेधो न भवति।

यदि वा गुणात्मन्यवस्थितत्वाद् विंशत्यादीनां 'तत्स्थैश्च गुणैः' (पा० ३।३।८) इति प्रतिप्रसवः समासस्य 'गुणेन न' (पा० २।२।११) इति निषिद्धस्य।

अथ सङ्घ इत्यनुवृत्तेः परिमाणोपाधिकात् परिमाणिनि सङ्घे प्रत्ययो द्वौ दशतौ परिमाणमस्य सङ्घस्य विंशतिः सङ्घ इति, तदा सङ्घस्यैकत्वादेकवचनं सिद्धयति, समासानुपपत्तिस्तु तदवस्था। विंशतिर्गोसङ्घ इति चानिष्टं स्यात्। विंशको गोसङ्घ इति ह्रीष्यते।

तथा च वार्त्तिकम्—'परिमाणिनि चेत् पुनः स्वार्थे प्रत्ययविधानम्' (५।१।५९) इति।

द्वौ दशतौ परिमाणं यस्य स गोसङ्घो विंशतिरित्यभिधीयते। तत्र विंशतिः परिमाणं यस्य सङ्घस्येति सङ्घान्तरस्य परिमाणिनोऽसम्भवाद् विंशकः सङ्घ इति

---

द्विशब्दस्य च विन्भाव इत्येवं विंशतिशब्दस्य निपातने इष्टः समासो विंशतिगवमिति संख्येयेन सामानाधिकरण्याभावाद् न स्यात्, किञ्च विंशतिरिति एकवचनञ्च न स्यात्। गवां विंशतिर्गोविंशतिरिति तु इष्टः समासस्तदाऽपि भवत्येव। संख्याया गुणत्वात् 'गुणेन न' इति षष्ठीसमासप्रतिषेधस्तु न भवति, क्रोशशतयोजनशतयोरिति ज्ञापकाद् वार्तिके गुणपदस्य संख्यातिरिक्तगुणपरत्वात्।

यदि वा विंशत्यादीनां शब्दानां संख्येयपरत्वदशायां गुणात्मनि=गुणतादात्म्यापन्ने द्रव्ये विंशतिर्गाव इत्यादिप्रयोगदर्शनेन वाच्यतासम्बन्धेनावस्थितत्वात् "गुणेन न" इति वार्त्तिकेन निषिद्धस्य समासस्य "तत्स्थैश्च गुणैः षष्ठी समस्यते" इति वार्त्तिकेन प्रतिप्रसवः। निषिद्धस्याभ्यनुज्ञानं प्रतिप्रसवपदार्थः।

अथ "पङ्क्तिविंशतित्रिंशत्" (५।१।५९) इत्यादिसूत्रे संघ इत्यनुवृत्तेरवाच्यत्वे सति प्रतीयमानं यत् परिमाणं तदुपाधिकाद् वृत्तौ दशवर्गद्वयाभिधायिनो द्विशब्दात् परिमाणिनि=परिच्छेद्ये संघे शतिच्प्रत्ययो द्विशब्दस्य च 'विन्' आदेशो निपात्यते, द्वौ दशतौ परिमाणमस्य संघस्य विंशतिः संघ इति, तदा संघस्यैकत्वाद् विंशतिशत्यादिशब्दादेकवचनं सिद्धयति—विंशतिगवमिति। एवं त्रिंशत्पूलीति समासानुपपत्तिस्तु तदवस्था, संघसंघिनोः सामानाधिकरण्याभावात्। विंशतिर्गोसंघ इति चानिष्टं स्यात्।

विंशतिशब्दाद् दशद्वर्गद्वयाभिधायिनः परिमाणोपाधिकात् संघे परिमाणिनि ड्वुन्प्रत्यये विंशको गोसंघ इति ह्रीष्यते।

तथा च वार्त्तिकम्—"परिमाणिनि चेत् पुनः स्वार्थे प्रत्ययविधानम्" इति।

अस्यार्थः—द्वौ दशतौ परिमाणं यस्य स गोसंघो विंशतिरित्यभिधीयते,

सिद्धये 'विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम्' ( पा० ५।१।२४ ) इति ड्वुन्प्रत्ययः स्वार्थे वक्तव्य इत्यर्थः।

तथा 'षष्ठीवचनविधिश्च' ( वा० ५।१।५९ ) इत्युक्तम्।

इह सङ्घे परिमाणिनि विंशत्यादीनां केवलानां प्रयोगो नेष्यते, भिन्नेषु तु द्रव्येषु परिमाणिषु प्रत्ययोत्पत्तावाश्रीयमाणायां विंशतिशब्देन द्रव्याणामभिधानाद् व्यतिरेकाभावाद् गवां विंशतिरिति षष्ठी न प्राप्नोति। द्रव्यसामानाधिकरण्याद् बहुवचनप्रसङ्गश्च।

तदेवं व्युत्पत्तिपक्षे दूषणान्यभिधायाव्युत्पत्तिपक्षं निर्दोषमाश्रित्यारम्भः प्रत्याख्यातव्यः—'अनारम्भो वा प्रातिपदिकविज्ञानाद् यथा सहस्रादिषु' ( वा० ५।१।५० ) इति। वाशब्दस्तर्ह्यर्थे। सहस्रादिवदव्युत्पन्ना एव विंशत्यादयः 'अर्थवदधातुः' ( १।२।४५ ) इति प्रतिलब्धप्रातिपदिकसंज्ञा अर्थवत्सूत्रेणानुज्ञातसाधिमानः सङ्ख्यायां सङ्ख्येये च प्रयोगभेदेनाक्षादिवदनेकार्थतया स्वभावतो वर्तमानो रूढशब्दत्वाच्च नियतलिङ्गसङ्ख्याः, यथा आपो दारा इत्यर्थः।

---

"पङ्क्तिविंशति०" (५।१।५९) इत्यादिसूत्रे भवन्मते संघ इत्यनुवृत्तेः। तत्र विंशतिः परिमाणं यस्य संघस्येति विंशकः संघ इति सिद्धये 'विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम्' ( ५।१।२४ ) इति ड्वुन्प्रत्ययः स्वार्थे वक्तव्यः, संघान्तरस्य परिमाणिनोऽसम्भवादिति।

तथा --'षष्ठीवचनविधिश्च' इत्युक्तम्।

अस्यार्थः —इह = संघे विंशत्यादीनां निपातनपक्षे संघे परिमाणिनि विंशत्यादीनां केवलानाम् = ड्वुन्प्रत्ययरहितानां प्रयोगो नेष्यते, भिन्नेषु = विविक्तेषु तु द्रव्येषु परिमाणिषु प्रत्ययोत्पत्तौ = विंशतिशब्दे प्रत्ययनिपातने आश्रीयमाणायां गवां विंशतिरिति षष्ठी न प्राप्नोति। द्रव्यसामानाधिकरण्यादिति तत्र षष्ठी विधेयाऽत्र पक्षे।

किञ्चात्र पक्षे विंशतिरित्यत्र बहुवचनप्रसङ्गश्च, द्रव्याणां बहुत्वस्य सत्त्वादिति।

तदेवं विंशत्यादिषु व्युत्पत्तिपक्षे दूषणान्यभिधायाव्युत्पत्तिपक्षं निर्दोषमाश्रित्य "पङ्क्तिविंशति०" ( ५।१।५९ ) इत्यादिसूत्रारम्भः प्रत्याख्यातव्य — "अनारम्भो वा प्रातिपदिकविज्ञानाद् यथा सहस्रादिषु" इति।

अस्यार्थः --वा = तर्हि, प्रातिपदिकविज्ञानात् = अव्युत्पन्नप्रातिपदिकविज्ञानात् सहस्रादिषु यथा सूत्रानारम्भः, तथा --"पङ्क्तिविंशति०" (पा० ५।१।५९) आदिषु सूत्रानारम्भ इति।

सहस्रादिवदव्युत्पन्ना एव विंशत्यादयः "अर्थवदधातु०" ( १।२।४५ ) इति प्रतिलब्धप्रातिपदिकसंज्ञा 'अर्थवत्' ( १।२।४५ ) सूत्रेणानुज्ञातसाधिमानः संख्यायां

एवं वार्त्तिककारेणावस्थापिते भाष्यकारो व्युत्पत्तिपक्षं समर्थयते—सङ्घे परिमाणिनि प्रत्ययो निपात्यते। सङ्घश्च समुदायोऽत्र सामान्येन गृह्यते, न तु प्राणिसमूह एव। तेन वृक्षाणां विंशतिरित्यपि भवति। तत्र स्वार्थे प्रत्ययविधानस्य परिहारभाष्यम्—'संहनने वृत्तः संहनने वर्तिष्यते' (पा० ५।१।५९) इति।

एतद् व्याचष्टे—

सङ्ख्येयसङ्घः सङ्ख्यानसङ्घः सङ्ख्येति कथ्यते।
विंशत्यादिषु सान्यस्य द्रव्यसङ्घस्य भेदिका ॥ १९ ॥

अयमर्थः—गवादीनां संख्येयानामेकः सङ्घो द्रव्यसङ्घ इत्युच्यते। तयोर्द्वयो-

---

संख्येये च प्रयोगभेदेनाक्षादिवदनेकार्थतया स्वभावतो वर्तमानारूढशब्दत्वाच्च नियतलिङ्गसंख्याः, यथा 'आपो दाराः' इति।

एवं वार्त्तिककारेणाव्युत्पत्तिपक्षेऽवस्थापिते भाष्यकारो व्युत्पत्तिपक्षं समर्थयते—'संघे परिमाणिनि प्रत्ययो निपात्यते' इति।

अस्यार्थः—संख्येयसंघे संख्यानसंघे च परिमाणिनि द्विशब्दस्य विन्भावः शतिच्प्रत्ययश्च निपात्यत इति। संघश्च समुदायोऽत्र सामान्येन गृह्यते न तु प्राणिसमूह एव। तेन वृक्षाणां विंशतिरित्यपि भवति। एतच्च वृक्षाणामप्राणित्वमभ्युपेत्य, तत्र विंशको गोसंघ इत्यत्र स्वार्थे ड्वुन्प्रत्ययविधानस्यापाद्यमानस्य परिहारभाष्यम्—'संहनने वृत्तः संहनने वर्तिष्यते' इति।

अस्यार्थः—संख्यासंघे दशद्द्वयसंघे वृत्तौ=निष्पन्नो विंशतिशब्दो द्वौ दशद्वर्गौ विंशतिरिति। ड्वुनि कृते संख्येयसंघे वर्तिष्यते। विंशको गोसंघ इति। ततश्च न स्वार्थे ड्वुन् वक्तव्य इति।

एतद् वार्त्तिकं व्याचष्टे—सङ्ख्येयसङ्घः सङ्ख्यानसङ्घ इति।

अस्यार्थः—संख्येयसंघः संख्यानसंघश्चेतीमौ द्वौ विंशत्यादिषु संख्या इति कथ्येते। तत्राद्यः संख्यायत इति कर्मव्युत्पत्त्या। द्वितीयस्तु संख्यायते यया इति करणव्युत्पत्त्या इति। तत्र सा संख्यानसंघरूपा संख्या, अन्यस्य=स्वातिरिक्तस्य, द्रव्यसंघस्य=संख्येयसंघस्य, भेदिका=परिच्छेदिका इति। तत्राद्यसंख्योदाहरणम्—'विंशतिर्गावः' इति। द्वितीयसंख्योदाहरणम्—'गवां विंशतिः' इति। संख्यानसंघवाचकाद् संख्याशब्दात् संख्येयसंघे ड्वुनि तु विंशको गोसंघ इति।

यद्वा संख्येयसंघसंख्यानसंघ इत्येकमेव पदम्। तदर्थस्तु संख्येयसंघयोर्द्वयोर्दशतोः संख्यानरूपयोर्यः संघः स विंशत्यादिषु संख्येति कथ्यते। सा संख्या स्वान्यस्य स्वस्वरूपान्तर्गतदशद्वर्गद्वयात्मकद्रव्यसंघद्वयातिरिक्तस्य द्रव्यसंघस्य भेदिका परिच्छेदिका स्वाभिन्नपरिमाणविशेषणतया विशेषणमिति विंशको गोसंघ इति व्यवहारः सिद्ध्यतीति।

अयं भावः—गवादीनां संख्येयानामेकः संघो द्रव्यसंघ इत्युच्यते। तयोर्द्वयो-

द्रव्यसङ्घयोर्दशतोः सङ्घेऽयं विंशतिशब्दो निपात्यते स च संख्यानसङ्घ इत्युच्यते दशद्वर्गयोः सङ्ख्यानयोः समुदायः। स च विंशतिशब्दवाच्य इति। सा विंशतिशब्दवाच्या संख्या अन्यस्य गवादिद्रव्यसङ्घस्य भेदिका परिमाणोपाधिर्विशेषणमिति।

तस्मात् संख्यानसङ्घवचनाद् विंशतिशब्दाद् गवादिसङ्घे परिमाणिनि ड्वुन्प्रत्ययो भवति। विंशको गोसङ्घ इत्यादि। तथा च दशतोः संहनने सङ्घे वृत्तो विंशतिशब्दो गवादिद्रव्यसङ्घे परिमाणिनि वर्तिष्यते परार्थाभिधानं वृत्तिरिति प्रत्ययमुत्पादयिष्यतीति भाष्यार्थः।

द्रव्याणां द्रव्यसङ्घस्य दशतां दशत्सङ्घस्य च पारमार्थिको भेदो नास्ति, केवलं बुद्धयासौ परिकल्प्यते। बुद्धिव्यवस्थापितार्थनिबन्धनाश्च शब्दा बुद्धिमेवार्थाकारामुपजनयन्तोऽसत्यपि वास्तवे भेदे भेदमवगमयन्ति। निपातनसामर्थ्याच्च विशिष्टे दाशते सङ्घे वर्तन्तेऽमी शब्दाः। तथा चोक्तं गुरुभिः —

---

द्रव्यसंघयोर्दशद्वर्गरूपयोः संघे परिमाणरूपेऽयं विंशतिशब्दः "पङ्क्तिविंशति०" (५।१।५९) इत्यादिसूत्रेण निपात्यते। स च दशद्वर्गयोः संख्यानयोः समुदायः संख्यानसंघ इत्युच्यते, स च विंशतिशब्दवाच्यः संख्यारूप इति संघैकत्वाद् विंशतिशब्दादेकवचनोपपत्तिः।

सा विंशतिशब्दवाच्या संख्या अन्यस्य स्वस्वरूपघटकद्रव्यसंघद्वयादतिरिक्तस्य गवादिद्रव्यसंघस्यैकस्य भेदिका परिमाणोपाधिः=परिमाणस्य परिमाणिसंघोपाधिभूतस्योपाधिः सन् परिच्छेद्यस्य द्रव्यसंघस्य विशेषणम्।

"न ह्युपाधेरुपाधिर्भवति, विशेषणस्य च विशेषणम्" इति भाष्यवाक्यं तु विशेष्यान्तरस्य सत्त्वे चरितार्थम्।

तस्मात् संख्यानसंघवचनाद् विंशतिशब्दाद् गवादिसंघे परिमाणिनि ड्वुन्प्रत्ययो भवति। विंशको गोसंघ इत्यादि। तथा च दशतोः संघरूपयोः संहनने संघे वृत्तः=वृत्तिमान् विंशतिशब्दो गवादिद्रव्यसंघे परिमाणिनि वर्तिष्यते, 'परार्थाभिधानं वृत्तिः' इति सिद्धान्तमाश्रित्य ड्वुन्प्रत्ययमुत्पादयिष्यतीति प्रागुक्तभाष्यार्थः।

यद्यपि द्रव्याणां द्रव्यसंघस्य, दशतां दशत्संघस्य च पारमार्थिको भेदो नास्ति, तथापि केवलं बुद्धयाऽसौ=भेदः परिकल्प्यते। बुद्धिव्यवस्थापितार्थप्रवृत्तिनिमित्तकाश्च शब्दा बुद्धिमेवार्थाकारामुपजनयन्तोऽसत्यपि वास्तवे भेदे भेदमवगमयन्ति। बहिरेषां भेदाभावेऽपि शब्दजन्यवृत्त्युपारूढानामेषामस्त्येव विकल्पवृत्तिगोचरो भेद इति यावत्। "पङ्क्तिविंशति०" (५।१।५९) इत्यादिसूत्रे निपातनसामर्थ्याच्च विशिष्टे=द्रव्यसंघातविलक्षणे दाशते संघे वर्तन्तेऽमी विंशत्यादयः शब्दाः। तथा चोक्तं गुरुभिः=श्रीहेलाराजस्य गुरुभिस्तत्रभवद्भर्तृहरिपादैः —

"द्वेर्विनः परिमाणाख्याद् दशदर्थात् तदित्यतः ।
शतिजस्येति सङ्घाते दाशते तु निपातनात्" ।। इति ।

अस्यार्थः—द्वेरिति द्विशब्दात् । विन इति विन्भाविनो विन्शब्दादेशादित्यर्थः । स्थान्यादेशयोर्ह्यभेदविवक्षया द्विशब्द एव विन्शब्द उक्तः । परिमाणाख्यादिति परिमाणोपाधिकात् । संख्याशब्दो हि संख्येयाभिधायी, न परिमाणाभिधायी, परिमाणोपाधिकस्तु भवत्येव । यद्वाक्यम्–'द्वे दशतौ परिमाणमस्ये'ति ।

दशदर्थादिति दशद्वर्गसंख्येयवृत्तेरित्यर्थः । तदिति प्रथमासमर्थाच्छतिच्प्रत्ययो भवत्यस्येति परिमाणवत्यभिधेये सङ्घाते । गवां सङ्घस्य दाशतस्य च सङ्घस्य परिमाणित्वाविशेषे दाशत एव संघे प्रत्ययो निपातनसामर्थ्यात्, न गोसङ्घे, नापि गोषु ।

तथा च—धर्ममात्रवचनाः शुक्लादिवद् गुणिसमानाधिकरणाः कदाचित् प्रयुज्यन्ते, अभेदोपचाराद् विंशतिर्गावः कुण्डानि ब्राह्मणा इति वा । आविष्टलिङ्ग-

---

द्वेर्विनः परिमाणाख्याद् दशदर्थात् तदित्यतः ।
शतिजस्येति संघाते दाशते तु निपातनात् ।। इति ।

अस्यार्थः—द्वेरिति द्विशब्दात्, अर्थपरत्वे द्वाभ्यामिति स्यात् । विन इति विन्भाविनः, विन्शब्दादेशरूपादित्यर्थः । स्थान्यादेशयोर्ह्यभेदविवक्षया द्विशब्द एव विन्शब्द उक्तः । परिमाणाख्यादिति वस्तुतो न तु शब्दतः, अभेदेन परिमाणोपाधिकादिति यावत् ।

यद्यपि पूर्वं संख्यापरिमाणस्योपाधिरित्युक्तम्, इह तु परिमाणमेव संख्याया उपाधिरित्युच्यते, तथापि अभेदेनोपाध्युपधेयभावे विशेष्यविशेषणभावे वा कामचार इत्यविरोधः । संख्याशब्दो हि संख्येयाभिधायी, न परिमाणाभिधायी, परिमाणोपाधिकार्थस्तु=परिमाणोपाधिकार्थकस्तु भवत्येव ।

तथा च वाक्यम्—"द्वे दशतौ परिमाणमस्य" इति । अत्र दशच्छब्दः स्वभावात् स्त्रीविषयः । दशदर्थादिति दशद्वर्गरूपसंख्येयवृत्तेर्द्विशब्दादित्यर्थः । तदिति प्रथमासमर्थाच्छतिच्प्रत्ययो भवत्यस्येति परिमाणवत्यभिधेये दशद्वर्गद्वयसंघाते । गवां संघस्य दाशतस्य च संघस्य=दशद्वर्गद्वयसम्बन्धिसंघस्य परिमाणित्वाविशेषेऽपि दाशत एव संघे शतिच्प्रत्ययः, निपातनसामर्थ्यात्, न गोसंघेनापि गोषु । लोके हि विंशतिर्गोसंघ इति न प्रयुज्यते किन्तु विंशको गोसंघ इति दाशते संघ एव विंशतीति निपातनम् ।

किञ्च 'गवां विंशतिः' इति प्रयोगदर्शनात्, न 'गोषु विंशति'शब्दो निपात्यते । तथा च संख्यारूपधर्ममात्रवचना विंशत्यादयः शब्दाः शुक्लादिवत् संख्येयरूपगुणिसमानाधिकरणाः कदाचित् प्रयुज्यन्ते, गुणगुणिनोरभेदोपचाराद्

संख्यात्वाच्चान्यलिङ्गसंख्येऽपि सङ्ख्येये सामानाधिकरण्याविरोधः समासश्चोपपन्नः ।

अत एव विंशतिगवं त्रिंशत्पूलीति । विंशतिसङ्ख्या हि समुदितद्रव्यसमवायिनी, न तु शुक्लादिवत् परिसमाप्तेति द्रव्यगतलिङ्गसङ्ख्ये नानुवर्तते । पञ्चादयस्तु नित्यं संख्येयवचना इति तद्गतलिङ्गसंख्यानुविधायिनो युक्ताः ।

यदा तु गुणिनो भेदेन व्यवहारस्तदा षष्ठी सिद्धा, गवां विंशतिरिति ।

ननु च दाशतः सङ्घो विंशतिशब्दवाच्यस्तस्य च संख्येयो गुणी गवादिर्न भवति । दशतौ हि तस्य गुणिनौ, तत् कथं गोभिः स विशेष्यते । उच्यते । गवां दशतश्च तात्त्विकभेदाभावाद् गावोऽपि गुणिनः । तत्र दशता व्यभिचाराभावाद् विंशतिर्न विशेष्यते, दशतोर्विंशतिरिति । न हि भवति कृष्णस्य कार्ष्ण्यमिति, अपि तु काकस्य कार्ष्ण्यमिति ।

एवं व्यभिचाराद् गोभिर्विशेष्यतेऽश्वादिव्यावृत्तये विंशतिसंख्या गवां

---

विंशतिर्गावः कुण्डानि ब्राह्मणा इति वा ।

विंशत्यादीनामाविष्टलिङ्गसंख्यत्वाच्च = नियतलिङ्गसंख्यत्वाच्च, अन्यलिङ्गसंख्येऽपि संख्येये 'विंशतिः कुण्डानि' इति सामानाधिकरण्याविरोधः, समासश्चोपपन्नोऽत एव = सामानाधिकरण्यादेव विंशतिगवं त्रिंशत्पूलीति । विंशतिसंख्या हि समुदितद्रव्यसमवायिनी, न तु शुल्कादिवत् प्रत्येकपरिसमाप्ता इति द्रव्यगतलिङ्गसंख्येनानुवर्तते, किन्तु द्रव्यसमुदायगतमेकत्वमेवावलम्वते, नियतलिङ्गत्वाच्च नित्यं स्त्रीलिङ्गः । पञ्चम्यादयस्तु नित्यं संख्येयवचना इति तद्गतद्रव्यरूपसंख्येयगतलिङ्गसंख्यानुविधायिनो युक्ताः ।

यदा तु गुणिनः संख्येयस्य संख्यारूपाद् गुणाद् भेदेन व्यवहारस्तदा संख्येये षष्ठी सिद्धा, 'गवां विंशतिः' इति ।

ननु च दाशतः संघो विंशतिशब्दवाच्यस्तस्य च संख्येयो गुणी गवादिर्न भवति, दशतौ हि तस्य संघस्य गुणिनौ, तत् कथं गोभिः स विशेष्यते, 'गवां विंशतिः' इति । उच्यते—गवां दशतोश्च तात्त्विकभेदाभावाद् गावोऽपि गुणिनः । तत्र—'सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्' इति सिद्धान्तमनुसृत्य दशता व्यभिचाराभावाद् विंशतिर्न विशेष्यते, 'दशतोर्विंशतिः' इति । न हि भवति कृष्णस्य कार्ष्ण्यमिति, अपि तु काकस्य कार्ष्ण्यमिति, एवं व्यभिचाराद् गोभिर्विशेष्यते विंशतिसंख्याऽश्वादिव्यावृत्तये—गवां विंशतिरिति । दाशतसंघरूपायाश्च विंशतेः पारम्पर्येण = संघद्वारा गावः सम्बन्धिनो भवन्त्येव । भावानयने = असाधारणधर्मानयनेऽभिहिते द्रव्यानयनाच्च 'गोविंशतिमानेय' इत्युक्ते गाव आनीयन्ते ।

तदेवं व्युत्पत्तिपक्षः समर्थितो भाष्यकृता । सहस्रादयस्तु अव्युत्पन्ना एव

विंशतिरिति। दाशतसङ्ख्यारूपायाश्च विंशतेः पारम्पर्येण गावः सम्बन्धिन्यो भवन्त्येव। भावानयने द्रव्यानयनाच्च गोविंशतिमानयेत्युक्ते गाव आनीयन्ते। तदेवं व्युत्पत्तिपक्षः समर्थितः।

सहस्रादयस्तु पृषोदरादित्वादनुज्ञातसाधिमानः। अनयैव वा दिशा तेऽपि व्युत्पाद्याः ॥ १९ ॥

उपलक्षणत्वाद् विंशत्यादीनाम् एकविंशतिरेकत्रिंशदित्यादयोऽपि संख्याशब्दा एव। न ह्यत्रावयवौ संख्यावचनौ, न समुदायः। यतः —

एकविंशतिसंख्यायां संख्यान्तरसरूपयोः।
एकस्यां बुद्ध्यचनावृत्त्या भागयोरिव कल्पना ॥२०॥

'एकादीनां दशादिभिर्द्वन्द्व इति चेद् विंशत्यादिषु वचनप्रसङ्गः' (म० भा० २।२।२९) इति चोदयित्वा 'सिद्धं त्वधिकान्ता सङ्ख्या सङ्ख्यया समानाधिकरणाधिकारे अधिकलोपश्च' (वा० २।२।२९) इत्येकेनाधिका विंशतिरेकविंशतिरिति वार्त्तिके तत्पुरुषवृत्तिमुक्तां स्वरदोषादुपेक्ष्य एकश्च विंशतिश्चेत्येकविंशतिरित्येव भाष्ये अन्वाख्यानमङ्गीकृतम्।

---

पृषोदरादित्वादनुज्ञातसाधुभावाः।

यद्वाऽनयैव दिशा = विंशत्यादिषूक्तयैव दिशा तेऽपि = सहस्रादयोऽपि व्युत्पाद्याः = व्युत्पाद्य समर्थनीया इति ॥ १९ ॥

"पङ्क्तिविंशति०" (५।१।५९) इत्यादिसूत्रे निपातितानां विंशत्यादिशब्दानामेकविंशत्यादिशब्दोपलक्षणत्वात् = लक्षणया बोधकत्वात् 'एकविंशतिः, एकत्रिंशत्' इत्यादयोऽपि संख्याशब्दा एव। न ह्यत्रावयवौ संख्यावचनौ न समुदाय इति शक्यते वक्तुम्। यतः —एकविंशतिसंख्यायामिति।

अस्यार्थः —परमार्थत एकस्यामेकविंशतिसंख्यायामेकत्वसंख्याविंशतिसङ्ख्याविषयकत्वप्रयुक्तभेदवत्योर्बुद्ध्योरनावृत्त्या संख्यान्तरसमरूपयोरेकत्वसंख्याविंशतिसंख्यासरूपयोः, भागयोरिव कल्पना, न तु वस्तुत एकविंशतिसंख्यायां भागद्वयमस्तीति।

अयं भावः —"एकादीनां दशादिभिर्द्वन्द्व इति चेत्, एकविंशत्यादिषु वचनप्रसङ्गः" इति पूर्वपक्षवार्त्तिकम्।

अस्यार्थः —'एकादशः, द्वादशः, एकविंशतिः' इत्यादिषु एकद्व्यादीनां दशादिभिर्द्वन्द्व इति चेदभ्युपगम्यते तदा एकविंशत्यादिषु द्विवचनप्रसङ्ग इति। इदं चोदयित्वा "सिद्धं त्वधिकान्ता संख्या संख्यया समानाधिकरणाधिकारे अधिकलोपश्च" इत्युक्तम्।

अस्यार्थः —एकविंशत्यादिषु द्विवचनाद्यभाव एकवचनञ्च सिद्धम्, यतस्तत्र

तथा चावयवौ संख्या स्यान्न समुदाय इति द्विवचनप्रसङ्गपरिहाराय कथ्यते। अवयवार्थपरिकल्पनया व्युत्पत्तिमात्रमिदं क्रियते, न त्वत्रावयव एकसंख्या विंशतिसंख्या वा। परमार्थतो नरसिंहवन्निरस्तावयवविभागा ह्यन्यैवेयं संख्या भिन्नबुद्धिग्राह्या।

न हि प्रत्यवयवमावर्ततेऽत्र बुद्धिः, संख्यान्तरस्यैवाभेदेन परिच्छेदात्। उपायपरिकल्पना तु विलक्षणा।

कश्चित् किल नव द्वादशेति सङ्कलय्य एकविंशतिरित्यवैति। अन्यो दश चैकादश चेत्यादि। अन्यः पुनरेकश्च विंशतिश्चेति। अन्वाख्यानाय भागयोरिव परमार्थत एकस्यामस्यां संख्यायामियं कल्पना, यथा जातिविशेषप्रतिपत्त्यर्थं नर इति सिंह इति चांशापोद्धारः। न ह्यंशयोरत्र बुद्धिरावर्तते, अखण्डत्वात्॥ २०॥

भवतु संख्याद्वयारब्धेयं संख्या, किं निरस्तावयवविभागया अन्यथा संख्ययेत्याशङ्क्य शास्त्रकार्यानुपपत्तिप्रसङ्गेनैतन्निवारयितुमाह—

---

पूर्वपदेऽधिकान्ता संख्या बोध्या, संख्यया समानाधिकरणः समस्यते इत्यधिकारे समासे सति अधिकलोपश्च वक्तव्य इति।

अत्र वार्त्तिके एकेनाधिका एकाधिका विंशतिरेकविंशतितत्पुरुषवृत्तिमुक्तां स्वदोषादुपेक्ष्य एकश्च विंशतिश्चेत्येकविंशतिरित्येवं भाष्येऽन्वाख्यानमङ्गीकृतम्। अत्र स्वरदोषश्च तत्पुरुषे समासान्तोदात्तत्वम्, द्वन्द्वे तु 'संख्या' इति सूत्रेण पूर्वपदप्रकृतिस्वर इति स्वरभेदः।

तथा च = द्वन्द्वाभ्युपगमे चावयवौ संख्या, तत्समुदाय इति एकविंशत्यादीनां संख्यावाचित्वाभावप्रसङ्गः, संख्या कार्याभावप्रसङ्गश्चेति दोषपरिहाराय, वचनप्रसङ्गपरिहाराय च कथ्यते। अवयवार्थपरिकल्पनया व्युत्पत्तिमात्रभेदं क्रियते, न तु वस्तुतोऽत्रावयव एकसंख्याविंशतिसंख्यया वा। परमार्थतो नरसिंहवन्निरस्तावयवविभागा ह्यन्यैवेयमेकविंशत्यादिसंख्या भिन्नबुद्धिनिर्ग्राह्या।

न हि प्रत्यवयवमावर्ततेऽत्र बुद्धिः, संख्यान्तरस्यैवावयवाभेदेनैकया बुद्ध्या परिच्छेदात्। एकविंशत्यादिषु भागयोः कल्पितत्वादेवोपायपरिकल्पना तु = च विलक्षणा।

तथा हि—कश्चित् किल नव द्वादशेति सङ्कलय्य एकविंशतिरित्यवैति। अन्यो दश चैकादश चेत्यादि। अन्यः पुनरेकश्च विंशतिश्चेति। परमार्थत एकस्यामस्यां संख्यायामन्वाख्यानाय भागयोरिवेयं कल्पना। यथा नरसिंहत्वरूपजातिविशेषप्रतिपत्त्यर्थं नर इति सिंह इति चांशापोद्धारकल्पना। न ह्यंशयोरत्र बुद्धिरावर्तते, एकविंशत्यादिशब्दतदर्थानामखण्डत्वात्॥ २०॥

ननु भवतु संख्याद्वयारब्धा एकविंशत्यादिसंख्या, किं निरस्तावयवविभागया

असंख्यासमुदायत्वात् संख्याकार्यं विधीयते ।
समूहत्वे तु तन्न स्यात् स्वाङ्गादिसमुदायवत् ॥२१॥

निरस्तावयवविभागा सरूपावयवाखण्डश्रुतिगोचरा दशादिवदन्यैव यतो भवतीयं संख्या, ततः संख्यायां विहितकार्यं प्रवर्तते । एकविंशतिरधिकाऽस्मिन् शते एकविंशशतम् । एवमेकत्रिंशम् । 'शदन्तविंशतेश्च' ( ५।२।४६ ) इति डः ।

तत्र हि 'शद्ग्रहणेऽन्तग्रहणं प्रत्ययग्रहणे यस्मात् स तदादेरधिकार्थम्' इत्युक्त्वातिप्रसङ्गनिवारणाय 'संख्याग्रहणं च' इत्युक्तम् ।

तथा च शदन्तो विंशत्यन्तश्च संख्यावाची गृह्यते, न तु गोत्रिंशद् गोविंशतिरित्यादि । एकविंशतितममिति च संख्याकार्यमवयविनि तयप् । एकविंशतितममेकविंशमिति च पूरणे डट् । तत्र च 'विंशत्यादिभ्यस्तमडन्यतरस्याम्' ( ५।२।५६ ) इति तमट् एकविंशतिकृत्व इति 'संख्यायाः

---

अन्यया संख्यया इत्याशङ्क्य शास्त्रीयसंख्याकार्यानुपपत्तिप्रसङ्गेनैतच्छङ्कां निवारयितुमाह—असंख्यासमुदायत्वादिति ।

अस्यार्थः —एकत्रिंशत्यादिसंख्यानाम् असंख्यासमुदायत्वाद् निरस्तावयवविभागत्वेन संख्यासमुदायरूपत्वाभावात्, संख्याकार्यमेकविंशतिरधिका अस्मिन् शते एकविंशं शतम्, एकविंशतिरवयवा अस्यैकविंशतितमम्, एकविंशतिकृत्वः" इत्यादौ डतयप्कृत्वसुजादिरूपं विधीयते । समूहत्वे त्वेकविंशत्यादिसंख्यानां संख्यासमुदायरूपत्वे तु तन्न स्यात् संख्याकार्यं न स्यात् । स्वाङ्गादिसमुदायवत् स्वाङ्गसमुदाये स्वाङ्गकार्यं यथा न भवति, यथा—'कल्याणं पाणिपादं यस्याः सा कल्याणपाणिपादा' इत्यत्र "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" ( ४।१।५४ ) इत्यनेन ङीष् न भवतीति ।

अयं भावः—काल्पनिकावयवविभागसत्त्वेऽपि वस्तुतो निरस्तावयवविभागा, संख्यान्तरसरूपावयवा, अखण्डैकविंशत्यादिशब्दगोचरा, यतो दशादिवदन्यैव भवतीयमेकविंशत्यादिसंख्या, ततः संख्यायां विहितं कार्यं प्रवर्तते । एकविंशतिरधिकाऽस्मिन् शते एकविंशं शतम्, एवमेकत्रिंशम् । "शदन्तविंशतेश्च" ( ५।२।४६ ) इति डः ।

तत्र हि "शद्ग्रहणेऽन्तग्रहणं प्रत्ययग्रहणे यस्मात् स विहितः तदादेरधिकार्थम्" इत्युक्त्वा 'गोत्रिंशद् गोविंशत्' इत्यादिग्रहणप्रसङ्गरूपातिप्रसङ्गनिवारणाय 'संख्याग्रहणञ्च' इत्युक्तम् ।

तथा च शदन्तो विंशत्यन्तश्च संख्यावाची गृह्यते, न तु गोत्रिंशद् गोविंशतिरित्यादि । एकविंशतिरवयवा अस्य इति एकविंशतितयमिति च संख्याकार्यमवयविनि तयप्—"संख्याया अवयवे तयप्" ( ५।२।४२ ) इति सूत्रेण । एकविंशतेः पूरणमेकविंशतितममेकविंशमिति च पूरणे डट् । "विंशत्यादिभ्यस्तमडन्यतरस्याम्"

क्रियाभ्यावृत्तिगणने कृत्वसुच्' ( ५।४।१७ ) इति एकविंशतिमयम् उदश्विद्य-वानामिति 'संख्याया गुणस्य निमाने…' ( ५।२।४७ ) इति निमाने वर्तमानात् संख्याशब्दाद् निमेये मयट्। एकविंशतिक इति परिमाणिनि 'संख्याया अतिशदन्तायाः…' ( ५।१।२२ ) इति कन्। त्यन्तप्रतिषेधोऽत्र भवत्यर्थवतस्तत्र तिशब्दस्य ग्रहणात्। अधिकैकविंशा इति च 'संख्ययाव्ययासन्न…' ( २।२।२५ ) इति बहुव्रीहिरपि संख्याकार्यम्।

अवयवसंख्याद्वयमय्यां त्वस्यां समूहरूपायामेकविंशतिसंख्यायां संख्या-कार्यं न स्यात्।

तद्यथा—पाणिपादेन स्वाङ्गसमुदायेन भिन्नकार्यस्य स्वाङ्गान्तर-स्यानारम्भात् स्वाङ्गसमुदायो न स्वाङ्गमिति कल्याणपाणिपादेति 'स्वाङ्गात्…' (पा० ४।१।५४ ) इति ङीष् न भवति। तथा जनपदाभ्यां जनपदान्तरस्यानारम्भाद् जानपदसमुदायो जनपदग्रहणेन न गृह्यत इति जनपदलक्षणो वुञत्र न भवति। काशिकोसलीया इति भवार्थे 'वृद्धाच्छः' (पा० ४।२।११४ ) एव भवति।

एवमत्र संख्याभ्यां संख्यान्तरस्य भिन्नव्यपदेशस्य विलक्षणस्यानारम्भात् तत्समूहमात्ररूपत्वे संख्याकार्याभाव इति संख्यान्तरम्। एकविंशतिसंख्या च यथाकथञ्चिदवयवपरिकल्पनया व्युत्पाद्येति द्विवचनप्रसङ्गाभावः ॥ २१ ॥

---

( ५।२।५६ ) इति तमट्। एकविंशतिकृत्व इति "संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" ( ५।४।१७ )। एकविंशतिमयमुदश्विद् यवानामिति "संख्याया गुणस्य निमाने मयट्" (५।२।४७) इति निमाने वर्तमानात् संख्याशब्दाद् निमेये मयट्। एको भागो यवस्यैकविंशतिर्भागा उदश्वित इत्येकविंशतिमयमुदश्विद् यवानामिति। एकविंशतिः परिमाणमस्यैकविंशतिक इति परिमाणिनि "संख्याया अतिशदन्तायाः कन्" ( ५।१।२२ ) इति कन्। त्यन्तप्रतिषेधोऽत्र न भवति, अर्थवद्ग्रहणपरिभाषया अर्थवतस्तिशब्दस्य तत्र ग्रहणात्। विंशतेरधिका इति अधिकैकविंशा इत्यत्र च "संख्ययाऽव्ययासन्न…" (२।२।२५) इति बहुव्रीहिरपि संख्याकार्यम्। अवयवसंख्या-द्वयवत्यां त्वस्यां समूहरूपायामेकविंशतिसंख्यायां संख्याकार्यं न स्यात्। संख्या-समुदायस्यासंख्यात्वात्।

तद्यथा —पाणिपादेन स्वाङ्गसमुदायेन स्वाभिन्नकार्यस्य स्वाङ्गान्तरस्या-नारम्भात् स्वाङ्गसमुदायो न स्वाङ्गमिति कल्याणपाणिपादा इति।

अत्र—"स्वाङ्गात्" ( ४।१।२४ ) इति ङीष् न भवति। तथा जनपदाभ्यां जनपदान्तरस्यानारम्भाद् जनपदसमुदायो जनपदग्रहणेन न गृह्यत इति काशिकोस-लीया इत्यत्र जनपदलक्षणो वुञ् न भवति, किन्तु भवार्थे वृद्धाच्छ एव भवति।

एवमत्र = एकविंशत्यादौ संख्याभ्यामेकविंशतिभ्यां संख्यान्तरस्य भिन्नव्यप-देशस्य विलक्षणस्यानारम्भात् तत्समूहमात्ररूपत्वे संख्याकार्याभाव इति संख्यान्तर-

इह कथं संख्यया समासः 'द्विदशाः, त्रिदशाः' इत्यादौ ? दशसंख्यया द्व्यादिसंख्या सम्बध्यमाना किं सञ्चष्ट इत्याह—

संख्येयान्तरतन्त्रासु या संख्यासु प्रवर्तते ।
आवृत्तिवर्गसंख्येया तां संख्यां तादृशीं विदुः ॥२२॥

'द्विर्दश द्विदशा' इति 'संख्ययाव्ययासन्न....' (पा० २।२।२५) इत्यादिना बहुव्रीहिरयं समासः। तत्र च संख्येयान्तरं द्व्यादिसंख्याविषयात् संख्येयादन्यत् संख्येयं परिच्छेद्यं तन्त्रं प्रधानं यासां दशादिसंख्यानां तासु संख्येयप्रधानासु दशादिसंख्यासु याऽन्या द्वित्वादिका संख्या प्रवर्तते सम्बन्धमनुभवति समासार्थम्, तस्या दशादिसंख्यावृत्तिः पुनः पुनः प्रवृत्तिः, दशादिसंख्यापरिच्छेद्यो वा वर्गो

---

मेकविंशत्यादिसंख्या। किञ्चैकविंशतिरूपः संख्याशब्दो यथा कथञ्चिदवयवपरिकल्पनया व्युत्पाद्य इति। अत्रैकस्यामेकविंशतौ द्विवचनप्रसङ्गाभाव इति ॥ २१ ॥

ननु इह कथं समासः 'द्विदशाः, त्रिदशाः' इति द्वित्वस्य हि दशसंख्यायां नान्वयः, संख्यायाः संख्येयपरतन्त्रत्वात्। तत्रान्वये 'न ह्युपाधेरुपाधिर्भवति विशेषणस्य च विशेषणम्' इति न्यायविरोधात्। संख्येयेष्वपि नान्वयो विरोधात्।

किञ्च द्व्यादिसंख्या हि दशसंख्यया सम्बध्यमाना किं सञ्चष्टे ? निरूपकभेदेन संख्या न कर्मत्वसंख्या, न कर्तृत्वयोरुभयोः समावेशेऽपि प्रागुक्तरीत्या संख्याः, संख्येयत्वासम्भवादित्याशङ्क्याह—संख्येयान्तरतन्त्रासु इति।

अस्यार्थः—द्विरावृत्ता दश द्विदशा इति 'संख्याऽव्ययासन्न' इत्यादिबहुव्रीहिसमासे संख्येयान्तरतन्त्रासु द्व्यादिसंख्याविषयात् संख्येयादन्यत् संख्येयं परिच्छेद्यं तन्त्रं प्रधानं यासां दशादिसंख्यानां तासु संख्येयप्रधानासु दशादिसंख्यासु याऽन्या द्वित्वादिका संख्या तद्वाचको द्व्यादिशब्दः प्रवर्तते, प्रकृष्टां वृत्तिं सम्बन्धमनुभवति समासार्थम्। सा आवृत्तिवर्गसंख्येया = आवृत्तिर्दशादिसंख्यायाः पुनः पुनः प्रवृत्तिः, वर्गः = दशादिसंख्यापरिच्छेद्यो दशावयवकः समूहो वा संख्येयः परिच्छेद्यो यस्याः सा द्वित्वादिका संख्या तथाभूताऽस्ति, अतस्तां दशादिसंख्यया समासानुभवार्थं सम्बद्ध्यमानां द्वित्वादिकां संख्यां तादृशीम् = आवृत्तिवर्गसंख्येयां विदुर्जानन्ति वैयाकरणा इति।

अयं भावः—द्विरावृत्ता दशद्विदशा इति "संख्ययाऽव्ययासन्न" इत्यादिना बहुव्रीहिरयं समासः। तत्र च संख्येयान्तरं द्व्यादिसंख्याविषयात् संख्येयादन्यत् संख्येयं परिच्छेद्यं तन्त्रं प्रधानं यासां दशादिसंख्यानां तासु संख्येयप्रधानासु दशादिसंख्यासु याऽन्या द्वित्वादिका संख्या तद्वाचकः शब्दः प्रवर्तते प्रकृष्टां वृत्तिं सम्बन्धमनुभवति समासार्थम्। तस्याः संख्याया दशादिसंख्याऽऽवृत्तिः, दशादिसंख्यायाः पुनः पुनः प्रवृत्तिः, दशादिसंख्यापरिच्छेद्यो दशावयवकसमूहरूपो वर्गो

दशावयवसमूहः संख्येयः परिच्छेद्य इति, तां द्वित्वादिकां संख्यां तादृशीमावृत्ति-वर्गसङ्ख्येयप्रधानां विदुर्जानन्ति शाब्दिकाः किल ।

संख्या अस्या न परिच्छेद्या । सा हि दशसु संख्येयेषु गुणभूतेति न द्वित्वेन योगं भजते । अत एव 'संख्येयान्तरतन्त्रासु' इत्यनेनासम्बन्धे हेतुरुक्तः ।

दशसंख्यासंख्येयेनापि विरोधाद् द्वित्वं न सम्बध्यते । न हि दश द्वाविति युज्यते । तस्माद् दशसंख्याया आवृत्तिर्द्वित्वपरिच्छेद्या ।

द्वौ वारौ हीयं दशसंख्याद्विर्दशेति । अत एवाभ्यावृत्तिविषयः सुच्प्रत्ययो वाक्ये । दशावयवो वर्गः परिच्छेद्यो द्वौ दशताविव्यस्ति समन्वयः ॥ २२ ॥

श्रुतैव दशसंख्या तत्संख्येया वा दश कथं द्वित्वसंख्यया न परिच्छेद्या इत्याशङ्क्य व्याख्यातामेव युक्तिमुपन्यस्यति—

न संख्यायां न संख्येये द्वौ दशेत्यस्ति सम्भवः ।
भेदाभावान्न संख्यायां विरोधान्न तदाश्रये ॥२३॥

---

वा संख्येयः परिच्छेद्य इति तां संख्यां द्वित्वादिकां तादृशीम्=आवृत्तिवर्गान्यतर-रूपसंख्येयप्रधानां विदुर्जानन्ति शाब्दिकाः=वैयाकरणाः किल ।

द्विदशा इत्यत्र दशादिसंख्या अस्या द्वित्वादिकायाः संख्याया न परिच्छेद्या । सा हि दशसु संख्येयेषु परिच्छेदकतया गुणभूतेति न द्वित्वसंख्यया सह परिच्छेद्यतया योगं भजते । 'न ह्युपाधेरुपाधिर्भवति विशेषणस्य च विशेषणम्' इति न्यायविरोधात् । अत एव 'संख्येयान्तरतन्त्रासु' इत्यनेन तदसम्बन्धे हेतुरुक्तः ।

दशसंख्यासंख्येयेनापि द्वित्वं न सम्बध्यते, द्वित्वदशत्वयोर्विरोधात् । न हि दशद्वाविति प्रयुज्यते वा । तस्माद् द्वित्वसंख्याया आवृत्तिर्द्वित्वसंख्यापरिच्छेद्या ।

द्वौ वारौ हीयं दशसंख्या द्विरावृत्ता दशेत्युक्ता द्विदशेति । अत एवाभ्यां वृत्तिविषयः 'सुच्'-प्रत्ययो द्विर्दशेति विग्रहवाक्ये । दशावयवको वर्गः परिच्छेद्यो द्वौ दशतौ इति द्विदशा इति समासीयविग्रहवाक्यस्यार्थः । द्वौ दश इति विग्रहः ।

अत्र दशन्शब्दो लक्षणया दशद्वर्गपरः । विग्रहे बहुवचनं तु—'जातसंस्कारो न निवर्तते, तन्निवर्तकाभावात्' इति सिद्धान्तात् । वृत्तौ त्वभिधया । एवमस्ति द्विदशा इत्यत्र द्वित्वदशत्वयोः समन्वय इति ॥ २२ ॥

ननु श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' ( परि० ) इति न्यायेन श्रुतैव दशसंख्या, तत्संख्येया वा दश कथं द्वित्वसंख्यया न परिच्छेद्याः कथं तात्पर्यानुमिता दशावृत्तिर्दशद्वर्गो वा लक्षणलभ्यो द्वित्वसंख्यापरिच्छेद्य इत्यभ्युपेयत इत्याशङ्क्य एतत्परिहाराय पूर्वं व्याख्यातमेव युक्तिं वैशद्येनोपन्यस्यति—न संख्यायामिति ।

अस्यार्थः—दशसङ्ख्यायां तत्सङ्ख्येये वा 'द्वौ दश' इति विग्रहवाक्यरूपस्य व्यवहारस्य सम्भवो नास्ति ।

दशसंख्या तावत् संख्येयोपसर्जनत्वान्नार्हति द्वित्वसंख्यासम्बन्धमत्रेत्युक्तम्। उपसर्जनत्वेऽपि च बुद्ध्या प्रत्यवमृश्य सम्बन्धे प्रधानेन संख्येयेन योगो भवेद् यद्युपसर्जनमर्हेत् सम्बन्धम्। यावता दशसंख्याया एकत्वाद् द्वित्वेनासम्बन्धः, तत्संख्येया अपि दश विरोधाद् द्वित्वेन नावच्छिद्यन्ते। न हि दश द्वौ भवतीत्युक्तमेव। उत्तरा हि संख्या पूर्वसंख्याकृतं व्यपदेशं बाधते ॥ २३ ॥

तस्मात्—

संख्यायेते दशद्वर्गौ द्विदशा इति संख्यया।
तद्रूपे वापि संख्येये आवृत्तिः परिगण्यते ॥२४॥

---

तत्र हेतुमुत्तरार्धेनाह—भेदाभावान्नेत्यादि।

अस्यार्थः—दशसंख्याया अखण्डत्वेन भेदाभावाद्, भेदाभावेन च तत्र द्वित्वान्वययोग्यताया अभावाद् न दशसंख्यायां द्वित्वसंख्याया अन्वयः। तदाश्रये= दशसंख्याया आश्रये, दशसंख्यासंख्येये च न द्वित्वसंख्याया अन्वयः, द्वित्वदशत्वयोः संख्ययोर्विरोधादिति।

अयं भावः—दशसंख्या तावत् स्वसंख्येयोपसर्जनत्वान्नार्हति द्वित्वसंख्यासम्बन्धं द्विदशा इत्यत्रेत्युक्तं प्राक्। दश संख्यायाः स्वसंख्येये उपसर्जनत्वेऽपि चापोद्धारबुद्ध्या तां प्रत्यवमृश्य=प्रत्यवमर्शेन स्वसंख्येयात् पृथक्कृत्य तस्याः प्राधान्ये सम्पादिते सति द्वित्वेन सह तस्याः सम्बन्धे सति पश्चात् प्रधानेन स्वसंख्येयेन सह तस्या योगो भवेत्, यदि स्वसंख्येये उपसर्जनीभूता दशसंख्या द्वित्वसम्बन्धमर्हेत्। न चार्हति, यतो दशसंख्याया एकत्वाद् द्वित्वेनासम्बन्धः, तत्संख्येया अपि= दशसंख्यासंख्येया अपि दशद्वित्वदशत्वयोर्विरोधाद् द्वित्वेन नावच्छिद्यन्ते। न हि दश द्वौ भवतीत्युक्तमेव प्राक्।

उत्तरा हि संख्या पूर्वसंख्याकृतं व्यपदेशं बाधते। "गौण्यप्युत्तरा संख्या पूर्वां संख्यां बाधते" इति भाष्योक्तेरिति ॥ २३ ॥

उक्तमेवार्थं निगमयति—संख्यायेते इति।

अस्यार्थः—तस्माद् द्विदशा इत्यत्र द्वित्वसंख्यया दशद्वर्गौ संख्यायेते। द्वौ दशतौ द्विदशा इति। वृत्तौ दशशब्दो दशद्वर्गपरः। वा=अथवा, तद्रूपे—वर्गाभिन्ने दशसंख्याके संख्येयेऽपि एव सति दशसंख्याया आवृत्तिः पुनः पुनः प्रवृत्तिर्द्वित्वसंख्यया परम्परया परिगण्यते परिच्छिद्यते।

अयं च परम्पराप्रकारः—दशशब्दोऽत्र द्विदशा इति वृत्तौ संख्येयमेवाचष्टे। ते च दशसंख्यासंख्येयाः स्वस्मिन् गुणभूतदशसंख्याद्वारा द्वित्वेन युज्यन्ते। सा च गुणभूता दशसंख्या स्वावृत्तिद्वारा द्वित्वेन युज्यते। दशसु संख्येयेषु हि दशत्वमावर्तमानं द्वित्वसंख्यया परिच्छिद्यते। एवं साक्षाद् द्वित्वसम्बन्धिनी आवृत्तिः, तत्सम्ब-

दशसंख्यापरिच्छिन्न एको वर्गस्तादृशमपरमाख्यातुं द्वित्वमुपादीयते। तेन द्वयोर्दशद्वर्गयोर्द्वित्वमत्रावेद्यते—द्वौ दशतौ द्विदशाः।

सम्बन्धान्यथानुपपत्त्या दशशब्दोऽत्र वृत्तिविषये दशद्वर्गे वर्तते। वर्गश्च वर्ग्यभेदापन्नो विवक्ष्यत इत्यवयवगतभेदाश्रयं बहुवचनम्। वर्गवाची चात्र डति-प्रत्ययो वृत्तौ, अत एव दशदिति न प्रयुज्यते।

वर्गिप्राधान्यात् तद्रूपे दशसंख्य एव संख्येये सति दशसंख्याया आवृत्तिः पुनः पुनः प्रवृत्तिर्वा गण्यते द्वित्वेन। द्वौ वारौ द्विः, द्विर्दश द्विदशाः।

दशशब्दोऽत्र संख्येयमेवाचष्टे। गुणभूतसंख्याद्वारेण तु द्वित्वेन युज्यन्ते दश संख्येयाः। दशसंख्या तु गुणभूतावृत्तिद्वारेण द्वित्वसंख्यायोगमनुभवति। दशसु संख्येयेषु हि दशत्वमावर्तमानं द्वित्वेन परिच्छिद्यते।

तथा च सम्बन्धिसम्बन्धात् संख्येयेषु दशस्वपि द्वित्वमन्वयीति तदाश्रयं बहुवचनं भवति। आवृत्तिगणनविषयस्य च सुचः समासेन गतार्थत्वात् प्रयोगो न भविष्यति।

---

न्धिनी दशत्वसंख्या, तत् सम्बन्धिनः संख्येया दश इति सम्बन्धिसम्बन्धात् परम्परा-रूपात् संख्येयेषु दशस्वपि द्वित्वमन्वयीयुक्तं भवतीति।

अयं भावः—दशसंख्यापरिच्छिन्न एको दशद्वर्गस्तादृशं द्वितीयं वर्गं प्रथम-वर्गसहितमाख्यातुम्=परिच्छिन्नतया वक्तुं द्वित्वसंख्या उपादीयते। तेन दशद्वर्ग-द्वयनिष्ठं द्वित्वं द्विदशा इत्यत्रावेद्यते—द्वौ दशतौ द्विदशा इति।

अत्र वृत्तौ दशशब्दो दशद्वर्गपरः। तथा च द्वित्वसंख्यासम्बन्धान्यथाऽनु-पपत्त्या दशशब्दो द्विदशा इत्यत्र वृत्तिविषये दशद्वर्गे शक्त्या वर्तते, विग्रहवाक्ये तु लक्षणया। वर्गश्च वर्ग्यभिन्नो विवक्ष्यत इति वर्गिरूपावयवगतभेदाश्रयं बहुवचनं दशेति। न तु वर्गाश्रयमेकवचनम्। दशदित्यत्र डतिप्रत्ययश्च वर्गवाची, अत एव वृत्तौ दशदिति न प्रयुज्यते, वृत्तौ दशशब्दस्य बहुवचनलोभेन वर्गिपरत्वात्।

तथा च वृत्तौ वर्गिप्राधान्यात् तद्रूपे=वर्गिरूपे दशसंख्य एव संख्येये सति दशसंख्याया आवृत्तिः पुनः पुनः प्रवृत्तिर्वा द्वित्वेन गण्यते=परिच्छिद्यते। द्वौ वारौ, द्विः द्विर्दश द्विदशा इति।

दशशब्दोऽत्र संख्येयमेवाचष्टे, बहुवचनदर्शनात्, न दशत्वसंख्याम्, नापि दशद्वर्गमिति। स्वस्मिन् गुणभूतदशत्वसंख्याद्वारेण तु द्वित्वेन सह युज्यन्ते दश-संख्येयाः। संख्येयेषु गुणभूता दशत्वसंख्या तु स्वावृत्तिद्वारेण द्वित्वसंख्यायोगमनु-भवति। दशसु संख्येयेषु हि दशत्वमावर्तमानं द्वित्वेन परिच्छिद्यते।

तथा च सम्बन्धिसम्बन्धात्=परम्परासम्बन्धाद् द्वित्वाश्रयसंख्या तदाश्रया-वृत्तितदाश्रयत्वरूपात् संख्येयेषु दशस्वपि द्वित्वमन्वयीति तदाश्रयम्=संख्याश्रयं

तदुक्तं वार्त्तिके—'सुजभावोऽभिहितार्थत्वात् समासे' ( पा० २।२।५२ ) इति। गतमेतत् ॥ २४॥

'संख्याया अवयवे तयप्' ( पा० ५।२।४२ ) इत्यत्र 'इह कस्मान्न भवति। बहवोऽवयवा अस्याः संख्यायाः' ( म० भा० ) इति भाष्ये चोदितेऽभिहितम्—'अवयवे या संख्या, तस्याः प्रत्यय उच्यते। न च काचित् संख्या अवयविन्यस्ति, यस्य बहुशब्दोऽवयवः स्यात्' इति।

अयमर्थः—'अवयवविधानेऽवयविनि प्रत्ययः' इत्युक्तम्। न च संख्याशब्दवाच्या काचिद् विशिष्टावयविनी संख्याऽस्ति।

ननु च कथं नास्ति, यावता प्रयुज्यत एव वाक्यम् 'बहवोऽवयवा अस्याः संख्यायाः' इत्याह—'ननु चेयमस्ति। संख्येत्येव' इति भाष्यम्।

अस्योत्तरम्—'नैषा संख्या। किं तर्हि संज्ञैषा' इति। एकत्वादिसंख्या-

---

बहुवचनं भवति। आवृत्तिगणनविषयस्य = आवृत्तिगणनार्थकस्य च सुचः समासेन गतार्थकत्वात् तत्प्रयोगो न भवति।

तदुक्तं वार्त्तिके—'सुजभावोऽभिहितार्थत्वात् समासे' इति। गतमेतत् = 'द्विदशाः, त्रिदशाः' इत्यादौ समासविषयको विचारः समाप्त इति ॥ २४॥

"संख्याया अवयवे तयप्" इति सूत्रे "इह कस्मान्न भवति। बहवो अवयवा अस्याः संख्यायाः" इति भाष्ये चोदयित्वाऽभिहितम्—"अवयवे या संख्या तस्याः प्रत्यय उच्यते। न च काचित् संख्या अवयविन्यस्ति, यस्या बहुशब्दोऽवयवः स्यात्" इति। अत्र बहुशब्द इत्यस्य बहुशब्दवाच्य इत्यर्थः, बहुव्रीहिसमासात्।

अयमर्थः—अवयवविधानेऽवयविनि प्रत्यय इत्युक्तं भाष्ये। "संख्याया अवयवे तयप्" ( ५।२।४२ ) इत्यत्रावयवे इत्यस्य संख्याया इत्यनेन योगः, न तु तयपा, इष्टानुरोधात्। तथा चावयववाचकात् संख्याशब्दात् तयपो विधानेऽवयविनि अर्थे तयप्प्रत्यय इति तदर्थः।

तथा च बहवोऽवयवा अस्याः संख्याया इति विग्रहे बहुतयी संख्या इति न भवति। न हि संख्याशब्दवाच्या काचिद् विशिष्टा = विलक्षणा अवयविनि संख्याऽस्ति। यथा 'त्रितयम्' इत्यत्र त्रित्वसंख्याया एको द्वावित्यवयवाः।

ननु कथं नास्ति, यावता = यतः प्रयुज्यत एव वाक्यम्, बहवोऽवयवा अस्याः संख्याया इत्याह—"ननु चेयमस्ति संख्येत्येव' इति पूर्वपक्षभाष्यम्।

अस्योत्तरम्—नैषा संख्या, किं तर्हि ? संज्ञा एषा" इति। एकत्वादिसङ्ख्या विशेषाणामविशिष्टा = अविलक्षणा सामान्यभूता संज्ञानामधेयमेतत् संख्येति, न त्वस्य शब्दस्य = संख्याशब्दस्य संज्ञारूपस्य वाच्यः कश्चिदवयवी। ततश्च संख्या-

विशेषाणामविशिष्टा संज्ञा नामधेयमेतत् 'संख्ये' इति, न त्वस्य वाच्यः कश्चिदवयवी। ततश्च संख्यासामान्यनिवेशिनीयं प्रतिभेदमनुवर्तते संज्ञा।

न च सामान्यविशेषयोरवयवावयविभावः, कल्पितत्वेऽपि चावयविनः कार्यभेदो रूपभेदः समाख्याभेदश्च भिद्यते।

तद्यथा—वनादेर्विविक्तवृक्षकार्याद्धि समुदितवनकार्यमन्यत्। अत एव रूपभेदः। समाख्या च वृक्षा वनमिति भिन्ना।

इह तु परिच्छेदलक्षणं कार्यमेकत्वादिव्यतिरिक्तं संख्याया नास्ति। किञ्चिद्रूपमपि न विविक्तमेकादिव्यतिरिक्तमवधार्यते शुक्लादिव्यतिरेकेणेव रूपस्य। समाख्या त्वर्थाभावादेव न भिन्ना, अपि तु विशेषविषयसामान्यगोचरेयं संज्ञा संख्येति।

बहुत्वमपि चैवं त्रित्वादीनां सामान्यमिति बहवोऽवयवा अस्यां विंशतौ त्रिंशति वेत्यप्यवयवावयविभावेन योगो न भवति, अपि तु सामान्यविशेषभावेनैव।

तथा च यथा बहुतयं रूपमिति शुक्लादिव्यतिरेकेण रूपावयविनोऽभावान्न भवति, तथा बहुतया विंशतिः, त्रिंशदित्यपि न भवति।

---

सामान्यनिवेशिनी = सर्वसंख्यासम्बद्धा इयं प्रतिभेदम् = प्रतिसंख्याविशेषमनुवर्तते संख्यासंज्ञा।

न च संख्याशब्दवाच्यबहुशब्दवाच्ययोः सामान्यविशेषयोरर्थयोरवयवावयविभावः। अवयवावयविभावस्य कल्पितत्वेऽपि चावयविनः कार्यभेदो रूपभेदः समाख्याभेदश्चावयवस्य कार्यभेदादितो भिद्यते।

तद्यथा—वनादेः समुदितवृक्षरूपवनकार्यं सिंहनिगूहनादिकं विविक्त-(विभक्त)वृक्षकार्यात् स्वस्थौल्यमहत्त्वशाखादिविस्तारादितो ह्यन्यत्। अत एव वनविविक्तवृक्षयो रूपभेदः (स्वरूपभेदः)। समाख्या च वृक्षा वनमिति भिन्ना।

इह तु परिच्छेदलक्षणं कार्यमेकत्वादिव्यतिरिक्तम् = एकत्वादिसंख्याकार्यात् तत एव व्यतिरिक्तं संख्यासामान्यस्य नास्ति। किञ्चिद् रूपमपि न विविक्तमेकादिव्यतिरिक्तमवधार्यते तस्याः, शुक्लादिव्यतिरेकेणेव रूपस्य साधर्म्येऽयं दृष्टान्तः। समाख्या तु अर्थाभावादेव = अर्थभेदाभावादेव न भिन्ना, अपि तु संख्याविशेषैकत्वादिविषयकसंख्यासामान्यगोचरेयं संज्ञा संख्येति।

एवम् = एकत्वबहुत्वादिसंख्याविशेषाणां यथा सङ्ख्याशब्दाभिधेयं सामान्यं तथा, बहुत्वमपि च त्रित्वादीनां सामान्यमिति बहवोऽवयवा अस्यां विंशतौ त्रिंशति वा इत्यत्रापि अवयवावयविभावेन योगो न भवति, अपि तु सामान्यविशेषभावेनैव।

तथा च यथा—'बहुतयं रूपम्' इति न भवति, शुक्लादिव्यतिरेकेण रूपात्मकावयविनोऽभावात्, तथा बहुतयी विंशतिः, त्रिंशदित्यपि न भवति।

न हि परिच्छिन्नरूपाया विंशत्यादिसंख्यायाः सामान्यरूपमनवधारितविशेषं बहुत्वमुपपद्यते विशेषणम् ।

तदेतद् भाष्योपक्षिप्तमनुवदति—

संख्या नाम न संख्यास्ति संज्ञैषेति यथोच्यते ।
रूपं न रूपमप्येवं संज्ञा सा हि सितादिषु ॥२५॥

सितपीतनीलादिवर्णव्यतिरेकेण यथा विलक्षणकार्यस्वभावं रूपं नाम वर्णान्तरं नास्ति, सितादीनां रूपसामान्यनिमित्ता तु संज्ञा रूपमित्येषा, तथैकत्वादिसंख्याभेदव्यतिरेकेण संख्या नामावयविनी न विद्यतेऽन्या । समाख्यामात्रमेषा सर्वेषां सामान्यभूतमित्युक्तोऽर्थः ॥ २५ ॥

सामान्यसमाख्यत्वमेवोपपादयति—

संख्यानजातियोगात्तु संख्या संख्येति कथ्यते ।
रूपत्वजातियोगाच्च रूपे रूपमिति स्मृतम् ॥२६॥

---

न हि परिच्छिन्नरूपाया विंशत्यादिसङ्ख्यायाः सामान्यरूपमनवधारितविशेषं बहुत्वं विशेषणमुपपद्यते । परिच्छिन्नं ह्यपरिच्छिन्नस्य विशेषणं दृष्टं लोके । 'नीलमुत्पलम्' इति, न तु अपरिच्छिन्नं परिच्छिन्नस्येति ।

तदेतत् सर्वमुपर्युक्तभाष्ये उपक्षिप्तम् = अन्तरुपन्यस्तम्, वैशद्यार्थमनुवदति— **संख्या नामेति** ।

अस्यार्थः —सङ्ख्या नाम = सङ्ख्येति नामधेयमात्रमेतत्, न सङ्ख्याऽस्ति = सङ्ख्याशब्दवाच्या काचिद् विशिष्टा अवयविनी सङ्ख्या नास्ति । तथापि एषा सङ्ख्या शब्दरूपा संज्ञा यथोच्यते । एवं रूपं रूपशब्दवाच्यमपि न रूपम् = न शुक्लादिवर्णव्यतिरिक्तं रूपम् । हि = यतः, सा = रूपशब्दरूपा, सितादिषु = शुक्लादिवर्णविषया संज्ञा । न हि शुक्लादिवर्णव्यतिरिक्तं वर्णान्तरं रूपेति संज्ञाया वाच्यमित्यर्थः ।

अयं भावः —यथा सितपीतनीलादिवर्णव्यतिरिक्तं सितादिवर्णकार्यविलक्षणकार्यजनकं रूपं नाम वर्णान्तरं नास्ति, सितादीनां वर्णानां रूपसामान्यनिमित्ता तु = रूपत्वात्मकसामान्यधर्मात्मकप्रवृत्तिनिमित्तिका तु रूपमित्येषा संज्ञा, तथा एकत्वादिरूपसङ्ख्याविशेषव्यतिरिक्ता सङ्ख्या नाम अवयविनी अन्या न विद्यते संख्या । संख्येति समाख्यामात्रमेषा सर्वेषामेकत्वबहुत्वादीनां सामान्यभूतमित्युक्तोऽर्थ इति ॥ २५ ॥

संख्यासंज्ञायाः —संख्यात्वसामान्यसमाख्यारूपत्वमेवोपपादयति—**संख्यानजातियोगादिति** ।

जातिनिमित्तोऽयमुभयरूपोऽपि व्यपदेशो भाष्यकारेण स्मृतः, न व्यतिरिक्तार्थनिबन्धन इति बहुतयी संख्या बहुतयं रूपमिति प्रयोगाभावः। न तर्हि भवति बहुतयं चित्ररूपमिति। भवति, चित्ररूपस्यावयविन एकत्वान्नीलाद्यवयवयोगोपपत्तेः।

एकं चित्रं चेति चित्रतरमिति चेदभेदसंविदावेदितत्वात् पदार्थाः प्रत्याख्यातुमशक्या एवावयविसामान्यादय इत्यद्वयसिद्धावस्माभिर्विचारितम्, ग्रन्थगौरवभयान्नेह प्रतन्यते। तत् तत एवावधार्यम्।

तथा च चित्रमपि रूपमेकमवयविसमवेतमित्यवयवबहुत्वेनावच्छेदमर्हत्येव। किञ्चित् किल चित्रं नीलं नीलिकारब्धद्व्यवयवम्, किञ्चित् पुनः सितरक्तपीतादिबहुविधावयवारब्धमित्यस्ति साफल्यं विशेषणस्य। गतमेतत्॥ २६॥

संख्याविषयमन्यद् विचार्यते। इह 'बहुषु बहुवचनम्' (पा० १०।४।२१)

---

अस्यार्थः—एकत्वद्वित्वबहुत्वादिका सङ्ख्या सङ्ख्यात्वरूपसङ्ख्या न, जातियोगात् तु संख्येति पदेन कथ्यते। रूपत्वजातियोगाच्च, रूपत्वजातियोगात् तु रूपे शुक्लादिवर्ण रूपमिति पदं स्मृतम्, गौतमकाणाददर्शनादिरूपया कोषरूपया च स्मृत्या बोधितमिति भावः।

अयं भावः— संख्यात्वरूपत्वजातिप्रवृत्तिनिमित्तकोऽयमुभयरूपोऽपि व्यपदेशः=एकत्वादिका सङ्ख्या इति शुक्लादिकं रूपमिति व्यपदेशो भाष्यकारेण स्मृतः, न व्यतिरिक्तार्थनिबन्धनः=नैकत्वादिपदार्थभिन्नसंख्यारूपार्थनिबन्धनः, न शुक्लादिवर्णव्यतिरिक्तरूपपदार्थनिबन्धनः, नाप्यवयवावयविभावनिबन्धनः, किन्तु सामान्यविशेषभावनिबन्धन इति बहुतयी सङ्ख्या, बहुतयं रूपमिति प्रयोगाभावः। तर्हि न भवति बहुतयं चित्ररूपमिति। भवतीति सन्तुष्य। चित्ररूपस्यावयविन एकत्वाद् नीलादिरूपबह्ववयवयोगोपपत्तेः।

एकं रूपं तदेव चित्रञ्चेति चित्रतरम्=अद्भुततरम्, चित्ररूपस्य बहुरूपसमुदायरूपत्वादिति चेत्, अभेदसंविदावेदितत्वात्=अभेदबुद्धिबोधितत्वाद् अवयविसामान्यादयः पदार्थाः प्रत्याख्यातुमशक्या एवेति अद्वयसिद्धौ=एतन्नामके ग्रन्थे स्वकृते हेलाराजेन विचारितम्। ग्रन्थगौरवभयान्नेह प्रतन्यते। तत् तत एवावधार्यम्।

किञ्चित् किल चित्रं नीलं नीलनीलतरनीलिकारब्धद्व्यवयवम्, किञ्चित् पुनर्नीलसितपीतादिबहुविधावयवारब्धमित्यस्ति बहुतयमिति चित्ररूपविशेषणस्य साफल्यमिति। गतमेतत्=तयपमधिकृत्य सङ्ख्याविषयको विचारो गत इति॥ २६॥

संख्याविषयकमन्यद् विचार्यते। इह "बहुषु बहुवचनम्" (पा० १०।४।२१)

इत्यादिना सङ्ख्या विभक्तिवाच्या विहिता। तत्र स्वशब्देनाभिहितायामस्यामेकादिभ्यो वचनग्रहणात् प्रथमा लभ्येत, द्वितीयादयस्तु कथम्?

तथा हि—कर्मादिष्वपि विभक्त्यर्थेष्ववश्यमेकत्वादयो निमित्तत्वेनोपादेया इत्युक्तत्वात् कर्मणि यदेकत्वमेकत्वाद्यवच्छिन्ने वा कर्मणीत्याश्रयणादनभिहितकर्माद्याश्रयेष्वेकत्वादिषु विभक्तय इत्यभिहितविषये तदभावादेकं द्वौ बहूनित्यादिकं कथमित्याशङ्क्याह—

**निमित्तमेक इत्यत्र विभक्त्या नाभिधीयते।**
**तद्वतस्तु यदेकत्वं विभक्तिस्तत्र वर्तते॥२७॥**

प्रथमासाधारणमिदं प्रतिसमाधानम्।

तथा हि—प्रातिपदिकार्थसमवेतायां संख्यायां प्रातिपदिकार्थे वा संख्या-

---

इत्यादिना संख्या विभक्तिवाच्यत्वेनोपदिष्टा। तत्र स्वशब्देन=एकद्व्यादिशब्देन अभिहितायामस्याम्=एकत्वद्वित्वादिसंख्यायाम्, एकद्व्यादिशब्देभ्यः प्रथमा लभ्येत, प्रातिपदिकार्थसूत्रे वचनग्रहणात्। वचनं हि तत्र संख्या। एकवचनद्विवचनादेः संख्यावाचकत्वात्। 'एकं द्वौ बहूनि पश्य' इत्यादौ द्वितीयादयस्तु कथम्। तथा हि—'कर्मादिषु विभक्तिवाच्येषु सत्स्वपि अवश्यमेकत्वादयो वाच्यतया द्वितीयादिविभक्तिनिमित्तत्वेनोपादेयाः, अन्यथा द्वितीयादिषु वचननियमानुपपत्तेः' इत्युक्तत्वात्। कर्मणि यदेकत्वम्, एकत्वाद्यवच्छिन्ने वा कर्मणि इति विशेष्यविशेषणभावस्य कामचारेणाश्रयणात्, अनभिहितकर्मादिवृत्तिषु एकत्वादिषु द्वितीयादिविभक्तय इति अभिहितकर्मादिविषये 'एकं वनं दृष्टम्, द्वौ घटौ दृष्टौ, बहूनि वनानि दृष्टानि' इत्यादिकं कथम्? अत्र हि दृष्टपदगतेन क्तप्रत्ययेन कर्माभिहितम्, एकद्व्यादिपदैश्च संख्या, एकत्वादिका एकादिपदप्रवृत्तिनिमित्तभूताऽभिहिता इत्याशङ्क्याह—**निमित्तमेक इत्यत्रेति।**

अस्यार्थः—एक इत्यत्रास्ति एकत्वद्वयम्। तत्रैकमेकशब्दस्य प्रवृत्तिनिमित्तभूतम्, एकशब्दरूपप्रातिपदिकवाच्यम्, अपरन्तु एकत्वं सुविभक्तिवाच्यम्। तत्र प्रवृत्तिनिमित्तरूपमेकत्वं सुविभक्त्या नाभिधीयते, एकशब्देनोक्तत्वात्। "उक्तार्थानामप्रयोगः" इति न्यायात्।

तद्वतस्तु=एकपदार्थस्यैकत्ववतस्तु प्रवृत्तिनिमित्तरूपैकत्वविशिष्टस्य तु यदेकत्वमपरं तत्र सुविभक्तिर्वर्तते। तस्मिन्नेकत्वे एकशब्दप्रवृत्तिनिमित्ताद् भिन्ने सुविभक्तेर्वृत्तिरित्यर्थं इति।

अयं भावः—'एकः' इत्युदाहरणस्य सुविभक्तिविषयकत्वेऽपि स्वादित्रिकावयवप्रथमाविभक्तिसाधारणमिदं प्रतिसमाधानम्, उदाहरणस्योपलक्षणत्वात्।

तथा हि—प्रातिपदिकार्थसमवेतायां संख्यायां पक्षान्तराश्रयेण सङ्ख्या-

सम्बन्धिनि पक्षान्तराश्रयेण वा प्रथमायां विधीयमानायामेकादिशब्दस्य प्रवृत्ति-निमित्तमेकत्वादि न तयाऽभिधीयते, प्रातिपदिकेनैवैकादिशब्देन तस्याभिधानात्। तद्वतः प्रवृत्तिनिमित्तभूतैकत्वाद्यवच्छिन्नस्य प्रातिपदिकार्थस्य यदन्यदेकत्वादि, तत्र वाच्ये प्राधान्येन प्रकृत्यर्थविशेषणत्वेन वा विभक्तिः प्रथमा विधीयत इति प्रातिपदिकेन स्वनिमित्तभूतैकत्वाद्यभिधानेऽपि तदपरैकत्वाद्यभिधानाय प्रवर्तत एव, एको द्वौ बहव इत्येकशब्दस्योदाहरणार्थत्वात्। तद्वतस्तु यदेकत्वमित्याह। द्वित्वाद्यपि हि गृह्यते द्वयादिशब्दविषयम्।

तथा विभक्तिग्रहणस्य द्वितीयादिसाधारणस्योपादानाद् द्वितीयाद्यपि प्रातिपदिकेनानुक्तमेकत्वादि कथयतीत्युक्तं भवति एकं द्वौ बहून् पश्येत्यादौ।

न ह्यत्र प्रातिपदिकेन कर्मादिगतमेकत्वादि स्पृष्टमिति तद्विषया द्वितीयाद्या विभक्तयः॥ २७॥

ननु च नात्र प्रकृतिप्रत्ययवाच्यं संख्याद्वयमवधार्यत इत्याह—

एकस्य प्रचयो दृष्टः समूहश्च द्वयोस्तथा।
निमित्तव्यतिरेकेण संख्याऽन्या भेदिका ततः॥२८॥

---

सम्बन्धिनि प्रातिपदिकार्थे वा प्रथमायां विधीयमानायामेकादिशब्दस्य प्रवृत्तिनिमित्त-मेकत्वादि न प्रथमयाऽभिधीयते, प्रातिपदिकेनैवैकादिशब्देनैकत्वादेरभिधानात्। तद्वतः प्रवृत्तिनिमित्तभूतैकत्वाद्यवच्छिन्नस्य प्रातिपदिकार्थस्य यदेकत्वादि, प्रवृत्ति-निमित्तभूतादन्यत् तत्र प्राधान्येन, प्रागुक्तरीत्या प्रकृत्यर्थविशेषणत्वेन वा वाच्ये प्रथमा-विभक्तिर्विधीयत इति प्रातिपदिकेन स्वप्रवृत्तिनिमित्तभूतैकत्वाद्यभिधानेऽपि तदन्यै-कत्वाद्यभिधानाय प्रवर्तत एव सा। कारिकायामेकशब्दस्य —'एको द्वौ बहवः' इत्युदाहरणार्थत्वात्, तद्वतस्तु यदेकत्वमित्याह। तेन द्वयादिशब्दवाच्यं द्वित्वाद्यपि ह्यत्र गृह्यते।

तथा कारिकायां विभक्तिशब्दस्य द्वितीयादिसाधारणस्योपादानात् प्रथमावद् द्वितीयाद्यपि प्रातिपदिकेनानुक्तमेकत्वादि कथयतीत्युक्तं भवति 'एकं द्वौ बहून् पश्य' इत्यादौ।

न ह्यत्र कर्मादिगतमेकत्वादिप्रातिपदिकेन वाचकत्वेन स्पृष्टमिति तद्विषयाः=कर्मादिगतैकत्वादिवाचिका द्वितीयाद्या विभक्तय इति॥ २७॥

ननु च नात्र 'एकः, द्वौ, बहवः' इत्यत्र प्रकृतिप्रत्ययवाच्यं संख्याद्वयमवधार्यत इत्याशङ्क्याह—एकस्य प्रचय इति।

अस्यार्थः —एकस्य वस्तुनोऽन्यवस्तुसहभावे सति प्रचयः समुच्चयो दृष्टः, एकश्च एकश्चेति। इयमेवापेक्षाबुद्धिरित्युच्यते द्वित्वसंख्याजनिका। तदुक्तम्—

"अनेकैकत्वबुद्धिर्या साऽपेक्षा बुद्धिरिष्यते"। इति।
"अपेक्षाबुद्धिजन्यास्तु सर्वे द्वित्वादयो मताः"॥ इति च।

इहैकस्य तदपरेण समुच्चीयमानस्य प्रचयो दृष्टः। तथा हि सति प्रचयेऽन्य-साहभाव्ये द्वित्वादिसंख्या जायन्ते. द्वयोश्च समूहः समुदायो भेदो दृष्टः। तद् यथा द्विपुत्र इत्यादौ निवृत्तेऽपि द्विवचने वृत्तावसाववगम्यतेऽन्तरङ्गः। ततः प्रचय-समूहदर्शनाद्धेतोः प्रातिपदिकार्थस्य यन्निमित्तमेकत्वादि, एकादिशब्दविषयम्, तद्व्यतिरिक्ता अन्या विभक्तिवाच्या एकत्वादिसंख्या विद्यते। बहूनामपि समूहो दृष्ट इति योजनीयं बहुपुत्र इत्यादौ तदीयम्। विशेषावस्थापनेन प्रातिपदिकार्थस्य भेदिकावच्छेदिका संख्या विभक्तिवाच्याऽत्रावधार्यत एव।

तथा हि—प्रातिपदिकात् प्रचिताप्रचितसाधारणमेकत्वमवगम्यते।

---

इयञ्चापेक्षाबुद्धिरनेकैकत्वसत्त्व एव सम्भवति। तथा द्वयोः—द्वयोर्द्वयोः समूहश्च दृष्टः। तद्यथा—'रणे द्वन्द्वं सङ्गता' इति। द्वौ द्वौ सङ्गता इत्यर्थः। ततश्च समूहभेदेन द्वित्वभेदः सिद्धः।

तत एकत्वस्य द्वित्वस्य च भेददर्शनात्, निमित्तव्यतिरेकेण वैशिष्टयार्थे प्रकृत्यादित्वात् तृतीया। निमित्तव्यतिरेकविशिष्टा, प्रवृत्तिनिमित्तैकत्वादिव्यतिरिक्ता अन्या एकत्वादिसङ्ख्या तद्वतः प्रातिपदिकार्थस्य भेदिका = परिच्छेदिका इति।

अयं भावः—इह = व्यवहारे, एकस्य पदार्थस्य तदपरेण = ततोऽन्येन समुच्चीय-मानस्य प्रचयः = समुच्चयो दृष्टः। तथा हि—एकस्यान्यपदार्थसहभावरूपे समुच्चये सति द्वित्वादिसङ्ख्या जायन्ते। धर्मिसमुच्चयश्च धर्मसमुच्चयं विना न सम्भवतीति एकत्ववतः समुच्चय एकत्वस्यापि समुच्चय इति रीत्या एकत्वभेदो व्यवहारे दृष्टः। द्वयोश्च समूहः समुदायोऽर्थात् समुदायभेदो दृष्टः। तद्यथा द्विपुत्र इत्यादौ वृत्तौ निवृत्तेऽपि द्विवचनेऽसौ = द्वयोः समूहः प्रातिपदिकार्थमात्रलभ्यत्वादन्तर-ङ्गोऽवगम्यते। विभक्तिलभ्यस्तु विभक्त्यभावान्नावगम्यते, विग्रहवाक्ये तु सोऽपि प्रतीयते। ततः प्रचयदर्शनात् = समूहदर्शनाच्च हेतोः प्रातिपदिकार्थस्य यत् परिच्छेदकतया ज्ञापकनिमित्तमेकत्वादि एकादिशब्दवाच्यं तद्व्यतिरिक्ता, अन्या विभक्तिवाच्या एकत्वादिसंख्या विद्यते। बहूनामपि समूहो दृष्ट इति योजनीयं 'बहुपुत्रः' इत्यादौ। तदियं प्रचिताप्रचितसाधारणैकत्ववतः प्रातिपदिकार्थस्य विशेषा-वस्थापनेन = अप्रचितैकत्ववति विशेषेऽवस्थापनेन भेदिकाऽवच्छेदिका संख्या विभक्तिवाच्याऽत्र = एक इत्यादाववधार्यत एव।

तथा हि—प्रातिपदिकात् प्रचिताप्रचितसाधारणमेकत्वमवगम्यते। विभक्तेस्तु प्रातिपदिकार्थे अप्रचितैकत्वरूपस्य विशेषस्य निश्चयः। विभक्तौ सत्यां पदत्वसम्प-त्त्याऽर्थस्य परिसमाप्तेः, एक इत्यप्रचितमिदमेकत्वमिति प्रत्ययात्। एवम् 'द्वौ बहवः" इत्यत्र प्रातिपदिकात् तदर्थस्यासमूहरूपता प्रतीयते, विभक्त्या तु

विभक्तेस्तु विशेषनिश्चयोऽर्थस्य परिसमाप्तेरेक इत्यप्रचितमिदमेकत्वमिति। एवं द्वौ बहव इत्यसमूहरूपता।

यद्येवं प्रचितविषये एकत्वे विभक्तिर्न स्याद् एकश्चेति। नैतन्न्याय्यम्, साधारणे एकत्वे प्रातिपदिकवाच्ये विभक्तिर्विशेषं द्योतयतीत्युच्यते। तथा च विभक्त्यात्र द्वित्वाद्युपजनहेतुतामप्रतिपद्यमानमप्रचितमेवैकत्वमावेद्यते। पश्चात् तु पदार्थे पर्यवसिते चशब्दः प्रचयं द्योतयति पदार्थपृष्ठपातिनम्, न तु प्रातिपदिकार्थगतम्।

प्रातिपदिकार्थप्रचयविवक्षायां हि सहविवक्षाविषय एकशब्दाप्रयोग इति ॥ २८ ॥

'संख्याया अन्यपदार्थत्वात्' इत्यादिना एकशेषप्रत्याख्याने तत्समानार्थ-द्व्यादिशब्दप्रयोगो द्वित्वाद्युपजनात् प्रातिपदिकार्थप्रचयविषये समयाद् विभक्ति-

---

प्रातिपदिकार्थे द्व्यवयवकसमूहरूपता प्रतीयत इति द्वित्वभेदः। एवं बहुत्वभेदोऽपि उपपादनीयः।

यद्येवं चकारेण प्रातिपदिकार्थगतैकत्वप्रचयेऽभिहिते तद्विरोधात् पुनस्तत्रा-प्रचितैकत्वबोधिका विभक्तिर्न स्याद् एकश्चेति। नैतन्न्याय्यम्, प्रचिताप्रचित-साधारण एकत्वे प्रातिपदिकवाच्ये सति विभक्तिर्विशेषमप्रचितमेकत्वं द्योतयती-त्युच्यते। तथा च विभक्त्याऽत्र द्वित्वाद्युत्पत्तिहेतुतामप्रतिपद्यमानमप्रचितमेवैकत्व-मावेद्यते। विभक्त्युत्पत्तेः पश्चात् तु पदत्वे सम्पन्ने पदार्थे पर्यवसिते = परिसमाप्ते चशब्दस्तत्र पदार्थगतैकत्वगतं प्रचयं द्योतयति पदार्थप्रचयद्योतनपृष्ठपातिनम्, न तु प्रातिपदिकार्थार्थगतं प्रचयम्।

तदयं निष्कर्षः -- प्रातिपदिकेन प्रचिताप्रचितसाधारणमेकत्वमभिधीयते। विभक्त्या त्वप्रचितमेकत्वम्, चकारेण तु पदार्थगतमेकत्वमिति। सहविवक्षा-विषये प्रातिपदिकार्थप्रचयविवक्षायां ह्येकशब्दप्रयोग एवं न भवति। एकश्चैकश्चै-काविति। किन्तु तत्रापेक्षाबुद्धया द्वित्वोपादनाद् 'द्वौ' इति प्रयोग एव भवतीति न तत्रापि अस्या विभक्त्यनुपपत्तिलक्षणाया आशङ्काया अवकाश इति ॥ २८ ॥

इत्येवम् "संख्याया अन्यपदार्थत्वात्" ( एकश्चैकश्चेमौ द्वौ इत्यत्र द्वित्व-संख्याया द्विपदार्थत्वात् ) इत्यादिना भाष्येण 'एकौ' इति प्रयोगाभावोपपादनेन एकशेषप्रत्याख्याने तत्समानार्थः = एकौ इत्येतत्समानार्थद्व्यादिशब्दप्रयोगः 'द्वौ' इति, अपेक्षाबुद्धया तत्र द्वित्वाद्युपजनात्।

ननु यत्र प्रातिपदिकार्थस्य प्रचयो विवक्ष्यते, न तु पदार्थस्य, तत्र एकश्चेति विभक्तिः कथं भविष्यति, चकारसाहाय्येन प्रातिपदिकस्य प्रचितैकत्वबोधकत्वात्, विभक्तेश्च प्रागुक्तरीत्याऽप्रचितैकत्वबोधकत्वात्। प्रचितैकत्वाप्रचितैकत्वयोर्विरोधा-

र्भविष्यति। यदि सामयिकी, नियोगतोऽन्या अपि कस्मान्न भवन्ति, कर्मादीनामभावादित्यपरमत्र प्रतिविधानं भाष्य उक्तम्।

तथा हि—'न केवला प्रकृतिः प्रयोक्तव्या' इति, 'परश्च' (पा० ३।१।२) इति समयपालनार्थं विभक्तौ विधीयमानायामर्थविशेषानाश्रयणाद् वचनसङ्करः प्राप्नोतीति यथायथमर्थानुगुण्येन विभक्तयोऽङ्गीकृताः। तथा चाभिहितेऽपि स्वार्थे एकादिशब्देभ्यस्तदानुगुण्येनैव प्रकृत्यर्थानुविधायिन्यो विभक्तय इत्युपगतं भवति। स्वाभाविकत्वादर्थाभिधानस्य विभक्त्या सह प्रकृतिः स्वार्थमभिधत्त इत्ययमेव नियमः परवचनेन प्रतिपादितः।

तदेतद् व्याचष्टे—

तदेकमपि चैकत्वं विभक्तिश्रवणादृते।
नोच्यते तेन शब्देन विभक्त्या तु सहोच्यते ॥२९॥

स्वाभाविकं सहाभिधानं यथायथं सर्वत्रैव विभक्तिविधाने प्रतिपाद्यते।

---

दिति चेत्, सत्यम्, प्रातिपदिकार्थप्रचयविषये समयात् 'परश्च' इति नियमरूपाद् विभक्तिर्भविष्यति स्वार्थे इति समाधाय, यदि सामयिकी विभक्तिस्तत्र तदा नियोगत उक्तसमयरूपाद् नियमाद् अन्या अपि द्वितीयाद्या विभक्तयस्तत्र कस्मान्न भवन्ति इत्याशङ्किते, 'कर्मादीनामभावान्नैकश्च' इत्यत्र द्वितीयाद्या विभक्तय इति अपरम् = प्रातिपदिकार्थप्रचयविवक्षायां हि सहविवक्षाविषय एकशब्दाप्रयोग इत्यस्मात् समाधानादन्यत्, अत्र समाधानं भाष्ये उक्तम्।

तथा हि—'न केवला प्रकृतिः प्रयोक्तव्या' इत्यस्य 'परश्च' इति सूत्रबोधितस्य समयस्य पालनार्थं विभक्तौ विधीयमानायामेकत्वद्वित्वादिरूपार्थविशेषानाश्रयणाद् एकवचनद्विवचनादिसङ्करः प्राप्नोतीति यथायथमेकत्वद्वित्वाद्यर्थानुगुण्येन विभक्तयोऽङ्गीकृताः। तथा चाभिहितेऽपि स्वार्थे = विभक्त्यर्थे एकादिशब्देभ्यस्तदानुगुण्येनैव = प्रकृत्यर्थानुगुण्येनैव विभक्तयो भवन्ति, विभक्तीनां प्रकृत्यर्थानुविधायित्वादिति स्वीकृतं भवति। स्वाभाविकत्वादर्थाभिधानस्य = विभक्त्या सह स्वार्थाभिधानस्य प्रकृतेः स्वभावसिद्धत्वात्, 'विभक्त्या सह प्रकृतिः स्वार्थमभिधत्ते' इत्ययमेव नियमः परवचनेन = 'परश्च' (३।१।२) इति सूत्रेण प्रतिपादितः।

तदेतत् सर्वं भावतो व्याचष्टे—तदेकमपीति।

अस्यार्थः—एक इत्यत्र प्रातिपदिकेन विभक्त्या चैकमेवैकत्वमुच्यते। तदेकमपि चैकत्वं विभक्तिप्रातिपदिकाभ्यामभिधीयमानं विभक्तिश्रवणादृते विभक्तिश्रवणाभावे, तेन शब्देन एकेति प्रातिपदिकेन नोच्यते, नाभिधातुं शक्यते, विभक्त्या सह तूच्यते तदेव तेनेति।

अयं भावः—स्वाभाविकं प्रकृतेर्विभक्त्या सह स्वार्थाभिधानं यथायथं सर्वत्रैव

वृत्तौ तु लुका केवलेनाभिधानं ज्ञाप्यते। शक्तिविशेषो हि शब्दानां वृत्तावुपजायत इति केवलस्याप्यभिधानं न विरुध्यते। एवं सम्बुद्धिलोपेऽपि केवलप्रयोगः स्वाभाविकः ।। २९ ।।

अन्योऽप्यत्र परिहारोऽभिहितो भाष्ये—'संख्या नामेयं परप्रधाना। संख्येयमनया विशेष्यम्। यदि चात्र प्रथमा न स्यात्, संख्येयमविशेषितं स्यात्' इति। एतद् व्याचष्टे—

अन्वयव्यतिरेकौ न यदि स्याद् वचनान्तरम्।
स्यातामसति तस्मिंश्च प्रकृत्यर्थो न कल्प्यते ।।३०।।

वृक्षः, वृक्षौ, वृक्षा इत्यादौ प्रकृतिप्रत्यययोरन्वयव्यतिरेकौ स्तः। तथा चोक्तम्—

"दृष्टो ह्यव्यतिरेकेऽपि व्यतिरेकोऽन्वये सति"। इत्यादि।

---

विभक्तिविधाने प्रतिपाद्यते। 'एकपुत्रो द्विपुत्रो' इत्यादिवृत्तौ तु विभक्तिलुका केवलेनापि प्रातिपदिकेन स्वार्थाभिधानं ज्ञाप्यते। शब्दानां वृत्तिघटकानां विग्रहवाक्यघटकेभ्यस्तेभ्य एव शब्देभ्यो विलक्षणः शक्तिविशेषो वृत्तावुपजायत इति केवलस्यापि=विभक्तिरहितस्यापि प्रातिपदिकस्याभिधानम्,=स्वार्थाभिधायकत्वं न विरुध्यते। एवं सम्बुद्धिलोपेऽपि 'हे हरे' इत्यादौ केवलस्य=विभक्तिरहितस्य प्रयोगः स्वाभाविक इति ।। २९ ।।

अन्योऽप्यत्र='एको द्वौ बहवः' इत्यत्र विभक्त्यनुपपत्तिविषये परिहारोऽभिहितो भाष्ये—"संख्या नामेयं परप्रधाना। संख्येयमनया विशेष्यम्। यदि चात्र प्रथमा न स्यात्, संख्येयमविशेषितं स्यात्" इति। एतद् भाष्यं व्याचष्टे—अन्वयव्यतिरेकौ नेति।

अस्यार्थः—'वृक्षः, वृक्षौ, वृक्षाः' इत्यादौ प्रकृतिप्रत्यययोरन्वयव्यतिरेकौ स्तः, तत्तदर्थनिर्णायकौ। यदि वृक्षशब्दाद् वचनान्तरम्=एकवचनातिरिक्तं वचनं द्विवचनादिकं स्यात्, तदैव तौ स्याताम्। 'एकः' इत्यादौ तस्मिन् वचनान्तरेऽसति चान्वयव्यतिरेकानिश्चयात् प्रकृत्यर्थं एकत्वं प्रत्ययार्थाद् विवेकेन न कल्प्यते नावधार्यते।

तथा चायमत्र निष्कर्षः—'एकः' इत्यादौ वचनान्तराभावेनान्वयव्यतिरेकानिश्चयाद् एकत्वस्य प्रकृतिप्रत्ययसमुदायार्थत्वावधारणेन एकशब्दाद् यदि प्रथमा न स्यात् तदा प्रकृतिमात्रेणैकत्वानुक्त्या संख्येयं तेन न विशेषितं स्यादिति।

अयं भावः—'वृक्षः, वृक्षौ, वृक्षाः' इत्यादौ प्रकृतिप्रत्यययोरन्वयव्यतिरेकौ स्तस्तत्तदर्थनिश्चायकौ। तथा चोक्तम्—

'दृष्टो ह्यव्यतिरेकेऽपि व्यतिरेकोऽन्वये सति' इत्यादि।

ततश्च—

"तत्र योऽन्वेति यं शब्दमर्थस्तस्य भवत्यसौ" ॥

इति भेदेनापोद्धारार्थकल्पना युक्ता। इह त्वेकशब्दादेकवचनमेव, द्विशब्दाद् द्विवचनमेव बहुवचनमेव, न वचनान्तरमित्यसति व्यतिरेकेऽन्वयस्यानिश्चयात् प्रकृत्यर्थो विवेकेन नावधार्यते। असति हि वचनान्तरेऽन्वयव्यतिरेकौ न स्त इति एकादिशब्दलक्षणायाः प्रकृतेरभिधेयं प्रत्ययार्थव्यतिरिक्तं न सम्भवत्यत्र, येन संख्येयमवच्छिन्द्यात् प्रकृतिः केवला। तथा च वृक्षादावेकवचनादीनामन्वयव्यतिरेकोपपत्तावर्थनिर्धारणादिह तदभावे प्रकृतिप्रत्ययसमुदायवाच्योऽयमर्थः, येन संख्येयो विशेष्यते संख्यालक्षणेन। तथा चानुक्तार्थत्वादेव विभक्तिरत्रेत्युक्तं भवति।

वृत्तौ त्वेकस्या एव प्रकृतेरेकराजादावुपसर्जनार्थोऽवगम्यते प्रधानार्थसम्भेदमापन्न इति विभक्तिश्चरितार्थत्वान्निवर्तते।

---

अस्यार्थः—हि = यतः, अव्यतिरेकेऽपि 'वृक्षः' इत्यादौ वस्तुतः प्रकृतिप्रत्ययसमुदाये प्रकृतिप्रत्यययोर्व्यतिरेकाभावेऽपि = पार्थक्याभावेऽपि तत्रान्वये सति-तत्सत्त्वे तत्सत्त्वमन्वय इत्येवंलक्षणके प्रकृतिप्रत्यययोरपोद्धारकल्पनया कल्पितेऽन्वये सति व्यतिरेकः—तद्भावे तद्भाव इत्येवंलक्षणको व्यतिरेकनियमः कल्पितो दृष्ट इति।

ततश्च—

'तत्र योऽन्वेति यं शब्दमर्थस्तस्य भवत्यसौ।'

अस्यार्थः—तत्र = वृक्ष इत्यादौ प्रकृतिप्रत्यययोः अपोद्धारकल्पनया स्वेन स्वेनार्थेन सह कल्पितान्वयव्यतिरेकावधारणे सति योऽर्थः यं शब्दमन्वेति = येन शब्देन सह यस्यार्थस्यान्वयः प्रतीयते, असौ तस्य शब्दस्यार्थो भवतीति। इत्येवं भेदेन पदार्थाद् अपोध्रियमाणस्य प्रकृत्यर्थस्य प्रत्ययार्थस्य च कल्पना युक्ता। वृक्ष इत्यत्र वृक्षः प्रकृत्यर्थः, एकत्वं प्रत्ययार्थं इति। इह तु = 'एकः' इत्यादौ तु एकशब्दादेकवचनमेव, द्विशब्दाद् द्विवचनमेव, बहुशब्दाद् बहुवचनमेव न वचनान्तरमिति नियमाद् वचनान्तराभावादसति व्यतिरेकेऽन्वयस्यानिश्चयात् प्रकृत्यर्थः प्रत्ययार्थाद् विवेकेन = भेदेन नावधार्यते। एक इत्यादौ असति हि वचनान्तरेऽन्वयव्यतिरेकौ न स्त इति एकादिशब्दलक्षणायाः प्रकृतेरभिधेयं प्रत्ययार्थव्यतिरिक्तं न सम्भवत्यत्र = एक इत्यादौ, येन केवला प्रकृतिः संख्येयमवच्छिन्द्यात्। तथा च वृक्षादौ वचनान्तरसत्त्वेन एकवचनादीनामन्वयव्यतिरेकोपपत्तावेकत्वाद्यर्थनिर्धारणादिह = एक इत्यादौ तदभावे = वचनान्तराभावे 'एकः' इति प्रकृतिप्रत्ययसमुदायवाच्योऽयमेकत्वादिसंख्यारूपोऽर्थः, येन संख्यालक्षणेनार्थेन संख्येयो विशेष्यते। तथा च प्रकृत्याऽनुक्तार्थत्वादेव प्रथमा विभक्तिरत्र = 'एकः' इत्यादावित्युक्तं भवति।

वृत्तौ त्वेकस्याः = केवलायाः प्रकृतेरेव एकशब्दरूपाया एकराजादिसमासे प्रधाने राजपदार्थे उपसर्जनीभूत एकत्वादिसंख्यारूपोऽर्थो विशेषणतया प्रधानराज-

यथा हि विना भावप्रत्ययं वृत्तौ तदर्थावगतिर्निराकुलस्तिष्ठति, सधीरमुवाचेत्यादौ। एवमत्र विभक्तिमन्तरेणापि तत्सन्निधानदृष्टमेकत्वाद्युपसर्जनार्थोऽवगम्यत एव।

तदेवं पूर्वत्र परिहारे प्रकृत्यर्थानुवादकत्वमभिमतम्। सत्यपि प्रकृत्यर्थे यथायथं तदर्थानुवादकत्वेन वचनानामुक्तत्वात्। इह तु साधारणार्थत्वमभिमतं प्रकृतिप्रत्ययसमुदायवाच्येनार्थेन संख्येयविशेषणस्योक्तत्वादिति परिहारयोर्भाष्यकारोक्तयोर्विशेषः ॥ ३० ॥

अन्योऽप्यत्र भाष्ये परिहार उक्तः—'उभयवचना एवैते, द्रव्यं चैवाहुर्गुणं च। यत् सोऽसौ गुणस्तस्यानुक्ता एकत्वादय इति प्रथमा भविष्यति' इति। एतद् व्याचष्टे—

**एकत्वमेक इत्यत्र शुद्धद्रव्यविशेषणम्।**
**सगुणस्तु प्रकृत्यर्थो विभक्त्यर्थेन भिद्यते ॥३१॥**

---

पदार्थसम्भेदमापन्नोऽवगम्यत इति विभक्तिश्चरितार्थत्वात् = अभिहितार्थत्वात् निवर्तते।

यथा हि विना वृत्तौ तदर्थावगतिः 'निराकुलस्तिष्ठति, सधीरमुवाच' इत्यादौ, एवमत्र = एकराजादौ विभक्तिमन्तरेणापि तत्सन्निधानदृष्टमेकत्वादि उपसर्जनार्थोऽवगम्यत एव, वृत्तिस्वाभाव्यात्।

तदेवं पूर्वत्र परिहारे प्रकृत्यर्थानुवादकत्वं विभक्तेरभिमतम्, एक इत्यादौ एकत्वादिरूपे प्रकृत्यर्थेऽभिहिते सत्यपि यथायथं तदर्थानुवादकत्वेन वचनानामुक्तत्वात्।

इह तु प्रकृतिप्रत्ययसाधारणार्थत्वमेकत्वादेरभिमतम्, प्रकृतिप्रत्ययसमुदायवाच्येनार्थेन एकत्वादिना संख्येयविशेषणस्योक्तत्वादिति भाष्यकारोक्तयोः परिहारयोर्विशेष इति ॥ ३० ॥

अन्योऽप्यत्र भाष्ये परिहार उक्तः—"उभयवचना एवैते, द्रव्यं चैवाहुर्गुणश्च। यत् सोऽसौ गुणस्तस्यानुक्ता एकत्वादय इति प्रथमा भविष्यति" इति।

अस्यार्थः—एते = एकद्व्यादयः शब्दा उभयवचनाः = विशिष्टद्रव्यवचनाः। तत्र विशेष्यतया द्रव्यमाहुः, प्रवृत्तिनिमित्ततया एकत्वादिगुणञ्चाहुः। तदेव व्याख्यातम्—द्रव्यं चैवाहुर्गुणञ्चेति। यत्सोऽसौ गुणः—एकत्वादिसङ्ख्यानरूपो गुणः, तस्यानुक्ता एकत्वादय इति प्रथमा भविष्यतीति। एकत्वेऽप्यस्ति एकत्वम्—एक एवायं घट इति। तथा एकत्वे द्वित्वमपि—एकश्चैकश्चेतीमौ द्वाविति। तथा एकत्वेऽस्ति बहुत्वं त्रित्वादिकं वा तथैवापेक्षाबुद्धिजन्यम्। तदत्रैकत्वगतस्यैकत्वस्यानुक्त्या एक इत्यत्र प्रथमा भविष्यतीति।

तदेतद् भाष्यं व्याचष्टे—एकत्वमेक इत्यत्रेति।

शुद्धस्य द्रव्यस्य पूर्वं विशेषणाद् बुद्धचा निर्ज्ञातस्य विशेषणभावमापन्न-मेकत्वमेक इति प्रातिपदिकेनाभिधीयते। उक्तशब्दो ह्येकत्वविशिष्टं द्रव्यमाह, न संख्यानमात्रमपि विंशत्यादिवत्। अत एवोभयवचनत्वं विशिष्टवचनत्वं विवक्षितं भाष्ये। न तु केवलगुणाभिधानं शुक्लादिवदेषामुपपद्यते।

यदि वा 'द्वयेकयोः...' (पा० १।४।२२) इति निर्देशात् संख्यानमात्र-वचनत्वमपीत्युभयवचनत्वं स्पष्टम्। तदस्यैकशब्दवाच्यस्य एकत्वविशिष्टस्य द्रव्यस्य विभक्तिवाच्येनैकत्वेन विशेषणात् सगुणः प्रातिपदिकार्थो विभक्त्यर्थेन भिद्यते विशेषेऽवतिष्ठते। एकत्वविशिष्टोऽयमेकोऽर्थः, न तु गुणान्तरविशिष्ट इति प्रकृतिवाच्यमन्तरङ्गम्, विभक्तिवाच्यं तु बहिरङ्गं बाह्यमिति द्वयादीनां च द्विपुत्र इत्यादौ बाह्यो भेदो निवर्तते विभक्तिवाच्य इति वक्ष्यति।

---

अस्यार्थः—एक इत्यत्र द्वे एकत्वे, तत्रैकमेकत्वं प्रकृत्यर्थभूतं शुद्धद्रव्य-विशेषणम्। सगुणस्तु प्रचिताप्रचितसाधारणैकत्वसङ्ख्यानरूपगुणविशिष्टद्रव्यरूपस्तु प्रकृत्यर्थं एकशब्दार्थः, विभक्त्यर्थेन अप्रचितैकत्वरूपेण भिद्यते = विशिष्यते व्यावर्त्यंत इति।

अयं भावः—एकत्वेन विशेषणात् पूर्वं शुद्धस्य द्रव्यस्य शाब्देतरया मानस्या बुद्धया निर्ज्ञातस्य विशेषणभावमापन्नमेकत्वमेक इति प्रातिपदिकेनाभिधीयते। उक्तशब्दो हि = एकशब्दो हि एकत्वविशिष्टं द्रव्यमेवाह—न सङ्ख्यानमात्रमपि विंशत्यादिवत्। विंशत्यादयो हि कदाचित् सङ्ख्यानमात्रमाहुः—ब्राह्मणानां विंशतिरिति।

कदाचित्तु सङ्ख्यानविशिष्टं द्रव्यमाहुः—'विंशतिर्ब्राह्मणाः' इति। एकशब्द-स्तु सङ्ख्यानविशिष्टं द्रव्यमेवाह, न तु एकत्वरूपसङ्ख्यानमात्रमपि। अत एव—प्रागुक्तभाष्ये उभयवचनत्वं विशिष्टवचनत्वं विवक्षितम्, न तु शुक्लादिशब्दवदे-षामेकद्वयादिशब्दानां केवलगुणाभिधानमुपपद्यते।

यदि वा "द्वयेकयोः..." (पा० १।४।२२) इति निर्देशात् सङ्ख्यानमात्रवचन-त्वमपि = केवलैकत्वरूपगुणवचनत्वमपि एकादिशब्दानाम्। अन्यथाऽत्र सङ्ख्येयपरत्वे द्वयेकेषामिति स्यात्।

एवञ्च विंशत्यादिवदुभयवचनत्वमेकादिशब्दानां सिद्धम्। तदस्यैकशब्द-वाच्यस्य प्रचिताप्रचितसाधारणैकत्वविशिष्टस्य द्रव्यस्य विभक्तिवाच्येनाप्रचि-तैकत्वेन विशेषणात् सगुणः प्रातिपदिकार्थो विभक्त्यर्थेन तेन भिद्यते विशेषेऽवतिष्ठते। एकत्वविशिष्टोऽयमेकोऽर्थो न तु गुणान्तरविशिष्टः = न तु एकत्वरूपगुणान्तरविशिष्ट इति प्रकृतिवाच्यमन्तरङ्गमेकत्वम्, विभक्तिवाच्यन्तु बहिरङ्गं बाह्यमिति एकराजादौ एकत्वविशिष्टस्य द्रव्यस्य, 'द्विपुत्रः' इत्यादौ च द्वयादीनां विभक्तिलुका बाह्यो भेदो निवर्तते विभक्तिवाच्य इति वक्ष्यति।

अन्ये तु शुद्धं च द्रव्यविशेषणं चेति समाहारे द्वन्द्वं मत्वा संख्यानमात्रप्रधानं संख्येयोपसर्जनं चैकत्वं संख्यासंख्येयसामान्यरूपं प्रातिपदिकेनोच्यते। सह गुणेन संख्यानेन यो वर्तते प्रातिपदिकार्थः, स विभक्तिवाच्येन भिद्यते अवच्छिन्नः प्रकाश्यत इति विभक्त्यन्तवाच्यं संख्येयं प्राधान्येनेति व्याचक्षते।

यस्मिन् द्रव्ये स्थितो गुणः संख्यानम्, तस्यानुक्ता एकत्वादयो द्रव्यावच्छेदितया नोक्ता इति चात्र भाष्यार्थः ॥ ३१ ॥

ननु विभक्त्यन्तेन संख्येयस्य प्रतिपादनात् केवलस्य च प्रयोगाभावाद् गुणमात्रवृत्तित्वं कथमेकादीनामवधार्यत इत्याह—

द्व्येकयोरिति निर्देशात् सङ्ख्यामात्रेऽपि सम्भवः।
एकादीनां प्रसिद्ध्या तु संख्येयार्थत्वमुच्यते ॥३२॥

'द्व्येकयोः···' (पा० १।४।२२) इति द्विवचननिर्देशाद् द्वित्वैकत्वयोर्द्वित्व-

---

अन्ये तु शुद्धद्रव्यविशेषणमित्यत्र शुद्धश्च द्रव्यविशेषणं चेति समाहारद्वन्द्वं मत्वा सङ्ख्यानमात्रप्रधानं सङ्ख्येये उपसर्जनञ्चैकत्वं सङ्ख्यासङ्ख्येयसामान्यरूपात्मकं प्रचिताप्रचितसाधारणम् एकेति प्रातिपदिकेनोच्यते। सह गुणेन सङ्ख्यानेनैकत्वेन यो वर्तते प्रातिपदिकार्थः संख्येयः, स विभक्तिवाच्येनाप्रचितैकत्वेन भिद्यते अवच्छिन्नः=प्रचिताद् द्रव्यावृत्तः प्रकाश्यते प्राधान्येन विभक्त्यन्तवाच्यं सङ्ख्येयमिति व्याचक्षते।

यस्मिन् द्रव्ये स्थितो गुणः सङ्ख्यानमेकत्वादिरूपम्, तस्य द्रव्यस्य सम्बन्धिन एकत्वादयोऽनुक्ताः, द्रव्यावच्छेदितया=प्रचितद्रव्याद् व्यावर्तकतया नोक्ता इति चात्र यत् सोऽसौ गुणस्तस्यानुक्ता एकत्वादय इति भाष्यस्यार्थ इति।

परन्तु इदं व्याख्यानं चिन्त्यम्। भाष्ये—'यत् सोऽसौ' इत्यत्र 'यत्' इत्यस्य यस्मिन् इत्यर्थासम्भवादिति ॥ ३१ ॥

ननु विभक्त्यन्तेन संख्येयस्य प्रतिपादनात्, "परश्च" (पा० ३।१।२) इति नियमेन प्रागुक्तेन केवलस्य चैकादेः प्रातिपदिकस्य प्रयोगाभावाद् गुणमात्रवृत्तित्वम्=सङ्ख्यानमात्रवृत्तित्वं कथमेकादीनामवधार्यत इत्याशङ्क्याह—द्व्येकयोरिति निर्देशादिति।

अस्यार्थः —'द्व्येकयोः···' (पा० १।४।२२) इति निर्देशात्–द्व्येकयोरिति संख्यामात्रपराद् द्विवचननिर्देशाद्, एकादिशब्दानां सङ्ख्यामात्रेऽपि सम्भवोऽस्ति। द्व्येकयोरित्यस्य सङ्ख्येयपरत्वे हि द्वौ चैकश्चेति त्रय इति द्व्येकेषामिति त्रयाणामिति वा स्यात्।

नन्वेवं सति "स्यादेतत्, यत्र नियोगतः सङ्ख्या सङ्ख्येये वर्तते" इति भाष्यस्य का गतिरित्याशङ्क्याह—प्रसिद्ध्या त्विति।

मुपलभ्यते। सङ्कुचेयाच्च निष्कृष्टयोर्द्वित्वैकत्वयोरभिधाने युक्तमिदम्। अन्यथा नित्यसंख्येयप्राधान्ये द्वावेकश्च त्रय इति बहुवचनं स्यात्। 'आदशभ्यः संख्याः संख्येये वर्तन्त' इति लौकिकीं प्रसिद्धिमाश्रित्य भाष्ये 'स्यादेतत्। यत्र नियोगतः संख्या सङ्ख्येये वर्तते' इति सङ्ख्येयाख्यायित्वमुच्यते।

अयमत्रार्थः—सङ्ख्यानमात्रे लौकिके प्रयोगे नैषां वृत्तिः। तत्र हि पदं प्रयुज्यते। विभक्त्यन्तं च पदम्, विभक्तिश्च सङ्ख्यां प्रातिपदिकार्थसमवेतामाहेति नियतं तत्र संख्यावधारणम्। शास्त्रे त्वपोद्धारबुद्धया सङ्ख्यानमात्रवृत्तित्वं वृत्तावसति विभक्तिप्रत्यये काममुपपद्यत इति॥ ३२॥

॥ इति भूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे
संख्यासमुद्देश एकादशः॥



---

अस्यार्थः—आदशतः संख्यासंख्येये वर्तन्त इति लोकप्रसिद्धया त्वेकादिशब्दानां संख्येयार्थत्वमुच्यते प्रागुक्ते भाष्य इति।

अयं भावः—"द्व्येकयोः···" (पा० १।४।२२) इति द्विवचननिर्देशाद् द्वित्वैकत्वयोर्द्वित्वमुपलभ्यते। संख्येयाद् बुद्धया निकृष्टयोः स्वप्रधानयोर्द्वित्वैकत्वयोरभिधाने च युक्तोऽयम् 'द्व्येकयोः···' (पा० १।४।२२) इति द्विवचननिर्देशः। अन्यथा नित्यं संख्येयप्राधान्ये द्वावेकश्चेति त्रय इति द्व्येकेषामिति बहुवचनं स्यात्। त्रित्वसंख्योपजनात् त्रयाणामिति वा स्यात्। 'आदशभ्यः संख्याः संख्येये वर्तन्ते' इति लौकिकीं प्रसिद्धिमाश्रित्य भाष्ये "स्यादेतत्। यत्र नियोगतः संख्या संख्येये वर्तते" इति संख्येयवाचकत्वमेकादीनामुच्यते। अत्र भाष्ये—नियोगत इत्यस्य नियमत इत्यर्थः।

अयमत्र कारिकार्थः—लौकिके प्रयोगे संख्यानमात्रेनैकादिशब्दानां वृत्तिः। लोके हि पदं प्रयुज्यते। विभक्त्यन्तश्च पदं भवति, विभक्तिश्च संख्या प्रातिपदिकार्थसमवेताम्=प्रातिपदिकार्थविशेषणीभूताम् आह इति नियतं तत्र संख्येयावधारणम्।

शास्त्रे तु द्व्येकयोरिति वृत्तौ प्रातिपदिकयोरपोद्धारबुद्धया संख्यानमात्रवृत्तित्वं विभक्तिलुका असति विभक्तिप्रत्यये कामुपपद्यत इति।

सम्मिते वैक्रमे वर्षे नन्दाक्षिवियदम्बकैः।
श्रावणे शुक्लसप्तम्यां संख्योद्देशः स्थितिं गतः॥

॥ इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथशर्मकृतौ
अम्बाकर्त्र्यां संख्यासमुद्देश एकादशः॥ ११॥



# अथोपग्रहसमुद्देशः

इदानीमाख्यातार्थमुपग्रहं विचारयितुं स्वरूपमस्यालौकिकत्वात् प्रदर्शयति—

य आत्मनेपदाद् भेदः क्वचिदर्थस्य गम्यते ।
अन्यतश्चापि आदेशान्मन्यते तमुपग्रहम् ॥ १ ॥

आत्मनेपदपरस्मैपदव्यङ्ग्यः कर्त्रभिप्रायतदितरादिरूपो विशेषो यः क्रियायाः

---

यस्याः सर्वे समारम्भाः परस्मैपदगोचराः ।
आत्मनेपदनिर्विण्णां देवी वाचमुपास्महे ॥ १ ॥

अधियज्ञश्चाधिनमो याऽधिवाक् सुप्रतिष्ठिता ।
ग्रहोपग्रहरूपैः सा जननी सम्प्रसीदतु ॥ २ ॥

इदानीमवसरप्राप्तमाख्यातार्थं कर्त्रभिप्रायतदितरादिरूपमुपग्रहं विचारयितुमलौकिकत्वात् = लोकाप्रसिद्धत्वादस्य स्वरूपं प्रदर्शयति—य आत्मनेपदादिति ।

अस्यार्थः—यः क्वचित्—'पचति, पचते' इत्यादौ, 'शयाना भुञ्जते यवनाः, अर्जयन् वसति, हरिं पश्यन् मुच्यते' इत्यादौ, 'हरये रोचते भक्तिः' इत्यादौ च, अर्थस्य—कर्तृकर्मादिसाधनगतस्य क्रियापदार्थस्य भेदः = विशेषः, कर्त्रभिप्रायतदितरादिरूपः, लक्षणहेत्वादिरूपश्च 'पचति, पचते' इत्यादौ आत्मनेपदात् परस्मैपदाद्वा गम्यते, 'अर्जयन् वसति' इत्यादौ, एतदन्यतो लादेशाच्चापि गम्यते, तं क्रियापदार्थगतं विशेषमुपग्रहं मन्यन्ते पूर्वाचार्याः । अस्य चास्मिन्नर्थे योगोऽपि सम्भवति । उपस्थितेन—धातुरूपप्रकृतिसन्निहितेनात्मनेपदेन परस्मैपदेनान्येन वा लादेशेन गृह्यते गम्यते व्यज्यते प्रतीयत इत्युपग्रहः ।

यस्तु परस्मैपदात्मनेपदयोरुपग्रहव्यवहारः स व्यङ्ग्यव्यञ्जकभावरूपं सम्बन्धं पुरस्कृत्य लाक्षणिक इति ।

अयं भावः—आत्मनेपदपरस्मैपदव्यङ्ग्यो यः कर्तृकर्मादिसाधनगतस्य क्रियापदार्थस्य कर्त्रभिप्रायतदितरादिरूपो विशेषः स उपग्रह इति पूर्वाचार्यैरभ्युपगतः । पूर्वाचार्यप्रसिद्धया आधुनिकसङ्केतरूपपरिभाषामूलिकया उपग्रहशब्दवाच्योऽयमर्थो व्यवह्रियतेऽत्र शास्त्रे, न तु मणिनूपुरादिवद्रूढया, नापि पङ्कजादिवद् योगरूढया इति हेलाराजः ।

इदन्तु चिन्त्यम् । योगरूढेः प्रागुक्तरीत्या सम्भवादिति ।

क्वचित्तु साधनविशेषणमपि सामानाधिकरण्यादुपग्रहपदेनोच्यते । क्वचित्

साधनस्य, स उपग्रह इति पूर्वाचार्यैरभ्युपगतः। पूर्वाचार्यप्रसिद्धचोपग्रहशब्द-वाच्योऽयमर्थो व्यवह्रियतेऽत्र शास्त्रे ॥ १ ॥

कस्यार्थस्यासौ भेद इति सामान्येनोक्तमेव विभजते—

**क्वचित् साधनमेवासौ क्वचित् तस्य विशेषणम् ।**
**साधनं तत्र कर्मादि व्यक्तवाचो विशेषणम् ॥ २ ॥**

साधनं कर्म उपग्रहः, आत्मनेपदाभिव्यङ्ग्यः पच्यते गम्यत इति। आदि-शब्दात् कर्ता भावश्च। तत्र कर्ता लादेशद्वयव्यङ्ग्यः एधते यातीति। भाव आस्यते शय्यते इत्यात्मनेपदव्यङ्ग्च एव। स च बाह्यो भावो लकारवाच्यः। आभ्यरन्तस्य धात्वर्थरूपस्य भावस्य क्रियायाः स्वात्मन्यवस्थितिमेकपदवाच्यसाधनानावेशादा-वेदयन् भवति साधनम्। व्यक्ता वाग् येषाम्, व्यक्ता वाचि वा येषां ते व्यक्तवाचो

---

क्रियाविशेषणमुपग्रहः। क्वचित् क्रियाविशेष एवोपग्रह इत्येतत् सर्वं सोदाहरणं विशदीकरिष्यतेऽग्रे इति नेह प्रतन्यत इति ॥ १ ॥

असौ = उपग्रहः कस्यार्थस्य भेदः = विशेष इति सामान्येन प्रागुक्तमेव विभजति = साधनादिरूपेण विभज्य दर्शयति— क्वचित् साधनमिति।

अस्यार्थः— असौ = उपग्रहः, क्वचित् साधनमेव कारकरूपं ज्ञापकरूपं वा। क्वचित् तस्य साधनस्य विशेषणम्। तत्र साधनतद्विशेषणयोर्मध्ये, साधनं कर्मादि—कर्म-कर्ता-भावश्च। तत्र कर्मरूप उपग्रहे यक्समभिव्याहृतात्मनेपद-व्यङ्ग्यः—'पच्यते, गम्यते' इति। कर्ता लादेशद्वयव्यङ्ग्यः—'एधते, याति' इति। भावे—'आस्यते, शय्यते' इत्यात्मनेपदव्यङ्ग्चो ज्ञापकरूपं साधनम्, धात्वर्थरूप-स्याभ्यन्तरस्य भावस्य स्वात्मन्यवस्थितिज्ञापकत्वात्। व्यक्तवाचो ब्राह्मणाः— 'सम्प्रवदन्ते ब्राह्मणाः' इत्यत्राभेदेन कर्तृरूपसाधनविशेषणरूप उपग्रह इति।

अयं भावः—साधनं कर्म उपग्रहः—यक्समभिव्याहृतात्मनेपदाभिव्यङ्ग्यः— 'पच्यते, गम्यते', इति। आदिशब्दात् कर्ताभावश्च। तत्र कर्ता शबादि-संमभिव्याहृतपरस्मैपदात्मनेपदरूपलादेशद्वयव्यङ्ग्यः 'एधते, याति' इति। भावः—अकर्मकधातुप्रकृतिकयगादिसमभिव्याहृतात्मनेपदव्यङ्ग्च एव 'आस्यते, शय्यते' इत्यादौ। अत्र च बाह्यो भावो लकारवाच्यः प्रथमोपस्थितिकत्वाद् आभ्य-न्तरस्य धात्वर्थरूपस्य भावस्य क्रियारूपस्य स्वात्मनि = स्वस्वरूपे अवस्थितिमावे-दयन् भवति ज्ञापकसाधनम्। सकर्मकधातुप्रकृतिकेषु 'गम्यते' इत्यादिपदेष्विव एकपदवाच्यसाधनानावेशात्। सकर्मकधातुप्रकृतिके कर्मणि प्रत्यये हि कर्मरूप-साधनविशिष्टो धात्वर्थः पदार्थः।

भावप्रत्यये तु साधनानाविशिष्टं भावमात्रं पदार्थ इति विशेषः। व्यक्ता स्फुटा, न तु गजादीनामिवास्फुटा वाक् शब्दरूपा येषाम्, अथवा व्यक्ताः स्फुटा

धात्वर्थं समुच्चारणार्थकं विशिंषन्तोऽपि साधनस्य कर्तुर्विशेषणं सामर्थ्याद् भवन्तो भवन्त्युपग्रहशब्दवाच्याः । तद्यथा—सम्प्रवदन्ते ब्राह्मणा इति ॥ २ ॥

क्वचित् क्रियाविशेषणमुपग्रह इत्याह—

क्रिया विषयभेदेन जीविकादिषु भिद्यते ।
लादेशैः स क्रियाभेदो वाक्येष्वपि नियम्यते ॥ ३ ॥

विषयविशेषाश्रयेण भिद्यते क्रिया । स च तस्याः भेदो लादेशैः परस्मैपदात्मनेपदलक्षणैरभिव्यज्यते । तद्यथा जीवनोपायत्वेन पाकादिरनुष्ठीयमानः परस्मैपदेनाभिव्यज्यते पचन्ति जयन्तीति । प्रधानं ह्यत्र क्रियाफलं न कर्तृगामि भृतिमात्रफलत्वाद् भृत्यानाम् । यजमानादिना प्रधानफलोद्देशेन प्रवर्त्यमाना क्रियात्मनेपदात् 'प्रतीयले, यजते, पचते' इति ।

---

वर्णा वाचि जिह्वायां येषां ते व्यक्तवाचो ब्राह्मणा अभेदेन लादेशार्थकर्तृविशेषणतया समुच्चारणार्थकं धात्वर्थं विशिंषन्तोऽपि साधनस्य कर्तुर्विशेषणं सामर्थ्याद् भवन्त उपग्रहशब्दवाच्या भवन्ति । तद्यथा—'सम्प्रवदन्ते ब्राह्मणाः' इति ॥ २ ॥

कर्तृविशेषणवत् क्वचित् क्रियाविशेषणं कर्त्रभिप्रायतदितरादिरूपमुपग्रह इत्याह—क्रिया विषयभेदेनेति ।

अस्यार्थः—जीविकादिषु = जीविकालक्षणहेत्वादिषु निमित्तेषु सत्सु, विषयभेदेन = लादेशवाच्यकर्तृरूपविषयभेदेन, पाकयागादिरूपा क्रिया लादेशैः परस्मैपदात्मनेपदरूपैः, शतृशानजादिभिश्च भिद्यते = कर्त्रभिप्रायतदितरादिरूपैर्विशेषणैर्लक्षणहेत्वादिभिश्च विशेषणैः स्वव्यङ्ग्यैर्विशिष्यते । अन्तर्भावितण्यर्थोऽत्र भिदिः । स क्रियाभेदः—क्रियायाः कर्त्रभिप्रायतदितरादिरूपो विशेषः, स्वादिपदोपादाने सति वाक्येष्वपि—'स्वं यज्ञं यजते, स्वं यज्ञं यजति' इत्यादिषु नियम्यते नियमेन प्रतीयते । तत्र हि वाक्यादेव क्रियाविशेषसम्प्रत्ययः, न तु लादेशात्, अविशेषेण लादेशद्वयानुशासनादिति ।

अयं भावः—विषयविशेषाश्रयेण = कर्तृविशेषाश्रयेण भिद्यते—पाकयागादिक्रिया । 'भृत्यः पचति, देवदत्तः पचते' इति, 'राजा यजते, ऋत्विजो यजन्ति' इति । स च तस्या भेदः = क्रियाया विशेषः कर्त्रभिप्रायतदितरादिरूपो लादेशैः परस्मैपदात्मनेपदलक्षणैः शतृशानजादिभिश्चाभिव्यज्यते । तद्यथा—जीवनोपायत्वेन पाकयागादिरनुष्ठीयमानः परस्मैपदेनाभिव्यज्यते—'पचन्ति, यजन्ति' इति । प्रधानं ह्यत्र लौकिकमलौकिकं वा पाकयागादिक्रियाफलं भोजनं स्वर्गादिकञ्च न कर्तृगामि, भृतिमात्रफलकत्वाद् भृत्यानाम् । यजमानादिना पशुपुत्रस्वर्गादिरूपप्रधानफलोद्देशेन भोजनरूपप्रधानफलोद्देशेन च प्रवर्त्यमाना यागादिक्रिया, आत्मनेपदात् कर्त्रभिप्रायफलकत्वेन 'प्रतीयते, यजते, पचते' इति ।

क्वचित् पुनः स एव क्रियाभेदो वाक्येष्वपि सत्स्ववधार्यत इति वाक्यगम्यः । तद्यथा—'स्वं यज्ञं यजते, स्वं यज्ञं यजति' इति ।

'विभाषोपपदेन प्रतीयमाने' ( पा० १।३।७७ ) इति लादेशद्वयानुशासनात् स्वमिति पदान्तरसंसर्गरचितवाक्यावसेयं क्रियायाः प्रधानफलस्य कर्तृगामित्वम् ।। ३ ।।

विषयभेदं विनापि क्वचित् साक्षात् क्रियाविशेष उपग्रह इत्याह—

**धात्वर्थस्तद्विशेषश्चाप्युक्तः क्वचिदुपग्रहः ।**
**धात्वर्थो गन्धनादिः स्याद् व्यतिहारो विशेषणम् ।। ४ ।।**

गन्धनावक्षेपणादयः क्रियाविशेषा धातुवाच्याः सन्तोऽपि विनात्मनेपदमनभिव्यक्ता इत्यात्मनेपदाभिव्यङ्ग्यत्वादुपग्रहशब्दवाच्या भवन्ति । तद्यथा उत्कुरुत इत्यादि ।

व्यतिहारस्तु क्रियाविशेषणमात्मनेपदाभिव्यङ्ग्यमुपग्रहः । व्यतिपुनत इति ।। ४ ।।

---

क्वचित् पुनः स एव क्रियाभेदः =कर्त्रभिप्रायतदितरादिरूपः क्रियाविशेषो वाक्येष्वपि सत्सु अवधार्यत इति वाक्यगम्यः । तद्यथा—'स्वं यज्ञं यजते, स्वं यज्ञं यजति' इति । "विभाषोपपदेन प्रतीयमाने" ( पा० १।३।७७ ) इति सूत्रेण परस्मैपदात्मनेपदरूपलादेशद्वयानुशासनात् स्वमिति पदान्तरेण सह 'यो यजते यजति' इत्यस्य वा संसर्गस्तद्रचितवाक्यविनिश्चेयं यागक्रियायाः प्रधानफलस्य पशुपुत्रस्वर्गादेः कर्तृगामित्वमिति ।। ३ ।।

विषयभेदम् =कर्तृभेदं विनाऽपि क्वचित् साक्षात् क्रिया, क्वचित्तु क्रियाविशेषणमप्युपग्रह उक्तः, धातुरूपप्रकृतिसमीपावस्थितेन आत्मनेपदेनाभिव्यङ्ग्यत्वादित्याह—धात्वर्थ इति ।

अस्यार्थः—धात्वर्थो गन्धनावक्षेपणादिः, तद्विशेषश्चापि, धात्वर्थविशेषणश्चापि, व्यतिहारः क्वचिदुपग्रह उक्तः । तदेवाह—धात्वर्थ इति । 'चैत्र उत्कुरुते, श्येनो वर्तिकामुदाकुरुते' इत्यादौ गन्धनादिरूपो धात्वर्थ उपग्रहः, तत्र 'उत्कुरुते' इत्यस्य 'सूचयति' इत्यर्थः । गन्धनं सूचनम् । 'उदाकुरुते' इत्यस्य 'अवक्षिपति, भर्त्सयति' इत्यर्थः । अवक्षेपणं भर्त्सनम् । 'सन्तः परस्परं व्यतिलुनीते' इत्यादौ पवनक्रियाविशेषणं व्यतिहार उपग्रहः, आत्मनेपदाभिव्यङ्ग्यत्वादिति ।

अयं भावः—गन्धनावक्षेपणादयः क्रियाविशेषा धातुवाच्याः सन्तोऽपि आत्मनेपदं विनाऽनभिव्यक्ता इति धातुरूपप्रकृतिसमीपावस्थितात्मनेपदाभिव्यङ्ग्यत्वादुपग्रहशब्दवाच्या भवन्ति । तद्यथा—उत्कुरुते सूचयतीत्यर्थः, उदाकुरुते भर्त्सयतीत्यर्थः । सन्तः परस्परं व्यतिपुनते इत्यादौ क्रियाविनिमयरूपो व्यतिहारस्तु

कर्त्रभिप्राये क्रियाफल इति विशेष्यं कथमुच्यते, यावता सर्वमेव फलं क्रियायाः कर्तारमभिप्रैतीत्यत आह—

क्रियाप्रवृत्तावाख्याता कैश्चित् स्वार्थपरार्थता ।
असती वा सती वापि विवक्षितनिबन्धना ॥ ५ ॥

सर्व इमे स्वभूत्यर्थं यतन्त इति सर्वस्य स्वार्थप्रवृत्तेः स्वार्थता पारमार्थिकी परार्थता त्वसत्येव। सती वेति तु लौकिकी वाचोयुक्तिः । तथा हि विवक्षा विवक्षितं निबन्धनं हेतुरस्याः परार्थतायाः। स्वार्थता हि मुख्यैवेति न तस्या विवक्षानिबन्धनत्वम् ।

---

पवनक्रियाविशेषणमात्मनेपदाभिव्यङ्ग्यत्वादुपग्रह इति ॥ ४ ॥

ननु कर्त्रभिप्राये क्रियाफले विविच्य कथमुच्यते, यावता = यतः सर्वमेव क्रियायाः फलं कर्तारमभिप्रैति, तदुक्तं कविभिः—

यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपत्विनः ।
वयं हनाम द्विषतः सर्वः स्वार्थं समीहते ॥ इति ।

किञ्च यत्र न कर्त्रभिप्रायं क्रियाफलं तत्रापि आत्मनेपदं स्वरितेतो ञितश्च दृश्यते । तद्यथा—'कालः पचति भूतानि, कालः संहरते प्रजाः' इति । अत्र कालस्येश्वररूपत्वे तदतिरेके वा न तस्य स्वार्था क्रियायां प्रवृत्तिः, आद्ये आप्तकामत्वाद् अन्त्येऽचेतनत्वात् । तदुक्तं ब्रह्मसूत्रे—"लोकवत्तु लीलाकैवल्यम्" इति । ईश्वरेऽपि कर्तरि आत्मनेपदप्रयोगो दृश्यते । 'तेने ब्रह्म हृदा य आदिकवये' इति ।

ईश्वरे च स्वार्थप्रवृत्त्यभावः कविभिरुक्तः —

विदितं यो यथा स्वार्था न मे कश्चित् प्रवृत्तयः ।
इति मूर्तिभिरष्टाभिरित्थंभूतोऽस्मि सूचितः ॥ इति ।

इत्येतत् सर्वं व्यवस्थापयितुमाह—**क्रियाप्रवृत्ताविति** ।

अस्यार्थः —कैश्चिद् ईश्वरस्य जीवस्य वा क्रियाप्रवृत्तौ असती वा सती वाऽपि स्वार्थता परार्थता विवक्षितनिबन्धनाविवक्षितं विवक्षा तन्निबन्धना तद्हेतुका आख्याता । तत्रासती स्वार्थता ईश्वरस्य, सती परार्थता ईश्वरस्य, सती स्वार्थता जीवस्य, असती परार्थता जीवस्येति ।

अयं भावः —सर्वं इमे जीवाः स्वभूत्यर्थम् = स्वाभ्युदयाय यतन्ते इति सर्वस्य प्राणिनः स्वार्थप्रवृत्तेः स्वार्थता पारमार्थिकी, परार्थता त्वसती एव । सती वा इति तु लौकिकी वाचोयुक्तिः = लौकिको व्यवहारः । परार्थताया वस्तुतोऽपरमार्थत्वात् । स्वार्थता हि मुख्यैवेति, न तस्या विवक्षानिबन्धनत्वम् । इदं सर्वं हेलाराजोक्तं चिन्त्यम् । ईश्वरे परार्थतायाः परमार्थत्वात् । ईश्वरे स्वार्थताया अपरमार्थत्वादिति ।

तदित्थं पारार्थ्यविवक्षायां मा भूदात्मनेपदमिति कर्त्रभिप्राये क्रियाफल इति फलं विशिष्यते ।

अन्ये तु प्रधानफलाभिप्रायेण वस्तुत एव स्वार्थपरार्थतामाहुरिति ।

कैश्चिदिति वचनान्मतान्तरमुपक्षिप्तं भवति । तथा हि—यः स्वर्गौदनादि-मुख्यफलार्थी स तत्रान्यान् व्यापारयति, निर्वेशेन प्रतिविधानं चारभते । ततश्च तस्य प्रतिविधातुर्मुख्यफलार्थिनः स्वार्थं आरभत इति तत्रात्मनेपदं यजमानादौ । यस्तु तत्प्रयुक्तो निर्वेशमात्रफलः, स स्वामिचित्तानुवर्तनादेव कृतार्थतां मन्यत इति तस्यासौ परार्थ आरम्भ इति न भवति तत्रात्मनेपदम् ॥ ५ ॥

इत्थं च संविधान आत्मनेपदं णिजित्यनयोः समानो विषय इत्याह—

**केषाञ्चित् कर्त्रभिप्राये णिचा सह विकल्पते ।**
**आत्मनेपदमन्येषां तदर्था प्रकृतिर्यथा ॥ ६ ॥**

---

तदित्थं परार्थत्वविवक्षायां मा भूदात्मनेपदमिति कर्त्रभिप्राये=कर्तृ-गामिनिक्रियाफले कर्तृगामित्वेन विवक्षित इति कर्तृगामित्वप्रकारकविवक्षाविषय-त्वेन फलं विशिष्यते ।

अन्ये तु लौकिकमलौकिकं वा यत् क्रियायाः प्रधानं वस्तुभूतं फलं तदभिप्रायेण वस्तुत एव स्वार्थपरार्थतामाहुः, न तु धात्वर्थक्रियाफलाभि-प्रायेणेति ॥ ५ ॥

कैश्चिदिति वचनान्मतान्तरमप्यत्रोपक्षिप्तम्=आत्मनेपदविषये उपन्यस्तं भवति । तथा हि—यः स्वर्गौदनादिरूपमुख्यफलार्थी स तत्र=यागपाकादौ अन्यान्=ऋत्विक्सूपकारादीन् व्यापारयति, ऋत्विक्सूपकारादीनां निर्वेशेन= भृत्या प्रतिविधानाम्=संविधानं सामग्रीसम्पादनं चारभते । ततश्च तस्य प्रति-विधातुः=संविधातुः निरुक्तमुख्यफलार्थिनः स्वार्थं आरम्भ इति तत्रात्मनेपदं यजमानादौ कर्तरि ।

यस्तु तत्प्रयुक्तः=मुख्यफलार्थिप्रयोज्यः निर्वेशमात्रफलः=भृतिमात्रप्रयो-जनकः स स्वामिचित्तानुवर्तनादेव स्वस्य कृतार्थतां मन्यत इति तस्यासौ परार्थ आरम्भ इति न भवति तत्रात्मनेपदम् । इत्थश्च संविधाने आत्मनेपदम्, तत्रैव णिच् इत्यनयोः समानो विषयः, अत एवात्र तयोर्विकल्प इत्याह—**केषा-ञ्चिदिति ।**

अस्यार्थः—केषाञ्चित् संविधानमात्रं णिजर्थ इति वादिनां कर्त्रभिप्राये= कर्तृगामिनि क्रियाफले सति विवक्षिते वा णिचा सह आत्मनेपदं विकल्पते । 'यजते याजयति' इति, 'पचते पाचयति' इति ।

णिचः संविधानमात्रमर्थं मन्यन्ते केचित्। सर्वं इमे स्वभूत्यर्थं यतन्त इति स्वार्थं प्रवर्तमानस्य प्रयोज्यस्य प्रयोजकस्तदानुकूल्याचरणात् संविधाता भण्यते। न ह्यननुविधेयस्य वचनात् स्वार्थमसम्भावयतो वा प्रवृत्तिरिति न प्रैषो णिजर्थः। अपि तु संविधानमात्रम्, तत्रैवात्मनेपदमपीति तुल्यविषयत्वादनयोः पर्यायेण प्रयोगः 'यजते याजयति, पचते पाचयतीति'। आत्मनेपदाभिधेयो हि कर्ता संविधानमपेक्षत इति णिचा तुल्यविषयमात्मनेपदमिति विकल्पते तेन सः।

यथा तदर्था णिच उत्पादनार्था प्रकृतिर्धातुर्णिचा सह विकल्पते। ये धात्वर्थविशेषणतां हेतुमतीत्यस्य मन्यन्ते, तेषामन्येषां मते हेतुमति व्यापारे

---

अन्येषां मते तदर्था णिच उत्पादनार्था प्रकृतिर्यथा आत्मनेपदेन सह विकल्पते तथा णिचा सह आत्मनेपदं विकल्पत इति दृष्टान्तः।

अथवाऽन्येषां मते तदर्था णिच उत्पादनार्था प्रकृतिर्यथा णिचा सह न विकल्पते तथाऽऽत्मनेपदं णिचा सह न विकल्पत इति दृष्टान्तः।

तथा हि —ये हेतुमतीत्यस्य धात्वर्थविशेषणतां मन्यन्ते तेषामन्येषां मते "हेतुमति च" (पा० ३।१।२६) इति सूत्रस्य—हेतुमति व्यापारे वर्तमानाद् धातोस्तद्द्योतको णिच् इत्यर्थः। तस्य च संविधानविशिष्टस्य हेतुमतो व्यापारस्य कुतश्चिदर्थसामर्थ्यादवगतौ णिचोऽप्रयोगे णिच्रहिता शुद्धा प्रकृतिः प्रयोगमर्हत्येवेति।

ये तु णिच्मन्तरेण प्रायेण प्रैषस्याप्रतीतेर्हेतुमतीत्यस्य प्रत्ययार्थत्वं मन्यन्ते, तेषां मते यथा णिच्प्रकृतिर्णिचा सह न विकल्पते, तथाऽऽत्मनेपदमपि णिचा सह न विकल्पत इति।

अयं भावः —केचिद् णिचः संविधानमात्रमर्थं मन्यन्ते, न तु प्रैषमपि। सर्वं इमे जनाः स्वभूत्यर्थं यतन्त इति स्वार्थं प्रवर्तमानस्य प्रयोज्यस्य प्रयोजकस्तदानुकूल्याचरणात् संविधाता भण्यते। न हि अननुविधेयस्य = अननुकूलस्य असंविधतो वचनात्, स्वार्थमसम्भावयतो वा वचनात् प्रवृत्तिरिति न प्रैषो णिजर्थः, अपि तु संविधानमात्रं णिजर्थः, तत्रैवात्मनेपदमपीति तुल्यविषयत्वादनयोः = णिजात्मनेपदयोः पर्यायेण प्रयोगः, 'यजते याजयति, पचते पाचयति' इति। आत्मनेपदाभिधेयो हि कर्ता स्वसिद्धये संविधानक्रियामपेक्षत इति णिचा तुल्यविषयकमात्मनेपदमिति विकल्पते णिचा सहेति केषाञ्चिन्मतम्।

अन्येषां मते तु—यथा तदर्था णिच उत्पादनार्था प्रकृतिर्धातुरूपा णिचा सह विकल्पते। तथा हि—ये "हेतुमति च" (पा० ३।१।२६) इत्यस्य धात्वर्थविशेषणतां मन्यन्ते, तेषामन्येषां मते हेतुमति व्यापारे = प्रयोजकव्यापारे वर्तमानाद् धातोस्तद्द्योतको णिजिति कुतश्चिदर्थः = सामर्थ्याद् हेतुमतः संविधानविशिष्टस्य व्यापारस्य

वर्तमानाद् धातोर्द्योतको णिजिति कुतश्चिदर्थसामर्थ्याद्धेतुमतः संविधानविशिष्टस्य व्यापारस्य क्रीणीष्वेत्यादिवदवगमाण्णिज्रहिता शुद्धा प्रकृतिः प्रयोगमर्हत्येवेति मन्यन्ते।

ये तु भूयसा णिजमन्तरेण प्रैषस्याप्रतीतेर्हेतुमतीत्यस्य प्रत्ययार्थत्वं मन्यन्ते, तेषां यथा णिच्प्रकृतिर्णिचा सह न विकल्पते, तथात्मनेपदमपीति।

केषाञ्चिदिति वदन् पक्षान्तरं सूचयति। तथा हि—आत्मनेपदविषयस्य कर्तुः संविधानं क्रियागतो धर्मो धातुवाच्यो भवेत्। आत्मनेपदेन हि क्रियाफलं कर्तृगामि द्योतयता सामर्थ्यात् प्रधानफलयुक्तः कर्ताभिधीयते, न तु प्रैषः स्पृश्यते। न हि प्रयोज्यप्रयोजकव्यापारो ण्यन्तवदात्मनेपदान्तधातुविषये प्रतीयते।

अत एव शाब्दी प्रतीतिर्भिद्यते। यजत इति फलार्थी स्वतन्त्रो यागं भावयतीत्यर्थः। तत्र चान्यप्रयोज्यस्य स्वतन्त्रस्य भावनायामौचित्यात् संविधानं व्यापारः प्रतीयते, न त्वस्माच्छब्दव्यापारात् परं प्रयुङ्क्त इत्यवगतिः। याजयतीति यागे परप्रयुङ्क्त इति शाब्द एवावगमः। तात्पर्यदृशा तु वास्तवव्यापाराश्रये विषयसाम्यं भवेत्।

---

'क्रीणीष्व' इत्यादिवदवगमाद् णिज्रहिता शुद्धा प्रकृतिः प्रयोगमर्हत्येवेति ते मन्यन्ते। 'आत्मानं क्रीणीष्व, दास्यान् मोचय' इति नागमात्रा कद्रुवा विनताक्रयणस्वातन्त्र्ये विनियुज्यत इति परप्रयोज्यतावगमात् क्रीधातोर्ण्यर्थतायां सत्यात्मनेपदमिति णिजात्मनेपदयोः समानविषयत्वमिति णिज्रहितधातोरात्मनेपदान्तस्य प्रयोगे दृष्टान्तोपपत्तिरित्यन्येषां मतम्।

ये तु भूयसा=प्रायेण णिचमन्तरेण प्रैषस्याप्रतीतेर्हेतुमतीत्यस्य प्रत्ययविशेषणत्वेन प्रैषस्य प्रत्ययार्थत्वं मन्यन्ते, तेषां मते यथा णिच् प्रकृतिर्णिचा सह न विकल्पते तथाऽऽत्मनेपदमपि णिचा सह न विकल्पत इति।

केषाञ्चिदिति वदन् अरुच्या पक्षान्तरम्=णिजात्मनेपदयोर्विकल्पादन्यं सिद्धान्तभूतं पक्षं सूचयति। तथा हि—आत्मनेपदविषयस्य कर्तुः संविधानं क्रियागतो धर्मो धातुवाच्यो भवेत्। आत्मनेपदेन हि कर्तृगामिक्रियाफलं द्योतयता सामर्थ्यात् प्रधानफलयुक्तः कर्ताऽभिधीयते, न तु प्रैषस्तेन वाच्यतया स्पृश्यते। न हि प्रयोज्यप्रयोजकव्यापारो ण्यन्त इवात्मनेपदान्तधातुविषये प्रतीयते।

अत एव णिजात्मनेपदयोः शाब्दी प्रतीतिर्भिद्यते। यजते इत्यस्य फलार्थी स्वतन्त्रो यागं भावयतीत्यर्थः। तत्र चानन्यप्रयोज्यस्य स्वतन्त्रस्य औचित्याद् यागभावनायां संविधानं व्यापारः प्रतीयते, न त्वस्मादात्मनेपदान्तधातुरूपशब्दव्यापारात् परं प्रयुङ्क्ते इत्यर्थस्यावगतिः। 'याजयति' इत्यत्र तु यागे परं प्रयुङ्क्त इति शाब्द एवावगमः, णिचापरप्रैषाभिधानात् तात्पर्यदृष्टया तु वास्तवस्य

तस्माद् भिन्नविषयत्वान्नात्र विकल्प इत्येष सिद्धान्तोऽभिमतः। अन्यथैक-विषयत्वाद् धातुसामान्यविहितस्य णिचो धातुविशेषात् स्वरितञितो विधीयमान-मात्मनेपदं बाधकं स्यादिति न विकल्पो भवेत्, लस्य, "तिप्तस्झि..." (पा० ३।४।७८) इत्यनेन विधानात्। 'स्वरितञितः...' (पा० १।३।७२) इत्यादिर्न विधिरिति चेत्, नियमस्तर्हि भविष्यति। स चैकवाक्यतया विधिशेष एव। अन्यथा परस्मैपदबाधकत्वमपि कथमात्मनेपदस्य स्यादिति।

तदेवं भिन्नविषये णिजात्मनेपदे, संविधाने आत्मनेपदं तद्विशेषे तु प्रैषे णिजिति। यत्र तु पारार्थ्यं धात्वर्थस्यान्यतोऽवगम्यते, तत्र न भवत्यात्मनेपदम्। तद्यथा—उक्तः करोति, प्रेषितः करोतीति प्रैषेण कर्तुः पारार्थ्यावगतेः स्वार्थता-सम्प्रत्ययाभावादात्मनेपदाभावोऽत्र।

एवमोदनं पचतीति करणादिकारकान्तरप्रैषेऽपि प्रयोज्यकर्तुः प्रधानफला-र्थताभावादात्मनेपदाभावः। तथा अजां नयति ग्राममित्यत्र धात्वर्थप्रैषमात्र-विवक्षायां भृत्ये कर्तर्यात्मनेपदम् अजां नयते ग्राममिति ॥ ६ ॥

---

संविधानरूपकर्तृव्यापारस्याश्रयेण परप्रैषस्याप्यवगमाद् णिजात्मनेपदयोर्विषयसाम्यं भवेत्।

तस्माद् भिन्नविषयत्वात् = भिन्नाभिधेयत्वाद् नात्र णिजात्मनेपदयोर्विकल्प इत्येष सिद्धान्तोऽभिमतः केषाञ्चिदित्यरुच्या सूचितः। अन्यथैकविषयत्वात् = समानविषयत्वाद् धातुसामान्यविहितस्य णिचो धातुविशेषात् स्वरितञितो विधीय-मानमात्मनेपदं बाधकं स्यादिति न विकल्पो भवेत्। लस्य = लादेशस्य 'तिप्तस्झि' इत्यनेन विधानात् 'स्वरितञितः' इत्यादिर्न विधिरिति चेत्, नियमस्तर्हि भविष्यति। स चैकवाक्यतया विधिशेष एव। एकवाक्यताकारश्चैवम् स्वरितेतो ञितश्च धातोस्ताताामित्यादिरूपमात्मनेपदं भवति, तदतिरिक्तविषये तु 'तिप्तस्झि' (पा० १।४।७८) इत्यादिरूपं परस्मैपदमिति। इयञ्च पदैकवाक्यता। अन्यथा = विधिशेषत्वेन विधित्वाभावे परस्मैपदबाधकत्वमपि कथमात्मनेपदस्य स्यादिति।

तदेवं संविधाने आत्मनेपदम्, तद्विशेषे = संविधानविशेषे तु प्रैषे णिजिति भिन्नविषयके णिजात्मनेपदे। यत्र तु धात्वर्थस्य व्यापारार्थ्यमन्यतोऽवगम्यते, तत्र स्वरितेतो ञितश्चापि धातोर्न भवत्यात्मनेपदम्। तद्यथा—'उक्तः करोति, प्रेषितः करोति', इति। अत्र प्रेषणकर्तुः पारार्थ्यावगतेः स्वार्थत्वासम्प्रत्ययाद् आत्मने-पदाभावः।

एवम् 'सूपकारः काष्ठैरोदनं पचति' इति करणादिकारकान्तरप्रैषेऽपि प्रयोज्यकर्तुः सूपकारस्य प्रधानफलार्थत्वाभावादात्मनेपदाभावः। तथा—'अजां ग्रामं नयति' इत्यत्र धात्वर्थस्य अजाकर्तृकस्य गमनस्य प्रैषमात्रविवक्षायां संविधाना-

इदानीं ये णिचा सहात्मनेपदस्य विकल्पमिच्छन्ति, तेषां विषयसाम्यावगमभ्रान्तिबीजमुपदर्शयति—

क्रीणीष्व वपते धत्ते चिनोति चिनुतेऽपि च ।
आप्तप्रयोगा दृश्यन्ते येषु ण्यर्थोऽभिधीयते ॥ ७ ॥

स्वात्मानं क्रीणीष्वेति विनताभिहिता पुत्रानाह क्रीणीत मामिति शिष्टप्रयोगोऽस्ति । अत्र क्रीणीष्वेत्यात्मनेपदान्तस्य प्रयोगस्य ण्यर्थः प्रैषोऽवधार्यते । दास्यं प्राप्ता हि विनता नागमात्रात्मानं क्रीणीष्व दास्यान्मोचयेति कद्र्वा क्रयण-

विवक्षायाञ्च भृत्ये कर्तरि आत्मनेपदं न भवति । धात्वर्थविषये अपरस्याजादेर्भिन्नस्य कर्तुम्—अजां नयते ग्राममिति ॥ ६ ॥

ये णिजा सहात्मनेपदस्य विकल्पमिच्छन्ति, तेषां णिजात्मनेपदयोर्विषयसाम्यावगमभ्रान्तिबीजमिदानीमुपदर्शयति—क्रीणीष्व वपत इति ।

अस्यार्थः—शक्राश्वपुच्छरोमवर्णनिरूपणे पराजिता कद्रूर्दासीभावं प्राप्ता । विनता नागमात्रा कद्र्वाऽभिहिता—'त्वं पुत्रैः स्वात्मानं क्रीणीष्व' इति । अत्र 'क्रीणीष्व' इत्यस्य 'क्रापय'—दास्यान्मोचयेत्यर्थः ।

अत्र विनता कद्र्वा नागमात्रा आत्मक्रयणकर्तृत्वे नियुज्यते, इत्यत्रास्ति ण्यर्थः प्रैषो णिचोऽभावेऽपि इत्येवमस्त्यत्र णिजात्मनेपदयोर्विषयसाम्यमिति । एवं वपते—वपनं मुण्डनमन्येन कारयतीत्यर्थ इति णिजात्मनेपदे समानविषयके मन्यत इति ।

एवम्—'तृप्ता पत्नी रेतो धत्ते' इति प्रयोगः । अत्र 'धत्ते' इत्यस्य पत्या धापयतीत्यर्थः पत्न्या रेतोधारणयोग्यपुमिन्द्रियाभावात् ।

एवम्—'अग्निं चिनुते' इत्यत्र आत्मनेपदसामर्थ्यात् चयनक्रियायाः संविधाता कर्तृरूपोऽर्थः प्रतीयते । संविधाता च प्रयोजक इति अस्त्यत्र प्रैषो णिजर्थः । यस्तु परप्रयुक्तोऽग्निचयनमनुतिष्ठति तत्र चिनोतीति प्रयोगश्चयनस्य पारार्थ्याद् भवतीति । तत्र णिजात्मनेपदयोर्विषयसाम्यावगमभ्रान्तिबीजं मन्यन्ते ।

तथा हि—अत्र सर्वत्रापि सामर्थ्याद् ण्यर्थोऽवगम्यते नात्मनेपदादिति न णिजात्मनेपदयोः शब्दतः समानविषयत्वमिति । अत्रान्वयः पदार्थश्च स्फुटः । येषु ण्यर्थोऽभिधीयते इत्यस्याग्रे—"इति भ्रान्तिः" इति शेषः प्रपूरणीय इति ।

अयं भावः—कद्र्वा नागमातुर्दासीभावं प्राप्ता विनता "स्वात्मानं क्रीणीष्व" इति नागमात्राऽभिहिता स्वपुत्रानाह—'क्रीणीत माम्' इति शिष्टानां प्रयोगो दृश्यते । अत्र क्रीणीष्व इत्यात्मनेपदान्तस्य प्रयोगस्य बलाद् ण्यर्थः प्रैषोऽवधार्यते । दास्यं प्राप्ता हि विनताऽरुणगरुडमाता नागानां मात्रा कद्र्वा—'आत्मानं क्रीणीष्व'

स्वातन्त्र्ये नियुज्यत इति परप्रयोज्यतावगमाद् ण्यर्थतायामात्मनेपदमिदमिति समानविषयत्वं णिजात्मनेपदयोरेतस्मात् प्रयोगाद् भ्रान्तिबीजं मन्यन्ते।

तथा हि—सामर्थ्यादत्र ण्यर्थोऽवगम्यते, नात्मनेपदात्। क्रयणे हि नियुज्यते विनता। क्रयणस्य चात्र दास्यविनिवृत्तिलक्षणं फलं क्रेतुः कर्तुरात्मगामीति कर्त्रभिप्रायक्रियाफलगतमात्मनेपदं विहितम्। इयत्येव शब्दार्थे पर्यवसिते परतोऽर्थसामर्थ्यात् क्रापयेति ण्यर्थोऽत्रावधार्यते।

तथा हि—सा विनतात्मानं कथं क्रीणाति दास्यान्मोचयति, यदि प्रत्युपकारं काद्रवेयाणामाचरति।

न च सा स्वयं प्रत्युपकर्तुं शक्तेति पुत्रानाह 'क्रीणीत मामि'ति। तथा च पुत्रैरात्मानं दास्यान्मोचय क्रापयेत्ययमर्थोऽस्य क्रीणीष्वेति पदस्य प्रकरणसामर्थ्य-पर्यालोचनालभ्य इति न पदार्थविषयेणात्मनेपदेनात्र णिच् समानविषय इति।

एवं 'केशश्मश्रु वपते' इति प्रयोगो भ्रान्तिबीजं दृश्यते।

तथा हि—वपते वपनं मुण्डनमन्येन कारयतीत्यर्थ इति णिजात्मनेपदे समानविषये मन्यन्ते।

---

'दास्यान्मोचय' इति क्रयणस्वातन्त्र्ये=क्रयणकर्तृत्वे नियुज्यत इति, परप्रयोज्यता-वगमाद् ण्यर्थतायामात्मनेपदमिति समानविषयत्वं णिजात्मनेपदयोरेतस्मात् प्रयोगाद् भ्रान्तिबीजं मन्यन्ते।

तथा हि—प्रकरणपर्यालोचनासामर्थ्यादत्र ण्यर्थोऽवगम्यते, नात्मनेपदात्। नागमात्रा हि स्वक्रयणे विनता नियुज्यते, क्रयणस्य चात्र दास्यविनिवृत्तिलक्षणं फलं कर्तुः क्रेतुरात्मगामीति कर्त्रभिप्रायक्रियाफलगतम्=कर्तृगामिक्रियाफलं सम्बद्धमात्मनेपदं विहितम्। क्रयणस्य दास्यनिवृत्तिलक्षणं फलमत्र क्रेतृरूपकर्तृगामि इतीयत्येव शब्दार्थे पर्यवसिते परतः=शब्दातिरिक्तात् प्रकरणपर्यालोचनामूलकादर्थ-सामर्थ्यात् क्रापयेति ण्यर्थोऽत्रावधार्यते।

तथा हि—सा विनताऽऽत्मानं कथं क्रीणाति दास्यान्मोचयति, यदि प्रत्युपकारं काद्रवेयाणाम्=नागानामाचरति।

न च सा स्वयं स्वर्लोकादमृतानयनेन नागानां प्रत्युपकर्तुं शक्ता इति पुत्रानाह—'क्रीणीत माम्' इति। तथा चास्य क्रीणीष्वेति पदस्य 'पुत्रैरात्मानं दास्यान्मोचय क्रापय' इत्ययमर्थः प्रकरणसामर्थ्यपर्यालोचनालभ्य इति रीत्या वाक्यलभ्य इत्यत्र पदार्थविषयकेणात्मनेपदेन सह णिच् न समानविषय इति।

एवं 'केशश्मश्रु वपते' इति प्रयोगो णिजात्मनेपदयोर्विषयसाम्यावगम-भ्रान्तिबीजं दृश्यते।

तथा हि—वपते वपनं मुण्डनमन्येन कारयतीत्यर्थ इति णिजात्मनेपदे समानविषयके मन्यन्ते।

अत्र च तिङन्तात् कर्तृगामि क्रियाफलं प्रतीयत इत्यात्मनेपदम्, सामर्थ्यात् तु स्वयमशक्तोऽन्यं प्रयुङ्क्त इत्यवगम्यते। तथा 'तृप्ता पत्नी रेतो धत्त' इति प्रयोगो शिष्टानाम्। रेतो धापयतीत्यत्र चार्थः सामर्थ्यगम्यः। न हि पत्न्याः पौंस्नं सम्भवति, तच्च रेतोधारणयोग्यं पुमिन्द्रियेण तद्धारणात्। पत्न्यास्तु रेतोधारण-योग्यपुमिन्द्रियाभाव इति सामर्थ्यलभ्योऽत्र ण्यर्थो न तिङन्तवाच्यः, येनात्मनेपदेन समानविषयता णिचः स्यात्। आत्मनेपदाद्धि धारणस्वातन्त्र्यमात्रमवगम्यते। तच्च पत्नीसम्बन्धाद् वाक्यार्थपर्यालोचनया प्रयोजककर्तृविषयमात्रावगम्यते।

पदं हि पदान्तरनिरपेक्षं स्वार्थमात्रमावेदयते। वाक्यसामर्थ्यात्तु विशिष्टार्थावगतिः। सैषात्र यज्ञस्य समृद्धिर्योऽग्निं चिनुते यश्चिनोति यश्चीयते इत्यत्रापि चिनुत इति शिष्टप्रयोगे संविधाता चयनगतः प्रतीयते। तिङः सामर्थ्यात् तु प्रेषणमशब्दार्थोऽपि णिज्विषयं प्रतीयते। यो हि स्वयं चयनमनुतिष्ठति परप्रयुक्तः, स चिनोतीत्येतस्मादेवावगम्यत इति प्रयोजकस्तृतीयोऽर्थाच्चिनुत इत्यतः प्रतीयते।

---

अत्र च वपत इति तिङन्तात् कर्तृगामिक्रियाफलं प्रतीयत इत्यात्मनेपदम्, अकरणपर्यालोचनसामर्थ्यात् तु स्वयमशक्तो वपतेऽन्यं प्रयुङ्क्ते इत्यर्थोऽवगम्यते। तथा—'तृप्ता=कामोपभोगप्रयुक्ता तृप्तिमाप्ता पत्नी रेतो धत्ते' इति शिष्टानां प्रयोगो दृश्यते। अत्र च पत्या रेतो धापयति स्वस्मिन् इत्यर्थो वाक्यार्थसामर्थ्य-गम्यः, न हि पत्न्याः पौंस्नम्, पुमिन्द्रियं सम्भवति। तच्च=तदेव रेतोधारण-योग्यम्, पुमिन्द्रियेण रेतोधारणात्। पत्न्यास्तु रेतोधारणयोग्यपुमिन्द्रियाभाव इति वाक्यार्थसामर्थ्यलभ्योऽत्र ण्यर्थो न तिङन्तवाच्यः, येनात्मनेपदेन समानविषयता णिचः स्यात्। धत्ते इत्यात्मनेपदाद् हि धारणस्वातन्त्र्यमात्रमवगम्यते। तच्च पत्नीसम्बन्धाद् वाक्यार्थपर्यालोचनया प्रयोजककर्तृनिष्ठमत्रावगम्यते।

पदं हि पदान्तरनिरपेक्षं स्वार्थमात्रम्=पदार्थमात्रम् आवेदयते। वाक्य-सामर्थ्यात् तु विशिष्टार्थावगतिः=विवक्षितविलक्षणवाक्यार्थावगतिरिति। 'सैषाऽत्र यज्ञस्य समृद्धिर्योऽग्निं चिनुते यश्चिनोति यश्चीयते' इति। अत्र चिनुत इत्यस्य यजमानः कर्ता, चिनोति इत्यस्य ऋत्विक् कर्ता, चीयत इत्यस्याग्निः कर्म। अत्रापि चिनुत इति शिष्टप्रयोगे संविधाता यजमानः चयनगतः=चयनक्रियासम्बद्धः आत्मनेपदात् प्रतीयते। तिङः सामर्थ्यात् तु=आत्मनेपदसामर्थ्यादेवाशब्दार्थोऽपि प्रेषणं णिज्विषयीभूतं प्रतीयते। यो हि स्वयं चयनमनुतिष्ठति परप्रयुक्तः ऋत्विक् स चिनोति इत्येतस्मादेवावगम्यत इति प्रयोजकस्तृतीयः=चिनोति इत्यत्र परप्रयुक्तः कर्ता, चीयत इत्यत्राग्निः कर्म, आभ्यां तृतीयः चिनुत इत्यत्र संविधातृरूपः प्रयोजकः कर्ता अर्थाच्चिनुत इत्यतः प्रतीयते।

तदेतेषु प्रयोगेष्वर्थसामर्थ्यादिनावसितमपि ण्यर्थमात्मनेपदान्तशब्दार्थं इति मत्वा कैश्चिद् भ्रमाण्णिजात्मनेपदयोर्विषयसाम्यं सर्वत्राश्रित्य विकल्पः प्रतिपादितः । गतमदः ॥ ७ ॥

इह संविधाने आत्मनेपदमित्युक्तम् । पचादीनां च प्रधानभूतविक्लित्यादिवचनात् कथं संविधानोपादानम् ? येन तद्विशिष्टवचनाद् धातोस्तत्रात्मनेपदं स्यादित्याशङ्क्याह—

**संविधानं पचादीनां क्वचिदर्थः प्रतीयते ।**

**तन्निमित्ता यथान्यापि क्रियाधिश्रयणादिका ॥ ८ ॥**

'कः पचेः प्रधानार्थः ? यासौ तण्डुलानां विक्लित्तिः । अथेदानीं प्रेषणमध्येषणं वा युक्तं यत् सर्वं पच्यर्थः स्यात् । बाढं युक्तम्' इति भाष्ये प्रयोजकव्यापारस्यापि धात्वर्थतोपन्यस्ता । तथा चोदासीनोऽपि प्रयोजकः सामग्रीं परिपोषयन् संविधाता कारक इति तद्व्यापारो धातुवाच्यः पचत इति विक्लित्त्यर्थ-

---

तदेतेषु प्रयोगेष्वर्थसामर्थ्यादिना = वाक्यार्थसामर्थ्यादिना अवसितमपि = पर्यवसितमपि अशब्दार्थं ण्यर्थमात्मनेपदान्तशब्दार्थं इति मत्वा कैश्चिद् भ्रमाद् णिजात्मनेपदयोर्विषयसाम्यं सर्वत्र = उक्तप्रयोगेष्वाश्रित्य तयोर्विकल्पः प्रतिपादितः । गतमदः = णिजात्मनेपदयोर्विकल्पविषयको विचारो गत इति ॥ ७ ॥

इह पूर्वं यजि-पच्यादौ संविधाने आत्मनेपदमित्युक्तम् । पचादीनाञ्च प्रधानभूतविक्लित्यादिवचनात् = स्वार्थस्य प्रधानीभूतफलस्वरूपविक्लित्त्यादिवाचित्वात् कथं संविधानोपादानम् = संविधानबोधनम्, येन तद्विशिष्टवचनात् = संविधानविशिष्टयागपाकादिविशिष्टवचनाद् धातोस्तत्र = संविधाने आत्मनेपदं स्यादित्याशङ्क्याह—संविधानमिति ।

अस्यार्थः —क्वचित् पचत इत्यादौ आत्मनेपदसमवधाने, पचादीनां धातूनां संविधानमर्थः प्रतीयते विक्लित्त्यर्थत्वात् । यथाऽन्याऽपि तन्निमित्ता = संविधानहेतुका प्रयोज्यकर्तृनिष्ठा अधिश्रयणादिका क्रिया पचादीनां धातूनामर्थः प्रतीयते विक्लित्त्यर्थत्वादेवेति । न केवलं विक्लित्त्यनुकूलव्यापाररूपा प्रयोज्यकर्तृनिष्ठा क्रियैव पच्धात्वर्थः, अपि तु प्रयोजककर्तृनिष्ठा संविधानरूपा क्रिया, तन्निमित्तिका तन्निमित्तकप्रैषाध्येषणादिनिमित्तिका वा प्रयोज्यकर्तृनिष्ठा क्रियाऽधिश्रयणादिका पचादीनामर्थ इति फलितार्थः ।

अयं भावः —"कः पचेः प्रधानार्थः ? याऽसौ तण्डुलानां विक्लित्तिः । अथेदानीं प्रेषणमध्येषणं वा युक्तं यत् सर्वं पच्यर्थः स्यात् । बाढं युक्तम्" इति भाष्ये प्रयोजकव्यापारस्यापि प्रेषणस्याध्येषणस्य वा विक्लित्त्यर्थत्वाद् धात्वर्थता उपन्यस्ता । अत्र भाष्ये—प्रधानार्थं इत्यस्योद्देश्यत्वलक्षणप्राधान्यवत् फलमित्यर्थः ।

त्वाद् यथाधिश्रयणोदकासेचनादिः प्रयोज्यकर्तृव्यापारः। पचति देवदत्त इति अधिश्रयति उदकमासेचयति इत्याद्यर्थः। पचते देवदत्त इति सम्भारं ढौकयतीत्यर्थः। तस्यैव तु प्रयोज्यप्रेषणे विवक्षिते णिज् भवति पाचयतीति। न हि संविधानमेव प्रैषः, अपि तु तत्पूर्वकं प्रेरणम्, यत् कुर्वन् प्रयोजक इत्युच्यते संविधानं हि कुर्वन्नपि यावत् प्रेषणं नाचरति, न तावत् प्रयोजकः कथ्यते ॥ ८ ॥

कर्त्रभिप्राये विधीयमानमात्मनेपदं कथं धातोः संविधानार्थतामाक्षिपतीत्याह—

कर्त्रभिप्रायता सूत्रे क्रियाभेदोपलक्षणम्।
तथाभूता क्रिया या हि तत्कर्ता फलभाग्यतः ॥ ९ ॥

कर्त्रभिप्रायक्रियाफलग्रहणेन संविधानविशिष्टा क्रिया निर्दिश्यते, यस्माद् यैवंभूता क्रिया विशिष्टरूपा, तस्याः कर्ता फलेन युज्यते। न ह्यसंविदधद्

---

तथा चोदासीनोऽपि=विक्लित्त्यनुकूलां क्रियां काञ्चिदकुर्वन्नपि प्रयोजकः पाकानुकूलां सामग्रीं परिपोषयन् संविधाता कारक इति तद्व्यापारः संविधानरूपो धातुवाच्यः पचत इति विक्लित्त्यर्थत्वात्, यथाऽधिश्रयणोदकासेचनादिः प्रयोज्यकर्तुर्व्यापारो धातुवाच्य इति। पचति देवदत्त इत्यधिश्रयति, उदकमासेचयतीत्याद्यर्थः। पचते देवदत्तः, संभारं=सामग्रीं ढौकयति=प्रयोज्यकर्तुः समीपे प्रापयतीत्यर्थः। तस्यैव तु=प्रयोज्यकर्तुः संविधातुरेव तु प्रयोज्यप्रेषणे विवक्षिते णिज् भवति पाचयतीति। संविधानमात्रे तु विवक्षितेन णिच्। न हि संविधानमेव प्रैषः, अपि तु संविधानपूर्वकं प्रेरणम्, यत् कुर्वन् प्रयोजक इत्युच्यते। संविधानं हि कुर्वन्नपि यावत् प्रेषणं नाचरति, न तावत् प्रयोजकः कथ्यत इति न संविधानमात्रे णिजिति ॥ ८ ॥

ननु कर्त्रभिप्राये क्रियाफले विधीयमानमात्मनेपदं कथं पच्यादिधातोः संविधानार्थतामाक्षिपति=अर्थापत्त्या प्रमाणेनापादयतीत्याशङ्क्याह—कर्त्रभिप्रायेति।

अस्यार्थः—"स्वरितञितः" इत्यादिसूत्रे फलस्य कर्त्रभिप्रायता कर्तृगामिता क्रियाभेदोपलक्षणम्—क्रियाभेदस्य=संविधानरूपस्य क्रियाविशेषस्य, उपलक्षणम्—अर्थापत्त्या आक्षेपकम्। हि=यतः, या क्रिया तथाभूता कार्यत्वेन संविधानविशिष्टा संविधानकार्यभूतेति यावत्। तत् कर्ता=तस्या एव क्रियायाः कर्ता फलभाक्, नान्यस्या इति। ततश्च कार्यभूतेन फलसम्बन्धेन कारणभूता संविधानरूपा क्रिया आक्षिप्ता भवतीति लब्धं भवतीति।

अत्र संविधानस्य यागादिक्रियाजनकत्वं तत् फलजनकत्वञ्चेति बोध्यम्। संविधानस्य क्रियाजनकत्वेन क्रियाफलं प्रति अन्यथासिद्धत्वं तु न, अन्वयव्यति-

याजकादिः क्रियाफलं स्वर्गाद्यश्नुते । ततश्च कार्यभूतेन फलसम्बन्धेन कारणभूत. क्रियोपलक्षितेति तत्रात्मनेपदमित्युक्तं भवति ॥ ९ ॥

उपलक्षणे दृष्टान्तमाह—

यथोपलक्ष्यते कालस्तारकादर्शनादिभिः ।
तथाफलविशेषेण क्रियाभेदो निदर्श्यते ॥१०॥

'नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इति नक्षत्रदर्शनस्य सन्ध्याविगमलक्षणकालविशेषोपलक्षणार्थत्वाद् घनाघनगहने गगने तदभावेऽपि नालिकादिभिस्तथारेकाभ्यां सामग्रीसन्निविष्टत्वादिति ।

अयं भावः—कर्त्रभिप्रायक्रियाफलग्रहणेन स्वार्थघटकीभूता संविधानविशिष्टा क्रिया लक्षणया निर्दिश्यते, यस्माद् या एवंभूता क्रिया संविधानविशिष्टरूपा तस्याः सामग्री संढौकनादिरूपायाः कर्ता प्रयोजकः फलेन युज्यते । न ह्यसंविदधद् याजकादिः क्रियाफलं स्वर्गादि अश्नुते । ततश्च कार्यभूतेन फलसम्बन्धेन कारणभूता संविधानविशिष्टा प्रयोजकक्रिया उपलक्षिता आक्षिप्ता भवतीति तत्र=संविधानविशिष्टायां प्रयोजकक्रियायां सत्यां तत् कर्तरि आत्मनेपदमित्युक्तं भवतीति ॥ ९ ॥

कर्त्रभिप्रायक्रियाफलग्रहणेन संविधानविशिष्टप्रयोजकक्रियोपलक्षणे दृष्टान्तमाह—यथोपलक्ष्यते काल इति ।

अस्यार्थः—यथा 'नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इत्यादौ तारकादर्शनादिभिक्षर्नक्षत्रदर्शनादिभिः सन्ध्याविगमरूपः कालविशेष उपलक्ष्यते । नक्षत्रं दृष्ट्वेति वाक्यस्य कालविशेषे लक्षणया बोध्यते । तथा फलविशेषेण कर्त्रभिप्रायक्रियाफलेन क्रियाभेदः संविधानरूपा तद्विशिष्टा वा क्रिया प्रयोजकसमवेता निदर्श्यते, उक्तेन निदर्शनेन कालदृष्टान्तेन बोध्यत इति ।

अयं भावः—'नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इति नक्षत्रदर्शनस्य सन्ध्याविगमरूपकालविशेषोपलक्षणार्थत्वाद् घनाघनगहने=मेघमेदुरे गगने तदभावेऽपि=नक्षत्रदर्शनाभावेऽपि नालिकादिभिः=नालिकाजलस्रुतिविशेषैस्तथाविधकालावधारणे=सन्ध्याविगमकालनिर्णये वाग्विसर्गो भवत्येव यथा, तथा प्रधानफलसम्बन्धस्य संविधानोपलक्षणार्थत्वादनादृत्यापि फलविशेषद्योतनम्=कर्त्रभिप्रायक्रियाफलद्योतनमात्मनेपदं संविधानमात्रे भवति । तद्यथा राजभृत्यो यज्ञसम्भारान् संविदधाति ऋत्विग्भ्य उपढौकयति, तत्र यागफलं राजगामि, न सचिवे, तथापि तत्र कर्त्रभिप्रायक्रियाफलाभावेऽपि 'राजसचिवो यजते' इत्यात्मनेपदप्रयोगः संविधानमात्रे भवतीति ।

वस्तुतस्तु कर्त्रभिप्रायक्रियाफलत्वाभावान्न राजसचिवो यजत इति प्रयोगः

विधकालावधारणे वाग्विसर्गो भवत्येव यथा, तथा प्रधानफलसम्बन्धस्य संविधानोपलक्षणार्थत्वादनादृत्यापि फलविशेषद्योतनमात्मनेपदं संविधानमात्रे भवति ॥ १० ॥

भाष्ये स्वरितञिद्ग्रहण प्रत्याख्यातमिति यातिप्रभृतिभ्योऽपि कस्मादात्मनेपदं न भवतीत्याह—

क्रियाविशेषवचने सामर्थ्यमुपरुध्यते ।
केषाञ्चिदन्ये तु कृताः स्वरितेतो ञितस्तथा ॥११॥

कर्त्रभिप्रायक्रियाफलोपलक्षिते संविधानलक्षणे प्रत्याय्ये यातिप्रभृतीनां धातूनां शक्तिः प्रतिहन्यते । नियता हि शब्दशक्तिः ।

ये तु संविधानाभिधानसमर्थास्ते स्वरितेत्संज्ञका ञकारेत्संज्ञकाश्च पठिता धातुपाठे संविधानविशिष्टक्रियावचनसामर्थ्यमवद्योतयितुमित्यर्थः । स्वाभाविकी

---

संविधानसत्त्वेऽपि । तस्मात् कर्त्रभिप्रायक्रियाफलाभावे संविधानसत्त्वे निष्कामः 'राजा यजते' इत्युदाहार्यमिति ।

वस्तुतस्त्वत्रापि कर्त्रभिप्रायक्रियाफलाभावेऽपि तद्विवक्षयाऽऽत्मनेपदमिति अनादृत्यापि फलविशेषद्योतनमात्मनेपदं संविधानमात्रे भवतीति । अत्रत्यं हेलाराजोक्तं चिन्त्यमिति ।

न च निष्कामपदेन विरोधात् कथमत्र निष्कामे राज्ञि विवक्षया फलाध्यारोप इति वाच्यम्, शाब्दे आहार्यारोपनिश्चये बाधस्याकिञ्चित्करत्वादिति ॥ १० ॥

"स्वरितञितः" ( पा० १।३।७२ ) इति सूत्रे भाष्ये स्वरितञिद्ग्रहणं प्रत्याख्यातमिति यातिप्रभृतिभ्योऽपि=याद्यात्वादिभ्योऽपि कस्मादात्मनेपदं न भवतीत्याशङ्क्याह—क्रियाविशेषवचन इति ।

अस्यार्थः—केषाञ्चिद् धातूनां यातिप्रभृतीनां क्रियाविशेषवचने क्रियाविशेषस्य संविधानरूपस्याभिधाने सामर्थ्यं शक्तिरुपरुध्यते प्रतिहन्यते । अन्ये तु ये संविधानाभिधानसमर्थास्ते गणकारैः स्वरितेतस्तथा ञितश्च कृताः । पच-तनु इत्यादयः स्वरितेतः, णीञ्-धूञ्-पूञ् इत्यादयो ञितः कृताः, तेषां संविधानविशिष्टक्रियावचनसामर्थ्यमवद्योतयितुमिति ।

अयं भावः—कर्त्रभिप्रायक्रियाफलेन उपलक्षिते आक्षिप्ते संविधानलक्षणे क्रियाविशेषे प्रत्याय्ये यातिप्रभृतीनां धातूनां शक्तिः प्रतिहन्यते । अर्थबोधने नियता हि शब्दशक्तिः । ये तु धातवः पचतनुणीञ्धूञ्प्रभृतयः संविधानाधानसमर्थास्ते स्वरितेत्संज्ञका ञकारेत्संज्ञकाश्च धातुपाठे पठिताः संविधानविशिष्टक्रियाऽभिधानसामर्थ्यमवद्योतयितुम् । नियतविषया हि धातूनां स्वाभाविकीशक्तिरनुबन्धं

हि धातूनां शक्तिर्नियतविषया दुरवसानेति ञकाराद्यनुबन्धस्तदवगमाय कृतो गणकारैः ॥ ११ ॥

यद्येवं कथं स्वरितञिद्ग्रहणं प्रत्याख्यायते। असति हि तस्मिन्ननुबन्धाः कथं पठ्यन्ते। तद्धि तेषां कार्यम्। असति तस्मिन् तदभावः। तथा च संविधानविशिष्टक्रियाभिधानशक्तिर्धातूनां कथमवगम्येतेत्याह—

अनुबन्धश्च सिद्धेऽर्थे स्मृत्यर्थमनुषज्यते।
तुल्यार्थेष्वपि चावश्यं न सर्वेष्वेकधर्मता ॥१२॥

इह क्रियावचनत्वेन समानाभिधेयेष्वपि धातुषु न सर्वेषु क्रियामात्रवचन-

---

विना दुरवसाना=दुष्परिग्रहा इति तादृशशक्त्यवगमाय धातुषु ञकाराद्यनुबन्धः कृतो गणकारैरिति ॥ ११ ॥

यद्येवम्—यदि ञकाराद्यनुबन्धो धातूनां नियतविषयकस्वाभाविकशक्त्यवगमाय गणकारैः कृत इति स्वीकारः, तर्हि कथं स्वरितञिद्ग्रहणं प्रत्याख्यायते। असति हि तस्मिन्=स्वरितञिद्ग्रहणे धातुषु अनुबन्धाः कथं पठचन्ते। तद्धि=कर्त्रभिप्राये क्रियाफले स्वरितञित आत्मनेपदं हि तेषामनुबन्धानां कार्यम्। असति तस्मिन्=स्वरितञिद्ग्रहणेऽसति तदभावः=तत्रात्मनेपदरूपकार्याभावः। तथा च=आत्मनेपदाभावे च संविधानविशिष्टक्रियाऽभिधानशक्तिर्धातूनां कथमवगम्येत इत्याह—अनुबन्धश्च सिद्धेऽर्थे इति।

अस्यार्थः—उत्तरार्धे चो हेतौ। नेतः क्रियावचनत्वेन तुल्यार्थेष्वपि सर्वेषु धातुषु कृभ्वस्तिषु, किञ्च प्रापणार्थत्वेन तुल्यार्थेष्वपि सर्वेषु धातुषु 'या प्रापणे, णीञ् प्रापणे, वह प्रापणे' इत्यादिषु अवश्यमेकधर्मता न। तत्राद्येषु कृभ्वस्तिषु क्रियामात्रवचनस्वभावता न, अपि तु शब्दशक्तिवैचित्र्याद् यथायथं विशिष्टक्रियावचनत्वम्। तत्र करोतेः संविधानविशिष्टक्रियावचनत्वम्, अत एव तत्रात्मनेपदम्। भवतेरस्तेश्च सत्ताविशिष्टक्रियावचनत्वमिति। एवं 'या प्रापणे' इत्यस्य प्राप्तिरूपं प्रापणमर्थः, 'णीञ् प्रापणे, वह प्रापणे' इत्यनयोस्तु प्रापणरूपं प्रापणमर्थं इति संविधानरूपोऽर्थोऽवगम्यते तयोरित्यात्मनेपदम्।

एवञ्च तत्तद्धातूनां स्वाभाविके संविधानरूपेऽर्थे सिद्धे सति धातूनां स्वभावविशेषावधारणेऽशक्तानां वचनमात्रानुसारिणामज्ञानां धातुस्वभावविशेषस्मृत्यर्थं ञकाराद्यनुबन्धोऽनुषज्यते धातुषु निवेश्यते, प्रयोगज्ञं प्रति तु नार्थोऽनुबन्धासङ्गस्येति स्वरितञिद्ग्रहणं प्रत्याख्यातं भाष्य इति।

अयं भावः—इह क्रियावचनत्वेन समानार्थेष्वपि धातुषु न सर्वेषु क्रियामात्रवचनस्वभावता, अपि तु शब्दशक्तिवैचित्र्याद् यथायथं संविधानविशिष्टक्रिया-

स्वभावः, अपि तु शब्दशक्तिवैचित्र्याद् यथास्वं विशिष्टक्रियावचनत्वम्। तथा हि—'या प्रापणे', 'णीञ् प्रापणे' इति तुल्येऽप्यर्थनिर्देशे यातेः प्राप्तिः प्रापणमर्थः, नयतेस्तु प्रापणा प्रापणमिति संविधानमर्थोऽवगम्यते। एवमन्येषामपि संविधानार्थता स्वाभाविकी बोद्धव्या। तामेव सूचयितुं ञकाराद्यनुबन्धः स्मरणार्थं निवेश्यते।

यो हि प्रयोगादेव स्वभावविशेषमवधारयितुमशक्तस्तं प्रति स्मृत्यर्थोऽनुबन्धासङ्गः, प्रयोगज्ञं तु प्रतिनार्थस्तेन। तथा च प्रयोगदर्शिनं च प्रति स्वरितजिद्ग्रहणं शक्यमकर्तुमिति प्रत्याख्यायत एतद्भाष्ये। वचनानुसारिणं तु प्रतिक्रियत एवैतत्।

तथा च भाष्यम्—'वृत्तज्ञो ह्याचार्यस्तत्समर्थाननुबन्धानासजति' इति।

वर्तन्तेऽस्मिन् कार्याणीति वृत्तं प्रयोगो वर्तनं वृत्तमिति शब्दव्यापारो वा तज्ज्ञः सूत्रकारो वचनानुसारिणमवृत्तज्ञं प्रति ञकाराद्यासजतीत्यर्थः ॥ १२ ॥

तुल्यार्थेष्वपि नैकधर्मतेत्यत्र दृष्टान्तमाह—

दृशीक्ष्योः सदृशेऽप्यर्थे नाभेदः प्रतिपूर्वयोः।
ण्यर्थोपादयिनस्तस्मान्न तुल्यार्थाः पचादिभिः ॥१३॥

---

वचनत्वम्। तथा हि—'या प्रापणे, णीञ् प्रापणे' इत्यनयोस्तुल्येऽपि प्रापणरूपार्थनिर्देशे यातेः प्राप्तिरूपं प्रापणमर्थः, नयतेस्तु प्रापणरूपं प्रापणमर्थ इति संविधानरूपोऽर्थोऽवगम्यते। एवमन्येषामपि कृञ्पच्यज्प्रभृतीनां धातूनां संविधानार्थकता स्वाभाविकी बोद्धव्या। तामेव सूचयितुं ञकाराद्यनुबन्धः प्रयोगानभिज्ञानां वचनमात्रानुसारिणामज्ञानां स्मरणार्थं धातुषु निवेश्यते।

यो हि प्रयोगादेव स्वभावविशेषमवधारयितुमशक्तस्तं प्रति स्मृत्यर्थोऽनुबन्धासङ्गः, प्रयोगज्ञं तु प्रतिनार्थस्तेन। तथा च प्रयोगदर्शिनं च प्रति स्वरितञिद्ग्रहणं शक्यमकर्तुमिति प्रत्याख्यायत एतद्भाष्ये। वचनानुसारिणं प्रयोगानभिज्ञं तु प्रतिक्रियत एवैतत्।

तथा च भाष्यम्—"वृत्तज्ञो ह्याचार्यस्तत्समर्थाननुबन्धानासजति" इति।

अस्यार्थः—वर्तन्तेऽस्मिन् कार्याणि सूत्रविधेयानि लादेशात्मनेपदादीनीति वृत्तम्। बाहुलकादधिकरणे क्तप्रत्ययः। वृत्तं प्रयोगः, वर्तनं वृत्तमिति शब्दव्यापारो वा, संविधानरूपार्थविषयकः, भावे क्तप्रत्ययः। तज्ज्ञः सूत्रकारो वचनानुसारिणमवृत्तज्ञं प्रति तत्समर्थान् आत्मनेपदादिरूपलादेशादिकार्यसमर्थाननुबन्धान् ञकारादीन् आसजतीति ॥ १२ ॥

तुल्यार्थेष्वपि नैकधर्मता इति पूर्वकारिकोक्तेऽर्थे दृष्टान्तमाह—दृशीक्ष्योरिति।

गणपठितेऽर्थे समानेऽपीक्षते पश्यतीत्यनयोः प्रतिपूर्वयोर्नाभेदो न समानार्थता, अपि तु प्रतीक्षत इत्यन्य एवार्थः प्रतिपालनं नाम । प्रतिपश्यतीति तु प्रतीपदर्शनमर्थः । दृशीक्षी चोपलक्षणं रक्षतिपालयत्योरपि, प्रतिरक्षति प्रतिपालयतीत्यन्य एवार्थः ।

एवं हरतिनयत्योः सम्पूर्वयोः संहरति संनयति इत्याद्यप्युदाहार्यम् ।

एवं ण्यर्थमपि ये सम्बन्धितया स्वीकुर्वन्ति, ते संविधानाभिधायिभिः पचादिभिर्न समानवाच्याः ।

न हि सर्वे धातवो ण्यर्थेन सङ्गच्छन्त इत्येतावता संविधानाभिधायिनोऽपि स्युः, शक्तिभेदात् । प्रैषो हि ण्यर्थः, संविधानं ततोऽन्यत् । तद्धेतुरपीत्युक्तमेव । अत एव संविधानमेव ण्यर्थोऽत्र नाभिमतः ।

---

अस्यार्थः—शुद्धयोर्दृशीक्ष्योरर्थे चाक्षुषज्ञानरूपे सदृशे तुल्येऽपि प्रतिपूर्वयोस्तयोर्नार्थाभेदः । तथा हि—प्रतिपश्यति इत्यस्य प्रतिकूलदर्शनमर्थः । प्रतीक्षते इत्यस्य प्रतिपालनमर्थं इति भेदात् । तस्माद् धातूनां तत्तदर्थे स्वाभाविक-शक्तेर्भेदेनार्थभेदात्, ण्यर्थोपादायिनः—ये ण्यर्थं प्रैषं स्वसम्बन्धितया स्वीकुर्वन्ति ते संविधानाभिधायिभिः पचादिभिर्न तुल्यार्थाः, ण्यर्थस्य प्रैषस्य संविधानकार्यत्वेऽपि ततोऽन्यत्वात् । सर्वस्य धातोर्ण्यर्थसम्बन्धेऽपि संविधानाभिधायित्वाभावात् । अस्ति हि भावयतीत्यत्र ण्यर्थसम्बन्धः । नास्ति चात्र धातोः संविधानाभिधायित्वमिति ।

अयं भावः—'ईक्षते पश्यति' इत्यनयोर्धात्वोर्गणपठिते दृशिर् प्रेक्षणे, ईक्ष दर्शने इत्येवंरूपेऽर्थे समानेऽपि प्रतिपूर्वयोरनयोर्नाभेदो न समानार्थकता, अपि तु प्रतीक्षत इत्यत्रान्य एवार्थः प्रतीक्षणं प्रतिपालनं नाम । प्रतिपश्यति इत्यस्य तु प्रतीपदर्शनम्=प्रतिकूलदर्शनम् अर्थः । दृशीक्षी धातू चोपलक्षणं रक्षतिपालयत्योरपि, प्रतिरक्षति, प्रतिपालयति इत्यनयोरन्य एवार्थः ।

तथा हि—प्रतिरक्षति इत्यत्र प्रत्यर्थो वीप्सा नैयत्यम्, सर्वतोभावो वा । वृक्षं वृक्षं प्रतिरक्षति इत्यत्र वीप्सा । 'वृक्षं प्रतिरक्षति' इत्यस्य नियमेन रक्षतीत्यर्थः । यद्वा 'वृक्षं प्रतिरक्षति' इत्यस्य सर्वतोभावेन रक्षतीत्यर्थ । प्रति-पालयतीत्यस्य तु प्रतिपालनं प्रतीक्षणमर्थः ।

एवम्—हरतिनयत्योः शुद्धयोरेकार्थत्वेऽपि संपूर्वयोः 'संहरति, संनयति' इत्यादिकमपि भिन्नार्थत्वे उदाहार्यम् ।

एवं ण्यर्थं प्रैषाध्येषणादिकमपि ये धातवः सम्बन्धितया स्वीकुर्वन्ति, ते संविधानाभिधायिभि· पचादिभिर्न समानार्थकाः ।

न हि सर्वे धातवो ण्यर्थेन प्रैषादिना सङ्गच्छन्त इत्येतावता संविधाना-भिधायिनोऽपि स्युः, शक्तिभेदात् । प्रैषो हि ण्यर्थः, संविधानं तु सामग्रीसंढौकनरूपं

एवं हि पचादिभिस्तदभिधायिनां भिन्नार्थता न भवेत्, पचादीनामपि संविधानाभिधानात् सामान्येन पचादिभिरित्युक्तत्वान्न परस्मैपदान्तैरात्मने-पदान्तानां भिन्नार्थतेति लभ्यते ।। १३ ।।

संविधानेन स्वरितञिद्व्यतिरिक्तानां न सर्वथैवायोगः, अपि तु योगेऽपि ते तदभिधानशक्तिविकला इत्याह—

**उम्भ्यर्थे वर्तमानस्य करोतेर्भिन्नधर्मणः ।**
**ण्यर्थोपादयिता तस्मान्नियताः शब्दशक्तयः ।।१४।।**

उदुम्भाञ्चकारेत्यामन्तस्यानभिव्यक्तपदार्थकस्याभिव्यक्त्यर्थं करोतिरनुप्रयुज्यते । स च क्रियासामान्यवाचीत्यत्रोम्भ्यर्थे वर्तते । ततश्च तस्य विशिष्ट-

---

ततोऽन्यत् । तद्धेतुरपि=प्रैषादिरूपण्यर्थहेतुरपि इत्युक्तमेव प्राक् । अत एव संविधानमेव ण्यर्थोऽत्र नाभिमतः ।

एवं हि=संविधानस्य ण्यर्थरूपत्वे हि पचादिभिस्तदभिधायिनाम्=ण्यर्थाभिधायिनां भिन्नार्थता न भवेत्, पचादीनामपि संविधानाभिधानात् । कारिकायां सामान्येन=आत्मनेपदपरस्मैपदसाधारण्येन पचादिभिरित्युक्तत्वान्न परस्मैपदान्तैरात्मनेपदान्तानां पचादीनां भिन्नार्थतेति लभ्यते ।

अयं तु विशेषः--उभयत्र संविधानार्थत्वे तुल्येऽपि कर्त्रभिप्राये क्रियाफले आत्मनेपदम् । अन्यत्र तु परस्मैपदमिति । तेन राजसचिवो यजति इत्येव प्रयोगः संविधानार्थसत्त्वेऽपीति ।। १३ ।।

स्वरितञिद्व्यतिरिक्तानां धातूनां संविधानेन सह न सर्वथैवायोगः, अपि तु योगसत्त्वेऽपि ते धातवस्तदभिधानशक्तिविकलाः=संविधानरूपार्थाभिधानशक्तिशून्या इत्याह—उम्भ्यर्थे इति ।

अस्यार्थः—उम्भाञ्चकार इत्यत्र उम्भतिः क्रियाविशेषवाची । करोतिस्तु कृभ्वस्तयः क्रियासामान्यवचना इति अभ्युपगमेन क्रियासामान्यवाची इति सामान्यविशेषयोरभेददर्शनेनोम्भ्यर्थे उम्भ धात्वर्थे वर्तमानस्य करोतेर्भिन्नधर्मणो विशिष्टक्रियोपनिपाते भिन्नस्वभावस्य नानास्वभावस्य ण्यर्थोपादयिता, ण्यर्थः प्रैषः स इव ण्यर्थः संविधानम्, कार्यकारणयोः सारूप्यात् प्रैषस्य संविधानकार्यत्वात् । तदुपादयिता—संविधानाभिधायित्वं दृष्टम् । तथा च करोतिर्ञित्पठितः । यत एवं तस्मात् शब्दानां शक्तयो नियताः । एकार्थत्वेऽपि अत्रोम्भेः संविधानाभिधाने शक्तिर्नास्ति, करोतेस्तु तत्र शक्तिरस्तीति ।

अयं भावः—'उदुम्भाञ्चकार' इत्यत्रामन्तस्य संविधानाभिधानसामर्थ्याभावादनभिव्यक्तसंविधानपदार्थकस्य अभिव्यक्त्यर्थम्=संविधानरूपार्थोऽभिव्यक्त्यर्थं करोतिरनुप्रयुज्यते । स च=कृञ्धातुश्च क्रियासामान्यवाचीत्यतोऽत्रोम्भ्यर्थे वर्तते,

क्रियोपनिपाते भिन्नधर्मणो नानास्वभावस्य ण्यर्थ इव ण्यर्थः संविधानं तदभिधायित्वं दृष्टम् ।

तथा च ञिदयं पठितः । यत एवं तस्माच्छब्दानां शक्तयो नियताः । एकस्मिन्नपि ह्यर्थेऽत्रोम्भेः संविधानाभिधाने शक्तिर्नास्ति करोतेस्त्वस्ति । इत्थं चास्ति संविधानेनोम्भेः सम्बन्धो येन तदर्थप्रवृत्तेः करोतेस्तदभिधानशक्तिः । सत्यपि च तस्मिंस्तदभिधानसामर्थ्यमस्य नास्ति ।

वस्तुत एव तु संविधानेनोम्भेः सम्बन्धाभावे करोत्यर्थोऽपि संविधानेन न विशेष्यते ।। १४ ।।

कथमवसीयते करोत्यर्थोऽत्र संविधानविशिष्ट इति तदर्थसम्प्रत्यायकस्यात्मनेपदस्यादर्शनादित्याशङ्क्य भाष्यकाराभ्युपगममत्रार्थे संवादकमाह—

तथा ह्यनुप्रयोगस्य करोतेरात्मनेपदे ।
पूर्ववद्ग्रहणं प्राप्ते स्वरितं समुपस्थितम् ।।१५।।

---

सामान्यविशेषयोरभेदात् । ततश्च तस्य = कृञो विशिष्टक्रियोपनिपाते = विशिष्टार्थाभिधायित्वानुप्रयोगे भिन्नधर्मणो नानास्वभावस्य ण्यर्थः प्रैष इव ण्यर्थः संविधानं तदभिधायित्वं दृष्टम् ।

तथा चायं करोतिर्ञिद्गणे पठितः । यत एवं तस्माच्छब्दानां शक्तयो नियताः । तथा हि —अत्रोम्भिकरोत्योरेकस्मिन्नर्थे सत्यप्युम्भेः संविधानाभिधाने शक्तिर्नास्ति, करोतेस्तु अस्तीति । इत्थञ्च = उम्भिकरोत्योः समानार्थकत्वे चास्ति संविधानेन उम्भेः सम्बन्धो येन तदर्थप्रवृत्तेः = उम्भ्यर्थे प्रवर्तमानस्य करोतेस्तदभिधानशक्तिः संविधानरूपार्थाभिधानशक्तिः । सत्यपि च तस्मिन् = संविधानरूपेऽर्थे सत्यपि तदभिधानसामर्थ्यमस्य = संविधानरूपार्थाभिधानसामर्थ्यमुक्तेर्नास्ति ।

वस्तुत एव तु उम्भेः संविधानेन सम्बन्धाभावे करोत्यर्थोऽपि संविधानेन विशेष्येत, करोतेरुम्भ्यर्थकत्वेन तस्यापि संविधानार्थकत्वाभावात् ।। १४ ।।

उम्भाञ्चकार इत्यत्र कथमवसीयते करोत्यर्थोऽत्र संविधानविशिष्ट इति, संविधानार्थप्रत्यायकस्य लिङ्गभूतस्यात्मनेपदस्यात्रादर्शनादित्याशङ्क्यात्र कृञः संविधानार्थकत्वविषयकं भाष्यकाराभ्युपगममत्रार्थे संवादकमाह—तथा ह्यनुप्रयोगस्येति ।

अस्यार्थः —तथा हि उम्भाञ्चकार इत्यत्रानुप्रयोगस्य करोतेः सम्बन्धिन्यात्मनेपदे "स्वरितञितः" ( पा० १।३।७२ ) इत्यादिसूत्रेण कर्त्रभिप्राये क्रियाफले विवक्षिते प्राप्ते सति "पूर्ववत्सनः" (पा० १।३।६२) इति सूत्रात् स्वरितं स्वरितलिङ्गकं पूर्ववद्ग्रहणं समुपस्थितमिति भाष्यम् । "आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" (पा० १।३।६४) इति सूत्रं तु अकर्त्रभिप्राये क्रियाफले चरितार्थम् । अत्र पूर्ववत्सन

इह 'आत्मप्रत्ययवत् कृञोऽनुप्रयोगस्य' ( पा० १।३।६३ ) इत्यात्मनेपद-विधानमकर्त्रभिप्राये चरितार्थम्। कर्त्रभिप्राये तु कृञोऽनुप्रयोगस्यात्मनेपदे 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' ( पा० १।३।७२ ) इत्यनेन प्रसक्ते 'पूर्ववत् सनः' ( पा० १।३।६२ ) इत्यतः सूत्रात् स्वरितलिङ्गयुक्तं पूर्ववद्ग्रहणमवधीकृत-मिति भाष्यकारेणोपगतम् ।

तथा चानुप्रयोगस्य कृञो यदाम्प्रत्ययात् पूर्वस्य धातोः आत्मनेपदम्, तदा कर्त्रभिप्रायेऽपि तद् भवति, नान्यथेति नियमार्थात् पूर्ववद्ग्रहणादत्रात्मनेपदाभावः ।

एतच्च कथमुपपद्यते, यद्यनुप्रयोगस्य करोतेः संविधानाभिधानसामर्थ्यं स्यात् । अन्यथात्मनेपदाप्रसङ्गात् किं पूर्ववद्ग्रहणेन ।। १५ ।।

णिज्योग्यार्थाभिधानेऽपि न सर्वेषां धातूनां संविधानप्रत्यायनसामर्थ्यमप्य-नुमेयमित्येतन्निदर्शनोपन्यासेन स्थिरयति—

---

इत्यतोऽनुवृत्तस्य पूर्ववद्ग्रहणस्य आम्प्रत्ययवदित्यत्रावधित्वेन सम्बन्धे सति आम्प्रत्ययवदात्मनेपदं तदैव भवति, यदा आम्प्रत्ययात् पूर्वस्य धातोरात्मनेपदं कर्त्रभिप्राये क्रियाफले दृष्टं भवतीति नियमाकारः फलितः। अक्षरयोजनया नियमाकारस्तु आम्प्रत्ययवदात्मनेपदम् आम्प्रत्ययात् पूर्ववदेव भवतीति। अस्माद् भाष्यसंवादादवगम्यते–संविधानार्थकोऽत्र करोतिः, आत्मनेपदाभावेऽपीति ।

अयं भावः—"आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य" ( पा० १।३।६५ ) इत्यात्मनेपदविधानस्य अकर्त्रभिप्राये क्रियाफले चरितार्थत्वात् । 'उम्भाञ्चकार' इत्यत्र कर्त्रभिप्राये तु क्रियाफलेऽनुप्रयोगस्य कृञः सम्बन्धिनि आत्मनेपदे "स्वरित-ञितः कर्त्रभिप्राये क्रियाफले" ( पा० १।३।७२ ) इत्यनेन प्राप्ते "पूर्ववत्सनः" इति सूत्रात् स्वरितलिङ्गयुक्तं पूर्ववद्ग्रहणमनुवर्तमानम्—आम्प्रत्ययवदात्मनेपदम्—आम्प्रत्ययात् पूर्ववदेव = पूर्वधातुवदेव भवतीति नियमाकारेऽवधीकृतम् = आत्मने-पदस्य नियामकतया निरूपकं कृतम् इति भाष्यकारेणोपगतम् ।

तथा च यदा आम्प्रत्ययात् पूर्वस्य धातोरात्मनेपदं तदाऽनुप्रयोगस्य कृञः कर्त्रभिप्रायेऽपि क्रियाफले तद् = आत्मनेपदं भवति नान्यथेति नियमार्थात् पूर्ववद्-ग्रहणादत्रात्मनेपदाभावः = उम्भाञ्चकार इत्यत्र कृञ आत्मनेपदाभावः संविधानार्थ-कत्वेऽपि ।

एतच्च कथमुपपद्यते, यद्यनुप्रयोगस्य करोतेः संविधानाभिधानसामर्थ्यं स्यात् । अन्यथा उम्भाञ्चकार इत्यत्र कृञः संविधानाभिधायित्वाभावेऽत्र कृञ आत्मनेपदाप्रसङ्गात् किं पूर्ववद्ग्रहणेनेति ।। १५ ।।

णिज्योग्यार्थाभिधानेऽपि न सर्वेषां धातूनां संविधानप्रत्यायनसामर्थ्यम्, यथा 'देवदत्तो यज्ञदत्तमुपरमति' इत्यस्योपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽत्र

एकत्वेऽपि क्रियाख्याते साधनाश्रयसङ्ख्यया ।
भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रितः ॥१६॥

साध्यस्वभावत्वात् क्रियायाः स्वतो नास्ति भेदः । तिङन्तपदविषये त्वेकपदोपात्तकर्तृकर्मलक्षणसाधनाधारद्रव्यगतद्वित्वबहुत्वाभ्यां पचतः पचन्ति पच्यते पच्यन्ते इति विशिष्यते । द्विबहुसाधनसाध्यत्वं ह्यत्रोपगम्यते क्रियायाः ।

यथा च साधनाधारद्रव्यसंख्यायोगस्तथा तद्गतलिङ्गविशेषयोगोऽपि कस्मान्न भवतीति न शक्यते वक्तुम्, आख्यातात्लिङ्गविशेषस्याप्रतीतेः ।

---

रमतिः । अत्र रमतेर्णिज्योग्यार्थाभिधायित्वमस्ति, संविधानप्रत्यायनसामर्थ्यं तु नास्ति, अत एवात्रात्मनेपदाभावः । एतत्=णिज्योग्यार्थाभिधानेऽपि न सर्वेषां धातूनां संविधानप्रत्यायनसामर्थ्यमित्येतद् निदर्शनोपन्यासेन=दृष्टान्तोपन्यासेन स्थिरीकरोति—एकत्वेऽपीति ।

अस्यार्थः—'पचतः, पचन्ति, पच्येते, पच्यन्ते' इत्यादौ आख्याते तिङन्ते पाकक्रियाया एकत्वेऽपि स्वभावतोऽभेदेऽपि पाकक्रिया, साधनाश्रयसंख्या= तिङर्थकर्तृकर्मरूपसाधनगतद्वित्वबहुत्वसंख्यया भिद्यते विशिष्यते । 'द्वौ पाकौ, बहवः पाकाः', तत्र=आख्यातार्थक्रियायाम्, तदाश्रितः=तिङर्थकर्तृकर्मरूपसाधन-समाश्रितो लिङ्गाख्यः स्त्रीत्वपुंस्त्वादिरूपो भेदस्तु न शक्यते वक्तुम्, आख्यातात् संख्यायाः प्रतीतावपि लिङ्गविशेषस्याप्रतीतेरिति । अत्र शक्तिः कारकम्, शक्ति-मत्कारकमित्यस्ति पक्षद्वयम् ।

तत्राद्यपक्षे साधनस्य शक्तिरूपस्याश्रयरूपं यद् द्रव्यं तद्गतसंख्ययेत्यर्थः । द्वितीयपक्षे तु साधनरूपे द्रव्ये समाश्रितया संख्ययेत्यर्थः—साधनाश्रयसंख्यया इत्यस्येति ।

अयं भावः—कृदन्ते क्रियायाः सिद्धस्वभावत्वेन—'पाकः पाकौ' इति, 'पाकः पक्तिः' इति लिङ्गसंख्यादियोगेऽपि आख्याते क्रियायाः साध्यस्वभावत्वाद् नास्ति स्वतो भेदः, न वा लिङ्गयोगः । लिङ्गसंख्याद्यनन्वयित्वमेव हि द्रव्यधर्म-सिद्धत्वविलक्षणं क्रियायाः साध्यत्वम् । तिङन्तपदविषये तु एकपदोपात्तकर्तृकर्मशक्ति-रूपसाधनाधारद्रव्यगतद्वित्वबहुत्वाभ्याम् 'पचतः, पचन्ति, पच्यते, पच्यन्ते' इत्यादौ क्रिया विशिष्यते । 'द्वौ पाकौ, बहवः पाकाः' इति । अत्र हि द्विबहुसाधनसाध्यत्वं क्रियाया उपगम्यते=स्वीक्रियते, न त्वत्र द्वित्वं बहुत्वं वा स्वतः क्रियाया अस्ति ।

यथा तु क्रियायाः कर्तृकर्मादिरूपसाधनशक्त्याधारद्रव्यगतसङ्ख्यायोगः, तथा तद्गतलिङ्गविशेषयोगोऽपि तस्याः कस्मान्न भवतीति न शक्यते वक्तुम्, सङ्ख्यावद् आख्यातात्लिङ्गविशेषस्याप्रतीतेः । साधनक्रिययोरुभयोरेकेनाख्यातपदेनोपादानेऽपि

एकपदोपादाने साधनाश्रयस्य द्वित्वादेरेवावगमः, न तु स्त्रीत्वपुंस्त्वविशिष्टेऽर्थे समवेतेयं क्रियेत्याख्यातादवगम्यते ।

स्वाभाविकं हि शब्दानामर्थप्रत्यायनम्, न युक्तिगम्यम् । साधनसंख्ययेत्येव वक्तव्ये व्यापाराविष्टं द्रव्यात्मकमेव सङ्ख्यायुक्तमाख्याताभिधेयम्, न शक्तिमात्रमित्याश्रित्याश्रयग्रहणेन सूचयति । तथा च देवदत्तः पचतीति द्रव्येण सामानाधिकरण्यं दृश्यते । अत एव द्रव्यवादिनामाख्यातार्थोऽपि द्रव्यमित्यभ्युपगमः ।। १६ ।।

तदयं निदर्शनार्थः साध्येन योज्यते—

तस्मादवस्थितेऽप्यर्थे कस्यचित् प्रतिबध्यते ।
शब्दस्य शक्तिः स त्वेष शास्त्रेऽन्वाख्यायते विधिः ।।१७।।

यत एवं शब्दशक्तिभेदापेक्षमभिधानमन्यत्रापि तस्मात् संविधानसम्बन्धे सत्यपि धातूनां कस्यचिद् यात्यादेस्तत्प्रत्यायने सामर्थ्यं प्रतिहन्यत इत्युक्त-

---

हि साधनाश्रितस्य द्वित्वादेरेव क्रियायामवगमः, न तु स्त्रीत्वपुंस्त्वविशिष्टे साधनरूपेऽर्थे समवेतेयं क्रिया इत्याख्यातादवगम्यते ।

स्वाभाविकं हि शब्दानामर्थप्रत्यायनम्, न युक्तिगम्यम् । साधनसङ्ख्यया इत्येव वक्तव्ये व्यापाराविष्टं द्रव्यात्मकमेव साधनं संख्यायुक्तं कर्तृकर्मादिरूपमाख्याताभिधेयम्, न शक्तिमात्रमिति साधनाश्रयसङ्ख्यया इत्यत्राश्रयग्रहणेन सूचयति । तथा च 'देवदत्तः पचति' इत्यत्र देवदत्तपदार्थेन द्रव्येण सह आख्याताभिधेयस्य साधनस्य सामानाधिकरण्यं दृश्यते । अत एव=आख्यातार्थस्य साधनस्य द्रव्यरूपत्वादेव द्रव्यं पदार्थ इति वादिनां मते नामार्थं इव आख्यातार्थोऽपि द्रव्यमिति अभ्युपगम इति ।। १६ ।।

तदयं पूर्वकारिकोक्तो निदर्शनार्थः=दृष्टान्तेन प्रतिपादितोऽर्थः, स्वाभाविकं हि शब्दानामर्थप्रत्यायनं न युक्तिगम्यमित्येवंरूपः, साध्येन दार्ष्टान्तिकेन प्रकृतेन योज्यते —तस्मादवस्थितेऽपीति ।

अस्यार्थः —यतः शब्दशक्तिविशेषापेक्षमभिधानं सर्वत्र, तस्मात् संविधानरूपेऽर्थे सर्वेषु धातुष्ववस्थितेऽपि कस्यचित् शब्दस्य उम्भ्यादिधातुरूपस्य संविधानरूपार्थाभिधाने शक्तिः प्रतिबध्यते । स त्वेष विधिः=स चैष शब्दशक्तिनियमनार्थः प्रकारः, शास्त्रे='स्वरितञितः' ( पा० १।३।७२ ) इत्यादिसूत्रे स्वरितञिद्ग्रहणेनान्वाख्यायते=ज्ञाप्यत इति ।

अयं भावः --यत एवम्=पूर्वकारिकोक्तया रीत्या युक्त्या च शब्दशक्तिविशेषापेक्षं तत्तदर्थाभिधानमन्यत्रापि=आख्यातेऽपि तस्माद् धातूनां संविधानसम्बन्धे कस्यचिद् धातोर्यात्यादेस्तत्प्रत्यायने सामर्थ्यं प्रतिहन्यते इत्युक्तमुम्भ्यादिसमानार्थस्य

मुम्भ्यादिसमानार्थस्य करोतेः संविधानाभिधानसामर्थ्यं नोम्भेरिति। स चैष शब्दशक्तिनियमार्थः प्रकारः स्वरितञिद्ग्रहणेन शास्त्रे प्रकटीक्रियते। गतमेतत् ॥ १७ ॥

इह यजन्ति याजकाः, पचन्ति भक्तकरा इत्येतत् कर्त्रभिप्रायक्रियाफलग्रहणस्य व्यावर्त्यमुदाहृत्य याजकानपि दक्षिणाफलमभिप्रैति, कर्मकरानपि भृतिरित्याक्षिप्य "सर्वत्रैव क्रियाफलं कर्तारमभिप्रैति। तत्र प्रकर्षगतिर्विज्ञायते साधीयो यत् क्रियाफलमभिप्रैति। किञ्च साधीयो यदर्था क्रियारभ्यते" इति भाष्ये समर्थितमित्येतद् व्याचष्टे—

**यस्यार्थस्य प्रसिद्धयर्थमारभ्यन्ते पचादयः।**
**तत् प्रधानं फलं तेषां न लाभादिप्रयोजनम् ॥१८॥**

इह कर्त्रभिप्रायक्रियाफलस्य संविधानोपलक्षणत्वात् संविधानक्रियावचनाद्

---

करोतेः संविधानाभिधानसामर्थ्यं नोम्भेरिति। स चैष शब्दशक्तिनियमार्थः=शब्दशक्तिप्रतिबन्धार्थः प्रकारः शास्त्रे स्वरितञिद्ग्रहणेन ज्ञाप्यते प्रकटीक्रियत इति। गतमेतत्=धातूनां संविधानरूपार्थाभिधानानभिधानविषयको विचारो गतः समाप्त इति ॥ १७ ॥

इह='स्वरितञितः' इत्यादिसूत्रे कर्त्रभिप्रायक्रियाफलग्रहणस्य व्यावर्त्यम्—'याजका यजन्ति ऋत्विजः, भक्तकराः पचन्ति' इत्येतदुदाहृत्य दक्षिणारूपं यज्ञफलं याजकानपि अभिप्रैति, भृतिरूपं पाकफलं कर्मकरानपि अभिप्रैति इत्याशङ्क्य "सर्वत्रैव क्रियाफलं कर्तारमभिप्रैति। तत्र प्रकर्षगतिर्विज्ञायते, साधीयो यत् क्रियाफलमभिप्रैति। किञ्च साधीयो यदर्था क्रियाऽऽरभ्यते" इति भाष्ये समर्थितम्, तदेतद् भाष्यं व्याचष्टे—यस्यार्थस्येति।

अस्यार्थः—यस्यार्थस्य संविधानफलस्य यागादौ स्वर्गादिरूपस्य पाकादौ च तृप्त्यादिरूपस्य प्रसिद्धयर्थम्—प्रकर्षे सिद्धये पचादयः पचियज्यादयः क्रिया आरभ्यन्ते तत् स्वर्गादिकं तृप्त्यादिकश्च तेषां प्रधानं फलम्, लाभादि—दक्षिणाभृत्यादिकं न प्रधानं प्रयोजनमिति। 'याजका यजन्ति, भक्तकराः पचन्ति' इत्यत्र कर्त्रभिप्रायक्रियाफलाभावेन नात्मनेपदप्रवृत्तिरिति।

अयं भावः—इह "स्वरितञितः" ( पा० १।३।७२ ) इति सूत्रे कर्त्रभिप्रायक्रियाफलग्रहणस्य संविधानोपलक्षणत्वात्=लक्षणया संविधानबोधकत्वात् संविधानक्रियावचनाद् धातोरात्मनेपदं भवतीति "स्वरितञितः" ( १।३।७२ ) इति सूत्रेणोक्तं भवति। तत्र च संविधाने यत् फलं तदेवोपलक्षणम्=आत्मनेपदविधाने ज्ञापकं निमित्तं युक्तम्। तच्च=संविधानफलञ्च यदर्थं संविधानारम्भः, यदुद्देशेन हि संविधाता प्रथममेव=यागपाकादिक्रियातः पूर्वमेव संविधानम्, साधनोपार्जनम्,

धातोरात्मनेपदमित्युक्तं भवति। तत्र च संविधाने यत् फलं तदेवोपलक्षणं युक्तम्।

तच्च यदर्थं संविधानारम्भः, यदुद्देशेन हि संविधाता प्रथममेव संविधानं साधनोपार्जनं योग्यतानुसारेण च प्रवर्तनमारभते, तत् स्वर्गादि प्रधानं फलं वेदितव्यम्। संविधात्रा नियुक्तानि कारकाणि तदिच्छया प्रवर्तन्त इति तेषां दक्षिणा भृतिर्वा फलमप्रधानम्, तादर्थ्येन पूर्वमेव क्रियाप्रवृत्त्ययोगात्। संविधाता पुनः प्रधानक्रियार्थमुदासीनोऽपि बहुमुखमाचेष्टत इति मुख्यफलाभिसन्धानेन स एव क्रियाः पच्यादिकाः प्रवर्तयति। तदयं फलस्य प्रकर्षस्तादर्थ्येन पूर्वमेव प्रधानक्रियारम्भाद् व्याख्यातः॥ १८॥

संविधाने आत्मनेपदमित्यस्मिन् पक्षे सिद्धान्ते चोदितं भाष्ये—"इह कथं भवितव्यं स्वामिदासौ पचतः" इति। एतद् व्याचष्टे—

यत्रोभौ स्वामिदासौ तु प्रारभेते सहक्रियाम्।
युगपद् धर्मभेदेन धातुस्तत्र न वर्तते॥१९॥

प्रभुभृत्ययोः सम्भूय द्वन्द्वनिर्देशेनाभिधीयमानयोः क्रियारम्भे तत्साध्यस्य

---

योग्यतानुसारेण च यागपाकादिक्रियाप्रवर्तनमारभते, तत् स्वर्गादियागादिक्रियायाः प्रधानं फलं वेदितव्यम्। संविधात्रा नियुक्तानि=प्रेरितानि कारकाणि तदिच्छया प्रवर्तन्त इति तेषां दक्षिणा भृतिर्वा फलमप्रधानम्, तादर्थ्येन=दक्षिणार्थं भृत्यर्थं वा पूर्वमेव=यागादिक्रियाप्रवृत्तेः प्रागेव क्रियाप्रवृत्त्ययोगात्। संविधाता तु प्रधान-क्रियार्थम्=यागपाकादिक्रियाप्रवृत्त्यर्थम् उदासीनोऽपि=निर्व्यापारोऽपि स्वर्गादि-रूपप्रधानफलोद्देशेन बहुमुखम्=बहुप्रकारम्, आचेष्टत इति मुख्यफलस्वर्गाद्य-भिसन्धानेन स एव=संविधाता एव क्रियाः पच्यादिकाः प्रवर्तयति। तदयं फलस्य प्रकर्षः, तादर्थ्येन=स्वर्गादिरूपप्रधानफलार्थत्वेन प्रधानक्रियारम्भात्=याग-पाकादिक्रियारम्भाद् इति रीत्या पूर्वमेव व्याख्यात इति॥ १८॥

संविधाने आत्मनेपदमित्यस्मिन् पक्षे सिद्धान्तभूते स्थिते चोदितं भाष्ये—"इह कथं भवितव्यं स्वामिदासौ पचतः" इति। एतद् भाष्यं व्याचष्टे—यत्रोभाविति।

अस्यार्थः यत्र तु उभौ स्वामिदासौ द्वन्द्वनिर्देशेनाभिधीयमानौ सहक्रियां प्रारभेते, तत्र धर्मभेदेन=स्वामिसाध्यसम्भारघटनरूपसंविधानभृत्यसाध्यप्रधान-क्रियारूपधर्मभेदेन धर्मद्वयविरोधाद् धातुः पचादिको युगपद् न वर्तते। धातोर्विरु-द्धार्थद्वयाभिधायकत्वं युगपद् न सम्भवतीति।

अयं भावः—प्रभुभृत्ययोः सम्भूय=सन्धीभूय द्वन्द्वनिर्देशेनाभिधीयमानयोः पाकादिक्रियारम्भे प्रभुभृत्यसाध्यस्य व्यापारस्य भेदाद् युगपदेककालं धातुस्तद्वाच-

व्यापारस्य भेदाद् युगपदेककालं धातुर्वाचकत्वं नासादयति।

तथा हि—प्रभुसाध्यं संविधानं सम्भारघटनम्, भृत्यसाध्यं तु प्रधानक्रियारूपमिति विलक्षणत्वाद् व्यापारस्यैकधातुवाच्यता नोपपद्यते। तथा च किमात्मनेपदं संविधात्रपेक्षं क्रियताम्, किं वा दासापेक्षं परस्मैपदमिति संशयो न व्यावर्तते ॥१९॥

अथापि कथञ्चित् क्रियाद्वयं विलक्षणमप्यनेकार्थत्वाद् धातुरभिदधति, तथापि—

यत्र प्रतिविधानार्थः पचिस्तत्रात्मनेपदम्।
परस्मैपदमन्यत्र संस्काराद्यभिधायिनि ॥२०॥

प्रतिविधानं संविधानं तद्वचनात् पचेरात्मनेपदमाम्नातम्, वाक्यगतविक्लित्तिपर्यन्तसाधनविनियोगादिलक्षणसंस्कारादिवचनात् तु परस्मैपदमिति धातुनार्थद्वयस्वीकारेऽप्येकस्मिन् प्रयोगे विरुद्धस्वरूपलादेशद्वयानुपपत्तिः ॥ २० ॥

---

कत्वम्=प्रभुभृत्योभयसाध्यव्यापारद्वयवाचकत्वं नासादयति। तथा हि—प्रभुसाध्यं संविधानं सामग्रीसंघटनरूपम्, भृत्यसाध्यं तु पाकादिरूपप्रधानक्रियारूपमिति व्यापारयोर्विरुद्धत्वाद् युगपदेकधातुवाच्यता नोपपद्यते। तथा च किमात्मनेपदं संविधात्रपेक्षम्=संविधानापेक्षमिति फलितम्, किं वा दासापेक्षम्=पाकादिरूपप्रधानक्रियापेक्षमिति फलितम्, परस्मैपदमिति संशयो न निवृत्तो भवतीति ॥ १९ ॥

अथापि स्वामिदासौ पचत इत्यत्र स्वामिभृत्यसाध्यं कथञ्चित् क्रियाद्वयं विलक्षणमपि=विरुद्धमपि अनेकार्थत्वाद् धातुर्युगपदभिदधीत, तथापि स्वामिदासौ पचत इत्यत्र विरुद्धस्वरूपपरस्मैपदात्मनेपदरूपलादेशद्वयानुपपत्तिरित्याह—यत्र **प्रतिविधानार्थ** इति।

अस्यार्थः—यत्र प्रतिविधानार्थः संविधानार्थः पचिः—पच्धातुः, तत्रात्मनेपदम्। 'राजा पचते' इति। अन्यत्र=संविधानादन्यत्र तण्डुलापूपशाकादिसंस्काराद्यभिधायिनि पच्-प्रभृतिधातौ परस्मैपदमित्येकस्मिन् प्रयोगे विरुद्धस्वरूपलादेशद्वयानुपपत्तिरिति।

अयं भावः—प्रतिविधानं संविधानं तद्वचनात् पच्धातोरात्मनेपदमाम्नातम्=विहितम्, पाक्य(पचनीयतण्डुलादि)गतविक्लित्तिपर्यन्तसाधनविनियोगादिलक्षणसंस्कारादिवचनात् परस्मैपदमिति धातुनाऽर्थद्वयस्वीकारेऽपि एकस्मिन् प्रयोगे युगपद् विरुद्धस्वरूपलादेशद्वयानुपपत्तिरिति ॥ २० ॥

अत्र समाधिः —

**संविधातुश्च सान्निध्याद् दासे धर्मोऽनुषज्यते ।**

**प्लक्षशब्दस्य सान्निध्याद् न्यग्रोधे प्लक्षता यथा ॥२१॥**

अयमर्थः —अतुल्यकक्ष्ययोरप्यनयोर्यद्येकशब्दवाच्यताऽभ्युपगम्यते, तदा युगपदधिकरणवचनतायां द्वन्द्वविधानाद् द्वन्द्वनिर्दिष्टौ स्वामिदासावेकस्मिन् पच्यर्थे सह विवक्ष्यते। तत्र चेतरेतरधर्माध्यासात् साहचर्यमिति स्वामिसाहचर्याद् दासे संविधानं तद्व्यापारोऽध्यारोप्यते। तथा च स्वामिना तुल्यो दास इति स्वामिद्वयस्य कर्तृत्वे संविधानवचनाद् धातोरात्मनेपदं क्रियते स्वमिदासौ पचेते इति। तद्यथा प्लक्षन्यग्रोधाविति सहविवक्षायां न्यग्रोधे प्लक्षरूपारोपः। प्रक्षरणाद् न्यग्रोधोऽपि प्लक्ष इति। तथा चानुस्यूतभेदस्य समुदायस्यानभिधानादितरेतरापेक्षायां द्वन्द्वाद् द्विवचनं भवति। एतदग्रे द्वन्द्वविचारे निर्णेष्यामः ॥ २१ ॥

---

इमं संशयं समाधातुमाह—संविधातुश्चेति ।

अस्यार्थः — द्वन्द्वघटकपदयोर्युगपदधिकरणवचनतायां द्वन्द्वविधानात् संविधातुः नान्निध्यात् तु स्वामिदासौ पचेते इत्यत्र स्वामिधर्मः संविधानं दासेऽध्यारोप्यते। तद्यथा 'प्लक्षन्यग्रोधौ' इत्यत्र सहविवक्षायां प्लक्षशब्दस्य सान्निध्याद् न्यग्रोधे प्लक्षता प्लक्षत्वारोप इति ।

अयं भावः —अतुल्यकक्ष्ययोरपि अनयोः=स्वामिदासयोर्यदि एकशब्दवाच्यताऽभ्युपगम्यते, तदा पदानां युगपदधिकरणवचनतायां द्वन्द्वविधानाद् द्वन्द्वनिर्दिष्टौ स्वामिदासौ एकस्मिन् पच्यर्थे एकस्यां पाकक्रियायां सह विवक्ष्येते। तत्र चेतरेतरधर्माध्यारोपात् साहचर्यमिति स्वामिसाहचर्याद् दासे संविधानं स्वामिव्यापारोऽध्यारोप्यते। तथा च स्वामिना तुल्यो दासः संविधातृत्वेनेति स्वामिद्वयस्य कर्तृत्वे सति संविधानवचनात् पच्धातोरात्मनेपदं क्रियते—'स्वामिदासौ पचेते' इति। तद्यथा —प्लक्षन्यग्रोधाविति सहविवक्षायाम्=प्लक्षन्यग्रोधयोरेकक्रियान्वयित्वविवक्षायां न्यग्रोधे तादात्म्येन प्लक्षरूपारोपः। प्रक्षरणात् प्लक्षो न्यग्रोधः, न्यग्रोधोऽपि प्लक्ष इति प्रक्षरणं दुग्धप्रस्रवः। तथा चानुस्यूतभेदस्य=उद्भूतभेदस्य समुदायस्य प्लक्षन्यग्रोधावित्यत्रानभिधानाद् इतरेतरापेक्षायाम्=इतरस्य इतरापेक्षया तदर्थवचनतायां युगपदधिकरणवचनतापक्षे द्वन्द्वविधानात् प्लक्षन्यग्रोधावित्यत्र द्वन्द्वाद् द्विवचनं भवतीति। एतदग्रे वृत्तिसमुद्देशे द्वन्द्वविचारे निर्णेष्याम इति ॥ २१ ॥

कथमतद्रूपेण सन्निधानमात्रादन्यरूपारोप इति दृष्टान्तेन व्युत्पादयति—

पुरोडाशाभिधानञ्च धानादिषु यथा स्थितम् ।
छत्रिणा चापि सम्बन्धाच्छत्रिशब्दाभिधेयता ॥२२॥

प्रातःसवने 'पुरोडाशैः प्रचरन्ति' इत्युच्यते। तत्र चैकस्य पुरोडाशस्य बहुत्वसङ्ख्यानुपपत्तेस्तत्सहचरितेष्वध्यारोपितपुरोडाशभागेषु सत्स्वयं प्रयोगः। तत्र पुरोडाशाः, धानाः, करम्भः, परिवापः, पयस्येति पञ्च पुरोडाशाः कथ्यन्ते।

तथा 'छत्रिणो यान्ति' इति बहुवचनान्यथानुपपत्त्या पराकृतच्छत्रसम्बन्धा अपि छत्रिसा ्चर्यात् तच्छब्देनाभिधीयन्ते।

एवं दासेऽपि स्वामिसाहचर्याद् द्वन्द्वनिर्देशान्यथानुपपत्त्या स्वामिधर्मासङ्ग

---

कथमतद्रूपेण सन्निधानादतद्रूपेऽन्यरूपारोप इत्याक्षिप्य दृष्टान्तेन तद् व्युत्पादयति—पुरोडाशाभिधानञ्चेति।

अस्यार्थः—'पुरोडाशैः प्रचरन्ति' इत्यत्रैकस्मिन् पुरोडाशे बहुत्वसंख्यानुपपत्तेर्यथा च ऋत्विक्प्रचरणक्रियायां पुरोडाशसहचरितेषु धानादिषु पुरोडाशाभिधानं पुरोडाशशब्दाभिधेयत्वं स्थितम्। अपि च यथा—'छत्रिणो यान्ति' इत्यत्रैकच्छत्रिकर्तृकयानक्रियायां छत्रिणा सम्बन्धात् साहचर्यादच्छत्रिष्वपि च्छत्रित्वारोपेण छत्रिशब्दाभिधेयता, तथा स्वामिदासौ पचेते इत्यत्र स्वामिसाहचर्याद् दासेऽपि स्वामित्वारोपेण स्वामिधर्मसंविधानारोपादत्रात्मनेपदप्रयोग इति।

अयं भावः—प्रातःसवनकर्मणि 'पुरोडाशैः प्रचरन्ति' इत्युच्यते=बहुत्वसंख्याकपुरोडाशकरणकं बहु-ऋत्विक्कर्तृकं प्रचरणं श्रूयते। तत्र चैकस्य=एकत्वेन यागाङ्गतया निर्दिष्टस्य पुरोडाशस्य बहुत्वसंख्यानुपपत्तेः प्रचरणक्रियायां पुरोडाशसहचरितेषु धानादिषु अध्यारोपितपुरोडाशभावेषु सत्सु अयं प्रयोगः=पुरोडाशपदप्रयोगः। तत्र पुरोडाशः=व्रीहिमयो यवमयो वा कपालपक्वः पिष्टपिण्डः पूरो दास्यते दीयते देवेभ्य इति व्युत्पत्त्याऽभिधीयते। धानाः=मृष्टा यवाः। करम्भः=दधिमिश्रं भक्तम्, परिवापः=यज्ञे यवानां य परितः सर्वतो वापः—तज्जन्यो यवाङ्कुरादिः, पयस्या=पयसः कश्चन विकारः साङ्केतिक इति पञ्च पुरोडाशाः कथ्यन्ते।

तथा छत्र्यच्छत्रिकर्तृकयानक्रियायां सत्यां 'छत्रिणो यान्ति' इति बहुवचनाऽन्यथाऽनुपपत्त्या पराकृतच्छत्रसम्बन्धा अपि=अच्छत्रिणोऽपि यानक्रियायां छत्रिसाहचर्यात् छत्रिशब्देनाभिधीयन्ते। एवं दासेऽपि पाकक्रियायां स्वामिसाहचर्याद् स्वामिदासाविति द्वन्द्वनिर्देशान्यथाऽनुपपत्त्या स्वामिधर्मसंविधानारोप इत्यात्मनेपदं

इत्यात्मनेपदं भवति । स्वामिदाससाध्यस्य हि व्यापारस्य भेदोऽत्र न विवक्ष्यते, इत्यभिन्नधातुवाच्यक्रियारूपाश्रयप्रधानगतधर्मोपपत्तिः ॥ २२ ॥

यद्वा मतान्तरमत्रेत्याह—

**अर्थात् प्रतीतमन्योऽन्यं पारार्थ्यमविवक्षितम् ।**
**इत्ययं शेषविषयः कैश्चिदत्रानुवर्ण्यते ॥२३॥**

स्वामिदासयोः क्रियोपकारित्वं विलक्षणमेकस्य मुख्यफलाभिसन्धानादितरस्य तदनभिसन्धानादित्येतदविवक्षित्वा सामान्येन मातापितरौ पुत्रं जनयत इतिवत् क्रियायां कर्तृत्वमात्रविवक्षायां 'शेषात् कर्तरि परस्मैपदम्' ( पा० १।३।७८ ) भवति । स्वामिपदसन्निधानादेव हि संविधानमवगतम्,

---

भवति । स्वामिदाससाध्यस्य हि व्यापारस्य संविधानस्य प्रधानक्रियारूपपाकरूपस्य भेदोऽत्र = 'स्वामिदासौ पचेते' इत्यत्र न विवक्ष्यते इत्यभिन्नपच्धातुवाच्यपाकक्रियास्वरूपाश्रयस्वामिरूपप्रधानगतसंविधानरूपस्य धर्मस्याध्यारोपेणोपपत्तिर्दासेऽपीति 'स्वामिदासौ पचेते' इति प्रयोगोपपत्तिरिति ॥ २२ ॥

यद्वा मतान्तराश्रयेण 'स्वामिदासौ पचतः' इति प्रयोगोऽत्रेत्याह—अर्थात् प्र तीतमिति ।

अस्यार्थः—अर्थात् = वाक्यार्थसामर्थ्यात् स्वामिदासौ पचत इत्यत्र प्रतीतं स्वामिदासयोरन्योऽन्यं पारार्थ्यम् = परोपकारित्वं परस्परनिष्ठं स्वामिनः संविधानद्वारकं दासस्य तु साक्षात् प्रधानक्रियोपकारित्वम्, लादेशविधौ विरोधादविवक्षितम् इति हेतोरयम् = स्वामिदासौ पचत इति प्रयोगः शेषविषयः 'शेषात्कर्तरि परस्मैपदम्' इति सूत्रस्य विषयः कैश्चिदत्रानुवर्ण्यत इति ।

अयं भावः—स्वामिदासौ पचत इत्यत्र स्वामिदासयोः पाकक्रियोपकारित्वं विलक्षणम्, स्वामिनो हि मुक्तितृप्त्यादिरूपमुख्यफलाभिसन्धानात् संविधानद्वारकं प्रधानक्रियोपकारित्वम्, दासस्य तु साक्षात् प्रधानक्रियोपकारित्वमिति एतद् द्वयमपि लादेशविधौ विरोधादविवक्षित्वासामान्येन मातापितरौ पुत्रं जनयत इतिवत् क्रियायां कर्तृत्वमात्रविवक्षायां 'शेषात् कर्तरि परस्मैपदम्' इति भवति । 'स्वामिपदसन्निधानादेव हि संविधानमवगतम्, दासपदार्थसामर्थ्याच्च दासस्य क्रियाफलमन्यगामि इत्यवगतम्' इति लादेशविधौ विरोधे जाग्रति आत्मनेपदरूपस्याख्यातस्य 'राजा यजते' इत्यादौ परस्मैपदरूपस्य चाख्यातस्य 'दासः पचति' इत्यत्र चरितार्थत्वाद् आख्यातस्य नात्र व्यापारो विरोधात् प्रसक्त इति क्रियासामान्यवचनाद् धातोरात्मनेपदविधावनुपयोगाच्छेषात् परस्मैपदम्—स्वामिदासौ पचत इति ।

अयमत्र निष्कर्षः—स्वामिदासौ पचत इत्येवात्र प्रयोगः । पूर्वमतं हि द्वन्द्वे

दासपदार्थसामर्थ्याचत्र तस्यान्यगामि क्रियाफलमिति च'रितार्थत्वादाख्यातस्य नात्र व्यापार इति क्रियासामान्यवचनाद्धेतोः, आत्मनेपदविधावनुपयोगाच्छेषात् परस्मैपदं स्वामिदासौ पचत इति ॥ २३ ॥

'पञ्चभिर्हलैः कृषती'ति स्वामिनः प्रतिविधातुस्तथासम्भवाण्णिचः प्राप्तिमापादयितुं भाष्यकारेणोपन्यस्तम्, तत्र चोद्यते—

अथ प्रतिविधाता यो हलैः कृषति पञ्चभिः ।
भाष्ये नोदाहृतं कस्मात् प्राप्तं तत्रात्मनेपदम् ॥२४॥

युगपत् पञ्चभिर्हलैः कर्षणं स्वामिन उपपद्यते, न कर्षकस्येति प्रतिविधातर्यात्मनेपदं प्रतिविधानवचनाद् धातोः कुतः कारणाल्लक्षणेन प्राप्तं न कृतं भाष्यकारेण ॥ २४ ॥

अत्र परिहारं शङ्कित्वा प्रतिक्षिपति—

प्रतीतत्वात् तदर्थस्य शेषत्वं यदि कल्प्यते ।
न स्यात् प्राप्तविभाषासौ स्वरितेतां निर्वातका ॥२५॥

---

युगपदधिकरणवचनतापक्षमादाय प्रवृत्तम् । तत्र युगपदधिकरणवचनता च भाष्ये दर्शिता—"सेयं युगपदधिकरणवचनता दुःखा च दुरुपपादा च" इति ।

किञ्च, स्वामिसमवेतं संविधानं दासे आरोप्य पूर्वमतं प्रवृत्तम् । परस्मैपदं तु मुख्यमेव परार्थत्वमाश्रित्य भवतीति "गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः" ( परिभाषा ) इति न्यायावसरः । किञ्च, पूर्वमते विवक्षामूलकाहार्यारोपमूलक आत्मनेपदप्रयोग इति विवक्षाया अभावे न भवतीति ॥ २३ ॥

'पञ्चभिर्हलैः कृषति' इति प्रतिविधातुः=संविधातुः स्वामिनस्तथाप्रयोगसम्भवात् णिचः प्राप्तिमापादयितुं भाष्यकारेणायं प्रयोग उपन्यस्तः । तत्तत्र आत्मनेपदं चोद्यते – अथ प्रतिविधाता इति ।

अस्यार्थः —अथेति प्रश्ने, यः प्रतिविधाता=संविधाता, स एव पञ्चभिर्हलैः कृषति, अन्यस्यासम्भवात् । तत्र संविधातरि आत्मनेपदं संविधानवचनाद् धातोः प्राप्तं कस्माद्धेतोर्भाष्यकारेण नोदाहृतमिति ।

अयं भावः —पञ्चभिर्हलैर्युगपत्कर्षणं स्वामिन उपपद्यते, न कर्षकस्येति संविधानवचनाद् धातोः संविधातरि आत्मनेपदं लक्षणेन=सूत्रेण प्राप्तं कुतः कारणान्न कृतं भाष्यकारेणेति प्रश्न इति ॥ २४ ॥

अत्र परिहारमाशङ्क्य प्रतिक्षिपति—प्रतीतत्वात् तदर्थस्येति ।

अस्यार्थः —भृत्यस्य पञ्चभिर्हलैर्युगपद्विलेखनानुपत्तिरूपयाऽर्थापत्त्या तदर्थस्य संविधानरूपस्यार्थस्य प्रतीतत्वाद् आत्मनेपदविधौ तदनुपयोगाद् यदि शेषत्वं परस्मैपदनिमित्तमत्र कल्प्यते, तदा 'स्वं यज्ञं यजति' इत्यादौ "विभाषोप-

भृत्यस्य पञ्चभिर्हलैर्युगपद् विलेखनासम्भवात् स्वाम्येव तथेति गतार्थत्वात् संविधानस्यात्मनेपदविधावनुपयोगाच्छेषत्वं परस्मैपदनिमित्तं यद्यत्रावस्थाप्यते, तदा प्रदेशान्तरविरोधः प्राप्नोति ।

तथा हि—'न वेति विभाषा' ( पा० १।१।४४ ) इत्यत्र 'विभाषोपपदेन प्रतीयमाने' ( पा० १।३।७७ ) इतीयं प्राप्तविभाषा गणिता कर्त्रभिप्राये क्रियाफले स्वरितेत्संज्ञकानां नित्ये आत्मनेपदे प्राप्ते पक्षे तन्निवृत्त्यर्था ।

यदि चात्रोपपदेन द्योतिते न स्यादात्मनेपदम्, तदा स्वं यज्ञं यजतीत्यादावपि तदप्राप्तेः 'विभाषोपपदेन प्रतीयमाने' इत्यप्राप्तविभाषा भवेद् विधिमुखेन प्रवृत्तेरिति विरोधः। तस्माद् द्वाभ्यामुपपदात्मनेपदाभ्यां संविधानं द्योत्यत इति प्राप्तविभाषावचनाल्लभ्यत इति कथमत्रात्मनेपदं न भवेत् ॥ २५ ॥

---

पदेन प्रतीयमाने" (पा० १।३।७७) इत्यसौ प्राप्तविभाषा कर्त्रभिप्राये क्रियाफले स्वरितेतां स्वरितेत्संज्ञकानां नित्ये आत्मनेपदे प्राप्ते पक्षे निवर्तिका न स्यादित्यप्राप्तविभाषा भवेत्, विधिमुखेन तस्याः प्रवृत्तेरिति "न वेति" (पा० १।१।४४) सूत्रभाष्योक्तं प्राप्तविभाषात्वं तस्या भज्येतेति भाष्यविरोध आपतेत्, तस्माद् भाष्ये विभाषोपपदेन प्रतीयमाने इत्यस्याः प्राप्तविभाषात्ववचनाद् द्वाभ्यामुपपदात्मनेपदाभ्यां संविधानं द्योत्यत इति लभ्यत इति आत्मनेपदाभावे 'पञ्चभिर्हलैः कृषति' इत्यत्र संविधानस्य प्रतीतिर्न स्यादिति अत्रात्मनेपदं भाष्ये कुतो नोक्तमिति प्रश्नोपपत्तिरिति ।

अयं भावः—भृत्यस्य पञ्चभिर्हलैर्युगपद्विलेखनासम्भवात् स्वाम्येव तथा=संविधानेन पञ्चभिर्हलैर्युगपद्विलेखक इति संविधानस्य गतार्थत्वात्=संविधानस्यार्थापत्त्यावगतत्वात्, आत्मनेपदविधौ तस्यानुप्रयोगात् शेषत्वं परस्मैपदनिमित्तं यदि अत्रावस्थाप्यते, तदा 'पञ्चभिर्हलैः कृषति' इत्यस्य भाष्यस्य प्रदेशान्तरविरोधः प्राप्नोति ।

तथा हि—"न वेति विभाषा" (पा० १।१।४४) इत्यत्र विभाषोपपदेन प्रतीयमाने इतीयं प्राप्तविभाषासु परिगणिता, कर्त्रभिप्राये क्रियाफले स्वरितेत्संज्ञकानां नित्ये आत्मनेपदे प्राप्ते पक्षे आत्मनेपदनिवृत्त्यर्था ।

यदि चात्र='विभाषोपपदेन प्रतीयमाने' (पा० १।३।७७) इति सूत्रविषये उपपदेन संविधाने द्योतिते आत्मनेपदं न स्यात्, तदा 'स्वं यज्ञं यजति' इत्यादावपि तदप्राप्तेः=आत्मनेपदाप्राप्तेः विभाषोपपदेन प्रतीयमाने' (पा० १।३।७७) इत्यप्राप्तविभाषा भवेत्, विधिमुखेन प्रवृत्तेरिति प्रकृताप्रकृतभाष्यविरोधः। तस्माद् द्वाभ्यामुपपदात्मनेपदाभ्यां संविधानं द्योत्यत इति भाष्येऽस्याः प्राप्तविभाषात्ववचनाल्लभ्यत इति 'पञ्चभिर्हलैः कृषति' इत्यत्र संविधानद्योतनार्थं कथमात्मनेपदं न भवेदिति ॥ २५ ॥

अत्र केचिदाहुः —

शुद्धे तु संविधानार्थे कैश्चिदत्रेष्यते कृषिः ।
तद्धर्मा यजिरित्येवं न स्यात् तत्रात्मनेपदम् ॥२६॥

ये णिचा समानविषयतामात्मनेपदस्य मन्यन्ते, त एवमिच्छन्ति संविधानमात्रेऽर्थे कृषिर्वर्तत इति विलेखनस्य प्रयोज्यव्यापारस्यासम्भवात्, यथा णिज् न भवत्यात्मनेपदं णिज्वदिति ।

तथा हि—णिच्परिहारायात्रोक्तं 'कृष्यादिषु चानुत्पत्तिर्नानाक्रियाणां कृष्यर्थत्वान्नावश्यं कृषिर्विलेखन एव वर्तते, किं तर्हि, प्रतिविधानेऽपि' इति ।

एवं शुद्धे विलेखनानवच्छिन्ने संविधानार्थे कृषिर्वर्तत इति नोपपद्यते, तथात्मनेपदमपि संविधानेन विशेष्यमाणस्यान्यस्य धात्वर्थस्याभावात् । संविधानविशिष्टार्थवाचिनो हि धातोरात्मनेपदम्, न तु शुद्धसंविधानवचनात् ।

---

अत्र केचिदाहु = 'पञ्चभिर्हलैः कृषति' इत्यत्र केचिदात्मनेपदपरिहारमाहुः । तन्मतं पूर्वार्धेन प्रदर्श्य उत्तरार्धेन दूषयति—शुद्धे तु संविधानार्थे इति ।

अस्यार्थः —अत्र = 'पञ्चभिर्हलैः कृषति' इत्यत्र शुद्धे विलेखनानवच्छिन्ने तु संविधानार्थे संविधानरूपेऽर्थे कृषिर्वर्तत इति कैश्चिदिष्यते । तथा च विलेखनावच्छिने संविधाने आत्मनेपदं भवति, केवले तु संविधाने शेषत्वात् परस्मैपदमिति तदाशयः । तदेतद्दूषयति उत्तरार्धेन—तद्धर्मा यजिरिति ।

अस्यार्थः —तद्धर्मा = तस्य कृषेर्धर्मः संविधानमात्रार्थवाचित्वरूपो यस्यासौ तद्धर्मा यजिरपि इत्येवं तत्रापि संविधानमात्रार्थवाचिनि यजावपि आत्मनेपदं न स्यात् 'युधिष्ठिरो यजते' इति, तस्मादिदं मतमयुक्तमिति ।

अयं भावः —ये णिचा समानविषयतामात्मनेपदस्य मन्यन्ते, त एवमिच्छन्ति, 'पञ्चभिर्हलैः कृषति' इत्यत्र संविधानमात्रेऽर्थे कृषिर्वर्तत इति विलेखनस्य भृत्यरूपप्रयोज्यव्यापारस्यासम्भवाद् यथा णिज् न भवति, तथा = णिज्वत्, आत्मनेपदमप्यत्र न भवतीति ।

तथा हि —पञ्चभिर्हलैः कृषतीत्यत्र णिच्परिहारायोक्तं भाष्ये—"कृष्यादिषु चानुत्पत्तिर्नानाक्रियाणां कृष्यर्थत्वात्, नावश्यं कृषिर्विलेखन एव वर्तते, किं तर्हि, प्रतिविधानेऽपि" इति ।

एवञ्च यथा शुद्धे विलेखनानवच्छिन्ने संविधानार्थे कृषिर्वर्तत इति णिज् नोत्पद्यते, तथाऽत्रात्मनेपदमपि नोत्पद्यते, संविधानेन विशेष्यमाणस्यान्यस्य धात्वर्थस्याभावात् । संविधानविशिष्टार्थवाचिनो हि धातोरात्मनेपदं भवति, न तु शुद्धसंविधानवचनात् ।

यद्यपि च विलेखनमत्र धात्वर्थः, तथापि तद्विषयं प्रतिविधानं विशिष्टमेव शब्दशक्तिस्वाभाव्यात् कृषिरभिधत्ते। तद्यथा—'फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वात्' इति प्रत्याख्याते लुकि रूढिशब्दत्वेऽपि शब्दशक्तिस्वाभाव्यादामलकादिभिर्वनस्पतिविशेषप्रभव एव फलविशेषोऽभिधीयते, तदेतन्निवारयति।

तथा ह्येवमत्रोच्यमाने यजिरपि तस्य कृषेरिव धर्मोऽस्येति तद्धर्मा कृषिधर्मा स्यादिति ततोऽपि न भवेदात्मनेपदम्।

यथा हि—कृषिः शुद्धे प्रतिविधाने वर्तते, तथा यजिरपि वर्तते।

तथा च भाष्ये प्रतिविधाने यजेर्वृत्तिरुक्ता। इदं हि तत्र चोद्यते—इह याजका याजयन्तीतीष्यते। हविःप्रक्षेपमात्रवचने तु यजौ याजका हविः प्रक्षिपन्ति। तान् यजमानः प्रयोजयन् याजयतीति विपरीतमभिधानं स्यादिति।

अत्र परिहार उक्तः— यज्यादिष्वविपर्यासो नानाक्रियाणां यज्यर्थत्वात्।

---

यद्यपि च विलेखनमत्र=कृषतीत्यत्र धात्वर्थः, न तु तज्जनकं संविधानम्, तथापि तद्विषयम्=विलेखनविषयकं विलेखनजनकं विशिष्टमेव=यागादिक्रियाजनकसंविधानाद् विलक्षणमेव प्रतिविधानम्=संविधानं शब्दशक्तिस्वाभाव्यात् कृषिरभिधत्ते। तथा च प्रकृते 'कृषति' इत्यस्य 'विलक्षणं संविधानं करोति' इत्यर्थः। तद्यथा—"फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वात्" इति लुकि प्रत्याख्याते आमलकादीनां रूढिशब्दत्वेऽपि शब्दशक्तिस्वाभाव्याद् वनस्पतिविशेषप्रभव एव फलविशेष आमलकादिशब्दैरभिधीयते। तदेतत् केषाञ्चिन्मतमुत्तरार्धेन निवारयति—तद्धर्मेति।

तथा हि—एवमत्रोच्यमाने=कृष्धातौ संविधानमात्रवाचित्वेनात्मनेपदाभावे उच्यमाने यजिरपि 'युधिष्ठिरो यजते' इत्यादौ तस्य कृषेरिव संविधानमात्रं वाच्यतया धर्मोऽस्य इति तद्धर्मा कृषिधर्मा स्यादिति ततोऽपि=यजेरपि 'युधिष्ठिरो यजते' इत्यादौ न भवेदात्मनेपदम्।

तथा हि—'कृषिः पञ्चभिर्हलैः कृषति' इत्यत्र शुद्धे=विलेखनानवच्छिन्ने प्रतिविधाने=संविधाने वर्तते, तथा यजिरपि शुद्धे संविधाने वर्तत इति युधिष्ठिरो यजतीति प्रयोगापत्तिः।

तथा च भाष्ये प्रतिविधाने यजेर्वृत्तिरुक्ता। इदं हि तत्र चोद्यते—'इह याजका याजयन्ति' इतीष्यते। यजौ हविःप्रक्षेपमात्रवचने तु याजका यजन्ति=अग्नौ हविः प्रक्षिपन्ति, तान् यजमानः प्रयोजयन्=प्रेरयन् याजयतीति विपरीतमभिधानं स्यादिति।

अत्र परिहार उक्तः—यज्यादिषु अविपर्यासः=विपरीतार्थाभिधानाभावः,

नावश्यं यजिर्हविःप्रक्षेपण एव वर्तते, किं तर्हि, त्यागेऽपि। तं यजमानः करोति, याजकाः कारयन्तीति।

एवञ्च द्रव्यत्यागमात्ररूपो यजेरर्थ इति कृषिवत् ततोऽपि न स्यादात्मनेपदम्। अथ त्यागविशिष्टं संविधानमर्थं इति प्रसज्ज्यत एवात्मनेपदम्। णिच् तु प्रैषस्यासम्प्रत्ययान्न भवति। न हि संविधानमेव ण्यर्थं इति पूर्वमेव निर्णीतम्॥ २६॥

कथं तर्ह्यत्रात्मनेपदं न भवतीति सिद्धान्तमाह—

**अत्र तूपपदेनायमर्थभेदः प्रतीयते।**
**प्राप्ते विभाषा क्रियते तस्मान्नास्त्यात्मनेपदम्॥२७॥**

समीपे श्रूयमाणे पञ्चभिर्हलैरिति पदेनायं संविधानलक्षणोऽर्थविशेषो गम्यते, यतस्ततोऽत्र 'विभाषोपपदेन प्रतीयमाने' (पा० १।३।७७) इति प्राप्त

---

नानाक्रियाणां यज्यर्थत्वात्। नावश्यं यजिर्हविःप्रक्षेपण एव वर्तते, किं तर्हि त्यागेऽपि। तम् = पुरोडाशादिद्रव्यत्यागं यजमानः करोति, तं याजकाः कारयन्तीति।

एवञ्च देवतोद्देश्यकद्रव्यत्यागमात्ररूपो यजेरर्थं इति शुद्धसंविधानार्थक-कृषिवत् संविधानविशिष्टधात्वर्थवाचकत्वाभावात् ततोऽपि = यजेरपि न स्यादात्मनेपदम्। अथ त्यागविशिष्टं संविधानं यज्यर्थं इति भवत्यात्मनेपदम्, तर्हि कृषेरपि विलेखनविशिष्टं संविधानमर्थं इति प्रसज्यत एवात्मनेपदम्। 'पञ्चभिर्हलैः कृषति' इत्यत्र णिच् तु प्रैषस्यासम्प्रत्ययान्न भवति। संविधानं तु न ण्यर्थः, प्रैषाभावेऽपि तत्सम्भवादिति पूर्वमेव निर्णीतमिति॥ २६॥

कथं तर्हि 'पञ्चभिर्हलैः कृषति' इत्यत्रात्मनेपदं भवतीत्याशङ्क्य सिद्धान्तमाह—अत्र तूपपदेनेति।

अस्यार्थः—अत्र तु = 'पञ्चभिर्हलैः कृषति' इत्यत्र तु, उपपदेन = आख्यातसमीपे श्रूयमाणेन पञ्चभिर्हलैरिति पदेनायमर्थभेदः संविधानलक्षणोऽर्थविशेषः प्रतीयते, अतोऽत्र प्राप्ते आत्मनेपदे सति "विभाषोपपदेन प्रतीयमाने" इति सूत्रेण विभाषा क्रियते। पक्षे आत्मनेपदं न भवतीति। तस्मादत्रात्मनेपदं न भवतीति पञ्चभिर्हलैः कृषतीति भाष्यप्रयोगः साधुरिति।

अयं भावः—'पञ्चभिर्हलैः कृषति' इत्यत्राख्यातसमीपे श्रूयमाणेन पञ्चभिर्हलैरिति पदेनायं संविधानरूपोऽर्थविशेषो गम्यते वाक्यार्थसामर्थ्यसहकृतेन, यतस्ततोऽत्र प्राप्ते आत्मनेपदे "विभाषोपपदेन" इति सूत्रेण विभाषाकारणात्

आत्मनेपदे विभाषाकरणात् पक्षे न भवतीति कृषतीति साधुः प्रयोगो भाष्येऽवस्थित इति सिद्धमिष्टम् ॥ २७ ॥

॥ इति श्रीभूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे उपग्रहसमुद्देशो द्वादशः ॥



---

पक्षे आत्मनेपदं न भवतीति भाष्येऽवस्थितः 'कृषति' इति प्रयोगः साधुरिति सिद्धमिष्टमिति ॥ २७ ॥

॥ इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथशर्मकृतावम्बाकर्त्र्यां तृतीयकाण्डे उपग्रहसमुद्देशो द्वादशः ॥ १२ ॥



# अथ लिङ्गसमुद्देशः

तदेवं तिङन्तार्थो विचारितः, तत्र सङ्ख्यासाधने सुबन्तसाधारणे। क्रियाकालपुरुषोपग्रहास्तिङन्तैकनियताः, लिङ्गं तु नामपदानामधिकं वाच्यमिति तदिदानीं विचारयितुं यथासम्भवं दर्शनभेदेन तल्लक्षणमाह—

**स्तनकेशादिसम्बन्धो विशिष्टा वा स्तनादयः।**
**तदुपव्यञ्जना जातिर्गुणावस्था गुणास्तथा ॥१॥**

**शब्दोपजनितोऽर्थात्मा शब्दसंस्कार इत्यपि।**
**लिङ्गानां लिङ्गतत्त्वज्ञैर्विकल्पाः सप्त दर्शिताः ॥२॥**

---

पुंस्त्रीनपुंसकभिदा वर्जितामभिधाश्रयाम्।
सर्वनामपदाख्यातां सर्वरूपां नुमः शिवाम् ॥ १ ॥

तदेवं तिङन्तार्थो विचारितः, तत्र संख्यासाधनञ्च सुबन्तसाधारणे=सुबन्ततिङन्तोभयाभिधेये। क्रिया-कालपुरुषोपग्रहास्तिङन्तैकनियताः=वाच्यतया तिङन्तमात्रवर्तिनः, लिङ्गं तु नामपदानां संख्यासाधनाभ्यां प्रवृत्तिनिमित्ततदाश्रयाभ्याञ्चाधिकं वाच्यमिति तदिदानीं विचारयितुं यथासंभवं दर्शनभेदेन तल्लक्षणमाह—स्तनकेशादिसम्बन्ध इति। शब्दोपजनितोऽर्थात्मा इति च युग्मेन।

अस्य पद्यद्वयस्यार्थः—प्रसवसंस्त्यानयोग्यस्तनकेशकलापप्रजननादिभिरुपव्यञ्जनैरवयविनः सम्बन्धः संयोगसमवायलक्षणो लिङ्गम्। तत्र स्तनप्रजननादिभिरवयविनः समवायलक्षणः सम्बन्धः। स्तनादीनामवयवत्वात्। केशकलापेन सह तु द्रव्यस्य पिण्डरूपस्य संयोगलक्षणः सम्बन्धः, केशकलापस्य पिण्डानवयवत्वात्। तत्र प्रसवः पुंस्त्वम्, तदुपव्यञ्जनानि प्रजननादीनि, संस्त्यानं स्त्रीत्वम्, तद्योग्योपव्यञ्जनानि स्तनकेशादीनि इति। तेन वा सम्बन्धेन अवयविपिण्डप्रतियोगिकेन समवायलक्षणेन, पिण्डप्रतियोगिकेन वा संयोगलक्षणेन विशिष्टाः स्तनादयो लिङ्गमिति पक्षद्वयम्। तदुक्तम्—

स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥ इति।

अस्यार्थः—स्तनकेशवती स्त्री स्यात्—इत्यत्र स्तनकेशग्रहणमन्येषामपि प्रसवयोग्यप्रजननादीनामुपलक्षणम्।

लोके यद्यल्लिङ्गं दृष्ट्वा अयं पुमान्, इयं स्त्री, इदं नपुंसकमिति प्रतीयते, तदिह पक्षद्वयेन निर्दिष्टम्। प्रसवयोग्यस्तनकेशकलापप्रजननादिभिरुपव्यञ्जनैरवयविनः सम्बन्धः संयोगसमवायलक्षणो लिङ्गम्, तेन वा सम्बन्धेन विशिष्टाः स्तनादय इति पक्षद्वयम्। तदुक्तम्—

"स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।
उभयोरन्तरं यच्च तदभावे नपुंसकम्॥" (म० भा०) इति।

उभयव्यञ्जनाभावात् तदभावे व्यञ्जनवस्त्वसाम्याच्चानेनैव नपुंसकत्वमपि

---

किञ्चेदं चेतनैकनियतं लिङ्गलक्षणम्, अचेतनेषु अव्यापकत्वात्। लोमशः पुरुष इति—लोमग्रहणं मेढ्रादीनामपि पुंधर्माणामुपलक्षणम्। यच्च=यत्तु तदभावे, उभयोः=स्त्रीत्वपुंस्त्वयोरभावे सति, उभयोरन्तरम्=स्त्रीपुंसयोर्मध्यगम्=स्त्रीपुंसयोरुभयोरपि तुल्यजातीयम्, तन्नपुंसकमिति।

यद्यपि --षोढाऽपि स्त्री पुंसलक्षणा भवति, तत्र च स्त्रीत्वमेव, न नपुंसकत्वमिति। तथापि न तत्रोभयाभाव इति नपुंसकत्वं तत्रेति। तदुपव्यञ्जना जातिः— स्तनकेशाद्यभिव्यङ्ग्या जातिः स्त्रीत्वपुंस्त्वादिका लिङ्गम्। इदं वैशेषिकमतम्। गुणावस्था —सत्त्वरजस्तमसां गुणानामवस्था उपचयापचयसाम्यरूपाः। तत्र गुणानामुपचयः पुंस्त्वम्, तेषामेवापचयः स्त्रीत्वम्। तेषां साम्यं तु नपुंसकत्वमिति। गुणास्तथा—तत्तदवस्थाविशिष्टा गुणा एव लिङ्गमिति वा सांख्यानां मतं भाष्यसम्मतं च, चेतनाचेतनसाधारणत्वात्।

शब्दोपजनितोऽर्थात्मा --एकस्मिन्नपि वस्तुनि शब्दोपजनित इव स्त्रीत्वादिरूपोऽर्थात्मा बहिरसन्नपि विकल्पप्रत्ययगोचरो बाह्ये वस्तुनि अध्यस्यते अर्थो व्यक्तिर्वस्तु इति पदैरभिधीयमान इति केचित्।

शब्दसंस्कार इत्यपि इत्यपरे—स्त्रियां पुंसि नपुंसके इत्यादिभिर्लिङ्गशब्दैर्लिङ्गानाम् 'खट्वा, रामान्, ज्ञानम्' इत्यादिशब्दान्वाख्याननिमित्तत्वदर्शनात् लिङ्गानां शब्दसंस्काररूपत्वम्, कार्यकारणयोरभेदोपचारात्। एवं लिङ्गतत्त्वज्ञैर्लिङ्गानां सप्त विकल्पा दर्शिता इति।

अयं भावः—लोके यद् यद् लिङ्गम्=स्त्रीपुंसादिव्यञ्जनं दृष्ट्वा 'अयं पुमान्, इयं स्त्री, इदं नपुंसकम्' इति प्रतीयते, तदिह पक्षद्वयेन निर्दिष्टम्—स्तनकेशादिसम्बन्धो विशिष्टा वा स्तनादय इति। प्रसवसंस्त्यानयोग्यस्तनकेशकलापप्रजननादिभिरुपव्यञ्जनैरवयविनः सम्बन्धः संयोगसमवायलक्षणो लिङ्गम्, तेन वा सम्बन्धेन विशिष्टाः स्तनादयो लिङ्गमिति पक्षद्वयम्। तदुक्तम्—

स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।
उभयोरन्तरं यच्च तदभावे नपुंसकम्॥ इति।

नपुंसके स्त्रीपुंसोभयव्यञ्जनाभावात् तदभावे=स्त्रीपुंसोभयव्यञ्जनाभावे

लक्षितं भवति। तदभावे नपुंसकमित्येवोक्तेऽव्ययानां तिङन्तानां च तत्प्रसङ्गः। उभयोरन्तमित्येतावत्युक्ते कुक्कुटमयूर्याविति लिङ्गसमुदायविषये नपुंसकत्वं स्यादित्युभयमुपात्तम्।

यत्र लिङ्गान्तराभावे तुल्यजातीयं स्त्रीपुंसव्यतिरेकेण लिङ्गान्तरं सोऽर्थो नपुंसकलिङ्गयुक्त इत्यर्थः।

अत्र च मत्वर्थीयेन य एव सम्बन्धविशेष उक्तः, स एवेहानूदितः, स्तनकेशसम्बन्धस्य चोपलक्षणत्वात्। प्रसवयोनिविशेषादि यथास्वं दृष्टो विशेष इहादिग्रहणाद् गृह्यते। एवं लोमसम्बन्धःऽपि विशिष्टोऽन्यस्याप्युपलक्षणमिति प्रसवादयोऽपि गृह्यन्ते। तेन—

"लिङ्गात् स्त्रीपुंसयोर्ज्ञाने भ्रूकुंसे टाप् प्रसज्यते।
न त्वं खरकुटीः पश्य..........." ॥

इति चोद्यं नावतरति विशिष्टस्य सम्बन्धस्याश्रयणात्। लोके हि यो दृष्टः

---

स्त्रीपुंसव्यञ्जनवद् व्यञ्जनत्वसाम्याच्चानेनैव=स्त्रीपुंसोभयव्यञ्जनाभावेनैव नपुंसकत्वमपि लक्षितं भवति। तदभावे नपुंसकमित्युक्तेऽव्ययानां तिङन्तानाञ्च तत्प्रसङ्गः=नपुंसकत्वप्रसङ्गः, तदर्थानामपि तदभावात्। उभयोरन्तरमित्येतावति उक्ते कुक्कुटमयूर्याविति लिङ्गसमुदायविषयनपुंसकत्वं स्यात्, अस्य लिङ्गसमुदायस्यापि उभयलक्षणाक्रान्तत्वादित्युभयम्=तदभावे इति। उभयोरन्तरमित्येतदुभयं नपुंसकलिङ्गलक्षणे उपात्तम्।

यत्र लिङ्गान्तराभावे सति लिङ्गत्वेन तुल्यजातीयं स्त्रीपुंसव्यतिरेकेण=स्त्रीपुंसलिङ्गव्यतिरिक्तं लिङ्गान्तरं वर्तते सोऽर्थो नपुंसकलिङ्गयुक्त इत्यर्थः।

अत्र च=स्तनकेशादिसम्बन्ध इत्यत्र च य एवं सम्बन्धविशेष उक्तः संयोगसमवायलक्षणः, स एवेह=स्तनकेशवती इत्यत्र मत्वर्थीयेन प्रत्ययेन मतुपाऽनूदितः। स्तनकेशसम्बन्धस्य च व्यञ्जनान्तरसम्बन्धोपलक्षणत्वात् प्रसवयोनिविशेषादिरूपो यथास्वं दृष्टो व्यञ्जनविशेष इह=विशिष्टा वा स्तनादय इत्यत्र आदिग्रहणाद् गृह्यते। एवं लोमसम्बन्धोऽपि पुरुषनिष्ठो विशिष्टो विलक्षणोऽन्यस्यापि मेढ्रादेः पुंव्यञ्जनस्योपलक्षणमिति मेढ्रप्रसवादयोऽपि पुंव्यञ्जनानि गृह्यन्ते। तेन—

लिङ्गात् स्त्रीपुंसयोर्ज्ञाने भ्रूकुंसे टाप् प्रसज्यते।
न त्वं खरकुटीः पश्य खट्वावृक्षौ न सिध्यतः॥

इति चोद्यं नावतरति।

अस्य पद्यस्यार्थः—लिङ्गात् स्त्रीत्वपुंस्त्वादिलक्षणात् स्त्रीपुंसयोर्ज्ञानेऽभ्युपगम्यमाने भ्रूकुंसे स्त्रीवेशधारिणि नटे टाप् प्रसज्यते। 'खरकुटीः पश्य' इत्यत्र न त्वं प्रसज्यते। खरकुटी नापितगृहमुच्यते। सा इव केशलोमावृतो ब्राह्मणः 'खरकुटी' उच्यते। "इवे प्रतिकृतौ" (पा० ५।३।९६) इति विहितस्य कनः—"लुम्

सम्बन्धस्तमनूद्य लक्षणे क्रियमाणे नातिप्रसङ्गो भवति। अत एवादिग्रहणाद् यथास्वं स्त्र्यादिनियतस्य भेदस्य ग्रहणम्।

एतत् तु दर्शनद्वयमचेतनानां स्तनादिरहितत्वादव्यापकमित्युक्तम्—'खट्वावृक्षौ न सिध्यतः' इति। अतः पक्षान्तराश्रयणम्। तत्र तीर्थिकमतभेदेन पक्षभेदः।

वैशेषिकाः सर्वत्राभिन्नाभिधानप्रत्ययोन्नीतसद्भावाञ्जातिं मन्यन्त इति स्तनाद्युपव्यञ्जनाभिव्यक्तविशेषस्त्रीत्वपुंस्त्वनपुंसकत्वरूपा लिङ्गजातिरित्याहुः। सा चाचेतनेष्वपि यथास्वमुपव्यञ्जनाभिव्यक्ता विद्यत एवेति वक्ष्यते।

ननु स्तनाद्युपव्यञ्जनापि जातिः कथमचेतनेषु, न हि तत्र स्तनादयः सन्ति। अर्थादिग्रहणाद् यथायथं विशिष्टमेवोपव्यञ्जनम्। एवं सति पूर्वोक्तमपि पक्षद्वयं

---

मनुष्ये" ( पा० ५।३।९८ ) इति लुप्। तान् खरकुटीर्ब्राह्मणान् पश्य इत्यत्र नत्वं प्रसज्यते। ब्राह्मणेषु पुंस्त्वलिङ्गस्य दर्शनात्।

किञ्च, खट्वावृक्षयोः स्त्रीत्वपुंस्त्वलिङ्गयोरदर्शनात्—खट्वावृक्षौ न सिध्यतः। 'खट्वा' इति स्त्रीत्वाभावाट्टाप् न सिध्यति। वृक्षे च पुंस्त्वाभावात्—वृक्ष इति पुंसि प्रयोगो न सिद्ध्यतीति। विशिष्टस्य स्तनकेशादिसम्बन्धस्य स्त्रीत्वादिलिङ्गज्ञापकत्वेनाश्रयणात्।

लोके हि यो लिङ्गज्ञापकत्वेन दृष्टः स्तनकेशादिसम्बन्धस्तमनूद्य लिङ्गलक्षणे क्रियमाणे भ्रूकुंसे खरकुटीरित्यत्र च नातिप्रसङ्गो भवति। अत एव कारिकायाम्—स्तनकेशादिसम्बन्ध इत्यत्र आदिग्रहणाद् यथास्वम्=यथायथं स्त्र्यादौ नियतस्य लिङ्गव्यञ्जकविशेषस्य ग्रहणम्। स्तनकेशादिसम्बन्धो विशिष्टा वा स्तनादय इत्येतत् तु दर्शनद्वयमचेतनानां स्तनादिरहितत्वादव्यापकमित्युक्तम्—खट्वावृक्षौ न सिध्यत इति। अतः पक्षान्तराणां पञ्चानामाश्रयणम्। तत्र च तीर्थिकमतभेदेन=शास्त्रकाराणां मतभेदेन पक्षभेदः।

वैशेषिकाः सर्वत्र=सर्वेषु पदार्थेषु स्त्रीपुमान् नपुंसकम् इत्यभिन्नाभिधानप्रत्ययोन्नीतसद्भावां स्त्रीत्वादिकां जातिं मन्यन्त इति स्तनाद्युपव्यञ्जनाभिव्यक्तविशेषा स्त्रीत्वपुंस्त्वनपुंसकत्वरूपा लिङ्गजातिरित्याहुः। सा चाचेतनेष्वपि यथास्वम्=यथायथं सत्त्वरजस्तमसां गुणानामुपचयापचयसाम्यावस्थारूपोपव्यञ्जनाभिव्यक्ता विद्यत एवेति वक्ष्यते।

ननु स्तनाद्युपव्यञ्जनाऽपि जातिः कथमचेतनेषु, न हि तत्र स्तनादयः सन्ति। अथ कारिकायाम्—स्तनकेशादिसम्बन्ध इत्यत्रादिग्रहणाद् यथायथं विशिष्टमेव=विलक्षणमेवोपव्यञ्जनं चेतनोपव्यञ्जनादचेतनेषु ब्रूषे। एवं सति पूर्वोक्तमपि पक्षद्वयं स्तनकेशादिसम्बन्धो विशिष्टा वा स्तनादय इत्येवं रूपं

नाव्यापकम् । अचेतनेष्वपि यथास्वमुपव्यञ्जनविशेषस्य, यद्वशात् स्त्र्याद्याकार-प्रत्ययप्रसवः । सत्यमेतत्, अर्थव्यक्तिवस्तुशब्दानां तु त्रिलिङ्गानां सर्वभावेष्वव्याहतप्रसरत्वात् त्रिलिङ्गयोगस्तदाकारप्रत्ययान्यथानुपपत्त्यानुमीयते । तत्र च परस्परविरोधिनियतव्यञ्जनसम्बन्धरूपं लिङ्गत्रयं लौकिकं कथं स्यादिति तदवधीरणेन जातिपक्षावलम्बनम् । जातीनां हि सर्वगतत्वादेकाश्रयसमवायित्वं बह्वीनामप्युपपद्यते ।

एवं गुणावस्थादीनामपि लिङ्गानां सर्वत्राविरोधः ।

तथा हि —सांख्याः सत्त्वरजस्तमसां गुणानां सततपरिणामिनामुपचयापचयमाध्यस्थ्यलक्षणा अवस्थाविशेषा यथायोगं पुंस्त्वादिलिङ्गमातिष्ठन्ते । तदेतद् भाष्यकाराभिमतं दर्शनम् । संस्त्यानप्रसवस्थितयो हि तस्य लिङ्गम् ।

तथा चाह—"संस्त्यानप्रसवौ लिङ्गम् । सर्वाश्च पुनर्मूर्त्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः" इति ।

---

नाचेतनेष्वव्यापकम् । अचेतनेष्वपि यथास्वमुपचयापचयादिरूपस्योपव्यञ्जनविशेषस्य ग्रहणात् । अस्ति हि खट्वादीनामपि किञ्चिल्लिङ्गनिमित्तं गुणानामपचयादिरूपम्, यद्वशात् स्त्र्याद्याकारप्रत्ययप्रसवः । सत्यमेतत्, अर्थव्यक्तिवस्तुशब्दानां तु त्रिलिङ्गानां सर्वभावेषु अव्याहतप्रयोगात् त्रिलिङ्गयोगो लिङ्गत्रयाकारकप्रत्ययान्यथाऽनुपपत्त्याऽनुमीयते । तत्र च परस्परविरोधिस्तनकेशमेढ्रादिरूपनियतव्यञ्जनसम्बन्धरूपं लिङ्गत्रयं लौकिकमत्र कथं स्यादिति तदवधीरणेन=लौकिकलिङ्गत्रयानादरेण लिङ्गविषये जातिपक्षावलम्बनम् । स्त्रीत्वादिजातीनां हि सर्वगतत्वादेकाश्रयसमवायित्वं बह्वीनामप्युपपद्यते ।

अयमर्थः —'इयं' वस्तु, इयं व्यक्तिः' इति । एवं गुणावस्थादीनामपि लिङ्गानां सर्वत्र=सर्वभावेष्वविरोधः ।

तथा हि —सांख्याः सत्त्वरजस्तमसां गुणानां सततं परिणामिनामुपचयापचयमाध्यस्थ्यसाम्यलक्षणा अवस्थाविशेषा यथायोगं पुंस्त्वादिलिङ्गमित्यातिष्ठन्ते । अत्रास्थानं प्रतिज्ञा । तदेतद् भाष्यकाराभिमतं दर्शनम् । संस्त्यानप्रसवस्थितयो हितस्य=भाष्यकारस्य मते लिङ्गम् ।

तथा चाह—

"संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः ।
संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूते सप्रसवे पुमान्" ॥ इति ।
"सर्वाश्च पुनर्मूर्त्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः" । इति ।

अस्यार्थः —संस्त्यानम्=संहननम्, संकोचः=अपचयः—स्त्रीत्वम् । प्रसवो वृद्धिरुपचयः पुंस्त्वमिति । स्वकृतान्ततो वैयाकरणसिद्धान्तः, संस्त्यानप्रसवौ=

सर्वा इति वदता वृक्षादावपि लिङ्गयोग उपपादितः। त्रिलिङ्गता च समर्थिता। नियमे तु कारणं वक्ष्यते।

तत्र संस्त्यानं संहननं प्रतिलयस्तिरोधानमित्यवस्था स्त्रीत्वम्। प्रसवः प्रवृत्तिराविर्भाव इति पुंस्त्वम्, न स्त्रीपुंसौ नपुंसकमिति स्थितिर्नपुंसकमर्थाल्लक्षितम्।

तथा हि सङ्ग्रहकारः पठति—"संस्त्याने संहननं तमोनिवृत्तिशक्तिरुपरतिः प्रवृत्तिः प्रतिबन्धस्तिरोभावः स्त्रीत्वम्, प्रसवो विष्वग्भावो वृद्धिशक्तिर्वृत्तिलाभोऽभ्युद्रेकः प्रवृत्तिराविर्भाव इति पुंस्त्वम्, अविवक्षातः साम्यं स्थितिरौत्सुक्यनिवृत्तिरपरार्थत्वमङ्गाङ्गिभावनिवृत्तिः कैवल्यमिति नपुंसकत्वम्" इति।

अवस्थाविशिष्टा वा गुणा एव लिङ्गमित्यत्रैव दर्शने पक्षान्तरम्। ते हि

---

अपचयोपचयरूपौ लिङ्गं स्त्रीत्वं पुंस्त्वञ्चास्थेयौ स्वीकार्यौ संस्त्यानेऽर्थे स्त्यायतेर्ड्ट्स्त्री। सूतेः सूधातोः, सप्=सकारस्य पकारः, डुम्सुन्प्रत्यये च पुंसशब्दः प्रसवगुणानाम् उपचयेऽर्थे निष्पन्नः। सर्वाश्च मूर्त्तयः=मूर्त्ताः पदार्थाः, एवमात्मिका इत्यस्य व्याख्यानं संस्त्यानप्रसवगुणा इति।

सर्वा इति वदता वृक्षादावपि लिङ्गयोग उपपादितः। तत्रापि गुणावस्थारूपलिङ्गयोगसम्भवात्। एवं सर्वत्रापि त्रिलिङ्गता च समर्थिता। नियमे तु=केषाञ्चिद् दारादिशब्दानां नियतलिङ्गाभिधाने तु कारणं शब्दशक्तिस्वाभाव्यरूपं वक्ष्यते।

तत्र संस्त्यानम्=संहननम् उपचितानां गुणानामपचयापत्त्या संघातभावापत्तिः प्रतिलयः=पुंसि उपचितानां गुणानां यानि कर्माणि तेषां स्त्रियां प्रलयः, तिरोधानं वा इत्येषा गुणानामवस्था स्त्रीत्वम्। गुणानां पुंसि प्रसवो विकास उपचयरूपः, प्रवृत्तिरूप आविर्भावरूपो वा पुंस्त्वम्, न स्त्रीपुंसौ नपुंसकमिति स्थितिर्नपुंसकमर्थाल्लक्षितम्।

तथा हि सङ्ग्रहकारः पठति—संस्त्यानं संहननम्, तमः=विवेकाभावः, निवृत्तिः=गुणानां स्वकार्यान्निवृत्तिरपचयात्, अशक्तिः=तेषामपचयादेव, उपरतिः=स्वकार्यात् तेषां तत एव, प्रवृत्तिप्रतिबन्धः=तेषां तत एव, तिरोभावस्तेषां तत एव, स्त्रीत्वम्, प्रसवो विष्वग्भावो वृद्धिशक्तिर्वृत्तिलाभोऽभ्युद्रेकः प्रवृत्तिराविर्भाव इति पुंस्त्वम्। गुणानामुपचयरूपम्। संस्त्यानप्रसवयोरविवक्षातो गुणानां साम्यं स्थि ः, विषमपरिणामजनने औत्सुक्यनिवृत्तिः, तदानीं गुणानां पुरुषस्य भोगापवर्गजनकत्वाभावेनापरार्थत्वम्। तदानीं तेषां साम्यापत्त्याऽङ्गादिभावनिवृत्तिः, तेषां तदानीं कार्याभावेन कैवल्यञ्चेति नपुंसकत्वमिति।

अवस्थाविशिष्टा वा गुणा एव लिङ्गमित्यत्रैव दर्शने=सांख्यदर्शन एव

कार्यान्तरवत् स्त्र्याद्यावभासमपि प्रत्ययमुपजनयन्तो भवन्ति लिङ्गव्यपदेश्याः। एकस्यापि वस्तुनः शब्दभेदेनार्थो व्यक्तिर्वस्त्विवति लिङ्गभेदस्य दर्शनाद् बहिरसन्नेव शब्दैरुत्पादित इव बाह्ये वस्तुनि लिङ्गयोग इति शब्दाभिधेयस्वभावं लिङ्गमिति केचित्।

तटस्तटी तटमित्यभिन्नेनापि शब्देनाभिन्नं वस्तु त्रिलिङ्गं प्रत्याय्यत इति शब्दसंस्कारमात्रं लिङ्गमाश्रितं कैश्चित्।

एवमपि च बाह्यत्वेनावसायान्नोदात्तादिधर्मवच्छब्दधर्मत्वं लिङ्गस्य, किन्तु स्त्रियां पुंसि नपुंसक इति शब्दान्वाख्याननिमित्तभावदर्शनाच्छब्दसंस्कारत्वमस्य।

"तयोस्तु तत्कृतं दृष्ट्वा यथाकाशेन ज्योतिषः" इति भाष्ये वर्णितम्। तदेते मतभेदाश्रयाः सप्तपक्षा यथायथमुत्तरत्र विचारयिष्यन्ते ॥ १–२ ॥

---

पक्षान्तरम्। ते हि कार्यान्तरवत् स्त्र्याद्यवभासमपि = स्त्रीत्वादिलिङ्गावभासकमपि प्रत्ययमुपजनयन्तो भवन्ति लिङ्गपदव्यपदेश्याः। एकस्यापि वस्तुनो घटादेः शब्दभेदेनार्थः, व्यक्तिः, वस्तु इति लिङ्गभेदस्य दर्शनाद् बहिरसन्नेव शशविषाणादिवद् विकल्पप्रत्ययगोचरो लिङ्गयोगः शब्दैरुत्पादित इव बाह्यवस्तुनि अध्यास्त इति शब्दाभिधेयस्वभावं लिङ्गमिति केचित्।

तटस्तटी तटमित्यभिन्नेनापि शब्देनाभिन्नं वस्तु त्रिलिङ्गं प्रत्याय्यत इति शब्दसंस्कारमात्रं लिङ्गमाश्रितं कैश्चित्।

एवमपि च शब्दवाह्यत्वेनार्थधर्मतयाऽवसायान्नोदात्तादिरूपशब्दधर्मवच्छब्दधर्मत्वं शब्दसंस्कारनिमित्तया शब्दसंस्कारत्वेनोपचर्यमाणस्य लिङ्गस्य, किन्तु स्त्रियां पुंसि नपुंसके इत्येवं शब्दान्वयाख्याने लिङ्गस्य निमित्तभावदर्शनात् कार्यकारणयोरभेदोपचारात् शब्दसंस्कारत्वेन व्यवहारो लिङ्गस्य। "तयोस्तु तत्कृतं दृष्ट्वा यथाऽऽकाशेन ज्योतिषः" इति भाष्ये वर्णितम्।

अस्यार्थः—तयोस्तु स्त्रीत्वपुंस्त्वरूपयोर्लिङ्गयोर्निमित्तभूतयोः सतोऽस्तु, तत्कृतम् = स्त्रीत्वपुंस्त्वरूपलिङ्गकार्यं टाब् न त्वादिकं दृष्ट्वा तत्कृतेन तत्कार्येण टाबादिना ते स्त्रीत्वपुंस्त्वरूपे लिङ्गे उपलक्ष्येते, यथा आकाशेन ज्योतिष उपलक्षणं भवति। इहाकाशे रोहिणी इति। यद्वा—यथाऽऽकाशेन प्रकाशेन ज्योतिषोऽनुमानमिति।

अस्माद् भाष्यादर्थधर्मस्य जात्यादिरूपस्य गुणावस्थारूपस्य वा लिङ्गस्य शब्दान्वाख्याने शब्दसंस्काररूपे निमित्तत्वं लिङ्गकार्यस्य च टाबादेर्लिङ्गोपलक्षकत्वं प्रतीयते। तदेते मतभेदाश्रयाः सप्तपक्षा यथायथमुत्तरत्र विचारयिष्यन्त इति ॥ १–२ ॥

सम्प्रति शब्दशक्तिस्वभावानुसारेणापरं विकल्पसप्तकमाह—

**उपादानविकल्पाश्च लिङ्गानां सप्त वर्णिताः ।**
**विकल्पसन्नियोगाभ्यां ये शब्देषु व्यवस्थिताः ॥३॥**

उपादानं शब्दैर्विशिष्टशक्तिभिरर्थोपाधित्वेन ग्रहणं लिङ्गानाम्, तस्य सप्त भेदाः । लिङ्गाभिव्यञ्जकशब्दशक्तिप्रतिनियमाद्ध्यसाङ्कर्यं लिङ्गानां गुणावस्थादिरूपाणां सर्वत्र सम्भवतामपि ।

तथा हि—विकल्पेन स्त्रीपुंनपुंसकानां शब्दैः प्रत्यायने चत्वारो भेदाः ।

---

इत्थं लिङ्गानां विकल्पसप्तकमुक्त्वा सम्प्रति शब्दशक्तिस्वभावानुसारेणापरं लिङ्गानामुपादानविकल्पसप्तकमाह—उपादानविकल्पाश्चेति ।

अस्यार्थः—लिङ्गानां प्रागुक्तविकल्पसप्तकवत्—लिङ्गानामुपादानविकल्पाश्च तत्तद्विलक्षणशक्तिभिः शब्दैर्लिङ्गानामर्थविशेषणत्वेन ग्रहणमुपादानं तस्य विकल्पभेदा अपि सप्त, विकल्पसन्नियोगाभ्याम् = विकल्पनियमाभ्यां लिङ्गानुशासनेषु कोशेषु च वर्णिताः । ये च लिङ्गानां सप्तोपादानविकल्पाः शब्देषु व्यवस्थिताः, न तु प्रयुक्तलिङ्गविकल्पसप्तकवदर्थेषु व्यवस्थितेति, तन्न, लिङ्गानां पुंस्त्रीनपुंसकरूपाणां शब्दैर्विकल्पेन प्रत्यायने चत्वारो भेदाः । केचित् पुंनपुंसकलिङ्गमात्रविषयाः, यथा—'ध्वजः, ध्वजम्, पद्मः, पद्मम्' इत्यादयः ।

केचित् स्त्रीनपुंसकलिङ्गमात्रविषयाः, यथा—'औचित्यम्, औचिती, चातुर्यम्, चातुरी' इति ।

अन्ये स्त्रीपुंससाधारणाः, यथा—'सूनुः, इषुः, तनयः, तनया, घटः, घटी, कुम्भः, कुम्भी' इत्यादयः ।

अपरे त्रिलिङ्गाः—'दरः, दरी, दरम्' इत्यादयः ।

सन्नियोगो नियमस्तेन त्रयो लिङ्गोपादानविकल्पाः । दारासु प्राणादयः पुंस्येव नियताः, अब्ज्वालादयः स्त्रियामेव । शिरोवासःकनकादयो नपुंसक एवेति सर्वयोगे विकल्पनियमाभ्यां सप्तलिङ्गोपादानविकल्पा इति ।

अयं भावः—उपादानं नाम विशिष्टशक्तिभिः = विलक्षणशक्तिभिः शब्दैरर्थोपाधित्वेन = पञ्चकं प्रातिपदिकार्थः चतुष्कं त्रिकं वा इति पक्षत्रयेऽर्थविशेषणत्वेन, एकं द्विकं वा प्रातिपदिकार्थं इति पक्षद्वये त्वर्थोपाधित्वेन इत्यर्थः । वाच्यत्वे सति प्रतीयमानं व्यावर्तकं विशेषणम्, अवाच्यत्वे सति प्रतीयमानो व्यावर्तक उपाधिरिति उपाधिविशेषणयोर्भेदः, लिङ्गानां ग्रहणम्, तस्य सप्तभेदाः । सर्वेषु पदार्थेषु, सम्भवतामपि गुणावस्थादिरूपाणां लिङ्गानां लिङ्गाभिव्यञ्जकशब्दशक्तिप्रतिनियमाद् हि असाङ्कर्यम् = नियमपूर्वकावस्थानप्रत्ययः ।

तथा हि—स्त्रीपुंनपुंसकलिङ्गानां शब्दैः प्रत्यायने चत्वारो भेदाः ।

केचित् पुंनपुंसकविषयाः शङ्खः पद्मः शङ्खं पद्ममित्यादयः ।
"पद्मशङ्खौ निधौ पुंसि स्थितौ पुंसि च तोयजे ।" इति ।
केचित् स्त्रीनपुंसकनियताः, भागधेयं भागधेयी, भेषजं भेषजी, अर्चिरित्यादयः ।

अन्ये स्त्रीपुंससाधारणाः । यथा—इषुः, अशनिः, वत्सः, वत्सेत्यादयः ।

अपरे त्रिलिङ्गाः, तटस्तटी तटमित्यादयः ।

सन्नियोगो नियमः, तेन त्रयो विकल्पाः । तद्यथा—वृक्षादयः पुंस्येव नियताः, खट्वादयः स्त्रियामेव, दध्यादयो नपुंसक एवेति सप्त विकल्पाः ॥ ३ ॥

इदानीं जातिपक्षोऽत्र विचार्यते । लौकिकस्य लिङ्गलक्षणस्योपेक्षणात् तत्र गोत्वादीनामिव स्त्रीत्वादीनामेकत्र कथं न विरोध इत्याशङ्क्याह—

**तिस्रो जातय एवैताः केषाञ्चित् समवस्थिताः ।**
**अविरुद्धा विरुद्धाभिर्गोमहिष्यादिजातिभिः ॥४॥**

---

केचित् पुंनपुंसकविषया "शङ्खः, पद्मः, शङ्खम्, पद्मम्" इत्यादयः । 'पद्मशङ्खौ निधौ पुंसि स्थितौ पुंसि च तोयजे" इति कोशः ।

केचित् स्त्रीनपुंसकनियताः—भागधेयम्, भागधेयी, भेषजम्, भेषजी, अर्चिरादयः ।

अन्ये स्त्रीपुंससाधारणाः । यथा—इषुः, अशनिः, वत्स, वत्सा इत्यादयः ।

अपरे त्रिलिङ्गाः—'तटस्तटी तटम्' इत्यादयः ।

सन्नियोगो नियमस्तेन त्रयो विकल्पाः । तद्यथा—वृक्षादयः पुंस्येव नियताः, खट्वादयः स्त्रियामेव नियताः, दधिकाननादयो नपुंसक एव नियता इति योजनया विकल्पनियमाभ्यां सप्तलिङ्गोपादानविकल्पा इति ॥ ३ ॥

इदानीं स्त्रीत्वादिजातिर्लिङ्गमिति पक्षोऽत्र विचार्यते । लौकिकस्य लिङ्गलक्षणस्य स्तनकेशादिसम्बन्धो विशिष्टा वा स्तनादय इत्युक्तस्याचेतनेषु अव्यापकत्वेन, गुणावस्था गुणास्तथा इत्युक्तस्य च लिङ्गलक्षणस्य सांख्यशास्त्रप्रसिद्धत्वेऽपि ततोऽन्यत्र सर्वत्राप्रसिद्धत्वेन, शब्दोपजनितोऽर्थात्मा इत्यस्य शशविषाणादिवद् बहिरसत्त्वेन, शब्दसंस्कार इत्यपि इत्यस्य च लिङ्गस्य शब्दसंस्कारनिमित्तत्वेऽपि शब्दसंस्काररूपत्वाभावेन चोपेक्षणात् । तत्र=जातिलिङ्गमिति पक्षस्य विचारप्रसङ्गे गोत्वमहिषत्वादीनामिव स्त्रीत्वपुंस्त्वादीनामेकत्र कथं न विरोध इत्याशङ्क्याह—तिस्रो जातय इति ।

अस्यार्थः—केषाञ्चिन्मते तिस्रो जातय एवैताः स्त्रीत्वपुंस्त्वनपुंसकत्वलक्षणाः परस्परमविरुद्धाः, परस्परं विरुद्धाभिर्गोमहिष्यादिजातिभिः सह समवस्थिता । एकस्मिन्नर्थे गोघटादिरूपे 'अयमर्थः, इदं वस्तु, इयं व्यक्तिः' इति प्रत्ययात्

स्त्रीत्वाद्यनुरक्तप्रत्ययजननात् सर्वत्राविरुद्धसमवायाः स्त्रीत्वादिजातयो विरुद्धैकार्थसमवायिभिर्गोत्वाश्वत्वादिजातिभिः सहैकस्मिन्नाश्रये वर्तन्ते। प्रत्ययाभेदो जातीनां लिङ्गम्। स च गोत्वाश्वत्वादिनिमित्त एकस्मिन्नाश्रये न जायते, स्त्रीत्वादिनिमित्तस्तु गोत्वाद्याश्रयेऽपि जायत इति ॥ ४ ॥

कथमासां जातीनां गोत्वादिभिरविरुद्धत्वं न स्यात्। तथा हि—

**हस्तिन्यां वडवायाश्च स्त्रीति बुद्धेः समन्वयः।**
**अतस्तां जातिमिच्छन्ति द्रव्यादिसमवायिनीम् ॥५॥**

भिन्नजातीतेष्वपि स्त्र्याद्याकारबुद्धेरनुगमाज्जात्यन्तरैः स्त्रीत्वादिजातीनामविरुद्ध एकार्थसमवायः।

अयमत्र परमार्थः—इह शब्दाल्लिङ्गोपाधेः प्रत्ययस्य भिन्नजातीयेष्वप्य-

---

स्त्रीत्वपुंस्त्वनपुंसकत्वजातीनां तिसृणां परस्परमविरोधः, गोमहिष्यादिजातिसामानाधिकरण्यञ्च। गोमहिष्यादिजातयस्तु न कदाचिदपि सामानाधिकरण्येन प्रतीयन्त इति परस्परं विरुद्धा इति।

अयं भावः—एकस्मिन्नर्थे गोघटादौ 'अयमर्थः, इदं वस्तु, इयं व्यक्तिः' इति स्त्रीत्वाद्यनुक्तप्रत्ययजननात् सर्वेषु भावेषु अविरुद्धसम्बन्धाः स्त्रीत्वपुंस्त्वनपुंसकत्वजातयो विरुद्धैकार्थसम्बन्धाभिर्गोत्वाश्वत्वादिजातिभिः सहैकस्मिन्नाश्रये वर्तन्ते। प्रत्ययाभेदोऽभिधानाभेदश्च जातीनां लिङ्गम्। स च गोत्वाश्वत्वादिरूपविरुद्धजातिनिमित्तक एकस्मिन्नाश्रये न जायते। स्त्रीत्वादिरूपलिङ्गजातिनिमित्तकस्तु गोत्वाश्वत्वादिरूपपरस्परविरुद्धजात्याश्रयेऽपि एकस्मिन् जायत इति ॥ ४ ॥

कथमासां जातीनाम्=स्त्रीत्वादिलिङ्गजातीनां परस्परविरुद्धगोत्वादिजातिभिरविरुद्धत्वं न स्यात्, परस्परविरुद्धगोत्वाश्वत्वादिजात्याश्रयेऽप्यासां लिङ्गजातीनां प्रत्ययात्। तथा हि—**हस्तिन्यां वडवायां चेति।**

अस्यार्थः—यतो हस्तिन्यां वडवायाश्च तत्तद्विरुद्धजातिमत्यां स्त्रीति बुद्धेः समन्वयः समानः सम्बन्धः, अतस्तां जातिं स्त्रीत्वादिलिङ्गजातिं परस्परविरुद्धजात्याश्रयद्रव्यगुणादिरूपैकार्थसमवायिनीमिच्छन्तीति।

अयं भावः—भिन्नजातीयेष्वपि गोघटादिषु 'अयमर्थः, इदं वस्तु, इयं व्यक्तिः' इति स्त्र्याद्याकारबुद्धेरनुगमाज्जात्यन्तरैर्गोत्वाश्वत्वादिभिः स्त्रीत्वादिलिङ्गजातीनामविरुद्ध एकार्थसमवायः।

अयमत्र परमार्थः—इह=लोकव्यवहारे अर्थवस्त्वादिशब्दात् लिङ्गोपाधेः=स्त्रीत्वादिलिङ्गोपलक्षितस्य प्रत्ययस्य भिन्नजातीयेष्वपि गोघटादिषु अनुगतस्य दर्शनात् शब्दप्रमाणकानां शब्दार्थोऽर्थ इति सर्वत्र द्रव्यगुणकर्मसामान्या-

नुगमस्य दर्शनाच्छब्दप्रमाणकानां शब्दार्थोऽर्थ इति द्रव्यगुणकर्मसामान्यादावपि लिङ्गजातियोगः कल्प्यते ।

तथा च स एवार्थः केनचिच्छब्देन नियतलिङ्गोऽभिधीयमानस्तल्लिङ्ग-जातियोगी, शब्दान्तरेण तु लिङ्गजात्यन्तरयोगी प्रत्याय्यत इति न काचित् क्षतिः । तद्यथा—भावशब्देन पुंस्त्वोपाधिः । एवं तदादौ वाच्यम् ।

गोत्वादयोऽपि भावजातिसामान्यशब्दैः स्त्रीलिङ्गोपाधयोऽभिधीयन्त इति शब्दशक्त्यनुसारेणैव सर्वत्र लिङ्गजातिर्व्यवस्थिता । शब्दा हि द्रव्यायमाणं वस्त्वाचक्षाणास्तद्धर्मलिङ्गोपाधितयैव तत्र तत्र प्रवर्तन्ते ।

तथा च स्त्रीत्वं स्त्रीता स्त्रीभाव इति लिङ्गेष्वपरो लिङ्गयोग इति वक्ष्यते ॥५॥

एतदेवोपपादयितुमाह—

**परतन्त्रस्य यल्लिङ्गमपोद्धारे विवक्षिते ।**
**तत्रासौ शब्दसंस्कारः शब्दैरेव व्यपाश्रितः ॥६॥**

---

दावपि शब्दस्य तत्तल्लिङ्गप्रत्ययस्य दर्शनात् स्त्रीत्वादिरूपतत्तल्लिङ्गजातियोगः कल्प्यते ।

तथा च स एवार्थः केनचिच्छब्देन = अर्थशब्देन नियतलिङ्गोऽभिधीयमानस्त-ल्लिङ्गजातियोगी = पुंस्त्वरूपलिङ्गजातियोगी, शब्दान्तरेण तु = व्यक्त्यादिशब्देन तु अभिधीयमानः स्त्रीत्वादिरूपलिङ्गजात्यन्तरयोगी प्रत्याय्यत इति न काचित् क्षतिः । तद्यथा—भावशब्देन पुंस्त्वोपाधिका सत्ता उच्यते, सत्ताशब्देन तु स्त्रीत्वोपाधिका सोच्यते, सामान्यशब्देन तु नपुंसकत्वोपाधिका । एवं तदादावपि लिङ्गत्रययोगो वाच्यः ।

गोत्वघटादिरूपा जातयोऽपि भावजातिसामान्यशब्दैः त्रिलिङ्गोपाधयः = पुंस्त्वादिरूपलिङ्गत्रयरूपोपाधियोगिनः अभिधीयन्त इति शब्दशक्त्यनुसारेणैव सर्वत्र = सर्वेषु भावेषु पुंस्त्वादिरूपा लिङ्गजातिर्व्यवस्थिता । शब्दा हि लिङ्गसंख्या-योगितया द्रव्यायमाणं गुणकर्मसामान्यरूपमपि वस्तु आचक्षाणास्तद्धर्मलिङ्गोपाधि-तयैव = गुणादिधर्मपुंस्त्वादिरूपलिङ्गोपाधिकतयैव तत्र तत्र = गुणादिष्वर्थेषु प्रवर्तन्ते ।

तथा च—'स्त्रीत्वं स्त्रीता, स्त्रीभावः' इत्येवं स्त्र्यादिषु लिङ्गेष्वप्यपरः स्त्रीत्वादिरूपलिङ्गयोगः शब्दशक्तिस्वभावात् कल्प्यत इति वक्ष्यत इति ॥ ५ ॥

एतदेव = शब्दशक्त्यनुसारेणैव सर्वत्र लिङ्गजातिर्व्यवस्थिता, यत्र तु वृत्ते-रपोद्धृते प्रक्रियावाक्ये जातिमात्रविवक्षया वा प्रयुक्ते लौकिके वाक्ये सत्त्वभूत-स्यार्थस्य प्रत्यायनाय नान्तरीयकतया लिङ्गमभिधीयते शब्दैस्तत्र शब्दान्वाख्या-नायैव शब्दसंस्काररूपार्थं लिङ्गाभिधानम्, न तु लिङ्गं तत्र विवक्षितम्—'कुक्कुट-स्याण्डम्, मृगस्य क्षीरम्' इत्यादौ इत्येतदेव उपपादयितुमाह—**परतन्त्रस्य यल्लिङ्गमिति ।**

नामपदेन सत्त्वभूतस्यार्थस्याभिधीयमानत्वात् तस्य वृत्तावुपसर्जनभूतस्यापि प्रक्रियायामपोद्धारवाक्येऽभिधित्सिते यल्लिङ्गमुपादीयते नान्तरीयकम्, तत्केवलं शब्दान्वाख्याननिमित्तमिति शब्दैरेवाङ्गीकृतम्, प्रयोगे तु लौकिके तदविवक्षितमित्यर्थः ।

तथा हि कुक्कुटयादीनामण्डादिषु पुंवद्वचनं प्रत्याख्यातम् 'न वा अस्त्रीपूर्वपदविवक्षितत्वात्' ( म० भा० ६।३।४२ ) इति ।

कुक्कुटाण्डं मृगाण्डम्, कुक्कुटक्षीरं मृगक्षीरमिति कुक्कुटादेरण्डादिविशेषणस्य जातिमात्रविवक्षायां स्त्रीत्वस्याविवक्षितता ।

अतिदिष्टेऽपि हि पुंशब्दे पूर्वपदवाच्यं स्त्रीत्वमत्र नावगम्यत इति किमतिदेशेन ? यत्र हि गम्यते स्त्रीत्वम्, तत्र पुंशब्दोऽतिदिश्यताम्, तथा

---

अस्यार्थः —'कुक्कुटाण्डम्, मृगक्षीरम्' इत्यादौ —'कुक्कुटस्याण्डम्, मृगस्य क्षीरम्' इति अपोद्धारे विवक्षिते परतन्त्रस्य वृत्तावुपसर्जनीभूतस्य कुक्कुटस्य मृगस्य वा यल्लिङ्गम् —पुंस्त्वरूपम्, तत्रासौ शब्दैः पुमर्थाभिधायिभिः कुक्कुटमृगादिशब्दैः, शब्दसंस्कार एव = कुक्कुटाण्डादिशब्दसाधुत्वान्वाख्यानमेव, व्यपाश्रितः = अभ्युपगतः, न तु लिङ्गं तत्र विवक्षितम् । शब्दसंस्कारनान्तरीयकतयैव तत्र लिङ्गं शब्दैराश्रीयते । मृगस्य क्षीरम्, कुक्कुटस्याण्डमित्यत्र स्त्रीत्वप्रतीतिस्तु उत्तरपदार्थसामर्थ्याद् भवतीति ।

अयं भावः —कुक्कुटाण्डमित्यादौ कुक्कुटादिरूपेण नामपदेन सत्त्वभूतस्य = द्रव्यरूपस्यार्थस्याभिधीयमानत्वात् तस्य वृत्तावुपसर्जनीभूतस्यापि प्रक्रियायामपोद्धारवाक्ये कुक्कुटस्याण्डमित्यभिधित्सिते यल्लिङ्गं पुंस्त्वरूपं नान्तरीयकम्, तत् केवलं शब्दान्वाख्याननिमित्तमिति शब्दैरेवाङ्गीकृतम् । प्रयोगे लौकिके प्रक्रियावाच्यरूपे तत् = पुंस्त्वरूपं लिङ्गम्, अविवक्षितमित्यर्थः ।

तथा हि —कुक्कुटयादीनामण्डादिषु पुंवद्वचनं प्रत्याख्यातं भाष्ये—"न वाऽस्त्रीपूर्वपदविवक्षितत्वात्" इति ।

अस्यार्थः —न वा पुंवद्वचनं कर्तव्यम्, स्त्रीरूपस्य कुकुटयादिरूपस्य पूर्वपदस्य अविवक्षितत्वादिति ।

कुक्कुटाण्डम्, मृगाण्डम् = अण्डशब्दोऽत्र गौण्या लक्षणया गर्भपरः, 'कुक्कुटक्षीरम् मृगक्षीरम्' इत्यादौ अण्डादिविशेषणस्य कुक्कुटादेर्जातिमात्रविवक्षायां स्त्रीत्वस्याविवक्षितता ।

अतिदिष्टोऽपि हि अत्र पुंशब्दे पूर्वपदवाच्यं स्त्रीत्वमत्र दर्शनीयभार्यादिष्विव नावगम्यत इति किमतिदेशेन । यत्र हि गम्यते स्त्रीत्वं तत्र पुंशब्दोऽतिदिश्यताम्, यथा दर्शनीयभार्यादौ । अत्र ह्युत्तरपदेन स्त्रीलिङ्गेन सामानाधिकरण्यात्

दर्शनीयभार्यादौ । अत्र ह्युत्तरपदेन सामानाधिकरण्यात् पूर्वपदस्य स्त्र्यर्थतावगम्यत इति पुंशब्दातिदेशो युक्तः ।

इह त्वण्डादेः स्त्रीलिङ्गताभावात् पूर्वपदस्य स्त्र्यर्थता नियमेन नावधार्यते । प्रक्रियावाक्ये तु शास्त्रीयेऽपोद्धारे कुक्कुटस्याण्डं मृगस्य क्षीरमित्येव पुँल्लिङ्गेन प्रदर्शनम्, सत्त्वभूतस्यार्थस्य लिङ्गनान्तरीयकत्वात् । ततश्चासौ सत्ताभिधायिनः शब्दस्य संस्कारः, अण्डक्षीरादीनां तु पुंसः सम्बन्धाभावाद् अर्थात् प्रयोगे लौकिके स्त्रीत्वावगतिः ॥ ६ ॥

यदुक्तं सर्वत्र जातयः समवस्थिता इति, तामिदानीं व्याप्तिमुपपादयति—

बुद्ध्या कल्पितरूपेषु लिङ्गेष्वपि च सम्भवः ।
स्त्रीत्वादीनां व्यवस्था हि सा लिङ्गैर्व्यपदिश्यते ॥७॥

बहिर्वस्तूनां बुद्ध्या ज्ञानेन कल्पिताकारेषु समारोपितरूपेषूपाधित्वेन वस्तुविषयेऽभिधीयमानेषु स्त्रीत्वादिष्वपि लिङ्गेष्वपरलिङ्गयोगो यथास्वं शब्द-

---

पूर्वपदस्य स्त्र्यर्थतावगम्यत इति पुंशब्दातिदेश उक्तः, अप्राप्तत्वात् ।

इह त्वण्डादेः स्त्रीलिङ्गताऽभावात् पूर्वपदस्य स्त्र्यर्थता नियमेन नावधार्यत इति जातिमात्रविवक्षया पुंस्त्वं प्राप्तमेवेति न पुंशब्दातिदेशो युक्तः । लौकिके प्रक्रियावाक्ये तु शास्त्रीयेऽपोद्धारे विवक्षिते "कुक्कुटस्याण्डं मृगस्य क्षीरम्' इत्यत्र पुँल्लिङ्गेन प्रदर्शनम्, लिङ्गानान्तरीयकत्वात् । ततश्चासौ सत्त्वाभिधायिनः शब्दस्य संस्कारः, न तु लिङ्गं तत्र विवक्षितम् । अण्डक्षीरादीनां तु पुंसा सह सम्बन्धसम्भवात् लौकिके प्रयोगेऽर्थात्=अण्डपदार्थेन सह सम्बन्धसामर्थ्यात् स्त्रीत्वावगतिरिति ॥ ६ ॥

यदुक्तं सर्वत्र सर्वेषु भावेषु स्त्रीत्वपुंस्त्वादिरूपा लिङ्गजातयः सन्तीति तामिदानीं व्याप्तिमुपपादयति—बुद्ध्या कल्पितरूपेष्विति ।

अस्यार्थः—स्त्री पुमान् नपुंसकमित्यादौ पदार्थापोद्धारबुद्ध्या कल्पितरूपेषु कल्पिताकारेषु स्त्र्यादिद्रव्येषूपाधित्वेनाभिधीयमानेषु स्त्रीत्वादिलिङ्गेष्वपि अपरेषां स्त्रीत्वादिलिङ्गानां सम्भवोऽस्ति । हि=यतः, या स्त्रीत्वादीनां लिङ्गानां तत्तद्द्रव्येषु व्यवस्था सा अपरैः स्त्रीत्वादिभिर्लिङ्गैरेव व्यपदिश्यते स्त्रीत्वम्, स्त्रीता, स्त्रीभाव इति ।

अयं भावः—बहिर्वस्तूनां बुद्ध्या=बाह्यवस्तुविषयिकया बुद्ध्या कल्पिताकारेषु वस्तुविषये उपाधित्वेन समारोपितरूपेषु लिङ्गोपाधिकैः स्त्र्यादिशब्दैरभिधीयमानेषु स्त्रीत्वादिष्वपि लिङ्गेषु यथास्वम्=यथायथं स्त्रीत्वादिशब्दप्रतिपाद्येष्वपरलिङ्गयोग इति सर्वशब्दविषया=लिङ्गोपाधिका लिङ्गोपाधिक-

प्रतिपाद्येष्विति सर्वशब्दविषया लिङ्गानां व्याप्तिः। सा व्यवस्था स नियमः स्त्रीत्वादीनां लिङ्गैर्लिङ्गोपाधिभिः शब्दैः प्रतिपाद्यते।

तथा हि भावप्रत्ययान्तैरलिङ्गाभिधायिभिः शब्दैरेषां स्त्रीत्वादीनां लिङ्ग-नियमेन प्रत्यायनं स्त्रीत्वम्, स्त्रीता, स्त्रीभाव इति। स्त्रीत्वविशिष्टस्य द्रव्यस्य स्त्रीशब्देनाभिहितस्य भावप्रत्ययेन प्रवृत्तिनिमित्तं नपुंसकत्वादियोगिस्वभावात् प्रकाश्यते। भावशब्देन च पुंस्त्वविशिष्टमिति शब्दजेन प्रत्ययेन लिङ्गेष्वपरलिङ्ग-योगो लक्ष्यते। तदुक्तं प्राक्—

'लिङ्गेषु लिङ्गमेव व्यवस्थितम्' ( वा० प० ३, सं० ११ ) इति ॥ ७ ॥

'असत्तु मृगतृष्णावदि'त्यचेतनानां लिङ्गमवस्थापयितुं भाष्येऽभिहितं व्याचष्टे—

यथा सलिलनिर्भासो मृगतृष्णासु जायते।
जलोपलब्ध्यनुगुणाद् बीजाद् बुद्धिर्जले सति ॥८॥
तथैवाव्यपदेश्येभ्यो हेतुभ्यस्तारकादिषु।
मुखेभ्य इव लिङ्गेभ्यो भेदा लोके व्यवस्थिताः ॥९॥

---

शब्दविषया लिङ्गानां व्याप्तिः। लिङ्गानां स्त्रीत्वादीनां सा व्यवस्था स नियमः लिङ्गैर्लिङ्गोपाधिकैः स्त्र्यादिशब्दैः प्रतिपाद्यते।

तथा हि —भावप्रत्ययान्तैरलिङ्गाभिधायिभिः स्त्र्यादिशब्दैरेषां स्त्रीत्वादीनां लिङ्गनियमेन प्रत्यायनम्, 'स्त्रीत्वम्, स्त्रीता, स्त्रीभावः' इति। स्त्रीत्वविशिष्टस्य द्रव्यस्य स्त्रीशब्देनाभिहितस्य भावप्रत्ययेन त्वतलादिना प्रवृत्तिनिमित्तं नपुंसकत्वादि-योगिस्वभावात् प्रकाश्यते। भावशब्देन च पुंस्त्वविशिष्टमिति शब्दजेन लिङ्गेष्व-परलिङ्गयोगो लक्ष्यते। तदुक्तं प्राक्—'लिङ्गेषु लिङ्गमेवं व्यवस्थितम्' इति ॥ ७ ॥

"असत्तु मृगतृष्णावत्" इति।

अस्यार्थः —खट्वावृक्षादिष्वचेतनेष्वसदपि लिङ्गं मृगतृष्णाजनिकासु मरुमरीचिषु असज्जलवत् प्रतीयत इति।

इदं वाक्यमचेतनानां लिङ्गमवस्थापयितुं भाष्येऽभिहितम्। तद्व्याचष्टे— यथा सलिलनिर्भास इति।

अस्यार्थः —यथा मृगतृष्णासु मरुमरीचिकासु जलोपलब्ध्यनुगुणाद् बीजात्— पूर्वपूर्वजलप्रत्ययाहितसंस्काररूपाद् जलेऽसत्यपि सलिलनिर्भासा सलिलाकारा बुद्धिर्जायते—उच्चलत्तुङ्गतरङ्गभङ्गकुलाऽभ्यर्णमवतीर्णेयं मन्दाकिनी इति, तथैव बहिरविद्यमानत्वादेवाव्यपदेश्येभ्यो लिङ्गरूपेभ्यो लिङ्गभेदव्यपदेशहेतुभ्यो

मृगतृष्णा मरुमरीचिकाः प्रसिद्धाः। ता हि तरङ्गायमाणा मृगाणां तत्तुल्यानां मुग्धानां च पिपासामुपजनयन्ति। दिनकरकरनिकराः प्रसर्पन्तो नभोदेशमूर्ध्वाधरभावेन समाक्रान्तस्तरङ्गाकारप्रत्ययमुपदधति पिपासूनाम्। अत एव तृष्णाकृताद् भावनावेशादुदकत्वेन प्रतिभासात् तृष्णाशब्देनोच्यते। यथा ह्युदकवासनालक्षणाद् बीजादसत्यपि तत्र जले सन्तापसन्धुक्षितानां पिपासूनां जलाकारावग्राहिणी बुद्धिरुपजायते।

एवमेव तारका पुष्यो नक्षत्रमित्येवमादिष्वचेतनेषु बहिरविद्यमानेभ्य एव लिङ्गेभ्यः। अत एवाविद्यमानत्वादेवाव्यपदेश्येभ्यो लोके तारकादिशब्दैर्भेदाः प्रतिनियतलिङ्गानुगताः प्रकाश्यन्ते, यथा बहिर्विद्यमानलिङ्गनिमित्ताः। अन्यत्राभ्यस्तोदकभावनावदिहाप्यन्यत्राभ्यस्तत्वात् स्त्रीत्वाद्यसदध्यारोपितं प्रतीयत इति दृष्टान्तसाम्यम्। व्यञ्जकाभावश्चात्र बाधकं प्रमाणम्।

अयमर्थः—शब्दानां शक्तिनियमादसदपि बाह्ये रूपमभिधातुं न व्याघातः, सदृशश्च सदसतोस्ततः प्रत्ययः प्ररूढः। शब्दो हि सम्यङ्मिथ्याज्ञानावेदितमर्थमविशेषेणाभिधत्ते। मरुमरीचिषूदकं सादृश्यादध्यारोप्यते, न त्वेवं खट्वावृक्षयोः

---

मुख्येभ्यो लिङ्गेभ्य इव लोके तारकादिषु तारका, पुष्यो नक्षत्रम् इति लिङ्गव्यपदेशभेदा व्यवस्थिता इति।

अयं भावः —मृगतृष्णा मरुमरीचिकाः प्रसिद्धाः। ता हि तरङ्गायमाणाः = तरङ्गवद् भासमाना मृगाणां तत्तुल्यानां मुग्धानां च पिपासामुपजनयन्ति। दिनकरकरनिकरा नभोदेशं प्रसर्पन्त ऊर्ध्वाधरभावेन समाक्रामन्तः पिपासूनां तरङ्गाकारं प्रत्ययमुपदधति। अत एव तृष्णाकृताद् जलभावनावेशादुदकत्वेन तासां प्रतिभासात् तास्तृष्णाजनकतया तृष्णाशब्देनोच्यन्ते। यथा ह्युदकवासनालक्षणाद् बीजाद् असत्यपि मृगतृष्णासु जले सन्तापसन्धुक्षितानां पिपासूनां जलाकारग्राहिणी बुद्धिरुपजायते।

एवमेव तारका पुष्यो नक्षत्रमिति एवमादिषु अचेतनेषु बहिरविद्यमानेभ्य एव लिङ्गेभ्योऽविद्यमानत्वादेवाव्यपदेश्येभ्यो लोके प्रतिनियता लिङ्गानुगता लिङ्गव्यपदेशभेदास्तारकादिशब्दैः प्रकाश्यन्ते। यथा स्त्र्यादिषु बहिर्विद्यमानलिङ्गनिमित्तकाः। अन्यत्र सत्योदकस्थलेऽभ्यस्तोदकभावनावदिहापि अन्यत्र चेतनेषु अभ्यस्तत्वाद् अचेतनेषु असदध्यारोपितं स्त्रीत्वादि प्रतीयत इति दृष्टान्तसाम्यम्। व्यञ्जकाभावाश्च = व्यञ्जकानुपलब्धिश्चात्र = मरुमरीचिकासु तोयप्रत्यये बाधकं प्रमाणम्।

अयमत्र निष्कर्षः —शब्दानां नियमाद् बाह्ये वस्तुन्यसदपि रूपमभिधातुं न व्याघातः। ततः = शब्दात् सदसतोः पदार्थयोः सदृशश्च प्रत्ययः प्ररूढो लोके।

स्त्रीपुंसादिव्यञ्जकसदृशं किञ्चिद् दृश्यत इत्याशङ्क्य विषयसादृश्यमनपेक्ष्याप्यनादिमिथ्याभ्यासवासनावशाद् भ्रान्तयो भवन्तीति निदर्शनान्तरमुक्तं 'गन्धर्वनगरं यथा' ( म० भा० ) इति ॥ ८–९ ॥

अन्तोऽनन्तरमिदमुक्तं भाष्ये "आदित्यगतिवत् सन्न, वस्त्रान्तर्हितवच्च तत्" इति । एतद् व्याचष्टे—

**व्यक्तेषु व्यक्तरूपाणां स्तनादीनां तु दर्शनात् ।**
**अव्यक्तव्यञ्जनाव्यक्तेर्जातिर्न परिकल्प्यते ॥१०॥**

व्यक्तेषु चेतनगतेषु लिङ्गेषु स्तनकेशादीनां तदुपव्यञ्जनानां स्पष्टरूपाणामुपलम्भादचेतनेषु खट्वादिष्वनभिव्यक्तव्यञ्जना लिङ्गजातिर्न परिकल्प्यते, न व्यवस्थाप्यते, सर्वथैवाव्यक्तेरप्रतीतेः । यत् किल प्रमाणेन प्रतीयते, तदवस्था-

---

शब्दो हि सम्यङ्मिथ्याज्ञानोदितमर्थमविशेषेण = सामान्येनाभिधत्ते । मरुमरीचिषूदकसादृश्यादध्यारोप्येत, न त्वेवं खट्वावृक्षयोरचेतनयोः स्त्रीपुंसादिव्यञ्जकस्तनकेशलोमादिसदृशं किञ्चिद् व्यञ्जकं दृश्यत इत्याशङ्क्य विषयसादृश्यमनपेक्ष्यापि अनादिमिथ्याप्रत्ययाभ्यासजनितभावनावशाद् भ्रान्तयो भवन्तीति विचिन्त्य निदर्शनान्तरम् = दृष्टान्तान्तरमुक्तं भाष्ये—"गन्धर्वनगरं यथा" इति ।

वस्तुतस्तु निरधिष्ठानकाध्यारोपासम्भवाद् यदि सूर्यकिरणेषु मेघेषु वा विविधाकारेषु नगरत्वारोपः, तदा तत्रापि अस्त्येव नगराकारसाम्यमिति बुद्धिवैशद्याय निदर्शनान्तरमित्यवधेयमिति ॥ ८–९ ॥

अतोऽनन्तरमिदमुक्तं भाष्ये—"आदित्यगतिवत् सन्न, वस्त्रान्तर्हितवच्च तत्" इति ।

अस्यार्थः—यथाऽऽदित्यस्य सायंप्रातर्मध्याह्ने वा स्थानान्तरप्राप्त्याऽऽदित्यस्य गतिः सती अनुमीयते, तद्वदानुमानिकमचेतनेषु लिङ्गानां सत्त्वं न । किञ्च, यथा वस्त्रान्तर्हितं वस्तु वस्त्रापाये व्यवधाननिवृत्त्यासत्त्वेन गृह्यते तद्वदपि अचेतनेषु लिङ्गानां सत्त्वं नेति । एतद्भाष्यं व्याचष्टे—व्यक्तेषु व्यक्तरूपाणामिति ।

अस्यार्थः—व्यक्तेषु चेतनगतेषु स्फुटेषु लिङ्गेषु व्यक्तरूपाणां स्फुटरूपाणां स्तनादीनां दर्शनात्तु अव्यक्ते = अव्यक्तचैतन्ये—अचेतने, अव्यक्तव्यञ्जना = स्त्रीत्वपुंस्त्वादिरूपा लिङ्गजातिर्न परिकल्प्यते ।

यद्वा—अचेतनेऽव्यक्तव्यञ्जना स्त्रीत्वादिलिङ्गजातिर्न कल्प्यते, अव्यक्तेः = अव्यक्तव्यञ्जनाया जातेरव्यक्तेरप्रतीतेरिति ।

अयं भावः—व्यक्तेषु स्फुटेषु चेतनगतेषु लिङ्गेषु स्तनकेशादीनां तदुपव्यञ्जनानाम् = स्त्रीत्वादिरूपलिङ्गजातिव्यञ्जकानां स्पष्टरूपाणामुपलम्भादचेतनेषु खट्वावृक्षादिष्वनभिव्यक्तोपव्यञ्जना लिङ्गजातिर्न परिकल्प्यते, न व्यवस्थाप्यते ।

पनमर्हति। यथादित्यगतिर्देशान्तरप्राप्त्यानुमीयते, वस्त्रान्तर्हितं च वस्तु वस्त्रापाये व्यवधाननिवृत्तेः साक्षाद् गृह्यते। नैवं लिङ्गजातिर्वृक्षादिषु कदाचनाप्युपलभ्यत इत्यसती शब्देन परं स्वशक्तिवशात् प्रत्याय्यते।

तथा च भाष्यम्—"येऽप्येते रथकारा वासीवृक्षादनहस्ताः···" इत्यादि।

प्रमाणसिद्धस्य ह्यनुपलब्धिहेतवः "अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्" इत्यादिनोक्ताः।

न चेह लिङ्गं प्रमाणसिद्धं किञ्चनापि वस्तु सत्यभूतं वस्तुधर्मः ॥१०॥

एवमपि सत्त्वाभ्युपगमे प्रत्यक्षेण विरुध्यत इत्युक्तं भाष्ये। तद् व्याचष्टे—

**अस्तित्वं च प्रतिज्ञाय सदाऽदर्शनमिच्छतः।**
**अत्यन्तादर्शने न स्यादसत्त्वं प्रति निश्चयः ॥११॥**

---

अव्यक्तव्यञ्जनाया जातेरव्यक्तेः सर्वथैवाप्रतीतेर्यत् किल प्रमाणेन प्रतीयते, तदवस्थापनमर्हति। यथाऽऽदित्यगतिर्देशान्तरप्राप्त्याऽनुमीयते, वस्त्रान्तर्हितञ्च वस्तु वस्त्रापाये व्यवधाननिवृत्तेः साक्षाद् गृह्यते। नैवं लिङ्गजातिर्वृक्षादिषु कदाचनाऽप्युपलभ्यत इत्यसती लिङ्गजातिः शब्देन परम् = केवलं स्वशक्तिवशात् प्रत्याय्यते।

तथा च भाष्यम् —"येऽप्येते रथकारा वासीवृक्षादनहस्ताः" इत्यादि।

अस्माद् भाष्यादिदं प्रतीयते यद्यचेतनेषु खट्वावृक्षादिषु लिङ्गं वस्तुभूतं स्यात्, तदा तक्षणादिरुपलभ्येत, नोपलभ्यतेऽतो नास्ति वस्तुभूतं खट्वावृक्षादिषु लिङ्गमिति। प्रमाणसिद्धस्य हि वस्तुनोऽनुपलब्धिहेतवः "अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्" (सां० का०) इत्यादिनोक्ताः।

न चेह लिङ्गं नाम प्रमाणसिद्धं किमपि वस्तु सत्यभूतं वस्तुधर्मोऽस्ति, येनानुपलब्धिहेतूनामन्यतमस्यात्रोपनिपातावसरः स्यादिति।

इदं च भाष्यपद्यस्वरूपं प्रकृतहरिकारिकात्रयीगोचरीभूतम्—

असत्तु मृगतृष्णावद् गन्धर्वनगरं यथा।
आदित्यगतिवत् सन्न वस्त्रान्तर्हितवन्न तत् ॥ इति ॥ १० ॥

एवमपि = लिङ्गस्य लिङ्गव्यञ्जकानाश्चात्यन्तादर्शनेऽपि लिङ्गस्य सत्त्वाभ्युपगमे प्रत्यक्षेण विरुध्यत इत्युक्तं भाष्ये, तद्व्याचष्टे --अस्तित्वञ्चेति।

अस्यार्थः —लिङ्गस्यास्तित्वं प्रतिज्ञाय तस्य सदाऽदर्शनमिच्छतश्च = इच्छतस्तु ते शशशृङ्गादीनामत्यन्तादर्शनेऽपि तेषामसत्त्वं प्रति निश्चयो न स्यादिति प्रत्यक्षेण शशशृङ्गादीनामसत्त्वेन सहते विरोधोऽत्यन्तादृष्टलिङ्गसत्त्ववादिनस्ते इति असदेव लिङ्गमभ्युपगन्तव्यमिति।

खट्वावृक्षादौ लिङ्गस्य सत्त्वमभ्युपगम्य व्यञ्जकानामनुपलब्धेर्नित्यमनुपलब्धिमभ्युपगच्छतो वादिनो दृश्यानुपलब्धिरप्रमाणभूताऽभावं प्रति स्यादित्यभावे शशविषाणादौ सत्त्वसन्देहप्रसङ्गः। तत्राप्यत्यन्तादर्शने सत्यसत्त्वनिश्चयो न स्यात्। यतस्तत्राप्येतच्छक्यते वक्तुम्—'अस्ति तत्, इन्द्रियदौर्बल्यात् तु न दृश्यते' इति। तदयं प्रत्यक्षविरोधो यद् दृश्यस्वभावस्य प्रत्यक्षेण कदाचिदप्यगृह्यमाणस्य सत्ताभ्युपगमः ॥११॥

एतद् दूषितम्—'अन्योन्यसंश्रयं त्वेतत्' इति। लिङ्गकार्यस्य खट्वावृक्षादौ टाबादेदर्शनाल्लिङ्गानुमानमित्युक्तम्—'तयोस्तु तत्कृतं दृष्ट्वा यथाकाशेन ज्योतिषः' इति। आकाशः प्रकाशः, तेन यथा तत्कारणस्य ज्योतिषोऽनुमानम्, तथा लिङ्गकार्येण लिङ्गस्येति।

तद् व्याचष्टे—

**न चालमनुमानाय शब्दोऽदर्शनपूर्वकः।**
**सिद्धे हि दर्शने किं स्यादनुमानप्रयोजनम् ॥१२॥**

---

अयं भावः—अचेतने खट्वावृक्षादौ लिङ्गस्य सत्त्वमभ्युपगम्य लिङ्गव्यञ्जकानामनुपलब्धेर्लिङ्गस्य नित्यमनुपलब्धिमभ्युपगच्छतो वादिनोऽदृश्यस्य शशविषाणादेरनुपलब्धिरप्रमाणभूताऽभावरूपं शशविषाणादिकं प्रति प्रमाणं स्यादित्यभावरूपे शशविषाणादौ सत्त्वसन्देहप्रसङ्ग इति तत्राप्यत्यन्तादर्शने सति तेषामसत्त्वनिश्चयो न स्यात्। यतस्तत्राप्येतच्छक्यते वक्तुम्, अस्ति तत्=शशविषाणादिकम्, इन्द्रियदौर्बल्यात् तु न दृश्यत इति।

तदयं प्रत्यक्षविरोधो यद् अदृश्यस्वभावस्य प्रत्यक्षेण कदाचिदपि अगृह्यमाणस्य लिङ्गस्य सत्ताभ्युपगम इति ॥ ११ ॥

एतच्च दूषितं तत्रैव—'अन्योऽन्यसंक्षयं त्वेतत्" इति।

खट्वावृक्षादावचेतने लिङ्गकार्यस्य टाबादेर्दर्शनाल्लिङ्गानुमानमित्युक्तं भाष्ये—"तयोस्तु तत्कृतं दृष्ट्वा यथाऽऽकाशेन ज्योतिषः" इति। एतद् भाष्यवाक्यं व्याख्यातं प्राक्। अत्राकाशः प्रकाशः आङोऽतिशयातिशयार्थकत्वात्। तेन यथा तत्करणस्य ज्योतिषोऽनुमानम्, तथा लिङ्गकार्येण टाबादिना लिङ्गस्यानुमानमिति।

लिङ्गानुमाने सति लिङ्गकार्यं टाबादिकम्, लिङ्गकार्ये च टाबादौ सति लिङ्गानुमानमिति परस्पराश्रयं त्वेतदित्यर्थः।

एतद् भाष्यं भावतो व्याचष्टे—न चालमनुमानायेति।

अस्यार्थः—अदर्शनपूर्वकः=लिङ्गादर्शनपूर्वकः शब्दो लिङ्गकार्यटाबादिरहितत्वात् लिङ्गानुमानाय, न च अलम्=पर्याप्तम्, अनुमानात् प्राग् अन्यतः

इह सिद्धस्यार्थस्य स्त्रियां पुंसि नपुंसक इत्यनुवादः शब्दसंस्कारार्थः। तथा च यदि वृक्षादौ लिङ्गस्या स्त प्रमाणात् सिद्धिः, तदा शब्दात् तदनुमानं व्यर्थम्। अथ नास्ति, तदा प्रत्ययादेः कार्यस्य विधीयमानस्य निमित्तत्वेन.पादानमप्रमाणकमनुपपन्नमित्यन्यतोऽनवगतस्य शब्दादेव प्रतीत्यभ्युपगमे अन्योन्यसंश्रयमेतद् इतरेतराश्रयदूषणदुष्टमित्यर्थः। लिङ्गासिद्धौ निमित्तत्वेनोपादानायोगात् तन्निबन्धनस्य शब्दस्याभावात्, तेन तत्सिद्धेरयोगात् ॥१२॥

तदेवं लौकिकं लिङ्गमचेतनेष्वव्याप्तमुपेक्ष्य 'संस्त्यानप्रसवौ लिङ्गमास्थेयौ' इति पारिभाषिकं भाष्ये लिङ्गमुक्तम्।

तथा चाह—

"संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप् प्रसवे पुमान्" इति।

---

प्रामाण्यात् सिद्धे हि=तु लिङ्गकार्यटाबादिनिमित्तभूते लिङ्गदर्शने लिङ्गानुमानस्य किं प्रयोजनं स्यात्? साध्यसिद्धेरनुमितिं प्रति प्रतिबन्धकत्वादिति।

अयं भावः—लोके प्रमाणात् सिद्धस्य लिङ्गरूपस्यार्थस्येह=व्याकरणे स्त्रियां पुंसि नपुंसके इत्यनुवादः खट्वादिशब्दसंस्कारार्थः। तथा च खट्वावृक्षादौ अचेतने यद्यस्ति लिङ्गस्यान्यतः प्रमाणात् सिद्धिः, तदा टाबादिरूपलिङ्गकार्यसहितात् खट्वादिशब्दात् तदनुमानम्=लिङ्गानुमानं व्यर्थम्, लिङ्गदर्शनरूपायाः सिद्धेर्लिङ्गानुमितिप्रतिबन्धकत्वात्। अथ टाबाद्युत्पत्तेः प्राङ्नास्ति लिङ्गदर्शनम्, तदा प्रत्ययादेः कार्यस्य विधीयमानस्य निमित्तत्वेन 'स्त्रियां पुंसि नपुंसके' इत्यादिरूपैर्लिङ्गस्योपादानमप्रमाणकमनुपपन्नमिति। अन्यतोऽनवगतस्य लिङ्गस्य शब्दादेव प्रतीत्यभ्युपगमे अन्योन्यसंश्रयमेतत्, इतरेतराश्रयरूपदूषणदुष्टमित्यर्थः। टाबाद्युत्पत्तेः प्राग् लिङ्गासिद्धौ टाबादिकार्यनिमित्तत्वेन लिङ्गस्योपादानायोगात् तन्निबन्धनस्य=लिङ्गनिमित्तकस्य खट्वादिशब्दस्याभावात्। तेन=खट्वादिशब्देन तत्सिद्धेः=लिङ्गानुमितेः अयोगात्=असम्भवादिति।

तदेवं लौकिकं लिङ्गं स्तनकेशपुंव्यञ्जनादिरूपमचेतनेषु खट्वावृक्षादिषु अव्याप्तमुपेक्ष्य "संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः" इति पारिभाषिकं भाष्ये लिङ्गमुक्तम्।

तथा चैतदुत्तरार्धमाह—"संस्त्याने स्त्यायतेर्ड्रट् स्त्री, सूतेः सप् प्रसवे पुमान्" इति।

अस्यार्थः—स्वकृतान्ततः—वैयाकरणसिद्धान्ते, संस्त्यानप्रसवौ—संस्त्यानमपचयः, प्रसव उपचयः। एतौ संस्त्यानप्रसवौ स्त्रीत्वरूपं पुंस्त्वरूपञ्च यथाक्रमं लिङ्गमास्थेयौ। यतः संस्त्याने अपचयरूपेऽर्थे स्त्यायतेर्धातोर्भावे ड्रट्प्रत्यये स्त्री इति भवति। प्रसवे उपचयरूपेऽर्थे सूतेर्धातोर्भावे डुमसुन्प्रत्यये सप्-सकारस्य

"संस्त्यानं संहननं प्रतिलयस्तिरोभावोऽपचयो रूपादीनां सत्त्वादिमयानां गुणानां स्त्री लोके तु स्त्यायति संहननमापद्यतेऽस्यां गर्भ इत्यधिकरणे स्त्री। सूतेर्धातोर्भावे प्रसवे उपचये मसुन्प्रत्यये परतः सकारस्य पकारादेशे कृते पुमानिति। यदाह—सबिति। सकारस्य पकारादेश इत्यर्थः।

अनेन च प्रकारेण पातेरेव सूत्यर्थे वृत्तिं सूचयति। अत एव प्रत्ययं नोपन्यस्यति, पातेर्डुमसुन् इत्येव तस्य प्रसिद्धेः। अर्थानां च प्रसिद्धानामेव शास्त्रेऽनुवादाद् रूढ्यर्थबाधा विज्ञायते। तेन प्रसवः प्रवृत्तिराविर्भावो गुणानां शास्त्रे पुमान्। लोके तु पाति सन्ततिमिति पुमान् कर्ता।

यद्यपि चाविर्भावतिरोभावावपि लौकिकावेव, लोकप्रसिद्धस्यैव शास्त्रेऽनुवादस्योपपत्तेः, तथापि प्रसिद्धतरस्तनादिसम्बन्धो लौकिकस्त्यज्यते, अव्याप्तेः। 'सर्वाश्च पुनर्मूर्त्तय एवात्मिकाः शब्दस्पर्शरूपरसगन्धवत्यः' इति संस्त्यानप्रसवयो-

---

पकार आदेश इति 'पुमान्' इति भवतीति।

संस्त्यानं संहननं प्रति लयस्तिरोभावो रूपरसादीनां सत्त्वादिमयानां गुणानाम्=सत्त्वरजस्तमोगुणविकाराणाम् अपचयः स्त्रीलिङ्गरूपा शास्त्रे। लोके तु स्त्यायनि संहननमापद्यतेऽस्यां गर्भ इति अधिकरणे ड्रट्प्रत्यये स्त्री। सूतेर्धातोर्भावे उपचयरूपे प्रसवेऽर्थे डुमसुन्प्रत्यये कृते तस्मिन् परतः सूतेः सकारस्य पकारादेशे कृते पुमानिति लिङ्गशास्त्रे। यदाहात्र पद्ये—सबिति। सकारस्य पकारादेश इत्यर्थः।

अनेन च प्रकारेण पातेरेव सूत्यर्थे प्रसवे वृत्तिं सूचयति। अत एवात्र डुमसुन्रूपं प्रत्ययं नोपन्यस्यति। सूतेर्डुमसुन्प्रत्ययस्याप्रसिद्धेः पातेर्डुमसुन्नित्येव। तस्य=डुमसुन्प्रत्ययस्यप्रसिद्धेस्तत्तच्छब्दार्थानां च प्रसिद्धानामेव शास्त्रेऽनुवादाद् रूढ्यर्थबाधा विज्ञायते, व्युत्पतिपक्षस्यैव शास्त्रे समादरात्। अन्यथा शास्त्रारम्भवैयर्थ्यात्। तेन गुणानां सत्त्वादीनां प्रसवः, प्रवृत्तिराविर्भावः शास्त्रे पुमान्=पुंस्त्वरूपं लिङ्गम्। लोके तु पाति सन्ततिमिति पुमान्, सन्ततिपालनकर्ता।

यद्यपि चाविर्भावतिरोभावावपि लौकिकावेव, लोकसिद्धस्यैवार्थस्य शास्त्रेऽनुवादादस्य=एतद्रूपस्य लिङ्गस्य लौकिकत्वोपपत्तेः, तथापि प्रसिद्धतरस्तनादिसम्बन्धो लौकिकस्त्यज्यते, अचेतनेषु अव्याप्तेः। "सर्वाश्च पुनर्मूर्त्तय एवमात्मिकाः=आविर्भावतिरोभावात्मिकाः शब्दस्पर्शरूपरसगन्धवत्यः" इति संस्त्यानप्रसवरूपयोर्लिङ्गयोः सर्वत्र=चेतनेषु अचेतनेषु च व्याप्तिरुपपादिता। तथा चाचेतनेष्वपि खट्वावृक्षादिषु लिङ्गसिद्धिः। मूर्त्तिशब्देन ह्यत्र वस्तुमात्रं लक्षितम्=लक्षणया वोधितम्। आकाशादीनामपि चास्मिन् दर्शने=सांख्यदर्शने सत्त्वादिगुणत्रयमयत्वादाविर्भावतिरोभावयोरपि तेषु प्रतिपत्तिः। नित्यभूतेऽप्यात्मनि गुण-

लिङ्गयोर्व्याप्तिरुपपादिता। तथा चाचेतनेष्वपि सिद्धिः। मूर्तिशब्देन हि वस्तुमात्रं लक्षितम्। आकाशादीनामपि चास्मिन् दर्शने सत्त्वादिगुणत्रयमयत्वादाविर्भाव-योरपि प्रतिपत्तिः। चैतन्यमात्मा चिदिति नित्यभूतेऽप्यात्मनि देहाश्रयत्वेन गुणमध्यव्यवस्थितत्वात् तद्धर्माविर्भावतिरोभावोपपत्तिः।

तदेवम् 'न शक्यं वैयाकरणैर्लौकिक लिङ्गमाश्रयितुम्। अवश्यं कश्चित् स्वकृतान्त आस्थेयः' इति संस्त्यानप्रसवौ लिङ्गं स्त्रीपुंसलक्षणमुक्तम्। उभयधर्म-सामान्यरूपा तु स्थितिर्नपुंसकमर्थादुक्तं भवति ॥१२॥

तथा हि भाष्यतात्पर्यं व्याचष्टे—

**आविर्भावस्तिरोभावः स्थितिश्चेत्यनपायिनः।**
**धर्मा मूर्तिषु सर्वासु लिङ्गत्वेनानुदर्शिताः ॥१३॥**

'वर्धते, यावदनेन वर्धितव्यम्, अपायेन वा युज्यते' इति भावानां सतत-परिणामित्वाद् धर्मत्रयस्यानपायित्वम् ॥१३॥

तथा हि—

**सर्वमूर्त्यात्मभूतानां शब्दादीनां गुणे गुणे।**
**त्रयः सत्त्वादिधर्मास्ते सर्वत्र समवस्थिताः ॥१४॥**

---

त्रयात्मकदेहाश्रितत्वेन गुणमध्यव्यवस्थितत्वात् चैतन्यमातमा चिदित्यत्र गुणधर्मा-विर्भावतिरोभावसाम्यावस्थारूपलिङ्गत्रयोपपत्तिः।

तदेवम् —"न शक्यं वैयाकरणैर्लौकिकं लिङ्गमाश्रयितुम्। अवश्यं कश्चित् स्वकृतान्त आस्थेयः" इति संस्त्यानप्रसवो लिङ्गं स्त्रीपुंसरूपमुक्तम्। उपचयाप-चयात्मकोभयधर्मसाम्यावस्थारूपा स्थितिस्तु नपुंसकलिङ्गमर्थादुक्तं भवति ॥१२॥

तथा हि = तेन प्रकारेण हि पूर्वोक्तेन प्रकारेण हि भाष्यतात्पर्यं व्याचष्टे—आविर्भाव इति।

अस्यार्थः —आविर्भाव उपचयः पुंस्त्वम्, तिरोभावोऽपचयः स्त्रीत्वम्, उभयोः साम्यावस्था स्थितिश्च नपुंसकत्वमिति सर्वासु मूर्त्तिषु सर्वेषु भावेषु अनपायिनः कालक्रमेणावश्यंभाविनो धर्मा लिङ्गत्वेन भाष्यादावनुदर्शिता इति।

अयं भावः—वर्धते = उपचीयते यावदनेन = जातेन भावेन वर्धितव्यम्, अपायेन = अपचयेन वा युज्यत इति रीत्या सर्वेषां भावानां तप्तभ्राष्ट्रनिक्षिप्त-धान्यवद् गुणमयत्वाद् गुणशीलत्वेन सततं परिणामित्वादुपचयापचयसाम्यावस्था-रूपधर्मत्रयस्य सर्वेषु भावेषु चेतनेषु अचेतनेषु च अनपायित्वमिति ॥ १३ ॥

तथा हि तदेव दर्शयति—**सर्वमूर्त्यात्मभूतानामिति।**

'सर्वाश्च पुनर्मूर्त्तय एवमात्मिकाः शब्दस्पर्शरूपरसगन्धवत्यो यत्राल्पीयांसो गुणास्तत्रावरतस्त्रयः, रसगन्धौ न सर्वत्र' इति भाष्यकारेणैव सर्वभावात्मकत्वं शाब्दादोनामुक्तम्। शब्दादिगुणसमुदायात्मका हि मूर्त्ताः पदार्थाः। एकैकगुणोत्कर्षणाकाशादिषु पृथिव्यन्तेषु शब्दादयः पञ्च गुणाः समुदायभावमापद्यन्त इति शब्दादिगु ात्मिका मूर्त्तयः। व्यतिरेकेऽपि द्रव्यस्य समवायवशाद् तदात्मकत्वमिव।

तत्र शब्दः स्पर्शो रूपमिति गुणत्रयमव्यभिचारि। रसगन्धौ तु तेजस्यभावाद् व्यभिचारिणौ। ते च शब्दादयः सत्त्वरजस्तमोलक्षणगुणमया इति गुणे गुणे शब्दादौ सत्त्वादिगुणत्रयधर्मा व्यवस्थिताः। सर्वस्य सत्त्वादिसन्निवेशमात्ररूपत्वाद् वीप्सया गुणधर्माविनाभाव उक्तः।

तत्र प्रकाशः प्रसवः आविर्भावः सत्त्वधर्मः, प्रवृत्तिः क्रिया रजोधर्मः, वरणं तिरोभावः, स्थितिस्तमोधर्मः। एत एव धर्मा लिङ्गम्।

---

अस्यार्थः—सर्वमूर्त्त्यात्मभूतानाम् = सर्वभावात्मकानाम्, शब्दादीनाम् = शब्दस्पर्शरूपरसगन्धानां मध्ये, गुणे गुणे प्रत्येकं शब्दादिषु, त्रयस्ते सांख्यशास्त्रप्रसिद्धा भाष्यकृद्भिरप्यङ्गीकृताः सत्त्वादिधर्माः = सत्त्वरजस्तमोगुणात्मका धर्माः सर्वत्र सर्वेषु भावेषु समवस्थिता इति।

अयं भावः—"सर्वाश्च पुनर्मूर्त्तयः = सर्वे भावा एवमात्मिकाः = सत्त्वरजस्तमोरूपगुणत्रयात्मिकाः, आविर्भावतिरोभावस्थितिरूपतदवस्थात्रयात्मिकाश्च शब्दस्पर्शरूपरसगन्धवत्यो यत्राल्पीयांसो गुणास्तत्रावरतस्त्रयः = यत्र महाभूतेषु अल्पीयांसः शब्दादयो गुणास्तत्रावरतो न्यूना अपि त्रयो रूपरसगन्धाः, रसगन्धौ न सर्वत्र" इति भाष्यकारेणैव शब्दादिपञ्चकस्य सर्वभावात्मकत्वमुक्तम्। शब्दादिगुणसमुदायात्मका हि मूर्त्ताः पदार्थाः, एकैकगुणोत्कर्षेणाकाशादिषु पृथिव्यन्तेषु भूतेषु शब्दादयः पञ्च गुणाः समुदायभावमापद्यन्त इति शब्दादिगुणात्मिका मूर्त्तयः = भावाः। न्यायनये द्रव्यस्य शब्दादिगुणेभ्यो व्यतिरेके = भेदेऽपि समवायसम्बन्धवशात् तदात्मकत्वमिव = शब्दाद्यात्मकमिव द्रव्यस्य तदाश्रयस्य।

तत्र शब्दः स्पर्शो रूपमिति गुणत्रयं व्यस्तं यथासम्भवं मिलितं वाऽव्यभिचारि। रसगन्धौ तु तेजस्य भावाद् व्यभिचारिणौ। ते च शब्दादयः सत्त्वरजस्तमोरूपगुणविकारा इति गुणे गुणे = प्रतिगुणं शब्दादौ प्रत्येकं सत्त्वादिगुणत्रयरूपा धर्मा व्यवस्थिताः। सर्वस्य भावस्य सत्त्वादिसन्निवेशमात्ररूपत्वात् = सत्त्वादिगुणपरिणाममात्ररूपत्वाद् गुणे गुणे इति वीप्सया शब्दादौ सत्त्वादिगुणत्रयरूपधर्माविनाभाव उक्तः।

तत्र प्रकाशः प्रसवः, आविर्भावः सत्त्वगुणस्य धर्मः, प्रवृत्तिः = प्रयत्नः, क्रिया = चेष्टा, रजोधर्मः। वरणम् = आच्छादनम्, तिरोभावः, स्थितिस्तमोधर्मः। एत एव धर्मा अवस्थाभेदेन स्त्रीत्वपुंस्त्वादिरूपं लिङ्गम्।

तथा ह्याविर्भावः प्रकाशनियमरूपसत्त्वतमोधर्मानुगतः प्रवृत्तेः क्रियाया रजोधर्मलक्षणाया विशेषः पुंस्त्वम् ।

एवं तिरोभावः स्त्रीत्वम् । सामान्यरूपा तु प्रवृत्तिः तमोबहुला स्थितिर्नपुंसकमिति लिङ्गत्रयं सार्वत्रिकम् ।।१४।।

भवतु रूपादिसमुदायात्मनो वस्तुनो धर्मत्रययोगः रूपं रसः शब्द इत्यादि तु कथम् । न हि रूपादीनां केवलानां रूपाद्यन्तराभावात् कस्यचिदाविर्भावादयः सन्ति, यत्ते लिङ्गयोगः स्यादित्याशङ्क्याह—

रूपस्य चात्ममात्राणां शुक्लादीनां प्रतिक्षणम् ।
काचित् प्रलीयते काचित् कथञ्चिदभिवर्धते ।।१५।।

रूपमवस्थाविशेषासादनक्रमेण परिणमते, तस्यापि सत्त्वादिगुणात्मकत्वात् । यथोक्तम्—"शब्दादीनां गुणे गुणे । त्रयः सत्त्वादिधर्माः" इति । तथा च क्षणे क्षणे व्यतिरेकिणामात्ममात्राणामवस्थाविशेषाणां नवनवानामासादनात्

---

तथा हि—आविर्भावः प्रकाशरूपसत्त्वधर्मनियमरूप = निरोधरूपतमोधर्मानुगतः प्रवृत्तिरूपायाः क्रियाया रजोधर्मलक्षणाया विशेषः = विलक्षणरूपः पुंस्त्वम् । सत्त्वादिगुणमयस्य वस्तुनः स्वकारणे तिरोभावः स्त्रीत्वम् । सामान्यरूपा तु = साम्यरूपा तु सत्त्वादिगुणानां प्रवृत्तिः तमोबहुला स्थितिर्नपुंसकमिति लिङ्गत्रयं सार्वत्रिकम् = सर्वभावानुगतम् । अत एव सर्वत्रायं प्रयुज्यते—'अयं पदार्थः, इयं व्यक्तिः, इदं वस्तु' इति ।। १४ ।।

भवतु रूपादिसमुदायात्मनो वस्तुनो धर्मत्रययोगः = उपचयापचयस्थितिरूपधर्मत्रययोगः, रूपं रसः, शब्द इत्यादिव्यपदेशस्तु कथम्, रूपाद्यन्तराभावात् केवलानां तेषामुपरि न हि कस्यचिदाविर्भावादयः सन्ति, येन लिङ्गयोगः स्यादित्याशङ्क्याह—रूपस्य चेति ।

अस्यार्थः—रूपस्य च सामान्यस्य विशेषाणां शुक्लादीनां या आत्ममात्रा अवस्थाविशेषास्तासां मध्ये प्रतिक्षणं काचित् प्रतीयते = अपचीयते, काचित् कथञ्चिदभिवर्धते = उपचीयते, काचित् स्थितिमापद्यते इत्येवंरूपं रूपस्यात्मभूतानां शुक्लाद्यवस्थाविशेषाणामुपचयापचयस्थितिभी रूपस्य लिङ्गत्रययोग इति । एवं शब्दादावपि बोध्यमिति ।

अयं भावः—रूपं शुक्लाद्यवस्थाविशेषासादनक्रमेण परिणमते । तस्यापि सत्त्वादिगुणात्मकत्वात् । यथोक्तं प्राक्शब्दादीनां गुणे गुणे त्रयः सत्त्वादिधर्मा इति । तथा च क्षणे क्षणे व्यतिरेकिणाम् = भिन्नानाम् आत्ममात्राणाम्—स्वावस्थाविशेषाणां नवनवानामासादनात् काचिदवस्थाऽऽविर्भवति = उपचीयते । काचित् केनचित्

काचिदवस्थाविर्भवति। काचित् केनचिद् प्रकारेण बाह्यनिमित्तोपधानवशेन प्रलीयते अपचीयत इत्याविर्भावतिरोभावावनुयायिनौ।

पुरुषार्थं हि परिणामिनां गुणानां प्रतिकलमवस्थाविशेषो भावतत्त्वदृगवसेयः सौक्ष्म्यात् स्थूलदृग्भिर्नावधार्यते। यथोक्तम्—

कालानां पृथगर्थानां प्रतिभेदः क्षणे क्षणे।
विद्यते सर्वभावेषु सौक्ष्म्यात् तु न विभाव्यते॥ इति॥

प्रतिकलमन्तरा परिणामाभावे झटिति स्थूलविशेषासादनानुपपत्तेरन्त्यविशेषदर्शनादनुमीयत एव सूक्ष्मपरिणामः।

तथा हि—फलादीनां पूर्वपूर्वश्यामादिरूपापगमेऽभिनवरक्तादिरूपोत्पत्तौ परिपाण्डुरूपावसानसमयप्रभवपरिपाकाविर्भावः। एवं रसादीनामपि प्रतिकलमवस्थाविशेषः परिणामपरम्परासादनेन स्वादिष्ठादिपरिणामावसानः॥१५॥

अत्रैवार्थे भाष्यकारीयं संवादमाह—

**क्वथितोदकवच्चैषामनवस्थितवृत्तिता।**
**अजस्रं सर्वभावानां भाष्य एवोपवर्णिता॥१६॥**

---

प्रकारेण बाह्यनिमित्तोपधानवशेन=बाह्यनिमित्तसन्निधानवशेन प्रलीयते= अपचीयत इत्याविर्भावतिरोभावौ रूपादिष्वप्यनुयायिनौ।

पुरुषार्थं हि=पुरुषस्य भोगापवर्गसिद्धचर्थं हि परिणामिनां सत्त्वादिगुणानां प्रतिकलम्=प्रतिक्षणं भिद्यमानोऽवस्थाविशेषो भावतत्त्वदृग्भिर्योगिभिरवसेयः, स्थूलदृग्भिः सौक्ष्म्यान्नावधार्यते। यथोक्तम्—

कलानां पृथगर्थानां प्रतिभेदः क्षणे क्षणे।
विद्यते सर्वभावेषु सौक्ष्म्यात् तु न विभाव्यते॥ इति।

अस्यार्थः—अर्थानां पृथक्कलानां भिन्नानामवस्थानां सर्वभावेषु क्षणे क्षणे प्रतिभेदो नियतो भेदो विद्यते, विद्यमानोऽपि प्रतिक्षणमवस्थाभेदः सौक्ष्म्यात् तु न विभाव्यत इति। अन्तरा=वस्तुन उत्पत्तिविनाशयोर्मध्ये प्रतिकलम्=प्रतिक्षणं वस्तुतः परिणामाभावे झटिति स्थूलकार्यविशेषासादनानुपपत्तेरन्त्यविशेषदर्शनात्= अन्त्यस्य विशेषस्यापरिणतस्य दर्शनाच्चानुमीयत एवोत्पत्तिविनाशयोर्मध्ये वस्तुनः प्रतिक्षणं सूक्ष्मः परिणामः।

तथा हि—आम्रादिफलादीनां पूर्वपूर्वश्यामादिरूपापगमेऽभिनवरक्तादिरूपोत्पत्तौ परिपाण्डुरूपस्यावसानसमये प्रभूतस्य परिपाकस्याविर्भावः। एवमाम्ररसादीनामपि प्रतिक्षणमवस्थाविशेषः परिणामपरम्परासादनेन स्वादिष्ठादिपरिणामावसान इति॥ १५॥

अत्रैवार्थे भाष्यकारीयं संवादमाह—क्वथितोदकवदिति।

"नेह कश्चित् स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते वर्धते, यावदनेन वर्धितव्यमपायेन वा युज्यते" इति भाष्ये पच्यमानजललवसदृक्षा चञ्चलता मूर्तिमानाख्याता। तथा चाविर्भावतिरोभावयोर्व्यापकत्वात् सर्वत्र स्त्रीपुंसलिङ्ग-योगः ॥१६॥

यद्येवं स्थितेः कोऽवसरो यन्नपुंसकं स्यादित्यत आह—

प्रवृत्तेरेकरूपत्वं साम्यं वा स्थितिरुच्यते।
आविर्भावतिरोभावप्रवृत्त्या वावतिष्ठते ॥१७॥

उपचयापचयलक्षणे द्वे अवस्थे पदार्थानाम्। तत्रोपचयप्रवाहे या बुद्ध्या-ख्यप्रवृत्तिः, तस्या अभेदेनाध्यवसायात् स्थितिर्व्यवस्थाप्यते। एवमपचयप्रवाहे यापायलक्षणा प्रवृत्तिः, तस्या अभेदमध्यवसायस्थितिः कल्प्यते। प्रतिकलं प्रवाहयो-र्भेदे वा प्रवृत्तिरूपसाम्यात् स्थितिः। वृद्धिपरिणामेऽपायपरिणामे च प्रवृत्तिरूपं तुल्यमिति तदेव साम्यं स्थितिः।

---

अस्यार्थः —एषां प्रत्यक्षत उपलभ्यमानानां सर्वभावानां क्वथितोदकवच्च = कथ्यमानोदकवत्तु अजस्रम् = सततम् —अनवस्थितवृत्तिता चञ्चलता भाष्य एव = भाष्येऽप्युपवर्णिता इति।

अयं भावः —"नेह कश्चित् स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते, वर्धते यावदनेन वर्धितव्यम्, अपायेन वा युज्यते" इति भाष्ये पच्यमानजलकणसदृशी चञ्चलता सर्वभावानामाख्याता। तथा चाविर्भावतिरोभावयोरुपचयापचयरूप-योर्व्यापकत्वात् सर्वेषु भावेषु लिङ्गयोग इति ॥ १६ ॥

यद्येवम् = सर्वभावानामजस्रमनवस्थितवृत्तित्वम्, तदा स्थितेः कोऽवसरः, यन्नपुंसकं स्यादित्यत आह—प्रवृत्तेरेकरूपत्वमिति।

अस्यार्थः —उपचयप्रवृत्तेरपचयप्रवृत्तेश्च प्रवृत्तित्वेनैकरूपत्वमभेदः स्थिति-रुच्यते। वा = अथवा, प्रतिक्षणम् = प्रत्यवस्थं वा अपचयापचयप्रवाहयोर्भेदेऽपि प्रवृत्तिरूपत्वेन साम्यं स्थितिः।

यद्वा उपचयापचययोराविर्भावतिरोभावरूपयोर्निरन्तराया प्रवृत्तिस्तया हेतु-भूतया वस्तुनः स्थितिरवतिष्ठतेऽवकल्पते प्रसिध्यति। तिरोभावानन्तरमाविर्भाव-प्रवृत्तौ तिरोभावस्यानिष्ठितत्वादिति।

अयं भावः —उपचयापचयरूपे द्वेऽवस्थे पदार्थानाम्। अत्रोपचयप्रवाहे या वृद्ध्याख्यप्रवृत्तिस्तस्याः प्रतिक्षणं भेदेऽपि सादृश्यं मूलाकृत्या भेदेनाध्यवसायात् स्थितिर्व्यवस्थाप्यते। एवमपचयप्रवाहे याऽपायरूपा प्रवृत्तिस्तस्याः प्रतिक्षणं भेदेऽपि सादृश्यमूलकाभेदाध्यवसायात् सैव प्रवृत्तिस्थितिरिति कल्प्यते। अथवा प्रतिक्षण-मुपचयापचयप्रवाहयोः प्रवृत्तिरूपयोर्भेदेऽपि प्रवृत्तिरूपेण साम्यं स्थितिः। वृद्धिरूपे

यद्वा आविर्भावतिरोभावयोर्या निरन्तरा प्रवृत्तिस्तया हेतुभूतया स्थितिरवकल्प्यते। तथा हि—कस्याश्चित् कलायास्तिरोधानानन्तरमेव यदा कलान्तराविर्भावः, तदा तिरोधानस्यानिष्ठितत्वात् स्थितिरेवावसीयते।

तदेवं सततपरिणामिनां गुणानामध्यवसायवशेन स्वभावैक्यं साम्यं तिरोभावापर्यवसानं वेति प्रकारत्रयेण स्थितिरिह निरूपिता ॥१७॥

यद्वा किमध्यवसायापेक्षया, वस्तुरूपैव स्थितिरित्याह—

गुणा इत्येव बुद्धेर्वा निमित्तत्वं स्थितिर्मता।
स्थितेश्च सर्वलिङ्गानां सर्वनामत्वमुच्यते ॥१८॥

इह सत्त्वादयो गुणा वैश्वरूप्यमापद्यमानाः स्वजात्यनतिक्रमेणैव वर्तन्ते। तथा हि प्रतिकलं प्रकाशप्रवृत्तिनियमानां सत्त्वादिधर्माणामनुवृत्तिः। इत्थं च गुणाः सामान्यानुगमादन्वयिप्रत्ययस्य सर्वास्ववस्थास्वेते गुणा इत्यस्य हेतवो भवन्तः स्थितिलिङ्गतामासादयन्ति। सामान्यं हि गुणरूपं स्थितिः। तत्र च सामान्ये

---

सत्त्वादिगुणानां परिणामेऽपायरूपे वा तेषां परिणामे प्रवृत्तिरूपं तुल्यमिति तदेव साम्यं स्थितिरिति यावत्।

अथवाऽऽविर्भावतिरोभावयोर्या निरन्तरा=प्रवृत्त्यन्तरा व्यवहिता प्रवृत्तिः हेतुभूतया वस्तुनः स्थितिरवकल्पते=प्रसिध्यति। तथा हि कस्याश्चित् कलायाः=अवस्थायाः तिरोधानान्तरमेव, यदा कलान्तराविर्भावः, तदा तिरोधानस्यानिष्ठितत्वात्=अप्रतिष्ठितत्वात् वस्तुनः स्थितिरेवावसीयते।

तदेवं सततं परिणामिनां गुणानां प्रतिक्षणं स्वभावभेदेऽपि सादृश्यमूलकस्वरूपाभेदाध्यवसायवशेन स्वभावैक्यम्=स्वभावसाम्यम्, तिरोभावानन्तरमेव कलान्तरोदयेन तिरोभावापर्यवसानं वा इति प्रकारत्रयेण नपुंसकावरूपा स्थितिरिह कारिकायां निरूपिता इति ॥ १७ ॥

यद्वा किमध्यवसायापेक्षया=किं प्रतिकलं भिद्यमानायाः प्रवृत्तेरेकरूपत्वाध्यारोपापेक्षया वस्तुभूतैव स्थितिरित्याह—गुणा इत्येवेति।

अस्यार्थः—वा=अथवा गुणा इति बुद्धेरेव भावेषु सत्त्वादिगुणसामान्यावगाहिन्या नपुंसकलिङ्गप्रयुक्तकार्यनिमित्तत्वम्, अतो गुणसामान्यं तद्विषया बुद्धिर्वा स्थितिर्मता इष्टा। एवम्भूतायाः स्थितेश्च सर्वलिङ्गानां सर्वनामत्वम्=सर्वनामत्वमिवोच्यते। यथा हि तदादेः सर्वनाम्नः सर्वार्थवाचकत्वं तथा स्थितिरूपनपुंसकलिङ्गाभिधायिनः शब्दस्य सर्वलिङ्गवाचकत्वं भाष्ये उच्यत इति।

अयं भावः—इह सत्त्वादयो गुणा वैश्वरूप्यमापद्यमानाः=सर्वभावात्मकत्वमापद्यमानाः स्वजात्यनतिक्रमेणैव=स्वभावानुसारेणैव वर्तन्ते। तथा हि—प्रतिकूलम्=प्रतिक्षणं प्रकाशप्रवृतिनियमानां सत्त्वादिगुणधर्माणां सत्त्वादिगुण-

सर्वविशेषान्तर्भावादाविर्भावतिरोभावयोरपि तदनुगमात् स्त्रीत्वादिलिङ्गभेदस्य नपुंसकलिङ्गं स्थितिशब्दवाच्यं सर्वनामेव सर्वनाम व्यवह्रियते।

यथा हि तदादिसर्वनामवस्तुमात्रप्रत्यवमर्शजनकमविहतप्रवृत्तिः सर्वत्र, तथा नपुंसकमपि विशेषाविवक्षायामभेदेन सर्वलिङ्गपरामर्शकं किं जातमित्यादावव्यक्ते गुणसन्देहे प्रयोगार्हमिति ॥१८॥

तदेवं गुणावस्था लिङ्गमिति निर्णीते 'सर्वत्र तस्यासम्भवात् कुतो व्यवस्था' इति भाष्ये चोदयित्वा 'विवक्षातो व्यवस्था' इत्युक्तम्।

तद् व्याख्यातुमाह—

स्थितेषु सर्वलिङ्गेषु विवक्षानियमाश्रयः।
कस्यचिच्छब्दसंस्कारे व्यापारः क्वचिदिष्यते ॥१९॥

---

त्रयोपादानकेषु भावेषु अनुवृत्तिः। इत्थश्च सत्त्वादिगुणसामान्यरूपानुगमात् सर्वास्ववस्थासु अन्वयिन एते गुणा इत्यस्य प्रत्ययस्य सत्त्वादयो गुणा हेतवो भवन्तः स्थितिलिङ्गतामासादयन्ति = नपुंसकलिङ्गरूपतां भजन्ते। सामान्यं हि सत्त्वादिगुणानां स्वरूपं स्थितिः। तत्र च सामान्ये सर्वविशेषान्तर्भावादाविर्भावतिरोभावयोरपि तदनुगमात् = गुणसामान्यरूपानुगमात् स्त्रीत्वादिरूपस्य लिङ्गविशेषस्य स्थितिशब्दवाच्यं नपुंसकलिङ्गं सर्वनामेव सर्वलिङ्गवाचकत्वेन सर्वनाम व्यवह्रियते।

यथा हि—तदादिशब्दरूपं सर्वनाम वस्तुमात्रस्य स्वशब्देन पूर्वमभिहितस्य प्रत्यवमर्श-(परामर्श)जनकं सर्वेषु भावेषु वाचकतयाऽप्रतिहतप्रवृत्तिः, तथा नपुंसकलिङ्गमपि शब्दस्वरूपं स्त्रीत्वादिरूपलिङ्गविशेषाविवक्षायामभेदेन सर्वलिङ्गपरामर्शकमव्यक्ते वस्तुनि गुणसन्देहे = गुणावस्थासन्देहे तत्तदवस्थापन्नगुणसन्देहे वा प्रयोगार्हमिति ॥ १८ ॥

तदेवम् 'गुणावस्था लिङ्गम्' इति निर्णीते सर्वेषु भावेषु तस्याः = गुणावस्थायाः सम्भवात् कुतः प्रतिनियतपुंस्त्वादिलिङ्गाभिधायिशब्दप्रयोगनियमव्यवस्थेति भाष्ये चोदयित्वा = आशङ्क्य 'विवक्षातो व्यवस्थाऽस्य' इति समाधानमुक्तम्। अत्र 'अस्य' इत्यस्य लिङ्गस्येत्यर्थः।

इदं समाधानभाष्यं व्याख्यातुमाह—स्थितेषु सर्वलिङ्गेष्विति।

अस्यार्थः—सर्वेषु भावेषु सर्वलिङ्गेषु स्थितेष्वपि क्वचित् शब्दसंस्कारे कस्यचित् शब्दस्य संस्कारार्थम्, विवक्षानियमाश्रयः—तत्तल्लिङ्गाभिधानयोग्यशब्दप्रयोगनिबन्धनीभूतविवक्षानियमनिमित्तकः, कस्यचिदेव लिङ्गविशेषस्य 'स्त्रियां पुंसि नपुंसके' इत्येवमुपादानगोचरीभूतो व्यापार इष्यते। न तु सर्वेषु भावेषु सत्त्वादिगुणत्रयमयेषु सर्वलिङ्गस्थितावपि नियतलिङ्गाभिधायि दारादिशब्दप्रयोगः

सत्त्वादिगुणत्रयमयेषु सर्वभावेष्वाविर्भावादिरूपसम्भवेऽपि योग्यशब्द-निबन्धनविवक्षानियमाश्रयेण कस्यचिदेव लिङ्गभेदस्य कस्मिंश्चिच्छब्दे संस्कारार्थं व्यापारः स्त्रियां पुंसि नपुंसके चेत्येवमुपात्तः। शब्दशक्तिनियमाद्धि नियतलिङ्गो-पाधेरर्थस्याभिधानम्। प्रयुक्तानां चेदमन्वाख्यानमिति व्यवस्था सिद्धा ॥१९॥

दृष्टान्तेनैतदेव साधयति —

**सन्निधाने निमित्तानां किञ्चिदेव प्रवर्तकम्।**
**यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा ॥२०॥**

वस्तुन्यनेकनिमित्तसन्निधानेऽपि शब्दानां स्वशक्तिवैचित्र्यात् किञ्चिदेव तत्र प्रवर्तकम्। तद्यथा तक्षणच्छेदनाद्यनेकक्रियासन्निधावपि तक्षणमाश्रित्य तक्षायमित्यभिधानमर्थस्य। शरावादिकरणेऽपि च कुम्भकरणनिमित्तः कुम्भकार-शब्दः। एवं स्त्रीत्वादिविशिष्टेष्वप्यर्थेषु शब्दानां लिङ्गनियमेन प्रवृत्तिरभिधान-वैचित्र्यात्।

---

सर्वलिङ्गाभिधानाय भवति। नियतलिङ्गेषु दारादिशब्देषु तदितरलिङ्गविवक्षाया अयोग्यत्वेनाभावादिति।

अयं भावः —सत्त्वादिगुणत्रयविकारेषु सर्वभावेषु आविर्भावादिरूपलिङ्ग-त्रयसम्भवेऽपि तत्तल्लिङ्गाभिधानयोग्यशब्दप्रयोगनिबन्धनविवक्षानियमाश्रयेण कस्य-चिदेव लिङ्गविशेषस्य व्यापारः कस्मिंश्चिच्छब्दे संस्कारार्थं स्त्रियाम्—पुंसि, नपुंसके चेत्येवमुपात्तः शास्त्रे। शब्दशक्तिनियमाद्धि नियतलिङ्गोपाधेः = नियत-लिङ्गधर्मकस्यार्थस्याभिधानम्। प्रयुक्तानाञ्चेदमन्वाख्यानं शास्त्रेणेति यल्लिङ्गकाः शब्दा यस्मिन्नर्थे लोकव्यवहारे प्रयुक्तास्तल्लिङ्गका एव तदर्थं एव शास्त्रेणान्वा-ख्यायन्त इति व्यवस्था सिद्धेति ॥ १९ ॥

दृष्टान्ते नैतदेव साधयति—**सन्निधाने निमित्तानामिति।**

अस्यार्थः —यथा तक्षणच्छेदनाद्यनेकविधक्रियारूपनिमित्तसन्निधानेऽपि किञ्चिदेव निमित्तं तक्षणकुम्भकरणादिरूपं तक्षकुम्भकारादिशब्दानां लोकव्यवहारे प्रवर्तकम्, तथा सर्वत्र लिङ्गत्रयसत्त्वेऽपि केषुचिदेव लिङ्गेषु प्रयोगनियम इति।

अयं भावः —वस्तुनि अनेकशब्दप्रवर्तकनिमित्तसन्निधानेऽपि तत्र किञ्चिदेव निमित्तं शब्दानां स्वशक्तिवैचित्र्यात् प्रवर्तकम्। तद् यथा तक्षणच्छेदनभेदनाद्यनेक-क्रियारूपनिमित्तसन्निधानेऽपि तक्षणमाश्रित्य तक्षायमिति शब्देनाभिधानमर्थस्य। शरावादिकरणरूपे निमित्ते सत्यपि च कुम्भकरणनिमित्तकः कुम्भकारशब्दः प्रयुज्यते। तदाहुः—'अन्यद् हि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम्' इति। एवं स्त्रीत्वादिसर्वलिङ्गविशिष्टेष्वप्यर्थेषु लिङ्गनियमेन = केनचिल्लिङ्गेन शब्दानां प्रवृत्तिरभिधानवैचित्र्यात्।

तथा हि—'तस्योक्तौ लोकतो नाम'इति लोकप्रसिद्धिर्नियतलिङ्गाभिद्योतनोपायः शब्दानामुक्तः ॥२०॥

स च न यः कश्चिल्लोकोऽत्र ग्राह्य इत्याह—

भावतत्त्वदृशः शिष्टाः शब्दार्थेषु व्यवस्थिताः ।
यद्यद् धर्मेऽङ्गतामेति लिङ्गं तत्तत् प्रचक्षते ॥२१॥

इह लोकशब्देन शिष्टा विवक्षिताः । तेषां च वस्तुपरमार्थसाक्षात्कारिता लक्षणम् । ते हि निरावरणख्यातयोऽभिधेयेषु समवेतं स्त्रीत्वादिलिङ्गमभ्युदये यद् यद् यस्य शब्दस्य साधनतामेति, तत् तदेव तस्याचक्षते । अतश्च यल्लिङ्गस्य शब्दस्य धर्मसाधनत्वं शिष्टैरुपलब्धं तस्य तथाभूतस्यैव प्रसिद्धस्य सतः साधुत्वमभ्युपगन्तव्यम् । तथा च प्रायोक्त्री विवक्षात्र न लौकिकी स्वेच्छारूपेत्युक्तं भवति ।

अत एव शिष्टसमाचारादेव सिद्धौ शब्दानां लिङ्गविशेषाभिद्योतनशक्तिप्रतिपादकं 'स नपुंसकम्' (पा० २।४।१७) इत्येवमादि शास्त्रं प्रत्याख्यातं 'लिङ्गम-

---

तथाहि —''तस्योक्तो लोकतो नाम'' इति लोकप्रसिद्धिः शब्दानां नियतलिङ्गाभिद्योतनोपाय उक्तो भाष्ये तस्य = लिङ्गस्य, उक्तौ = प्रयोगे, लोकतो नाम लोक एव नियमोऽवगन्तव्य इति प्रकृतभाष्यवाक्यार्थः । तथा च 'स नपुंसकम्, अर्धं नपुंसकम्' इत्यादिलिङ्गानुशासनं नारब्धव्यमिति ॥ २० ॥

स च यः कश्चिल्लोकोऽत्र न ग्राह्य इत्याह —भावतत्त्वदृशः शिष्टा इति ।

अयमर्थः —शब्दार्थेषु व्यवस्थिताः शब्दार्थस्वरूपविषयकनिश्चयवन्तः, भावतत्त्वदृशः —सर्ववस्तुपरमार्थरूपसाक्षात्कारवन्तः, शिष्टाः, यस्य यस्य शब्दस्य यद् यद् लिङ्गं धर्मेऽङ्गतामेति धर्मसाधनतामेति, तस्य तस्य शब्दस्य तत्तल्लिङ्गं प्रचक्षते तत्तच्छब्दार्थेषु सर्वलिङ्गसत्त्वेऽपि इति ।

अयं भावः —इह प्रागुक्ते लोकतो नामेति भाष्ये लोकशब्देन शिष्टा विवक्षिताः । शिष्टानाञ्च = वस्तुपरमार्थरूपसाक्षात्कारिता लक्षणम् । ते हि निरावरणख्यातयः = अज्ञानानावृतज्ञानाः, भ्रमविप्रलिप्साकरणापाटवरहिताः, अभिधेयेषु समवेतं यस्य यस्य शब्दस्य यद् यद् लिङ्गं स्त्रीत्वादिप्रयोक्तुरभ्युदये साधनतामेति तत्तदेव तस्य तस्य शब्दस्य लिङ्गमाचक्षते ।

अतश्च यल्लिङ्गस्य शब्दस्य धर्मसाधनत्वं शिष्टैरुपलब्धम् = साक्षात्कृतम्, तस्य शब्दस्य तथाभूतस्यैव = तल्लिङ्गस्यैव प्रसिद्धस्य सतः साधुत्वमभ्युपगन्तव्यम् । तथा च प्रयोक्त्री = प्रयोक्तृशिष्टपुरुषसम्बन्धिनी विवक्षाऽत्र = लिङ्गविषये न लौकिकी स्वेच्छारूपा इत्युक्तं भवति ।

अत एव शिष्टसमाचारादेव = शिष्टप्रयोगादेव शब्दानां तत्तल्लिङ्गसिद्धौ

शिष्यं लोकाश्रयत्वाल्लिङ्गस्ये'ति शिष्टप्रसिद्धेश्चावगतप्रमाणभावायाः शब्देषु लिङ्गव्यवस्था न सङ्कीर्यते, यथायथं विषयभेदेन व्यवस्थानात् ॥२१॥

एतदेव निदर्शनोपक्रमं साधयति—

**स्वरभेदात् यथा शब्दाः साधवो विषयान्तरे ।**
**लिङ्गभेदात् तथा सिद्धात् साधुत्वमनुगम्यते ॥२२॥**

सूक्ष्मरूपस्योदात्तादेः स्वरस्य यथाजातिरूपाभेदेऽपि शब्दा भेदविषयविशेषाश्रयणेन प्रतिनियतसाधिमावलम्बिनः ।

तथा हि—'अक्षस्यादेवनस्य' (फि० सू० पा० २, सू० ३५) इति देवनाक्षव्यतिरेकिणोऽक्षशब्दस्याद्युदात्तत्वं देवनाक्षस्यान्तोदात्तत्वमित्याद्युदात्तः शकटाक्षादावेव साधुर्न देवनाक्षे, अन्तोदात्तश्च तत्रैव न शकटाक्षादाविति विषयान्तरगमितया प्रतिनियतं साधुत्वं शब्दशक्तिनियमाच्छिष्टपरिदृष्टाद्, एवं शिष्टप्रयोगादेव

---

तेषां लिङ्गविशेषाभिद्योतनशक्तिप्रतिपादकम् 'स नपुंसकम्' (पा० २।४।१६) इत्येवमादिशास्त्रं प्रत्याख्यातं वार्तिकभाष्यकृद्भ्यां लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति । अवगतप्रमाणभावायाः—प्रमाणत्वेनावगतायाः शिष्टप्रसिद्धेर्बलाच्च शास्त्रेषु शब्दसाधुत्वान्वाख्याने निमित्तभूता लिङ्गव्यवस्था न सङ्कीर्यते । यथायथं विषयभेदेन लिङ्गव्यवस्थानात् । तद् यथा निधौ शङ्खः इति पुंसि । तोयजे तु पुंनपुंसकयोः—शङ्खः, शङ्खम्, इति ॥ २१ ॥

एतदेव = शब्देषु लिङ्गव्यवस्थायाः शिष्टप्रसिद्धिमूलकत्वमेव निदर्शनोपक्रमम् = निदर्शनमुपक्रम्य—उपक्रमे निदर्शनमुक्त्वा साधयति—**स्वरभेदाद् यथेति** ।

अस्यार्थः—यथाऽक्षादिशब्दा आद्युदात्तत्वान्तोदात्तत्वरूपस्वरभेदाद् विषयान्तरेऽदेवने देवने च साधवः, तथा शिष्टप्रयोगसिद्धात् लिङ्गभेदात् सिद्धं शब्दानां साधुत्वमनुगम्यते शास्त्रेणानुस्रियते—'स नपुंसकम् (२।४।२७) 'अर्धं नपुंसकम्' (२।२।२) इत्यादिना इति ।

अयं भावः—यथा सूक्ष्मरूपस्योदात्तादेः स्वरस्य विशेषात् उदात्तानुदात्तस्वरितरूपाणां त्रयाणां स्वराणां स्वरत्वजातिरूपाभेदेऽपि स्वरभेदविषयकविशेषाश्रयणेन तत्तदर्थप्रतिनियतसाधुत्वावलम्बिनः । तथा हि—'अक्षस्यादेवनस्य' इति फिट् सूत्रेण देवनाक्षव्यतिरेकिणोऽक्षस्याद्युदात्तत्वम्, देवनाक्षस्य त्वन्त्वोदात्तत्वमित्याद्युदात्तः शकटाक्षादावेव साधुर्न देवनाक्षे, अन्तोदात्तश्च देवनाक्ष एव, न शकटाक्षादाविति शिष्टपरिदृष्टात् शब्दशक्तिनियद् विषयान्तरगामितया तत्तदर्थप्रतिनियतं शब्दानां साधुत्वम्, एवं शिष्टप्रयोगादेव निश्चितात् लिङ्गनानात्वात्

सिद्धान्निश्चितात्लिङ्गनानात्वात् साधुत्वमनपभ्रंशत्वं विषयविभागेन शब्दानामवस्थितमनुगम्यते व्यवहारे।

तथा हि समप्रविभागेऽर्धशब्दो नपुंसकलिङ्गः, पिप्पल्या अर्धमर्धपिप्पलीति। एकदेशमात्रे तु पुँल्लिङ्गः। सारशब्दो न्यायादनपेते नपुंसकलिङ्गः, नैतत् सारमिति। उत्कर्षे पुँल्लिङ्गः, चन्दनसारः खदिरसारः।

"पद्मशङ्खौ निधौ पुंसि स्थितौ पुंसि च तोयजे"।

इत्याद्युदाहार्यम् ॥२२॥

यद्येवं स्वरसंस्कारनियमो यथा शिष्टप्रसिद्धः शास्त्रेऽनुगम्यते, तथा लिङ्गनियमोऽपि कस्मान्नानुविधीयते, येन प्रत्याख्यायत इत्यत आह—

**प्रयोगो विप्रयोगश्च लोके यत्रोपलभ्यते।**
**शास्त्रमारभ्यते तत्र न प्रयोगविपर्यये ॥२३॥**

अक्षीणि मे दर्शनीयानि, पादा मे सुकुमारतरा इति विपरीतस्यापि प्रयोगस्य

---

साधुत्वं शब्दानां विषयविभागेन = अर्थलिङ्गभेदेन व्यवहारेऽवस्थितं शास्त्रेऽनुगम्यते।

तथा हि—समप्रविभागेऽर्धशब्दो नपुंसकलिङ्गः, पिप्पल्या अर्धमर्धपिप्पली इत्येकदेशभावे तु पुँल्लिङ्गः, 'ग्रामस्यार्धः' इति। सारशब्दो न्यायादनपेते = न्याय्ये नपुंसकलिङ्गः, तद्यथा नैतत् सारमिति। उत्कर्षे = उत्कृष्टे भागे पुँल्लिङ्गः, 'चन्दनसारः, खदिरसारः' इति।

"पद्मशङ्खौ निधौ पुंसि स्थितौ पुंसि च तोयजे" ॥ इति।

अत्र 'स्थितौ' इत्यस्य नपुंसके इत्यर्थः। निधौ 'पद्मः, शङ्खः' इति पुंसि। जलजे तु 'पद्मः, पद्मम्' 'शङ्खः, शङ्खम्' इति पुंसि नपुंसके चेत्यादि उदाहार्यमिति ॥ २२ ॥

यद्येवं यथा शिष्टप्रसिद्धः स्वरसंस्कारनियमः शास्त्रेऽनुगम्यते, तथा लिङ्गनियमोऽपि शिष्टप्रसिद्धः शास्त्रेण कस्मान्नानुविधीयते, येन शिष्टलोकप्रसिद्धत्वेन लिङ्गानुशासनं शास्त्रं प्रत्याख्यायत इत्याशङ्क्याह —प्रयोगो विप्रयोगश्चेति।

अस्यार्थः —यत्र = यद्विषयकः, प्रयोगो विप्रयोगश्च विपरीतप्रयोगश्च, लोके = लोकव्यवहारे उपलभ्यते। तद्यथा—"अक्षिणी मे दर्शनीये, अक्षीणि मे दर्शनीयानि, पादौ मे सुकुमारतरौ, पादा मे सुकुमारतराः" इति। तत्र शास्त्रमारभ्यते विपरीतप्रयोगनिवृत्त्यर्थम्। प्रयोगविपर्यये = विपरीतप्रयोगाभावे तु न शास्त्रमारभ्यते। अत एव लिङ्गानुशासनम्, "ते प्राग्धातोः, उपसर्जनं पूर्वम्" इत्यादिकं प्रत्याख्यातं भाष्यवार्तिककृद्भ्यामिति।

वस्तुतस्तु लक्ष्यैकचक्षुष्कदृष्ट्या एतेषामनारम्भणीयत्वम्, लक्षणैकचक्षुष्कदृष्ट्या तु एतेषामारम्भणीयत्वमेवेति ध्येयमिति।

लोके दर्शनाद् 'बहुषु बहुवचनम्' (पा० १।४।२१) इत्यादिशास्त्रमारभ्यते विप्रयोगनिवृत्त्यर्थम्।

यत्र तु विपरीतः प्रयोगो न दृश्यते, किं तत्र शास्त्रेण, नियमार्थत्वाच्छास्त्रस्यानियमे नियमप्रवृत्तेर्व्यवच्छेद्याभावे तदप्रवर्तनात्। तथा च 'ते प्राग्धातोः' (१।४।८०), 'उपसर्जनं पूर्वम्' (२।२।३०) इत्येतद् 'न वाऽनिष्टादर्शनादि'ति प्रत्याख्यातम्। एवं 'लिङ्गमशिष्यमि'त्यपि ॥२३॥

तदेवं शब्दशक्त्यनुसारेण शिष्टप्रयोगान्नियतलिङ्गाः सिद्धा इति शब्दधर्मस्तात्पर्यदृशा लिङ्गमवतिष्ठते, वस्तुधर्मस्य नियतस्य शब्दैरावेदनात्।

तथा च वार्तिकम्—"एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वमवयवान्यत्वाच्च" इति। तदेतद् गुणावस्था लिङ्गमित्यस्मिन् मते कथमुपपद्यत इति व्याचष्टे—

---

अयं भावः —'अक्षीणि मे दर्शनीयानि, पादा मे सुकुमारतराः' इति द्वित्वे बहुवचनप्रयोगो द्वित्वे न्याय्याद् द्विवचनप्रयोगाद् विपरीतो लोके दृश्यते, तस्य विपरीतप्रयोगस्य निवृत्त्यर्थं "बहुषु बहुवचनम्" इत्यादिशास्त्रमारभ्यते, यत्र तु विपरीतः प्रयोगो न दृश्यते किं तत्र शास्त्रेण, अनियमे नियमप्रवृत्तेर्नियमार्थत्वाच्छास्त्रस्य, व्यवच्छेद्याभावे तदप्रवर्तनात्=नियमशास्त्राप्रवर्तनात्। यथा च "ते प्राग्धातोः" (पा० १।४।८०), "उपसर्जनं पूर्वम्" (पा० २।२।३०) इत्येतत् प्रत्याख्यातम्, "न वाऽनिष्टादर्शनात्" इति।

अस्यार्थः —वा=अथवा, 'ते प्राग्धातोः' इत्यादिकं वक्तव्यम्, अनिष्टस्य=विपरीतस्य प्रयोगस्यादर्शनादिति। एवम्—'लिङ्गमशिष्यं लोकाश्रयत्वाद् लिङ्गस्य' इति लिङ्गानुशासनमपि प्रत्याख्यातमिति ॥ २३ ॥

तदेवं शिष्टप्रयोगात् शब्दशक्त्यनुसारेण नियतलिङ्गाः शब्दाः सिद्धा इति तात्पर्यदृष्ट्या लिङ्गं शब्दधर्मोऽवतिष्ठते, वस्तुतो वस्तुधर्मस्य लिङ्गस्य नियतस्य तत्तच्छब्दैरावेदनात्, तथा च वार्त्तिकम् —"एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वमवयवान्यत्वाच्च" इति।

अस्यार्थः —एकस्मिन्नर्थे शब्दान्यत्वाद् लिङ्गान्यत्वं दृष्टम्, "अयं पदार्थः, इयं व्यक्तिः, इदं वस्तु" इति। किञ्च प्रतिक्षणं परिणामिनो हि सर्वे भावा ऋते चितिशक्तेरिति सिद्धान्ताश्रयेण कालभेदेनावयवभेदमाश्रित्यापि लिङ्गभेदो दृष्टः, किञ्चावयवोपचयापचयस्थितिभिरपि अवयवान्यत्वमादाय तटस्तटी तटमिति लिङ्गभेदो दृष्ट इति। इदन्तु व्याख्यानं न युक्तम्, किन्तु शब्दस्यैवावयवान्यत्वमात्रं विवक्षितम्। यथा —हिमहिमानीशब्दयोरिति। तदेतत्=वस्तुधर्मस्य लिङ्गस्य

उपाधिभेदादर्थेषु गुणधर्मस्य कस्यचित् ।
निमित्तभावः साधुत्वे विवक्षा च व्यवस्थिता ॥२४॥

गुणानां सत्त्वादिमयानां शब्दादीनां धर्मो लिङ्गं सत्तादयो हि प्रधानशब्दवाच्याः सूक्ष्मतमा गुणा व्यवहारं न साक्षादवतरन्तीति तत्परिणामरूपाणां रूपादीनामाविर्भावाद्यवस्थारूपं लिङ्गमाख्यातं भाष्ये। तस्य लिङ्गस्य वस्तुष्ववस्थितस्यावच्छेदकत्वेन कस्यचिदेवान्वाख्यानहेतुत्वं व्यवस्थितम्। प्रतिनियतस्य शब्दस्य तत्र नियता विवक्षा।

तथा हि यत्र शब्दान्यत्वं तत्र लिङ्गनियमः। तद्यथा पुष्यस्तारका नक्षत्रमिति। असति तु शब्दान्यत्वे तस्यैवावयवान्यत्वादर्थेषु लिङ्गभेदाः शब्दैः प्रकाश्यन्ते। तदयमुपाधेरवच्छेदकस्य वस्तुगतस्य वक्ष्यमाणस्य महत्त्वादेर्भेदादन्यथात्वात् त्रिष्वपि लिङ्गेषु वस्तुगतेषु गुणावस्थारूपेषु कस्यचित् प्रतिनियतस्य समाश्रयणमिति वाक्यकारेणाप्युक्तम् ॥२४॥

---

नियतस्य शब्दैरावेदनम् 'गुणावस्थालिङ्गम्' इत्यस्मिन्मते कथमुपपद्यते। लिङ्गत्रयस्यैकस्मिन्नर्थे सदा सत्त्वादित्याशङ्क्य समाधानं व्याचष्टे —उपाधिभेदादिति।

अस्यार्थः —अर्थेषु = नक्षत्रादिपदार्थेषु, उपाधिभेदात् = पुष्यत्व-तारकात्व-नक्षत्रत्वादिरूपोपाधिभेदात् 'अरण्यानी, हिमानी' इत्यादौ महत्त्वादिरूपोपाधिभेदाच्च गुणधर्मस्य = सत्त्वादिगुणविकाररूपादिसमुदायात्मकनक्षत्रादिपदार्थगतस्य कस्यचिदेव लिङ्गस्य शब्दसाधुत्वे निमित्तभावो विवक्षा च शब्दशक्त्यनुसारेण व्यवस्थिता। तद्यथा —पुष्यः, तारका, नक्षत्रम् इति।

अयं भावः —सत्त्वादिगुणविकाराणां शब्दादीनां धर्मो लिङ्गम्। सत्त्वादयो हि गुणाः साम्यावस्थापन्नाः प्रकृतिप्रधानादिशब्दवाच्याः सर्वविकारादित्वात् सूक्ष्मतमा लोकव्यवहारं न साक्षादवतरन्तीति तत्परिणामरूपाणां रूपादीनामाविर्भावतिरोभावाद्यवस्थारूपं लिङ्गमाख्यातं भाष्ये। तस्य लिङ्गत्रयस्य वस्तुतो वस्तुष्ववस्थितस्य मध्ये कस्यचिदेव लिङ्गस्य वाच्यवस्त्ववच्छेदकत्वेन शब्दसाधुत्वान्वाख्यानहेतुत्वं व्यवस्थितम्। तत्तदर्थे प्रतिनियतस्य दारादिशब्दस्य तत्र = लिङ्गे नियता विवक्षा।

तथा हि —यत्र शब्दान्यत्वं तत्र लिङ्गनियमः। तद्यथा—पुष्यस्तारका नक्षत्रमिति। असति तु शब्दान्यत्वे तटस्तटी तटमित्यादौ तस्यैवावयवान्यत्वात् = तस्यैव शब्दस्य हिमहिमान्यादेरवयवान्यत्वात् तटाद्यर्थेषु लिङ्गभेदास्त्रयोऽपि तटादिशब्दैः प्रकाश्यन्ते। तदयमुपाधिर्वस्त्ववच्छेदकस्य हिमारण्यादिवस्तुगतस्य वक्ष्यमाणस्य महत्त्वादेर्भेदादन्यत्वात् त्रिष्वपि लिङ्गेषु वस्तुगतेषु गुणावस्थारूपेषु मध्ये कस्यचिदेव प्रतिनियतस्य लिङ्गस्य समाश्रयणमिति वाक्यकारेणापि =

अत्रैव निदर्शनमाह—

हिमारण्ये महत्त्वेन युक्ते स्त्रीत्वमवस्थितम् ।
ह्रस्वोपाधिविशिष्टायाः कुट्याः प्रसवयोगिता ॥२५॥

महत्त्वलक्षणेनोपाधिना सम्बद्धयोर्हिमारण्ययोः स्त्रीत्वं संस्त्यानं समवेतम् । महद्धिमं हिमानी, महदरण्यमरण्यानीति । तथा ह्रस्वत्वलक्षणेनोपाधिनावच्छिन्नायाः कुट्याः प्रसवेन पुंस्त्वेन सम्बन्धः । कुटो चोपलक्षणमेकयोगनिर्दिष्टयोः शमी-शुण्डयोरपि ।

ह्रस्वा कुटी कुटीरः, शमो शमीरः, शुण्डा शुण्डारः । स्वार्थिकश्चायं प्रत्यय इति सर्व एव शब्दोऽवयवान्यत्वाद् भिन्नलिङ्गः । एवं दुष्टो यवो यवानी-त्यादिरुदाहार्यः ॥२५॥

ननु चोपाधिभेदमात्रात् कथं स एव शब्दो लिङ्गान्तरयोगी स्यादित्या-शङ्क्याह —

---

वार्तिककृताऽप्युक्तमिति ॥ २४ ॥

अत्रैव = एतत्कारिकोक्तार्थ एव निदर्शनम् = उदाहरणमाह — हिमारण्ये इति ।

अस्यार्थः —हिमारण्ये = हिमे अरण्ये च, महत्त्वेन युक्ते संस्त्यानरूपम् = संहतत्वरूपं स्त्रीत्वमवस्थितम् । ह्रस्वोपाधिविशिष्टायाः = ह्रस्वत्वरूपावच्छेदक-धर्मविशिष्टायाः कुट्याः प्रसवयोगिता प्रसवेन पुंस्त्वेन योग इति । अत्र च हिम-हिमान्यादौ कुटीकुटीरादौ च शब्दावयवान्यत्वप्रयुक्तो लिङ्गभेदो द्रष्टव्य इति फलितमिति ।

अयं भावः — महत्त्वलक्षणेनोपाधिना = हिमारण्याद्यवच्छेदकधर्मेण सम्बद्धयो-र्हिमारण्ययोः स्त्रीत्वं संस्त्यानं समवेतम् । महद् हिमं हिमानी, महदरण्यमरण्यानी इति । अत्र हिमारण्ययोर्लिङ्गत्रयसत्त्वेऽपि संस्त्यानमेव तदर्थगतं हिमानी-अरण्यानी-शब्दाभ्यां प्रकाश्यते, शब्दैक्येऽपि अवयवान्यत्वात् । तथा ह्रस्वत्वरूपेणा-वच्छेदकधर्मेणावच्छिन्नायाः कुट्या प्रसवेन पुंस्त्वेन सम्बन्ध एव कुटीरशब्देन प्रकाश्यते लिङ्गत्रयसम्बन्धसत्त्वेऽपि । कुटी चोपलक्षणम् एकरूपसूत्रनिर्दिष्टयोः शमीशुण्डयोरपि ।

तथा च सूत्रम् — "कुटीशमीशुण्डाभ्यो रः" इति । ह्रस्वा कुटी कुटीरः, ह्रस्वा शमी शमीरः, ह्रस्वा शुण्डा शुण्डार इति । स्वार्थिकश्चायं रप्रत्यय इति सर्व एव शब्दः कुटीरादिरवयवान्यत्वाद् भिन्नलिङ्गः । एवं दुष्टो यवो यवानी इत्यादिशब्दोऽवयवान्यत्वप्रयुक्ते लिङ्गान्यत्वे उदाहार्य इति ॥ २५ ॥

शब्दान्तराणां भिन्नेऽर्थे उपायाः प्रतिपत्तये।
एकतामिव निश्चित्य लघ्वर्थमुपदर्शिताः ॥२६॥

इह लघुनोपायेन शब्दानामनुशासनम्। तत्र च यावदयं सामान्येन शक्नोत्युपदेष्टुं तत् तावदुपदिशतीत्युक्तत्वाद् हिमादिशब्दसामान्यमाश्रित्यार्थान्तरविषयशब्दान्तरानुशासनं क्रियते, हिमानी कुटीर इत्यादि। एवं हि लाघवं सम्पद्यते। अन्यथा प्रतिविशेषं विशिष्टेऽनुशासने महद् गौरवं स्यात्।

एवमपि चानुशासनेनाभेदोऽर्थभेदादन्यत्वमेव शब्दानां भाविकमिति प्रतिनियतलिङ्गा विलक्षणा एव शब्दा यथास्वमर्थविशेषनियता न त्ववयवोपचयः। लघ्वर्थमिति। लाघवार्थमित्यर्थः। वृत्तिविषये भावप्रधानो लघुशब्दः, गुरुलाघवमिति यथा। तदित्थमनेनैकार्थे शब्दान्यत्वादित्यादिना 'लिङ्गमशिष्यमि'ति च प्रत्याख्यानेन शब्दशक्तिभेदापवर्णनतात्पर्यरूपेण गुणावस्था सर्वत्र सम्भविनी

---

ननु चोपाधिभेदमात्रात् = महत्त्वादिरूपावच्छेदकधर्मभेदमात्रात्। कथं स एव शब्दो लिङ्गान्तरयोगी स्यादित्याशङ्क्याह—शब्दान्तराणामिति।

अस्यार्थः —भिन्नेऽर्थे = हिमाद्यर्थापेक्षया भिन्ने हिमान्यादिशब्दार्थे, शब्दान्तराणाम् = हिमादिशब्दापेक्षयाभिन्नानां हिमान्यादिशब्दानाम्, प्रतिपत्तये, हिमहिमान्योर्भेदेऽपि एकतामिव = शब्दैक्यमिव निश्चित्य उपायः = आनुग् रप्रत्ययादयः, लघ्वर्थम् = लाघवार्थम् उपदर्शिता इति।

अयं भावः —इह = व्याकरणे लघुनोपायेन शब्दानामनुशासनं क्रियते। तत्र च यावदयं सामान्येन शक्नोत्युपदेष्टुं तत् तावदुपदिशतीति भाष्ये उक्तत्वाद् हिमादिरूपं शब्दसामान्यमाश्रित्य महत्त्वविशिष्टहिमादिरूपार्थान्तरविषयकहिमान्यादिरूपशब्दान्तरानुशासनं क्रियते —हिमानी, कुटीर इत्यादि।

एवं हि लाघवं सम्पद्यते। अन्यथा तं शब्दविशेषमाश्रित्य भिन्ने भिन्नेऽनुशासने क्रियमाणे महद्गौरवं स्यात्। एवमपि च लाघवार्थमनुशासने हिमहिमान्यादिशब्दानां परस्परं न भेदः, किन्तु अर्थभेदादन्यत्वमेव हिमहिमान्यादिशब्दानां स्वाभाविकमिति प्रतिनियतलिङ्गा विलक्षणा एव शब्दा हिमहिमान्यादयो यथायथं स्वस्वार्थविशेषनियताः, न तु हिमानीकुटीरादिशब्देषु अवयवोपचयः, किन्तु हिमकुटचादिभ्यः शब्दान्तरा एवैते। कारिकायां लघ्वर्थमित्यत्र भावप्रधानो निर्देशः, लाघवार्थमिति तदर्थः। वृत्तिविषये हि भावप्रधानो लघुशब्दो दृश्यते। 'मनौ तु गुरुलाघवमि'ति यथा श्रुतबोधे। तदित्थमनेन = एतत्कारिकाव्याख्यातार्थेन, एकार्थे शब्दान्यत्वादित्यादिना वार्तिकेन, लिङ्गमशिष्यमिति च लिङ्गानुशासनप्रत्याख्यानेन, शब्दशक्तिविशेषोपवर्णनतात्पर्यरूपेण सर्वत्र सम्भवन्ती गुणावस्था एव लिङ्गमिति

लिङ्गमिति सूचितं भवति। वाक्यकारस्यापीदमेव दर्शनमिति वार्तिकोन्मेषे कथितमस्माभिः ॥२६॥

मतान्तरेण संस्त्यानप्रसवादि लक्षयति—

**उत्पत्तिः प्रसवोऽन्येषां नाशः संस्त्यानमित्यपि।**
**आत्मरूपं तु भावानां स्थितिरित्यपदिश्यते ॥२७॥**

पूर्वं सांख्यदर्शनाश्रयेण संस्त्यानादि विभक्तम्। इदानीं वैशेषिकादिनयेनोच्यते। उत्पत्तिरपूर्वावयवोपजनः प्रसवः पुंस्त्वम्। पूर्वदर्शने तु स एवाविर्भाव इति विशेषः। संस्त्यानं संहननमवयवानामपचयो निरन्वयो विनाशः स्त्रीत्वम्। पूर्वं तु तिरोभावमात्रमुक्तम्। नित्यानामनित्यानां च भावानामनौपाधिकं निजं तत्त्वं स्थितिर्नपुंसकम्।

तत्र नित्यानां चैतन्यमाकाशमिति शरीराद्युपाधिसंसर्गे तु यथा पूर्वमाविर्भावतिरोभावावुक्तौ, तथात्रापि पक्षे चैतन्यस्योत्पत्तिविनाशौ व्याख्येयौ पुरुषश्चितिरिति। एवमाकाशस्यापि संयोगिधर्मोपचारात् प्रसवयोगः। अनित्यानामपि सर्वावस्थास्वनुवर्तमानमेकत्वेन प्रत्यभिज्ञायमानं स्वरूपं स्थितिर्नपुंसकं तत्त्वमिति

---

सूचितं भवति। वार्तिककारस्यापीदमेव = गुणावस्था एव लिङ्गमितीदमेव दर्शनमिति वार्तिकोन्मेषनाम्नि स्वग्रन्थे उक्तं श्रीहेलाराजेनेति ॥ २६ ॥

संस्त्यानप्रसवादिरूपं लिङ्गं मतान्तरेण लक्षयति = लक्षणैर्बोधयति—उत्पत्तिः प्रसव इति।

अस्यार्थः—अन्येषां—वैशेषिकादीनां मते उत्पत्तिर्भावानामाद्यक्षणसम्बन्धरूपा, प्रसवः पुंस्त्वम्, एतन्मते संस्त्यानं स्त्रीत्वमपि भावानां नाश एव, नित्यानामनित्यानाञ्च भावानामात्मरूपं निजं स्वाभाविकं रूपं स्थितिनपुंसकमित्यपदिश्यत इति।

अयं भावः—पूर्वं सांख्यदर्शनमाश्रित्य संस्त्यानप्रसवादिरूपं लिङ्गं विभागेन वर्णितम्। इदानीं वैशेषिकादिमतेन तदुच्यते। उत्पत्तिः = अपूर्वावयव्युपजनः = अपूर्वस्य = उत्पत्तेः पूर्वमसतोऽवयविन उपजनः प्रसवः पुंस्त्वम्, पूर्वदर्शने तु = सांख्यदर्शने तु स एवाविर्भाव इति विशेषः। संस्त्यानम् = संहननम् अपचयो निरन्वयो विनाशः स्त्रीत्वम्, पूर्वदर्शने तु तिरोभावमात्रं तदुक्तम्। नित्यानामनित्यानाञ्च भावानामनौपाधिकम् = स्वाभाविकम्, निजं तत्त्वम् = स्वरूपं स्थितिर्नपुंसकरूपा।

तत्र नित्यानां चैतन्यमाकाशमिति नपुंसकलिङ्गमुदाहार्यम्। चैतन्यस्य शरीराद्युपाधिसंसर्गे तु यथापूर्वमाविर्भावतिरोभावौ उपाध्याविर्भावतिरोभावाभ्यामुक्तौ, तथाऽत्रापि पक्षे चैतन्यस्योत्पत्तिविनाशौ शरीरादिरूपोपाधिजन्मविनाशाभ्यां व्याख्येयौ, पुरुषश्चितिरिति। एवमाकाशस्यापि स्वसंयोगिधर्मोपचारात् =

व्यवहारात् 'प्रसवः प्रसूतिः प्रसवनं, संस्त्यायः संस्त्या संस्त्यानम्' इत्यत्र प्रसवादीनामन्येषामभावान्मृगतृष्णावत् कल्पितं लिङ्गम् ।

"बुद्ध्या कल्पितरूपेषु लिङ्गेष्वपि च सम्भवः ।

स्त्रीत्वादीनाम्··· ··· ··· ··· ··· ··· ···।।" (वा० प० ३, लिङ्ग० ७)

इति वा । निर्णीतमेतत् ।

तथा हि प्रकृतिः स्वरूपेणाभिधत्ते वस्तु । प्रत्ययस्तु यथायथं स्त्रीत्वादिलिङ्गयुक्तमाहेत्यवास्तवत्वेऽपि शब्दप्रकल्पितोऽत्र भेदः, प्रकृतिप्रत्ययाभ्यां लिङ्गस्य स्वरूपेण विशेषणत्वेन च प्रतिपादनात् ।

अत एव 'भावस्य च भावयुक्तत्वात्' इत्युक्तं भाष्यमपि स्त्रीत्वेन युज्यत इति । एवञ्जातिर्विनाश इति विनाशोपजनायोगेऽप्यर्थस्य लिङ्गयोगः शाब्दः ।

---

स्वसंयोगिनां भावानामनित्यानामुत्पत्तिरूपधर्मारोपात् प्रसवरूपपुंस्त्वयोगः । सर्वावस्थासु अनुवर्तमानमेकत्वेन प्रत्यभिज्ञायमानमनित्यानामपि घटपटादीनां स्वरूपं स्थितिर्नपुंसकं तत्त्वमिति व्यवहारात् ।

ननु 'प्रसवः, प्रसूतिः, प्रसवनम्, संस्त्यायः, संस्त्या, संस्त्यानम्' इति प्रसवादिषु प्रसवाद्यन्तरस्याभावात् कथमत्र लिङ्गयोग इति चेत्, शृणु । अत्र मृगतृष्णासु जलमिव लिङ्गकल्पितं लिङ्गमिति ।

बुद्ध्या कल्पितरूपेषु लिङ्गेष्वपि च सम्भवः ।
स्त्रीत्वादीनां व्यवस्था हि सा लिङ्गैर्व्यपदिश्यते ।।
( वा० प० ३, लि० ७ )

इति कारिकायां निर्णीतमेतत् । इयञ्च कारिका अस्मिन्नेव समुद्देशे प्राग्व्याख्याता इति नेह पुनर्व्याख्यायते । 'प्रसवः, प्रसूतिः' इत्यादौ लिङ्गेषु लिङ्गकल्पना चैवम् । तथा हि—प्रसूतिरित्यादौ सोपसर्गा धातुरूपा प्रकृतिः स्वरूपेणाभिधत्ते पुंस्त्वादिलिङ्गरूपं वस्तु । क्तिन्प्रत्ययस्तु तदेव स्वरूपेण प्रकृत्याऽभिहितं पुंस्त्वादिलिङ्गरूपं वस्तु यथायथं स्त्रीत्वादिलिङ्गयुक्तमाह-- इति । लिङ्गे लिङ्गस्यावास्तवत्वेऽपि प्रकृतिप्रत्ययरूपशब्दप्रकल्पितोऽत्र लिङ्गभेदः । प्रकृतिप्रत्ययाभ्यां लिङ्गस्य यथायथं स्वरूपेण विशेषणत्वेन च प्रतिपादनात् ।

अत एव = लिङ्गेऽपि कल्पितस्य लिङ्गस्य सत्त्वादेव "भावस्य च भावयुक्तत्वात्" इत्युक्तं भाष्ये । प्रसूतिरित्यत्र प्रकृत्यभिहितं प्रसवरूपं पुंस्त्वमपि स्त्रीत्वेन युज्यते । संस्त्या इत्यत्र प्रकृत्यभिहितं संस्त्यानरूपं स्त्रीत्वमपि प्रत्ययाभिहितेन स्त्रीत्वेन युज्यत इति प्रकृतभाष्यवाक्यार्थः । पुंस्त्वं पुंभावः, स्त्रीत्वं स्त्रीभाव इति । एवम्--जातिरित्यत्र जातेर्नित्यत्वेन विनाशरूपस्त्रीत्वायोगेऽपि, विनाश इत्यत्र विनाशस्य ध्वंसाभावरूपत्वेनोपजनरूपपुंस्त्वायोगेऽपि एतयोरर्थयोस्तत्तल्लिङ्गयोगः

तथाभिव्यक्तिदर्शनेऽभिव्यङ्ग्योऽभिव्यक्तिरभिव्यञ्जनमिति शब्दप्रमाणको लिङ्ग-भेदो 'भावस्य च भावयुक्तत्वात्' इत्यत्र वार्तिकोन्मेषे विस्तरेण यथातत्त्वमस्माभि-र्व्याख्यात इति तत एवावधार्यम्। गतमेतत् ॥२७॥

इदानीं शब्दोपजनितोऽर्थात्मा लिङ्गमित्येतद्दर्शनं मतान्तरेणावस्था-पयितुमाह—

**दृष्टं निमित्तं केषाञ्चिज्जात्यादिवदवस्थितम्।**
**दृष्टवच्छब्दसंस्कारमात्रं तु परिकल्पितम् ॥२८॥**

केषाञ्चिच्चेतनानामर्थानां समवेतमुपलब्धमेव स्तनकेशादिनिमित्तं स्त्र्याद्याकारस्य प्रत्ययस्य। तथा हि तत्र प्रतिनियता जातिः समवेतोपलब्धा। तथा स्तनाद्युपव्यञ्जनमपि लिङ्गानाम्।

अन्यत्र तु तारकादौ तद्दर्शनाभ्यासात् सत्त्वमवगम्य कल्पितं लिङ्गं

---

शब्दो विकल्पप्रत्ययगोचरः। तथाऽभिव्यक्तिदर्शने=कार्याणां भावानामुत्पत्तेः प्रागपि सत्त्वेन कारणसामग्रीतस्तेषामभिव्यक्तिरेव, न तूत्पत्तिरिति सांख्यदर्शने 'अभिव्यङ्गः, अभिव्यक्तिः, अभिव्यञ्जनम्' इति शब्दप्रमाणको लिङ्गभेदः 'भावस्य च भावयुक्तत्वात्' इत्यत्र वार्तिकोन्मेषे विस्तरेण यथातत्त्वं श्रीहेलाराजेन व्याख्यात इति तत एवावधार्यमिति। गतमेतत्=गुणावस्थालिङ्गमित्येतद्विषयको विचारो गत इति ॥ २७ ॥

इदानीं स्त्रीत्वादिलिङ्गानां स्तनकेशादिरूपाणामचेतनेष्वसत्त्वेऽपि शब्दो-पजनितोऽर्थात्मा विकल्पप्रत्ययगोचरो लिङ्गमिति मतान्तरेणावस्थापयितुमाह— **दृष्टं निमित्तमिति।**

अस्यार्थः—केषाञ्चिच्चेतनानामर्थानां स्वसमवेतं गोत्वाश्वत्वादिजात्यादि-वदवस्थितं दृष्टमेव प्रत्यक्षमेव स्तनकेशादिरूपं लिङ्गं निमित्तं स्त्रीपुमानित्याद्या-कारस्य प्रत्ययस्य। अन्यत्र तु अचेतनेषु तारकादिषु शब्दसंस्कारमात्रे कर्तव्ये= शब्दसाधुत्वान्वाख्यानमात्रे जनयितव्ये दृष्टवत्=चेतनेषु दृष्टस्तनकेशादिलिङ्गवत् तद्दर्शनाभ्यासवशादचेतनेषु तदेव स्तनकेशादिरूपं लिङ्गं तत्तच्छब्दैः परिकल्पित-मिति।

अयं भावः—केषाञ्चित् चेतनानामर्थानां सम्बन्धि तत्समवेतमुपलब्धमेव स्तनकेशादिकं निमित्तं स्त्रीपुमान् इत्याद्याकारकस्य प्रत्ययस्य=ज्ञानस्य। यथा हि—तत्र=चेतनेषु प्रतिनियता जातिर्गोत्वाश्वत्वादिका समवेता उपलब्धा, तथा स्तनादिरूपोपव्यञ्जनवतां लिङ्गानामपि उपलब्धिः। चेतनेषु तद्दर्शनाभ्यासात्= स्तनकेशादिरूपलिङ्गदर्शनाभ्यासात्, अन्यत्र तु=अचेतने तु तत्सत्त्वमवगम्य तारकादौ कल्पितम्=समारोपितं लिङ्गं शब्दात् सत्त्ववचनात्=द्रव्यवचनात्

शब्दात् सत्त्ववचनात् तारका पुष्यो नक्षत्रमिति प्रतीतेः शब्दसंस्कारमात्रसतत्त्वमन्वाख्याने समाश्रितम् ।

एतत् पुनः 'अन्योन्यसंश्रयं त्वेतत्' इति पूर्वंदूषितमिहान्यथोपन्यस्तम् । प्रयोगात् किलावसितस्य लिङ्गस्य चेतनविषयादन्यत्र समारोपाच्छब्दसंस्कारहेतुत्वमात्रम्, न तु वास्तवरूपतेत्यनेनापि नयेन व्याप्तिसिद्धिरित्यर्थः ॥२८॥

अत्रैव निदर्शनमाह—

**यथा प्रसिद्धेऽप्येकत्वे नानात्वाभिनिवेशिनः ।**
**नानात्वं जनयन्तीव शब्दो लिङ्गेऽपि स क्रमः ॥२९॥**

निश्चितेऽपि वस्तुन एकत्वे दाराः, आपः, गृहाः, सिकता इत्यादयः शब्दा धर्मभेदाश्रयबहुत्ववृत्तयस्तत्र बहुत्वं जनयन्तीव, तथा व्यवसायजननात्, न तु परमार्थतः, तथा लिङ्गेऽपि स्त्रीत्वादौ स क्रमः परिपाटिः । बहिरसतोऽपि तस्य तारकादौ प्रकाशनात् ॥२९॥

---

तारका, पुष्यः, नक्षत्रमिति प्रतीतेः शब्दसंस्कारमात्रस्वरूपं लिङ्गं शब्दसाधुत्वान्वाख्याने निमित्ततया समाश्रितम् । एतत् पुनः=शब्दप्रयोगे लिङ्गप्रतीतिः, लिङ्गप्रतीतौ शब्दप्रयोग इत्येतत्तु "अन्योऽन्यसंश्रयं त्वेतत्" इति भाष्योक्त्या पूर्वं दूषितमपि इहान्यथा उपन्यस्तमिति नान्योऽन्यसंश्रयदोषः । तथा हि—चेतनेषु प्रयोगात् किल अवसितस्य=निश्चितस्य लिङ्गस्य चेतनविषयादन्यत्र तारकादौ तस्यैव समारोपात् शब्दसंस्कारहेतुत्वमात्रं लिङ्गस्य, न त्वचेतनेषु वास्तवरूपता स्तनकेशादिरूपस्य लिङ्गस्येत्यनेनापि नयेन चेतनेष्वचेतनेषु च स्तनकेशादिरूपस्य लिङ्गस्य व्याप्तिसिद्धिरित्यर्थं इति ॥ २८ ॥

अत्रैवार्थे निदर्शनम्=दृष्टान्तमाह—यथा प्रसिद्धेऽपीति ।

अस्यार्थः —यथा गुरुदारादौ एकत्वे प्रसिद्धेऽपि तद्धर्माणां नानात्वं तेषु समारोप्य तन्नानात्वाभिनिवेशिनः, तन्नानात्वं हठेनाग्रहेण वा बोधयन्तो गुरवः, दारा इत्यादयः शब्दा गुरुदारादिषु नानात्वं जनयन्तीव, स क्रमः=सा परिपाटी, लिङ्गेऽपि । गुरुदारादावसतो नानात्वस्य शब्दैः प्रकाशनमिव, अचेतनेषु असतो लिङ्गस्य तैः प्रकाशनादिति ।

अयं भावः —गुरुदारादौ निश्चितेऽपि वस्तुन एकत्वे दाराः, आपः, गृहाः, सिकता इत्यादयः शब्दाः स्वामिगतधर्मभेदाश्रितबहुत्ववाचका दारादौ बहुत्वं जनयंन्तीव । बहुत्वप्रकारकस्य व्यवसायस्य=ज्ञानस्य तेषु जननात्, न तु तत्र परमार्थतो बहुत्वं जनयन्ति एकत्वविरोधात्, तथा लिङ्गेऽपि स्त्रीत्वादौ स क्रमः=सा परिपाटी बहिरसतोऽपि लिङ्गस्याचेतने तारकादौ शब्दैः प्रकाशनादिति ॥ २९ ॥

एवञ्च कृत्वा 'शब्दसंस्कारो लिङ्गम्' इति अन्तिममेव दर्शनं प्रमाणभूतमभ्युपगच्छति—

इदं वेयमयं वेति शब्दसंस्कारमात्रकम्।
निमित्तदर्शनादर्थे कैश्चित् सर्वत्र वर्ण्यते ॥३०॥

इदं वस्तु, इयं व्यक्तिरयमर्थं इति त्रिलिङ्गानां सर्वत्र वस्तुमात्रे बहिर्निमित्तानपेक्षा प्रवृत्तिर्न व्याहन्यत इति अस्मान्निमित्तदर्शनाच्छब्दान्वाख्यानमात्रं लिङ्गमभ्युपगन्तव्यम्। बाह्येऽर्थे तस्य लौकिके रूपानवधारणाच्छास्त्रसमयान्तःपातिनः परमुपकल्पयन्ति। शब्दार्थोऽर्थ इति दर्शनाद् बहीरूपत्वेनाध्यवसायाद् युवत्यादिभ्योऽर्थविशेषसम्प्रत्ययो न विरुध्यते। बहिः सदसत्तानपेक्षणाच्च शब्दार्थस्यानुशासनाङ्गस्य 'स्त्रियाम्' (पा० ४।१।३) इत्यादेरविशेषेण लिङ्गप्रत्ययविषयमात्रेऽनुगमः। युवतिः खट्वेत्यादौ स्त्रीप्रत्ययस्यासदाकारस्य वा सदाकारस्य वाऽविशेषात्।

वास्तवे तु शब्दान्वाख्याननिमित्तेऽङ्गीक्रियमाणे राहोः शिरः, स्वस्य स्वभाव इत्यादौ व्यतिरेकविभक्तिः कथम्। तस्मादवसितोऽपि बाह्यत्वेनावसितस्य लिङ्ग-

---

एवञ्च कृत्वा शब्दसंस्कारो लिङ्गमिति अन्तिममेव दर्शनं प्रमाणभूतमभ्युपगच्छति हरिरित्याह स एव—इदं वेयमिति।

अस्यार्थः—सर्वत्रार्थे इदं वस्तु इति वा, इयं व्यक्तिरिति वा, अयं पदार्थ इति वा लिङ्गत्रयरूपस्य शब्दसंस्कारनिमित्तस्य दर्शनात् कैश्चित् शब्दसंस्कारमात्रकं लिङ्गं वर्ण्यते। निमित्तनिमित्तिनोरभेदोपचारादिति।

अयं भावः—"इदं वस्तु, इयं व्यक्तिः, अयमर्थः" इति सर्वत्र वस्तुमात्रे लिङ्गत्रयव्यवहारदर्शनेन त्रिलिङ्गानां तटादिशब्दानां बहिर्विद्यमानलिङ्गरूपनिमित्तानपेक्षा कल्पितेनापि आन्तरेण लिङ्गेन शब्दप्रवृत्तौ निमित्तीकृतेन तत्तदर्थे प्रवृत्तिर्न व्याहन्यत इत्यस्मात् शब्दान्वाख्याने शब्दप्रवृत्तौ च लिङ्गरूपनिमित्तदर्शनात् शब्दान्वाख्यानमात्रं लिङ्गमभ्युपगन्तव्यम्। बाह्येऽर्थे लौकिकैः पुरुषैस्तस्य लिङ्गस्य रूपानवधारणात् शास्त्रसमयान्तःपातिनः = शास्त्रसिद्धान्तानुसारिणः पुरुषाः परम् = केवलं तस्य लिङ्गस्यान्तरं विकल्पप्रत्ययगोचरं रूपमुपकल्पयन्ति। शब्दार्थोऽर्थ इति दर्शनात् = शब्दजन्यप्रतीतिगोचरीभूतो योऽर्थः स एव शब्दार्थ इति दर्शनादान्तरस्य शब्दार्थस्य बहीरूपत्वेनाध्यवसायाद् युवत्यादिशब्देभ्यो बहिर्विद्यमानयुवतिरूपार्थविशेषसम्प्रत्ययो न विरुध्यते।

अनुशासनाङ्गस्य शब्दार्थस्य स्त्रीत्वादेर्बहिः सदसत्तानपेक्षणाच्च "स्त्रियाम्" (४।१।३) इत्यादेः सूत्रस्याविशेषेण बहिः सदाकारेऽसदाकारे वा लिङ्गप्रत्ययविषयमात्रे = लिङ्गज्ञानविषयमात्रेऽनुगमः = वाचकत्वेन सम्बन्धः। 'युवतिः खट्वा'

स्यान्वाख्याननिमित्तत्वम् । अत एव 'टाबृचि' ( ४।१।९ ) इति ऋचोऽभिधेयत्वेनोपादानं युक्तम् । तदत्र 'शब्दोपजनितोऽर्थात्मा' इत्यस्मात् सर्वत्रैव शब्दादवधृतस्य शब्दसाधुत्वनिमित्तभाव इत्ययं विशेषः ।

तत्र तु दर्शने विषयान्तरे भूयसा दृष्टस्यान्यत्र समारोपोऽभिमत इति दर्शनभेदः ।

कैश्चिदिति वचनाद् ये गुणावस्थारूप लिङ्गं वस्तूनां विवेकेन परिज्ञातुमशक्तास्तेषामिदं दर्शनमिति प्रतिपादयति । सति तु विवेककौशले यथाप्रविभक्तमेव लिङ्गं न्याय्यमिति ध्वनयति ॥३०॥

बहिरगृह्यमाणस्य कथं शब्दसंस्कारनिमित्तत्वमिति चेदाह —

नावश्यं विषयत्वेन निमित्तं व्यवतिष्ठते ।
इन्द्रियादि यथाऽदृष्टं भेदहेतुस्तदिष्यते ॥३१॥

---

इत्यादौ चेतनेऽचेतने च स्त्रीप्रत्ययस्य = स्त्रीत्वज्ञानस्य सदाकारस्यासदाकारस्य वाऽविशेषात् = स्त्रीप्रत्ययान्वाख्यानेऽविशेषेणोपयोगात् । वास्तवे तु शब्दान्वाख्याननिमित्तेऽङ्गीक्रियमाणे 'राहोः शिरः, स्वस्य स्वभावः' इत्यादौ व्यतिरेके = भेदे जायमाना षष्ठीविभक्तिः कथम् ? राहुशिरसोः स्वस्वभावयोश्च वास्तवस्य व्यतिरेकस्याभावात् । तस्माद् बहिरसतोऽपि विकल्पप्रत्ययगोचरस्यान्तरस्य लिङ्गस्य बाह्यत्वेनावसितस्य शब्दान्वाख्याननिमित्तत्वम् । अत एव = असतोऽपि लिङ्गस्यान्वाख्याननिमित्तत्वादेव 'टाबृचि' ( ४।१।९ ) इति सूत्रे ऋचोऽभिधेयत्वेनोपादानं युक्तम्, स्त्रीत्वरूपस्य लिङ्गस्य त्वन्वाख्याननिमित्तत्वेनेति ।

तदत्र = तस्मादत्र दर्शने—शब्दसंस्कारो लिङ्गमिति दर्शने शब्दोपजनितोऽर्थात्मा इत्यस्माद् दर्शनात् 'सर्वत्रैवार्थे शब्दादवधृतस्य लिङ्गस्य शब्दसाधुत्वनिमित्तभावः' इत्ययं विशेषः । तत्र तु दर्शने = 'शब्दोपजनितोऽर्थात्मा' इति दर्शने तु विषयान्तरे = चेतने भूयसा दृष्टस्य लिङ्गस्यान्यत्र = अचेतने समारोपोऽभिमत इति दर्शनयोरनयोर्भेदः ।

कैश्चिदिति वचनाद् ये वस्तूनां गुणावस्थारूपं लिङ्गमुपचयापचयस्थितिरूपं विवेकेन = भेदेन परिज्ञातुमशक्तास्तेषामिदं दर्शनम् = शब्दसंस्कारो लिङ्गमिति दर्शनम् । सति तु विवेककौशले यथा प्रविभक्तमेव = गुणानामुपचयापचयस्थितिरूपदशात्रयप्रविभागेण प्रविभक्तमेव गुणावस्थारूपं लिङ्गं न्याय्यमिति ध्वनयतीति ॥ ३० ॥

बहिरगृह्यमाणस्य तत्त्वादेवासतो लिङ्गस्य कथं शब्दसंस्कारनिमित्तत्वमिति चेदाह—नावश्यं विषयत्वेनेति ।

यदन्यस्यावच्छेदनिबन्धनं तन्नियोगतो ज्ञानगोचरतया नावतिष्ठते। यस्मात् तद्भेदहेतुरिष्यते अवच्छेदकमभ्युपगम्यते। अवच्छेदकं च नियमेन ग्रहणगोचरतां न भजते।

तथा हि—चक्षुरादीन्द्रियमगृह्यमाणमपि स्वज्ञानस्य यथायथं नियतविषयस्य विषयान्तरादवच्छेदं विदधात्येव। एवं कारणं कार्यावच्छेदकमदृष्टमपि, इति लिङ्गस्यापि शब्दसंस्कारकार्यस्याकारणस्यागृह्यमाणस्य स्वकार्यशब्दसंस्कारनिमित्तत्वमन्वाख्याने समुपादीयमानं युक्तमेव। चक्षुरादीत्यादिग्रहणाद् राजपुरुष इत्यादौ वृत्तिशब्दे सम्बन्धस्यापि भेदहेतुत्वं गृह्यते।

---

अस्यार्थः—यदन्यस्यावच्छेदनिमित्तं व्यावृत्तिज्ञानजनकं तदवश्यं विषयत्वेन न व्यवतिष्ठते, तस्य ज्ञातस्यैव निमित्तत्वमिति नियमो नास्ति, यतस्तद् भेदहेतुरिष्यतेऽभ्युपगम्यते। अवच्छेदकस्य च ग्राह्यत्वनियमाभावात्। यथाऽदृष्टमेवेन्द्रियादिघटाद्यवच्छेदनिमित्तं दृष्टम्। कारिकायाम्—"यथा दृष्टम्" इत्यत्रादृष्टं दृष्टमिति द्विधा पदच्छेदः। तथा लिङ्गमपि—अर्थावच्छेदत्वेन बहिरग्रहीतमपि शब्दसंस्कारे निमित्तभावं भजत इति युज्यते।

यद्यपि 'घटवद् भूतलम्' इत्यादौ अवच्छेदकस्यापि घटादेर्ग्राह्यत्वं दृश्यते, तथापि तादृशस्येन्द्रियादेर्ग्राह्यत्वं न दृश्यत इत्यवच्छेदनिमित्तस्य ग्राह्यत्वनियमो नास्तीति सिद्धम्।

तथा चायं प्रयोगः। लिङ्गमग्राह्यत्वेऽपि शब्दसंस्काररूपस्वकार्यनिमित्तम्, अवच्छेदनिमित्तत्वात् इन्द्रियादिवदिति।

अयं भावः—यदन्यस्यावच्छेदकव्यावृत्तिनिमित्तम्, तन्नियमतो ज्ञानगोचरतया नावतिष्ठते। यस्माद् भेदहेतुरिष्यते, अवच्छेदकमभ्युपगम्यते अवच्छेदकश्च कस्यचिद् ग्राह्यत्वेऽपि नियमेन ग्राह्यतां न भजते।

तथा हि—इन्द्रियं चक्षुरादि अगृह्यमाणमपि स्वज्ञानस्य=स्वजन्यज्ञानस्य यथायथं नियतो यो विषयस्तस्य विषयान्तरादवच्छेदं विदधात्येव। एवं कारणं द्व्यणुकादिकमदृष्टमपि स्वकार्यस्य त्र्यणुकादेरवच्छेदकमिति लिङ्गस्यापि शब्दसंस्कारकार्यस्य=शब्दसंस्काररूपस्वकार्यजनकस्य बहिरसत्त्वादकारणस्य विकल्पप्रत्ययमात्रगोचरस्यागृह्यमाणस्य=चाक्षुषादिप्रमाणागोचरस्य शास्त्रेण शब्दसाधुत्वान्वाख्याने क्रियमाणे स्वकार्यशब्दसंस्कारनिमित्तत्वं शास्त्रे समुपादीयमानं युक्तमेव। कारिकायामिन्द्रियादिग्रहणात्—'राजपुरुषः' इत्यादिके समासवृत्तिरूपे शब्दे वृत्त्यर्थस्याखण्डत्वपक्षे सम्बन्धस्यागृह्यमाणस्यापि=वृत्तिजन्यग्रहणागोचरस्यापि सम्बन्धिभेदहेतुत्वं गृह्यते।

तथा हि—राजपुरुषो नीलोत्पलमित्यादिशब्दाः सम्बन्धनिमित्ततयान्वाख्याताः समासे सम्बन्धस्याप्रतीतावपि तदपरेभ्यो भिद्यमानं स्वार्थविशेषमर्पयन्ति। तथा व्यक्तौ पदार्थे जातेरप्रतीतावपि स्वाश्रयावच्छेदकत्वम्, येन गवादिशब्दैः प्रतिनियतमेव द्रव्यमभिधीयते। यथा चेदं बाह्यं निमित्तमगृह्यमाणमत्र सदृशं निदर्शनम्। इन्द्रियं त्वध्यात्ममगृह्यमाणत्वमात्रसाम्याद् दृष्टान्तः। तदेवं यथासम्भवं लिङ्गं विचारितम्।

सिद्धान्तस्तु यथाभाष्य गुणावस्थारूपं लिङ्गमित्यस्माभिर्वार्त्तिकोन्मेषे यथागमं व्याख्यातं तत एवावधार्यम्। गुणधर्मरूपे हि लिङ्गे धर्मशून्यस्य सर्वथैवाव्यवहार्यत्वादवस्तुष्वपि वस्तुत्वाभिमानाल्लौकिकानां लोकसम्प्रत्ययसमारूढस्यैव शब्दार्थत्वादात्मादीनां रूपादीनां तमश्छायाप्रभृतीनां च सर्वेषां लिङ्गयोग उपपन्नः। अभावशशविषाणादीनामपि वस्तुभूतोत्तरपदार्थाश्रयं लिङ्गं न चान्यथा भावोपाश्रयत्वादभावो व्यवह्रियत इति व्यापकमिदं संस्त्यानप्रसवौ स्थितिश्चेति

---

तथा हि —'राजपुरुषः, नीलोत्पलम्' इत्यादिशब्दाः सम्बन्धनिमित्तकतयाऽन्वाख्याताः समासे शब्दतः सम्बन्धस्याप्रतीतावपि तदपरेभ्यः=स्वार्थापरेभ्यो भिद्यमानं स्वार्थविशेषमर्पयन्ति बोधयन्ति। तथा व्यक्तौ पदार्थे जातेरप्रतीतावपि तस्याः स्वाश्रयावच्छेदकत्वम्, येन गवादिशब्दैस्तत्तज्जात्याश्रयीभूतं प्रतिनियतमेव द्रव्यमभिधीयते। तथा चेदं=जातिरूपं बाह्यमवच्छेदनिमित्तमगृह्यमाणमत्र बाह्यत्वागृह्यमाणत्वाभ्यां लिङ्गस्य सदृशं लिङ्गस्य निदर्शनम्=दृष्टान्तः। इन्द्रियं त्वध्यात्ममगृह्यमाणत्वमात्रसाम्याद् दृष्टान्तः।

तदेवं यथासम्भवं लिङ्गं विचारितम्। सिद्धान्तस्तु यथाभाष्यं गुणावस्थारूपं लिङ्गमिति। इदञ्च वार्तिकोन्मेषे श्रीहेलाराजेन स्वकृते यथागमं व्याख्यातमिति तत एवावधार्यम्। गुणावस्थारूपे हि लिङ्गे—धर्मशून्यस्य निर्विशेषस्य चैतन्यस्य सर्वथैवाव्यवहार्यत्वात् त्रिगुणात्मकमायोपहितचैतन्यस्य, अवस्तुष्वपि वस्तुत्वाभिमानात् तमच्छायाप्रभृतीनाम्, लौकिकानाञ्च पुंसां लोकसम्प्रत्ययसमारूढस्यैव शब्दार्थत्वाद् रूपादीनां वस्तुभूतानां लिङ्गयोग उपपन्नः।

एवमात्माकाशादीनां चावस्तुभूतानामपि वस्तुत्वारोपमूलकगुणत्रयविकारत्वारोपेण गुणधर्मितया परिज्ञातानामेव सर्वेषां भावानां लिङ्गयोग उपपन्नः। अभावशशविषाणादीनामत्यन्तमवस्तुभूतानामपि वस्तुभूतोत्तरपदार्थमाश्रित्य गुणावस्थारूपं लिङ्गमुपपाद्यम्। अन्यथा भावोपाश्रयत्वात्=उत्तरपदार्थभूतभावरूपोपाध्याश्रयणादन्यथा—विना, अभावो निःस्वरूपत्वान्न च व्यवह्रियत इति रीत्या चेतनाचेतनव्यापकमिदं संस्त्यानप्रसवौ स्थितिश्चेति लिङ्गत्रयं गुणावस्थारूपं

लिङ्गत्रयं सिद्धान्तितमवगन्तव्यम् । इत्यन्तःपदसंस्कारनिमित्तभूताः पदार्थाः पर्यवसितविचाराः ॥ ३१ ॥

॥ इति श्रीभूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे
लिङ्गसमुद्देशस्त्रयोदशः ॥



---

सिद्धान्तितमवगन्तव्यम् । इत्यन्तःपदं ये व्याकरणशास्त्रेण विधेयाः संस्कारास्तन्निमित्तभूताः पदार्था लिङ्गान्ता विचारिताः । इतः परं वृत्तिसमुद्देशे पदसमुदायादिगता वृत्तिर्विवेचयिष्यत इति ॥ ३१ ॥

॥ इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथकृतौ
अम्बाकर्त्र्यां लिङ्गसमुद्देशस्त्रयोदशः ॥



# अकारादिक्रमेण श्लोकपादानुक्रमणिका

# अकारादिक्रमेणोद्धरणश्लोकपादानुक्रमणिका

